अन्यथाजातीयकेन शब्देन निर्देशः कियते। अन्यथाजातीयक उदाह्रियते।
किं तर्ह्युदाहरणम् ?
इह तावत् तस्मिन्निति निर्दिष्टे पूर्वस्येति तस्मिन्ननणि च युष्माकास्माकाविति। तस्मादित्युत्तरस्येति। तस्माच्छसो नः पुंसीति।
इदं चाप्युदाहरणम्-- इको यणचि, द्वयन्तरूपसर्गेभ्योऽप इर्दिति। कथम्? सर्वनाम्नायं निर्देशः क्रियते। सर्वनाम च सामान्यवाची। तत्र सामान्ये निर्दिष्टे विशेषः अप्युदाहरणानि भवन्ति।
किं पुनः सामान्यं, को विशेषः ?
गौः सामान्यं कृष्णो विशेषः।
न तर्हीदानीं कृष्णः सामान्यं गौर्विशेषो भवति।
भवति च।
यदि तर्हि सामान्यमपि विशेषो विशेषोपि सामान्यं, सामान्यविशेषौ न प्रकल्पेते।
प्रकल्पेते च। कथम्? विविक्षातः। यदास्य गौः सामान्येन विविक्षतो भवति कृष्णो विशेषत्वेन, तदा गौः सामान्यं, कृष्णो विशेषः। यदास्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन तदा कृष्णः सामान्यं, गौर्विशेषः।
अपर- आह- प्रकल्पेते च। कथम्? पितापुत्रवत्। तद्यथा स एव कंचित् प्रति पिता भवति। कंचित् प्रति पुत्रो भवति। एवमिहापि स एव कंचित् प्रति सामान्यं कंचित् प्रति विशेषः। एते खल्वपि नैर्द्देशिकानां वार्त्ततरका भवन्ति, ये सवर्नाम्ना निर्देशाः क्रियन्ते। एतैर्हि बहुतरकं व्याप्यते।
अथ किमर्थमुपसर्गनिर्देशः क्रियते ?
शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात्। अर्थे मा भूत्। जनपदे अतिशायने इति।
किं गतमेतदुपसर्गेण। आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्।
गतमित्याह। कथम्? निरयं बहिर्भावे वर्तते। तद्यथा-- निष्क्रान्तो देशात्-- निर्देशः। बर्हिर्देश इति गम्यते। शब्दश्च शब्दाद् बहिरभूतः। अर्थोऽबहिर्भूतः।
अथ निर्दिष्टग्रहणं किमर्थम् ?
निर्दिष्टग्रहणमानन्तर्यार्थम्।
निर्दिष्टग्रहणं क्रियते। आनन्तर्यार्थम्। आनन्तर्यमात्रे कार्यं यथा स्यात्। इको यणचि। दध्यत्र। मध्वत्र। इह मा भूत् समिधौ। समिधः। दृषदौ। दृषदः।
किमर्थं पुनरिदमुच्यते ?
तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थं वचनं
दध्युदकं प्रचत्योदनम्।
तस्मिन् तस्मात् इति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थोऽयमारम्भः। ग्रामे देवदत्तः। पूर्वः पर इति सन्देहः। ग्रामाद् देवदत्तः पूर्वः पर इति सन्देहः। एवमिहापि दध्युदकं पचत्योदनम्। उभाविकौ। उभावचौ। अचि पूर्वस्य अचि परस्येति संदेहः। तिङ्ङ्तङ इति अतिङः पूर्वस्य अतिङः परस्येति सन्देहः। इष्यते चाचि पूर्वस्य स्यात्। अतिङश्च परस्येति। तच्चान्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम्। एवमर्थमिदमुच्यते।
अस्ति प्रयोजनमेतत्। किं तर्हीति? अथ यत्रोभयं निर्दिश्यते किं तत्र? पूर्वस्य कार्यं भवति आहोस्वित् परस्येति।
उभयनिर्देशे विप्रतिषेधात् पञ्चमीनिर्देशः।
उभयनिर्देशे विप्रतिषेधात् पञ्चमीनिर्देशो भविष्यति।
किं प्रयोजनम् ?
प्रयोजनमतो लसार्वधातुकानुदात्तत्वे।
वक्ष्यति तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थ इति। तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य लसार्वधातुके परतस्तास्यादीनामिति सन्देहः। तास्यादिभ्यः परस्य लसार्वधातुकस्य।
बहोरिष्ठादीनामादिलोपे।
बहोरुत्तरेषामिष्ठेमेयसाम्। इष्ठेमेयःसु परतो बहोरिति सन्देहः। बहोरुत्तरेषामिष्ठेमेयसाम्।
गोतो णित्।
गोतः परस्य सर्वनामस्थानस्य सर्वनामस्थाने परतो गोत इति सन्देहः। गोतः परस्य
सर्वनामस्थानस्य।
रुदादिभ्यः सार्वधातुके।
रुदादिभ्यः परस्य सार्वधातुकस्य। सार्वधातुके परतो रुदादीनामिति सन्देहः। रुदादिभ्यः परस्य सार्वधातुकस्य।
आने मुगीदासः।
आस उत्तरस्यानस्य। आने परत आस इति सन्देहः। आस उत्तरस्य आनस्य।
आमि सर्वनाम्नः सुट्।
सर्वनाम्न उत्तरस्यामः। आमि परतः सर्वनाम्न इति सन्देहः। सर्वनाम्न उत्तरस्यामः।
घेर्ङित्याण् नद्याः।
नद्या उत्तरेषां ङितां, ङित्सु परतो नद्या इति सन्देहः। नद्या उत्तरेषां ङिताम्।

याडापः।
आप उत्तरस्य ङितः, ङिति परत आप इति सन्देहः। आप उत्तरस्य ङितः।
ङमो ह्रस्वादचि ङमुणम् नित्यम्।
ङम उत्तरस्याचः, अचि परतो ङम इति सन्देहः। ङम उत्तरस्माचः।
विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः।
विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तो विप्रतिषेधः। सर्वत्रैवात्र कृतसार्मथ्या सप्तमी। अकृतसार्मथ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति।
यथार्थं वा षष्ठीनिर्देशः।
यथार्थं वा षष्ठीनिर्देशः कर्तव्यः। यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या। यत्र परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्तव्या।
स तर्हि तथा निर्देशः कर्तव्यः।
न कर्तव्यः। अनेनैव प्रक्लृप्तिर्भविष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी। तस्मादित्युत्तरस्य षष्ठीति।
तत्तर्हि षष्ठीग्रहणं कर्तव्यम्।
न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? षष्ठी स्थानेयोगेति।
प्रकल्पकमिति चेन्नियमाभावः।
प्रकल्पकमिति चेत् नियमस्याभावः। उक्तं चैतन्नियमार्थोऽयमारम्भ इति। प्रत्ययविधौ खल्वपि पञ्चभ्यः प्रकल्पिकाः स्युः। तत्र को दोषः? गुप्तिज्किद्भ्यः सन्। गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मादित्युत्तरेति।
अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति।
नैवं शक्यम्। इत्संज्ञा न प्रकल्पेत। उपदेश इतीत्संज्ञोच्चते।
प्रकृतिविकारव्यवस्था च।
प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते। इको यणिचि , अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति।
सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीं प्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः।
सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीं प्राप्नोति। तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुके इत्यस्याः षष्ठीं प्रकल्पयेत्। तस्मादित्युत्तरस्येति। तथा लसार्वधातुके इत्येषा सप्तमी तास्यादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति। तत्र को दोषः। तत्रोभयकार्यप्रसङ्गः। तत्र उभयोः कार्यं प्राप्नोति।
नैष दोषः। यत्तावदुच्चते प्रकल्पकमिति चेन्नियमाभाव इति। मा भून्नियमः। सप्तमीनिर्दिष्टे पूर्वस्य षष्ठीं प्रकल्पयते पञ्चमीनिर्दिष्टे परस्य। यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठीं प्रकल्पयते पञ्चमीनिर्दिष्टे परस्य नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुम्। नापि पञ्चमीनिर्दिष्टे पूर्वस्य। यदप्युच्चते प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युरिति। सन्तु प्रकल्पिकाः। ननु चोक्तं गुप्तिज्किद्भ्यः सन् इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मादित्युत्तरस्येति। परिहतमेतत्। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति। ननु चोक्तं नैवं शक्यमित्संज्ञा न प्रकल्पेत। उपदेश इति इत्संज्ञोच्यते। स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत। तत्र खलु कृतामित्संज्ञायां लोपे च कृते आदेशो भविष्यति। उपदेश इति हीत्संज्ञोच्यते। अथवा --ननुपन्ने सनि प्रक्लृप्त्या भवितव्यम्। यदा चोत्पन्नः सन् तदा कृतस्माथ्यां पञ्चमीति कृत्वा प्रक्लृप्तिर्न भविष्यति। यदप्युच्चते प्रकृतिविकारव्यवस्था चेति। अत्रापि प्रकृतौ षष्ठी इक इति। विकृतौ प्रथमा यणिति। यत्र च नाम सौत्री षष्ठी नास्ति तत्र प्रक्लृप्त्या भवितव्यम्। अथवा- अस्तु तावदिको यणिति यत्र नाम सौत्री षष्ठी। यदि चेदानीमचीत्येषा सप्तमी यणिनि प्रथमायाः षष्ठी नास्ति तत्र प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति। अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतो यणो यणेव भविष्यति। यदप्युच्चते सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग इति नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नोभे युगपत् प्रकल्पिके भवति इति। यदयमेकः पूर्वपरयोरिति पूर्वपरग्रहणं करोति।
-1-1-67- तस्मादित्युत्तरस्य
किमुदाहरणम् ?
इह तावत् तस्मिन्निति निर्दिष्टे पूर्वस्येति इको यणचि दध्यत्र,मध्वत्र। इह तस्मादित्युत्तरेति द्वयन्तरूपसर्गेभ्योऽप इर्त्। द्वीपम्। अन्तरीपम्। समीपम्।
अन्यथाजातीयकेन शब्देन निर्देशः कियते। अन्यथाजातीयक उदाह्रियते।
किं तर्ह्युदाहरणम् ?
इह तावत् तस्मिन्निति निर्दिष्टे पूर्वस्येति तस्मिन्नणि च युष्माकास्माकाविति। तस्मादित्युत्तरस्येति। तस्माच्छसो नः पुंसीति।
इदं चाप्युदाहरणम्-- इको यणचि, द्वयन्तरूपसर्गेभ्योऽप इर्दिति। कथम्? सर्वनाम्नायं निर्देशः क्रियते। सर्वनाम च सामान्यवाची। तत्र सामान्ये निर्दिष्टे विशेषः अप्युदाहरणानि भवन्ति।
किं पुनः सामान्यं, को विशेषः ?
गौः सामान्यं कृष्णो विशेषः।
न तर्हीदानीं कृष्णः सामान्यं गौर्विशेषो भवति।
भवति च।
यदि तर्हि सामान्यमपि विशेषो विशेषोपि सामान्यं, सामान्यविशेषौ न प्रकल्पेते।

प्रकल्पेते च। कथम्? विविक्षातः। यदास्य गौः सामान्येन विविक्षतो भवति कृष्णो विशेषत्वेन, तदा गौः सामान्यं, कृष्णो विशेषः। यदास्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन तदा कृष्णः सामान्यं, गौर्विशेषः।

अपर- आह- प्रकल्पेते च। कथम्? पितापुत्रवत्। तद्यथा स एव कंचित् प्रति पिता भवति। कंचित् प्रति पुत्रो भवति। एवमिहापि स एव कंचित् प्रति सामान्यं कंचित् प्रति विशेषः। एते खल्वपि नैर्द्देशिकानां वार्त्ततरका भवन्ति, ये सवर्नाम्ना निर्देशाः क्रियन्ते। एतैर्हि बहुतरकं व्याप्यते।

अथ किमर्थमुपसर्गनिर्देशः क्रियते ?

शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात्। अर्थे मा भूत्। जनपदे अतिशायने इति।

किं गतमेतदुपसर्गेण। आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्।

गतमित्याह। कथम्? निरयं बहिर्भावे वर्तते। तद्यथा-- निष्क्रान्तो देशात्-- निर्देशः। बर्हिर्देश इति गम्यते। शब्दश्च शब्दाद् बहिरभूतः। अर्थोऽबहिर्भूतः।

अथ निर्दिष्टग्रहणं किमर्थम् ?

निर्दिष्टग्रहणमानन्तर्यार्थम्।

निर्दिष्टग्रहणं क्रियते। आनन्तर्यार्थम्। आनन्तर्यमात्रे कार्यं यथा स्यात्। इको यणचि। दध्यत्र। मध्वत्र। इह मा भूत् समिधौ। समिधः। दृषदौ। दृषदः।

किमर्थं पुनरिदमुच्यते ?

तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थं वचनं

दध्युदकं प्रचत्योदनम्।

तस्मिन् तस्मात् इति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थोऽयमारम्भः। ग्रामे देवदत्तः। पूर्वः पर इति सन्देहः। ग्रामाद् देवदत्तः पूर्वः पर इति सन्देहः। एवमिहापि दध्युदकं पचत्योदनम्। उभाविकौ। उभावचौ। अचि पूर्वस्य अचि परस्येति संदेहः। तिङ्ङ्तङ इति अतिङः पूर्वस्य अतिङः परस्येति सन्देहः। इष्यते चाचि पूर्वस्य स्यात्। अतिङश्च परस्येति। तच्चान्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम्। एवमर्थमिदमुच्यते।

अस्ति प्रयोजनमेतत्। किं तर्हीति? अथ यत्रोभयं निर्दिश्यते किं तत्र? पूर्वस्य कार्यं भवति आहोस्वित् परस्येति।

उभयनिर्देशे विप्रतिषेधात् पञ्चमीनिर्देशः।

उभयनिर्देशे विप्रतिषेधात् पञ्चमीनिर्देशो भविष्यति।

किं प्रयोजनम् ?

प्रयोजनमतो लसार्वधातुकानुदात्तत्वे।

वक्ष्यति तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थ इति। तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य लसार्वधातुके परतस्तास्यादीनामिति सन्देहः। तास्यादिभ्यः परस्य लसार्वधातुकस्य।

बहोरिष्ठादीनामादिलोपे।

बहोरुत्तरेषामिष्ठेमेयसाम्। इष्ठेमेयःसु परतो बहोरिति सन्देहः। बहोरुत्तरेषामिष्ठेमेयसाम्।

गोतो णित्।

गोतः परस्य सर्वनामस्थानस्य सर्वनामस्थाने परतो गोत इति सन्देहः। गोतः परस्य सर्वनामस्थानस्य।

रुदादिभ्यः सार्वधातुके।

रुदादिभ्यः परस्य सार्वधातुकस्य। सार्वधातुके परतो रुदादीनामिति सन्देहः। रुदादिभ्यः परस्य सार्वधातुकस्य।

आने मुगीदासः।

आस उत्तरस्यानस्य। आने परत आस इति सन्देहः। आस उत्तरस्य आनस्य।

आमि सर्वनाम्नः सुट्।

सर्वनाम्न उत्तरस्यामः। आमि परतः सर्वनाम्न इति सन्देहः। सर्वनाम्न उत्तरस्यामः।

घेर्ङित्याण् नद्याः।

नद्या उत्तरेषां ङितां, ङित्सु परतो नद्या इति सन्देहः। नद्या उत्तरेषां ङिताम्।

याडापः।

आप उत्तरस्य ङितः, ङिति परत आप इति सन्देहः। आप उत्तरस्य ङितः।

ङमो ह्रस्वादचि ङमुणम् नित्यम्।

ङम उत्तरस्याचः, अचि परतो ङम इति सन्देहः। ङम उत्तरस्माचः।

विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः।

विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तो विप्रतिषेधः। सर्वत्रैवात्र कृतसार्मथ्या सप्तमी। अकृतसार्मथ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति।

यथार्थं वा षष्ठीनिर्देशः।

यथार्थं वा षष्ठीनिर्देशः कर्तव्यः। यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या। यत्र परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्तव्या।

स तर्हि तथा निर्देशः कर्तव्यः।

न कर्तव्यः। अनेनैव प्रक्लृप्तिर्भविष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी। तस्मादित्युत्तरस्य षष्ठीति।
तत्तर्हि षष्ठीग्रहणं कर्तव्यम्।
न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? षष्ठी स्थानेयोगेति।
प्रकल्पकमिति चेन्नियमाभावः।
प्रकल्पकमिति चेत् नियमस्याभावः। उक्तं चैतन्नियमार्थोऽयमारम्भ इति। प्रत्ययविधौ खल्वपि पञ्चभ्यः प्रकल्पिकाः स्युः। तत्र को दोषः? गुप्तिज्किद्भ्यः सन्। गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मादित्युत्तरेति।
अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति।
नैवं शक्यम्। इत्संज्ञा न प्रकल्पेत। उपदेश इतीत्संज्ञोच्चते।
प्रकृतिविकारव्यवस्था च।
प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते। इको यणिचि , अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति।
सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीं प्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः।
सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीं प्राप्नोति। तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुके इत्यस्याः षष्ठीं प्रकल्पयेत्। तस्मादित्युत्तरस्येति। तथा लसार्वधातुके इत्येषा सप्तमी तास्यादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति। तत्र को दोषः। तत्रोभयकार्यप्रसङ्गः। तत्र उभयोः कार्यं प्राप्नोति।
नैष दोषः। यत्तावदुच्चते प्रकल्पकमिति चेन्नियमाभाव इति। मा भून्नियमः। सप्तमीनिर्दिष्टे पूर्वस्य षष्ठीं प्रकल्पयते पञ्चमीनिर्दिष्टे परस्य। यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठीं प्रकल्पयते पञ्चमीनिर्दिष्टे परस्य नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुम्। नापि पञ्चमीनिर्दिष्टे पूर्वस्य। यदप्युच्चते प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युरिति। सन्तु प्रकल्पिकाः। ननु चोक्तं गुप्तिज्किद्भ्यः सन् इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत् तस्मादित्युत्तरस्येति। परिहतमेतत्। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति। ननु चोक्तं नैवं शक्यमित्संज्ञा न प्रकल्पेत। उपदेश इति इत्संज्ञोच्यते। स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत। तत्र खलु कृतामित्संज्ञायां लोपे च कृते आदेशो भविष्यति। उपदेश इति हीत्संज्ञोच्यते। अथवा --ननुपन्ने सनि
प्रक्लृप्त्या भवितव्यम्। यदा चोत्पन्नः सन् तदा कृतस्मार्थ्या पञ्चमीति कृत्वा प्रक्लृप्तिर्न भविष्यति। यदप्युच्चते प्रकृतिविकारव्यवस्था चेति। अत्रापि प्रकृतौ षष्ठी इक इति। विकृतौ प्रथमा यणिति। यत्र च नाम सौत्री षष्ठी नास्ति तत्र प्रक्लृप्त्या भवितव्यम्। अथवा- अस्तु तावदिको यणिति यत्र नाम सौत्री षष्ठी। यदि चेदानीमचीत्येषा सप्तमी यणिनि प्रथमायाः षष्ठी नास्ति तत्र प्रकल्पयेत् तस्मिन्निति निर्दिष्टे पूर्वस्येति। अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतो यणो यणेव भविष्यति। यदप्युच्चते सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग इति नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नोभे युगपत् प्रकल्पिके भवति इति। यदयमेकः पूर्वपरयोरिति पूर्वपरग्रहणं करोति।

-1-1-68- स्वं रूपं शब्दस्याशब्दसञ्ज्ञा

रूपग्रहणं किमर्थम् ? न स्वं शब्दस्याशब्दसञ्ज्ञा भवतीत्येव रूपं शब्दस्य सञ्ज्ञा भविष्यति। न ह्यन्यत् स्वं शब्दस्यास्ति, अन्यदतो रूपात्।
एवं तर्हि सिद्धे सति यद् रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः-- अस्त्यन्यद् रूपात् स्वं शब्दस्येति। किं पुनस्तत्? अर्थः।
किमेतस्य ज्ञापने प्रयोजनम्?
अर्थवद्ग्रहणे नानर्थकस्येत्येषा परिभाषा न कर्तव्या भवति।
किमर्थं पुनरिदमुच्यते ?
शब्देनार्थावगतेः अर्थे कार्यस्यासम्भवात् तद्वाचिनः सञ्ज्ञाप्रतिषेधार्थं स्वं रूपवचनम्।
शब्देनोच्चारितेनार्थो गम्यते। गामानय दध्यशानेति अर्थ आनीयते अर्थश्च भुज्यते। अर्थे कार्यस्यासंभावात्। इह च व्याकरणे अर्थे कार्यस्यासम्भवः। अग्नेर्ढगिति न शक्यतेऽङ्गारेभ्यः
परो ढक कर्तुम्। शब्देनार्थावगतेरर्थे कार्यस्यासम्भवात् यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति। इष्यते च तस्मादेव स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः सञ्ज्ञाप्रतिषेधार्थं स्वंरूपवचनम् एवमर्थमिदमुच्यते।
न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययतस्मादर्थनिवृत्तिः।
न वा एतत् प्रयोजनमस्ति। किं कारणम्? शब्दपूर्वको ह्यर्थे सम्प्रत्ययः। आतश्च शब्दपूर्वकः। योपि ह्यसावाहूयते नाम्ना। नाम च यदानेन नोपलब्धं भवति तदा पृच्छति किं भवानाहेति। शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः। इह च व्याकरणे शब्दे कार्यस्य संभावः, अर्थेऽसंभावः तस्मात् तदर्थनिवृत्तिर्भविष्यति।
इदं तर्हि प्रयोजनम्। अशब्दसंज्ञेति वक्ष्यामीति। इह मा भूत् दाधा घ्वदाप्। तरसमपौ घ इति।
शब्दसञ्ज्ञाप्रतिषेधानर्थक्यं वचनप्रमाण्यात्।
शब्दसञ्ज्ञायाः प्रतिषेधोऽनर्थकः। शब्दसञ्ज्ञायां स्वरूपविधिः कस्मान्न भवति। वचनप्रामाण्यात्। शब्दसञ्ज्ञावचनसामार्थ्यात्।
ननु च वचनप्रामाण्यात् सञ्ज्ञिनां सम्प्रत्ययः स्यात् स्वरूपग्रहणाच्च सञ्ज्ञायाः।
एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति-- न शब्दसञ्ज्ञायां स्वरूपविधिर्भवतीति। यदयं ष्णान्ता षडिति षकारान्तायाः सङ्ख्यायाः षट्संज्ञां शास्ति। इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः सङ्ख्यायाः सम्प्रत्ययः स्यात्। स्वरूपग्रहणाच्च षकारान्तायाः।
नैतदस्ति ज्ञापकम्। नहि षकारान्ता सञ्ज्ञा। का तर्हि? डकारान्ता।
असिद्धं जश्त्वं, तस्यासिद्धत्वात् षकारान्ता।

मन्त्राद्यर्थं तर्हीदं वक्तव्यम्। मन्त्रे ऋचि यजुषीति यदुच्यते तन्मन्त्रशब्दे ऋक्शब्दे यजुःशब्दे च मा भूत्। मन्त्राद्यर्थमिति चेच्छास्त्रसार्मथ्यादर्थगतेः सिद्धम्।
मन्त्राद्यर्थमिति चेत् तन्न। किं कारणम्? शास्त्रस्य सामार्थ्यादर्थस्य गतिर्भविष्यति। मन्त्रे ऋचि यजुषिति यदुच्यते मन्त्रशब्दे ऋक् शब्दे यजुःशब्दे च तस्य कार्यास्य सम्भवो नास्तीति कृत्वा मन्त्रादिसहचारितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात्।
सित्तद्विशेषाणां वृक्ष्याद्यार्थम्।
सिन्निर्देशः कर्तव्यः। ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति। किं प्रयोजनम्? वृक्षाद्यर्थम्। विभाषा वृक्षमृगेति। प्लक्षन्यग्रेधं प्लक्षन्यग्रोधाः।
पित्पर्यायवचनस्य च स्वाद्यर्थम्।
पिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्। पर्यायवचनस्य च तद्विशेषाणां च ग्रहणं भवति स्वस्य रूपस्येति। किं प्रयोजनम्? स्वाद्यर्थम्। स्वे पुषः। स्वपोषं पुष्यति। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्।
जित्पर्यायवचनस्यैव राजाद्यर्थम्।
जिन्निर्देशः। कर्तव्यः। ततो वक्तव्यम्। पर्यावचनस्यैव ग्रहणं भवति। किं प्रयोजनम्? राजाद्यर्थम्। सभा राजाऽमनुष्यपूर्वा। इनसभम्। इर्श्वरसभम्। तस्यैव न भवति। राजसभा। तद्विशेषाणां च न भवति। पुष्यमित्रसभा। चन्द्रगुप्तसभा।
झितस्य च तद्विशेषाणां च मत्स्याद्यार्थम्।
झिन्निर्देशः। कर्तव्यः। ततो वक्तव्यम्-- तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं
प्रयोजनम्? मत्स्याद्यर्थम्। पक्षिमत्स्यमृगान् हन्ति। मात्स्यिकः। तद्विशेषाणाम्शाफरिकः,। शाकुलिकः। पर्यायवचनानां न भवति। अजिह्मान् हन्ति। अनिमिषान् हन्ति। अस्यैकस्य पर्यायवचनस्येष्यते- मीनान् हन्ति मैनिकः।
-1-1-69- अणुदित्सवर्णस्य चाप्रत्ययः
अप्रत्ययः इति किमर्थम् ?
सनाशंसभिक्ष उः अ साम्प्रतिके।
अत्यल्पमिदमुत्यते--- अप्रत्यय इति। अप्रत्ययादेशटित्किन्मितः इति वक्तव्यम्। प्रत्यय- उदाहृतम्। आदेशे- इदम् इश्। इतः इह। टिति-- लविता लवितुम्। किति-- बभूव। मिति- हे अनड्वन्।
टितः परिहारः-- आचार्यप्रवृत्तिर्ज्ञापयति न टिता सवर्णानां ग्रहणं भवतीति। यदयं ग्रहोऽलिटि दीर्घत्वं शास्ति।
नैतदस्ति ज्ञापकम्। नियमार्थमेतत् स्यात्। ग्रहोऽलिटि दीर्घ एवेति।
यत्तर्हि वृतो वे ति विभाषां शास्ति। सर्वेषामेष परिहारः- भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति। प्रत्यये भूयान् परिहारः- अनभिधानात् प्रत्ययः सवर्णान् न ग्रहीष्यति। यान् हि प्रत्ययः सवर्णान् गृह्णीयात् न तैरर्थस्याभिधानं स्यात्। अनभिदानान्न भविष्यति।
इदं तर्हि प्रयोजनम्। इह केचित् प्रतीयन्ते केचित् प्रत्यात्याय्यन्ते। ह्रस्वाः प्रतीयन्ते, दीर्घाः प्रत्याय्यन्ते। यावच्च ब्रूयात्---प्रत्याय्यमानेन सवर्णानां ग्रहणं नेति तावदप्रत्यय इति।
कं पुनर्दीर्घः सवर्णग्रहणेन गृह्णीयात् ?
ह्रस्वम्।
यत्नाधिक्यान्न ग्रहीष्यति।
प्लुतं तर्हि गृह्णीयात्।
अनण्तवान्न ग्रहीष्यति।
एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति।
किमर्थं पुनरिदमुच्यते ?
अण् सवर्णस्येति स्वरानुनासिक्यकालभेदात्।
अण् सवर्णस्येत्युच्यते। स्वरभेदादनुनासिकभेदात् कालभेदाच्च अण् सवर्णान्न गृह्णीयात्। इष्यते च ग्रहणं स्यादिति। तच्चान्तरेण यत्नं न सिध्यतोत्येवमर्थमिदमुच्यते।
अस्ति प्रयोजनमेतत्। किं तर्हीति?
तत्र प्रत्याहारग्रहणे सवर्णग्रहणमनुपदेशात्।
तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति। अकः सवर्णेदीर्घ इति। किं कारणम्? अनुपदेशात्। यथाजातीयकानां सञ्ज्ञा कृता तथाजातीयकानां सम्प्रत्यायिका स्यात्। ह्रस्वानां च क्रियते ह्रस्वानामेव सम्प्रत्यायिका स्यात् दीर्घाणां न स्यात्।
ननु च ह्रस्वाः प्रतीयमाना दीर्घान् सम्प्रत्याययिष्यन्ति।
ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणशब्दसम्प्रत्यायकत्वाच्छब्दस्यावचनम्।
ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणः शब्दः सम्प्रत्यायको भवति न सम्प्रतीयमानः। तद्यथा-- ऋगित्युक्ते संपाठमात्रं गम्यते।
एवं तर्हि वर्णपाठ एवोपदेशः करियष्ते।
वर्णपाठ उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः।
वर्णपाठक्रमे उपदेश इति चेद् अवरकालत्वात् परिभाषाया अनुपदेशः।
किं परा सूत्रात् क्रियते इत्यतोऽवरकाला?
नेत्याह। सर्वथावरकालैव। वर्णानामुपदेशस्तावत्। उपदेशोत्तरकाला--इत्संज्ञा। इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेति प्रत्याहारः।

प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा। सवर्णसंज्ञोत्तरकालमनुदित्सवर्णस्यचाप्रत्यय इति। सैषाऽवरकाला उपदेशोत्तरकाला वर्णानामुत्पत्तौ निमित्तत्वाय प्रकल्पिष्यत इत्येतन्न।
तस्मादुपदेशः।
कर्तव्यः।
तत्रानुवृत्तिनिर्देशे सवर्णग्रहणमनण्त्वात्।
तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति। अस्य च्वौ। यस्येति चेति। किं कारणम्? अनण्त्वात्। नह्येतेऽणो येऽनुवृत्तौ। के तर्हि ? येऽक्षरसमाम्नाये उपदिश्यन्ते।
एवं तर्हि अन्ण्त्वादनुवृत्तौ न, अनुपदेशाच्च प्रत्याहारे न। उच्यते चेदमण् सवर्णान् गृह्णातीति तत्र वचनाद् भविष्यति।
वचनाद् यत्र तन्नास्ति।
नेदं वचनाल्लभ्यम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? य एते
प्रत्याहाराणामादितो वर्णास्तैः सवर्णानां ग्रहणं यथा स्यात्।
एवं तर्हि।
सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्।
सवर्णेऽण्ग्रहणमपरिभाष्यम्। कुतः? आकृतिग्रहणात्। अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं
ग्रीहीष्यति। तथेवर्णाकृतिः।
ननु चान्या आकृतिरकारस्य। अन्या चाऽऽकारस्य।
अन्यात्वाच्च।
अनन्याकृतिरकारस्याकारस्य च।
अनेकान्तो ह्यनन्यत्त्वकरः।
यो ह्यनेकान्तेन भेदो नासावन्यत्त्वं करोति। तद्यथा न यो गोश्च गोश्च भेदः सोऽन्यत्त्वं करोति। यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्त्वं करोति।
अपर आह-
सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम्।
सवर्णोऽण्ग्रहणमपरिभाष्यम्।आकृतिग्रहणादनन्यत्वंभविष्यति। अनन्याकृतिरकारस्याकारस्य च।
अनेकान्तो ह्यनन्यत्वकरः।
यो ह्येनकान्तेन भेदो नासावन्यत्वं करोत। तद्यथा न यो गोश्च गोश्च भेदः सोऽन्यत्त्वं
करोति। यस्तु खलु गोश्च अश्वस्य च भेदः सोऽन्यत्त्वं करोति।
तद्वच्च हल्ग्रहणेषु।
एवं च कृत्वा हल्ग्रहणेषु सिद्धं भवति। झलो झलि। अवात्ताम्। अवात्तम्। अवात्त।
यत्रैतन्नास्ति- अण् सवर्णान् गृह्णातीति।
अनेकान्तो ह्यनन्यत्त्वकर।
इत्युक्तार्थम्।
द्रुतविलम्बितयोश्चानुपदेशात्।
द्रुतविलम्बितयोश्चानुपदेशान् मन्यामहे आकृतिग्रहणात् सिद्धमिति। यदयं कस्यां चिद् वृत्तौ वर्णानुपदिश्य सर्वत्र कृती भवति।
अस्ति प्रयोजनमेतत्। किं तर्हीति?
वृत्तिपृथक्त्वं तु नोपपद्यते।
वृत्तेः पृथक्त्वं नोपपद्यते।
तस्मात् तत्र तपरनिर्देशात् सिद्धम्।
तस्मात् तत्र तपरनिर्देशः कर्तव्यः। न कर्तव्यः। क्रियते न्यास एव। अतो भिस ऐस् इति।
-1-1-70- तपरस्तत्कालस्य
अयुक्तोऽयं निर्देशस्तत्कालस्येति। तदित्यनेन कालं प्रतिनिर्देश्यते। तदित्ययं च वर्णः।
तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम्।
कथं तर्हि निर्देशः कर्तव्यः?
तत्कालकालस्येति।
किमिदं तत्कालकालस्येति।
तस्य कालः तत्कालः। तत्कालः कालो यस्येति सोऽयं तत्कालकालः तत्कालकालस्येति।
स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा- उष्ट्रमुखमिव मुखमस्य सोऽयमुष्ट्रमुखः। खरमुखः। एवं तत्कालकालः तत्कालः तत्कालस्यति। अथवा साहचर्यात् ताच्छब्द्यं भविष्यति। कालसहचरितो वर्णोपि काल एव।
किं पुनरिदं नियमार्थमाहोस्वित् प्रापकम् ?
कथं च नियमार्थे स्यात् कथं वा प्रापकम्।

यद्यत्राण्ग्रहणमनुवर्तते ततो नियमार्थम्। अथ निवृत्तं ततः प्रापकम्।
कश्चात्र विशेषः?
तपरस्तत्कालस्येति नियमार्थमिति चेद् दीर्घग्रहणे स्वरभिन्नाग्रहणम्।
तपरस्तत्कालस्येति नियमार्थमिति चेद् दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति। केषाम्? उदात्तानुदात्तस्वरितानुनासिकानाम्।
अस्तु तर्हि प्रापकम्।
प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः।
प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतयोः प्रतिषेधो वक्तव्यः।
न वक्तव्यः।
विप्रतिषेधात् सिद्धम्।
अण् सवर्णान् गृह्णातीत्येतदस्तु। तपरस्तत्कालस्य वा। तपरस्तत्कालस्येत्येतद् भवति विप्रतिषेधेन। अण् सवर्णान् गृह्णातीत्यस्यावकाशः ह्रस्वा अतपरा अणः। तपरस्तत्कालस्येत्यस्यावकाशः दीर्घास्तपराः। ह्रस्वेषु तपरेषूभयं प्राप्नोति। तपरस्तत्कालस्येत्येतद् भवति विप्रतिषेधेन।
यद्येवम्---
द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसमख्यानं कालभेदात्।
द्रुतायां तपरकरणे मध्यमविसम्बितयोरुपसङ्ख्यानं कर्तव्यं, तथा मध्यमायां द्रुतविलम्बितयोः, तथा विलम्बितायां द्रुतमध्यमयोः। किं पुनः कारणं न सिध्यति? कालभेदात्। ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम्।
सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते।
सिद्धमेतत्। कथम्? अवस्तिथा वर्णा द्रुतमध्यमविलम्बितासु। किंकृतस्तर्हि वृत्तिविशेषः?
वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते। वक्ता कश्चिदाश्वभिधायी भवति। आशु वर्णानभिधत्ते। कश्चिच्चिरेण। कश्चिच्चितरेण। तद्यथा-- तमेवाध्वानं कश्चिदाशु गच्छति।
कश्चिच्चिरेण कश्चिच्चितरेण। कश्चिच्चरतरेण गच्छति। रथिक आशु गच्छति। आश्विकश्चिरेण। पदातिश्चिरतरेण। शिशुश्चिरतरेण।
विषम उपन्यासः। अधिकरणमत्राध्वा व्रजति-क्रियायाः। तत्रायुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम्।
एवं तर्हि स्फटोः शब्दः। ध्वनिः शब्दगुणः। कथम्?
भेर्याघातवत्।
तद्यथा-- भेर्याघातः भेरीमाहत्य कश्चिद्विंशति पदानि गच्छति। कश्चि त्रिंरंशत्। कश्चिच्चत्वारिशत्। स्फटोस्तावानेव भवति। ध्वनिकृता वृद्धिः।
ध्वनिः स्फटोश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषांचिदुभयं तत् स्वभावतः ।।
-1-1-71- आदिरन्त्येन सहेता
आदिरन्त्येन सहेतेत्यसम्प्रत्ययः सञ्ज्ञिनोऽनिर्देशात्।
आदिरन्त्येन सहेतेति असम्प्रत्ययः। किं कारणम्? सञ्ज्ञिनोऽनिर्देशात्। नहि सञ्ज्ञिनो निर्देश्यन्ते।
सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात्।
सिद्धमेतत्। कथम्? आदिरन्त्येन सहेता गृह्यमाणः स्वस्य च रूपस्य ग्राहकः तन्मध्यानां चेति वक्तव्यम्।
सम्बन्धिशब्दैर्वा तुल्यम्।
सम्बन्धिशब्दैर्वा तुल्यमेतत्। तद्यथा सम्बन्धिशब्दाः मातरि वर्तितव्यम्। पितरि
शुश्रूषितव्यमिति। न चोच्चते-- स्वस्यां मातरि, स्वस्मिन् पितरीति। सम्बन्धाञ्च गम्यते या यस्य माता,यो यस्य पितेति। एवमिहापि आदिरन्त्य इति सम्बन्धिशब्दावेतौ। तत्र सम्बन्धादेतद् गन्तव्यम्। यं प्रति य आदिरन्त्य इति च भवति तस्य ग्रहणं भवति स्वस्य च रूपस्येति।।71।।
-1-1-72- येन विधिस्तदन्तस्य
इह कस्मान्न भवति। इको यणचि। दध्यत्र, मध्वत्र।
अस्तु। अलोन्त्यस्य विधियो भवन्तीत्यन्त्यस्य भविष्यति।
नैवं शक्यम्। येऽनेकाल आदेशास्तेषु दोषः स्यात्- एचोऽयवायावः इति।
नैष दोषः। यथैव प्रकृतितस्तदन्तविधिर्भवति एवमादेशतोऽपि भविष्यति। तत्रैजन्तस्यायाद्यन्ता आदेशा भविष्यन्ति।
यदि चैवं क्वचिद् वैरूप्यं तत्र दोषः स्यात्। ब्रह्योदकम्। ब्रह्येन्द्रः।
अपि चानतरङ्गबहिरङ्गे न प्रकल्पेयाताम्। तत्र को दोषः? स्यानः,स्योना। अनतरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधिकः प्रसज्येत। ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुणः।
अलविधिश्च न प्रकल्पेत। द्यौः, पन्थाः स इति। तस्मात्-- प्रकृते तदन्तिविधिरिति
वक्तव्यम्।
न वक्तव्यम्। येनेति करण एषा तृतीया। अन्येन चान्यस्य विधिर्भवति। तद्यथा-- देवदत्तस्य समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते। तथा संग्रामं हस्त्यश्वरथपदातिभिः। एवमिहाप्यचा धातोर्यतं विधते। अकारेण प्रातिपदिकस्य इञ्ञं विधत्ते।
येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः।

येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः। ये ग्रहणोपाधयः ते तदन्तोपाधयः स्युः। तत्र को दोषः? उतश्च प्रत्ययादसंयोगपूर्वादिति असंयोगपूर्वग्रहणमुकारान्तविशेषणं स्यात्। तत्र को दोषः? असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्- अक्ष्णुहीति, तक्ष्णुहीति। इह न स्यात्- आप्नुहि शक्नुहि इति। तथा उदोष्ठपूर्वस्येति ओष्ठ्यपूर्वग्रहणमकारान्तविशेषणं स्यात्। तत्र को दोषः? ओष्ठ्यपूर्वग्रहणेन इह प्रसज्येत। संकीर्णे संकीर्णमिति। इह च न स्यात् निपूर्ताः पिण्डा इति।

सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात्।

सिद्धमेतत्। कथम्? यथेष्टं विशेषणविशेष्ययोर्योगो भवति। यावता यथेष्टम् इह तावदुतश्च प्रत्ययादसंयोगपूर्वादिति नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते। किं तर्हि? उकार एव विशेष्यते। उकारोयोऽसंयोगपूर्वस्तदन्तात् प्रत्ययादिति। तथा उदोष्ठयपूर्वस्येति नौष्ठ्यपूर्वग्रहणेन ऋकार एव विशेष्यते। ऋकारो य ओष्ठ्यपूर्वस्तदन्तस्य धातोरिति।

समासप्रत्ययविधौ प्रतिषेधः।

समासविधौ प्रत्ययविधौ च प्रतिषेधो वक्तव्यः। समासविधौ तावत्। द्वितीया श्रितादिभिः। कष्टश्रितः। नरकश्रितः। कष्टं परमश्रित इत्यत्र मा भूत्। प्रत्ययविधौ। नडस्यापत्यं नाडायनः। इह न भवति। सूत्रनडस्यापत्यं सौत्रनाडिः।

किमविशेषेण ?

नेत्याह।

उगिद्वर्णग्रहणवर्जम्।

उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा। उगिद्ग्रहणम् उगितश्च। भवती। अतिभवतौ।

महती, अतिमहती। वर्णग्रहणम्--- अत् इञ्ञ्। दाक्षिः, प्लाक्षिः।

अस्ति चेदानीं कश्चित् केवलोऽकारः प्रातिपदिकं यदर्था विधिः स्यात्।

अस्तीत्याह। अततेर्डः, अः। तस्यापत्यम् अत इञ्ञ्---इः।

अकच् श्नम्वतः सर्वनामाव्ययधातुविधावुपसङ्ख्यानम्।

अकज्वतः सर्वनामाव्ययविधौ इनम्वतो धातुविधावुपसङ्ख्यानं कर्तव्यम्। अकज्वतः- सर्वके। विश्वके। अव्ययविधौ- उच्चकैः, नीचकैः। श्नम्वतः- भिनत्ति, छिनत्ति।

किं पुनः कारणं न सिध्यति?

इह तस्य वा ग्रहणं भवति तदन्तरस्य वा। न चेदं तत्। नापि तद्न्तम्।

सिद्धं तु तदन्तान्तवचनात्।

सिद्धमेत्त। कथम्? तदन्तान्तवचनात्। तदन्तान्तस्येति वक्तव्यम्।

किमिदं तदन्तान्तस्येति?

तस्यान्तः तदन्तः। तदन्तोऽन्तो यस्य तदिदं-- तदन्तान्तं, तदन्तान्तस्येति।

स तर्हि तथा निर्देशः कर्तव्यः।

न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः तद्यथा उष्ट्रमुखमिव मुखमस्य-- उष्ट्रमुखः। खरमुखः। एवमिहापि तदन्तः अन्तो यस्य-- सोऽयं तदन्तः तदन्तस्येति।

तदेकदेशविज्ञानाद्वा सिद्धम्।

तदेकदेशविज्ञानाद्वा पुनः सिद्धमेतत्। तदेकदेशभूतःतद्ग्रहणेन गृह्यते। तद्यथा-- गङ्गा ,यमुना, देवदत्तेति। अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते। देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते।

विषम उपन्यासः। इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति। य एते सङ्ख्याशब्दाः परिमाणशब्दाश्च। पञ्चसप्तेति। एकेनाप्यपाये न भवन्ति। द्रोणः, खारी आढकमिति नैवाधिके भवन्ति, न न्यूने।

केचिद् यावदेव तद् भवति तावदेवाहुः। य एते जातिशब्दा गुणशब्दाश्च। तैलं घृतमिति। खार्यामपि भवति द्रोणेपि। शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये। इमाश्चापि सञ्ज्ञा अक्तपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति- तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति। यदयं नेदमदसोरकोरिति सककारयोरिदमदसोः प्रतिषेधं शास्ति।

कथं कृत्वा ज्ञापकम् ?

इदमेदसोः कार्यमुच्यमानं कः प्रसङ्गे यत् सककारयोः स्यात्। पश्यति त्वाचार्यस्तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति ततः सककारयोः प्रतिषेधं शास्ति।

कानि पुनरस्य योगस्य प्रयोजनानि ?

प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्।

सर्वे परमसर्वे। विश्वे परमविश्वे। उच्चैः, परमोच्चैः। नीचैः, परमनीचैरिति।

उपपदविधौ भयाढ्यादिग्रहणं प्रयोजनम्।।

भयङ्करः । अभयंकरः। आढ्यंकरणनम्। स्वाढ्यंकरणम्

ङीब्दिधावुगिद्ग्रहणम्।

प्रयोजनम्। भवती अतिभवती। महती अतिमहती।

प्रतिषेधे स्वरत्रादिग्रहणम्।

प्रयोजनम्। स्वसा। परमस्वसा। दुहिता। परमदुहिता।
अपरिमाणबिस्तादिग्रहणं च प्रतिषेधे प्रयोजनम्।
अपरिमाणबिस्तादिग्रहणं च ङीप्प्रतिषेधे प्रयोजनम्। अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकीति। द्विबिस्ता, द्विपरमबिस्ता। त्रिबिस्ता, त्रिपरमबिस्ता। द्व्याचित, द्विपरमाचित।
दिति।
दितिग्रहणं च प्रयोजनम्। दितेरपत्यं दैत्यः। अदितेरपत्यमादित्यः। दित्यदित्यादित्येत्यदिग्रहणं न कर्तव्यं भवति।
रोण्या अण्।
रोण्या अण् ग्रहणं च प्रयोजनम्। आजकरोणः। सौहिकरोणः।
तस्य च।
तस्य चेति वक्तव्यम्। रौणः।
किं पुनः कारणं न सिध्यति? न तदन्ताच्च तदन्तविधिना सिद्धं केवलाच्च व्यपदेशिवद्भावेन।
व्यपदेशिवद्भावोऽप्रातिपदिकेन।
किं पुनः कारणं व्यपदेशिवद्भावोऽप्रातिपदिकेन?
इह सूत्रान्ताट्ठग् भवति। दशान्ताड्डो भवतीति केवलादुत्पत्तिर्मा भूदिति।
नैतदस्ति ज्ञापकम्। सिद्धमत्र तदन्ताच्च तदन्तविधिना केवलाच्च व्यपदेशिवद्भावेन। सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञापयत्याचार्यः-- सूत्रान्तादेव दशान्तादेवेति
नात्र तदन्तादुत्पत्तिः प्राप्नोति। इदानीमेव ह्युक्तं समासप्रत्ययविधौ प्रतिषेध इति।
सा तर्ह्येषा परिभाषा कर्तव्या।
न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषा--- व्यपदेशिवद्भावोऽप्रातिपदिकेनेति। यदयं पूर्वादिनिः सपूर्वाच्च इत्याह।
नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? सपूर्वादिनिं वक्ष्यामीति।
यत्तर्हि योगविभागं करोति। इतरथा पूर्वात् सपूर्वादिनिः इत्येव ब्रूयात्।
किं पुनरयमस्यैव शेषस्तस्य चेति?
नेत्याह। यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैव शेषस्तस्य चेति।
रथसीताहलेभ्यो यद्विधौ प्रयोजनम्।
रथसीताहलेभ्यो यद्विधौ प्रयोजनम्। रथ्यः। परमरथ्यः। सीत्यं परमसीत्यम्। हल्या
परमहल्या।
सुसर्वार्धदिक् शब्देभ्यो जनपदस्य।
सुसर्वार्धदिक्शब्देभ्यो जनपदस्य प्रयोजनम्। सु- सुपाञ्चालकः, सुमागधकः।
सर्व- सर्वपाञ्चालकः, सर्वमागधकः। अर्ध- अर्धपाञ्चालकः। अर्धमागधकः। दिक्शब्द- पूर्वपाञ्चालकः। अपरपाञ्चालकः। पूर्वमागधकः। अपरमागधकः।
ऋतोर्वृद्धिमद्विधाववयवानाम्।
ऋतोर्वृद्धिमद्विधाववयवानां प्रयोजनम्। पूर्वशारदम्। अपरशारदम्। पूर्वनैदाघम्। अपरनैदाघम्।
ठञ्विधौ सङ्ख्यायाः।
ठञ्विधौ सङ्ख्यायाः प्रयोजनम्। द्विषाष्टिकम्। पञ्चाषाष्टिकम्।
धर्मान्नञः।
धर्मान्नञः प्रयोजनम्। धर्मे चरति धार्मिकः। अधर्मे चरति आधर्मिकः।
अधर्माच्चेति न वक्तव्यं भवति।
पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च।
पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यम्।
पदाधिकारे किं प्रयोजनम् ?
प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु।
इष्टकेषूकामालानां चिततूलभारिषु प्रयोजनम्। इष्टकचितं चिन्वीति। पक्वेष्टकचितं तिन्वीत। इषीकतूलेन। मुञ्जेषीकतूलेन। मालभारिणी कन्या। उत्पलमालभरिणी कन्या।
अङ्गाधिकारे किं प्रयोजनम् ?
प्रयोजनं महदप्स्वसृनप्तृणां दीर्घविधौ।
महान्। परममहान्। अप्- आपः तिष्टन्ति स्वापस्तिष्ठन्ति। स्वसृ- स्वसा स्वसारौ स्वसारः। परमस्वसा। परमस्वसारौ। परमस्वसारः। नप्तृ- नप्ता, नप्तारौ, नप्तारः। एवं परमनप्ता, परमनप्तारौ, परमनप्तारः।
पदयुष्मदस्मदस्थ्याद्यानडुहो नुम्।
पद्भावः प्रयोजनम्। द्विपदः पश्य।

अस्ति चेदानीं कश्चित् केवलः पाच्छब्दो यदर्थे विधिः स्यात्।
नास्तीत्याह।
एवं तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्य प्रयोजनमुक्तम्। हिमकाषिहतिषु च। यथा पत्काषिणौ, पत्काषिणः। एवं परमपत्काषिणौ। परमपत्काषिणः।
यदि पदाधिकारे पादस्य तदन्तविधिरभवति। पादस्य पदाज्यातिगोपहतेषु यथेह भवति-- पादेनोपहतं-- पदोपहतम्। अत्रापि स्यात्दिग्धपादेनोपहतं-- दिग्धपदोपहतम् इति।
एवं तर्ह्यधिकार एव प्रयोजनम्।
ननु चोक्तं न केवलः पाच्छब्द इति।
अयमस्ति-- पादयतेरप्रत्ययः-- पात्। पदः। पदा। पदे।
युष्मद्, अस्मद्। यूयम्, वयम्। परमयूयम्। परमवयम्। अस्थादि। अस्थना दध्ना
सक्थना। परमास्थना। परमदध्ना। परमसक्थ्ना। अनडुहो नुम्। अनड्वान्। परमानड्वान्।
द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम्।
प्रयोजनम्। द्यौः, सुद्यौः। पन्थाः, सुपन्थाः। मन्थाः, परममन्थाः। पुमान्। परमपुमान्। गौः। सुगौः। सखा।
सखायौ। सखायः। सुसखा। सपसखायौ। सपसखायः। परमसखा। परमसखायौ। परमखायः। चत्वारः। परमचत्वारः। अनड्वाहः। परमानड्वाहः। त्रयाणां परमत्रयाणाम्।
त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च।
प्रयोजनम्। सः। अतिसः। भस्त्रका। भस्त्रिका। बहुभस्त्रिका। बहुभस्त्रिका। निर्भस्त्रका। निर्भस्त्रिका। स्त्रीग्रहणं च प्रयोजनम्। स्त्रियौ, स्त्रियः। राजस्त्रियौ, राजस्त्रियः।
वर्णग्रहणं च सर्वत्र।
प्रयोजनम्। क्व सर्वत्र? अङ्गाधिकारे चान्यत्र च। अन्यत्रोदाहृतम्। अङ्गाधिकारे अतो दीर्घो यञ्जि ,सुपि च। इहैव स्यात्-- आभ्याम्। घटाभ्याम् इत्यत्र न स्यात्।
प्रत्ययग्रहणं चापञ्चम्याः।
प्रत्ययग्रहणं च अपञ्चम्याः प्रयोजनम्। यञ्ञिञोः फग् भवति। गार्ग्यायणः। वात्स्यायनः। परमवात्स्यायनः। दाक्षायणः। परमदाक्षायणः।
अपञ्चम्या इति किमर्थम् ?
दृषत्तीर्णा। परिषत्तीर्णा।
अलैवानर्थकेन।
अलैवानर्थकेन तदन्तविधिर्भवति नाम्येनानर्थकेनेति वक्तव्यम्। किं प्रयोजनम् ? हन्ग्रहणे प्लीहन् ग्रहणं मा भूत्। उद्ग्रहणे गर्मुद्ग्रहणम्। स्त्रीग्रहणे शास्त्रीग्रहणम्। संग्रहणे पायसंग्रहणम् करोतीति मा भूत्।
किमर्थमिदमुच्यते। न पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेत्यव सिद्धम्। न चेदं तत्, नापि तदुत्तरपदम्।
तन्न वक्तव्यं भवति।
किं पुनरत्र ज्यायः ?
तदन्तविधिरेव ज्यायान्। इदमपि सिद्धं भवति। परमातिमहान्। एतद्धि नैव तत्। नापि तदुत्तरपदम्।
अनिनस्मन्ग्रहणानि च।
अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। अन्- राज्ञा इत्यर्थवता, साम्नेत्यनर्थकेन। इन्- दण्डीत्यर्थवता, वाग्ग्मीत्यनर्थकेन। अस्- सुपयाः इत्यर्थवता, सुस्रोताः इत्यनर्थकेन। मन्- सुशर्मा इत्यर्थवता, सुप्रथिमा इतायनर्थकेन।
यस्मिन् विधिस्तदादावल्ग्रहणे।
यस्मिन् विधिस्तदादाविति वक्तव्यम्। किं प्रयोजनम् ? अचि श्नुधातुभ्रुवां य्वोरियङुवङाविति इहैव स्यात्- श्रियौ। भ्रुवौ। श्रियो भ्रुवः इत्यत्र न स्यात्।
-1-1-73- वृद्धिर्यस्याचामादिस्तद् वृद्धम्
वृद्धिग्रहणं किमर्थम् ?
यस्याचामादिस्तद् वृद्धम् इतीयत्युच्यमाने दाताः, राक्षिताः अत्रापि प्रसज्येत। वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति।
अथ यस्यग्रहणं किमर्थम् ?
यस्येति व्यपदेशाय।
अथाज्ग्रहणं किमर्थम् ?
वृद्धिर्यस्यादिस्तद् वृद्धम् इतीयत्युच्यमाने इहैव स्यात्- एतिकायनीयाः। औपगवीयाः। इह न स्याद्- गार्गीयाः ,वात्सीयाः इति। अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति।
अथादिग्रहणं किमर्थम् ?
वृद्धिर्यस्याचां तद् वृद्धम् इतीयत्युच्यमाने सभासंनयने भवः-- साभासंनयनः इत्यत्रापि प्रसज्येत। आदिग्रहणे पुनः क्रियमाणे न दोषो भवति।
वृद्धसञ्ज्ञायामजसंनिवेशादनादित्वम्।

वृद्धसञ्ज्ञायामजसंनिवेशाद् आदिरित्येतन्नोपपद्यते। न ह्यचां संनिवेशोऽस्ति।
ननु चैवं विज्ञायते-- अजेवादिरिति।
नैवं शक्यम्। इहैव प्रसज्येत औपगवियाः। इह न स्याद् गार्गीयाः। एकान्तादित्वं तर्हि विज्ञायते।
एकान्तादित्वे च सर्वप्रसङ्गः।
इहापि प्रसज्येत- सभासन्नयने भवः साभासन्नयनः इति।
सिद्धमजाकृतिनिर्देशात्।
सिद्धमेतत्। कथम्? अच आकृतिर्निर्देश्यते।
एवमपि व्यञ्जनैर्व्यवहितत्वान्न प्राप्नोति।
व्यञ्जनस्याविद्यमानत्वं यथान्यत्र।
व्यञ्जनस्याविद्यमानवद्भावो वक्तव्यो यथान्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति। क्वान्यत्र। स्वरे। वा नामधेयस्य।
वृद्धसञ्ज्ञा वक्तव्या। देवदत्तीयाः। दैवदत्ताः। यज्ञदत्तीयाः। याज्ञदत्ताः।
गोत्रोत्तरपदस्य च।
गोत्रोत्तरपदस्य च वृद्धसञ्ज्ञा वक्तव्या। कम्बलचारायणीयाः। ओदनपाणिनीयाः। वृतरौढीयाः।
गोत्रान्ताद्वाऽसमस्तवत्।
गोत्रान्ताद्वा असमस्तवत् प्रत्ययो भवतीति वक्तव्यम्। एतान्येवोदाहरणानि।
किमविशेषेण ?
नेत्याह।
जिह्वाकात्यहरितकात्यर्वज्जम्।
जिह्वाकात्यं हरितकात्यं च र्वज्जयित्वा। जैह्वाकाताः। हारितकाताः।
किं पुनरत्र ज्यायः?
गोत्रान्ताद्वाऽसमस्चवादित्येव ज्यायः। इदमपि सिद्धं भवति। पिङ्गलकाण्व्यस्य छात्राः पैङ्गलकाण्वाः।
-1-1-74- त्यदादीनि च
यस्याचामादिग्रहणमनुवर्तते उताहो न।
किं चातः? यद्यनुवर्तते, इह च प्रसज्येत त्वत्पुत्रस्य छात्राः त्वात्पुत्रा। इह च न स्यात् त्वदीयो मदीय इति।
अथ निवृत्तम्, एङ् प्राचां देशे यस्याचामादिग्रहणं कर्तव्यम्।
एवं तर्ह्यनुवर्तते।
कथं त्वात्पुत्रा मात्पुत्रा इति ?
सम्बन्धमनुवर्तिष्यते। वृद्धिर्यस्याचामादिस्तद् वृद्धम्। त्यादादीनि च वृद्धसञ्ज्ञानि भवन्ति। वृद्धिर्यस्याचामादिस्तद् वृद्धम्। एङ् प्राचां देशे यस्याचामादिग्रहणमनुवर्तते। वृद्धिग्रहणं निवृत्तम्। तद्यथा कश्चित् कान्तारे समुपस्थिते सार्थमुपादत्ते। स यदा निष्कान्तकान्तारो भवति तदा सार्थं जहाति।
-1-1-75- एङ् प्राचां देशे
एङ् प्राचा देशे शैषिकेष्विति वक्तव्यम्।
सैपुरिकी सैपुरिका, स्कौनगरिकी, स्कौनगरिकेति।।75।।
-9-9-999-

# महाभाष्यम्/प्रथमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nm5

< महाभाष्यम् | प्रथमोऽध्यायः

-1-2-1- गाङ्कुटादिभ्योऽञ्णिन्ङित्

।। अतिदेशत्वनिर्णयाधिकरणम् ।।

- ङित्किद्वचने तयोरभावादप्रसिद्धिः -

ङित्किद्वचने तयोरभावात्- ङकारककारयोरभावात्- ङित्त्वकित्त्वयोरप्रसिद्धिः। सता ह्यभिसम्बन्धः शक्यते कर्तुम्। न चाऽत्र ङकारककारावितौ पश्यामः। तद्यथा- चित्रगुर्देवदत्तः इति; यस्य ता गावो भवन्ति स एव ताभिः शक्यतेऽभिसम्बन्धुम्।

भाव्येते तर्ह्यनेन- गाङ्कुटादिभ्योऽञ्णिन्ङिद्भवति इति। असंयोगाल्लिट् किद्भवति इति।

- भवतीति चेदादेशप्रतिषेधः -

भवतीति चेदादेशस्य प्रतिषेधो वक्तव्यः। ङकारककारावितावादेशौ प्राप्नुतः।

कथं पुनरित्सञ्ज्ञो नामादेशः स्यात्?

किं हि वचनान्न भवति?

एवं तर्हि षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते, न चात्र षष्ठीं पश्यामः।

गाङ्कुटादिभ्यः इत्येषा पञ्चमी अञ्णत् इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति- तस्मादित्युत्तरस्य (1.1.67) इति।

सञ्ज्ञाकरणं तर्हीदम्- गाङ्कुटादिभ्योऽञ्णित् ङित्सञ्ज्ञो भवतीति। असंयोगाल्लिट्कित्सञ्ज्ञो भवतीति।

- सञ्ज्ञाकरणे क्ङिद्ग्रहणेऽसम्प्रत्ययः शब्दभेदात् -

सञ्ज्ञाकरणे क्ङिद्ग्रहणेऽसम्प्रत्ययः स्यात्। किं कारणम्? शब्दभेदात्। अन्यो हि शब्दः क्ङिति इति अन्यः किति इति ङिति इति च। तथा किद्ग्रहणेषु ङिद्ग्रहणेषु चानयोरेव सम्प्रत्ययः स्यात्।

तद्वदतिदेशस्तर्ह्ययम्-गाङ्कुटादिभ्यः अञ्णित् ङिद्वद्भवति इति। असंयोगाल्लिट्किद्वद्भवति इति।

स तर्हि वतिनिर्देशः कर्तव्यः।

न कर्तव्यः।

नह्यन्तरेण वतिमतिदेशो गम्यते?

अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा- एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह। ते मन्यामहे- ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यङितं ङिदित्याह, ङिद्वदिति गम्यते। अकितं किदित्याह, किद्वदिति गम्यते।

- तद्वदतिदेशेऽकिद्विधिप्रसङ्गः -

तद्वदतिदेशेऽकिद्विधिरपि प्राप्नोति। सृजिदृशोर्झल्यमकिति (6.1.58) सिसृक्षति दिदृक्षते, अकिल्लक्षणोऽमागमः प्राप्नोति।

- सिद्धं तु प्रसज्यप्रतिषेधात् -

सिद्धमेतत्। कथम्? प्रसज्यप्रतिषेधात्, प्रसज्यायं प्रतिषेधः क्रियते- किति न इति।

- सर्वत्र सन्नन्तादात्मनेपदप्रतिषेधः -

सर्वेषु पक्षेषु सन्नन्तादात्मनेपदं प्राप्नोति उच्चुकुटिषति, निचुकुटिषति- ङितः इत्यात्मनेपदं प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः।

- सिद्धन्तु पूर्वस्य कार्यातिदेशात् -

सिद्धमेतत्। कथम्? पूर्वस्य यत्कार्यं तदतिदिश्यते।

किं वक्तव्यमेतत्?

नहि। कथमनुच्यमानं गंस्यते? सप्तम्यर्थेऽपि वतिर्भवति। तद्यथा- मथुरायामिव मथुरावत् पाटलिपुत्र इव पाटलिपुत्रवत्। एवं ङितीव ङिद्वत्, कितीव किद्वत्।

।। पृथगनुबन्धप्रयोजनाधिकरणम् ।।

अथ किमर्थं पृथङ्ङित्कितौ क्रियेते, न सर्वं किदेव स्यात्, ङिदेव वा।

- पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसम्प्रसारणं सार्वधातुकचङादिषु -

पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसम्प्रसारणं सार्वधातुके चङादिषु च।

सार्वधातुके प्रयोजनम्- यथेह भवति सुप्तः सुप्तवानिति, एवं स्वपितः स्वपिथः इत्यत्रापि प्राप्नोति।

चङादिषु च प्रयोजनम्। के पुनश्चङादयः? चङङ्नजिङ्ङ्वनिबथङ्नङः। चङ्- यथेह भवति शूनः शूनवान् इति, एवम् अशिश्वियत् अत्रापि प्राप्नोति। अङ्- यथेह भवति शून उक्त इति, एवम् अश्वद् अवोचद् अत्रापि प्राप्नोति। नजिङ्- यथेह भवति सुप्तः सुप्तवान् इति, एवं स्वप्नग् इत्यत्रापि प्राप्नोति। ङ्वनिप्- यथेह भवति इष्टमिष्टवानिति, एवं यज्वा अत्रापि प्राप्नोति। अथङ्- यथेह भवत्युषित इति, एवम् आवसथः अत्रापि प्राप्नोति। नङ्- यथेह भवति इष्टमिति, एवं यज्ञः अत्रापि प्राप्नोति।

- जाग्रोगुणविधिः -

जागर्तेरगुणविधिः प्रयोजनम्। यथेह भवति- जागृतः जागृथ इत्यङितीति पर्युदासः। एवं जागरितः जागरितवानित्यत्रापि प्राप्नोति।

अपर आह- जाग्रो गुणविधिः। जगार्तेर्गुणविधिः प्रयोजनम्। यथेह भवति- जागरितः जागरितवानिति। एवं जागृतः जागृथ इत्यत्रापि प्राप्नोति।
- कुटादीनामिट्प्रतिषेधः -
कुटादीनामिट्प्रतिषेधः प्रयोजनम्। यथेह भवति- लूत्वा, धूत्वा इति श्र्युकः किति (7.2.11) इतीट्प्रतिषेधः, एवं नुविता धुविता अत्रापि प्राप्नोति।
- क्त्वायां कित्प्रतिषेधश्च -
क्त्वायां कित्प्रतिषेधश्च प्रयोजनम्। किं च? इट्प्रतिषेधः?।
नेत्याह। अदेशेऽयं चः पठितः- क्त्वायां च कित्प्रतिषेधः इति। यथेह भवति- देवित्वा सेवित्वेति न क्त्वा सेट् (1.2.8) इति कित्त्वप्रतिषेधः। एवं कुटित्वा पुटित्वा अत्रापि प्राप्नोति।
अथवा देश एवायं चः पठितः- क्त्वायां कित्प्रतिषेधश्चेट्प्रतिषेधश्च। कित्प्रतिषेध उदाहृतम्। इट्प्रतिषेधो यथेह भवति लुत्वा धूत्वा श्र्युकः किति इतीट्प्रतिषेधः, एवं नुवित्वा धुवित्वा अत्रापि प्राप्नोति।
स्यादेतत्प्रयोजनं यद्यस्य नियोगत आतिदेशिकेन ङित्त्वेनौपदेशिकं कित्त्वं बाध्येत। सत्यपि तु ङित्त्वे किदेवैषः। तस्मान्नूत्वा धूत्वेत्येव भवितव्यम् ।। गाङ्कुटादिभ्योऽञ्णिन्ङित् ।। 1 ।।
-1-2-4- सार्वधातुकमपित्
सार्वधातुकग्रहणं किमर्थम्?
अपिदितीयत्युच्यमाने आर्धधातुकस्याप्यनेनापितो ङित्त्वं प्रसज्येत- कर्ता हर्ता।
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति- नानेनार्धधातुकस्यापितो ङित्त्वं भवतीति। यदयमार्धधातुकीयान् कांश्चिद् ङितः करोति चङ्ङङ्नजिङ्ङ्वनिबथङ्नङः।
सार्वधातुकेप्येतज्ज्ञापकं स्यात्।
नेत्याह। तुल्यजातीयस्य ज्ञापकम्।
कश्च तुल्यजातीयः?
यथाजातीयकाश्चङ्ङङ्नजिङ्ङ्वनिबथङ्नङः।
कथंजातीयकाश्चैते? आर्धधातुकीयाः।
यद्येतदस्ति तुल्यजातीयस्य ज्ञापकमिति, चङ्ङङौ लुङ्विकरणानां ज्ञापकौ स्याताम्, नजिङ्वर्तमानकालानाम्, ङनिब् भूतकालानाम्, अथङ्शब्द औणादिकानाम्, नङ्शब्दो घञ्ञर्थानाम्। तस्मात् सार्वधातुकग्रहणं कर्तव्यम्।
किं पुनरयं पर्युदासः- यदन्यत्पित इति, आहोस्वित्प्रसज्यायं प्रतिषेधः- पिन्नेति?
कश्चात्र विशेषः ?
- अपिन्ङिदिति चेत् शबेकादेशप्रतिषेध आदिवत्त्वात् -
अपिन्ङिदिति चेत् शबेकादेशे प्रतिषेधो वक्तव्यः। च्यवन्ते प्लवन्ते। किं कारणम्? आदिवत्त्वात्। पिदपितोरेकादेशोऽपित आदिवत्स्यात्। अस्त्यन्यत् पित इति कृत्वा ङित्त्वं प्राप्नोति।
अस्तु तर्हि प्रसज्यप्रतिषेधः- पिन्नेति।
- न पिन्ङिदिति चेदुत्तमैकादेशप्रतिषेधः -
न पिन्ङिदिति चेदुत्तमैकादेशे प्रतिषेधः प्राप्नोति। तुदानि लिखानि। किं कारणम्? आदिवत्त्वादेव। पिदपितोरेकादेशः पित आदिवत् स्यात्। तत्र पिन्नेति प्रतिषेधः प्राप्नोति।
यथेच्छसि तथास्तु।
ननु चोक्तमुभयथापि दोष इति।
उभयथापि न दोषः। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद् व्यवधानम् ।। 4 ।।
-1-2-5- असंयोगाल्लिट् कित्
- ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्विप्रतिषेधेन -
ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्भवति विप्रतिषेधेन। ववृते ववृधे।
- उक्तं वा -
किमुक्तम्? न वा क्सस्यानवकाशत्वादपवादो गुणस्य इति।
विषम उपन्यासः। युक्तं तत्र यदनवकाशं कित्करणं गुणं बाधते। इह पुनरुभयं सावकाशम्। कित्करणस्यावकाशः- इर्जतुः, इर्जुः। गुणस्यावकाशः- वर्तित्वा वर्द्धित्वा। इहोभयं प्राप्नोति- ववृते ववृधे। परत्वाद् गुणः प्राप्नोति।
इदं तर्ह्युक्तम्- इष्टवाची परशब्दः इति, विप्रतिषेधे परं यदिष्टं तद्भवति इति ।। असंयोगाल्लिट् कित् ।। 5 ।।
-1-2-6- इन्धिभवतिभ्यां च
किमर्थमिदमुच्यते?
इन्धेः संयोगार्थं वचनन्। भवतेः पिदर्थम्।
अयं योगः शक्योऽवक्तुम्।
कथम्?
- इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम् -

इन्धेश्छन्दोविषयो लिट्। नह्यन्तरेण छन्द इन्धेरनन्तरो लिट् लभ्यः। आमा भाषायां भवितव्यम्। भुवो वुको नित्यत्वात्। भवेतरपि नित्यो वुक् कृते गुणे प्राप्नोति, अकृतेऽपि प्राप्नोति। ताभ्यां किद्वचनानर्थक्यम्। ताभ्यामिन्धिभवतिभ्यां किद्वचनमनर्थम् ।। इन्धिभवतिभ्यां च ।। 6 ।।

-1-2-7- मृडमृदगुधकुषक्लिशवदवसः क्त्वा

किमर्थं मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते, न किदेव हि क्त्वा?

न क्त्वा सेट् (1.2.18) इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम्।

यदि तर्हि मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते नार्थो न क्त्वा सेट् इत्यनेन कित्त्वप्रतिषेधेन। इदं नियमार्थं भविष्यति- मृडादिभ्य एव परस्य क्त्वः कित्त्वं भवति नान्येभ्य इति।

यदि नियमः क्रियते, इहापि तर्हि नियमान्न प्राप्नोति- लूत्वा पूत्वा। अत्राप्यकित्त्वं प्राप्नोति।

तुल्यजातीयस्य नियमः।

कश्च तुल्यजातीयः?

यथाजातीयको मृडादिभ्यः परः क्त्वा।

कथं जातीयकश्च मृडादिभ्यः परः क्त्वा? सेट्।

एवमप्यस्त्यत्र कश्चिद्विभाषितेट् सोऽनिटां नियामकः स्यात्।

अस्तु तावद्ये सेटस्तेषां ग्रहणं नियमार्थम्। य इदानीं विभाषितेट् तस्य ग्रहणं विध्यर्थं भविष्यति। रुदविदमुषग्रहिस्वपिप्रच्छ्योः सन्नर्थं ग्रहणम्। किदेव हि क्त्वा ।। मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।। 7 ।।

-1-2-9- इको झल्

किमर्थमिकः परस्य सनः कित्त्वमुच्यते?

- इकः कित्त्वं गुणो मा भूत्।

इकः कित्त्वं क्रियते गुणो मा भूदिति। चिचीषति। तुष्टूषति।

नैतदस्ति प्रयोजनम्।

दीर्घारम्भात्।

दीर्घत्वमत्र बाधकं भविष्यति।

कृते भवेत्।

कृते खलु दीर्घत्वे गुणः प्राप्नोति।

अनर्थकं तु।

अनर्थकमेवं सति दीर्घत्वं स्यात्।

नानर्थकम्।

ह्रस्वार्थम्।

ह्रस्वानां दीर्घवचनसार्मथ्याद् गुणो न भविष्यति।

भवेद् ह्रस्वानां दीर्घवचनसार्मथ्याद् गुणो न स्यात्।

दीर्घाणां तु प्रसज्यते।

दीर्घाणां तु खलु गुणः प्राप्नोति।

दीर्घाणामपि दीर्घवचनसार्मथ्याद् गुणो न भविष्यति।

न दीर्घाणां दीर्घाः प्राप्नुवन्ति। किं कारणम्? नहि भुक्तवान् पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति।

ननु च पुनः प्रवृत्तिरपि दृष्टा - भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति।

सार्मथ्याद्धि पुनर्भाव्यम्।

सार्मथ्याद्धि पुनः प्रवृत्तिर्भवति। भोजनविशेषाच्छिल्पिविशेषाद्वा। दीर्घाणां पुनर्दीर्घत्ववचने न किञ्चित्प्रयोजनमस्ति। अकृतकारि खल्वपि शास्त्रमग्निवत्। तद्यथा - अग्निर्यददग्धं तद्दहति।

दीर्घाणामपि दीर्घवचन एतत्प्रयोजनं गुणो मा भूदिति। कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा - पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति।

यथैव तर्हि दीर्घत्ववचसार्मथ्याद् गुणो न भवति। एवमृदित्त्वमपि न प्राप्नोति - चिकीर्षति। जिहीर्षति।

ॠदित्त्वं दीर्घसंश्रयम्।

नाकृते दीर्घे ॠदित्त्वं प्राप्नोति। कि कारणम्? ॠत इत्युच्यते।

भवेद् ह्रस्वानां नाकृते दीर्घे ॠदित्त्वं स्याद्, दीर्घाणां तु खल्वकृतेऽपि दीर्घत्वे ॠदित्त्वं प्राप्नोति।

दीर्घाणां नाकृते दीर्घे।

दीर्घाणामपि नाकृते दीर्घत्वे ॠदित्त्वं प्राप्नोति। यदा दीर्घत्वेन गुणो बाधितः तत उत्तरकालमृदित्त्वं भवति।

णिलोपस्तु प्रयोजनम्।

इदं तर्हि प्रयोजनम्। णिलोपो यथा स्यात् - ज्ञीप्सति।

क्वास्ताः क्व निपतिताः क्व कित्त्वं क्व णिलोपः। को वाऽभिसम्बन्धः - यत्सति कित्त्वे णिलोपः स्याद्, असति कित्त्वे न स्यात्?

एषोऽभिसम्बन्धः - यत्सति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते। असति पुनः कित्त्वेऽनवकाशं दीर्घत्वं यथैव गुणं बाधते, एवं णिलोपमपि बाधेत। तत्र णिलोपस्यावकाशः - कारणा। हारणा। दीर्घत्वस्यावकाशः - चिचीषति। तुष्टूषति। इहोभयं प्राप्नोति - ज्ञीप्सति। परत्वाण्णिलोपः।
असत्यपि कित्त्वे सावकाशं दीर्घत्वम्। कोऽवकाशः? इस्भावः - निमित्सति प्रमित्सति। मीनातिमिनोत्योर्दीर्घत्वे कृते मीग्रहणेन ग्रहणं यथा स्यात्।
यथैव तर्ह्यसति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते, एवं गुणोऽपि बाधेत। तस्मात्कित्त्वं वक्तव्यम्।
इकः कित्त्वं गुणो मा भूद् दीर्घारम्भात्कृते भवेत्।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ।। 1 ।।
सार्मथ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम्।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ।। 2 ।। इको झल् ।। 9 ।।
-1-2-10- हलन्ताच्च
अयुक्तोऽयं निर्देशः। कथं हि इको नाम हलन्तः स्यादन्यस्यान्यः?
कथं तर्हि निर्देशः कर्तव्यः?
इग्वतो हलः इति।
यद्येवं यियक्षति अत्रापि प्राप्नोति।
एवं तर्हि इगुपधाद्धलन्ताद् इति वक्ष्यामि।
एवमपि दम्भेर्न प्राप्नोति। सूत्रं च भिद्यते।
यथान्यासमेवास्तु।
ननु चोक्तम्- अयुक्तोऽयं निर्देशः इति।
नायुक्तः। अयमन्तशब्दोऽस्त्येवावयववाची। तद्यथा - वस्त्रान्तः, वसनान्तः इति। वस्त्रावयवो वसनावयव इति गम्यते। अस्ति सामीप्ये वर्तते। तद्यथा - उदकान्तं गतः इति, उदकसमीपं गत इति गम्यते। तद्यः सामीप्ये वर्तते, तस्येदं ग्रहणम्।
एवमपि दम्भेर्न सिध्यति। यो ह्यत्रेक्समीपो हल्, न तस्मादुत्तरः सन्, यस्मादुत्तरः सन्,
नासाविक्समीपे हल्। एवं तर्हि -
दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्।
हल्जातिर्निर्दिश्यते - इक उत्तरा या हल्जातिरिति ।। हलन्ताच्च ।। 10 ।।
-1-2-11- लिङ्सिचावात्मनेपदेषु
कथमिदं विज्ञायते- आत्मनेपदं यौ लिङ्सिचाविति। आहोस्विदात्मनेपदेषु परतो यौ लिङ्सिचाविति?
किं चातः? यदि विज्ञायते- आत्मनेपदं यौ लिङ्सिचाविति। लिङ् विशेषितः, सिजविशेषितः। अथ विज्ञायते- आत्मनेपदेषु परतो यौ लिङ्सिचाविति, सिज्विशेषितः, लिङविशेषितः।
यथेच्छसि तथास्तु।
अस्तु तावद्- आत्मनेपदं यौ लिङ्सिचौ इति।
ननु चोक्तम्- लिङ् विशेषितः, सिजविशेषितः इति।
सिच्च विशेषितः। कथम्?। आत्मनेपदं सिज्नास्तीति कृत्वा आत्मनेपदपरे सिचि कार्यं विज्ञास्यते।
अथ वा पुनरस्तु- आत्मनेपदेषु परतो यौ लिङ्सिचौ- इति।
ननु चोक्तम्- सिज्विशेषितो लिङविशेषितः- इति।
लिङ् च विशेषितः। कथम्? आत्मनेपदेषु परतो लिङ् नास्तीति कृत्वाऽऽत्मनेपदे लिङि कार्यं विज्ञास्यते।
नैव वा पुनरर्थो लिङ्विशेषणेनात्मनेपदग्रहणेन। किं कारणम्? झलिति वर्तते। आत्मनेपदेषु चैव लिङ् झलादिः, न परस्मैपदेषु। तदेतत्सिज्विशेषणमात्मनेपदग्रहणम्।
अथ सिज्विशेषणे आत्मनेपदग्रहणे सति किं प्रयोजनम्?
इह मा भूत्- अपाक्षीत्। अवाप्सीत्।
नैतदस्ति। इक इति वर्तते।
एवमपि- अचैषीत् अनैषीत् अत्रापि प्राप्नोति। एतदपि नास्ति प्रयोनम्। हलन्तादिति
वर्तते।
एवमपि अकोषीत् अमोषीत् अत्रापि प्राप्नोति।
नैतदस्ति। झलिति वर्तते।
एवमपि- अभैत्सीत् अच्छैत्सीत् अत्रापि प्राप्नोति।
नैतदस्ति। इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैषेग्लक्षणा वृद्धिः।
इदं तर्हि प्रयोजनम्- इह मा भूत्- अस्राक्षीत् अद्राक्षीत्। किं च स्यात्? अकिल्लक्षणेऽमागमो न स्यात् ।। लिङ्सिचावात्मनेपदेषु ।। 11 ।।
-1-2-17- स्थाघ्वोरिच्च

- इच्च कस्य तकारेत्त्वम् -
कस्य हेतोरिकारस्तपरः क्रियते?
- दीर्घो मा भूत् -
दीर्घो मा भूदिति।
- ऋतेपि सः -
अन्तरेणाप्यारम्भं सिद्धोऽत्र दीर्घः घुमास्थागापाजहातिसां हलिः (6.4.66) इति।
- अनन्तरे प्लुतो मा भूत् -
इदं तर्हि प्रयोजनम्- अनन्तरे प्लुतो मा भूदिति। कुतो नु खल्वेतत् अनन्तरार्थ आरम्भे ह्रस्वो भविष्यति, न पुनः प्लुत इति?।
- प्लुतश्च विषये स्मृतः -
विषये प्लुत उच्यते। यदा च स विषयो, भवितव्यमेव तदा प्लुतेन।
इच्च कस्य तकारेत्वं दीर्घो मा भूदृतेऽपि सः।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ।। 1 ।। स्थाघ्वोरिच्च ।। 17 ।।
-1-2-18- न क्त्वा सेट्
- न सेडिति कृतेऽकित्वे -
न सेडित्येव सिद्धम्, नार्थः क्त्वाग्रहणेन।
निष्ठायामपि तर्हि प्राप्नोति- गुधितः गुधितवानिति।
- निष्ठायामवधारणात् -
निष्ठायामवधारणान्न भविष्यति। किमवधारणम्? निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः (1.2.16) इति।
परोक्षायां तर्हि प्राप्नोति। किं च स्यात्? पपिव पपिम क्ङितीत्याकारलोपो न स्यात्। मा भूदेवम्, इटीत्येवं भविष्यति। इदं तर्हि- जग्मिव जघ्निव क्ङितीत्युपधालोपो न स्यात्।
- ज्ञापकान्न परोक्षायाम् -
ज्ञापकात्परोक्षायां न भविष्यति। किं ज्ञापकम्?
- सनि झल्ग्रहणं विदुः -
यदयम् इको झल् (1.2.9) इति झल्ग्रहणं करोति तज्ज्ञापयत्याचार्यः- औपदेशिकस्य कित्वस्य प्रतिषेधो नातिदेशिकस्य इति। कथं कृत्वा ज्ञापकम्? झल्ग्रहणस्यैतत्प्रयोजनं झलादौ यथा स्यात्, इह मा भूत्- शिशयिषत इति। यदि चात्रातिदेशिकस्यापि कित्वस्य प्रतिषेधः स्यात्, झल्ग्रहणमनर्थकं स्यात्। अस्त्वत्र कित्वम्, न सेड् इति प्रतिषेधो भविष्यति। पश्यति त्वाचार्य औपदेशिकस्य कित्वस्य प्रतिषेधो नातिदेशिकस्येति, ततो झल्ग्रहणं करोति।
नैतदस्ति ज्ञापकम्। उत्तरार्थमेतत्स्यात् स्थाघ्वोरिच्च (1.2.17) झलादौ यथा स्यात्, इह मा भूत्- उपास्थायिषाताम् उपास्थायिषत।
- इत्वं कित्सन्नियोगेन -
कित्वसन्नियोगेनेत्वमुच्यते। तेनासति कित्वे इत्वं न भविष्यति।
- रेण तुल्यं सुधीवनि -
तद्यथा- सुधीवा सुपीवेति ङीप्सन्नियोगेन र उच्यमानोऽसति ङीपि न भविति।
अथ वाऽस्त्वत्रेत्वम्। का रूपसिद्धिः? वृद्धौ कृतायामायादेशो भविष्यति।
- वस्वर्थम् -
वस्वर्थं तर्हि क्त्वाग्रहणं कर्तव्यम्। वसोर्ह्यौपदेशिकं कित्वम्। किं च स्यात्? पपिवान् तस्थिवान् कितीत्याकारलोपो न स्यात्।
मा भूदेवम्। इटीत्येवं भविष्यति।
इदं तर्हि जग्मिवान् जघ्निवान् कितीत्युपधालोपो न स्यात्।
- किदतिदेशात् -
अस्त्वत्रौपदेशिकस्य कित्वस्य प्रतिषेधः। आतिदेशिकमत्र कित्वं भविष्यति।
यत्र तर्हि तत्प्रतिषिध्यते, अञ्जेः- आजिवानिति।
एवं तर्हि च्छान्दसः क्वसुः। लिट् च च्छन्दसि सार्वधातुकमपि भवति। तत्र
सार्वधातुकमपिन्ङिद्भवतीति ङित्युपधालोपो भविष्यति।
- (नि) गृहीतिः -
इदं तर्हि प्रयोजनम्। इह मा भूत्- निगृहीतिः उपस्निहितिः निकुचितिः।
तत्तर्हि क्त्वाग्रहणं कर्तव्यम्? न कर्तव्यम्।
- क्त्वा च विग्रहात् -
उपरिष्टाद् योगविभागः करिष्यते- न सेट् निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः(19) मृषस्तितिक्षायाम् (20) उदुपधाद्भावादिकर्मणोरन्यतरस्याम् (21)। ततः पूङः। पूङश्च निष्ठा सेट् किन्न भवति। ततः क्त्वा च क्त्वा च सेट् किन्न भवति। पूङ इति निवृत्तम्।
न सेडिति कृतेऽकित्वे निष्ठायावधारणात्।

ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ।। 1 ।।
इत्त्वं कित्सन्नियोगेन रेण तुल्यं सुधीवनि।
वस्वर्थं कितदीदेशाद् गृहीतिः क्त्वा च विग्रहात् ।। 2 ।। न क्त्वा सेट् ।। 18 ।।
-1-2-21- उदुपधाद्भावादिकर्मणोरन्तरस्याम्
इह कस्मान्न भवति- गुधितः गुधितवान्?
- उदुपधाच्छपः -
शब्विकरणेभ्य इष्यते ।। उदुपधाद्भा।। 21 ।।
-1-2-22- पूङः क्त्वा च
- पूङः क्त्वानिष्ठयोरिटि वाप्रसङ्गः सेट्प्रकरणात् -
पूङः क्त्वानिष्ठयोरिटि विभाषा कित्त्वं प्राप्नोति। किं कारणम्?। सेट्प्रकरणात्। सेडिति वर्तते।
- न वा सेट्त्वस्याकिदाश्रयत्वादनिटि वा कित्त्वम् -
न वा एष दोषः। किं कारणम्?। सेट्त्वस्याकिदाश्रयत्वात्। अकिदाश्रयं सेट्त्वम्। यदा अकित्त्वं तदेटा भवितव्यम्। सेट्त्वस्याकिदाश्रयत्वादनिट्येव विभाषा कित्त्वं भविष्यति।
इड्विधौ पूङो ग्रहणं क्रियते। तेन वचनादिट्। सेट्प्रकरणाच्च इट्येव विभाषा कित्त्वं प्राप्नोति।
- इड्विधौ ह्यग्रहणम् -
इड्विधौ हि पूङो ग्रहणं न कर्तव्यं भवति।
भारद्वाजीयाः पठन्ति-
- नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम् -
नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः सिद्धम्। कथम्? विभाषामध्येऽयं योगः क्रियते। विभाषामध्ये च ये विधयस्ते नित्या भवन्ति। किमर्थं तर्हि क्त्वाग्रहणम्? क्त्वा ग्रहणमुत्तरार्थम्। उत्तरार्थं क्त्वाग्रहणं क्रियते नोपधात्थफान्ताद्वा (23) वञ्चिलुञ्च्यृतश्च (24) इति ।। पूङः क्त्वा च ।। 22 ।।
-1-2-25- तृषिमृषिकृषेः काश्यपस्य
काश्यपग्रहणं किमर्थम्? काश्यपग्रहणं पूजार्थम्। वेत्येव हि वर्तते ।। तृषिमृषिकृषेः काश्यपस्य ।। 25 ।।
-1-2-26- रलो व्युपधाद्धलादेः संश्च
किमिदं रलः क्त्वासनोः कित्त्वं विधीयते, आहोस्वित्प्रतिषिध्यते? किं चातः? यदि विधीयते, क्त्वाग्रहणमनर्थकम्। किदेव हि क्त्वा। अथ प्रतिषिध्यते, सन्ग्रहणमनर्थकम्। अकिदेव हि सन्।
अत उत्तरं पठति -
रलः क्त्वासनोः कित्त्वम्।
रलः क्त्वासनोः कित्त्वं विधीयते।
ननु चोक्तम्- क्त्वाग्रहणमनर्थकम् इति।
नानर्थकम्। न क्त्वा सेट् (1.2.18) इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ।। रलो व्युपधाद्धलादेः संश्च ।। 26 ।।
-1-2-27- ऊकालोऽज्झ्रस्वदीर्घप्लुतः
अयुक्तोऽयं निर्देशः। ऊ इत्यनेन कालः प्रतिनिर्दिश्यते, ऊ इत्ययं च वर्णः तत्राऽयुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम्।
कथं तर्हि निर्देशः कर्तव्यः?
ऊकालकाल इति।
किमिदमूकालकाल इति? ऊ इत्येतस्य काल ऊकालः, उकालः कालो यस्य स ऊकालकाल इति।
स तर्हि तथानिर्देशः कर्तव्यः?
न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा- उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः। खरमुखः। एव मूकालकाल ऊकाल इति।
अथ वा साहचर्यात्ताच्छब्द्यं भविष्यति। कालसहचरितो वर्णः। वर्णोऽपि काल एव।
- ह्रस्वादिषु समसङ्ख्याऽप्रसिद्धिर्निर्देशवैषम्यात् -
ह्रस्वादिषु समसङ्ख्यत्वस्याऽप्रसिद्धिः। किं कारणम्?। निर्देशवैषम्यात् तिस्रः सञ्ज्ञा एकः सञ्ज्ञी, वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति।
- सिद्धं तु समसङ्ख्यत्वात् -
सिद्धमेतत्। कथम्?। समसङ्ख्यत्वात्। कथं समसङ्ख्यत्वम्?
- त्रयाणां हि विकारनिर्देशः -
त्रयाणामयं प्रश्लिष्टनिर्देशः। कथं पुनर्ज्ञायते- त्रयाणामयं प्रश्लिष्टनिर्देश इति?। तिसृणां सञ्ज्ञानां करणसार्मथ्यात्।
यद्यपि तावत्तिसृणां सञ्ज्ञानां करणसार्मथ्याज्ज्ञायते- त्रयाणमयं प्रश्लिष्टनिर्देश इति। कुतस्त्वेतदेतेनानुपूर्व्येण सन्निविष्टानां सञ्ज्ञा भविष्यति इति, आदौ मात्रिकस्ततो द्विमात्रस्ततस्त्रिमात्र इति। न पुनर्मात्रिको मध्ये वाऽन्ते वा स्यात्, तथा द्विमात्र आदौ वा स्यादन्ते वा। तथा त्रिमात्र आदौ वा मध्ये वा स्यात्? ।
अयं तावत् त्रिमात्रोऽशक्य आदौ वा मध्ये वा कर्तुम्। कुतः? प्लुताश्रयो हि प्रकृतिभावः प्रसज्येत। मात्रिकद्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति

मात्रिकस्य पूर्वनिपातो भविष्यति।
यत्तावदुच्यते- अयं तावत् त्रिमात्रोऽशक्य आदौ मध्ये वा कर्तुं प्लुताश्रयो हि प्रकृतिभावः प्रसज्येत इति प्लुताश्रयः प्रकृतिभावः। प्लुतसञ्ज्ञा चानेनैव। यदि च त्रिमात्र आदौ वा मध्ये वा स्यात् प्लुतसञ्ज्ञैवास्य न स्यात्कुतः प्रकृतिभावः।
यदप्युच्यते मात्रिकद्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति मात्रिकस्य पूर्वनिपातो भविष्यति इति। ह्रस्वाश्रया हि घिसञ्ज्ञा ह्रस्वसञ्ज्ञा चानेनैव। यदि च मात्रिको मध्ये वान्ते वा स्याद्ह्रस्वसञ्ज्ञैवास्य न स्यात्, कुतो घिसञ्ज्ञा, कुतः पूर्वनिपातः? एवमेषा व्यवस्था न प्रकल्पते।
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति- न मात्रिकोऽन्ते भवतीति, यदयं- विभाषा पृष्टप्रतिवचने हेः (8.2.93) इति मात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्? योऽन्ते स प्लुतसञ्ज्ञः। यदि च मात्रिकोऽन्ते
स्यात्प्लुतसञ्ज्ञाऽस्य स्यात्। तत्र हि मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्।
मध्ये तर्हि स्यादिति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति- न मात्रिको मध्ये भवतीति। यदयम्- अतो दीर्घो यञि सुपि च इति (7.3.101,102) इति दीर्घत्वं शास्ति। कथं कृत्वा
ज्ञापकम्? यो मध्ये स दीर्घसञ्ज्ञकः। यदि च मात्रिको मध्ये स्याद्दीर्घसञ्ज्ञाऽस्य स्यात्। तत्र
मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्।
द्विमात्रस्तर्ह्यन्ते स्यादिति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति- न द्विमात्रोऽन्ते भवतीति, यदयम्- ओमभ्यादाने (8.2.87) इति द्विमात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्? योऽन्ते स प्लुतसञ्ज्ञः। यदि च द्विमात्रोऽन्ते स्यात् प्लुतसञ्ज्ञाऽस्य स्यात्। तत्र द्विमात्राकालस्य द्विमात्राकालवचनमनर्थकं स्यात्। मात्रिकेण चास्य पूर्वनिपातो बाधित इति कृत्वा क्वान्यत्रोत्सहते भवितुमन्यदतो मध्यात्। एवमेषां व्यवस्था प्रक्लृप्ता।
भवेद् व्यवस्था च प्रक्लृता।
- दीर्घप्लुतयोस्तु पूर्वसञ्ज्ञाप्रसङ्गः -
दीर्घप्लुतयोरपि पूर्वसञ्ज्ञा प्राप्नोति। का? ह्रस्वसञ्ज्ञा। किं कारणम्? अण् सवर्णान् गृह्णाति इति।
- सिद्धं तु तपरनिर्देशात् -
सिद्धमेतत्। कथम्? तपरनिर्देशः कर्तव्यः- उदूकाल इति।
यद्येवं-
- द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसङ्ख्यानं कालभेदात् -
द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसङ्ख्यानं कर्तव्यम्। तथा मध्यमायां तपरकरणे द्रुतविलम्बितयोरुपसङ्ख्यानं कर्तव्यम्। तथा विलम्बितायां तपरकरणे द्रुतमध्यमयोरुपसङ्ख्यानं कर्तव्यम्। किं पुनः कारणं न सिध्यति? कालभेदात्। ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम्, ये मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ।।
- द्रुतादिषु चोक्तम् -
किमुक्तम्? सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराऽचिरवचनाद्वृत्तयो विशिष्यन्ते इति।
स तर्हि तपरनिर्देशः कर्तव्यः?
न कर्तव्यः। इह कालग्रहणं क्रियते। यावच्च तपरकरणं तावच्च कालग्रहणम्। प्रत्येकं च कालशब्दः परिसमाप्यते- उकाल ऊकाल ऊ3काल इति।
अथ वैकसञ्ज्ञाधिकारेऽयं योगः कर्तव्यः। तत्रैका सञ्ज्ञा भविष्यति या परा अनवकाशा चेति। एवं हि दीर्घप्लुतयोः पूर्वसञ्ज्ञा न भविष्यति।
अथवा स्वं रूपं शब्दस्याशब्दसञ्ज्ञा (1.1.68) इत्ययं योगः प्रत्याख्यायते। तत्र यदेतद् अशब्दसञ्ज्ञा इति, एतद्यया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निदिष्टमुत्तरत्रानुवर्तिष्यते। अणुदित्सवर्णस्य चाप्रत्ययः (1.1.69) अशब्दसञ्ज्ञायाम् इति।
अथवा ह्रस्वसञ्ज्ञावचनसार्मथ्याद्दीर्घप्लुतयोः पूर्वसञ्ज्ञा न भविष्यति।
ननु चेदं प्रयोजनं स्यात्- सञ्ज्ञया विधाने नियमं वक्ष्यामीति ह्रस्वसञ्ज्ञया यदुच्यते तदचः स्थाने यथा स्यात् इति। स्यादेतत्प्रयोजनं यदि किञ्चित्कराणि ह्रस्वशासनानि स्युः। यतस्तु खलु यावदज्ग्रहणं तावद्ह्रस्वग्रहणमतोऽकिञ्चित्कराणि ह्रस्वशासनानि।
इदं तर्हि प्रयोजनम्- एच इग्घ्रस्वादेशे (1.1.48) इति वक्ष्यामीति। अनुच्यमाने ह्येतस्मिंस्त्रिर्ह्रस्वप्रदेशेष्वेच इग्भवतीति वक्तव्यं स्यात्। ह्रस्वो नपुंसके प्रातिपदिकस्य (1.2.47) एच इग्भवति इति। णौ चङ्युपधाया ह्रस्वः (7.4.1) एच इग्भवति इति। ह्रस्वः, हलादिः शेषः (7.4.59,60) एच इग्भवति इति। सञ्ज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि सञ्ज्ञाकरणम्।
लघीयश्च त्रिर्ह्रस्वप्रदेशेष्वेच इग्भवतीति, न पुनः सञ्ज्ञाकरणम्। त्रिर्ह्रस्वप्रदेशेषु एच इग्भवतीति षड् ग्रहणानि। सञ्ज्ञाकरणे पुनरष्टौ। ह्रस्वसञ्ज्ञा वक्तव्या, त्रिर्ह्रस्वप्रदेशेषु ह्रस्वग्रहणं कर्तव्यं- ह्रस्वो ह्रस्वो ह्रस्व इति। एच
इग्घ्रस्वादेशे इति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते तस्यैतत्प्रयोजनं दीर्घप्लुतयोस्तु पूर्वसञ्ज्ञा मा भूदिति ।
ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।। 27 ।।
-1-2-28- अचश्च
किमयमलोऽन्त्यशेष आहोस्विदलोन्त्यापवादः?
कथं वाऽयं तच्छेषः स्यात्, कथं वा तदपवादः?
यद्येकं वाक्यं तच्चेदं च अलोन्त्यस्य विधयो भवन्त्यचो ह्रस्वदीर्घप्लुता अन्त्यस्य इति, ततोऽयं तच्छेषः। अथ नानावाक्यम्- अलोन्त्यस्य विधयो भवन्ति अचो ह्रस्वदीर्घप्लुता अन्त्यस्यानन्त्यस्य च इति, ततोऽयं तदपवादः।
कश्चाऽत्र विशेषः?

- ह्रस्वादिविधिरलोन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणम् -
ह्रस्वादिविधिरलोन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणं कर्तव्यम्। वचिपृच्छयोर्दीर्घः अचः इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति।
शमादीनां दीर्घः अच इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति।
हनिगम्योदीर्घः अच इति वक्तव्यम्। अनन्त्यत्वाद्धि न प्राप्नोति।
अस्तु तर्हि तदपवादः।
- अचश्चेन्नपुंसकह्रस्वाऽकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यप्रतिषेधः -
अचश्चेन्नपुंसकह्रस्वाऽकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यस्य प्रतिषेधो वक्तव्यः। ह्रस्वो नपुंसके प्रातिपदिकस्य (1.2.47) यथेह भवति- रै अतिरि, नौ अतिनु। एवं सुवाग्ब्राह्मणकुलम् इत्यत्रापि प्राप्नोति।
अकृत्सार्वधातुकयोर्दीर्घः (7.4.25) यथेह भवति- चीयते सूयते। एवं छिद्यते भिद्यते अत्रापि प्राप्नोति।
नामि (6.4.3) दीर्घो यथेह भवति- अग्नीनाम् वायूनाम्। एवं षण्णामित्यत्रापि प्राप्नोति।
नैष दोषः। नोपधायाः (6.4.7) इत्येतन्नियमार्थं भविष्यति।
प्रकृतस्यैष नियमः स्यात्। किं च प्रकृतम्? नामि इति। तेन भवेदिह नियमान्न स्यात् षण्णामिति। अन्यते तन्यत इत्यत्रापि प्राप्नोति।
अथाप्येवं नियमः स्यात्- नोपधाया नाम्येव इति। एवमपि भवेदिह नियमान्न स्यात्- अन्यते तन्यत इति। षण्णाम् इत्यत्र प्राप्नोति।
अथाप्युभयतोऽयं नियमः स्यात्- नोपधाया एव नामि, नाम्येव नोपधाया इति। एवमपि भिद्यते छिद्यते सुवाग्ब्राह्मणकुलमित्यत्रापि प्राप्नोति।
एवं तर्हि ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयाद् अचः इत्येतत्तत्रोपस्थितं द्रष्टव्यम्। किं कृतं भवति? द्वितीया षष्ठी प्रादुर्भाव्यते। तत्र कामचारः- गृह्यमाणेन वाऽचं विशेषयितुमचा वा गृह्यमाणम्। यावता कामचारः, इह तावद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेषु गृह्यमाणेनाऽचं विशेषयिष्यामः। एतेषां दीर्घो भवति, अच इति। इहेदानीं नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वचा गृह्यमाणं विशेषयिष्यामः। नपुंसकस्य ह्रस्वो भवति, अचः अजन्तस्येति। अकृत्सार्वधातुकयोर्दीर्घो भवति, अचः अजन्तस्येति। नामि दीर्घो भवति अचः अजन्तस्येति।
इह कस्मान्न भवति- द्यौः पन्थाः स इति।
- सञ्ज्ञया विधाने नियमः -
सञ्ज्ञया ये विधीयन्ते तेषु नियमः।
किं वक्तव्यमेतत्? नहि।
कथमनुच्यमानं गंस्यते?
अजिति हि वर्तते। तत्रैवमभिसम्बन्धः करिष्यते- अचः अज्भवति ह्रस्वो दीर्घः प्लुत इत्येवं भाव्यमान इति।
अथ पूर्वस्मिन् योगेऽज्ग्रहणे सति किं प्रयोजनम्?
- अज्ग्रहणं संयोगाऽच्समुदायनिवृत्त्यर्थम् -
अज्ग्रहणं कियते संयोगनिवृत्त्यर्थम्, अच्समुदायनिवृत्त्यर्थं च। संयोगनिवृत्त्यर्थं तावत्- प्रतक्ष्य प्ररक्ष्य। ह्रस्वस्य पिति
कृति तुक् (6.1.71) इति तुङ्मा भूदिति। अच्समुदायनिवृत्त्यर्थम्- तितउच्छत्रं तितउच्छाया। दीर्घात्पदान्ताद्वा (6.1.75,76) इति विभाषा तुङ्मा भूदिति ।। अचश्च ।। 28 ।।
-1-2-29- उच्चैरुदात्तः
।। अथ षष्ठीनिर्दिष्टाज्ग्रहणानुवृत्तिविचाराधिकरणम् ।।
किं षष्ठीनिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न?
किं चातः?
यद्यनुवर्तते हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति इत्येषा परिभाषा न प्रकल्पते। कथं हलो नाम स्वरप्राप्तिः स्यात्। एवं तर्हि निवृत्तम्। बहून्येतस्याः परिभाषायाः प्रयोजनानि।
।। अथ प्रथमानिर्दिष्टामज्ग्रहणानुवृत्तिविचाराधिकरणम् ।।
अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न?
किं चार्थोऽनुवृत्त्या?
बाढमर्थः। यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते।
ननु च प्रत्यक्षमुपलभ्यन्ते- इषे त्वोर्जे त्वा।
नैते व्यञ्जनस्य गुणाः, किन्त्वच एव। तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते। तद्यथा- द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते। बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते।
कुतो नु खल्वेतत्- अच एते गुणाः, तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते, न पुर्नव्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि तद्गुण उपलभ्येत इति?
अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति। अन्वर्थं खल्वपि निर्वचनम्- स्वयं राजन्त इति स्वराः, अन्वग्भवति व्यञ्जनमिति।
- उच्चनीचस्यानवस्थिततत्वात्सञ्ज्ञाऽप्रसिद्धिः -
इदमुच्चनीचमनवस्थितपदार्थकम्, तदेव हि कञ्चित्प्रत्युच्चैर्भवति, कञ्चित्प्रति नीचैः। एवं हि कश्चित्कञ्चिदधीयानमाह- किमुच्चै रोरूयसे

शनैर्वर्ततामिति। तमेव तथाऽधीयानमपर आह किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति। एवमुच्चनीचमनवस्थितपदार्थकम्, तस्यानवस्थितत्वात्सञ्ज्ञाया अप्रसिद्धिः।
एवं तर्हि लक्षणं करिष्यते- आयामो दारुण्यमणुता खस्येति उच्चैःकराणि शब्दस्य। आयामो गात्राणां निग्रहः। दारुण्यं स्वरस्य दारुणता रूक्षता। अणुता खस्य कण्ठस्य संवृतता। उच्चैः कराणि शब्दस्य। अन्ववसर्गो मार्दवमुरुता खस्येति नीचैः कराणि शब्दस्य। अन्ववसर्गो
गात्राणां शिथिलता। मार्दवं स्वरस्य मृदुता स्निग्धता। उरुता खस्य महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य।
एतदप्यनैकान्तिकम्। यद्ध्यल्पप्रमाणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैः।
- सिद्धं तु समानप्रक्रमवचनात् -
सिद्धमेतत्। कथम्? समाने प्रक्रम इति वक्तव्यम्। कः पुनः प्रक्रमः? उरः कण्ठः शिर इति ।। उच्चैरुदात्तः ।। 29 ।।
-1-2-30- नीचैरनुदात्तः
।। अथ षष्ठीनिर्दिष्टाज्ग्रहणानुवृत्तिविचाराधिकरणम् ।।
किं षष्ठीनिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न?
किं चातः?
यद्यनुवर्तते हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति इत्येषा परिभाषा न प्रकल्पते। कथं हलो नाम स्वरप्राप्तिः स्यात्। एवं तर्हि निवृत्तम्। बहून्येतस्याः परिभाषायाः प्रयोजनानि।
।। अथ प्रथमानिर्दिष्टामज्ग्रहणानुवृत्तिविचाराधिकरणम् ।।
अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न?
किं चार्थोऽनुवृत्त्या?
बाढमर्थः। यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते।
ननु च प्रत्यक्षमुपलभ्यन्ते - इषे त्वोर्जे त्वा।
नैते व्यञ्जनस्य गुणाः, किन्त्वच एव। तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते। तद्यथा - द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते। बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते।
कुतो नु खल्वेतत्- अच एते गुणाः, तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते, न पुर्नव्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि तद्गुण उपलभ्येत इति?
अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति। अन्वर्थं खल्वपि निर्वचनम्- स्वयं राजन्त इति स्वराः, अन्वग्भवति व्यञ्जनमिति।
- उच्चनीचस्यानवस्थितत्वात्सञ्ज्ञाऽप्रसिद्धिः -
इदमुच्चनीचमनवस्थितपदार्थकम्, तदेव हि कञ्चित्प्रत्युच्चैर्भवति, कञ्चित्प्रति नीचैः। एवं हि कश्चित्कञ्चिदधीयानमाह- किमुच्चै रोरूयसे शनैर्वर्ततामिति। तमेव तथाऽधीयानमपर आह किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति। एवमुच्चनीचमनवस्थितपदार्थकम्, तस्यानवस्थितत्वात्सञ्ज्ञाया अप्रसिद्धिः।
एवं तर्हि लक्षणं करिष्यते- आयामो दारुण्यमणुता खस्येति उच्चैःकराणि शब्दस्य। आयामो गात्राणां निग्रहः। दारुण्यं स्वरस्य दारुणता रूक्षता। अणुता खस्य कण्ठस्य संवृतता। उच्चैः कराणि शब्दस्य। अन्ववसर्गो मार्दवमुरुता खस्येति नीचैः कराणि शब्दस्य। अन्ववसर्गो
गात्राणां शिथिलता। मार्दवं स्वरस्य मृदुता स्निग्धता। उरुता खस्य महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य।
एतदप्यनैकान्तिकम्। यद्ध्यल्पप्रमाणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैः।
- सिद्धं तु समानप्रक्रमवचनात् -
सिद्धमेतत्। कथम्? समाने प्रक्रम इति वक्तव्यम्। कः पुनः प्रक्रमः? उरः कण्ठः शिर इति।। नीचैरनुदात्तः ।। 30 ।।
-1-2-31- समाहारः स्वरितः
।। समाह्रियमाणनिर्णयाधिकरणम् ।।
समाहारः स्वरित इत्युच्यते। कस्य समाहारः स्वरितसञ्ज्ञो भवति?
अचोरित्याह।
- समाहारोऽचोश्चेन्नाभावात् -
समाहारोऽचोश्चेत्, तन्न। किं कारणम्? अभावात्। नह्यचोः समाहारोऽस्ति।
नन्वयमस्ति गाङ्गेऽनूप इति?
नैषोऽचोः समाहारः। अन्योयमुदात्तानुदात्तयोः स्थाने एक आदिश्यते।
एवं तर्हि गुणयोः।
- गुणयोश्चेन्नाच्प्रकरणात् -
गुणयोः समाहार इति चेत्, तन्न। किं कारणम्? अच्प्रकरणात्। अजिति वर्तते।
- सिद्धं त्वच्समुदायस्याऽभावात्तद्गुणसम्प्रत्ययः -
सिद्धमेतत्। कथम्? अच्समुदायो नास्तीति कृत्वा तद्गुणस्याचः समाहारगुणस्य सम्प्रत्ययो भविष्यति।
कथं पुनः समाहार इत्यनेनाऽच्छक्यः प्रतिनिर्देष्टुम्?

मतुब्लोपोऽत्र द्रष्टव्यः। तद्यथा- पुष्पका एषां ते पुष्पकाः। कालका एषां ते कालका इति। एवं समाहारवान् समाहारः।
अथ वा अकारो मत्वर्थीयः। तद्यथा तुन्दो घाट इति।
यद्येवं त्रैस्वर्यं न प्रकल्पते। तत्र को दोषः? त्रैस्वर्येणाधीमहे इत्येतन्नोपपद्यते। नैतद्गुणापेक्षम्। किं तर्हि? अजपेक्षमेतत्- त्रैस्वर्येणाधीमहे त्रिप्रकारैरज्भिरधीमहे, कैश्चिदुदात्तगुणैः कैश्चिदनुदात्तगुणैः कैश्चिदुभयगुणैः तद्यथा- शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते- कल्माष इति वा
सारङ्ग इति वा। एवमिहाप्युदात्तगुण उदात्तः, अनुदात्तगुणोऽनुदात्तः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते स्वरित इति ।। समाहारः स्वरितः ।। 31 ।।
-1-2-32- तस्यादित उदात्तमर्द्धह्रस्वम्
अर्द्धह्रस्वम् इत्युच्यते तत्र दीर्घप्लुतयोर्न प्राप्नोति। कन्या। शक्तिके3 शक्तिके।
नैष दोषः। मात्रचोऽत्र लोपो द्रष्टव्यः। अर्द्धह्रस्वमात्रमर्धह्रस्वमिति।
किमर्थं पुनरिदमुच्यते? आमिश्रीभूतमिवेदं भवति। तद्यथा- क्षीरोदके सम्पृक्ते आमिश्रीभूतत्वान्न ज्ञायते- कियत् क्षीरम्, कियदुदकम्, कस्मिन्नवकाशे क्षीरम्, कस्मिन्वोदकम् इति। एवमिहाप्यामिश्रीभूतत्वान्न ज्ञायते- कियदुदात्तम्, कियदनुदात्तम्, कस्मिन्नवकाशे उदात्तम्, कस्मिन्ननुदात्तमिति। तदाचार्यः सुहृद्भूत्वान्वाचष्टे- इयदुदात्तमियदनुदात्तमस्मिन्नवकाश उदात्तम्, अस्मिन्नवकाशेऽनुदात्तम् इति।
यद्ययमेवं सुहृत्किमन्यान्यप्येवंजातीयकानि नोपदिशति। कानि पुनस्तानि? स्थानकरणानुप्रदानानि। व्याकरणं नामेयमुत्तरा विद्या। सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते।
यद्येवं नार्थोऽनेन। इदमप्युपलब्धाऽधिगमिष्यति।
सञ्ज्ञाकरणं तर्हीदम्। तस्य स्वस्तिस्यादितोऽर्धह्रस्वमुदात्तसञ्ज्ञं भवतीति। किं कृतं भवति?। त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न कर्तव्यं भवति। उदात्तस्वरितपरस्य सन्नतरः (1.2.40) उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (8.2.4) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् (8.4.67) इति।
एतदपि नास्ति प्रयोजनम्। सञ्ज्ञाकरणं हि नाम यतो न लघीयः। कुत एतत्?। लघ्वर्थं हि सञ्ज्ञाकरणम्। लघीयश्च त्रिरुदात्तप्रदेशेषु स्वस्तिग्रहणं न पुनः सञ्ज्ञाकरणम्।
त्रिरुदात्तप्रदेशेषु स्वरितग्रहणे नवाक्षराणि, सञ्ज्ञाकरणे पुनरेकादश।
एवं तर्ह्युभयमनेन क्रियते। अन्वाख्यानं च सञ्ज्ञा च। कथं पुनरेकेन यत्नेनोभयं लभ्यम्? लभ्यमित्याह। कथम्? अन्वर्थग्रहणात्। अन्वर्थग्रहणं विज्ञास्यते। तस्य स्वरितस्यादितोऽर्धह्रस्वमुदात्तसञ्ज्ञं भवति। ऊर्ध्वमात्तमिति चात उदात्तम्।
यदि तर्हि सञ्ज्ञाकरणम्, उदात्तादेर्यदुच्यते तत्स्वरितादेरपि प्राप्नोति।
अन्वाख्यानमेव तर्हीदं मन्दबुद्धेः।
- स्वरितस्यार्द्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात् कार्यं, स्वरितादिति सिद्ध्यर्थम् -
स्वरितस्यार्द्धह्रस्वोदात्ताद् आ उदात्तस्वरितपरस्य सन्नतरः (1.2.40) इत्येतस्मात्सूत्रादिदं सूत्रकाण्डमूर्ध्वम्- उदात्तादनुदात्तस्य स्वरितः (8.4.66) इत्यतः कर्तव्यम्। किं प्रयोजनम्? स्वरितादिति सिद्ध्यर्थम्। स्वरितादिति सिद्धिर्यथा स्यात्- स्वरितात्संहितायामनुदात्तानाम् (1.2.3) इति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि। क्व तर्हि स्यात्? यः सिद्धः स्वरितः- कार्यं देवदत्तयज्ञदत्तौ।
- स्वरितोदात्तार्थं च -
स्वरितोदात्तार्थं च तत्रैव कर्तव्यम्। न सुब्रह्मण्यायां स्वरितस्य तूदात्तः (1.2.37) इन्द्र आगच्छ। क्व तर्हि स्यात्? यः सिद्धः स्वरितः- सुब्रह्मण्योमिन्द्रागच्छ।
- स्वरितोदात्ताच्चाऽस्वरितार्थम् -
स्वरितोदात्ताच्चाऽस्वरितार्थं तत्रैव कर्तव्यम्। इन्द्रागच्छ। हरिव आगच्छ।
- स्वरितपरसन्नतरार्थञ्च -
स्वरितपरसन्नतरार्थं च तत्रैव कर्तव्यम्। उदात्तस्वरितपरस्य सन्नतरः (1.2.40) माणवकजटिलकाध्यापकन्यङ्। क्व तर्हि स्यात्? यः सिद्धः स्वरितः- माणवकजटिलकाभिरूपक क्व।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।
- देवब्रह्मणोरनुदात्तवचनं ज्ञापकं स्वरितादिति सिद्धत्वस्य -
देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति।
यद्येतज्ज्ञाप्यते, स्वरितोदात्तात्परस्यानुदात्तस्य स्वरितत्वं प्राप्नोति।
न ब्रूमो देवब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति। किं तर्हि? परमेतत्सूत्रकाण्डमिति ।। तस्यादित उदात्तमर्द्धह्रस्वम् ।। 32 ।।
-1-2-33- एकश्रुति दूरात्सम्बुद्धौ
किमिदं परिभाषिक्याः सम्बुद्धेर्ग्रहणम् एकवचनं सम्बुद्धिः (2.4.49) इति, आहोस्विदन्वर्थग्रहणम्- सम्बोधनं सम्बुद्धिरिति? किं चातः? यदि पारिभाषिक्याः सम्बुद्धेर्ग्रहणं देवा ब्रह्माणः अत्र न प्राप्नोति। अथान्वर्थग्रहणम्, न दोषो भवति।
यथा न दोषस्तथास्तु।
किं पुनरियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता?

नोदात्ता। कथं ज्ञायते? यदयम् उच्चैस्तरां वा वषट्कारः (1.2.35) इत्याह। कथं कृत्वा ज्ञापकम्? अतन्त्रं तरनिर्देशः। यावदुच्चैस्तावदुच्चैस्तरामिति।
यदि तर्हि नोदात्ता, अनुदात्ता।
अनुदात्ता च न। कथं ज्ञायते? यदयम्- उदात्तस्वरितपरस्य सन्नतरः (1.2.40) इत्याह। कथं कृत्वा ज्ञापकम्?। अतन्त्रं तरनिर्देशः। यावत्सन्नस्तावत्सन्नतर इति। सैषा ज्ञापकाभ्यामुदात्तानुदात्तयोर्मध्यमेकश्रुतिरन्तरालं ह्रियते।
अपर आह- किमियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता?
उदात्ता। कथं ज्ञायते? यदयम् उच्चैस्तरां वा वषट्कारः इत्याह। कथं कृत्वा ज्ञापकम्? तन्त्रं तरनिर्देशः। उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति।
यदि तर्ह्युदात्ता नानुदात्ता।
अनुदात्ता च। कथं ज्ञायते?। यदम् उदात्तस्वरितपरस्य सन्नतरः इत्याह। कथं कृत्वा ज्ञापकम्? तन्त्रं तरनिर्देशः। सन्नं दृष्ट्वा सन्नतर इत्येतद्भवति। त एते तन्त्रे तरनिर्देशे सप्त स्वरा भवन्ति- उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्तरः, स्वरिते य उदात्तः सोऽन्येन विशिष्टः, एकश्रुतिः सप्तमः ।। एकश्रुति दूरात्सम्बुद्धौ ।। 33 ।।
-1-2-37- न सुब्रह्मण्यायां स्वरितस्य तूदात्तः
- सुब्रह्मण्यायामोकार उदात्तः -
सुब्रह्मण्यायामोकार उदात्तो भवति। सुब्रह्मण्योम्।
- आकार आख्याते परादिश्च -
आकार आख्याते परादिश्चोदात्तो भवति। इन्द्र आगच्छ। हरिव आगच्छ।
- वाक्यादौ च द्वे द्वे -
वाक्यादौ च द्वे द्वे उदात्ते भवतः। इन्द्र आगच्छ। हरिव आगच्छ।
- मघवन्वर्जम् -
आगच्छ मघवन्।
- सत्यापराणामन्तः -
सुत्यापराणामन्त उदात्तो भवति। द्व्यहे सुत्याम् त्र्यहे सुत्याम्।
- असावित्यन्तः -
असावित्यन्त उदात्तो भवति। गार्ग्यो यजते। वात्स्यो यजते।
- अमुष्येत्यन्तः -
अमुष्येत्यन्त उदात्तो भवति। दाक्षेः पिता यजते।
- स्यान्तस्योपोत्तमं च -
स्यान्तस्योपोत्तममुदात्तं भवति, अन्त्यश्च। गार्ग्यस्य पिता यजते। वात्स्यस्य पिता यजते।
- वा नामधेयस्य -
वा नामधेयस्य स्यान्तस्योपोत्तममुदात्तं भवति। देवदत्तस्य पिता यजते। देवदत्तस्य पिता यजते ।। न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।। 37 ।।
-1-2-38- देवब्रह्मणोरनुदात्तः
- देवब्रह्मणोरनुदात्तत्वमेके -
देवब्रह्मणोरनुदात्तत्वमेक इच्छन्ति। देवा ब्रह्माणः, देवा ब्रह्माणः ।। देवब्रह्मणोरनुदात्तः ।। 38 ।।
-1-2-39- स्वरितात्संहितायामनुदात्तानाम्
।। द्व्येकयोरप्येकश्रुतिसाधनाधिकरणम् ।।
- स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यवचनम् -
स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यं वक्तव्यम्। आग्निवेश्यः पचतीति। किं पुनः कारणं न सिध्यति? बहुवचननिर्देशात्। बहुवचनेनायं निर्देशः क्रियते, तेन बहूनामेवैकश्रुत्यं स्याद् द्व्येकयोर्न स्यात्।
नैष दोषः। नात्र बहुवचनेन निर्देशस्तन्त्रम्।
कथं पुनस्तेनैव च नाम निर्देशः क्रियते, तच्चातन्त्रं स्यात्? तत्कारी च भवांस्तद्द्वेषी च।
नान्तरीयकत्वादत्रबहुवचनेन निर्देशः क्रियते- अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्य इति। तद्यथा- कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय तुषपलालान्युत्सृजति। तथा कश्चिन्मांसार्थी मत्स्यान् सकण्टकान् सशकलानाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति। एवमिहापि नान्तरीयकत्वाद् बहुवचननिर्देशः क्रियते। अविशेषेणैकश्रुत्यं भवति।
- अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामप्रसिद्धिः -
अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामैकश्रुत्यं न प्राप्नोति- इमं मे गङ्गे यमुने सरस्वति शुतुद्रि।
- अनेकमपीति तु वचनात्सिद्धम् -
अनेकमप्येकमपि स्वरितात्परं संहितायामेकश्रुति भवतीति वक्तव्यम्।
सिध्यति। सूत्रं तर्हि भिद्यते।

यथान्यासमेवास्तु।
ननु चोक्तम्- स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यवचनम्, अविशेषेणेति चेद्व्यवहितानामप्रसिद्धिः इति।
नैष दोषः। कथम्? एकशेषनिर्देशोऽयम्। अनुदात्तस्य चानुदात्तयोश्चानुदात्तानां चानुदात्तानामिति।
एवमपि षट्प्रभृतीनामेव प्राप्नोति। षट्प्रभृतिषु ह्येकशेषः परिसमाप्यते।
प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति द्व्येकयोरपि भविष्यति ।। स्वरितात्संहितायामनुदात्तानाम् ।। 39 ।।
-1-2-41- अपृक्त एकाल्प्रत्ययः
- अपृक्तसञ्ज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थम् -
अपृक्तसञ्ज्ञायां हल्ग्रहणं कर्तव्यम्। एकहल्प्रत्ययोऽपृक्तसञ्ज्ञो भवतीति वक्तव्यम्। किं प्रयोजनम्? स्वादिलोपे हलोऽग्रहणार्थम्। एवं हि स्वादिलोपे हलो ग्रहणं न कर्तव्यं भवति। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (6.1.68) इत्यपृक्तस्येत्येव सिद्धम्।
- अणिञोर्लुगर्थमल्ग्रहणम् -
अणिञोर्लुगर्थमल्ग्रहणं कर्तव्यम्। किं प्रयोजनम्? अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (2.4.58) इत्यपृक्तस्येत्येव सिद्धम्।
- अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गः -
अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गो भवति। इहापि प्राप्नोति- फाण्टाहृतेरपत्यं माणवकः
फाण्टाहृतः इति।
णवचनसार्मथ्यान्न भविष्यति।
- वचनप्रामाण्यादिति चेत्फङ्निवृत्त्यर्थं वचनम् -
वचनप्रामाण्यादिति चेत्फङ्निवृत्त्यर्थमेतत्स्यात्। फगतो मा भूदिति।
- पैलादिषु वचनात्सिद्धम् -
यद्येतावत्प्रयोजनं स्यात् पैलादिष्वेवास्य पाठं कुर्वीत। तत्र पाठादन्येषामपि फको निवृत्तिर्भवति। एवं सिद्धे सति यदयं णं शास्ति तज्ज्ञापयत्याचार्यो - नास्य लुग्भवति इति।
तान्येतानि त्रीणि ग्रहणानि भवन्ति - अपृक्तसञ्ज्ञायां हल्ग्रहणं कर्तव्यम्। स्वादिलोपे हलो ग्रहणं न कर्तव्यम्। अणिञोर्लुकि ग्रहणं कर्तव्यम्। अल्ग्रहणेऽपि वै क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति- अपृक्तसञ्ज्ञायामलग्रहणं कर्तव्यम्। स्वादिलोपे हलो ग्रहणं कर्तव्यम्। अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति, अपृक्तग्रहणं कर्तव्यम्। तत्र नास्ति लाघवकृतो विशेषः।
अयमस्ति विशेषः। अल्ग्रहणे क्रियमाणे एकग्रहणं न करिष्यते।
कस्मान्न भवति- दर्विः जागृविः?
अलेव यः प्रत्ययः।
किं वक्तव्यमेतत्?
नहि।
कथमनुच्यमानं गंस्यते? अल्ग्रहणसार्मथ्यात्। यदि च योऽल् चान्यश्च तत्र स्यात्, अल्ग्रहणमनर्थकं स्यात्।
हल्ग्रहणेपि वै क्रियमाणे एकग्रहणं न करिष्यते।
कस्मान्न भवति- दर्विः जागृविः?
हलेव यः प्रत्ययः। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? हल्ग्रहणसार्मथ्यात्। यदि च यो हल् चान्यश्च तत्र स्यात्, हल्ग्रहणमनर्थकं स्यात्।
<M.2.037>
अस्त्यन्यद्धल्ग्रहणस्य प्रयोजनम्। किम्? हलन्तस्य यथा स्यादजन्तस्य मा भूदिति।
एवं तर्हि सिद्धे सति यदल्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यः- अन्यत्र वर्णग्रहणे जातिग्रहणं भवति इति।
किमेतस्य ज्ञापने प्रयोजनम्?
दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम् इत्युक्तं तदुपपन्नं भवति ।। अपृक्त एकाल्प्रत्ययः ।। 41 ।।

-1-2-42- तत्पुरुषः समानाधिकरणः कर्मधारयः
।। सामानाधिकरण्योपपादनाधिकरणम् ।।
- तत्पुरुषस्समानाधिकरणः कर्मधारय इति चेत्समासैकार्थत्वादप्रसिद्धिः -
तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासस्यैकार्थत्वात् सञ्ज्ञाया अप्रसिद्धिः।
एकोऽयमर्थस्तत्पुरुषो नाम, अनेकार्थाश्रयं च सामानाधिकरण्यम्।
- सिद्धं तु पदसामानाधिकरण्यात् -
सिद्धमेतत्। कथम्? तत्पुरुषस्समानाधिकरणपदः कर्मधारयसञ्ज्ञो भवतीति वक्तव्यम्। सिध्यति। सूत्रं तर्हि भिद्यते।
यथान्यासमेवास्तु।
ननु चोक्तम्- तत्पुरुषः समानाधिकरणः कर्मधारयः इति चेत् समासैकार्थत्वादप्रसिद्धिः इति।

नैष दोषः। अयं तत्पुरुषोस्त्येव प्राथमकल्पिको यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तित्वं च। अस्ति तार्दथ्यात् ताच्छब्द्यं तत्पुरुषार्थानि पदानि तत्पुरुष इति। तद्यस्तार्दथ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ।। तत्पुरुषः समानाधिकरणः कर्मधारयः ।। 42 ।।
<M.2.038>
-1-2-43- प्रथमानिर्दिष्टं समास उपसर्जनम्
।। समासपदार्थनिरूपणाधिकरणम् ।।
- प्रथमानिर्दिष्टं समासे उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे सञ्ज्ञाऽप्रसिद्धिः -
प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समास उपसर्जनसञ्ज्ञाया अप्रसिद्धिः। नहि कष्टादीनां समासे प्रथमां पश्यामः।
- सिद्धं तु समासविधाने वचनात् -
सिद्धमेतत्। कथम्? समासविधाने प्रथमानिर्दिष्टमुपसर्जनसञ्ज्ञं भवतीति वक्तव्यम्। तत्तर्हि वक्तव्यम्?
- न वा तार्दथ्यात्ताच्छब्द्यम् -
न वा वक्तव्यम्। किं कारणम्? तार्दथ्यात्ताच्छब्द्यं भविष्यति। समासार्थं शास्त्रं समास इति।
<M.2.039>
- यस्य विधौ प्रथमानिर्देशस्ततोऽन्यत्रोपसर्जनसञ्ज्ञाप्रसङ्गः -
यस्य विधौ प्रथमानिर्देशः क्रियते ततोन्यत्रापि तस्योपसर्जनसञ्ज्ञा प्राप्नोति। राज्ञः कुमारीं राजकुमारीं श्रितः। श्रितादिसमासे द्वितीयान्तं प्रथमानिर्दिष्टं तस्य षष्ठीसमासेप्युपसर्जनसञ्ज्ञा प्राप्नोति।
- सिद्धं तु यस्य विधौ तं प्रतीति वचनात् -
सिद्धमेतत्। कथम्? यस्य विधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनसञ्ज्ञं भवतीति वक्तव्यम्।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्। उपसर्जनम् इति हि महती सञ्ज्ञा क्रियते। सञ्ज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि सञ्ज्ञाकरणम्। तत्र महत्याः सञ्ज्ञायाः करण एतत्प्रयोजनमन्वर्थसञ्ज्ञा यथा विज्ञायेत- अप्रधानमुपसर्जनमिति। प्रधानमुपसर्जनमिति च सम्बन्धिशब्दावेतौ। तत्र सम्बन्धादेतद् गन्तव्यम्- यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसञ्ज्ञं भवतीति।
अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्योपसर्जनसञ्ज्ञा न भवति। राज्ञः पुरुषस्य राजपुरुषस्येति।
- षष्ठ्यन्तयोश्चोपसर्जनत्वे उक्तम् -
किमुक्तम्? षष्ठ्यन्तयोः समासेऽर्थाभेदात् प्रधानस्याऽपूर्वनिपातः इति। एवं न चेदमकृतं भवति उपसर्जनं पूर्वम् इति। अर्थश्चाऽभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति।
<M.2.040>
यद्यपि तावदेतदुपसर्जनकार्यं परिहृतम्, इदमपरं प्राप्नोति,- राज्ञः कुमार्याः राजकुमार्याः। गोस्त्रियोरुपसर्जनस्य (1.2.48) इति ह्रस्वत्वं प्राप्नोति।
- उक्तं वा -
किमुक्तम्?। परवल्लिङ्गमिति शब्दशब्दार्थौ इति। तत्रौपदेशिकस्य ह्रस्वत्वम्, आतिदेशिकस्य श्रवणं भविष्यति ।। प्रथमा निर्दिष्टं समास उपसर्जनम् ।। 43 ।।
-1-2-44- एकविभक्ति चापूर्वनिपाते
।। प्रथमानिर्दिष्टस्य पूर्वनिपातसाधकाधिकरणम् ।।
द्वितीयादीनामप्यनेनोपसर्जनसञ्ज्ञा प्राप्नोति। तत्र को दोषः?। तत्राऽपूर्वनिपात इति प्रतिषेधः प्रसज्येत।
<M.2.041>
- नाऽप्रतिषेधात् -
नायं प्रसज्यप्रतिषेधः- पूर्वनिपाते न इति। किं तर्हि? पर्युदासोऽयम्- यदन्यत्पूर्वनिपातात् इति। पूर्वनिपातेऽव्यापारः। यदि केनचित्प्राप्नोति तेन भविष्यति। पूर्वेण च प्राप्नोति तेन भविष्यति।
- अप्राप्तेर्वा -
अथवा अनन्तरा या प्राप्तिः सा प्रतिषिध्यते। कुत एतत्? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति। पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति।
ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते।
नोत्सहते प्रतिषिद्धा सति बाधितुम्।
- एकविभक्तावषष्ठ्यन्तवचनम् -
एकविभक्तावषष्ठ्यन्तानामिति वक्तव्यम्। इह मा भूत्- अर्धं पिप्पल्याः अर्धपिप्पलीति।
- उक्तं वा -
किमुक्तम्?। परवल्लिङ्गमिति शब्दशब्दार्थौ इति। तत्रौपदेशिकस्य ह्रस्वत्वम् आतिदेशिकस्य श्रवणं भविष्यति।
कानि पुनरस्य योगस्य प्रयोजनानि?
- प्रयोजनं द्विगुप्राप्तापन्नालंपूर्वोपसर्गाः क्तार्थे -
द्विगुः- पञ्चभिर्गोभिः क्रीतः पञ्चगुः। दशगुः।

प्राप्तापन्न(पूर्व)- प्राप्तो जीविकां प्राप्तजीविकः। आपन्नो जीविकामापन्नजीविकः।
अलंपूर्व- अलं कुमार्यै अलंकुमारिः।
उपसर्गाः क्रार्थे- निष्कौशाम्बिः निर्वाराणसिः ।। एकविभक्ति चापूर्वनिपाते ।। 44 ।।
इति श्रमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीयपादे प्रथममाह्निकम् ।। 1 ।।
-1-2-45- अर्थवदधातुरप्रत्ययः प्रातिपदिकम्
।। पदकृत्यनिरूपणाधिकरणम् ।।
(अर्थवद्ग्रहणं किमर्थम्?।)
अर्थवदिति व्यपदेशाय। वर्णानां च मा भूदिति।
किं च स्यात्?। वनं घनमिति नलोपः प्रातिपदिकान्तस्य (8.2.7) इति नलोपः प्रसज्येत।
अधातुरिति किमर्थम्?
अहन् वृत्रम्।
अधातुरिति शक्यमवक्तुम्।
कस्मान्न भवति अहन्वृत्रम् इति?
आचार्यप्रवृत्तिर्ज्ञापयति- न धातोः प्रातिपदिकसञ्ज्ञा भवतीति, यदयं सुपो धातुप्रातिपदिकयोः (2.4.71) इति धातुग्रहणं करोति।
नैतदस्ति ज्ञापकम्। प्रतिषिद्धार्थमेतत्स्यात् अपि काकः श्येनायते इति।
अप्रत्यय इति किमर्थम्?
काण्डे कुड्ये।
अप्रत्यय इति शक्यमवक्तुम्।
कस्मान्न भवति काण्डे कुड्य इति? कृत्तद्धितग्रहणं नियमार्थं भविष्यति- कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसञ्ज्ञा भवति, नान्यस्य इति।
- अर्थवत्यनेकपदप्रसङ्गः -
अर्थवति प्रातिपदिकसञ्ज्ञायामनेकस्यापि पदस्य प्रातिपदिकसञ्ज्ञा प्राप्नोति। दश दाडिमानि, षडपूपाः, कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः इति।
समुदायोऽत्रानर्थकः।
- समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वं यथा लोके -
समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वम्। अवयवैरर्थवद्भिः समुदाया अप्यर्थवन्तो भवन्ति। यथा लोके। तद्यथा- लोके आढ्यमिदं नगरं गोमदिदं नगरम् इत्युच्यते। न च सर्वे तत्राढ्या भवन्ति, सर्वे वा गोमन्तः।
यथा लोके इत्युच्यते, लोके चावयवा एवार्थवन्तो न समुदायाः। अतश्चावयवा एवार्थवन्तो न समुदायाः। यस्य हि यद् द्रव्यं भवति स तेन कार्यं करोति। यस्य च या गावो भवन्ति स तासां क्षीरं घृतं चोपभुङ्क्ते, अन्यैरेतद्
द्रष्टुमप्यशक्यम्।
का तर्हीयं वाचोयुक्तिराढ्यमिदं नगरं गोमदिदं नगरमिति? एषैषा वाचोयुक्तिः। इह तावदाढ्यमिदं नगरमित्यकारो मत्वर्थीयः- आढ्या अस्मिन्सन्ति तदिदमाढ्यमिति। गोमदिदं
नगरमिति, मत्वन्तान्मत्वर्थीयो लुप्यते।
एवमपि-
- वाक्यप्रतिषेधोऽर्थवत्त्वात् -
वाक्यस्य प्रातिपदिकसञ्ज्ञायाः प्रतिषेधो वक्तव्यः। देवदत्त गामभ्याज शुक्लाम्, देवदत्त
गामभ्याज कृष्णामिति। किं कारणम्? अर्थवत्त्वात्। अर्थवद्ध्येतद्वाक्यं भवति।
न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये।
- पदार्थादन्यस्यानुपलब्धिरिति चेत् पदार्थाभिसम्बन्धस्योपलब्धिः (स्तस्मात्प्रतिषेधः) -
पदार्थादन्यस्यानुपलब्धिरिति चेदेवमुच्यते- पदार्थाभिसम्बन्धस्योपलब्धिर्भवति वाक्ये। इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः, कर्म क्रियागुणौ चानिर्दिष्टौ। गामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रियागुणौ चानिर्दिष्टौ। अभ्योजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणश्चानिर्दिष्टः। शुक्लामित्युक्ते गुणो निर्दिष्टः, कर्तृकर्मणी क्रिया चानिर्दिष्टा। इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टम्- देवदत्त एव कर्ता नान्यः। गामेव कर्म नान्यत्। अभ्याजैव क्रिया नान्या। शुक्लमेव न कृष्णामिति। एतेषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः। तस्मात् प्रतिषेधः। तस्मात्प्रतिषेधो वक्तव्यः।
न वक्तव्यः।
- अर्थवत्समुदायानां समासग्रहणं नियमार्थम् -
अर्थवत्समुदायानां समासग्रहणं नियमार्थं भविष्यति। समास एवार्थवतां समुदायानां प्रातिपदिकसञ्ज्ञो भवति नान्य इति।
यदि नियमः क्रियते प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसञ्ज्ञा न प्राप्नोति- बहुपटवः उच्चकैर्नीचकैरिति।
किं पुनरत्र प्रातिपदिकसञ्ज्ञया प्रार्थ्यते?

प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यादिति।
नैष दोषः। यथैवात्राप्रातिपदिकत्वात्सुबुत्पत्तिर्न भवति, एवं लुगपि न भविष्यति। तत्र यैवासावन्तर्वर्तिनी विभक्तिस्तस्या एव श्रवणं भविष्यति।
नैवं शक्यम्। स्वरे दोषः स्यात्- बहुपटव इत्येवं स्वरः स्यात्। बहुपटव इति चेष्यते। पठिष्यति ह्याचार्यः- चितः सप्रकृतेर्बह्वकजर्थम् इति। तस्यां पुनर्लुप्तायां यान्या विभक्तिरुत्पद्यते तस्याः प्रकृत्यनेकदेशत्वादन्तोदात्तत्वं न भविष्यति।
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति- भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसञ्ज्ञा- इति। यदयम् अप्रत्ययः इति प्रतिषेधं शास्ति। स च तदन्तप्रतिषेधः।
स तर्हि ज्ञापकार्थः प्रत्ययप्रतिषेधो वक्तव्यः।
ननु चायं प्राप्त्यर्थोऽपि वक्तव्यः।
नार्थः प्राप्त्यर्थेन। कृत्तद्धितग्रहणं नियमार्थं भविष्यति- कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसञ्ज्ञा भविष्यति, नान्यस्य प्रत्ययान्तस्य इति।
स एषोऽनन्यार्थः प्रत्ययप्रतिषेधो वक्तव्यः। प्रकृतिप्रत्ययसमुदायस्य वा प्रातिपदिकसञ्ज्ञा वक्तव्या।
उभयं न वक्तव्यम्। तुल्यजातीयस्य नियमः।
कश्च तुल्यजातीयः?
यथाजातीयकानां समासः।
कथं जातीयकानां समासः?
सुबन्तानाम्।
सुप्तिङ्समुदायस्य तर्हि प्रातिपदिकसञ्ज्ञा प्राप्नोति।
सुप्तिङ्समुदायस्यापि प्रातिपदिकसञ्ज्ञाऽऽरभ्यते- जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति इति। तन्नियमार्थं भविष्यति- एतस्यैव सुप्तिङ्समुदायस्य प्रातिपदिकसञ्ज्ञा भवति, नान्यस्य इति।
तिङ्समुदायस्य तर्हि प्रातिपदिकसञ्ज्ञा प्राप्नोति।
तिङ्समुदायस्यापि प्रातिपदिकसञ्ज्ञाऽऽरभ्यते- आख्यातमाख्यातेन क्रियासातत्ये इति। तन्नियमार्थं भविष्यति- एतस्यैव तिङ्समुदायस्य प्रातिपदिकसञ्ज्ञा भवति, नान्यस्य इति।
- अर्थवत्ता नोपपद्यते केवलेनाऽवचनात् -
अर्थवत्ता नोपपद्यते वृक्षशब्दस्य। किं कारणम्? केवलेनावचनात्। न केवलेन वृक्षशब्देनार्थो गम्यते। केन तर्हि? सप्रत्ययकेन।
- न वा प्रत्ययेन नित्यसम्बन्धात् केवलस्याऽप्रयोगः -
न वैष दोषः। किं कारणम्? प्रत्ययेन नित्यसम्बन्धात् नित्यसम्बन्धावेतावर्थौ प्रकृतिः प्रत्यय इति। प्रत्ययेन नित्यसम्बन्धात् केवलस्य प्रयोगो न भविष्यति।
अन्यद्भवान्पृष्टोऽन्यदाचष्टे। आम्रान् पृष्टः कोविदारानाचष्टे। अर्थवत्ता नोपपद्यते केवलेनावचनाद् इति भवानस्माभिश्चोदितः केवलस्याऽप्रयोगे हेतुमाह।
एवं किल नाम कृत्वा चोद्यते समुदायस्यार्थे प्रयोगादवयवानामप्रसिद्धिः इति।
- सिद्धं त्वन्वयव्यतिरेकाभ्याम् -
सिद्धमेतत्। कथम्? अन्वयाद् व्यतिरेकाच्च।
कोसावन्वयो व्यतिरेको वा?
इह वृक्ष इत्युक्ते कश्चिच्छब्दः श्रूयते वृक्षशब्दोऽकारान्तः सकारश्च प्रत्ययः। अर्थोऽपि कश्चिद् गम्यते मूलस्कन्धफलपलाशवान्, एकत्वं च। वृक्षावित्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी। सकारो हीयते, औकार उपजायते, वृक्षशब्द अकारान्तोऽन्वयी। अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी- एकत्वं हीयते द्वित्वमुपजायते
मूलस्कन्धफलपलाशवानन्वयी। ते मन्यामहे- यः शब्दो हीयते तस्यासावर्थो यो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते, यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयीति।
विषम उपन्यासः। बहवो हि शब्दा एकार्था भवन्ति। तद्यथा- इन्द्रः शक्रः पुरुहूतः पुरन्दरः। कन्दुः कोष्ठः कुसूल इति। एकश्च शब्दो बह्वर्थः। तद्यथा- अक्षाः पादा माषा इति।
अतः किम्?
न साधीयोऽर्थवत्ता सिद्धा भवति।
न ब्रूमः- अर्थवत्ता न सिध्यतीति। वर्णिता अर्थवत्तान्वयव्यतिरेकाभ्यामेव।
तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति। न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात्। प्रत्यय एव वा?
सामान्यशब्दा एत एवं स्युः। सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते। यतस्तु खलु नियोगतो वृक्ष इत्युक्ते स्वभावतः कस्मिंश्चदर्थे प्रतीतिरुपजायते। अतो मन्यामहे नेमे सामान्यशब्दा इति। न चेत्सामान्यशब्दाः, प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे।
।। वर्णानामर्थवत्तानर्थकत्वनिर्णयाधिकरणम् ।।
किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः?
- वर्णस्यार्थवदनर्थकत्वे उक्तम् -

किमुक्तम्?। अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः सङ्घातार्थवत्त्वाच्च। सङ्घातस्यैकार्थ्यात् सुबभावो वर्णात्। अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेर्वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनाद् इति।
तत्रेदमपरिहृतम्- सङ्घातार्थवत्त्वाच्च इति।
तस्य परिहारः-
- सङ्घातार्थवत्त्वाच्चेति चेद् दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः -
सङ्घातार्थवत्त्वाच्चेति चेद् दृश्यते हि पुनरतदर्थेन गुणेन गुणिनोऽर्थभावः। तद्यथा- एकस्तन्तुस्त्वक्त्राणेऽसमर्थस्तत्समुदायश्च कम्बलः समर्थः। एकश्च तण्डुलः
क्षुत्प्रतिघातेऽसमर्थः, तत्समुदायश्च वर्द्धितकं समर्थम्। एकश्च बल्वजो बन्धनेऽसमर्थः, तत्समुदायश्च रज्जुः समर्था भवति।
विषम उपन्यासः। भवति हि तत्र या च यावती चाऽर्थमात्रा। भवति हि
कञ्चित्प्रत्येकस्तन्तुस्त्वक्त्राणे समर्थः, एकश्च तण्डुलः क्षुत्प्रतिघाते समर्थः, एकश्च बल्वजो बन्धने समर्थः। इमे पुनर्वर्णा अत्यन्तमेवाऽनर्थकाः। यथा तर्हि रथाङ्गानि विहृतानि प्रत्येकं व्रजिक्रियां प्रत्यसमर्थानि भवन्ति तत्समुदायश्च रथः समर्थः, एवमेषां वर्णानां समुदाया अर्थवन्तः, अवयवा अनर्थका इति।
।। अथानर्थकनिपातप्रातिपदिकसञ्ज्ञासाधनाधिकरणम् ।।
- निपातस्यानर्थकस्य प्रातिपदिकत्वम् -
निपातस्यानर्थकस्य प्रातिपदिकसञ्ज्ञा वक्तव्या। खञ्जति। निखञ्जति। लम्बते प्रलम्बते।
किं पुनरत्र प्रातिपदिकसञ्ज्ञया प्रार्थ्यते?
प्रातिपदिकाद् इति स्वाद्युत्पत्तिः सुबन्तं पदम् इति पदसञ्ज्ञा। पदस्य पदात् (8.1.16,17) इति निघातो यथा स्यात्।
नैतदस्ति प्रयोजनम्। सत्यामपि प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तिर्न प्राप्नोति। किं कारणम्? नहि प्रातिपदिकसञ्ज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा। किं तर्हि? एकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते। न चैषामेकत्वादयः सन्ति।
नैष दोषः। अविशेषेणोत्पद्यन्ते। उत्पन्नानां नियमः क्रियते।
अथ वा प्रकृतानर्थानपेक्ष्य नियमः। के च प्रकृताः? एकत्वादयः। एकस्मिन्नेवार्थ एकवचनं, न द्वयोर्न बहुषु। द्वयोरेवार्थयोर्द्विवचनं नैकस्मिन्न बहुषु। बहुष्वेवार्थेषु बहुवचनं, नैकस्मिन्न द्वयोः इति।
अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति- अनर्थकानामप्येतेषां भवत्यर्थवत्कृतम् इति, यदयम् अधिपरी अनर्थकौ (1.4.93) इत्यनर्थकयोर्गत्युपसर्गसञ्ज्ञाबाधिकां कर्मप्रवचनीयसञ्ज्ञां शास्ति।
।। अथाप्रत्यय इत्यत्र पर्युदासप्रसज्यप्रतिषेधविचारः ।।
किं पुनरयं पर्युदासो यदन्यत्प्रत्ययादिति, अहोस्वित्प्रसज्याऽयं प्रतिषेधः प्रत्ययो नेति? कश्चात्र विशेषः?
- अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधोऽन्तवत्त्वात् -
अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधो वक्तव्यः। काण्डे कुड्ये। किं कारणम्? अन्तवत्त्वात्। तिबतिपोरेकादेशोऽतिपोऽन्तवत्स्यात्। अस्त्यन्यत्तिप इति कृत्वा प्रातिपदिकसञ्ज्ञा प्राप्नोति।
अस्तु तर्हि प्रसज्यप्रतिषेधः- प्रत्ययो न इति।
- न प्रत्यय इति चेदूङेकादेशे प्रतिषेध आदित्त्वात् -
न प्रत्यय इति चेदूङेकादेशे प्रतिषेधः प्राप्नोति। ब्रह्मबन्धूः। किं कारणम्? आदिवत्त्वात् प्रत्ययाऽप्रत्यययोरेकादेशः प्रत्ययस्यादिवत्स्यात्। तत्र प्रत्ययो न इति प्रतिषेधः प्राप्नोति।
किं पुनरत्र प्रातिपदिकसञ्ज्ञया प्रार्थ्यते?
प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यात्।
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति- उत्पद्यन्ते ऊङन्तात्स्वादय इति, यदयं
नोङ्धात्वोः (6.1.175) इति विभक्तिस्वरस्य प्रतिषेधं शास्ति।
अथ वा द्वे ह्यत्र प्रातिपदिकसञ्ज्ञे- अवयवस्यापि, समुदायस्यापि। तत्रावयवस्य या प्रातिपदिकसञ्ज्ञा तयाऽन्तवद्भावात्स्वाद्युत्पत्तिर्भविष्यति।
- सुब्लोपे च प्रत्ययलक्षणत्वात् -
सुब्लोपे च प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोति। राजा। तक्षा। प्रत्ययलक्षणेन प्रत्ययो न इति प्रतिषेधः प्राप्नोति।
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति- न प्रत्ययलक्षणेन प्रतिषेधो भवति इति, यदयं- न ङिसम्बुद्ध्योः (8.2.8) इति प्रतिषेधं शास्ति।
अथ वा पुनरस्तु पर्युदासः। ननु चोक्तम् अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधोऽन्तवत्त्वाद् इति।
प्रसज्यप्रतिषेधेऽप्येष दोषः। द्वे ह्यत्र प्रातिपदिकसञ्ज्ञे, अवयवस्यापि समुदायस्यापि। गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन। तस्मादुभाभ्यामपि वक्तव्यं स्याद्- ह्रस्वो नपुंसके यत्तस्य इति। किं च नपुंसके? नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः? प्रातिपदिकस्य ।। अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।। 45 ।।
-1-2-46- कृत्तद्धितसमासाश्च
समासग्रहणं किमर्थम् ?
- समासग्रहण उक्तम् -
किमुक्तम्? अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इति ।। कृत्तद्धितसमासाश्च ।। 46 ।।

-1-2-47- ह्रस्वो नपुंसके प्रातिपदिकस्य
।। प्रातिपदिकपदप्रयोजनाधिकरणम् ।।
प्रातिपदिकग्रहणं किमर्थम्?
- नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिब्निवृत्त्यर्थम् -
नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं क्रियते तिब्निवृत्त्यर्थम् तिबन्तस्य ह्रस्वत्वं मा भूत्- काण्डे कुड्ये। रमते ब्राह्मणकुलमिति।
- अव्ययप्रतिषेधः -
अव्ययानां प्रतिषेधो वक्तव्यः। इह मा भूत्- दोषा ब्राह्मणकुलम्। दिवा ब्राह्मणकुलमिति।
स तर्हि वक्तव्यः?
न वक्तव्यः। नात्राऽव्ययं नपुंसके वर्तते। किं तर्हि? अधिकरणमत्राव्ययं नपुंसकस्य।
इह तर्हि प्राप्नोति- काण्डीभूतं वृषलकुलम्, कुड्यीभूतं वृषलकुलमिति।
- न वा लिङ्गाऽभावात् -
न वा वक्तव्यम्। किं कारणम्? लिङ्गाऽभावात्। अलिङ्गमव्ययम्।
किं पुनरयमव्ययस्यैव परिहार अहोस्वित्तिबन्तस्यापि परिहारः?
तिबन्तस्यापि इत्याह। कथम्? अव्ययं हि किञ्चिद्विभक्त्यर्थप्रधानं किञ्चित्क्रियाप्रधानम्। उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्, हिरुक् पृथगिति क्रियाप्रधानम्। तिबन्तं चापि किञ्चिद्विभक्त्यर्थप्रधानं, किञ्चित्क्रियाप्रधानम्। काण्डे कुड्ये इति विभक्त्यर्थप्रधानं, रमते ब्रह्मणकुलमिति क्रियाप्रधानम्। न चैतयोरर्थयोलिङ्गसङ्ख्याभ्यां योगोऽस्ति।
अवश्यं चैतदेवं विज्ञेयम्। क्रियमाणेऽपि हि प्रातिपदिकग्रहणे इह प्रसज्येत-- काण्डे कुड्ये। द्वे ह्यत्र प्रातिपदिकसञ्ज्ञे। अवयवस्यापि समुदायस्यापि । गृह्यते च प्रातिपदिकाऽप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन।
तस्मादुभाभ्यामिति वक्तव्यं स्यात्- ह्रस्वो नपुंसके यत्तस्य इति। किं च नपुंसके? नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः प्रातिपदिकस्य।
<M.2.054>
- यञ्ञेकादेशदीर्घेत्त्वेषु प्रतिषेधः -
यञ्ञैकादेशदीर्घेत्त्वेषु प्रतिषेधो वक्तव्यः। युगवरत्राय युगवरत्रार्थम् युगवरत्रेभ्यः।
- यञ्ञेकादेशदीर्घेत्त्वेषु बहिरङ्गलक्षणत्वात्सिद्धम् -
बहिरङ्गा एते विधयः। अन्तरङ्गं ह्रस्वत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे।
- उपसर्जनह्रस्वत्वे च -
किम्? यञ्ञेकादेशदीर्घेत्त्वेषु प्रतिषेधो वक्तव्यः। अतिखट्वाय। अतिखट्वार्थम्। अतिखट्वेभ्यः। बहिरङ्गलक्षणत्वात्सिद्धम् इत्येव। बहिरङ्गा एते विधयः। अन्तरङ्गं ह्रस्वत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे ।। ह्रस्वो नपुंसके प्रातिपदिकस्य ।। 47 ।।
-1-2-48- गोस्त्रियोरुपसर्जनस्य
- उपसर्जनह्रस्वत्वे च -
उपसर्जनह्रस्वत्वे च। किम्?। यञ्ञेकादेशदीर्घेत्त्वेषु प्रतिषेधो वक्तव्यः। अतिखट्वाय अतिखट्वार्थम् अतिवट्वेभ्यः।
उपसर्जनह्रस्वत्वे च। किम्?। बहिरङ्गलक्षणत्वात् सिद्धमित्येव। बहिरङ्गा एते विधयः, अन्तरङ्गं ह्रस्वत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे।फ्
।। न्यायान्तरनिराकरणाधिकरणम् ।।
- गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम् -
गोटाङ्ग्रहणं कर्तव्यम्। किमिदं टाङ् इति?। प्रत्याहारग्रहणम्। क्व सन्निविष्टानां प्रत्याहारः? टापः प्रभृत्या ष्यङो ङकारात्। कि प्रयोजनम्? कृन्निवृत्त्यर्थम् कृत्स्त्रिया धातुस्त्रियाश्च ह्रस्वत्वं मा भूदिति। अतितन्त्रीः अतिश्रीः अतिलक्ष्मीरिति।
<M.2.055>
तत्तर्हि वक्तव्यम्? न वक्तव्यम्। स्त्रीग्रहणं स्वरिष्यते। तत्र स्वरितेनाधिकारगतिर्भवति। स्त्रियाम् (4.1.3) इत्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञास्यते।
स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति।
यद्येवं प्रत्ययग्रहणमिदं भवति। तत्र प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवति इतीह न प्राप्नोति- अतिराजकुमारिः, अतिसेनानीकुमारिरिति।
अस्त्रीप्रत्ययेन इत्येवं तत्।
।। अनिष्टह्रस्वापत्तिवारणाधिकरणम् ।।
- इर्यसो बहुव्रीहौ पुंवद्वचनम् -
इर्यसो बहुव्रहौ पुंवद्भावो वक्तव्यः। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी, विद्यमानश्रेयसी।
- पूर्वपदस्य च प्रतिषेधो गोसमासनिवृत्त्यर्थम् -
पूर्वपदस्य च प्रतिषेधो वक्तव्यः। किं प्रयोजनम्? गोसमासनिवृत्त्यर्थम्। गोनिवृत्यर्थं, समासनिवृत्त्यर्थं च । गोनिवृत्त्यर्थं तावत् गोकुलम्, गोक्षीरम्, गोपालक इति।
समासनिवृत्त्यर्थम्- राजकुमारीपुत्रः सेनानीकुमारीपुत्र इति।
<M.2.056>

किमुच्यते समासनिवृत्त्यर्थमिति, न पुनरसमासोऽपि किञ्चित्पूर्वपदं यदर्थः प्रतिषेधः स्यात्?
स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति इत्युच्यते। न चान्तरेण समासं स्त्र्यन्तं प्रातिपदिकमुपसर्जनमस्ति।
ननु चेदमस्ति खट्वापादो मालापाद इति। एकादेशे कृतेऽन्तादिवद्भावात्प्राप्नोति।
उभयत आश्रयणे नान्तादिवत्।
गोनिवृत्त्यर्थेन तावन्नार्थः। गोन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति इत्यच्यते, न चैतद्गोन्तम्।
ननु चैतदपि व्यपदेशिवद्भावेन गोन्तम्।
व्यपदेशिवद्भावोऽप्रातिपदिकेन।
समासनिवृत्यर्थेन चापि नार्थः। स्त्र्यन्तन्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति इत्युच्यते, प्रधानमुपसर्जनम् इति च सम्बन्धिशब्दावेतौ। तत्र सम्बन्धादेतद् गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवति इति। अवश्यं चैतदेवं
विज्ञेयम्। उच्यमानेऽपि हि प्रतिषेध इह प्रसज्येत- पञ्च कुमार्यः प्रिया अस्य पञ्चकुमारीप्रियः, दशकुमारीप्रिय इति।
<M.2.057>
- कपि च -
कपि च प्रतिषेधो वक्तव्यः। बहुकुमारीकः, बहुवृषलीकः।
- द्वन्द्वे च -
द्वन्द्वे च प्रतिषेधो वक्तव्यः। कुक्कुटमयूर्यौ।
- उक्तं वा -
किमुक्तम्?। कपि तावदुक्तं- न कपि (7.4.14) इति प्रतिषेध इति।
नैतदस्त्युक्तम्। केणः (7.4.13) इति या ह्रस्वप्राप्तिस्तस्याः प्रतिषेध इति। कुत एतत्?
अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते या च यावती च ह्रस्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेध इति, इहापि तस्य प्रतिषेधः प्रसज्येत प्रियं ग्रामणि। ब्राह्मणकुलमस्य प्रियग्रामणिकः, प्रियसेनानिकः।
इदं तर्ह्युक्तम् कपि कृते अनन्त्यत्वाद्ह्रस्वत्वं न भविष्यति। इदमिह सम्प्रधार्यम्- कप् क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम्? परत्वात् कप्। अन्तरङ्गं ह्रस्वत्वम्। अन्तरङ्गतरः
कप्।
न चायं कप् समासान्त इत्युच्यते।
तार्दथ्यात्ताच्छब्द्यं भविष्यति। येषां पदानां समासो न तावत्तेषामन्यद्भवति कपं तावत् प्रतीक्षते।
<M.2.058>
द्वन्द्वेऽप्युक्तम्। किमुक्तम्? परवल्लिङ्गमिति शब्दशब्दार्थौ इति। तत्रौपदेशिकस्य ह्रस्वत्वम्, आतिदेशिकस्य श्रवणं भविष्यति ।। गोस्त्रियोरुपसर्जनस्य ।। 48 ।।
-1-2-49- लुक्तद्धितलुकि
।। अनिष्टपरिहाराधिकरणम् ।।
- तद्धितलुक्यवन्त्यादीनां प्रतिषेधः -
तद्धितलुक्यवन्त्यादीनां प्रतिषेधो वक्तव्यः। अवन्ती। कुन्ती। कुरूः।
- तद्धितलुक्यवन्त्यादीनामप्रतिषधोऽलुक्परत्वात् -
तद्धितलुक्यवन्त्यादीनामप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। लुक्कस्मान्न भवति? अलुक्परत्वात्। लुकि इत्युच्यते, न चाऽत्र लुकं पश्यामः।
लुकि इति नैषा परसप्तमी शक्या विज्ञातुम्। नहि लुका पौर्वापर्यमस्ति। का तर्हि? सत्सप्तमी। लुकि सतीति। सत्सप्तमी चेत् प्राप्नोति।
एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति। किम्? उपसर्जनस्येति वर्तते इति। न च जातिरुपसर्जनम् ।। लुक्तद्धितलुकि ।। 49 ।।
<M.2.059>
-1-2-50- इद् गोण्याः
- इद्गोण्या नेति वक्तव्यम् -
गोण्या न इत्येव सिद्धम्। नार्थ इत्वेन।
का रूपसिद्धिः?। पञ्चगोणिर्दशगोणिः।
- ह्रस्वता हि विधीयते -
ह्रस्वत्वमत्र विधीयते गोस्त्रियोरुपसर्जनस्य (1.2.48) इति।
- इति वा वचने तावत् -
इद् इति वोच्येत, नेति वा। को न्वत्र विशेषः?
- मात्रार्थं वा कृतं भवेत् -
अथवा मात्रार्थमिदं वक्तव्यम्। गोणीमात्रमिदं गोणिः। अपर आह-
- गोण्या इत्वं प्रकरणात् -

अशिष्यं गोण्या इत्त्वम्। किं कारणम्? प्रकरणात्। प्रकृतं ह्रस्वत्म्। ह्रस्व इति वर्तते।
<M.2.060>
न तु सूच्याः।
- सूच्याद्यर्थमथापि वा -
सूच्याद्यर्थमिदं द्रष्टव्यम्। पञ्चसूचिः दशसूचिः।
इद्गोण्या नेति वक्तव्यं ह्रस्वता हि विधीयते।
इति वा वचने तावन्मात्रार्थं वा कृतं भवेत् ।। 1 ।।
गोण्या इत्त्वं प्रकरणात्सूच्याद्यर्थमथापि वा ।। इद् गोण्याः ।। 50 ।।
-1-2-51- लुपि युक्तवद्व्यक्तिवचने
।। पदकृत्यवर्णनाधिकरणम् ।।
व्यक्तिवचने इति किमर्थम्? शिरीषाणामदूरभवो ग्रामः शिरीषाः। तस्य ग्रामस्य वनं शिरीषवनम्। किं च स्यात्? विभाषौषधिवनस्पतिभ्यः (8.4.6) इति णत्वं प्रसज्येत।
अपर आह- कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। षष्ठी युक्तवद्भावेन मा भूदिति।
अथ व्यक्तिवचने इत्यप्युच्यमाने कस्मादेवात्र न भवति, षष्ठ्यपि हि वचनम्?
नेदं पारिभाषिकस्य वचनस्य ग्रहणम्। किं तर्हि? अन्वर्थग्रहणम्- उच्यते वचनमिति।
<M.2.061>
एवमपि षष्ठी प्राप्नोति। षष्ठ्यपि ह्युच्यते।
लुपोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्। किं कारणम्? उक्तार्थानामप्रयोग इति।
आतिदेशिकी तर्हि प्राप्नोति।
एवं तर्हि-
- प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम्।
वक्तुश्च कामचारः प्राग्वृत्तेर्लिङ्गसङ्ख्येये -
प्रागपि वृत्तेर्युक्तं वनस्पतिभिः नगरम्। वृत्तञ्चापि युक्तं वनस्पतिभिर्नगरम्। वृत्ते च युक्तवद्भावो विधीयते। कामचारश्च प्रयोक्तुः प्राग्वृत्तेर्ये लिङ्गसङ्ख्ये ते अतिदेष्टुम्, वृत्तस्य वा ये लिङ्गसङ्ख्ये ते। यावता कामचारः, वृत्तस्य ये लिङ्गसङ्ख्ये ते अतिदेक्ष्येते, न प्राग्वृत्तेर्ये।
अथ वा प्राग्वृत्तेर्ये लिङ्गसङ्ख्ये ते अतिदेक्ष्येते। षष्ठी कस्मान्न भवति? सामान्यातिदेशे विशेषानतिदेश इति।
<M.2.062>
किमर्थं पुनरिदमुच्यते?
- अन्यत्राभिधेयस्य व्यक्तिवचनभावाल्लुपि युक्तवदनुदेशः -
अन्यत्राभिधेयवल्लिङ्गवचनानि भवन्ति। क्वान्यत्र? लुकि। लवणः सूपः। लवणा यवागूः। लवणं शाकमिति। अन्यत्राभिधेयवद्व्यक्तिवचनानि भवन्ति लुकि। इहाप्यभिधेयवल्लिङ्गवचनानि प्राप्नुवन्ति। इष्यन्ते चाभिधानवत्स्युरिति। तच्चान्तरेण यत्नं न
सिध्यतीति लुपि युक्तवदनुदेशः। एवमर्थमिदमुच्यते।
अस्ति प्रयोजनमेतत्। किं तर्हीति।
- लुपोऽदर्शनसञ्ज्ञित्वादर्थगतिर्नोपपद्यते -
लुब्नामेयमदर्शनस्य सञ्ज्ञा क्रियते। न चाऽदर्शनस्य लिङ्गसङ्ख्ये शक्येते अतिदेष्टुम्।
लुपोऽदर्शनसञ्ज्ञित्वादर्थगतिर्नोपपद्यते।
- न वाऽदर्शनस्याऽशक्यत्वादर्थगतिः साहचर्यात् -
न वैष दोषः। किं कारणम्? अदर्शनस्याऽशक्यत्वात्। अदर्शनस्य लिङ्गसङ्ख्ये अशक्ये अतिदेष्टुमिति कृत्वाऽदर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात्।
- योगाऽभावाच्चान्यस्य -
अन्यस्याऽदर्शनेन च योगो नास्तीति कृत्वाऽदर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति, साहचर्यात्।
- समास उत्तरपदस्य बहुवचनस्य लुपः -
समासे उत्तरपदस्य बहुवचनस्य लुपो युक्तवद्भावो वक्तव्यः। मधुरापञ्चालाः। किं प्रयोजनम्? नियमार्थम्- समास उत्तरपदस्यैव। क्व मा भूत्? पञ्चालमधुरे इति । लुपि युक्तवद्व्यक्तिवचने ।। 51 ।।
<M.2.063>
-1-2-52- विशेषणानां चाऽजातेः
।। जातिपदार्थान्वयनिर्णयाधिकरणम् ।।
कथमिदं विज्ञायते- जातिर्यद्विशेषणमिति, आहोस्विज्जातेर्यानि विशेषणानीति?
किं चातः? यदि विज्ञायते- जातिर्यद्विशेषणमिति। सिद्धम्- पञ्चाला जनपद इति। सुभिक्षः सम्पन्नपानीयो बहुमाल्यफल इति न सिद्ध्यति।
अथ विज्ञायते- जातेर्यानि विशेषणानि इति। सिद्धम्- सुभिक्षः सम्पन्नपानीयो बहुमाल्यफलः इति। पञ्चाला जनपदः इति न सिद्ध्यति।

एवं तर्हि नैवं विज्ञायते- जातिर्यद्विशेषणाम् इति, नापि- जातेर्यानि विशेषणानि इति। कथं तर्हि? विशेषणानां युक्तवद्भावो भवति, आ जातेः, आजातिप्रयोगात्।
(अथ) किमर्थं पुनरिदमुच्यते?
- विशेषणानां वचनं जातिनिवृत्त्यर्थम् -
जातिनिवृत्त्यर्थोऽयमारम्भः। किमुच्यते जातिनिवृत्त्यर्थ इति। न पुनर्विशेषणानामपि युक्तवद्भावो यथा स्यादिति?
- समानाधिकरणत्वात्सिद्धम् -
समानाधिकरणत्वाद्विशेषणानां युक्तवद्भावो भविष्यति।
<M.2.064>
यद्येवं नार्थोऽनेन। लुपोऽन्यत्रापि जातेर्युक्तवद्भावो न भवति। क्वान्यत्र? बदरी सूक्ष्मकण्टका मधुरा (वृक्षः) इति। किं पुनः कारणमन्यत्रापि जातेर्युक्तवद्भावो न भवति?
आविष्टलिङ्गा जातीर्यल्लिङ्गमुपादाय प्रवर्त्तते, उत्पत्तिप्रभृत्या विनाशान्न तल्लिङ्गं जहाति।
न तर्हीदानीमयं योगो वक्तव्यः?
वक्तव्यश्च। किं प्रयोजनम्? इदं तत्र तत्रोच्यते- गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति इति, तदनेन क्रियते।
- हरीतक्यादिषु व्यक्तिः -
हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेन। हरीतक्याः फलानि हरीतक्यः फलानि।
- खलतिकादिषु वचनम् -
खलतिकादिषु वचनं भवति युक्तवद्भावेन। खलतिकस्य पर्वतस्याऽदूरभवानि वनानि खलतिकं वनानि।
- मनुष्यलुपि प्रतिषेधः -
मनुष्यलुपि प्रतिषेधो वक्तव्यः। चञ्चा अभिरूपः। वध्रिका दर्शनीयः ।। विशेषणानां चाऽजातेः ।। 52 ।।
<M.2.065>
-1-2-53- तदशिष्यं सञ्ज्ञाप्रमाणत्वात्
।। सञ्ज्ञाशब्दार्थनिर्णयाधिकरणम् ।।
किं या एताः कृत्रिमाष्टिघुभादिसञ्ज्ञास्तत्प्रामाण्यादशिष्यम्?
न इत्याह। सञ्ज्ञानं सञ्ज्ञा ।। तदशिष्यं सञ्ज्ञाप्रमाणत्वात् ।। 53 ।।
-1-2-58- जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्
।। एकत्वे बहुवचनसाधनाधिकरणम् ।।
इदमयुक्तं वर्तते। किमत्रायुक्तम्? बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। तद्यदेकवचने
शासितव्ये बहुवचनं शिष्यते एतदयुक्तम्। बहुष्वेकवचनमिति नाम वक्तव्यम्। अत उत्तरं पठति-
- जात्याख्यायां सामान्याभिधानादैकार्थ्यम् -
जात्याख्यायां सामान्याभिधानादैकार्थ्यं भविष्यति। यत्तद् व्रीहौ व्रीहित्वं यवे यवत्वं गार्ग्ये गार्ग्यत्वं तदेकम्, तच्च विवक्षितम्, तस्यैकत्वादेकवचनमेव प्राप्नोति। इष्यते च बहुवचनं स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति- जात्याख्यायामेकस्मिन् बहुवचनम्। एवमर्थमिदमुच्यते।
<M.2.066>
अस्ति प्रयोजनमेतत्। किं तर्हीति।
- तत्रैकवचनादेश उक्तम् -
किमुक्तम्? व्रीहिभ्य आगत इत्यत्र घेर्ङिति (7.3.111) इति गुणः प्राप्नोतीति।
नैष दोषः।
- अर्थातिदेशात्सिद्धम् -
अर्थातिदेशोऽयम्। नेदं पारिभाषिकस्य वचनस्य ग्रहणम्। किं तर्हि? अन्वर्थग्रहणम्- उच्यते वचनम्, बहूनामर्थानां वचनं बहुवचनमिति। यावद्ब्रूयादेकोऽर्थो बहुवद्भवतीति, तावदेकस्मिन्
बहुवचनमिति।
- सङ्ख्याप्रयोगे प्रतिषेधः -
सङ्ख्याप्रयोगे प्रतिषेधो वक्तव्यः। एको व्रीहिः सम्पन्नः सुभिक्षं करोति। एको यवः सम्पन्नः सुभिक्षं करोति।
- अस्मदो नामयुवप्रत्यययोश्च -
अस्मदो नामप्रयोगे युवप्रत्ययप्रयोगे च प्रतिषेधो वक्तव्यः। नामप्रयोगे, अहं देवदत्तो ब्रवीमि। अहं यज्ञदत्तो ब्रवीमि। युवप्रत्ययप्रयोगे अहं गार्ग्यायणो ब्रवीमि। अहं वात्स्यायनो ब्रवीमि।
युवग्रहणेन नार्थः अस्मदो नामप्रत्ययप्रयोगे न इत्येव। इदमपि सिद्धं भवति- अहं गार्ग्यो ब्रवीमि। अहं वात्स्यो ब्रवीमि।
अपर आह-
अस्मदः सविशेषणस्य प्रयोगे न इत्येव। इदमपि सिद्धं भवति- अहं पटुर्ब्रवीमि। अहं पण्डितो ब्रवीमि।

<M.2.067>
- अशिष्यं वा बहुवत्पृथक्त्वाभिधानात् -
अशिष्यो वा बहुवद्भावः। किं कारणम्? पृथक्त्वाभिधानात्। पृथक्त्वेन हि द्रव्याण्यभिधीयन्ते। बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्।
किमुच्यते पृथक्त्वाभिधानात् इति। यावता इदानीमेवोक्तम् जात्याख्यायां सामान्यभिधानादैकार्थ्यम् इति?
- जातिशब्देन हि द्रव्याभिधानम् -
जातिशब्देन हि द्रव्यमप्यभिधीयते, जातिरपि।
कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमप्यभिधीयत इति?
एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति- अस्त्यत्र काञ्चिद्गां पश्यसि इति। स पश्यति- पश्यति चायं गाः, पृच्छति च- काञ्चिदत्र गां पश्यसि इति, नूनमस्य द्रव्यं विवक्षितम् इति। तद्यदा- द्रव्याभिधानं तदा बहुवचनं भविष्यति, यदा सामान्याभिधानं तदैकवचनं भविष्यति ।। जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ।। 58 ।।
-1-2-59- अस्मदो द्वयोश्च
अयमपि योगः शक्योऽवक्तुम्।
कथम्- अहं ब्रवीमि आवां ब्रूवः वयं ब्रूमः?
इमानीन्द्रियाणि कदाचित्स्वातन्त्र्येण विवक्षितानि भवन्ति। तद्यथा- इदं मे अक्षि सुष्ठु पश्यति, अयं मे कर्णः सुष्ठु शृणोतीति। कदाचित्पारतन्त्र्येण विवक्षितानि भवन्ति- अनेनाक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणोमीति। तद्यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति। यदा पारतन्त्र्येण तदैकवचनद्विवचने भविष्यतः ।। अस्मदो द्वयोश्च ।। 59 ।।
<M.2.068>
-1-2-60- फल्गुनीप्रोष्ठपदानां च नक्षत्रे
अयमपि योगः शक्योऽवक्तुम्।
कथम् - उदिते पूर्वे फल्गुन्यौ, उदिताः पूर्वाः फल्गुन्यः। उदिते पूर्वे प्रोष्ठपदे, उदिताः पूर्वाः प्रोष्ठपदाः?
फल्गुनीसमीपगते चन्द्रमसि फल्गुनीशब्दो वर्तते। बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। यदा
तयोरेवाभिधानं तदा द्विवचनं भविष्यति ।। फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।। 60 ।।
-1-2-61- छन्दसि पुनर्वस्वोरेकवचनम्
-1-2-62- विशाखयोश्च
इमावपि यौगौ शक्यावक्तुम्।
कथम्?
- पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्णेति सिद्धम् -
पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्ण इत्येव सिद्धम् ।। छन्दसि पुनर्वस्वोरेकवचनम् ।। 61 ।। विशाखयोश्च ।। 62 ।।
-1-2-63- तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्
तिष्यपुनर्वस्वोरिति किमर्थम्?
कृत्तिकारोहिण्यः।
नक्षत्र इति किमर्थम्?
तिष्यश्च माणवकः, पुनर्वसू च माणवकौ, तिष्यपुनर्वसवः।
अथ नक्षत्र इति वर्तमाने पुनर्नक्षत्रग्रहणं किमर्थम्?
अयं तिष्यपुनर्वसुशब्दोऽस्त्येव ज्योतिषि वर्तते। अस्ति च कालवाची। तद्यथा- बहवस्तिष्यपुनर्वसवोऽतिक्रान्ताः, कतरेण तिष्येण गत इति। तद्यो ज्योतिषि वर्तते तस्येदं ग्रहणम्।
<M.2.069>
अथ वा नक्षत्र इति वर्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनम्- विदेशस्थमपि तिष्यपुनर्वस्वोः कार्यं (तदपि) नक्षत्रस्यैव यथा स्यात्। तिष्यपुष्ययोर्नक्षत्राऽणि यलोपो वक्तव्यः इति नक्षत्रग्रहणं न कर्तव्यं भवति।
अथ वा नक्षत्रे इति वर्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनं तिष्यपुनर्वसुपर्यायवाचिनामपि यथा स्यात् तिष्यपुनर्वसू, सिध्यपुनर्वसू।
अथ द्वन्द्व इति किमर्थम्?
यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसव उन्मुग्धाः।
।। सर्वो द्वन्द्वो विभाषैकवदिति परिभाषाधिकरणम् ।।
बहुवचनस्येति किमर्थम्?
उदितं तिष्यपुनर्वसु।
कथं चात्रैकवचनम्?
जातिद्वन्द्व एकवद्भवतीति।
अप्राणिनाम् इति प्रतिषेधः प्राप्नोति।
<M.2.070>

एवं तर्हि सिद्धे सति यद्बहुवचनग्रहणं करोति, तज्ज्ञापयत्याचार्यः- सर्वो द्वन्द्वो विभाषयैकवद्भवति इति। किमेतस्य ज्ञापने प्रयोजनम्? बाभ्रवशालङ्कायनम्,
बाभ्रवशालङ्कायना इत्येतत्सिद्धं भवति।
अथ वा नात्र भवन्तः प्राणिनः, प्राणा एवात्र भवन्तः ।। तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।। 63 ।।
इति श्रीमद्भगवत्पतञ्जलिविरिचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ।। 2 ।।
-1-2-64- सरूपाणामेकशेष एकविभक्तौ
।। पदकृत्याधिकरणम् ।।
रूपग्रहणं किमर्थम्?
समानानामेकशेष एकविभक्तौ इतीयत्युच्यमाने यत्रैव सर्वं समानं शब्दोऽर्थश्च, तत्रैव स्यात्- वृक्षाः प्लक्षा इति। इह न स्यात् - अक्षाः पादा माषा इति। रूपग्रहणे पुनः क्रियमाणे न दोषो भवति। रूपं निमित्तत्वेनाश्रीयते। श्रुतौ च रूपग्रहणम्।
अथैकग्रहणं किमर्थम्?
सरूपाणां शेष एकविभक्तौ इतीयत्युमाने द्विबह्वोरपि शेषः प्रसज्येत। एकग्रहणे पुनः क्रियमाणे न दोषो भवति।
अथ शेषग्रहणं किमर्थम्?
सरूपाणां शेष एकविभक्तौ इतीयत्युच्माने आदोशोऽयं विज्ञायेत।
तत्र को दोषः?
अश्वश्चाऽश्वश्चाऽश्वौ। आन्तर्यतो द्व्युदात्तवतः स्थानिनो द्व्युदात्तवानादेशः प्रसज्येत। लोप्यलोपिता च न प्रकल्पेत।
तत्र को दोषः?
गर्गा वत्सा उर्वाः। यञ्ञ्यो बहुष्वञ्ञ्यो बहुष्वित्युच्यमानो लुङ्न प्राप्नोति।
मा भूदेवम्। यञ्ञन्तं यद्बहुषु अञ्ञन्तं यद्बहुषु इत्येवं भविष्यति।
नैवं शक्यम्, इह हि दोषः स्यात्- काश्यपप्रतिकृतयः काश्यपा इति।
एकविभक्ताविति किमर्थम्?
पयः पयो जरयति, वासो वासश्छादयति, ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहीति।
।। सूत्रप्रयोजनाधिकरणम् ।।
किमर्थं पुनरिदमुच्यते?
- प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् -
प्रत्यर्थं शब्दा अभिनिविशन्ते। किमिदं प्रत्यर्थमिति? अर्थमर्थं प्रति प्रत्यर्थम्। प्रत्यर्थं शब्दनिवेशात्। एतस्मात्कारणान्नैकेन शब्देनानेकस्यार्थस्याभिधानं प्राप्नोति।
तत्र को दोषः?
- तत्रानेकार्थाभिधानेऽनेकशब्दत्वम् -
तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्नोति। इष्यते चैकेनाप्यनेकस्याभिधानं स्यादिति। तच्चाऽन्तरेण यत्नं न सिध्यति। तस्मादेकशेषः। एवमर्थमिदमुच्यते।
अस्ति प्रयोजनमेतत्। किं तर्हीति।
किमिदं प्रत्यर्थं शब्दा अभिनिविशन्त इत्येतं दृष्टान्तमास्थाय सरूपाणामेकशेष आरभ्यते,
न पुनरप्रत्यर्थं शब्दा अभिनिविशन्त इत्येतं दृष्टान्तमास्थाय विरूपाणामनेकशेष आरभ्यते?
तत्रैतत्स्यात्- लघीयसी सरूपनिवृत्तिः, गरीयसी विरूपप्रतिपत्तिरिति।
तच्च न। लघीयसी विरूपप्रतिपत्तिः।
किं कारणम्? यत्र हि बहूनां सरूपाणामेकः शिष्यते तत्राऽवरतो द्वयोः सरूपयोर्निवृत्तिर्वक्तव्या स्यात्।
एवमप्येतस्मिन् सति किञ्चिदाचार्यः सुकरतरकं चैकशेषारम्भं मन्यते।
।। एकशेषस्यानैमित्तिकत्वसाधनाधिकरणम् ।।
किं पुनरयमेकविभक्तावेकशेषो भवति?
एवं भवितुमर्हति।
- एकविभक्ताविति चेन्नाऽभावाद्विभक्तेः -
एकविभक्ताविति चेत्तन्न। किं कारणम्? अभावाद्विभक्तेः। नहि समुदायात्परा विभक्तिरस्ति। किं कारणम्? अप्रातिपदिकत्वात्।
ननु च अर्थवत् प्रातिपदिकम् इति प्रातिपदिकसञ्ज्ञा भविष्यति।
नियमान्न प्राप्नोति- अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इति।
यदि पुनः पृथक्सर्वेषां विभक्तिपराणामेकशेष उच्येत?
- पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात् -
पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिः प्राप्नोति।
किमुच्यते एकशेषे पृथग्विभक्त्युपलब्धिः इति।

यावता समयः कृतो न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः इति। तदाश्रयत्वात् प्राप्नोति। यत्र हि प्रकृतिनिमित्ता प्रत्ययनिवृत्तिस्तत्राऽप्रत्ययिकायाः प्रकृतेः प्रयोगे भवति- अग्निचित्सोमसुदिति यथा। यत्र च प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्राऽप्रकृतिकस्य प्रत्ययस्य प्रयोगो भवति- अधुना इयानिति यथा।
अस्तु। संयोगान्तलोपेन सिद्धम्।
कुतो नु खल्वेतत्- परयोर्वृक्षशब्दयोर्निवृत्तिर्भविष्यति, न पुनः पूर्वयोरिति? तत्रैतत्स्यात्पूर्वनिवृत्तावपि सत्यां संयोगादिलोपेन सिद्धमिति।
न सिध्यति। तत्राऽवरतो द्वयोस्सकारयोः श्रवणं प्रसज्येत।
यत्र च संयोगान्तलोपो नास्ति, तत्र च न सिध्यति।
क्व च संयोगान्तलोपो नास्ति?
द्विवचनबहुवचनयोः।
यदि पुनः समास एकशेष उच्येत।
किं कृतं भवति?
कश्चिद्वचनलोपः परिहृतो भवति।
तत्तर्हि समासग्रहणं कर्तव्यम्?
न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् (1.2.63) इति।
- समास इति चेत्स्वरसमासान्तेषु दोषः -
समास इति चेत्स्वरसमासान्तेषु दोषो भवति। स्वर- अश्वश्चाऽश्वश्च अश्वौ। समासान्तोदात्तत्वे कृत एकशेषः प्राप्नोति। इदमिह सम्प्रधार्यम्- समासान्तोदात्तत्वं क्रियतामेकशेष- इति, किमत्र कर्तव्यम्? परत्वात्समासान्तोदात्तत्वम्। समासान्तोदात्तत्वे च दोषो भवति। स्वर।
समासान्त- ऋक्च ऋक्च ऋचौ। समासान्ते कृतेऽसारूप्यादेकशेषो न प्राप्नोति। इदमिह सम्प्रधार्यम्- समासान्तः क्रियतामेकशेष इति। किमत्र कर्तव्यम्? परत्वात्समासान्तः। समासान्ते च दोषो भवति।
- अङ्गाश्रये चैकशेषवचनम् -
अङ्गाश्रये च कार्य एकशेषो वक्तव्यः। स्वसा च स्वसारौ च स्वसारः। अङ्गाश्रये
कृतेऽसारूप्यादेकशेषो न प्राप्नोति। इदमिह सम्प्रधार्यमङ्गाश्रयं क्रियतामेकशेष इति। किमत्र कर्तव्यम्? परत्वादङ्गाश्रयम्।
- तिङ्समासे तिङ्समासवचनम् -
तिङ्समासे तिङ्समासो वक्तव्यः।
एकं तिङ्ग्रहणमनर्थकम्। समासे तिङ्समास इत्येव सिद्धम्।
नानर्थकम्। तिङ्समासे प्रकृते तिङ्समासो वक्तव्यः।
- तिङ्विधिप्रतिषेधश्च -
तिङ् च कश्चिद्विधेयः, कश्चित्प्रतिषेध्यः। पचति च पचति च पचतः। तश्शब्दो विधेयः, तिशब्दः प्रतिषेध्यः।
यदि पुनरसमास एकशेषः उच्येत?
- असमासे वचनलोपः -
यद्यसमासे वचनलोपो वक्तव्यः।
ननु चोत्पततैव वचनलोपं चोदिताः स्मः।
द्विवचनबहुवचनविधिं द्वन्द्वप्रतिषेधं च वक्ष्यति, तदर्थं पुनश्चोद्यते।
- द्विवचनबहुवचनविधिः -
द्विवचनबहुवचनानि विधेयानि। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति।
- द्वन्द्वप्रतिषेधश्च -
द्वन्द्वस्य च प्रतिषेधो वक्तव्यः। वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति। चार्थे द्वन्द्वः (2.2.29) इति द्वन्द्वः प्राप्नोति।
नैष दोषः। अनवकाश एकशेषो द्वन्द्वं बाधिष्यते।
सावकाश एकशेषः। कोऽवकाशः? तिङन्तान्यवकाशः।
यदि पुनः पृथक्सर्वेषां विभक्त्यन्तानामेकशेष उच्येत? किं कृतं भवति? कश्चिद्वचनलोपः परिहृतो भवति। विभक्त्यन्तानामेकशेषे विभक्त्यन्तानामेव तु निवृत्तिर्भवति।
- एकविभक्त्यन्तानामिति तु पृथग्विभक्तिप्रतिषेधार्थम् -
एकविभक्त्यन्तानाम् इति तु वक्तव्यम्। किं प्रयोजनम्? पृथग्विभक्तिप्रतिषेधार्थम्। पृथग्विभक्त्यन्तानां मा भूत्। ब्राह्मणाभ्यां च देहि ब्राह्मणाभ्यां च कृतम्।
- न वाऽर्थविप्रतिषेधाद्युगपद्वचनाऽभावः -
न वैष दोषः। किं कारणम्? अर्थविप्रतिषेधात्। विप्रतिषिद्धावेतावर्थौ कर्ता सम्प्रदानमित्यशक्यौ युगपन्निर्देष्टुम्। तयोर्विप्रतिषिद्धत्वाद्युगपद्वचनं न भविष्यति।
- अनेकार्थाश्रयश्च पुनरेकशेषः -
अनेकमर्थं सम्प्रत्याययिष्यामीत्येकशेष आरभ्यते।

- तस्मान्नैकशब्दत्वम् -
तस्मादेकशब्दत्वं न भविष्यति।
अयं तर्हि दोषः कश्चिद्वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्च इति।
यदि पुनः प्रातिपदिकानामेकशेष उच्येत? किं कृतं भवति? वचनलोपः परिहृतो भवति।
- प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधः सरूपत्वात् -
प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः। माता च जनयित्री, मातरौ च धान्यस्य मातृमातरः। किं कारणम्? सरूपत्वात्। सरूपाणि ह्येतानि प्रातिपदिकानि।
किमुच्यते प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति, न पुनर्यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात्। तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानां सरूपाणि, मातृभ्यां च मातृभ्यां चेति?
अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति, प्रातिपदिकानामेवैकशेषे दोषो
भवति। एवं च कृत्वा चोद्यते।
- हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसङ्ख्यानम् -
हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसङ्ख्यानं कर्तव्यम्। हरितस्य स्त्री हरिणी, हरिणस्यापि हरिणी, हरिणी च हरिणी च हरिण्यौ। श्येतस्य स्त्री श्येनी, श्येनस्यापि स्त्री श्येनी, श्येनी च श्येनी च श्येन्यौ। रोहितस्य स्त्री रोहिणी, रोहिणस्यापि रोहिणी, रोहिणी च रोहिणी च
रोहिण्यौ।
- न वा पदस्याऽर्थे प्रयोगात् -
न वैष दोषः। किं कारणम्? पदस्यार्थे प्रयोगात्। पदमर्थे प्रयुज्यते। विभक्त्यन्तं च पदम्। रूपं चेहा श्रीयते। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगात्। तस्मिंश्च लौकिके प्रयोगे सरूपाण्येतानि।
अपर आह- न वा पदस्याऽर्थे प्रयोगात्। न वैष पक्ष एवास्ति प्रातिपदिकानामेकशेष इति। किं कारणम्? पदस्यार्थे प्रयोगात्। पदमर्थे प्रयुज्यते, विभक्त्यन्तं च पदम्। रूपं चेहा श्रीयते। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे प्रातिपदिकानां प्रयोगो नास्ति।
अथानेन पक्षेणार्थः स्यात्प्रातिपदिकानामेकशेष इति।
बाढमर्थः।
किं वक्तव्यमेतत्?
न हि।
कथमनुच्यमानं गंस्यते? एतेनैवाभिहितं सूत्रेण सरूपाणामेकशेष एकविभक्तौ इति। कथम्?
विभक्तिः सारूप्येणाश्रीयते। अनैमित्तिक एकशेषः। एकविभक्तौ लौकिके प्रयोगे यानि सरूपाणि तेषामेकशेषो भवति।
क्व?
यत्र वा तत्र वेति।
अथानेन पक्षेणार्थः स्याद्- विभक्त्यन्तानामेकशेषः इति?
बाढमर्थः।
किं वक्तव्यमेतत्?
नहि।
कथमनुच्यमानं गंस्यते?
एतदप्येतेनैवाभिहितं सूत्रेण सरूपाणामेकशेष एकविभक्तौ इति।
कथम्?
नेदं पारिभाषिक्या विभक्तेर्ग्रणम्।
किं तर्हि?
अन्वर्थग्रहणम्- विभागो विभक्तिरिति। एकविभागे यानि सरूपाणि तेषामेकशेषो भवतीति।
ननु चोक्तम्- कश्चिद्वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्च इति।
नैषः दोषः। यत्तावदुच्यते- कश्चिद्वचनलोपो द्विवचनबहुवचनविधिः इति।
- सहविवक्षायामेकशेषः -
युगपद्विवक्षायामेकशेषेण भवितव्यम्।
न तर्हीदानीमिदं भवति- वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति? नैतत्सहविवक्षायां भवति। अथापि निदर्शयितुं बुद्धिरेवं निदर्शयितव्यम्- वृक्षौ च वृक्षौ च वृक्षौ, वृक्षाश्च वृक्षाश्च वृक्षाश्च वृक्षा इति।
यदप्युच्यते- द्वन्द्वप्रतिषेधश्च वक्तव्य इति। नैष दोषः। अनवकाश एकशेषो द्वन्द्वं
बाधिष्यते।
ननु चोक्तम्- सावकाश एकशेषः। कोऽवकाशः? तिङन्तान्यवकाशः इति।
न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति। किं कारणम्? यथाजातीयकानां द्वितीयस्य पदस्य प्रयोगे सार्मथ्यमस्ति तथाजातीयकानामेकशेषः। न च

तिङन्तानां द्वितीयपदस्य प्रयोगे सामर्थ्यमस्ति। किं कारणम्? एका हि क्रिया। एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्- उक्तार्थानामप्रयोग इति।
यदि तर्ह्येका क्रिया, द्विवचनबहुवचनानि न सिध्यन्ति- पचतः पचन्ति।
नैतानि क्रियापेक्षाणि। किं तर्हि? साधनापेक्षाणि।
अथ वा पुनरस्तु एकविभक्तौ इति?
ननु चोक्तम्- एकविभक्ताविति चेन्नाऽभावाद्विभक्तेः इति।
नैष दोषः। परिहृतमेतत्- अर्थवत्प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञा भविष्यति इति।
ननु चोक्तम्- नियमान्न प्राप्नोति, अर्थवत्समुदायानां समासग्रहणं नियमार्थम् इति।
नैष दोषः। तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः? यथाजातीयकानां समासः। कथञ्जातीयकानां समासः? सुबन्तानाम्।
- सर्वत्राऽपत्यादिषूपसङ्ख्यानम् -
सर्वेषु पक्षेष्वपत्यादिषूपसङ्ख्यानं कर्तव्यम्? भिक्षाणां समूहो भैक्षमिति।
सर्वत्र इत्युच्यते प्रातिपदिकानां चैकशेषे सिद्धम्।
अपत्यादिष्वित्युच्यते बहवश्चापत्यादयः। गर्गस्यापत्यं बहवो गर्गाः। एका प्रकृतिर्बहवश्च यञ्ञः। असारूप्यादेकशेषो न प्राप्नोति।
ननु च यथैव बहवो यञ्ञः, एवं प्रकृतयोऽपि बह्व्यः स्युः।
नैवं शक्यम्। इह हि दोषः स्यात्- गर्गा वत्सा बिदा उर्वा इति। अञ्ञ्यो बहुषु यञ्ञ्यो बहुष्वित्युच्यमानो लुङ्न प्राप्नोति।
मा भूदेवम्। अञ्ञन्तं यद् बहुषु, यञ्ञन्तं यद् बहुष्वित्येवं भविष्यति।
ननु चोक्तम्- नैवं शक्यमिह हि दोषः स्यात्- काश्यपप्रतिकृतयः काश्यपा इति।
नैष दोषः। लौकिकस्य तत्र गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम्।
अथ वा पुनरस्त्वेका प्रकृतिर्बहवश्च यञ्ञः?
ननु चोक्तम्- असारूप्यादेकशेषो न प्राप्नोतीति।
- सिद्धं तु समानार्थानामेकशेषवचनात् -
सिद्धमेतत्। कथम्? समानार्थानामेकशेषो भवतीति वक्तव्यम्।
यदि समानार्थानामेकशेष उच्यते, कथमक्षाः पादा माषा इति?
- नानार्थानामपि सरूपाणाम् -
नानार्थानामपि सरूपाणामेकशेषो वक्तव्यः।
- एकार्थानामपि विरूपाणाम् -
एकार्थानामपि विरूपाणामेकशेषो वक्तव्यः। वक्रदण्डश्च कुटिलदण्डश्च- वक्रदण्डौ. कुटिलदण्डाविति वा।
- स्वरभिन्नानां यस्योत्तरस्वरविधिः -
स्वरभिन्नानां यस्योत्तरः स्वरविधिस्तस्यैकशेषो वक्तव्यः। अक्षश्च अक्षश्च अक्षौ। मीमांसकश्च मीमांसकश्च मीमांसकौ।
।। सङ्ख्याशब्दानामेकशेषाभावाधिकरणम् ।।
इह कस्मान्न भवति- एकश्च एकश्च द्वौ च द्वौ चेति?
- सङ्ख्याया अर्थाऽसम्प्रत्ययादन्यपदार्थत्वाच्चानेकशेषः -
सङ्ख्याया अर्थाऽसम्प्रत्ययादेकशेषो न भविष्यति। नह्येकावित्यनेनार्थो गम्यते। अन्यपदार्थत्वाच्च सङ्ख्याया एकशेषो न भविष्यति। एकश्च एकश्चेत्यस्य द्वौ इत्यर्थः। द्वौ च द्वौ
चेत्यस्य चत्वार इत्यर्थः।
नैतौ स्तः परिहारौ। यत्तावदुच्यते- सङ्ख्याया अर्थासम्प्रत्ययात् इति। अर्थासम्प्रत्ययेऽपि हि सत्येकशेषो भवति। तद्यथा- गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। न चोच्यते वृद्धयुवानाविति, भवति चैकशेषः। यदप्युच्यते- अन्यपदार्थत्वाच्च इति। अन्यपदार्थेऽप्येकशेषो भवति। तद्यथा- विंशतिश्च विंशतिश्च विंशती इति।
तयोश्चत्वारिंशदित्यर्थः।
एवं तर्हि नेमौ पृथक्परिहारौ। एकपरिहारोऽयम् सङ्ख्याया अर्थाऽसम्प्रत्ययादन्यपदार्थत्वाच्च इति। यत्र ह्यर्थाऽसम्प्रत्यय एव वा, अन्यपदार्थतैव वा, भवति तत्रैकशेषो गार्ग्यौ विशती इति यथा।
अथ वा नेमे एकशेषशब्दाः। यदि तर्हि नेम एकशेषशब्दाः समुदायशब्दास्तर्हि भवन्ति। तत्र को दोषः? एकवचनं प्राप्नोति। एकार्था हि समुदाया भवन्ति। तद्यथा- यूथम्, शतम्, वनमिति।
सन्तु तर्ह्येकशेषशब्दाः। किंकृतं सारूप्यम्? अन्योन्यकृतं सारूप्यम्? सन्ति पुनः केचिदन्येऽपि शब्दा येषामन्योऽन्यकृतो भावः?
सन्ति इत्याह। तद्यथा- माता पिता भ्रातेति।
विषम उपन्यासः। सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते। इह पुनरेकेनाप्यपाये न
भवति चत्वार इति।
अन्यदिदानीमेतदुच्यते- सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते इति। यत्तु भवानस्मांश्चोदयति- सन्ति पुनः केचिदन्येऽपि शब्दा येषामन्योकृतो भावः इति।

तत्रैतेऽस्माभिरुपन्यस्ताः। तत्रैतद्भवानाह- सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते इति। एतच्च वार्तम्।
एकैको नोद्यन्तुं भारं शक्नोति यत्कथं तत्र।
एकैकः कर्ता स्यात्सर्वे वा स्युः कथं युक्तम् ।। 1 ।।
कारणमुद्यमनं चेन्नोद्यच्छति चान्तरेण तत्तुल्यम्।
तस्मात्पृथक् पृथक् ते कर्तारः सव्यपेक्षास्तु ।। 2 ।।
।। प्रथममध्यमोत्तमानामेकशेषविधानाधिकरणम् ।।
- प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात् -
प्रथममध्यमोत्तमानामेकशेषो वक्तव्यः। पचति च पचसि च पचथः। पचसि च पचामि च पचावः। पचति च पचसि च पचामि च पचामः। किं पुनः कारणं न सिध्यति? असरूपत्वात्।
।। सूत्रप्रत्याख्यानाधिकरणम् ।।
- द्विवचनबहुवचनाऽप्रसिद्धिरेकार्थत्वात् -
द्विवचनबहुवचनयोश्चाऽप्रसिद्धिः। किं कारणम्? एकार्थत्वात् एकोऽयमवशिष्यते तेनानेन तदर्थेन भवितव्यम्। किमर्थेन? यदर्थ एकः। किमर्थश्चैकः? एकार्थः।
- नैकार्थ्यम् -
नायमेकार्थः। किं तर्हि? द्व्यर्थो बह्वर्थश्च।
- नैकार्थ्यमिति चेदारम्भानर्थक्यम् -
नैकार्थ्यमिति चेदेकशेषारम्भोऽनर्थकः स्यात्। इह हि शब्दस्य स्वाभाविकी वाऽनेकार्थता स्याद्वाचनिकी वा।
तद्यदि तावत्स्वाभाविकी-
- अशिष्य एकशेष एकेनोक्तत्वात् -
अशिष्य एकशेषः। किं कारणम्? एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्- उक्तार्थानामप्रयोग इति।
अथ वाचनिकी, तद्वक्तव्यम्- एकोऽयमवशिष्यते, स च द्व्यर्थो भवति बह्वर्थश्च इति।
न वक्तव्यम्। सिद्धमेकशेष इत्येव।
कथं पुनरेकोयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता वा शक्या लब्धुम्? तच्चैकशेषकृतम्। नह्यन्तरेण तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवति। पश्यामश्च पुनरन्तरेणापि तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवतीति अग्निचित्सोमसिदिति यथा। ते मन्यामहे- लोपकृतमेतत्- येनात्राऽन्तरेणापि तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवति इति। एवमिहाप्येकशेषकृतमेतत्- येनात्रैकोऽयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता च भवति।
उच्येत तर्हि न तु गम्येत। यो हि गामश्च इति ब्रूयादश्वं वा गौरिति, न जातुचित्सम्प्रत्ययः स्यात्। तेनानेकार्थाभिधाने यत्नं कुर्वताऽवश्यं लोकः पृष्ठतोऽनुगन्तव्यः केष्वर्थेषु लौकिकाः कान् शब्दान्प्रयुञ्जते इति। लोके चैकैकस्मिन् वृक्ष इति प्रयुञ्जते, द्वयो वृक्षौ इति, बहुषु वृक्षा इति। यदि तर्हि लोकोऽवश्यं शब्देषु प्रमाणं, किमर्थमेकशेष आरभ्यते?
अथ किमर्थं लोप आरभ्यते?
प्रत्ययलक्षणमाचार्यः प्रार्थयमानो लोपमारभते, एकशेषारम्भे पुनरस्य न
किञ्चित्प्रयोजनमस्ति।
ननु चोक्तं- प्रत्यर्थं शब्दनिवेशान्नैकेनाऽनेकस्याभिधानम् इति। यदि चैकेन शब्देनानेकस्याऽर्थस्याभिधानं स्यान्न प्रत्यर्थं शब्दनिवेशः कृतः स्यात्।
- प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याऽभिधानादप्रत्यर्थमिति चेत्तदपि प्रत्यर्थमेव -
प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याऽभिधानादप्रत्यर्थमिति चेदेवमुच्यते, यदप्येकेनानेकस्याभिधानं भवति तदपि प्रत्यर्थमेव। यदपि ह्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव। यदपि ह्यर्थानर्थान्प्रति तदपि प्रत्यर्थमेव।
- यावतामभिधानं तावतां प्रयोगो न्याय्यः -
यावतामर्थानामभिधानं भवति तावतां शब्दानां प्रयोगः इत्येष पक्षो न्याय्यः।
- यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनाप्यनेकस्याऽभिधानम् -
यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेवमुच्यते। एषोऽपि पक्षो न्याय्य एव यदप्येकेनानेकस्याभिधानं भवति।
यदि तर्ह्येकेनाऽनेकस्याभिधानं भवति- प्लक्षन्यग्रोधौ।
- एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः -
एकेनोक्तत्वात्तस्याऽर्थस्यापरस्य प्रयोगेण न भवितव्यम्। किं कारणम्? उक्तार्थानामप्रयोग इति।
- एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः -
एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा
न्यग्रोधशब्दः प्रयुज्यते।
कथमनुक्तः। यदिदानीमेवोक्तमेकेनाप्यनेकस्याऽभिधानं भवतीति? सरूपाणामेकेनाप्यनेकस्याभिधानं भवति न विरूपाणाम्।
किं पुनः कारणं सरूपाणामेकेनाप्यनेकस्याभिधानं भवति, न पुनर्विरूपाणाम्?

- अभिधानं पुनः स्वाभाविकम् -
स्वाभाविकमभिधानम्।
- उभयदर्शनाच्च -
उभयं खल्वपि दृश्यते। विरूपाणामप्येकेनानेकस्याभिधानं भवति। तद्यथा- द्यावा ह क्षामा। द्यावा चिदस्मै पृथिवी नमेते इति। विरूपाणां किल नामैकेनाऽनेकस्याभिधानं स्यात्किं पुनः सरूपाणाम्।
- आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः -
आकृत्यभिधानाद्वैकं शब्दं विभक्तौ वाजप्यायन आचार्यो न्याय्यं मन्यते। एकाऽऽकृतिः, सा चाभिधीयत इति।
कथं पुनर्ज्ञायते- एकाऽऽकृतिः सा चाभिधीयते इति।
- प्रख्याऽविशेषात् -
नहि गौरियुक्ते विशेषः प्रख्यायते- शुक्ला नीला कपिला कपोतिकेति।
यद्यपि तावत्प्रख्याऽविशेषाज्ज्ञावते- एकाऽऽकृतिः इति, कुतस्त्वेतत्- साऽभिधीयत इति?
- अव्यपवर्गगतेश्च -
अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयत इति। नहि गौरित्युक्ते व्यपवर्गो गम्यते- शुक्ला नीला कपिला कपोतिकेति।
- ज्ञायते चैकोपदिष्टम् -
ज्ञायते खल्वप्येकोपदिष्टम्। गौरस्य कदाचिदुपदिष्टो भवति। स
तमन्यस्मिन्देशेऽन्यस्मिन्कालेऽन्यस्यां च वयोऽवस्थायां दृष्ट्वा जानाति- अयं गौः इति।
कः पुनरस्य विशेषः प्रख्याऽविशेषात् इत्यतः?तस्यैवोपोद्बलकमेतत्- प्रख्याऽविशेषाद् ज्ञायते चैकोपदिष्टम् इति।
- धर्मशास्त्रं च तथा -
एवं च कृत्वा धर्मशास्त्रं प्रकृतम्, ब्राह्मणो न हन्तव्यः सुरा न पेया इति ,ब्राह्मणमात्रं च न हन्यते, सुरामात्रं च न पीयते। यदि द्रव्यं पदार्थः स्यादेकं ब्राह्मणमहत्वैकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात्।
कः पुनरस्य विशेषः अव्यपवर्गगतेश्च इत्यतः?
तस्यैवोपोद्बलकमेतत्- अव्यपवर्गगतेश्च, धर्मशास्त्रं च तथा इति।
- अस्ति चैकमनेकाधिकरणस्थं युगपत् -
अस्ति खल्वप्येकमनेकाधिकरणस्थं युगपल्लभ्यते। किम्? आदित्यः। तद्यथा- एक आदित्योऽनेकाधिकरणस्थो युगपदुपलभ्यते।
विषम उपन्यासः। नैको द्रष्टाऽऽदित्यमनेकाधिकरणस्थं युगपदुपलभते।
एवं तर्हि-
- इतीन्द्रवद्विषयः -
तद्यथा- एक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्र भवति। एवमाकृतिरपि
युगपत्सर्वत्र भविष्यति।
अवश्यं चैतदेवं विज्ञेयम्- एकमनेकाधिकरणस्थं युगपदुपलभ्यत इति।
- नैकमनेकाधिकरणस्थं युगपदिति चेत्तथैकशेषे -
यो हि मन्यते- नैकमनेकाधिकरणस्थं युगपदुपलभ्यत इति। एकशेषे तस्य दोषः स्यात्। एकशेषेऽपि नैको वृक्षशब्दोऽनेकमर्थं युगपदभिदधीत। अवश्यं चैतदेवं विज्ञेयमाकृतिरभिधीयत इति।
- द्रव्याभिधाने ह्याकृत्यसम्प्रत्ययः -
द्रव्याभिधाने सत्याकृतेरसम्प्रत्ययः स्यात् ।। तत्र को दोषः?
- तत्राऽसर्वद्रव्यगतिः -
तत्राऽसर्वद्रव्यगतिः प्राप्नोति। असर्वद्रव्यगतौ को दोषः? गौरनुबन्ध्योऽजोऽग्नीषोमीयः इति। एकः शास्त्रोक्तं कुर्वीत, अपरोऽशास्त्रोक्तम्। अशास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति, विगुणे च कर्मणि फलाऽनवाप्तिः।
ननु च यस्याप्याकृतिः पदार्थस्तस्यापि, यद्यनवयवेन चोद्यते न चानुवध्यते। विगुणं कर्म भवति। विगुणे च कर्मणि फलाऽनवाप्तिः। एकाऽऽकृतिः इति प्रतिज्ञा हीयेत। यच्चास्य पक्षस्योपादाने प्रयोजनम्- एकशेषो न वक्तव्य इति, स चेदानीं वक्तव्यो भवति।
एवं तर्ह्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते, यथाऽऽदित्यः।
ननु च यस्यापि द्रव्यं पदार्थस्तस्याप्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते। एकशेषस्त्वया वक्तव्यः। त्वयाऽपि तर्हि द्विवचनबहुवचनानि साध्यानि।
- चोदनायां चैकस्योपाधिवृत्तेः -
चोदनायां चैकस्योपाधिवृत्तेर्मन्यामहे- आकृतिरभिधीयते इति। आग्नेयमष्टाकपालं निर्वपेत्। एकं निरुप्य द्वितीयस्तृतीयश्च निरुप्यते। यदि च द्रव्यं पदार्थः स्यादेकं निरुप्य द्वितीयस्य तृतीयस्य च निर्वपणं न प्रकल्पेत।
कः पुनरेतयोर्जातिचोदनयोर्विशेषः? एका निर्वृत्तेन, अपरा निर्र्वत्येन।
- द्रव्याभिधानं व्याडिः -
द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते- द्रव्यमभिधीयते इति।

- तथा च लिङ्गवचनसिद्धिः -
एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति। ब्राह्मणी ब्राह्मणः ब्राह्मणौ ब्राह्मणा इति।
- चोदनासु च तस्यारम्भात् -
चोदनासु च तस्यारम्भान्मन्यामहे- द्रव्यमभिधीयत इति। गौरनुबन्ध्योऽजोऽग्नीषोमीय इति। आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते।
- न चैकमनेकाधिकरणस्थं युगपत् -
न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यते। नह्येको देवदत्तो युगपत्स्रुघ्ने भवति
मथुरायां च।
- विनाशे प्रादुर्भावे च सर्वं तथा स्यात् -
किम्? विनश्येच्च प्रादुःष्याच्च। श्वा मृतः इति, श्वा नाम लोके न प्रचरेत्। गौर्जातः इति, सर्वं गोभूतमनवकाशं स्यात्।
- अस्ति च वैरूप्यम् -
अस्ति खल्वपि वैरूप्यम्- गौश्च गौश्च, खण्डो मुण्ड इति।
- तथा च विग्रहः -
एवं च कृत्वा विग्रह उपपन्नो भवति- गौश्च गौश्चेति।
- व्यर्थेषु च मुक्तसंशयम् -
व्यर्थेषु च मुक्तसंशयं भवति। आकृतावपि पदार्थ एकशेषो वक्तव्यः। अक्षाः पादा माषा इति।
- लिङ्गवचनसिद्धिर्गुणस्याऽनित्यत्वात् -
लिङ्गवचनानि सिद्धानि भवन्ति। कुतः? गुणस्यानित्यत्वात्। अनित्या गुणा अपायिन उपायिनश्च। किं य एते शुक्लादयः? न इत्याह। स्त्रीपुन्नपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च। कदाचिदाकृतिरेकत्वेन युज्यते, कदाचिद्द्वित्वेन, कदाचिद् बहुत्वेन, कदाचित्स्त्रीत्वेन, कदाचित्पुंस्त्वेन, कदाचिन्नपुंसकत्वेन।
भवेल्लिङ्गपरिहार उपपन्नः, वचनपरिहारस्तु नोपपद्यते। यदि हि कदाचिदाकृतिरेकत्वेन युज्यते कदाचिद्द्वित्वेन कदाचिद् बहुत्वेन एकाऽऽकृतिः इति प्रतिज्ञा हीयेत, यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम् एकशेषो न वक्तव्यः इति, स चेदानीं वक्तव्यो भवति।
एवं तर्हि-
- लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यत्वात् -
लिङ्गवचनानि सिद्धानि भवन्ति। कुतः? गुणविवक्षाया अनित्यत्वात्। अनित्या गुणविवक्षा। कदाचिदाकृतिरेकत्वेन विवक्षिता भवति, कदाचिद्द्वित्वेन, कदाचिद् बहुत्वेन, कदाचित्स्त्रीत्वेन, कदाचित्पुंस्त्वेन, कदाचिन्नपुंसकत्वेन।
भवेल्लिङ्गपरिहार उपपन्नः, वचनपरिहारस्तु नोपपद्यते। यदि कदाचिदाकृतिरेकत्वेन विवक्षिता भवति कदाचिद्द्वित्वेन कदाचिद् बहुत्वेन, एकाऽऽकृतिः इति च प्रतिज्ञा हीयेत। यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम्- एकशेषो न वक्तव्य इति, स चेदानीं वक्तव्यो भवति।
लिङ्गपरिहारश्चापि नोपपद्यते। किं कारणम्? आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय
प्रवर्त्तते। उत्पत्तिप्रभृत्याविनाशात्तल्लिङ्गं न जहाति।
तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित्स्वकृतान्त आस्थेयः। कोऽसौ स्वकृतान्तः?
- संस्त्यानप्रसवौ लिङ्गम् -
संस्त्यानप्रसवौ लिङ्गमास्थेयौ।
किमिदं संस्त्यानप्रसवाविति?
- संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान् -
ननु च लोकेऽपि स्त्यायतेरेव स्त्री, सूतेश्च पुमान्?
अधिकरणसाधना लोके स्त्री- स्त्यायत्यस्यां गर्भ इति। कर्तृसाधनश्च पुमान्- सूते पुमानिति। इह पुनरुभयं भावसाधनं- स्त्यानं प्रवृत्तिश्च।
कस्य पुनः स्त्यानं स्त्री, प्रवृत्तिर्वा पुमान्?
गुणानाम्।
केषाम्?
शब्दस्पर्शरूपरसगन्धानाम्। सर्वाश्च पुनर्मूर्तय एवमात्मिकाः- संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणास्तत्राऽवरस्तस्त्रयः- शब्दः स्पर्शो रूपमिति। रसगन्धौ न सर्वत्र। प्रवृत्तिः खल्वपि नित्या। नहीदं कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्द्धते यावदनेन वर्द्धितव्यमपचयेन वा युज्यते। तच्चोभयं सर्वत्र।
यद्युभयं सर्वत्र, कुतो व्यवस्था?
विवक्षातः। संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयोरप्यविवक्षायां नपुंसकम्। तत्र लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यत्वाद् इति लिङ्गपरिहार उपपन्नः।
वचनपरिहारस्तु नोपपद्यते।
वचनपरिहारश्चाप्युपपन्नः। इदं तावदयं प्रष्टव्यः- अथ यस्य द्रव्यं पदार्थः कथं तस्य एकवचनद्विवचनबहुवचनानि भवन्ति इति? एवं स वक्ष्यति- एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम् इति। यदि तस्यापि वाचनिकानि न स्वाभाविकानि। अहमप्येवं वक्ष्यामि-

एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनम् इति। नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वाऽऽकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किञ्चित्प्रधानभूतं किञ्चिद् गुणभूतम्। आकृतिपदार्थकस्याकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता।गुणभूता।
- गुणवचनवद्वा -
गुणवचनवद्वा लिङ्गवचनानि भविष्यन्ति। तद्यथा- गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति- शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः शुक्लौ कम्बलौ, शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति।
एवमिहापि यदसौ द्रव्यं श्रिताऽऽकृतिस्तस्य यल्लिङ्गं वचनं च तदाकृतेरपि भविष्यति।
- अधिकरणगतिः साहचर्यात् -
आकृतावारम्भणादीनां सम्भवो नास्तीति कृत्वाऽऽकृतिसहचरिते द्रव्ये आरम्भणादीनि भविष्यन्ति।
- न चैकमनेकाधिकरणस्थं युगपदित्यादित्यवद्विषयः -
न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यत इत्यादित्यवद्विषयो भविष्यति। तद्यथा- एक आदित्योऽनेकाधिकरणस्थो युगपदुपलभ्यते।
विषम उपन्यासः। नैको द्रष्टाऽनेकाधिकरणस्थमादित्यं युगपदुलभते।
एवं तर्हि-
- इतीन्द्रवद्विषयः -
तद्यथैक इन्द्रोऽनेकस्मिन्क्रतुशते आहूतो युगपत्सर्वत्र भवत्येवमाकृतिर्युगपत्सर्वत्र भवेदिति।
- अविनाशोऽनाश्रितत्वात् -
द्रव्यविनाशे आकृतेरविनाशः। कुतः? अनाश्रितत्वात्। अनाश्रिताऽऽकृतिर्द्रव्यम्।
किमुच्यते अनाश्रितत्वाद् इति, यदिदानीमेवोक्तम्- अधिकरणगतिः साहचर्यात् इति?।
एवं तर्हि-
- अविनाशोऽनैकात्म्यात् -
द्रव्यविनाशे आकृतेरविनाशः। कुतः? अनैकात्म्यात्। अनेक आत्माऽऽकृतेर्द्रव्यस्य च। तद्यथा- वृक्षस्थोऽवतानो वृक्षे छिन्नेऽपि न विनश्यति।
- वैरूप्यविग्रहौ द्रव्यभेदात् -
वैरूप्यविग्रहावपि द्रव्यभेदाद्भविष्यतः।
- व्यर्थेषु सामान्यात्सिद्धम् -
विभिन्नार्थेषु च सामान्यात्सिद्धं सर्वम्। सर्वत्र अश्नोतेरक्षः, पद्यतेः पादः, मिमीतेर्माषः। तत्र क्रियासामान्यात्सिद्धम्।
अपरस्त्वाह- पुराकल्पे एतदासीत्षोडशमाषाः कार्षापणम्, षोडशपलाश्च माषशंवट्यः। तत्र सङ्ख्यासामान्यात्सिद्धम् ।। सरूपाणामेकशेष एकविभक्तौ ।। 64 ।।
<M.2.102>
-1-2-65- वृद्धो यूना तल्लक्षणश्चेदेव विशेषः
इह कस्मान्न भवति- अजश्च बर्करश्च, अश्वश्च किशोरश्च, उष्ट्रश्च करभश्चेति?
तल्लक्षणश्चेदेव विशेषः इत्युच्यते। न चात्र तल्लक्षण एव विशेषः।
तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ।। वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।। 65 ।।
-1-2-66- स्त्री पुंवच्च
इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते- स्त्रीग्रहणेषु स्त्रीप्रत्ययग्रहणं वा स्यात्, स्त्र्यर्थग्रहणं वा,
स्त्रीशब्दग्रहणं वा इति।
किं चातः?
यदि प्रत्ययग्रहणं वा, शब्दग्रहणं वा, गार्गी च गार्ग्यायणौ च गर्गाः केन यशब्दो न श्रूयते। अस्त्रियाम् इति हि लुगुच्यते। इह च गार्गी च गार्ग्यायणौ च गर्गान्पश्य तस्माच्छसो नः पुसि
(6.1.103) इति नत्वं च प्राप्नोति। अथाऽर्थग्रहणम्, न दोषो भवति।
<M.2.103>
यथा न दोषस्तथास्तु।
इह कस्मान्न भवति- अजा च बर्करश्च, वडवा च किशोरश्च, उष्ट्री च करभश्चेति? तल्लक्षणश्चेदेव विशेष इत्युच्यते। न चाऽत्र तल्लक्षण एव विशेषः।
तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ।। स्त्री पुंवच्च ।। 66 ।।
-1-2-67- पुमान् स्त्रिया
।। अनिष्टवारणाधिकरणम् ।।
इह कस्मान्न भवति- हंसश्च वरटा च, कच्छपश्च दुली च, ऋश्यश्च रोहित् च इति? तल्लक्षणश्चेदेव विशेष इत्युच्यते। न चाऽत्र तल्लक्षण एव विशेषः।
तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ।। पुमान् स्त्रिया ।। 67 ।।
-1-2-68- भ्रातृपुत्रौ स्वसृदुहितृभ्याम्

किमर्थमिदमुच्यते, न पुमान् स्त्रिया इत्येव सिद्धम्?
न सिध्यति। तल्लक्षणश्चेदेव विशेषः इत्युच्यते, न चात्र तल्लक्षण एव विशेषः।
तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः।
एवं तर्हि सिद्धे सति यदिमं योगं शास्ति तज्ज्ञापयत्याचार्यो यत्रोर्ध्वं प्रकृतेस्तल्लक्षण एव विशेषस्तत्रैकशेषो भवति इति।
किमेतस्य ज्ञापने प्रयोजनम्?
हंसश्च वरटा च, कच्छपश्च दुलिश्च, ऋश्यश्च रोहित् च इति। अत्रैकशेषो न भवति।
पूर्वयोर्योगयोर्भूयान्परिहारः- यावद् ब्रूयाद् गोत्रं यूनेति तावद्वृद्धो यूनेति। पूर्वसूत्रे गोत्रस्य वृद्धम् इति सञ्ज्ञा क्रियते।
<M.2.104>
।। प्रत्याख्यानाधिकरणम् ।।
- असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषस्याऽविवक्षितत्वात्सामान्यस्य च विवक्षितत्वात्सिद्धम् -
असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषश्चाऽविवक्षितः, सामान्यं च विवक्षितम्। विशेषस्याऽविवक्षितत्वात्सामान्यस्य च विवक्षितत्वात् सरूपाणामेकशेष एकविभक्तौ (1.2.64) इत्येव सिद्धम्।
।। अनिष्टवारणाधिकरणम् ।।
पुमान् स्त्रिया (1.2.67) इह कस्मान्न भवति- ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेति?
- ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्याऽविभक्तिपरस्य विशेषवाचकत्वादनेकशेषः -
ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्याऽविभक्तिपरस्य विशेषवाचकत्वादेकशेषो न भविष्यति। यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकं तत्रैकशेषो भवति। नाऽत्र लिङ्गं
विभक्तिपरमेव विशेषवाचकम्।
यदि तर्हि यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकं तत्रैकेशेषो भवति, इह न प्राप्नोति कारकश्च कारिका च कारकौ। नह्यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकम्। किं तर्हि? इत्वमपि।
कथं पुनरिदं विज्ञायते शब्दो या स्त्री तल्लक्षणश्चेदेव विशेषः इति, आहोस्वित् अर्थो या स्त्री तल्लक्षणश्चेदेव विशेषः इति?
किं चातः?
<M.2.105>
यदि विज्ञायते शब्दो या स्त्री तल्लक्षणश्चेदेव विशेषः इति, सिद्धं कारकश्च
कारिका च कारकौ। इदं तु न सिद्ध्यति- गोमांश्च गोमती च गोमन्तौ। अथ विज्ञायते- अर्थो या स्त्री तल्लक्षणश्चेदेव विशेषः इति, सिद्धं गोमांश्च गोमती च गोमन्तौ। इदं तु न सिध्यति- कारकश्च कारिका च कारकौ उभयथापि पटुश्च पट्वी च पटू इत्येतन्न सिध्यति।
एवं तर्हि नैवं विज्ञायते- शब्दो या स्त्री तल्लक्षणश्चेदेव विशेषः इति, नाऽपि अर्थो या स्त्री तल्लक्षणश्चेदेव विशेषः इति। कथं तर्हि? शब्दार्थौ या स्त्री तत्सद्भावेन च तल्लक्षणो विशेष आश्रीयते।
एवं च कृत्वेहाऽपि प्राप्तिः- ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च इति।
एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति। किम्? तत् इत्यनुवर्त्तते। तदित्यनेन प्रकृतौ स्त्रीपुंसौ प्रतिनिर्दिश्येते। कौ च प्रकृतौ? प्रधाने। प्रधानं या शब्दस्त्री, प्रधानं याऽर्थस्त्रीति ।। भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।। 68 ।।
-1-2-69- नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्
अयं योगः शक्योऽवक्तुम्।
कथं- शुक्लश्च कम्बलः शुक्लं च वस्त्रं तदिदं शुक्लम्, ते इमे शुक्ले। शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं वस्त्रं तदिदं शुक्लम्, तानीमानि शुक्लानि?
- प्रधाने कार्यसम्प्रत्ययाच्छेषः -
प्रधाने कार्यसम्प्रत्ययाच्छेषो भविष्यति। किं च प्रधानम्? नपुंसकम्। कथं पुनर्ज्ञायते नपुंसकं प्रधानम् इति? एवं हि दृश्यते लोके- अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते। किं जातम् इत्युच्यते। द्वयं चैव हि जायते- स्त्री वा पुमान्वा। तथा- विदूरेऽव्यक्तरूपं दृष्ट्वा वक्तारो भवन्ति- महिषीरूपमिव ब्राह्मणीरूपमिव। प्रधाने कार्यसम्प्रत्ययान्नपुंसकस्य शेषो भविष्यति।
<M.2.106>
इदं तर्हि प्रयोजनम्- एकवच्चास्यान्यतरस्यामिति वक्ष्यामि इति।
एतदपि नास्ति प्रयोजनम्।
- आकृतिवाचित्वादेकवचनम् -
आकृतिवाचित्वादेकवचनं भविष्यति। यदा द्रव्याभिधानं तदा द्विवचनबहुवचने भविष्यतः ।। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।। 69 ।।
भ्रातृपुत्रौ स्वसृदुहितृभ्याम्
-1-2-70- पिता मात्रा
-1-2-71- श्वशुरः श्वश्र्वा
।। सूत्रप्रयोजनाधिकरणम् ।।

किमर्थमिदमुच्यते। न पुमान्स्त्रिया (1.2.67) इत्येव सिद्धम्?
- भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेशः -
भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेशो भवति।
<M.2.107>
- भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात्सिद्धम् -
यदि तावद्बिभर्तीति भ्राता, स्वसर्यप्येतद्भवति। तथा- यदि पुनातीति प्रीणातीति वा पुत्रः, दुहितर्यप्येतद्भवति।
तथा यदि पाति पालयतीति वा पिता, मातर्यप्येतद्भवति।
तथा यद्याश्वास्यव्यः श्वशुरः, श्वश्र्वामप्येतद्भवति।
- दर्शनं वै हेतुः -
नहि स्वसरि भ्रातृशब्दो दृश्यते।
- दर्शनं हेतुरिति चेत्तुल्यम् -
दर्शनं हेतुरिति चेत्तुल्यमेतद्भवति। स्वसर्यपि भ्रातृशब्दो दृश्यताम्। तुल्यं हि कारणम्।
- न वा एष लोके सम्प्रत्ययः -
नहि लोके भ्राताऽऽनीयताम् इत्युक्ते स्वसाऽऽनीयते।
- तद्विषयं च -
तद्विषयं चैतद् द्रष्टव्यं भवति- स्वसरि भ्रातृत्वम्। किंविषयम्? एकशेषविषयम्।
युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः?
बाढं युक्तम्।
- अन्यत्रापि तद्विषयदर्शनात् -
अन्यत्रापि नियतविषयाः शब्दा दृश्यन्ते। तद्यथा- समाने रक्ते वर्णे गौर्लोहित इति भवति अश्वः शोणः इति। समाने च काले वर्णे गौः कृष्ण इति भवति अश्वो हेम इति। समाने च शुक्ले वर्णे गौः श्वेत इति भवति अश्वः कर्क इति ।। भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।। पिता मात्रा ।। 70 ।। श्वशुरः श्वश्र्वा ।। 71 ।।

-1-2-72- त्यदादीनि सर्वैर्नित्यम्
- त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि -
त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि भवन्ति। सा च देवदत्तश्च तौ। सा च कुण्डे च तानि।
<M.2.108>
- अद्वन्द्वतत्पुरुषविशेषणानाम् -
अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्। इह मा भूत्- स च कुक्कुटः, सा च मयूरी, कुक्कुटमयूर्यौ ते। अर्द्धं पिपल्यास्तत्, अर्द्धपिप्पली च सा- अर्द्धपिप्पल्यौ ते।
।। प्रत्याख्यानाधिकरणम् ।।
अयमपि योगः शक्योऽवक्तुम्। कथम्?
- त्यदादीनां सामान्यार्थत्वात् -
त्यदादीनां सामान्यमर्थः। आतश्च सामान्यं देवदत्तेऽपि हि स इत्येतद्भवति, यज्ञदत्तेऽपि।
त्यदादीनां सामान्यार्थत्वाच्छेषो भविष्यति।
इदं तर्हि प्रयोजनं- परस्य शेषं वक्ष्यामि इति।
- परस्य चोभयवाचित्वात् -
उभयवाचि परम्।
- पूर्वशेषदर्शनाच्च -
पूर्वस्य खल्वपि शेषो दृश्यते- स च यश्च तावानय यावानय इति।
इदं तर्हि प्रयोजनं- द्वन्द्वो मा भूत् इति।
एतदपि नास्ति प्रयोजनम्।
- सामान्यविशेषवाचिनोश्च द्वन्द्वाऽभावात्सिद्धम् -
सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वक्तव्यम्।
यदि सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीत्युच्यते, शूद्राभीरम् गोबलीवर्दम् तृणोलपम् इति न सिध्यति।
नैष दोषः। इह तावच्छूद्राभीरमिति,- आभीरा जात्यन्तराणि।
गोबलीवर्दम् इति,- गाव उत्कालितपुंस्का वाहाय च विक्रयाय च, स्त्रिय एवावशिष्यन्ते।
<M.2.109>
तृणोलपमिति,- अपामुलपमिति नामधेयम्।

तत्तर्हि वक्तव्यम्?
न वक्तव्यम्। सामान्येनोक्तत्वाद्विशेषस्य प्रयोगो न भविष्यति। सामान्येनोक्तत्वात्तस्यार्थस्य, विशेषस्य प्रयोगेण न भवितव्यम्। किं कारणम्? उक्तार्थानामप्रयोग इति।
न तर्हीदानीमिदं भवति- तं ब्राह्मणमानय गार्ग्यम् इति?
भवति। यदा नियोगतस्तस्यैवानयनं भवति।
एवं तर्हि येनैव खल्वपि हेतुनैतद्वाक्यं भवति- तं ब्राह्मणमानय गार्ग्यम् इति। तेनैव हेतुना वृत्तिरपि प्राप्नोति। तस्मात्सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीति वक्तव्यम् ।। त्यदादीनि सर्वैर्नित्यम् ।। 72 ।।
-1-2-73- ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री
अयमपि योगः शक्योऽवक्तुम्।
<M.2.110>
कथं- गाव इमाश्चरन्ति, अजा इमाश्चरन्ति?
गाव उत्कालितपुंस्का वाहाय च विक्रयाय च। स्त्रिय एवावशिष्यन्ते।
इदं तर्हि प्रयोजनम्- ग्राम्येष्विति वक्ष्यामि इति। इह मा भूत्- न्यङ्कव इमे, सूकरा इम इति।
कः पुनरर्हत्यग्राम्याणां पुंस उत्कालयितुम्, ये ग्रहीतुमशक्याः। कुत एव वाहाय च विक्रयाय च। इदं तर्हि प्रयोजनम्- पशुष्विति वक्ष्यामि इति। इह मा भूत्- ब्राह्मणा इमे, वृषला इमे।
कः पुनरर्हत्यपशूनां पुंस उत्कालयितुं येऽशक्या वाहाय च विक्रयाय च।
इदं तर्हि प्रयोजनम्- सङ्घेष्विति वक्ष्यामि इति। इह मा भूत्- एतौ गावौ चरतः।
कः पुनरर्हति निर्ज्ञातेऽर्थेऽन्यथा प्रयोक्तुम्।
इदं तर्हि प्रयोजनम्- अतरुणेष्विति वक्ष्यामि इति। इह मा भूत्- उरुणका इमे, बर्करा इम इति।
कः पुनरर्हति तरुणानां पुंस उत्कालयितुं येऽशक्या वाहाय च विक्रयाय च।
- अनेकशफेषु -
अनेकशफेष्विति वक्तव्यम्। इह मा भूत्। अश्वाश्चरन्ति, गर्दभाश्चरन्तीति ।। ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ।। 73 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम् ।। पादश्च समाप्तः ।।

# महाभाष्यम्/प्रथमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nm6

< महाभाष्यम् | प्रथमोऽध्यायः

-1-3-1- भूवादयो धातवः

कुतोऽयं वकारः ? यदि तावत्संहितया निर्देशः क्रियते भ्वादय इति भवितव्यम् । अथाऽसंहितया भू-आदय इति भवितव्यम् । अत उत्तरं पठति-- भूवादीनां वकारोयं मङ्गलार्थः प्रयुज्यते ।

माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वकारमागमं प्रयुङ्क्ते ? मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाऽध्येतारश्च मङ्गलयुक्ता यथा स्युरिति ।

अथाऽऽदिग्रहणं किमर्थम् ? यदि तावत्पठ्यन्ते नार्थ आदिग्रहणेन । अन्यत्रापि ह्ययं पठन्नादिग्रहणं न करोति । क्वान्यत्र ? मृडमृदगुधकुषक्लिशवदवसः क्त्वा (1.2.7) इति । अथ न पठ्यन्ते नतरामर्थ आदिग्रहणेन । नह्यपठिताः शक्या आदिग्रहणेन विशेषयितुम् । एवं तर्हि सिद्धे सति यदादिग्रहणं करोति, तज्ज्ञापयत्याचार्योऽस्ति च पाठो बाह्यश्च सूत्राद्इति । किमेतस्य ज्ञापने प्रयोजनम् ? पाठेन धातुसंज्ञेत्येतदुपपन्नं भवति ।

पाठेन धातुसंज्ञायां समानशब्दप्रतिषेधः ।। 1 ।।

पाठेन धातुसंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । या इति धातुः, या इत्याबन्तः । वा इति धातुः, वा इति निपातः । नु इति धातुः, नु इति प्रत्ययश्च निपातश्च । दिविति धातुः, दिविति प्रातिपदिकम् ।

किं च स्याद्यद्येतेषामपि धातुसंज्ञा स्यात् ? धातोः (3.1.91 ) इति तव्यदादीनामुत्पत्तिः प्रसज्येत। । नैष दोषः । साधने तव्यदादयो विधीयन्ते साधनं च क्रियायाः । क्रियाऽभावात्साधनाऽभावः । साधनाभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न भविष्यन्ति ।

इदं तर्हि--याः पश्य आतो धातोः (6.4.140) इति लोपः प्रसज्येत । नैष दोषः । अनापः इत्येवं सः ।

अस्य तर्हि वाशब्दस्य निपातस्याऽधातुरिति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्रसज्येत । अप्रातिपदिकत्वात्स्वाद्युत्पत्तिर्न स्यात् । नैष दोषः । निपातस्याऽनर्थकस्य प्रातिपदिकत्वं चोदितं तत्रानर्थकग्रहणं न करिष्यते, निपातः प्रातिपदिकमित्येव ।

इह तर्हि--त्रस्नू इति--अचिश्नुधातुभ्रुवां य्वोरियङुवङौ (6.4.77) इत्युवङादेशः प्रसज्येत । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययस्योवङादेशो भवतीति, यदयं तत्र श्नु ग्रहणं करोति ।

अस्य तर्हि दिव्शब्दस्याऽधातुरिति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्रसज्येत । अप्रातिपदिकत्वात्स्वाद्युत्पत्तिर्न स्यात् । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयत्युत्पद्यन्ते दिव्शब्दात्स्वादय इति, यदयं दिवः सावौत्वं शास्ति।। नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? दिव्शब्दो यः प्रातिपदिकं तदर्थमेतत्स्यात्--अक्षद्यूरिति । न वै अत्रेष्यते । अनिष्टं च प्राप्नोतीष्टं च न सिध्यति ।

एवं तर्हि--अननुबन्धकग्रहणे न सानुबन्धकस्येत्येवमेतस्य न भविष्यति । एवमप्यननुबन्धको दिव्शब्दो नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते ।

परिमाणग्रहणं च ।। 2 ।।

परिमाणग्रहणं च कर्तव्यम् । इयानवधिर्धातुसंज्ञो भवतीति वक्तव्यम् । कुतो ह्येतद् भूशब्दो धातुसंज्ञो भविष्यति न पुर्नभ्वेधशब्दः -- इति ?

यदि पुनः--क्रियावचनो धातुरित्येतल्लक्षणं क्रियेत ? का पुनः क्रिया ? ईहा । का पुनरीहा ? चेष्टा । का पुनश्चेष्टा ? व्यापारः ।

सर्वथा भवाञ्छब्देनैव शब्दानाचष्टे--न किंचिदर्थजातं निदर्शयत्येवंजातीयिका क्रियेति । क्रिया नामेयमत्यन्ताऽपरिदृष्टा । अशक्या क्रिया पिण्डीभूता निदर्शयितुं, यथा गर्भो निर्लुठितः । साऽसावनुमानगम्या । कोऽसावनुमानः ? इह सर्वेषु साधनेषु संनिहितेषु कदाचित्पचतीत्येतद्भवति, कदाचिन्न भवति ।

यस्मिन्साधने संनिहिते पचतीत्येतद्भवति सा नूनं क्रिया । अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रिया ।

कथं पुनर्ज्ञायते क्रियावचनाः पचादय इति । यदेतेषां करोतिना सामानाधिकरण्यम् । किं करोति ? पचति । किं

करिष्यति ? पक्ष्यति । किमकार्षीत् ? आपाक्षीदिति । तत्र--

क्रियावचन उपसर्गप्रत्ययप्रतिषेधः ।। 3 ।।

क्रियावचने धातावुपसर्गप्रत्यययोः प्रतिषेधो वक्तव्यः । पचति प्रपचति । किं पुनः कारणं प्राप्नोति ?

संघातेनाऽर्थगतेः ।। 4 ।।

संघातेन ह्यर्थो गम्यते सप्रकृतिकेन सप्रत्ययकेन सोपसर्गेण च ।

अस्ति भवतिविद्यतीनां च धातुत्वम् ।। 5 ।।

अस्तिभवतिविद्यतीनां च धातुसंज्ञा वक्तव्या । यथा हि भवता करोतिना पचादीनां सामानाधिकरण्यं निदर्शितं, न तथाऽस्त्यादीनां निर्दश्यते । नहि भवति--किं करोति ? अस्तीति ।

प्रत्ययार्थस्याऽव्यतिरेकात्प्रकृत्यन्तरेषु ।

प्रत्ययार्थस्याऽव्यतिरेकात्प्रकृत्यन्तरेषु मन्यामहे धातुरेव क्रियामाहेति । पचति पठति । प्रकृत्यर्थोऽन्यश्चान्यश्च प्रत्ययार्थः स एव ।

धातोश्चाऽर्थाभेदात्प्रत्ययान्तरेषु ।

धातोश्चाऽर्थाभेदात्प्रत्ययान्तरेषु मन्यामहे--धातुरेव क्रियामाहेति । पक्तिः पचनं पाक इति । प्रत्ययार्थोऽन्यश्चान्यश्च भवति। प्रकृत्यर्थः स एव ।।

कथं पुनर्ज्ञायते--अयं प्रकृत्यर्थः, अयं प्रत्ययार्थ इति ?
सिद्धन्त्वन्वयव्यतरेकाभ्याम् ।। 6 ।।
(सिद्धमेतत् । कथम् ?) अन्वयाच्च व्यतिरेकाच्च । कोऽसावन्वयो व्यतिरेको वा ? इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते पच्छब्दश्चकारान्तः, अतिशब्दश्च प्रत्ययः । अर्थोऽपि कश्चिद् गम्यते--विक्लित्तिः, कर्तृत्वमेकत्वं च । पठतीत्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, कश्चिदन्वयी । पच्छब्दो हीयते, पठ्शब्द उपजायते, अतिशब्दोऽन्वयी । अर्थोपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी । विक्लित्तिर्हीयते, पठिक्रियोपजायते, कर्तृत्वं चैकत्वं चान्वयी । ते मन्यामहे--यः शब्दो हीयते तस्यासावर्थः योर्थो हीयते, यः शब्द उपजायते तस्यासावर्थः योर्थ उपजायते, यः शब्दोऽन्वयी तस्यासावर्थः योऽर्थोन्वयी ।
विषम उपन्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा--इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । एकश्च शब्दो बह्वर्थः । तद्यथा--अक्षाः पादा माषा इति । अतः किं।। न साधीयोऽर्थवत्ता सिद्धा भवति ? नापि ब्रूमोऽर्थवत्ता न सिध्यतीति । वर्णिता ह्यर्थवत्ताऽन्वयव्यतिरेकाभ्यामेव । तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति, न पुनः प्रकृतरेवोभावर्थौ ब्रूयात्प्रत्यय एव वा ? सामान्यशब्दा एत एवं स्युः । सामान्यशब्दाश्च नान्तरेण प्रकरणं विशेषणं वा विशेषेष्ववतिष्ठन्ते । यतस्तु खलु नियोगतः पचतीत्युक्ते स्वभावतः कस्मिंश्चिद्विशेषे पच्शब्दो वर्ततेऽतो मन्यामहे--नेमे सामान्यशब्दा इति । न चेत्सामान्यशब्दाः प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे ।
क्रियाविशेषक उपसर्गः ।। 7 ।।
पचतीति क्रिया गम्यते, तां प्रो विशिनष्टि । यद्यपि तावदत्रैतच्छक्यते वक्तुं--यत्र धातुरुपसर्गं व्यभिचरति । यत्र न खलु तं व्यभिचरति, तत्र कथम्--अध्येति अधीते इति ? यद्यप्यत्र धातुरुपसर्गं न व्यभिचरति, उपसर्गस्तु धातुं व्यभिचरति । ते मन्यामहे--य एवास्याऽधेरन्यत्राऽर्थः स इहापीति । कः पुनरन्यत्राऽधेरर्थः ? अधिरुपरिभावे वर्तते ।
इह तर्हि व्यक्तमर्थान्तरं गम्यते--तिष्ठति प्रतिष्ठते इति । तिष्ठतीति व्रजिक्रियायाः निवृत्तिः। प्रतिष्ठत इति व्रजिक्रिया गम्यते । ते मन्यामहे--उपसर्गकृतमेतद्येनाऽत्र व्रजिक्रिया गम्यत इति । प्रोऽयं दृष्टापचार आदिकर्मणि वर्तते । न चेदं नास्ति--बह्वर्था अपि धातवो भवन्तीति । तद्यथा--वपिः प्रकिरणे दृष्टश्छेदने चापि वर्त्तते--केशश्मश्रु वपतीति । इडिः स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते--अग्निर्वा इतो
वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्तीति । करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते--पृष्ठं कुरु पादौ कुरु । उन्मृदानेति गम्यते । निक्षेपणे चापि वर्तते--कटे कुरु घटे कुरु अश्मानमितः कुरु । स्थापयेति गम्यते । एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह तिष्ठतिरेव व्रजिक्रियायाः निवृत्तिम् । अयं तर्हि दोषः--अस्तिभवतिविद्यतीनां
धातुत्वमिति ?
यदि पुनः-
भाववचनो धातुः
इत्येतल्लक्षणं क्रियेत । कथं पुनर्ज्ञायते--भाववचनाः पचादय इति ? यदेषां भवतिना सामानाधिकरण्यम्--भवति पचति, भवति पक्ष्यति, भवति अपाक्षीदिति ।
कः पुनर्भावः ? भवतेः स्वपदार्थो भवनं भाव इति । यदि भवतेः स्वपदार्थो भवनं भावः। विप्रतिषिद्धानां धातुसंज्ञा न प्राप्नोति--भेदः छेदः । अन्यो हि भावोऽन्योऽभावः । आतश्चान्यो भावोऽन्योऽभाव इति, यो हि यस्य भावमिच्छति स न तस्याऽभावम्। यस्य चाऽभावं न तस्य भावम् ।
पचादीनां च धातुसंज्ञा न प्राप्नोति । यथा हि भवता क्रियावचने धातौ करोतिना पचादीनां सामानाधिकरण्यं निदर्शितं, न तथा भाववचने धातौ निर्दश्यते । करोतिः पचादीनां सर्वान्कालान्सर्वान्पुरुषान्सर्वाणि वचनान्यनुवर्त्तते, भवतिः पुनर्वर्तमानकालं चैकत्वं च ।
का तर्हीयं वाचोयुक्तिः--भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदिति ? एषैषा वाचोयुक्तिः--पचादयः क्रिया भवति क्रियायाः कर्त्र्यो भवन्ति ।। यद्यपि तावदत्रैतच्छक्यते वक्तुं--यत्रान्या चान्या च क्रिया, यत्र खलु सैव क्रिया तत्र कथं--भवेदपि भवेत् स्यादपि स्यादिति । अत्राप्यन्यत्वमस्ति । कुतः ? कालभेदात्साधनभेदाच्च । एकस्यात्र भवतेर्भवतिः
साधनं सर्वकालश्च प्रत्ययः । अपरस्य बाह्यं साधनं वर्त्तमानकालश्च प्रत्ययः ।
यावताऽत्राप्यन्यत्वमस्ति, पचादयश्च क्रिया भवति क्रियायाः कर्त्र्यो भवन्तीति।। अस्त्वयं कर्तृसाधनः--भवतीति भाव इति । किं कृतं भवति ? विप्रतिषिद्धानां धातुसंज्ञा सिद्धा भवति । भवेद्विप्रतिषिद्धानां धातुसंज्ञा सिद्धा स्यात्, प्रातिपदिकानामपि तु प्राप्नोति वृक्षः प्लक्ष इति । किं कारणम् ? एतान्यपि हि भवन्ति ।
एवं तर्हि कर्मसाधनो भविष्यति--भाव्यते यः स भाव इति । क्रिया चैव हि भाव्यते स्वभावसिद्धं तु द्रव्यम् । एवमपि भवेत्केषांचिन्न स्यात्-- यानि न भाव्यन्ते, ये त्वेते संबन्धिशब्दास्तेषां प्राप्नोति--माता पिता भ्रातेति । सर्वथा वयं प्रातिपदिकपर्युदासान्न मुच्यामहे ।
पठिष्यति ह्याचार्यः-- भूवादिपाठः प्रातिपदिकाणवयत्यादिनिवृत्त्यर्थः- इति । यावता पठिष्यति--पचादयश्च क्रियाः भवति क्रियायाः कर्त्र्यो भवन्तीति, अस्त्वयं कर्तृसाधनो, भवतीति भाव इति ।। किं वक्तव्यमेतत् ? नहि ।। कथमनुच्यमानं गंस्यते ?।। एतेनैवाभिहितं सूत्रेण भूवादयो धातवः इति । कथम् ? नेदमादिग्रहणम् । वदेरयमौणादिक इञ्कर्तृसाधनः--भुवं वदन्तीति भूवादय इति ।।
भाववचने (धातौ) तदर्थप्रत्ययप्रतिषेधः ।। 8 ।।
भाववचने धातौ तदर्थस्य प्रत्ययस्य प्रतिषेधो वक्तव्यः । शिश्ये इति । किं च स्यात् ? अशितीत्यात्वं प्रसज्येत । तद्धि धातोर्विहितम् ।
इतरेतराश्रयं च प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः ।। 9 ।।
इतरेतराश्रयं च भवति । का इतरेतराश्रयता ? प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः। उत्पन्ने हि प्रत्यये भाववचनत्वं गम्यते, स च तावद्भाववचनादुत्पाद्यः । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ।।
सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वं प्रत्ययः ।। 10 ।।

सिद्धमेतत् । कथम् ? (नित्यशब्दत्वात्) नित्याः शब्दाः । नित्येषु च शब्देनाश्रित्य भाववचनत्वं प्रत्यय उत्पद्यते ।
प्रथमभावग्रहणं च ।। 11 ।।
प्रथमभावग्रहणं च कर्तव्यम् । प्रथमं यो भावमाहेति । कुतः पुनः प्राथम्यम्, किं शब्दत आहोस्विदर्थतः ? किं चातः ?। यदि शब्दतः, सनादीनां धातुसंज्ञा न प्राप्नोति--पुत्रीयति वस्त्रीयतीति । अथाऽर्थतः, सिद्धा सनादीनां धातुसंज्ञा, स एव तु दोषो भाववचने तदर्थप्रत्ययप्रतिषेध इति ।। एवं तर्हि नापि शब्दतो नाप्यर्थतः । किं तर्हि ? अभिधानतः । सुमध्यमेऽभिधाने यः प्रथमं भावमाह ।।
इह ये एव भाववचने धातौ दोषास्ते क्रियावचनेऽपि । तत्र त एव परिहाराः । तत्रेदमपरिहृतम्--अस्तिभवतिविद्यतीनां धातुत्वमिति । तस्य परिहारः । कां पुनः क्रियां भवान्मत्वाह--अस्तिभवतिविद्यतीनां धातुसंज्ञा न प्राप्नोतीति । किं यत्तदेवदत्तः कंसपात्र्यां पाणिनौदनं भुङ्क्ते इति ?। न ब्रूमः कारकाणि क्रियेति । किं तर्हि ? कारकाणां प्रवृत्तिविशेषः क्रिया । अन्यथा च कारकाणि शुष्कौदने प्रवर्तन्ते, अन्यथा च मांसौदने । यद्येवं सिद्धाऽस्तिभवतिविद्यतीनां धातुसंज्ञा । अन्यथा हि कारकाण्यस्तौ प्रवर्तन्तेऽन्यथा हि म्रियतौ ।
षड्भावविकारा इति ह स्माह वार्ष्यायणिः । जायतेऽस्ति विपरिणमते
वर्द्धतेऽपक्षीयते विनश्यतीति । सर्वथास्थितःथ्य;त्यत्र धातुसंज्ञा न प्राप्नोति । बाह्यो ह्येतेभ्यस्तिष्ठतिः । एवं तर्हि क्रियायाः क्रिया निवर्तिका भवति, द्रव्यं द्रव्यस्य निवर्तकम् । एवं हि कश्चित्कंचित्पृच्छति--किमवस्थो देवदत्तस्य व्याधिरिति ? स आह--वर्द्धते इति । अपर आह--अपक्षीयते इति । अपर आह--स्थित इति । स्थित इत्युक्ते वर्द्धतेश्चाऽपक्षीयतेश्च निवृत्तिर्भवति ।
अथ वा नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते । अस्त्यादिभिरपि भूतभविष्यद्वर्तमानकालाः व्यज्यन्ते ।
अथ वा नाऽन्यत्पृष्टे नाऽन्यदाख्येयम् । तेन न भविष्यति--किं करोति--अस्तीति ।
अथ यद्येवक्रियावचनो धातुरित्येष पक्षोऽथापि भाववचनो धातुरिति। किं गतमेतदियता सूत्रेण, आहोस्वदन्यतरस्मिन्पक्षे यः सूत्रं कर्तव्यम् ?।। गतमित्याह । कथम् ?। अयमादिशब्दोऽस्त्येव व्यवस्थायां वर्तते, तद्यथा--देवदत्तादीन्समुपविष्टानाह देवदत्तादय आनीयन्तामिति । ते उत्थाप्याऽऽनीयन्ते । अस्ति प्रकारे वर्तते, तद्यथा--देववत्तादय आढ्या अभिरूपा दर्शनीयाः पक्षवन्तः । देवदत्तप्रकारा इति गम्यते । प्रत्येकं चाऽऽदिशब्दः परिसमाप्यते--भ्वादय इति च वादय इति च । तद्यदा तावत् क्रियावचनो धातुरित्येष पक्षस्तदा भू इत्यत्र य आदिशब्दः स व्यवस्थायां वर्तते, वा इत्यत्र य आदिशब्दः स प्रकारे, भूःथ्य;त्येवमादयो वा इत्येवं प्रकारा इति । यदा तु भाववचनो धातुरित्येष पक्षस्तदा वाःथ्य;त्यत्र य आदिशब्दः स व्यवस्थायाम्, भू इत्यत्र य आदिशब्दः स प्रकारे, वाःथ्य;त्येवमादयो भू इत्येवं प्रकारा इति ।।
यदि तर्हि लक्षणं क्रियते, नेदानीं पाठः कर्तव्यः । कर्तव्यश्च । किं प्रयोजनम् ?।
भूवादिपाठः प्रातिपदिकाणवयत्यादिनिवृत्त्यर्थः ।। 12 ।।
भूवादिपाठः कर्तव्यः । किं प्रयोजनम् ? प्रातिपदिकाणवयत्यादिनिवृत्त्यर्थः । प्रातिपदिकनिवृत्त्यर्थं, आणवयत्यादिनिवृत्त्यर्थश्च । के पुनराणवयत्यादयः ? आणवयति वट्टति वड्ढयति इति ।
स्वरानुबन्धज्ञापनाय च ।। 13 ।।
स्वरानुबन्धज्ञापनाय च पाठः कर्तव्यः । स्वराननुबन्धांश्च ज्ञास्यामीति । नह्यन्तरेण पाठं स्वरा अनुबन्धा वा शक्या विज्ञातुम् ।
ये त्वेते न्याय्यविकरणा उदात्ता अननुबन्धकाः पठ्यन्ते तेषां पाठः शक्योऽकर्तुम् ।। एतेषामप्यवश्यमाणवयत्यादिनिवृत्त्यर्थः पाठः कर्तव्यः । न कर्तव्यः ।
शिष्टप्रयोगादाणवयत्यादीनां निवृत्तिः
शिष्टप्रयोगादाणवयत्यादीनां निवृत्तिर्भविष्यति । स चावश्यं शिष्ट प्रयोग उपास्यः। येऽपि पठ्यन्ते तेषामपि विपर्यासनिवृत्त्यर्थः । लोके हि कृष्यर्थे कसिं प्रयुञ्जते, दृश्यर्थे च दिसिम्।। भूवादय धातवः ।। 1 ।।
-1-3-2- उपदेशेऽजनुनासिक इत्
उपदेश इति किमर्थम् ?। अभ्रआँ। अपः । उद्देशे योऽनुनासिकस्तस्य मा भूदिति ।
कः पुनरुद्देशोपदेशयोर्विशेषः ?। प्रत्यक्षमाख्यानमुपदेशः गुणैः प्रापणमुद्देशः । प्रत्यक्षं तावदाख्यानमुपदेशः । तद्यथाइ्डअगोज्ञाय कश्चिद् गां सक्थनि कर्णे वा गृहीत्वोपदिशति--अयं
गौरिति । स प्रत्यक्षमाख्यातमाह--उपदिष्टो मे गौरति । गुणैः प्रापणमुद्देशः । तद्यथा--
कश्चित्कंचिदाहइ्डदेवदत्तं मे भवानुद्दिशतु इति । स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति--अङ्गदी
कुण्डली किरीटी व्यूढोरस्को वृतबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्तः इति । स गुणैः प्राप्यमाणमाह--उद्दिष्टो मे देवदत्तः इति ।।
इत्संज्ञायां सर्वप्रसङ्गोऽविशेषात् ।। 1 ।।
इत्संज्ञायां सर्वप्रसङ्गः । सर्वस्याऽनुनासिकस्येत्संज्ञा प्राप्नोति । अस्यापि प्राप्नोति--अभ्र आँ अपः । किं कारणम् ? अविशेषात् । नहि कश्चिद्विशेष उपादीयते--एवं जातीयकस्यानुनासिकस्येत्संज्ञा भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।
किमुच्यते--अनुपादीयमाने विशेष इति। कथं न नामोपादीयते यदोपदेश इत्युच्यते ?। लक्षणेना ह्युपदेशः । सङ्कीर्णावुद्देशोपदेशौ । प्रत्यक्षमाख्यानमुद्देशः गुणैश्च प्रापणमुपदेशः । प्रत्यक्षं तावदाख्यानामुद्देशः । तद्यथा, कश्चित्कंचिदाह--अनुवाकं मे भवानुद्दिशतु इति । स तस्मायाचष्टे इषेत्वकमधीष्व, शंनोदेवीयकमधीष्वेति । स प्रत्यक्षमाख्यातमाह--उद्दिष्टो मेऽनुवाकस्तमध्येष्ये इति । गुणैश्च प्रापणमुपदेशः । तद्यथा, कश्चित्कंचिदाह--ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशतु इति । स तस्मायाचष्टे--अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्योऽमुष्मिन्हस्तवामः इति । स गुणैः प्राप्यमाणमाह--उपदिष्टो मे पन्थाः इति । एवमेतौ सङ्कीर्णावुद्देशोपदेशौ । एवं तर्हीत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति । ननु च लोप एवेत्कार्यं स्यात् । अकार्यं लोपः । इह हि शब्दस्य द्व्यर्थ उपदेशः । कार्यार्थो वा भवत्युपदेशः श्रवणार्थो वा । कार्यं चेह नास्ति । कार्ये चाऽसति यदि श्रवणमपि न स्यादुपदेशोऽनर्थकः स्यात् ।

इदमस्तीत्कार्यम्--इह अभ्र आँ अटितः अनन्तरलक्षणायां सत्यामित्संज्ञायाम् आदितश्च (7.2.16) इतीट्प्रतिषेधः प्रसज्येत ।
सिद्धं तूपदेशनेऽनुनासिकवचनात् ।। 2 ।।
सिद्धमेतत् । कथम् ?। उपदेशने योऽनुनासिकः स इत्संज्ञो भवतीति वक्तव्यम् । किं पुनरुपदेशनम् ?। शास्त्रम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तम्--इत्संज्ञायां सर्वप्रसङ्गोऽविशेषादिति । नैषः दोषः । उपदेश इति घञयं करणसाधनः । न सिध्यति । परत्वाल्ल्युट् प्राप्नोति । न ब्रूमोऽकर्तरि च कारके संज्ञायम् (3.3.19) इति । किं तर्हि ? हलश्च (3.3.121) इति । तत्रापि संज्ञायामिति वर्त्तते, न चैषा संज्ञा । प्रायवचनादसंज्ञायामपि भविष्यति । प्रायवचनात्संज्ञायामेव स्याद्वा न वा, नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् । यदि नोपाधेरूपाधिर्भवति विशेषणस्य वा विशेषणं, कल्याण्यादीनामिनङ्; कुलटाया वा (4.1.126; 127) इनङ्विभाषा न प्राप्नोति । इनङेवाऽत्र प्रधानम् । विहितः प्रत्ययः प्रकृतश्चानुवर्तते। इह तर्हि--वाकिनादीनां कुक्च; पुत्रान्तादन्यतरस्याम् (4.1.158;159) इति कुग्विभाषा न प्राप्नोति । अत्रापि कुगेव प्रधानम् । विहितः प्रत्ययः प्रकृतश्चानुवर्तते। एवं च चेदमकृतं भवति--नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति, न च कश्चिद्दोषो भवति । एवं च कृत्वा घञ्न प्राप्नोति ।
एवं तर्हि कृत्यल्युटो बहुलम् (3.3.113) इत्येवमत्र घञ्भविष्यति ।। 2 ।।
-1-3-3- हलन्त्यम्
हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् ।। 1 ।।
हलन्त्ये सर्वप्रसङ्गः । सर्वस्य हल इत्संज्ञा प्राप्नोति । किं कारणम् ? सर्वान्त्यत्वात् । सर्वो हि हल् तं तमवधिं प्रत्यन्तो भवति ।
सिद्धं तु व्यवसिताऽन्त्यत्वात् ।। 2 ।।
सिद्धमेतत् । कथम् ? व्यवसितान्त्यत्वात् । व्यवसिताऽन्त्यो हलित्संज्ञो भवतीति वक्तव्यम् । के पुर्नव्यवसिताः ?। धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः । सिध्यति । सूत्रं तर्हि भिद्यते ।
यथान्यासमेवास्तु । ननु चोक्तम्-- हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वादिति । नैषः दोषः । आहायम्--हलन्त्यमित्संज्ञं भवतीति सर्वश्च हल् तं तमवधिं प्रत्यन्त्यो भवति। तत्र प्रकर्षगतिर्विज्ञास्यते--साधीयो योऽन्त्य इति । कश्च साधीयः ?। व्यवसितानां योऽन्त्यः ।
अथवा सापेक्षोऽयं निर्देशः क्रियते । न चान्यत्किंचिदपेक्ष्यमस्ति, तेन व्यवसितानेवापेक्षिष्यामहे ।
लकारस्यानुबन्धाऽज्ञापितत्वाद्धल्ग्रहणाऽप्रसिद्धिः ।। 3 ।।
लकारस्यानुबन्धत्वेन अज्ञापितत्वाद्धल्ग्रहणस्याऽप्रसिद्धिः । हलन्त्यमित्संज्ञं भवतीत्युच्यते, लकारस्यैव तावदित्संज्ञा न प्राप्नोति ।
सिद्धं तु लकारनिर्देशात् ।। 4 ।।
सिद्धमेतत् । कथम् ? लकारनिर्देशः कर्तव्यः । हलन्त्यमित्संज्ञं भवति लकारश्चेति वक्तव्यम् ।
एकशेषनिर्देशाद्वा ।। 5 ।।
अथ वा एकशेषनिर्देशोयम् । हल्च हल्च हल्, हलन्त्यमित्संज्ञं भवतीति ।
अथ वा लृकारस्यैवेदं गुणभूतस्य ग्रहणम्। तत्रोपदेशेऽजनुनासिक इत् (1.3.2) इतीत्संज्ञा भविष्यति ।
अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति--भवति लकारस्येत्संज्ञेति यदयं णलं लितं करोति ।
प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते ।। 6 ।।
अकृत्तद्धितान्तस्य प्रातिपदिकस्य प्रतिषेधो वक्तव्यः । उदश्वित् शकृत् इति । अकृत्तद्धितान्तस्येति किमर्थम् ? कुम्भकारः नगरकारः औपगवः कापटव इति। ।
इदर्थाऽभावात्सिद्धम् ।। 7 ।।
इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।
इदमस्तीत्कार्यम्--तित्स्वरितम् (1.6.185) इति स्वरितत्वं यथा स्यात् । नैतदस्ति प्रत्ययग्रहणं तत्र चोदयिष्यति ।
इह तर्हि राजा तक्षा, ञ्नितीत्याद्युदात्तत्वं यथा स्यात् । ञ्नितीत्युच्यते, तत्र व्यपवर्गाऽभावान्न भविष्यति ।
इदं तर्हि--स्वर् । उपोत्तमं रिति (6.1.217) इत्येष स्वरो यथा स्यात् । स्वरितकरणसार्मथ्यान्न भविष्यति न्यङ्स्वरौ स्वरितौःथ्य;ति । इह तर्हि--अन्तर् । उत्तमशब्दस्त्रिप्रभृतिषु वर्तते, न चात्र त्रिप्रभृतयः सन्ति ।
इह तर्हि--सनुतर् । उपोत्तमं रितीत्येष स्वरो यथा स्यात् । अन्तोदात्तनिपातनं करिष्यते, स निपातनस्वरो रित्स्वरस्य बाधको भविष्यति । एतच्चात्र युक्तम्--यदित्कार्याऽभावादित्संज्ञा न स्यात्, यत्रेत्कार्यं भविष्यति, तत्रेत्संज्ञा । तद्यथा--आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् (2.4.70) इति ।। 3 ।।
-1-3-4- न विभक्तौ तुस्माः
विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ।। 1 ।।
विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति वक्तव्यम् । इह मा भूत्--किमोऽत् (5.3.12) क्व प्रेप्सन्दीव्यसे क्वार्द्धमासा इति ।
स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति--न विभक्तौ तद्धिते प्रतिषेधो भवतीति, यदयम्--इदमस्थमुः (5.3.24) इति मकारस्येत्संज्ञापरित्राणार्थमुकारमनुबन्धं करोति ।
यद्येतज्ज्ञाप्यते इदानीमित्यत्रापि प्राप्नोति। । इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।
इदमस्तीत्कार्यं--मिदचोन्त्यात्परः (1.1.47) इति । आचामन्त्यात्परो यथा स्यात् । इश्भावे कृते नास्ति विशेषः मिदचोऽन्त्यात्परः इति वा परत्वे, प्रत्ययः परः इति वा । स एव तावदिश्भावो न प्राप्नोति । किं कारणम् ? प्राग्दिशः प्रत्ययेष्वित्युच्यते । कः पुनरर्हतीश्भावं प्राग्दिशः प्रत्ययेषु वक्तुम् । किं तर्हि ?। प्राग्दिशोऽर्थेष्विश्भावः, किं सर्वनामबहुम्योऽद्व्यादिभ्यः (5.3.2) प्रत्ययोत्पत्तिः । एवं तर्हि ततोऽप्ययं वक्तव्यः ।

ततश्च मिदचोन्त्यात्परत्वेन न सिध्यति । ननु चाऽत्राप्यत्वे कृते नास्ति विशेषः मिदचोऽन्त्यात्परः इति वा परत्वे, प्रत्ययः परः इति वा । तद्ध्यत्वं न प्राप्नोति । किं कारणम् ?। विभक्तावित्युच्यते ।
एवं तर्हि यकारान्तोदानीं करिष्यते। किं यकारो न श्रूयते ?। लुप्तनिर्दिष्टो यकारः ।। 4 ।।
-1-3-7- चुटू
चुञ्चुप्चणपोश्चकारप्रतिषेधः ।। 1 ।।
चुञ्चुप्चणपोश्चकारस्य प्रतिषेधो वक्तव्यः । । केशचुञ्चुः । केशचणः ।
इदर्थाऽभावात्सिद्धम् ।। 2 ।।
इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। इदमस्तीत्कार्यम्। चितः अन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात् । पित्करणमिदानीं किमर्थं स्यात् ?।
पित्करणं किमर्थमिति चेत्पर्यायार्थम् ।। 3 ।।
पित्करणं किमर्थमित चेत्पर्यायार्थमेतत्स्यात् । एवं तर्हि यकारादी चुञ्चुप्चणपौ । किं यकारो न श्रूयते ?। लुप्तनिर्दिष्टो यकारः ।
इर उपसंख्यानम् ।। 4 ।।
इर उपसंख्यानं कर्तव्यम् । रुधिर्--अरुधत्, अरौत्सीत् ।।
अवयवग्रहणात्सिद्धम् ।।5।।
रेफस्याऽत्र हलन्त्यम् (1.3.3) इतीत्सञ्ज्ञा भविष्यति, इकारस्य उपदेशेऽजनुनासिक इत् (2) इति ।
अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः ।। 6 ।।
अवयवग्रहणादिति चेदिदिद्विधिरपि प्राप्नोति । भेत्ता छेत्ता । इदितो नुम्धातोः (7.1.58) इति नुम्प्राप्नोति ।
यदि पुनरयमिदिद्विधिः कुम्भीधान्यन्यायेन विज्ञायेत । तद्यथा--कुम्भीधान्यः श्रोत्रियः इत्युच्यते । यस्य कुम्भ्यामेव धान्यं स कुम्भीधान्यः । यस्य पुनः कुम्भ्यां चाऽन्यत्र च धान्यं, नाऽसौ
कुम्भीधान्यः । नायमिदिद्विधिः कुम्भीधान्यन्यायेन शक्यो विज्ञातुम् । इह हि दोषः स्यात्--टुनदिनन्दथुरिति ।
एवं तर्हि नैवं विज्ञायते--इकार इदस्य सोऽयमिदित्तस्येदिति इति । कथं तर्हि ?। इकार एवेत् इदित्, इदिदन्तस्येति ।। अथ वा ऋकारस्यैवेदमित्त्वभूतस्य ग्रहणम् । तस्य च उपदेशेऽजनुनासिक इतीत्संज्ञा भविष्यति ।। अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति--नैवं जातीयकानामिदिद्विधिर्भवतीति यदयमिरितः कांश्चिन्नुमनुषक्तान्पठति--उबुन्दिर् निशामने । स्कन्दिर्गतिशोषणयोः ।। अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति--इर् शब्दस्येत्संज्ञा भवतीति यदयमिरितो वा (3.1.57) इत्याह ।। अथ वाऽन्त इति वर्तते ।। 7 ।।
-1-3-9- तस्य लोपः
तस्यग्रहणं किमर्थम् ?। इत्संज्ञकः प्रतिनिर्दिश्यते । नैतदस्ति प्रयोजनम् । प्रकृतमिदिति वर्तते । क्व प्रकृतम् ?। उपदेशेऽजनुनासिक इद् (1.3.2) इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा--उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम् । देवदत्तमिति गम्यते । देवदत्तस्य गावोऽश्वा हिरण्यं च, आढ्यो वैधेयः । देवदत्त इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थाद् द्वितीयानिर्दिष्टं, प्रथमानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति । इदं तर्हि प्रयोजनम् । येऽनेकाल इत्संज्ञास्तेषां लोपः सर्वादेशो यथा स्यात् । अथ क्रियमाणेपि वै तस्यग्रहणे कथमिव लोपः सर्वादेशो लभ्यः । लभ्य इत्याह । कुतः ?। वचनप्रामाण्यात् । तस्यग्रहणसार्मथ्यात् ।
इतो लोपे णल्क्त्वानिष्ठासूपसंख्यानमित्प्रतिषेधात् ।। 1 ।।
इतो लोपे णत्क्त्वानिष्ठासूपसंख्यानं कर्तव्यम् । णल्--अहं पपच । क्त्वा--देवित्वा सेवित्वा । निष्ठा--शयितः शयितवान् । किं पुनः कारणं न सिद्ध्यति ? इत्प्रतिषेधात् । प्रतिषिध्यतेऽत्रेत्संज्ञा । णलुत्तमो णिद्वा भवति । क्त्वा सेण्न किद्भवति । निष्ठा सेण्न किद्भवतीति ।
सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् ।। 2 ।।
सिद्धमेतत् । कथम् ? णलादीनां ग्रहणानि प्रतिषिध्यन्ते । णलुत्तमो वा णिद्ग्रहणेन गृह्यते । क्त्वा सेण्न किद्ग्रहणेन गृह्यते । निष्ठा सेण्न किद्ग्रहणेन गृह्यत इति ।
निर्दिष्टलोपाद्वा ।। 3 ।।
निर्दिष्टलोपाद्वा सिद्धमेतत् । अथवा निर्दिष्टस्याऽयं लोपः क्रियते तस्मात्सिद्धमेतत् ।
तत्र तुस्मानां प्रतिषेधः ।। 4 ।।
तत्र तुस्मानां प्रतिषेधो वक्तव्यः । तस्मात् तस्मिन् । यस्मात् यस्मिन् । वृक्षाः प्लक्षाः । अचिनवम्। असुनवम्। अकरवम् ।
न वोच्चारणसार्मथ्यात् ।। 5 ।।
न वा वक्तव्यः । किं कारणम् ? उच्चारणसार्मथ्यादत्र लोपो न भविष्यति ।
अनुबन्धलोपे भावाभावयोर्विप्रतिषेधादप्रसिद्धिः ।। 6 ।।
अनुबन्धलोपे भावाभावयोर्विरोधादप्रसिद्धिः । न ज्ञायते केनाऽभिप्रायेण प्रसजति, केन
निवृत्तिं करोतीति ।
सिद्धं त्वपवादन्यायेन ।। 7 ।।
सिद्धमेतत् । कथम् ?। अपवादन्यायेन ।। किं पुनरिह तथा यथोत्सर्गापवादौ ?।
भावो हि कार्यार्थोऽनन्यार्थो लोपः ।। 8 ।।

कार्यं करिष्यामीत्यनुबन्ध आसज्यते, कार्यादन्यन्मा भूदिति लोपः ।
अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः ?।
एकान्तस्तत्रोपलब्धेः ।। 8 ।।
एकान्त इत्याह । कुतः ?। तत्रोपलब्धेः । तत्रस्थो ह्यसावुपलभ्यते । तद्यथा--वृक्षस्था शाखा वृक्षैकान्त उपलभ्यते ।
तत्राऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वात् ।। 9 ।।
तत्राऽसरूपविधौ दोषो भवति--कर्मण्यण् (3.2.1) आतोऽनुपसर्गे कः (3) इति कविषयेऽणपि प्राप्नोति। ।। सर्वादेशे च दोषो भवति--दिव औत् औत्सर्वादेशः प्राप्नोति ।। दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः--अदाब्दैपौःथ्य;ति वक्तव्यम् । किं पुनः कारणं न सिद्ध्यति ?। अनाकारान्तत्वात् । ननु चात्वे कृते भविष्यति । तद्ध्यात्त्वं न प्राप्नोति । किं कारणम् ? अनेजन्तत्वात् ।। अस्तु तर्ह्यनेकान्तः ।
अनेकान्ते वृत्तिविशेषः ।। 10 ।।
यद्यनेकान्तो वृत्तिविशेषो न सिद्ध्यति । किति णितीति कार्याणि न सिद्ध्यन्ति । किं हि स तस्येद्भवति, येनेत्कृतं स्यात् ?। एवं तर्ह्यनन्तरः ।
अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतप्रसङ्गः ।। 11 ।।
अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतं प्राप्नोति । वुञ्छण् ।
सिद्धं तु व्यवसितपाठात् ।। 12 ।।
सिद्धमेतत् । कथम् ?। व्यवसितपाठः कर्तव्यः । वुञ् छण् ।। स चावश्यं पाठः कर्तव्यः ।
इतरथा ह्येकान्तेऽपि सन्देहः ।। 13 ।।
अक्रियमाणे व्यवसितपाठे एकान्तेऽपि सन्देहः स्यात् । तत्र न ज्ञायते किमयं पूर्वस्य भवत्याहोस्वित्परस्येति ।। सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति, पूर्वस्येति व्याख्यास्यामः ।
वृत्ताद्वा ।। 14 ।।
वृत्ताद्वा सिद्धमेतत् । वृद्धिमन्तमाद्युदात्तं दृष्ट्वा ञ्निदिति व्यवसेयम् । अन्तोदात्तं दृष्ट्वा किदिति। ।
युक्तं पुनर्यद्वृत्तनिमित्तको नामाऽनुबन्धः स्यान्नाऽनुबन्धनिमित्तकेन नाम वृत्तेन भवितव्यम् ।
वृत्तनिमित्तक एवानुबन्धः । वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति ।
उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति, किमत्र न्याय्यम् ?। एकान्ता इत्येव न्याय्यम् । कुत एतत् ? अत्र हि हेतुर्व्यपदिष्टो यच्च नाम सहेतुकं तन्न्याय्यम् । ननु चोक्तं तत्राऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वादिति । असरूपविधौ तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति--नानुबन्धकृतमसारूप्यं भवतीति, यदयं ददातिदधात्योर्विभाषा (3.1.13) इति शास्ति ।। यदप्युक्तम्--सर्वादेश इति । तत्राप्याचार्यप्रवृत्तिर्ज्ञापयति--नानुबन्धकृतमनेकाल्त्वं भवतीति, यदयं शित्सर्वस्य (1.1.55) इत्याह ।। यदप्युक्तम्--दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः इति । न कर्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमनेजन्तत्वं भवतीति, यदयमुदीचां माङो व्यतीहारे (3.4.19) इति मेङः सानुबन्धकस्याऽऽत्त्वभूतस्य ग्रहणं करोति ।। 9 ।।
-1-3-10- यथासंख्यमनुदेशः समानाम्
किमिहोदाहरणम् ? इको यणचि (6.1.77) दध्यत्र मध्वत्र । नैतदस्ति । स्थानेऽन्तरतमेनाप्येतत्सिद्धम् । कुत आन्तर्यम् ?। तालुस्थानस्य तालुस्थान ओष्ठस्थानस्यौष्ठस्थानो भविष्यतीति ।
इदं तर्हि--तस्थस्थमिपां ताम्तम्तामः (3.4.101) इति । ननु चैतदपि स्थानेऽन्तरतमेनैव सिद्धम् । कुत आन्तर्यम् ?। एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थो भविष्यतीति ।
इदं तर्हि--तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः (4.3.94) इति ।। किमर्थमिदमुच्यते ?।
संज्ञासमासनिर्देशात्सर्वप्रसङ्गोऽनुदेशस्य, तत्र यथासंख्यवचनं नियमार्थम् ।। 1 ।।
संज्ञया समासैश्च निर्देशाः क्रियन्ते । संज्ञया तावत्--परस्मैपदानां णलतुसुस्थलथुसणल्वमाः (3.4.82) इति । समासैः--तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः (4.3.94) इति । संज्ञासमासनिर्देशादेतस्मात्कारणात् सर्वप्रसङ्गः सर्वस्योद्देशस्य सर्वोऽनुदेशः प्राप्नोति । इष्यते च समसंङ्ख्यं यथा स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तत्र यथासंख्यवचनं नियमार्थम् । एवमर्थमिदमुच्यते ।
किं पुनः कारणं संज्ञया च समासैश्च निर्देशाः क्रियन्ते ?।।
संज्ञासमासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः ।। 2 ।।
संज्ञया च समासैश्च निर्देशाः क्रियन्ते पृथग्विभक्तीः संज्ञिनश्च मोच्चीचरमिति ।
प्रकरणे च सर्वसंप्रत्ययार्थः ।। 3 ।।
प्रकरणे च सर्वेषां संप्रत्ययो यथा स्याद्--विदो लटो वा (3.4.83) इति ।
किं पुनः शब्दतः साम्ये संख्यातानुदेशो भवत्याहोस्विदर्थतः ?। कश्चात्र विशेषः ?।
संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच इत्यनिर्देशः ।। 4 ।।
संङ्ख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच इत्यनिर्देशः । अगमको निर्देशोऽनिर्देशः । परस्मैपदानां णलतुसुस्थलथुसणल्वमाः (3.4.82) इति । णलादयो बहवः, परस्मैपदानामित्येकः शब्दः, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ।।
डारौरसः प्रथमस्य। । डारौरसो बहवः प्रथमस्येत्येकः शब्दः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ।। एचोऽयवायावः (6.1.78) अयवायावो बहवः, एच इत्येकः शब्दः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ।। अस्तु तर्ह्यर्थतः ।
अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषः ।। 5 ।।

अर्थतश्चेल्लृलुटोर्नन्घरीहणसिन्धुतक्षशिलादिषु दोषो भवति ।। स्यतासी लृलुटोः (3.1.33) स्यतासी द्वौ, लृलुटोरित्यस्य त्रयोऽर्थाः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ।। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (3.1..134) नन्द्यादयो बहवः, ल्युणिन्यचस्त्रयः । वैषम्यात्संख्यातानुदेशो न प्राप्नोति ।। अरीहणादयो बहवः, वुञ्आदयः सप्तदश । वैषम्यात्संख्यातानुदेशो न प्राप्नोति ।। सिन्धुतक्षशिलादिभ्योऽणञौ (4.3.93) सिन्धुतक्षशिलादयो बहवोऽणञौ द्वौ, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ।

आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु ।। 6 ।।

आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु च दोषो भवति । आत्मनेपदविधिश्च न सिध्यति--अनुदात्तङित आत्मनेपदम् (1.3.2) अनुदातङितौ द्वौ, आत्मनेपदमित्यस्य द्वावर्थौ, तत्र संख्यातानुदेशः प्राप्नोति । निष्ठा--रदाभ्यां निष्ठातो नः पूर्वस्य च दः (8.2.42) इति रेफदकारौ द्वौ, निष्ठेत्यस्य द्वावर्थौ । तत्र संख्यातानुदेशः प्राप्नोति । सार्वधातुकद्विग्रहणेषु च दोषो भवति--श्नसोरल्लोपः (6.4.111) श्नमस्ती द्वौ, सार्वधातुकमित्यस्य द्वावर्थौ । तत्र संख्यातानुदेशः प्राप्नोति ।

एङः पूर्वत्वे प्रतिषेधः ।। 7 ।।

एङः पूर्वत्वे प्रतिषेधो वक्तव्यः । एङः पदान्तादति ; ङसिङसोश्च (6.1.109;110) ङसिङसौ द्वौ,
एङित्यस्य द्वावथौ,तत्र संख्यातानुदेशः प्राप्नोति ।

अस्तु तर्हि शब्दतः । ननु चोक्तं संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच
इत्यनिर्देशः इति । नैषः दोषः । स्थानेऽन्तरतमः (1.1.50) इत्यनेन व्यवस्था भविष्यति । कुत आन्तर्यम् ?। एकार्थस्यैकार्थौ द्व्यर्थस्य द्व्यर्थो, बह्वर्थस्य बह्वर्थः । संवृतावर्णस्य संवृतावर्णः, विवृताऽवर्णस्य विवृतावर्णः ।

अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति ।। 8 ।।

अतिप्रसङ्गो भवति गुणवृद्धिप्रतिषेधे क्ङिति। गुणवृद्धी द्वे, क्ङितौ द्वौ।,तत्र संख्यातानुदेशः प्राप्नोति ।। नैषः दोषः । गकारोऽप्यत्र निर्दिश्यते । तद्गकारग्रहणं कर्तव्यम् ?। न कर्तव्यम् । क्रियते न्यास एव । ककारे गकार्श्चत्वभूतो निर्दिश्यते । गिति किति ङितीति ।

उदिकूले रुजिवहोः ।। 9 ।।

उदिकूले द्वे, रुजिवहौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति । नैषः दोषः । नोदिरुपपदम् । किं तर्हि ?। विशेषणं रुजिवहोः । उत्पूर्वाभ्यां रुजिवहिभ्यां कूल उपपद् इति ।

तच्छीलादिषु धातुत्रिग्रहणेषु ।। 10 ।।

तच्छीलादिषु धातुत्रिग्रहणेषु दोषो भवति । विदिभिदिच्छिदेः कुरच् (3.2.162) ।
विदिभिदिच्छिदयस्त्रयः, तच्छीलादयस्त्रयः, तत्र संख्याताऽनुदेशः प्राप्नोति ।

घञादिषु द्विग्रहणेषु ।। 11 ।।

घञादिषु द्विग्रहणेषु दोषो भवति । निरभ्योः पूल्वोः (3.3.28) निरभी द्वौ, पूल्वौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ।। नैषः दोषः । इष्यते चाऽत्र संख्यातानुदेशः,निष्पावः अमिलाव इति ।।

एवं तर्हि--अकर्तरि च कारके भावे चेति द्वौ पूल्वौ द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ।

अवे तॄस्त्रोः करणाधिकरणयोः ।। 12 ।।

तॄस्त्रौ द्वौ, करणाधिकरणे द्वे। , तत्र संख्यातानुदेशः प्राप्नोति ।

कर्तृकर्मणोश्च भूकृञोः ।। 13 ।।

कर्तृकर्मणी, द्वे, भूकृञौ द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ।

अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ।। 14 ।।

अनवक्लृप्त्यर्षौ द्वौ, किंवृत्ताऽकिंवृत्ते द्वे । तत्र संख्यातानुदेशः प्राप्नोति ।

कृभ्वोः क्त्वाणमुलौ ।। 15 ।।

कृभ्वौ द्वौ, क्त्वाणमुलौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ।

अधीयानविदुषोश्छन्दोब्राह्मणानि ।। 16 ।।

छन्दोब्राह्मणानीति द्वे, अधीते वेदिति च द्वौ । तत्र संख्यातानुदेशः प्राप्नोति ।

रोपधेतोः पथिदूतयोः ।। 17 ।।

रोपधेतोः प्राचाम् (4.2.123) तद्गच्छति पथिदूतयोः (4.3.85) । रोपधेतौ द्वौ, पथिदूतौ द्वौ, तत्र संख्यातानुपदेशः प्राप्नोति ।

तत्र भवस्तस्य व्याख्यानः ॠतुयज्ञेभ्यश्च ।। 18 ।।

तत्र भवस्तस्य व्याख्यानौ द्वौ, क्रतुयज्ञौ द्वौ , तत्र संख्यातानुदेशः प्राप्नोति ।

संघादिष्वञ्प्रभृतयः ।। 19 ।।

संघादिष्वञ्प्रभृतयः संख्यातानुदेशेन न सिध्यन्ति ।
नैषः दोषः । घोषग्रहणमपि तत्र कर्तव्यम् ।

वेशोयशआदेर्भगाद्यत्खौ ।। 20 ।।

वेशोयशआदी द्वौ, यत्खौ द्वौ। । तत्र संख्यातानुदेशः प्राप्नोति ।

ङसिङसोः ख्यत्यात्परस्य ।। 21 ।।

ङसिङसौ द्वौ, ख्यत्यौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति ।

न वा समानयोगवचनात् ।। 22 ।।
न वा एष दोषः । किं कारणम् ?। समानयोगवचनात् समानयोगे संख्यातानुदेशं वक्ष्यामि ।
तस्य दोषो विदो लटो वा ।। 23 ।।
तस्यैतस्य लक्षणस्य दोषः विदो लटो वा (3.4.83) इति संख्यातानुदेशो न प्राप्नोति ।
ध्माधेटोः नाडीमुष्ट्योश्च ।। 24 ।।
ध्माधेटोः नाडीमुष्ट्योश्च संख्यातानुदेशो न प्राप्नोति ।
खलगोरथादिनित्रकट्यश्च ।। 25 ।।
संख्यातानुदेशो न प्राप्नोति ।
सिन्ध्वपकाराभ्यां कन् अणञ्ञौ च ।। 26 ।।
संख्यातानुदेशो न प्राप्नोति ।
युष्मदस्मदोश्चादेशाः ।। 27 ।।
युष्मदस्मदोश्चादेशाः संख्यातानुदेशन्न सिद्ध्यन्ति ।
तस्माद्यस्मिन्पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु ।
अथवैवं वक्ष्यामि--यथासंख्यमनुदेशः समानां स्वरितेन । ततः अधिकारः । अधिकारश्च भवति स्वरितेनेति । एवमपि स्वरितं दृष्ट्वा सन्देहः स्यात्--न ज्ञायते-- किमयं समसंख्यार्थः, आहोस्विदधिकारार्थ इति ?। सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते--व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति। समसंख्यार्थ इति व्याख्यास्यामः ।। 10 ।।
-1-3-11- स्वरितेनाधिकारः
किमर्थमिदमुच्यते ?।
अधिकारः प्रतियोगं तस्यानिर्देशार्थः ।। 1 ।।
अधिकारः क्रियते--प्रतियोगं तस्यानिर्देशार्थ इति । किमिदं प्रतियोगमिति ?। योगं योगं प्रति प्रतियोगम् । योगे योगे तस्य ग्रहणं मा कार्षमिति । किं गतमेतदियता सूत्रेण ?। गतमित्याह । कुतः ?। लोकतः। तद्यथा लोके-- अधिकृतोऽसौ ग्रामे अधिकृतोऽसौ नगरे इत्युच्यते यो यत्र व्यापारं गच्छति । शब्देन चाप्यधिकृतेन कोन्यो व्यापारः शक्योवगन्तुमन्यदतो योगे योग उपस्थानात् ।
न वा निर्दिश्यमानाधिकृतत्वाद्यथा लोके ।। 2 ।।
न वा एतत्प्रयोजनमस्ति । किं कारणम् ?। निर्दिश्यमानाधिकृतत्वात्। यथा लोके । निर्दिश्यमानमधिकृतं गम्यते । तद्यथा--देवदत्ताय गौर्दीयतां यज्ञदत्ताय विष्णुमित्राय इति । गौरिति गम्यते । एवमिहापि पदरुजविशस्पृशो घञ्ञ् (3.3.16) सृ स्थिरे (17) भावे (18) घञ्ञिति गम्यते ।
अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा ।। 3 ।।
अन्यनिर्देशस्तु लोके निवर्तको भवति । तद्यथा--देवदत्ताय गौर्दीयताम् विष्णुमित्राय कम्बलः इति कम्बलो गोर्निवर्तको भवति । एवमिहापि अभिविधौ भाव इनुण् (3.3.44) घञ्ञो निवर्तकः स्यात् । तस्मात् परिभाषा कर्तव्या ।
अधिकारपरिमाणाज्ञानं तु ।। 4 ।।
अधिकारपरिमाणाज्ञानं तु भवति । न ज्ञायते कियन्तमवधिमधिकारोनुवर्तत इति ।
अधिकारपरिमाणज्ञानार्थं तु ।।5।।
अधिकारपरिमाणज्ञानार्थमेव तर्ह्ययं योगो वक्तव्यः । अधिकारपरिमाणं ज्ञास्यामीति । कथं पुनः--स्वरितेनाधिकार इत्येनेनाधिकारपरिमाणं शक्यं विज्ञातुम् ?। एवं वक्ष्यामि--स्वरिते नाधिकारः इति । स्वरितं दृष्ट्वाधिकारो न भवतीति । केनेदानीमधिकारो भविष्यति ?। लौकिकोधिकारः ।
नाधिकार इति चेदुक्तम् ।। 6।।
किमुक्तम् ? अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषेति । अधिकारार्थमेव तर्ह्ययं योगो
वक्तव्यः । ननु चोक्तम्--अधिकारपरिमाणाज्ञानं तु इति ।
यावतिथोऽलनुबन्धस्तावतो योगानिति वचनात्सिद्धम् ।। 7।।
यावतिथोऽलनुबध्यते तावतो योगानधिकारोनुवर्त्तत इति वक्तव्यम् ।
अथेदानीं यत्राल्पीयांसोऽलः भूयसश्च योगानधिकारोनुवर्तते, कथं तत्र कर्तव्यम् ?।
भूयसि प्राग्वचनम् ।। 8 ।।
भूयसि प्राग्वचनं कर्तव्यम् । प्रागमुत इति वक्तव्यम् ।। तत्तर्हि वक्तव्यम् । न वक्तव्यम् । सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते--व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् इति प्रागमुत इति व्याख्यास्यामः ।
यद्येवं नार्थोनेन । केनेदानीमधिकारो भविष्यति ?। लौकिकोधिकारः । ननु
चोक्तं--।नाधिकार इति चेदुक्तम्। । किमुक्तम् ?। ।अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा।इति। सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणःथ्य;त्युक्तम् । इनुण्घञ्ञिति सन्देहे घञ्ञिति व्याख्यास्यामः ।
न तर्हीदानीमयं योगो वक्तव्यः ?। वक्तव्यश्च । किं प्रयोजनम् ?। स्वरितेनाधिकारगतिर्यथा विज्ञायेत अधिकं कार्यम् । अधिकः कारः ।
अधिकारगतिः--गोस्त्रियोरुपसर्जनस्य (1.2.48) इत्यत्र गोटाङ्ग्रहणं चोदितं तन्न कर्तव्यं भवति । स्त्रीग्रहणं स्वरयिष्यते । स्वरितेनाधिकारगतिर्भविष्यतीति स्त्रियाम् (4.1.3) इत्येवं प्रकृत्य ये प्रत्यया

विहितास्तेषां ग्रहणं विज्ञास्यते । तत्र स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति । (अधिकारगतिः)
अधिकं कार्यम्--अपादानमाचार्यः किं न्याय्यं मन्यते?। यत्र प्राप्य निवृत्तिः । तेनेहैव स्यात्--ग्रामादागच्छति नगरादागच्छति । सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्र न स्यात् । स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति । तथा--अधिकरणमाचार्यः किं न्याय्यं मन्यते?। यत्र कृत्स्न आधारात्मा व्याप्तो भवति । तेनेहैव स्यात्--तिलेषु तैलम्, दध्नि सर्पिरिति । गङ्गायां गावः, कूपे गर्गकुलमित्यत्र न स्यात् । स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति । अधिकं कार्यम् ।
अधिकः कारः--पूर्वविप्रतिषेधाश्च न पठितव्या भवन्ति--।गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिसिद्धम्। नुमचिरतृज्वद्भावेभ्यो नुट्।इति । नुम्नुटौ स्वरयिष्येते । तत्र स्वरितेनाधिकः कारो भवतीति नुम्नुटौ भविष्यतः ।
कथं पुनरधिकः कार इत्यनेन पूर्वविप्रतिषेधाः शक्या न पठितुम् ?। लोकतः । तद्यथा--लोकेऽधिकमयं कारं करोतीत्युच्यते योयं दुर्बलः सन्बलवद्भिः सह भारं वहति । एवमिहाप्यधिकमयं कारं करोतीत्युच्यते योयं पूर्वः सन्परं बाधते ।
अधिकारगतिस्त्र्यर्था विशेषायाधिकं कार्यम् ।
अथ योन्योऽधिकः कारः पूर्वविप्रतिषेधार्थः सः ।।11।।
इति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्य तृतीयपादे प्रथमाह्निकम्।।
-1-3-12- अनुदात्तङित आत्मनेपदम्
(विकरणेभ्यः प्रतिषेधः ।)
विकरणेभ्यः प्रतिषेधो वक्तव्यः । चिनुतः सुनुतः लुनीतः। ङित इत्यात्मनेपदं प्राप्नोति ।। नैषः दोषः । नैवं विज्ञायते--ङकार इद्यस्य सोयं ङिद्, ङितः इति । कथं तर्हि ?। ङकार इद् ङित् ङित् इति । अथवोपदेश इति वर्तते । अथवोक्तमेतत् ।सिद्धं तु पूर्वस्य
कार्यातिदेशादिति।।
सर्वथा चङङ्भ्यां प्राप्नोति । एवं तर्हि धातोरिति प्रकृतं वर्तते । क्व प्रकृतम् ?। भूवादयो धातवः (1.3.1) इति । तद्वै प्रथमानिर्दिष्टम्, पञ्ञ्चमीनिर्दिष्टेन चेहार्थः । अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा--उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनं देवदत्तमिति गम्यते । देवदत्तस्य गावोश्वा हिरण्यं च, आढ्यो वैधेयः देवदत्त इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्पञ्ञ्चमीनिर्दिष्टं भविष्यति ।
किमर्थं पुनरिदमुच्यते ?।
आत्मनेपदवचनं नियमार्थम् ।। 2 ।।
नियमार्थोयमारम्भः । किमुच्यते नियमार्थोयमिति न पुनर्विध्यर्थोपि स्यात् ?।
लविधानाद्विहितम् ।। 3 ।।
लविधानादध्यात्मनेपदं परस्मैपदं च विहितम्। अस्ति प्रयोजनमेतत् । किं तर्हीति ।
विकरणव्यवहितत्वात्तु नियमाप्राप्तिः।।4।।
विकरणैस्तु व्यवहितत्वान्नियमो न प्राप्नोति । इदमिह संप्रधार्यं विकरणाः क्रियन्तां नियम इति किमत्र कर्तव्यम् ?। परत्वाद्विकरणाः । नित्याः खल्वपि विकरणाः, कृतेपि नियमे प्राप्नुवन्त्यकृतेपि प्राप्नुवन्ति । नित्यत्वात्परत्वाच्च विकरणेषु कृतेषु विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति ।
नैषः दोषः । अनवकाशो नियमः । सावकाशः । कोऽवकाशः ?। य एते लुग्विकरणः श्लुविकरणा लिङ्लिटौ च ।
यदि पुनरियं
परिभाषा।।5।।
विज्ञायेत । किं कृतं भवति ?। कार्यकालं संज्ञापरिभाषम्, यत्र कार्यं तत्र द्रष्टव्यम् लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति अनुदात्तङित आत्मनेपदम् शेषात्कर्तरि परस्मैपदम् (1.3.78) इति ।। एवमपीतरेतराश्रयं भवति । का इतरेतराश्रयता ?। अभिनिर्वृत्तानां लस्य स्थाने तिबादीनामात्मनेपदपरस्मैपदसंज्ञया भवितव्यम्। संज्ञया च तिबादयो भाव्यन्ते । तदितरेतराश्रयं भवति , इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ।
परस्मैपदेषु तावन्नेतरेतराश्रयं भवति । परस्मैपदानुक्रमणं न करिष्यते । अवश्यं कर्तव्यम् अनुपराभ्यां कृञ्ञः (1.3.79) इत्येवमर्थम् । ननु चैतदप्यात्मनेपदानुक्रमण एव करिष्यते स्वरितञ्ञितः कर्त्रभिप्राये क्रियाफले (1.3.72) आत्मनेपदं भवति, कर्तर्यनुपराभ्यां कृञ्ञो न इति ।
आत्मनेपदेषु चापि नेतरेतराश्रयं भवति । कथम् ?। भाविनी संज्ञा विज्ञास्यते सूत्रशाटकवत् । तद्यथा--कश्चित्कंचित्तन्तुवायमाह--अस्य सूत्रस्य शाटकं वयेति । स पश्यति--यदि शाटको न वातव्योऽथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाभिप्रेता--स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । एवमिहापि स लस्य स्थाने
कर्तव्यः यस्याऽभिनिर्वृत्तस्यात्मनेपदमित्येषा संज्ञा भविष्यति ।
अथ वा पुनरस्तु नियमः । ननु चोक्तं विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति । नैषः दोषः
। आचार्यप्रवृत्तिर्ज्ञापयति--विकरणेभ्यो नियमो बलीयनीति। यदयं विकरणविधावात्मनेपदपरस्मैपदान्याश्रयति--पुषादिद्युताद्यलृदितः परस्मैपदेषु (3.1.55)
आत्मनेपदेष्वन्यतरस्याम् इति । नैतदस्ति ज्ञापकम् । अभिनिर्वृत्तानि हि लस्य स्थाने
आत्मनेपदानि परस्मैपदानि च । यत्तर्हि--अनुपसर्गाद्वा (1.3.43) इति विभाषां शास्ति ।
किं पुनरयं प्रत्ययनियमः--अनुदात्तङित एवात्मनेपदं भवति, भावकर्मणोः (1.3.13) एवात्मनेपदं भवतीति । आहोस्वित्प्रकृत्यर्थनियमः--

अनुदात्तङित आत्मनेपदमेव भावकर्मणोरात्मनेपदमेवेति । कश्चात्र विशेषः ?।
तत्र प्रत्ययनियमे शेषवचनं परस्मैपदस्यानिवृत्तत्वात् ।। 6।।
तत्र प्रत्ययनियमे शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थं--शेषात्कर्तरि परस्मैपदम् (1.3.78) इति । किं कारणम् ?। परस्मैपदस्यानिवृत्तत्वात् । प्रत्यया नियताः, प्रकृत्यर्थावनियतौ, तत्र परस्मैपदमपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थम् शेषादेव परस्मैपदं भवति, नान्यत इति ।
क्यष आत्मनेपदवचनं तस्यान्यत्र नियमात् ।। 7 ।।
क्यष आत्मनेपदं वक्तव्यम् । लोहितायति,लोहितायते । किं पुनः कारणं न सिध्यति ?। तस्यान्यत्र नियमात् । तद्व्यन्यत्र नियम्यते ।। उच्यते च, न च प्राप्नोति। तद्वचनाद्भविष्यति ।। अस्तु तर्हि प्रकृत्यर्थनियमः ।
प्रकृत्यर्थनियमेऽन्याभावः ।। 8 ।।
प्रकृत्यर्थनियमेऽन्येषां प्रत्ययानामभावः । अनुदात्तङितस्तृजादयो न प्राप्नुवन्ति । नैषः दोषः ।
अनवकाशास्तृजादयः। उच्यन्ते च, ते वचनाद्भविष्यन्ति । सावकाशास्तृजादयः । कोऽवकाशः ?। परस्मैपदिनोऽवकाशः । तत्रापि नियमान्न प्राप्नुवन्ति ।
तव्यदादयस्तर्हि भावकर्मणोर्नियमान्न प्राप्नुवन्ति । तव्यदादयोप्यनवकाशाः । ते वचनाद्भविष्यन्ति ।। चिण्तर्हि भावकर्मणोर्नियमान्न प्राप्नोति । घञ्तर्हि भावकर्मणोर्नियमान्न प्राप्नोति । तत्रापि प्रकृतं कर्मग्रहणमनुवर्तते । क्व प्रकृतम् ?। अण्कर्मणि च (3.3.12) इति । तद्वै तत्रोपपदविशेषणम्। अभिधेयविशेषणेन चेहार्थः । न चान्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति । नहि गोधा सर्पन्ती सर्पणादहिर्भवति ।
यत्तावदुच्यते--नान्यार्थं प्रकृतमन्यार्थं भवतीत्यन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा--शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते शालयश्च भाव्यन्ते । यदप्युच्यते--न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति, नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति । भवेद्द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येनयेनाभिसम्बध्यते तस्य तस्य विशेषको भवति ।
शेषवचनं च ।। 9 ।।
शेषग्रहणं च कर्तव्यम् । शेषात्कर्तरि परस्मैपदम् (1.3.78) इति । किं प्रयोजनम् ?। शेषनियमार्थम् । प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः, ते शेषेपि प्राप्नुवन्ति । तत्र शेषग्रहणं
कर्तव्यम्--शेषात्कर्तरि परस्मैपदमेव नान्यदिति ।
कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थम् ।। 10 ।।
कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थं द्वितीयं शेषग्रहणं कर्तव्यम् । शेषाच्छेषे इति वक्तव्यम् । इह मा भूत्--भिद्यते कुसूलः स्वयमेवेति ।
कतरस्मिन्पक्षेऽयं दोषः ?। प्रकृत्यर्थनियमे । प्रकृत्यर्थनियमे तावन्न दोषः । प्रकृत्यर्थौ नियतौ,
प्रत्यया अनियताः, तत्र नार्थः कर्तृग्रहणेन, कर्तृग्रहणाच्चैष दोषः ।। प्रत्ययनियमे तर्ह्ययं दोषः । प्रत्यया नियताः, प्रकृत्यर्थावनियतौ, तत्र कर्तृग्रहणं कर्तव्यं भावकर्मणोर्निवृत्त्यर्थम् । कर्तृग्रहणाच्चैष दोषः ।
प्रकृत्यर्थनियमे शेषग्रहणं शक्यमकर्तुम् । कथम् ?। प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः । ततो वक्ष्यामि--परस्मैपदं भवतीति । तन्नियमार्थं भविष्यति--यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेव भवतीति ।
तत्तर्हि प्रत्ययनियमे द्वितीयं शेषग्रहणं कर्तव्यम् ?। न कर्तव्यम् । योगविभागः करिष्यते ।
अनुदात्तङित आत्मनेपदम् । ततः--भावकर्मणोः । ततः कर्तरि । कर्तरि चात्मनेपदं भवति भावकर्मणोः । ततः कर्मव्यतिहारे कर्तरीत्येव । भावकर्मणोरिति निवृत्तम् ।
यथैव तर्हि कर्मणि कर्तरि भवति, एवं भावेपि कर्तरि प्राप्नोति--एति जीवन्तमानन्दः नास्य किं चिद्रुजतीति ।। द्वितीयो योगविभागः करिष्यते--अनुदात्तङित आत्मनेपदम्। ततः भावे । ततः कर्मणि कर्मणि चात्मनेपदं भवति । ततः कर्तरि कर्तरि चात्मनेपदं भवति । कर्मणीत्यनुवर्तते, भाव इति निवृत्तम् । ततः कर्मव्यतिहारे कर्तरीत्येव, कर्मणीति निवृत्तम् ।
एवमपि शेषग्रहणं कर्तव्य अनुपराभ्यां कृञ्ञः (1.3.79) इत्येवमर्थम् । इह मा भूत्--अनुक्रियते स्वयमेव, पराक्रियते स्वयमेव । ननु चैतदपि योगविभागादेव सिद्धम् । न सिध्यति । अनन्तरा या प्राप्तिः सा योगविभागेन शक्या बाधितुम् । कुत एतत् ?। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति । ननु चेयं प्राप्तिः परां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ।
एवं तर्हि कर्तरि कर्मव्यतिहारे (1.3.14) इत्यत्र कर्तृग्रहणं प्रत्याख्यायते । तत्प्रकृतमुत्तरत्रानुवर्तिष्यते--शेषात्कर्तरि कर्तरि इति । किमर्थमिदं--कर्तरि कर्तरीति ?। कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता चान्यश्च यः कर्ता तत्र मा भूदिति । ततः अनुपराभ्यां कृञ्ञः कर्तरि कर्तरीत्येव ।। 12 ।।
-1-3-14- कर्तरि कर्मव्यतिहारे
क्रियाव्यतिहारे ।।1।।
क्रियाव्यतिहार इति वक्तव्यम्। कर्मव्यतिहार इत्युच्यमाने इहापि प्रसज्येत -- देवदत्तस्य धान्यं व्यतिलुनन्ति इति,
इह च न स्यात् -- व्यतिलुनते व्यतिपुनते इति।
तत्तर्हि वक्तव्यम्? न वक्तव्यम्। क्रियां हि लोके कर्मेत्युपचरन्ति। कां क्रियां करिष्यसि, किं कर्म करिष्यसि इति। एवमपि कर्तव्यम्। कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति। क्रियापि कृत्रिमं कर्म। न सिद्ध्यति। कर्तुरीप्सिततमं कर्म इत्युच्यते। कथं च क्रिया नाम क्रियया इप्सिततमा स्यात्?। क्रियापि क्रिययेप्सिततमा भवति। कया क्रियया? संपश्यतिक्रियया प्रार्थयतिक्रियया अध्यवस्यतिक्रियया (च)। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत्कंचिदर्थं संपश्यति, संदृष्टे प्रार्थना, प्रार्थितेऽध्यवसायः, अध्यवसाये आरम्भः, आरम्भे निर्वृत्तिः,

र्निर्वृत्तौ फलावाप्तिः। एवं क्रियापि कृत्रिमं कर्म।
एवमप्युभयोः कृत्रिमयोरुभयगतिः प्रसज्येत। तस्मात्क्रियाव्यतिहार इति वक्तव्यम्।
न वक्तव्यम्। इह कर्तरि व्यतिहारे इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यत्कर्मग्रहणं करोति तस्यैतत्प्रयोजनम् -- क्रियाव्यतिहारे यथा स्यात्कर्मव्यतिहारे मा भूदिति।
अथ कर्तृग्रहणं किमर्थम्?
कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्मनिवृत्त्यर्थम् ।। 2 ।।
कर्मव्यतिहारादिषु कर्तृग्रहणं क्रियते, भावकर्मणोरनेनात्मनेपदं मा भूदिति।
इतरथा हि तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः ।।
अक्रियमाणे कर्तृग्रहणे भावकर्मणोरप्यात्म्यनेपदमनेन प्रसज्येत। तत्र को दोषः? तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः। तत्र प्रतिषेधे भावकर्मणोरप्यनेनात्मनेपदस्य प्रतिषेधः प्रसज्येत -- व्यतिगम्यन्ते ग्रामाः, व्यतिहन्यन्ते दस्यवः इति।
न वानन्तरस्य प्रतिषेधात् ।। 3 ।।
न वा एष दोषः। किं कारणम्? अनन्तरस्य प्रतिषेधात्। अनन्तरं यदात्मनेपदविधानं तस्य प्रतिषेधात्। कुत एतत्? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति। पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति।
ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते।
नोत्सहते प्रतिषिद्धा सती बाधितुम्।
उत्तरार्थं तर्हि कर्तृग्रहणं कर्तव्यम्।
न कर्तव्यम्। क्रियते तत्रैव शेषात्कर्तरि परस्मैपदम् इति।
द्वितीयं कर्तृग्रहणं कर्तव्यम्। किं प्रयोजनम्? कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता चान्यश्च यः कर्ता तत्र मा भूदिति। ।। 14 ।।
-1-3-15- न गतिहिंसार्थेभ्यः
प्रतिषेधे हसादीनामुपसंख्यानम् ।। 1 ।।
प्रतिषधे हसादीनामुपसंख्यानं कर्तव्यम्। व्यतिहसन्ति। व्यतिजल्पन्ति। व्यतिपठन्ति।
हरिवह्योरप्रतिषेधः ।। 2 ।।
हरिवह्योरप्रतिषेधो भवतीति वक्तव्यम्। संप्रहरन्ते राजानः । संविवहन्ते गर्गैः इति।
न वहिर्गत्यर्थः। देशान्तरप्रापणक्रियोऽत्र वहिः ।। 15 ।।
-1-3-16- इतरेतरान्योन्योपपदाच्च
परस्परोपपदाच्च ।। 1 ।।
परस्परोपपदाच्चेति वक्तव्यम्। परस्परस्य व्यतिलुनन्ति। परस्परस्य व्यतिपुनन्ति ।। 16 ।।
-1-3-19- विपराभ्यां जेः
विपराभ्यामित्युपसर्गग्रहणम्।।1।।
(विपराभ्यामिति) उपसर्गग्रहणं कर्तव्यम्। इह मा भूत् -- पराजयति सेनेति।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम् । यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चानुपसर्गश्च, अयं खलु विशब्दोऽदृष्टापचार उपसर्ग एव। तस्यास्य कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदत उपसर्गात् । तद्यथा -- अस्य गोर्द्वितीयेनार्थः
इति गौरेवोपादीयते नाश्वो न गर्दभ इति ।। 19 ।।
-1-3-20- आङो दोऽनास्यविहरणे
आङो दोऽव्यसनक्रियस्य ।। 1 ।।
आङो दोऽव्यसनक्रियस्येति वक्तव्यम्। इहापि यथा स्यात् -- विपादिकां व्याददाति। कूलं व्याददातीति।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्। इह आङो दोऽनास्य इतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यद्विहरणग्रहणं करोति तस्यैतत्प्रयोजनम् -- आस्यविहरणसमानक्रियादपि यथा स्यात्। यथाजातीयका चास्यविहरणक्रिया तथाजातीयकात्रापि।
स्वाङ्गकर्मकाच्च ।। 2 ।।
स्वाङ्गकर्मकाच्चेति वक्तव्यम्। इह मा भूत् -- व्याददते पिपीलिकाः पतङ्गस्य मुखम् इति ।। 20 ।।
-1-3-21- क्रीडोऽनुसंपरिभ्यश्च
उपसर्गग्रहणम्।।1।।
उपसर्गग्रहणं कर्तव्यम्। इह मा भूत् -- अनु क्रीडति माणवकम् इति।
समोऽकूजने ।। 2 ।।
समोऽकूजन इति वक्तव्यम्। इह मा भूत् -- सङ्क्रीडन्ति शकटानि।
आगमेः क्षमायाम् ।। 3 ।।
आगमेः क्षमायामुपसंख्यानं कर्तव्यम्। माणवक आगमयस्व तावत्।

शिक्षेर्जिज्ञासायाम् ।। 4 ।।
शिक्षेर्जिज्ञासायामुपसंख्यानं कर्तव्यम्। विद्यासु शिक्षते। धनुषि शिक्षते।
किरतेर्हर्षजीविकाकुलायकरणेषु ।। 5 ।।
किरतेर्हर्षजीविकाकुलायकरणेषूपसंख्यानं कर्तव्यम्। अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी। अपस्किरते श्वा आश्रयार्थी।
हरतेर्गतताच्छील्ये ।। 6 ।।
हरतेर्गतताच्छील्ये उपसंख्यानं कर्तव्यम्। पैतृकमश्वा अनुहरन्ते। मातृकं गावोऽनुहरन्ते।
आशिषि नाथः ।। 7 ।।
आशिषि नाथ उपसंख्यानं कर्तव्यम्। सर्पिषो नाथते। मधुनो नाथते।
आङि नुप्रच्छ्योः ।। 8 ।।
आङि नुप्रच्छ्योरुपसंख्यानं कर्तव्यम्। आनुते शृगालः। आपृच्छते गुरुमिति।
शप उपलम्भने ।। 9 ।।
शप उपलम्भन उपसंख्यानं कर्तव्यम्। देवदत्ताय शपते । यज्ञदत्ताय शपते इति।
-1-3-22- समवप्रविभ्यः स्थः
आङः स्थः प्रतिज्ञाने ।। 1 ।।
आङः स्थः प्रतिज्ञान इति वक्तव्यम्। अस्ति सकारमातिष्ठते। आगमौ गुणवृद्धी आतिष्ठते। विकारौ गुणवृद्धी आतिष्ठते।
-1-3-24- उदोनूर्ध्वकर्मणि
उद ईहायाम् ।।
उद ईहायामिति वक्तव्यम्। इह मा भूत् -- उत्तिष्ठति सेनेति।
-1-3-25- उपान्मन्त्रकरणे
उपाद्देवपूजासङ्गतकरणयोः ।
उपाद्देवपूजासङ्गतकरणयोरिति वक्तव्यम्। आदित्यम् उपतिष्ठते । चन्द्रमसम् उपतिष्ठते। सङ्गतकरणे --
रथिकान् उपतिष्ठते। अश्वारोहान् उपतिष्ठन्ते।
बहूनामप्यचित्तानामेको भवति चित्तवान्।
पश्य वानरसैन्येऽस्मिन्यदर्कमुपतिष्ठते।। 1 ।।
मैवं मंस्थाः सचित्तोऽयमेषोऽपि हि यथा वयम्।
एतदप्यस्य कापेयं यदर्कमुपतिष्ठति।। 2 ।।
अपर आह ---
उपाद्देवपूजासङ्गतकरणमित्रकरणपथिषु।
उपाद्देवपूजासङ्गतकरणमित्रकरणपथिष्विति वक्तव्यम्। देवपूजासङ्गतकरणयोरुदाहृतम्। मित्रकरणे -- रथिकान् उपतिष्ठते, अश्वारोहान् उपतिष्ठते। पथिषु -- अयं पन्थाः स्रुग्ध्नम् उपतिष्ठते, अयं पन्थाः साकेतम् उपतिष्ठते।
वा लिप्सायाम्।
वा लिप्सायामिति वक्तव्यम्। भिक्षुको ब्राह्मणकुलम् उपतिष्ठते। भिक्षुको ब्राह्मणकुलम् उपतिष्ठति।
-1-3-27- उद्विभ्यां तपः
अकर्मकादित्येव। (इह मा भूत् --) उत्तपति सुवर्णं सुवर्णकारः।
स्वाङ्गकर्मकाच्च।
स्वाङ्गकर्मकाच्चेति वक्तव्यम्। उत्तपते पाणी, वितपते पाणी। उत्तपते पृष्ठम्, वितपते पृष्ठम्।
अथोद्विभ्यामित्यत्र किं प्रत्युदाह्रियते?
निष्टप्यते इति।
किं पुनः कारणमात्मनेपदमेवोदाह्रियते, न पुनः परस्मैपदं प्रत्युदाहार्यं स्यात्?
तपिरयमकर्मकः। अकर्मकाश्चापि सोपसर्गाः सकर्मका भवन्ति। न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्ति।
यदुच्यते -- न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्तीति। अन्तरेणापि कर्मकर्तारं सकर्मका अकर्मका भवन्ति। तद्यथा -- नदी वहतीत्यकर्मकः, भारं वहतीति सकर्मकः। तस्मात् निष्टपतीति प्रत्युदाहार्यम्।
-1-3-28- आङो यमहनः
अकर्मकादित्येव । (इह मा भूत् --) आयच्छति रज्जुं कूपात्। आहन्ति वृषलं पादेन।
स्वाङ्गकर्मकाच्च ।। 1 ।।
स्वाङ्गकर्मकाच्चेति वक्तव्यम्। आयच्छते पाणी। आहते उदरमिति।
-1-3-29- समो गम्यृच्छिभ्याम्
समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम्।
समो गमादिषु विदिप्रच्छिस्वरतीनामुपसख्यानं कर्तव्यम्। संवित्ते। संपृच्छते। संस्वरते।

अर्तिश्रुदृशिभ्यश्च ।। 2 ।।
अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्। अर्ति -- मा समृत। मा समृषाताम्। मा समृषत। अर्ति। श्रु -- संशृणुते। दृशि -- संपश्यते।
उपसर्गादस्यत्यूह्योर्वावचनम् ।। 3 ।।
उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम्। निरस्यति। निरस्यते। समूहति। समूहते।
-1-3-40- आङ उद्गमने
ज्योतिषामुद्गमने ।। 1 ।।
ज्योतिरूद्गमने इति वक्तव्यम्। इह मा भूत् -- आक्रामति धूमो हर्म्यतलादिति।। 40 ।।
-1-3-48- व्यक्तवाचां समुच्चारणे
व्यक्तवाचामिति किमर्थम्?
वरतनु संप्रवदन्ति कुक्कुटाः।
व्यक्तवाचामित्युच्यमानेऽप्यत्र प्राप्नोति। एतेऽपि हि व्यक्तवाचः। आतश्च व्यक्तवाचः कुक्कुटेनोदिते उच्यते -- कुक्कुटो वदतीति।
एवं तर्हि व्यक्तवाचामित्युच्यते। सर्व एव हि व्यक्तवाचः। तत्र प्रकर्षगतिर्विज्ञास्यते -- साधीयो ये व्यक्तवाच इति। के च साधीयः? येषां वाच्यकारादयो वर्णा व्यज्यन्ते। न चैतेषां वाच्यकारादयो वर्णा व्यज्यन्ते।
एतेषामपि वाच्यकारादयो वर्णा व्यज्यन्ते। आतश्च व्यज्यन्ते। एवं ह्याहुः कुक्कुटाः कुकूडिति।
नैवं ते आहुः। अनुकरणमेतत्तेषाम्।
अथ वा नैवं विज्ञायते -- व्यक्ता वाग्येषां त इमे व्यक्तवाच इति। कथं तर्हि? व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाच इति।। 48 ।।
-1-3-51- अवाद्ग्रः
अवाद् ग्रो गिरतेः ।। 1 ।।
अवाद् ग्र इत्यत्र गिरतेरिति वक्तव्यम्। गृणातेर्मा भूत्।
तत्तर्हि वक्तव्यम्।
न वा प्रयोगाभावात्।
न वक्तव्यम्, प्रयोगाभावात्। अवाद् ग्र इत्युच्यते, न चावपूर्वस्य गृणातेः प्रयोगोऽस्ति।। 51 ।।
-1-3-54- समस्तृतीयायुक्तात्
तृतीयायुक्तादिति किमर्थम्?
उभौ लोकौ संचरसीमं चामुं च देवल।
तृतीयायुक्तादित्युच्यमानेऽप्यत्र प्राप्नोति। अत्रापि हि तृतीयया योग इति।
एवं तर्हि तृतीयायुक्तादित्युच्यते। सर्वत्र च तृतीयया योगः। तत्र प्रकर्षगतिर्विज्ञास्यते -- साधीयो यत्र तृतीया योग इति। क्व च साधीयः? यत्र तृतीया श्रूयते ।। 54 ।।
-1-3-55- दाणश्च सा चेच्चतुर्थ्यर्थे
सा चेत्तृतीया चतुर्थ्यर्थे इत्युच्यते। कथं नाम तृतीया चतुर्थ्यर्थे स्यात्?
एवं तर्हि --
अशिष्टव्यवहारे तु तृतीया च विधीयते।।1।।
(किं च? आत्मनेपदं च) अशिष्टव्यवहारेनेन तृतीया च विधीयत आत्मनेपदं च। दास्या सम्प्रयच्छते, वृषल्या सम्प्रयच्छते। यः शिष्टव्यवहारः ब्राह्मणीभ्यः संम्प्रयच्छतीत्येव। तत्र भवितव्यम्।
यद्येवं नार्थोऽनेन। केनेदानीं तृतीया भविष्यति, आत्मनेपदं च?
सहयुक्ते तृतीया स्याद्व्यतिहारे तङो विधिः ।।2।।
सहयुक्तेऽप्रधाने इत्येव तृतीया भविष्यति, कर्तरि कर्मव्यतिहारे इत्यात्मनेपदम् ।। 55 ।।
-1-3-56- उपाद्यमः स्वकरणे
इह कस्मान्न भवति। स्वं शाटकान्तमुपयच्छति - इति? अस्वं यदा स्वं करोति तदा भवितव्यम्। यद्येवं स्वीकरणमिति प्राप्नोति। विचित्रास्तद्धितवृत्तयः। नातस्तद्धित उत्पद्यते ।। 56 ।।
-1-3-58- नानोर्ज्ञः
अनोर्ज्ञः प्रतिषेधे सकर्मकवचनम् ।। 1 ।।
अनोर्ज्ञः प्रतिषेधे सकर्मकग्रहणं कर्तव्यम्। इह मा भूत् -- औषधस्यानुजिज्ञासते इति।
न वाऽकर्मकस्योत्तरेण विधानात् ।। 2 ।।
न वा कर्तव्यम्। किं कारणम्? अकर्मकस्योत्तरेण विधानात्। अकर्मकाज्जानातेरुत्तरेण योगेनात्मनेपदं विधीयते पूर्ववत्सनः इति।
प्रतिषेधः पूर्वस्य च ।। 3 ।।
पूर्वस्य चायं प्रतिषेधः। स च सकर्मकार्थ आरम्भः। कथं पुनर्ज्ञायते -- पूर्वस्यायं प्रतिषेध इति? अनन्तरस्य विधिर्वा
भवति प्रतिषेधो वेति। कथं पुनर्ज्ञायते - सकर्मकार्थ आरम्भ इति? अकर्मकाज्जानातेः सन आत्मनेपदवचने प्रयोजनं नास्तीति कृत्वा सकर्मकार्थो विज्ञायते ।। 58 ।।

-1-3-60- शदेः शितः

शदेः शितः परस्मैपदाश्रयत्वादात्नेपदाभावः ।। 1 ।।

शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदस्याभावः। शीयते शीयेते शीयन्ते।

किं च भोः शदेः शित्परस्मैपदेष्वित्युच्यते ? न खलु परस्मैपदेषु इत्युच्यते परस्मैपदेषु तु विज्ञायते। कथम् ? अनुदात्तङित आत्मनेपदम् भावकर्मणोरात्मनेपदमित्येतौ द्वौ योगावुक्त्वा शेषात्कर्तरि परस्मैपदमित्युच्यते। एवं च न परस्मैपदेषूच्यते परस्मैपदेषु विज्ञायते।

कः पुनरर्हत्येतौ योगावुक्त्वा शेषात्कर्तरि परस्मैपदं वक्तुम्। किं तर्हि? अविशेषेण सर्वमात्मनेपदप्रकरणमनुक्रम्य शेषात्कर्तरि परस्मैपदमित्युच्यते। एवमपि परस्मैपदाश्रयो भवति। कथम्? इदं तावदयं प्रष्टव्यः -- यदीदं नोच्येत किमिह स्यादिति? परस्मैपदमित्याह। परस्मैपदमिति चेत्परस्मैपदाश्रयो भवति।

सिद्धं तु लडादीनामात्मनेपदवचनात् ।। 2 ।।

सिद्धमेतत्। कथम्? शदेर्लडादीनामात्मनेपदं भवतीति वक्तव्यम् ।

सिद्ध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तम् -- शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः इति। नैषः दोषः । शित इति नैषा पञ्चमी। का तर्हि? संबन्धे षष्ठी -- शितो यः शदिः। कश्च शितः शदिः? प्रकृतिः। शदेः शित्प्रकृतेरिति।

अथ वाऽऽहायं शदेः शितः इति, न च शदिः शिदस्ति। त एवं विज्ञास्यामः -- शदेः शिद्विषयादिति। अथ वा यद्यपि तावदेतदन्यत्र भवति विकरणेभ्यो नियमो बलीयानिति, इहैतन्नास्ति। विकरणो हीहाश्रीयते शितः इति।

उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानाम् ।। 3 ।।

उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानं कर्तव्यम्। न्यविशत। व्यक्रीणीत। किं पुनः कारणं न सिद्ध्यति ? अटा व्यवहितत्वात्। ननु चायमड्धातुभक्तो धातुग्रहणेन ग्रहीष्यते। न सिध्यति। अङ्गस्य ह्यड्उच्यते विकरणान्तं चाङ्गम् । सोऽसौ संघातभक्तो न शक्यो धातुग्रहणेन ग्रहीतुम्।

एवं तर्हीदमिह संप्रधार्यम् -- अट् क्रयतां विकरण इति। किमत्र कर्तव्यम् ? परत्वादडागमः।

नित्या विकरणाः। कृतेऽप्यटि प्राप्नुवन्त्यकृतेऽपि। अडपि नित्यः। कृतेष्वपि विकरणेषु प्राप्नोत्यकृतेष्वपि प्राप्नोति। अनित्योऽट्। अन्यस्य कृतेषु विकरणेषु प्राप्नोत्यन्यस्याकृतेषु। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति।

एवं तर्हीदमिह संप्रधार्यम् -- अट् क्रियतां लादेश इति। किमत्र कर्तव्यम् ? परत्वादडागमः। नित्यो लादेशः। कृतेऽप्यटि प्राप्नोत्यकृतेऽपि प्राप्नोति। नित्यत्वाल्लादेशस्यात्मनेपद एवाडागमो भविष्यति।

नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटो नित्यनिमित्तत्वादात्मनेपदाभावः (तस्मादुपसंख्यानम्) ।। 4 ।।

नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदेवमुच्यते -- अडपि नित्यनिमित्तः कृतेऽपि लादेशे प्राप्नोत्यकृतेऽपि प्राप्नोति। अटो नित्यनिमित्तत्वादात्मनेपदस्याभावः। तस्मादुपसंख्यानम्

तस्मादुपसंख्यानं कर्तव्यम्। अन्तरङ्गस्तर्हि लादेशः ।

नैतद्विवदामहे -- अन्तरङ्गो नान्तरङ्ग इति। अस्त्वयं नित्यश्चान्तरङ्गश्च। अत्र खलु लादेशे कृते त्रीणि कार्याणि युगपत्प्राप्नुवन्ति -- विकरणाः, अडागमः, नियम इति। तद्यदि सर्वतो नियमो लभ्येत, कृतं स्यात्, तत्तु न लभ्यम्। अथापि विकरणात्पूर्वमडिति अड्लभ्येत, एवमपि कृतं स्यात्। तत्तु न लक्ष्यम्। किं कारणम् ? आङ्गात्पूर्वं विकरणा एषितव्यास्तरतस्तरन्तीत्येवमर्थम्। अडाड्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपार्च्छदित्येवमर्थम्। तत्र ह्याटि कृते साट्कस्य ऋच्छिभावः प्राप्नोति। ननु च ऋच्छिभावे कृते शब्दान्तरस्याकृत आडिति कृत्वा पुनराड् भविष्यति। पुनर्ऋच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोति।

नैषः दोषः। यत्तावदुच्यते -- आङ्गात्पूर्वं विकरणा एषितव्याः तरतः तरन्तीत्येवमर्थमिति। भवेत्सिद्धं यत्र विकरणा नित्या आङ्गमनित्यं तत्राङ्गात्पूर्वं विकरणाः स्युः। यत्र तु खलूभयं नित्यं परत्वात्तत्राङ्गं तावद्भवति।

यदप्युच्यते -- अडाड्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपार्च्छदित्येवमर्थमिति। अस्त्वत्राट्, आटि कृते साट्कस्य

ऋच्छिभावः, ऋच्छिभावे कृते शब्दान्तरस्याकृत आडिति कृत्वा पुनराड् भविष्यति। ननु चोक्तम् -- पुनर्ऋच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोतीति। नैषः दोषः। चक्रकेष्विष्टतो व्यवस्था।

अथ वा नेरिति नैषा पञ्चमी। का तर्हि ? विशेषणषष्ठी नेर्यो विशिः । कश्च नेर्विशिः

? विशेष्यः। व्यवहितश्चापि शक्यते। विशेषयितुम्। अथ वा निरपि पदं, विशिरपि पदम्। पदविधिश्च समर्थानाम् । व्यवहितेऽपि सामर्थ्यं भवति ।। 60 ।।

-1-3-62- पूर्ववत्सनः

किमिदं पूर्वग्रहणं सनपेक्षम् -- प्राक्सनो येभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योऽपि भवतीति। आहोस्विद्योगापेक्षम् -- प्रागेतस्माद्योगाद्येभ्यो योगेभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योऽपि भवतीति। किं चातः? यदि सनपेक्षम्, निमित्तमविशेषितं भवति। पूर्ववत्सनः न ज्ञायते -- किमन्ताद्भवितव्यमिति। अथ योगापेक्षमुत्तरत्र विधिर्न प्रकल्पेत -- बुभुक्षते उपयुयुक्षत इति।

यथेच्छसि तथास्तु। अस्तु तावत्सनपेक्षम्। ननु चोक्तम् -- निमित्तमविशेषितं भवतीति। निमित्तं च विशेषितम्। कथम्? सनमेवात्र निमित्तत्वेनापेक्षिप्यामहे। पूर्ववत्सन आत्मनेपदं भवति। कुतः? सन इति।

अथ वा पुनरस्तु योगापेक्षम्। ननु चोक्तम् -- उत्तरत्र विधिर्न प्रकल्पेतेति। विधिश्च प्रक्लृप्तः। कथम्? उत्तरत्रापि पूर्ववत्सनः इत्येवानुवर्तिष्यते। किमर्थं पुनरिदमुच्यते?

पूर्ववत्सन इति शदिम्रियत्यर्थम् ।। 1 ।।

शदिम्रियत्यर्थोऽयमारम्भः। शदिम्रियतिभ्यां सन्नन्ताभ्यात्मनेपदं मा भूदिति।
इतरथा हि ताभ्यां सन्नन्ताभ्यामात्मनेपदप्रतिषेधः ।। 2 ।।
इतरथा हि अनुच्यमानेऽस्मिन् शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषधो वक्तव्यः स्यात्। शिशत्सति मुमूर्षति।
कथं पुनः पूर्ववत्सनः इत्यनेन शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधः शक्यो विज्ञातुम्? वतिनिर्देशोऽयम्। कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा -- उशीनरवन्मद्रेषु यवाः सन्ति, न सन्तीति। मातृवदस्याः कलाः सन्ति, न सन्तीति। एवमिहापि पूर्ववद्भवति, न भवतीति। न भवतीत्येवं वाक्यशेषं समर्थयिष्यामहे -- यथा पूर्वयोर्योगयोः सन्नन्ताभ्यामात्मनेपदं न भवति, एवमिहापि शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं न भवतीति।
यदि तर्हि शदिम्रियत्यर्थोऽयमारम्भः, विधिर्न प्रकल्पते -- आसिसिषते। शिशयिषते। अथ विध्यर्थः, शदिम्रियतिभ्यां सन्नन्ताभ्यात्मनेपदं प्राप्नोति।
यथेच्छसि तथास्तु। अस्तु तावत्प्रतिषेधार्थः। ननु चोक्तं विधिर्न प्रकल्पते इति । विधिश्च प्रक्लुप्तः । कथम् ? एतदेव ज्ञापयति -- सन्नन्तादात्मनेपदं भवतीति। यदयं शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधं शास्ति।
अथ वा पुनरस्तु विध्यर्थः। ननु चोक्तम् -- शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति - इति। नैषः दोषः। प्रकृतं सनो न इत्यनुवर्तिष्यते। क्व प्रकृतम् ? ज्ञाश्रुस्मृदृशां सनः। नानोर्ज्ञः। सकर्मकात्सनो न भवति । प्रत्याङ्भ्यां श्रुवः सनो न । शदेः शितः सनो न । म्रियतेर्लुङ्लिङोश्च सनो नेति । इहेदानीं पूर्ववत्सनः इति, सन इत्यनुवर्तते, नेति निवृत्तम् । एवं च कृत्वा सोऽप्यदोषो भवति, यदुक्तम् -- निमित्तमविशेषितं भवतीति ।
नैव वा पुनरत्र शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति । किं कारणम् ? शदेः शितः
इत्युच्यते। न च शदिरेवात्मनेपदस्य निमित्तम् । किं तर्हि ? शिदपि निमित्तम् । अथापि शदिरेव शित्परस्तु निमित्तम् । न चायं सन्परः शित्परो भवति । यत्र तर्हि शिन्नाश्रीयते म्रियतेर्लुङ्लिङोश्च इति। अत्रापि न म्रियतिरेवात्मनेपदस्य निमित्तम् । किं तर्हि ?। लुङ्लिङावपि निमित्तम्। अथापि म्रियतिरेव लुङ्लिङ्परस्तु निमित्तम् । न चायं सन्परः लुङ्लिङ्परो भवति।
किं पुनः पूर्वस्य यदात्मनेपददर्शनं तत्सन्नन्तस्यातिदिश्यते ? एवं भवितुमर्हति ।
पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्गुपादिष्वप्रसिद्धिः ।। 3 ।।
पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदं भवतीति चेद् गुपादिष्वप्रसिद्धिः । गुपादीनां न प्राप्नोति जुगुप्सते मीमांसत इति । न ह्येतेभ्यः प्राक्सन आत्मनेपदं नापि परस्मैपदं पश्यामः ।
सिद्धं तु पूर्वस्य लिङ्गातिदेशात् ।। 4 ।।
सिद्धमेतत् । कथम् ? पूर्वस्य यदात्मनेपदलिङ्गं तत्सन्नन्तस्याप्यतिदिश्यते ।
कृञादिषु तु लिङ्गप्रतिषेधः ।। 5 ।।
कृञादिषु तु लिङ्गस्य प्रतिषेधो वक्तव्यः । अनुचिकीर्षति पराचिकीर्षतीति ।
अस्तु तर्हि -- प्राक्सनो येभ्य आत्मनेपदं दृष्टं तेभ्यः सन्नन्तेभ्योऽपि भवतीति। ननु चोक्तं पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्गुपादिष्वप्रसिद्धिः इति । नैषः दोषः । अनुबन्धकरणसार्मथ्याद् भविष्यति ।
अथवाऽवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा --गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ।
यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति -- जुगुप्सयति मीमांसयतीत्यत्रापि प्राप्नोति । नैषः दोषः । अवयवे कृतं लिङ्गं कस्य समुदायस्य विशेषकं भवति। यं समुदायं योऽवयवो न व्यभिचरति । सनं च न व्यभिचरति, णिचं च पुर्नव्यभिचरति । तद्यथा -- गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य।
प्रत्ययग्रहणं णियगर्थम् ।। 6 ।।
प्रत्ययग्रहणं कर्तव्यम् । पूर्ववत्प्रत्ययादिति वक्तव्यम् । किं प्रयोजनम् ? णियगर्थम् । णियगन्तादपि यथा स्यादिति । आकुस्मयते। विकुस्मयते। हृणीयते। महीयते इति। तत्र को दोषः?
तत्र हेतुमण्णिचः प्रतिषेधः ।। 7 ।।
तत्र हेतुमण्णिचः प्रतिषेधो वक्तव्यः। आसयति। शाययतीति । सूत्रं च भिद्यते ।
यथान्यासमेवास्तु । कथमाकुस्मयते विकुस्मयते हृणीयते महीयते इति ? अनुबन्धकरणसार्मथ्याद् भविष्यति ।
अथवा - अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा -- गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ।
यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति, हृणीययति महीययतीत्यत्रापि प्राप्नोति । अवयवे कृतं लिङ्गं कस्य समुदायस्य विशेषकं भवति। यं समुदायं योऽवयवो न व्यभिचरति । यकं च न व्यभिचरति, णिचं तु व्यभिचरति । तद्यथा -- गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ।। 62 ।।
-1-3-63- आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य
कृञ्ग्रहणं किमर्थम् ? इह मा भूत् -- ईहामास ईहामासतुः ईहामासुः । कथं चात्रास्तेरनुप्रयोगो भवति ? प्रत्याहारग्रहणं हि तत्र विज्ञायते । कथं पुनर्विज्ञायते तत्र प्रत्याहारग्रहणमिति ? इह कृञ्ग्रहणात् । इह कस्मात्प्रत्याहारग्रहणं न भवति ? इहैव कृञ्ग्रहणात्।
अथेह कस्मान्न भवति -- उदुम्भाञ्चकार उदुब्जाञ्चकार ? ननु च आम्प्रत्ययवदित्युच्यते, न चात्राम्प्रत्ययादात्मनेपदं पश्यामः । न ब्रूमोऽनेनेति । किं तर्हि ? स्वरितञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति ।
नैषः दोषः । इदं नियमार्थं भविष्यति -- आम्प्रत्ययवदेवेति । यदि नियमार्थं विधिर्न प्रकल्पते -- ईहांचक्रे ऊहांचक्रे इति । विधिश्च प्रक्लृप्तः । कथम् ? पूर्ववदिति वर्तते ।

आम्प्रत्ययवत्पूर्ववच्चेति ।। 63 ।।
-1-3-64- प्रोपाभ्यां युजेरयज्ञापात्रेषु
स्वराद्युपसृष्टात्।
स्वराद्युपसृष्टादिति वक्तव्यम्। उद्युङ्क्ते अनुयुङ्क्ते ।
अपर आह --
स्वराद्यन्तोपसृष्टात्।
स्वराद्यन्तोपसृष्टादिति वक्तव्यम् । प्रयुङ्क्ते नियुङ्क्ते विनियुङ्क्ते ।। 64 ।।
-1-3-65- समः क्ष्णुवः
किमर्थं विदेशस्थस्य ग्रहणं क्रियते, न समो गमादिष्वित्येवोच्येत ?
समः क्ष्णुवः सकर्मकार्थम् ।। 1 ।।
सकर्मकार्थोऽयमारम्भः । अकर्मकादिति तत्रानुवर्तते ।। 65 ।।
-1-3-66- भुजोऽनवने
अनवनकौटिल्ययोः।।1।।
अनवनकौटिल्ययोरिति वक्तव्यम् । इहापि यथा स्यात् -- प्रभुजति वाससी, निभुजति जानुशिरसी इति ।। तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । यस्य भुजेरवनमनवनं चाऽर्थस्तस्य ग्रहणम् । न चाऽस्य भुजेरवनमनवनं चाऽर्थः ।। 66 ।।
-1-3-67- णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने
णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः ।। 1 ।।
णेरात्मनेपदविधानेऽण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदात्मनेपदं भवतीति वक्तव्यम् ।
इतरथा हि सर्वप्रसङ्गः ।। 2 ।।
इतरथा हि सर्वत्र प्रसङ्गः स्यात् । इहापि प्रसज्येत -- आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ।
तत्तर्हि वक्तव्यम् । न वक्तव्यम् । एवं वक्ष्यामि -- णेः आत्मनेपदं भवति । ततः
अणौ यत्कर्म णौ चेत् । अण्यन्ते यत्कर्म णौ चेण्णौ यदि तदेव कर्म भवति । ततः स कर्ता कर्ता चेत्स भवति णाविति। यद्येवं कर्म कर्ताऽयं भवति तत्र कर्मकर्तृत्वात्सिद्धम्। ।
कर्मकर्तृत्वासिद्धमिति चेद्यक्चिणोर्निवृत्त्यर्थं वचनम् ।। 3 ।।
कर्मकर्तृत्वात्सिद्धमिति चेद् यक्चिणोर्निवृत्त्यर्थमिदं वक्तव्यम् । कर्मापदिष्टौ यक्चिणौ मा भूतामिति ।
न वा यक्चिणोः प्रतिषेधात् ।। 4 ।।
न वा एष दोषः । किं कारणम् ? यक्चिणोः प्रतिषेधात् । प्रतिषिद्ध्येते अत्र यक्चिणौ । यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञ्ञामुपसङ्ख्यानम् इति ।
यस्तर्हि न हेतुमण्णिच्, तदर्थमिदं वक्तव्यम् । तस्य कर्मापदिष्टौ यक्चिणौ मा भूतामिति ।
उदपुपुच्छत पुच्छं स्वयमेव । अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन -- यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञ्ञात्मनेपदाकर्मकाणामुपसंख्यानमिति । स चावश्यं प्रतिषेध आश्रयितव्यः ।
इतरथा हि यत्र नियमस्ततोऽन्यत्र प्रतिषेधः ।। 5 ।।
अनुच्यमाने ह्येतस्मिन् यत्र नियमस्ततोऽन्यत्र तेन यक्चिणोः प्रतिषेधो वक्तव्यः स्यात् ।
गणयति गणं गोपालकः । गणयति गणः स्वयमेव ।
आत्मनेपदस्य च ।। 6 ।।
आत्मनेपदस्य च प्रतिषेधो वक्तव्यः । गणयति गणः स्वयमेव ।
आत्मनेपदप्रतिषेधार्थं तु ।। 7 ।।
आत्मनेपदप्रतिषेधार्थमिदं वक्तव्यम् । गणयति गणः स्वयमेव ।
इष्यत एवात्रात्मनेपदम् । किमिष्यत एव, आहोस्वित्प्राप्नोत्यपि ? इष्यते च, प्राप्नोति च । कथम् ? अणाविति कस्येदं णेर्ग्रहणं यस्माण्णेः प्राक्कर्म वा कर्ता वा विद्यते । न चैतस्माण्णेः प्राक्कर्म कर्ता वा विद्यते ।
इदं तर्हि प्रयोजनम् -- अनाध्यान इति वक्ष्यामीति । इह मा भूत् -- स्मरति वनगुल्मस्य कोकिलः । स्मरयत्येनं वनगुल्मः स्वयमवेति ।
एतदपि नास्ति प्रयोजनम् । कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति।
कर्तृस्थभावकश्चायम् ।
एवं तर्हि सिद्धे सति यदनाध्यान इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः -- भवत्येवंजातीयकानामात्मनेपदमिति । किमेतस्य ज्ञापने प्रयोजनम् ? पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजा । अत्रात्मनेपदं सिद्धं भवति ।
आत्मनः कर्मत्वे प्रतिषेधः ।। 8 ।।
आत्मनः कर्मत्वे प्रतिषेधो वक्तव्यः । हन्त्यात्मानम् । घातयत्यात्मा इति ।
स तर्हि वक्तव्यः ।
न वा ण्यन्तेऽन्यस्य कर्तृत्वात् ।। 9 ।।

न वा वक्तव्यः । किं कारणम् ? ण्यन्तेऽन्यस्य कर्तृत्वात् । अन्यदत्राण्यन्ते कर्मऽन्यो ण्यन्तस्य कर्ता । कथम् ? द्वावात्मानौ, अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखःदुखे अनुभवतीति। शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवतीति। 67 ।।
-1-3-72- स्वरितञ्ञितः कर्त्रभिप्राये क्रियाफले
स्वरितञ्ञित इति किमर्थम् ?। याति वाति द्राति प्साति । स्वरितञ्ञित इति शक्यमकर्तुम् । इह कस्मान्न भवति याति वाति द्राति प्सातीति ?। कर्त्रभिप्राये क्रियाफले इत्युच्यते। सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति । त एवं विज्ञास्यामः येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्मनेपदं भवतीति । न चैतेषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति । तथाजातीयकाः खल्वाचार्येण स्वस्तिञ्ञितः पठिताः ये उभयवन्तः-- येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति ।
अथाभिप्रग्रहणं किमर्थम् ?। स्वरितञ्ञितः कर्त्राये क्रियाफल इतीयत्युच्यमाने यमेव
संप्रत्येति क्रियाफलं तत्रैव स्यात्--लूञ्ञ् लुनीते, पूञ्ञ् पुनीते । इह न स्यात्--यज् यजते, वप् वपते । अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति । अभिरामुख्ये वर्तते, प्र आदिकर्मणि । तेन यं चाऽभिप्रति, यं चाभिप्रैष्यति, यं चाऽभिप्रागात्तत्र सर्वत्राभिमुख्यमात्रे सिद्धं भवति ।
कर्त्रभिप्राये क्रियाफल इति किमर्थम् ? पचन्ति भक्तकाराः । कुर्वन्ति कर्मकराः । यजन्ति याजकाः । कर्त्रभिप्राये क्रियाफल इत्युच्यमानेऽप्यत्र प्राप्नोति । अत्राऽपि हि क्रियाफलं
कर्तारमभिप्रैति । याजका यजन्ति गा लप्स्यामह इति । कर्मकराः कुर्वन्ति पादिकमहर्लप्स्यामह इति । एवं तर्हि कर्त्रभिप्राये क्रियाफल इत्युच्यते, सर्वत्र च कर्त्तारं क्रियाफलमभिप्रैति, तत्र प्रकर्षगतिर्विज्ञास्यते--साधीयो यत्र कर्तारं क्रियाफलमभिप्रैति । न चान्तरेण यजिं यजिफलं वपिं वा वपिफलं लभन्ते । याजकाः पुनरन्तरेणाऽपि यजिं गा लभन्ते भृतकाश्च पादिकमिति ।। 72 ।।
-1-3-78- शेषात्कर्तरि परस्मैपदम्
शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः ।। 1 ।।
शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधो वक्तव्यः । भिद्यते कुसूलः स्वयमेव, छिद्यते रज्जुः स्वयमेवेति ।। एवं तर्हि शेषे इति वक्ष्यामि ।
सप्तम्या चेत्प्रकृतेः प्रतिषेधः ।। 2 ।।
सप्तम्या चेत्प्रकृतेः प्रतिषेधो वक्तव्यः । आस्ते शेते च्यवन्ते प्लवन्ते ।
सिद्धं तूभयनिर्देशात् ।। 3 ।।
सिद्धमेतत् । कथम् ?। उभयनिर्देशः कर्तव्यः । शेषाच्छेष इति वक्तव्यम् । कर्तृग्रहणमिदानीं किमर्थं स्यात् ?।
कर्तृग्रहणमनुपराद्यर्थम् ।। 4 ।।
अनुपराद्यर्थमेतत्स्यात्। इह मा भूत्--अनुक्रियते स्वयमेव, पराक्रियते स्वयमेवेति ।। सिद्ध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं--शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः इति । नैषः दोषः । कर्तरि कर्मव्यतिहारे (1.3.14) इत्यत्र कर्तृग्रहणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते शेषात्कर्तरि कर्तरीति । कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता चान्यश्च यः कर्ता तत्र मा भूदिति ।। 78 ।।
-1-3-79- अनुपराभ्यां कृञः
किमर्थमिदमुच्यते ?।
परस्मैपदप्रतिषेधात्कृञ्ञादिषु विधानम् ।। 1 ।।
परस्मैपदप्रतिषेधात्कृञ्ञादिषु परस्मैपदं विधीयते । प्रतिषिद्ध्यते तत्र परस्मैपदम् स्वरितञ्ञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति ।
अस्ति प्रयोजनमेतत् । किं तर्हीति ?।
तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वात् ।। 2 ।।
तत्रात्मनेपदस्य प्रतिषेधो वक्तव्यः । किं कारणम् ?। अप्रतिषिद्धत्वात् । नह्यात्मनेपदं प्रतिषिद्ध्यते । किं तर्हि ?। पस्मैपदमनेन विधीयते ।
न वा द्युतादिभ्यो वावचनात् ।। 3 ।।
न वा एष दोषः । किं कारणम् ?। द्युतादिभ्यो वावचनात् । यदयं द्युतादिभ्यो वावचनं करोति तज्ज्ञापयत्याचार्यः --- न परस्मैपदविषये आत्मनेपदं भवतीति ।
आत्मनेपदनियमे वा प्रतिषेधः ।। 4 ।।
आत्मनेपदनियमे वा प्रतिषेधो वक्तव्यः । स्वरितञ्ञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति, कर्तर्यनुपराभ्यां कृञ्ञो नेति । सिद्ध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं । तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वाद्। इति । परिहृतमेतत् न वा द्युतादिभ्यो वावचनादिति ।
अथवा इदं तावदयं प्रष्टव्यः --- स्वरितञ्ञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति परस्मैपदं कस्मान्न भवति । आत्मनेपदेन बाध्यते । यथैव तर्ह्यात्मनेपदेन परस्मैपदं बाध्यते, एवं परस्मैपदेनाप्यात्मनेपदं बाधिष्यते ।। 79 ।।
-1-3-86- बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः
बुधादिषु येऽकर्मकास्तेषां ग्रहणं किमर्थम् ? बुधादिषु येऽकर्मकास्तेषां ग्रहणं सकर्मकार्थमचित्तवत्कर्तृकार्थं वा ।। 86 ।।
-1-3-88- अणावकर्मकाच्चित्तवत्कर्तृकात्
अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदवचनम् ।। 1 ।।
अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदं वक्तव्यम् । इहापि यथा स्यात् चेतयमानं प्रयोजयति चेतयति ।
यदि तर्ह्यत्रापीष्यते अणिग्रहणमिदानीं किमर्थं स्यात् ? अकर्मकग्रहणमण्यन्तविशेषणं यथा विज्ञायेत । अथाऽक्रियमाणेऽणिग्रहणे अकर्मकग्रहणं कस्य विशेषणं स्यात् ? णेरिति वर्तते। ण्यन्तविशेषणं स्यात् । तत्र को दोषः ? इहैव यथा स्यात् -- चेतयमानं प्रयोजयति चेतयति । इह न स्यात्

-- आसयति शाययतीति ।
सिद्धं त्वतस्मिण्णाविति वचनात् ।। 2 ।।
सिद्धमेतत् । कथम् ? अतस्मिण्णौ यः अकर्मकस्तत्रेति वक्तव्यम् ।
सिद्ध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तम् अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदवचनमिति । नैषः दोषः । अणाविति कस्येदं णेर्ग्रहणम् । यस्माण्णेः प्राक्कर्म कर्ता वा विद्यते । न चैतस्माण्णेः प्राक्कर्म कर्ता वा विद्यते ।। 88 ।।
-1-3-89- न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः
पादिषु धेट उपसंख्यानम् ।। 1 ।।
पादिषु धेट उपसंख्यानं कर्तव्यम् । धापयेते शिशुमेकं समीची ।। 89 ।।
-1-3-93- लुटि च क्लृपः
किमर्थश्चकारः ?। स्यसनोरित्येतदनुकृष्यते । यदि तर्हि नान्तरेण चकारमनुवृत्तिर्भवति, द्युद्भ्यो लुङि (1.3.91) इत्यत्रापि चकारः कर्तव्यः विभाषेत्यनुकर्षणार्थः। अथेदानीमन्तरेणापि चकारनुवृत्तिर्भवति, इहापि नार्थश्चकारेण ।। एवं सर्वे चकाराः प्रत्याख्यायन्ते ।। 93 ।।
इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च तृतीयः
समाप्तः ।
-9-9-999-

# महाभाष्यम्/प्रथमोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/nm7
< महाभाष्यम् | प्रथमोऽध्यायः
-1-4-1- आकडारादेका संज्ञा (241)
किमर्थमिदमुच्यते ?
अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् ।। 1 ।।
अन्यत्र संज्ञासमावेशो भवति । क्वान्यत्र ? लोके व्याकरणे च । लोके तावत् -- इन्द्रः शक्रः पुरुहूतः पुरन्दरः कन्दुः कोष्ठः कुसूल इति । एकस्य द्रव्यस्य बह्वयः संज्ञा भवन्ति । व्याकरणेपि कर्तव्यं हर्तव्यमित्यत्र प्रत्ययकृत्कृत्यसंज्ञानां समावेशो भवति । पाञ्चालः वैदेहः वैदर्भ इति प्रत्ययतद्धिततद्राजसंज्ञानां समावेशो भवति । अन्यत्र संज्ञासमावेशादेतस्मात्कारणादाकडारादपि संज्ञानां समावेशः प्राप्नोति । इष्यते चैकैव संज्ञा स्यादिति । तच्चान्तरेण यत्नं न सिद्ध्यतीति नियमार्थं वचनम् । एवमर्थमिदमुच्यते ।
अस्ति प्रयोजनमेतत् । किं तर्हीति ।
कथं त्वेतत्सूत्रं पठितव्यम्, किम् आकडारादेका संज्ञाःथ्य;ति, आहोस्वित् प्राक्कडारात्परं कार्यमिति ? कुतः पुनरयं सन्देहः ? उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः । केचिद् आकडारादेका संज्ञाःथ्य;ति। केचित् प्राक्कडारात्परं कार्यमिति । कश्चात्र विशेषः ?
तत्रैकसंज्ञाधिकारे तद्वचनम् ।। 2 ।।
तत्रैकसंज्ञाधिकारे तद्वक्तव्यम् । किम् ? एका संज्ञा भवतीति ।
ननु च यस्यापि परंकार्यत्वं तेनापि परग्रहणं कर्तव्यम् । परार्थं मम भविष्यति -- विप्रतिषेधे चःथ्य;ति । ममापि तर्ह्येकग्रहणं परार्थं भविष्यति -- सरूपाणामेकशेष एकविभक्तौ (1.2.64) इति । संज्ञाधिकारश्चायम् । तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः । तत्रैतावद्वाच्यम् -- आकडारादेका। किम् ? एक संज्ञा भवतीति ।
अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः ।। 3 ।।
अङ्गसंज्ञया भपदसंज्ञायोः समावेशो न प्राप्नोति । सार्पिष्कः बार्हिष्कः। याजुष्कः। धानुष्कः। बाभ्रव्यः माण्डव्य इति । अनवकाशे भपदसंज्ञे अङ्गसंज्ञां बाधेयाताम् । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः । यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वे तस्य भपदसंज्ञे पराऽङ्गसंज्ञा । कथम् ? एवं स वक्ष्यति -- यस्मात्प्रत्ययविधिस्तदादि सुप्तिङन्तं पदम् । नः क्ये सिति च स्वादिष्वसर्वनामस्थाने यचि भम् । तस्यान्ते प्रत्ययेङ्गमिति । तत्रारम्भसामर्थ्याच्च भपदसंज्ञे। परंकार्यत्वाच्चाङ्गसंज्ञा भविष्यति ।
ननु च यस्याप्येकसंज्ञाधिकारस्तस्याप्यङ्गसंज्ञापूर्विके भपदसंज्ञे । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।
कर्मधारयत्वे तत्पुरुषग्रहणम् ।। 4 ।।
कर्मधारयत्वे तत्पुरुषग्रहणं कर्तव्यम् -- तत्पुरुषः समानाधिकरणः कर्मधारय (1.2.42) इति । एक संज्ञाधिकार इति चोदितम् । अक्रियमाणे हि तत्पुरुषग्रहणे ह्यनवकाशा कर्मधारयसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।
यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य
कर्मधारयसंज्ञा परा तत्पुरुषसंज्ञा । कथम् ? एवं स वक्ष्यति -- पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारय इति । एवं सर्वं कर्मधारयप्रकरणमनुक्रम्य तस्यान्ते श्रितादिभिस्तत्पुरुषः इति । तत्रारम्भसामर्थ्याच्च कर्मधारयसंज्ञा, परंकार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ।
ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका कर्मधारयसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।
तत्पुरुषत्वे द्विगुचग्रहणम् ।। 5 ।।
तत्पुरुषत्वे द्विगुचग्रहणं कर्तव्यम् । तत्पुरुषः (2.1.22) द्विगुश्च (23) इति चकारः कर्तव्यः । अक्रियमाणे हि चकारग्रहणेऽनवकाशा द्विगुसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि
नियमानुपपत्तेरुभयसंज्ञाभावः ।
यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य द्विगुसंज्ञा परा
तत्पुरुषसंज्ञा । कथम् ? एवं स वक्ष्यति -- तद्धितार्थोत्तरपदसमाहारे च (2.1.51) संख्यापूर्वो द्विगुः (52) इति । एवं सर्वं द्विगुप्रकरणमनुक्रम्य तस्यान्ते श्रितादिभिस्तत्पुरुषः इति । तत्रारम्भसामर्थ्याच्च द्विगुसंज्ञा, -- - परंकार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ।
ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका द्विगुसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।
गतिदिवः कर्महेतुमत्सु चग्रहणम् ।। 6 ।।
गतिदिवःकर्महेतुमत्सु चग्रहणं कर्तव्यम् ।। उपसर्गाः क्रियायोगे (1.4.59) गतिश्च (60) इति चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशोपसर्गसंज्ञा गतिसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।
यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्योपसर्गसंज्ञा परा गतिसंज्ञा।

तत्राम्भसार्मथ्याच्चोपसर्गसंज्ञा, परंकार्यत्वाच्च गतिसंज्ञा भविष्यति।
ननु च यस्याप्येकसंज्ञाधिकारस्तस्याऽप्युपसर्गसंज्ञापूर्विका गतिसंज्ञा । कथम्? अनुवृत्तिः क्रियते।
पर्यायः प्रसज्येत। एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः। गतिसंज्ञाप्यनवकाशा वचनाद्भविष्यति।
सावकाशा गतिसंज्ञा। कोऽवकाशः? ऊर्यादीन्यवकाशः। प्रादीनां या गतिसंज्ञा सानवकाशा गति।

दिवः कर्म -- साधकतमं करणम् (1.4.42) दिवः कर्म च (43) इति चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा कर्मसंज्ञा करणसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।। यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभियोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य कर्मसंज्ञा, परा करणसंज्ञा । कथम् ? एवं स वक्ष्यति -- दिवः साधकतमं कर्म । ततः करणम् । करणसंज्ञं च भवति साधकतमम् । दिव इति निवृत्तम् । तत्रारम्भसार्मथ्याच्च कर्मसंज्ञा परंकार्यत्वाच्च करणसंज्ञा भविष्यति ।। ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि करणसंज्ञापूर्विका कर्मसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः । दिवः कर्म ।
हेतुमत्। स्वतन्त्रः कर्ता (1.4.54) तत्प्रयोजको हेतुश्च (55) इति चकारः कर्तव्यः ।
अक्रियमाणे हि चकारेऽनवकाशा हेतुसंज्ञा कर्तृसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।। यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य हेतुसंज्ञा, परा कर्तृसंज्ञा । कथम् ? एवं स वक्ष्यति -- स्वतन्त्रः प्रयोजको हेतुरिति । ततः कर्ता । कर्तृसंज्ञश्च भवति स्वतन्त्रः । प्रयोजकःध्य;ति निवृत्तम् । तत्रारम्भसार्मथ्याच्च हेतुसंज्ञा, परंकार्यत्वाच्च कर्तृसंज्ञा भविष्यति ।। ननु च यस्याप्येकसञ्ज्ञाधिकारस्तस्यापि कर्तृसंज्ञापूर्विका हेतुसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।
गुरुलघुसंज्ञे नदीघिसंज्ञे ।। 7 ।।
गुरुलघुसंज्ञे नदीघिसंज्ञे बाधेयाताम् । गार्गीबन्धुः वात्सीबन्धुः । वैनम् विविनय्य । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।। यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वे तस्य नदीधिसंज्ञे, परे गुरुलघुसंज्ञे । तत्रारम्भसार्मथ्याच्च नदीघिसंज्ञे, परंकार्यत्वाच्च गुरुलघुसंज्ञे भविष्यतः ।। ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञापूर्विके गुरुलघुसंज्ञे । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।
परस्मैपदसंज्ञां पुरुषसंज्ञा ।। 8 ।।
परस्मैपदसंज्ञां पुरुषसंज्ञा बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।। यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः कथम् ? पूर्वा तस्य पुरुषसंज्ञा परा परस्मैपदसंज्ञा । कथम् ? एवं स वक्ष्यति -- तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमा इति । एवं सर्वं पुरुषनियममनुक्रम्य तस्यान्ते लः
परस्मैपदमिति । तत्रारम्भसार्मथ्याच्च पुरुषसंज्ञा, परंकार्यत्वाच्च परस्मैपदसंज्ञा भविष्यति ।। ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि परस्मैपदसंज्ञापूर्विका पुरुषसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।
परस्मैपदसंज्ञाप्यनवकाशा सा वचनाद्भविष्यति । सावकाशा परस्मैपदसंज्ञा । कोऽवकाशः ? शतृक्वसू अवकाशः।
परवचने सिति पदं भम् ।। 9 ।।
परवचने सिति पदं भसंज्ञमपि प्राप्नोति । अयं ते योनिर्ऋत्वियः । प्रजां विन्दाम ऋत्वियः । आरम्भसार्मथ्याच्च पदसंज्ञा, परंकार्यत्वाच्च भसंज्ञा प्राप्नोति ।
गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञम् ।। 10 ।।
गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञमपि प्राप्नोति। आरम्भसार्मथ्याच्च कर्मसंज्ञा, परंकार्यत्वाच्च कर्तृसंज्ञा प्राप्नोति ।
नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति -- न कर्म संज्ञायां कर्तृसंज्ञा भवतीति। यदयं ह्रकोरन्यतरस्याम् (1.4.53) इत्यन्तरस्याङ्ग्रहणं करोति ।
शेषवचनं च घिसंज्ञानिवृत्त्यर्थम् ।। 11 ।।
शेषवचनं च कर्तव्यम् -- शेषो घ्यसखि (1.4.7) इति । किं प्रयोजनम् ? घिसंज्ञानिवृत्त्यर्थम् । नदीसंज्ञायां घिसंज्ञा मा भूदिति । शकट्यै पद्धत्यै बुद्धयै धेन्वै । इतरथा
हि परंकार्यत्वाच्च घिसंज्ञा आरम्भसार्मथ्याच्च ङिति ह्रस्वश्च (1.4.6) इति नदीसंज्ञा ।
न वाऽसंभवात् ।। 12 ।।
न वा कर्तव्यम् । नदीसंज्ञायां घिसंज्ञा कस्मान्न भवति ? असंभवात् । कोसावसंभवः ?
ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः।
ह्रस्वलक्षणा हि नदीसंज्ञा, घिसंज्ञायां च गुणेन भवितव्यम् । तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः । तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञा न भविष्यति । किं कारणम् ? आश्रयाभावात् ।
आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति
चेद्यणादेशाभावः ।। 13।।
आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेदेवमुच्यते यणादेशोऽपि न प्राप्नोति ।। नैष दोषः ।
नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः ।। 14 ।।
नद्याश्रयो यणादेशः । यदा नदीसंज्ञया घिसंज्ञा बाधिता तत उत्तरकालं यणादेशेन भवितव्यम् । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञा भविष्यति ।
बहुव्रीह्यर्थं तु ।। 15 ।।

बहुव्रीहिप्रतिषेधार्थं तु शेषग्रहणं कर्तव्यम् -- शेषो बहुव्रीहिः(2.2.23) इति ।
किं प्रयोजनम् ?
प्रयोजनमव्ययीभावोपमानद्विगुकृल्लोपेषु ।। 16 ।।
अव्ययीभाव -- उन्मत्तगङ्गम् लोहितगङ्गम् । उपमान -- शस्त्रीश्यामा कुमुदश्येनी । द्विगु -- पञ्चगवं दशगवम्। कृल्लोपे -- निष्कौशाम्बिः निर्वाराणसिः ।
तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु
बहुव्रीहिप्रतिषेधः ।। 17 ।।
तत्र शेषवचनाद्दोषो भवति । सङ्ख्यासमानाधिकरणनञ्समासेषु बहुव्रीहेः प्रतिषेधः प्राप्नोति । सङ्ख्या -- द्वीरावतीको देशः, त्रीरावतीको देशः । समानाधिकरण -- वीरपुरुषको ग्रामः । नञ्समासे -- अब्राह्मणको देशः, अवृषलको देशः ।
कृल्लोपे च शेषवचनात्प्रादिभिर्न बहुव्रीहिः ।। 18 ।।
कृल्लोपे च शेषवचनात्प्रादिभिर्बहुव्रीहिर्न प्राप्नोति । प्रपतितपर्णः प्रपर्णकः । प्रपतिपलाशः प्रपलाशक इति। अथैकसंज्ञाधिकारे कथं सिद्ध्यति ?
एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिः ।। 19 ।।
एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिर्भविष्यति ।
एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत्क्तार्थे प्रतिषेधः ।। 20 ।।
एकसंज्ञाधिकारे विप्रतिषेधाद् बहुव्रीहिरिति चेत्क्तार्थे प्रतिषेधो वक्तव्यः । निष्कौशाम्बिः निर्वाराणसिः ।। तत्पुरुषोऽत्र बाधको भविष्यति ।
तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधः ।। 21 ।।
तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधो वक्तव्यः । प्रपतितपर्णः प्रपर्णकः । प्रपतितपलाशः प्रपलाशक इति ।
सिद्धं तु प्रादीनां क्तार्थे तत्पुरुषवचनात् ।। 22 ।।
सिद्धमेतत् । कथम् ? प्रादीनां क्तार्थे तत्पुरुषो भवतीति वक्तव्यम् ।
कानि पुनरस्य योगस्य प्रयोजनानि ?
प्रयोजनं ह्रस्वसंज्ञां दीर्घप्लुतौ ।। 23 ।।
ह्रस्वसंज्ञां दीर्घप्लुतसंज्ञे बाधेते ।
तिङ्सार्वधातुकं लिङ्लिटोरार्धधातुकम् ।। 24 ।।
तिङ्सार्वधातुकसंज्ञां लिङ्टोरार्धधातुकसंज्ञा बाधते ।
अपत्यं वृद्धं युवा ।। 25 ।।
अपत्यं वृद्धं युवसंज्ञा बाधते ।
घिन्नदी ।। 26 ।।
घिसंज्ञां नदीसंज्ञा बाधते ।
लघु गुरु ।। 27 ।।
लघुसंज्ञां गुरुसंज्ञा बाधते।
पदं भम् ।। 28 ।।
पदसंज्ञां भसंज्ञा बाधते ।
अपदानमुत्तराणि ।। 29 ।।
अपदानसंज्ञामुत्तराणि कारकाणि बाधन्ते। क्व ? धनुषा विध्यति, कंसपात्र्यां भुङ्क्ते, गां दोग्धि, धनुर्विध्यति ।
धनुषा विध्यतीत्यपाययुक्तत्वाच्च ध्रुवमपायेऽपादानम् (1.4.24) इत्यपादानसंज्ञा प्राप्नोति, साधकतमं करणम् (42) इति च करणसंज्ञा । परा, सा भवति । कंसपात्र्यां भुङ्क्ते इत्यत्रापाययुक्तत्वाच्च ध्रुवमपायेऽपादानमित्यपादानसंज्ञा प्राप्नोति। आधारोऽधिकरणम् (45) इति चाऽधिकरणसंज्ञा । सा परा, भवति । गां दोग्धीत्यत्रापाययुक्तत्वाच्चाऽपादानसंज्ञा प्राप्नोति। कर्तुरीप्सिततमं कर्म (49) इति कर्मसंज्ञा । सा परा,भवति । धनुर्विध्यतीत्यत्रापाययुक्तत्वाच्चापादानसंज्ञा प्राप्नोति। स्वतन्त्रः कर्ता (54) इति कर्तृसंज्ञा । सा परा भवति ।
क्रुधद्रुहोरुपसृष्टयोः कर्म संप्रदानम् ।। 30 ।।
क्रुधद्रुहोरुपसृष्टयोः कर्मसंज्ञा संप्रदानसज्ञां बाधते। .
करणं पराणि ।। 31 ।।
करणसंज्ञा पराणि कारकाणि बाधन्ते । क्व ? धनुर्विध्यति, असिश्छिनत्तीति ।
अधिकरणं कर्म ।। 32 ।।
अधिकरणसंज्ञां कर्मसंज्ञा बाध्यते । क्व? गेहं प्रविशतीति ।
अधिकरणं कर्ता स्थाली पचति ।। 33 ।।
अधिकरणसंज्ञां कर्तृसंज्ञा बाधते। क्व ? स्थाली पचतीति ।
अध्युपसृष्टं कर्म ।। 34 ।।
अध्युपसृष्टं कर्माऽधिकरणसंज्ञां बाधते।
गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा ।। 35 ।।

गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा बाधते ।
परस्मैपदमात्मनेपदम् ।। 36 ।।
परस्मैपदसंज्ञामात्मनेपदसंज्ञा बाधते ।
समाससंज्ञाश्च ।। 37 ।।
समाससंज्ञाश्च या याः परा अनवकाशाश्च, तास्ताः पूर्वाः सावकाशाश्च बाधन्ते ।
अर्थवत्प्रातिपदिकम् ।। 38 ।।
अर्थवत्प्रातिपदिकसंज्ञं भवति ।
गुणवचनं च ।।39 ।।
गुणवचनसंज्ञं च भवत्यर्थवत् ।
समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः ।। 40 ।।
समास -- समाससंज्ञा च वक्तव्या । कृत्-कृत्संज्ञा च वक्तव्या । तद्धित-तद्धितसंज्ञा च वक्तव्या । अव्यय -- अव्ययसंज्ञा च वक्तव्या । सर्वनाम -- सर्वनामसंज्ञा च वक्तव्य । असर्वलिङ्गा जातिरित्येतच्च वक्तव्यम् ।
संख्या ।। 41 ।।
संङ्ख्यासंज्ञा च वक्तव्या ।
डु च ।। 42 ।।
डुसंज्ञा च वक्तव्या ।। का पुनर्डुसंज्ञा ? षट्संज्ञा ।
एकद्रव्योपनिवेशिनी संज्ञा ।। 43 ।।
एकद्रव्योपनिवेशिनी संज्ञेत्येतच्च वक्तव्यम् । किमर्थमिदमुच्यते। यथान्यास एव भूयिष्ठाः संज्ञाः क्रियन्ते ?
सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः । अपि चैतेनानुपूर्व्येण संनिविष्टानां बाधनं यथा स्यात् । गुणवचनसंज्ञायाश्चैताभिः संज्ञाभिर्बाधनं यथा स्यादिति ।। 1 ।।
-1-4-2- विप्रतिषेधे परं कार्यम् (242)
विप्रतिषेध इति कोऽयं शब्दः ? विप्रतिपूर्वात्सिधेः कर्मव्यतिहारे घञ् । इतरेतरप्रतिषेधो विप्रतिषेधः । अन्योन्यप्रतिषेधो विप्रतिषेधः ।
कः पुनर्विप्रतिषेधः ?
द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः ।। 1 ।।
द्वौ प्रसङ्गौ यदान्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतः स विप्रतिषेधः । क्व पुनरन्यार्थौ क्व चैकस्मिन्युगपत्प्राप्नुतः ? वृक्षाभ्यां वृक्षेष्वित्यन्यार्थौ, वृक्षेभ्य इत्यत्र युगपत्प्राप्नुतः ।। किं च स्यात् ?
एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः ।। 2 ।।
एकस्मिन्युगपदसंभवात्पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गः ।। इदं विप्रतिषिद्धं यदुच्यते -- एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः इति । कथं ह्येकस्मिंश्च युगपदसंभवः स्यात्पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गश्च स्यात् ? नैतद्विप्रतिसिद्धम् । यदुच्यते -- एकस्मिन्युगपदसंभवादिति। कार्ययोर्युगपदसंभवः, शास्त्रयोरुभयप्रसङ्गः ।
तृजादिभिस्तुल्यम् ।। 3 ।।
तृजादिभिस्तुल्यं पर्यायः प्राप्नोति । तद्यथा तृजादयः पर्यायेण भवन्ति ।
किं पुनः कारणं तृजादयः पर्यायेण भवन्ति ?
अनवयवप्रसङ्गात्प्रतिपदं विधेश्च ।। 4 ।।
अनवयवेन प्रसज्यन्ते प्रतिपदं च विधीयन्ते ।
अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात् ।। 5 ।।
अप्रतिपत्तिर्वा पुनरुभयोः शास्त्रयोः स्यात् । किं कारणम् ? तुल्यबलत्वात् । तुल्यबले ह्युभे शास्त्रे । तद्यथा -- द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति । यदा तु तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदा यद्यसावविरोधार्थी भवति उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति ? योगपद्यासंभवात्
। नास्ति यौगपद्येन संभवः । तत्र प्रतिपत्त्यर्थं वचनम्। तत्र प्रतिपत्त्यर्थमिदं वक्तव्यम् ।
तव्यदादीनां त्वप्रसिद्धिः ।। 6 ।।
तव्यदादीनां तु कार्यस्याऽप्रसिद्धिः । नहि किंचित्तव्यदादिषु नियमकारि शास्त्रमारभ्यते येन तव्यदादयः स्युः । यश्च भवता हेतुर्व्यपदिष्टः । अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्।इति, तुल्यः स तव्यदादिषु ।
नैषः दोषः । अनवकाशास्तव्यदादयः। उच्यन्ते च। ते वचनाद्भविष्यन्ति । यश्च भवता हेतुर्व्यपदिष्टः -- तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति, तुल्यः स तव्यदादिषु ।
एतावदिह सूत्रम् विप्रतिषेधे परमिति । पठिष्यति ह्याचार्यः सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति । पुनश्च पठिष्यति -- पुनः प्रसङ्गविज्ञानात्सिद्धमिति ।
किं पुनरियता सूत्रेणोभयं लभ्यम् ? लभ्यमित्याह । कथम् ? इह भवता द्वौ हेतू व्यपदिष्टौ -- तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति च, अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति च ।

तद्यदा तावदेष हेतुस्तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति, तदा विप्रतिषेधे परमित्यनेन किं क्रियते ? नियमः -- विप्रतिषेधे परमेव भवतीति । तदैतदुपपन्नं भवति -- सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति । यदा त्वेष हेतुरप्रतिपत्तिरुभयोस्तुल्यबलत्वादिति, तदा विप्रतिषेधे परमित्यनेन किं क्रियते ? द्वारम् -- विप्रतिषेधे परं तावद्भवति तस्मिन्कृते यदि पूर्वमपि प्राप्नोति तदपि भवति । तदैतदुपपन्नं भवति -- पुनः प्रसङ्गविज्ञानात्सिद्धमिति ।

विप्रतिषेधे परमङ्गाधिकारे पूर्वम् ।। 7।।

विप्रतिषेधे परमित्युक्त्वाऽङ्गाधिकारे पूर्वमिति वक्तव्यम् । किं कृतं भवति ? पूर्वविप्रतिषेधा न पठितव्या भवन्ति -- गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् नुमचिरतृज्वद्भावेभ्यो नुट् इति । कथं ये परविप्रतिषेधाः -- इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति । सूत्रं च भिद्यते । यथान्यासमेवास्तु । कथं ये पूर्वविप्रतिषेधाः ? विप्रतिषेधे परमित्येव सिद्धम् । कथम् ? परशब्दोऽयं बह्वर्थः । अस्त्येव व्यवस्थायां वर्तते । तद्यथा -- पूर्वः परः इति । अस्त्यन्यार्थे वर्तते -- परपुत्रः परभार्या अन्यपुत्रः अन्यभार्येति गम्यते । अस्ति प्राधान्ये वर्त्तते ।

तद्यथा -- परमियं ब्राह्मण्यस्मिन्कुटुम्बे प्रधानमिति गम्यते । अस्तीष्टवाची परशब्दः । तद्यथा -- परं धाम गतः इष्टं धामेति गम्यते । तद्य इष्टवाची परशब्दस्तस्येदं ग्रहणं विप्रतिषेधे परं यदिष्टं तद्भवतीति ।

अन्तरङ्गं च ।। 8 ।।

अन्तरङ्गं च बलीयो भवतीति वक्तव्यम् । किं प्रयोजनम् ?

प्रयोजनं यणेकादेशेत्त्वोत्त्वानि गुणवृद्धिद्विर्वचनाल्लोपस्वरेभ्यः ।। 9 ।।

गुणाद्यणादेशः -- स्योनः स्योना । गुणश्च प्राप्नोति यणादेशश्च । परत्वाद् गुणः स्यात् । यणादेशो भवत्यन्तरङ्गतः । वृद्धेर्यणादेशः -- द्यौकामिः स्यौकामिः । वृद्धिश्च प्राप्नोति यणादेशश्च। परत्वाद्वृद्धिः स्यात् । यणादेशो भवत्यन्तरङ्गतः । द्विर्वचनाद्यणादेशः -- दुद्यूषति सुस्यूषति । द्विर्वचनं च प्राप्नोति यणादेशश्च। नित्यत्वाद् द्विर्वचनं स्यात् । यणादेशो भवत्यन्तरङ्गतः ।। अल्लोपस्य च यणादेशस्य च नास्ति संप्रधारणा । स्वराद्यणादेशः -- द्यौकामिः स्यौकामिः । स्वरश्च प्राप्नोति यणादेशश्च । परत्वात्स्वरः स्यात् । यणादेशो भवत्यन्तरङ्गतः । गुणादेकादेशः -- काद्रवेयो मन्त्रमपश्यत् । गुणादेशश्च प्राप्नोत्येकादेशश्च। परत्वाद्गुणः स्यात् । एकादेशो भवत्यन्तरङ्गतः । वृद्धेरेकादेशः -- वैक्षमाणिः सौत्थितिः । वृद्धिश्च प्राप्नोत्येकादेशश्च । परत्वाद्वृद्धिः स्यात् । एकादेशो भवत्यन्तरङ्गतः । द्विर्वचनादेकादेशः -- ज्ञाया ओदनः ज्ञौदनः । ज्ञौदनमिच्छति ज्ञौदनीयति । ज्ञौदनीयतेः सन् । जुज्ञौदनीयिषति । द्विर्वचनं च प्राप्नोत्येकादेशश्च। नित्यत्वाद् द्विर्वचनं स्यात् । एकादेशो भवत्यन्तरङ्गतः । अल्लोपादेकादेशः -- शुना शुने । अल्लोपश्च प्राप्नोत्येकादेशश्च । परत्वादल्लोपः स्यात् । एकादेशो भवत्यन्तरङ्गतः ।

नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषोऽल्लोपेन वा निवृत्तौ सत्यां, पूर्वत्वेन वा । अयमस्ति विशेषोऽल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः प्रसज्येत । नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति । किं कारणम् ? न गोश्वन्सावर्ण
(6.1.182) इति प्रतिषेधात् । नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः ।

कस्य तर्हि ? तृतीयादिस्वरस्य । यत्र तर्हि तृतीयादिस्वरो नास्ति शुनः पश्येति । एवं तर्हि न लाक्षणिकस्य प्रतिषेधं शिष्मः । किं तर्हि ? येन केन चित्प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधः । यत्र तर्हि विभक्तिर्नास्ति -- बहुशुनीति ।

यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत । नैवं शक्यम् । इहापि प्रसज्येत -- कुमारीति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति -- नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति। यदयं श्वन्शब्दं गौरादिषु पठति अन्तोदात्तार्थं यत्नं करोति । सिद्धं हि स्यान्ङीपैव ।

स्वरादेकादेशः -- सौत्थितिः वैक्षमाणिः । स्वरश्च प्राप्नोत्येकादेशश्च । परत्वात्स्वरः स्यात् । एकादेशो भवत्यन्तरङ्गतः । गुणस्य चेत्त्वौत्त्वयोश्च नास्ति संप्रधारणा । वृद्धेरित्त्वोत्त्वे -- स्तैर्णिः पौर्तिः । वृद्धिश्च प्राप्नोतीत्त्वोत्त्वे च । परत्वाद्वृद्धिः स्यात् , इत्वोत्त्वे भवतोन्तरङ्गतः । द्विर्वचनादित्त्वोत्त्वे -- आतेस्तीर्यते आपोपूर्यते । द्विर्वचनं च प्राप्नोतीत्त्वोत्त्वे च । नित्यत्वाद् द्विर्वचनं स्यात् । इत्वोत्त्वे भवतोऽन्तरङ्गतः ।। अल्लोपस्य चेत्त्वोत्त्वयोश्च नास्ति संप्रधारणा ।। स्वरो नास्ति विशेषः ।

इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात् ।। 10 ।।

इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात् प्रयोजनम् । अयज इन्द्रम् अवप इन्द्रम् । वृक्ष इन्द्रं प्लक्ष इन्द्रम् ।त इन्द्रम् । यःथ्य;न्द्रम् । आद्गुणश्च प्राप्नोति सवर्णदीर्घत्वं च। परत्वात्सवर्णदीर्घत्वं स्यात् । आद्गुणो भवत्यन्तरङ्गतः ।

न वा सवर्णदीर्घत्वस्यानवकाशत्वात् ।। 11 ।।

न वैतदन्तरङ्गेणाऽपि सिध्यति । किं कारणम् ? सवर्णदीर्घत्वस्यानवकाशत्वात् । अनवकाशं सवर्णदीर्घत्वमाद्गुणं बाधेत ।। नैतदन्तरङ्गेऽस्त्यनवकाशं परमिति । इहापि स्योनः स्योनेति शक्यं वक्तुम् ।न
वा परत्वाद् गुणस्येति ।

ऊङापोरेकादेश इत्त्वलोभ्याम् ।। 12 ।।

ऊङापोरेकादेश इत्त्वलोपाभ्यां भवत्यन्तरङ्गतः प्रयोजनम् । इत्त्वादेकादेशः -- खट्वीयति मालीयति । इत्त्वं च प्राप्नोत्येकादेशश्च। परत्वादीत्त्वं स्याद् । एकादेशो भवत्यन्तरङ्गतः ।। लोपादेकादेशः -- कामण्डलेयः भाद्रवाहेयः । लोपश्च प्राप्नोत्येकादेशश्च । परत्वाल्लोपः स्याद् । एकादेशो भवत्यन्तरङ्गतः ।। अथ किमर्थमीत्त्वलोपाभ्यामित्युच्यते, न लोपेत्त्वाभ्यामित्येवोच्येत ? संख्यातानुदेशो मा भूदिति । आपोप्येकादेशो लोपे प्रयोजयति -- चौडिः बालाकिः ।

आत्त्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकादेशतुग्विधिभ्यः ।। 13 ।।

आत्त्वनपुंसकोपसर्जनह्रस्वत्वानि अयवायावेकादेशतुग्विधिभ्यो भवन्त्यन्तरङ्गतः ।

वेञ्ञ् -- वानीयम् । शो -- शानीयम् । ग्लै -- ग्लानीयम् । म्लै -- म्लानीयम् । ग्लाच्छत्त्रम् । आत्त्वं च प्राप्नोत्येते च विधयः । परत्वादेते विधयः स्युः । आत्त्वं भवत्यन्यरङ्गतः ।। नपुंसकोपसर्जनह्रस्वत्वं च प्रयोजनम् । अतिर्यत्र। अतिन्वत्र । अतिरिच्छत्त्रम् अतिनुच्छत्त्रम् ।

आराशस्त्रीदम्। धानाशष्कुलीदम् । निष्कौशाम्बीदम्। निर्वारणसीदम् । निष्कौशाम्बिच्छत्रम्। निर्वाराणसिच्छत्रम् । नपुंसकोपसर्जनह्रस्वत्वं च प्राप्नोत्येते च विधयश्च । परत्वादेते विधयः स्युः । नपुंसकोपसर्जनह्रस्वत्वं भवत्यन्तरङ्गतः ।
तुग्यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्त्वमुमेत्त्वरीविधिभ्यः ।। 14 ।।
यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्त्वमुमेत्त्वरीविधिभ्यस्तुग्भवत्यन्तरङ्गतः । यणादेशात् -- अग्निचिदत्र सोमसुदत्र । एकादेशात् -- अग्निचिदिदम् सोमसुदुदकम् । गुणात् -- अग्निचिते सोमसुते । वृद्धेः -- प्रऋच्छकः प्राच्छर्कः । औत्त्वात् -- अग्निचिति सोमसुति । दीर्घत्वात् -- जगद्भ्याम् ,जनगद्भ्याम् । इत्त्वात् -- जगत्यति जनगत्यति । मुमः -- अग्निचिन्मन्यः सोमसुन्मन्यः । एत्त्वात् -- जगद्भ्यः जनगद्भ्यः । रीविधेः -- सुकृत्यति पापकृत्यति । (तुक् च प्राप्नोत्येते विधयश्च। परत्वादेते विधयः स्युः। तुग्भवत्यन्तरङ्गतःट
अनङानङ्भ्यां च ।। 15 ।।
अनङानङ्भ्यां चेति वक्तव्यम् । अनङ्- सुकृत् । आनङ्- सुकृद्दुष्कृतौ । (तुक् च प्राप्नोति अनङ्गानङ्गौ स्याताम् । तुग्भवत्यन्तरङ्गतः )
इयङादेशा गुणात् ।। 16।।
इयङादेशो गुणाद्भवत्यन्तरङ्गतः प्रयोजनम् । धियति रियति । इयङादेशः प्राप्नोति गुणश्च । परत्वाद् गुणः स्यात्। इयङादेशो भवत्यन्तरङ्गतः ।
उवङ्गादेश्च ।। 17 ।।
उवङादेशश्चेति वक्तव्यम् । प्रादुद्रुवत्। प्रासुस्रुवत् ।
श्वेः सम्प्रसारणपूर्वत्वं यणादेशात् ।। 18 ।।
श्वेः सम्प्रसारणपूर्वत्वं यणादेशाद्भवत्यन्तरङ्गतः प्रयोजनम् । शुशुवतुः शुशुवुः । पूर्वत्वं च
प्राप्नोति यणादेशश्च । परत्वाद्यणादेशः स्याद् । पूर्वत्वं भवत्यन्तरङ्गतः ।
ह्व आकारलोपात् ।। 19 ।।
ह्व आकारलोपात्पूर्वत्वं भवत्यन्तरङ्गतः प्रयोजनम् । जुहुवतुः जुहुवुः । पूर्वत्वं च प्राप्नोत्याकारलोपश्च। परत्वादाकारलोपः स्यात् । पूर्वत्वं भवत्यन्तरङ्गतः ।
स्वरो लोपात् ।। 20 ।।
स्वरो लोपाद्भवत्यन्तरङ्गतः प्रयोजनम् । औपगवी। सौदामनी । स्वरश्च प्राप्नोति लोपश्च। परत्वाल्लोपः स्यात् । स्वरो भवत्यन्तरङ्गतः ।
प्रत्ययविधिरेकादेशात् ।। 21 ।।
प्रत्ययविधिरेकादेशाद्भवत्यन्तरङ्गतः प्रयोजनम् । अग्निरिन्द्रः वायुरुदकम् । प्रत्ययविधिश्च प्राप्नोत्येकादेशश्च । परत्वादेकादेशः स्यात् । प्रत्ययविधिर्भवत्यन्तरङ्गतः ।
यणादेशाश्च ।। 22 ।।
यणादेशाच्चेति वक्तव्यम् । अग्निरत्र वायुरत्र ।
लादेशो वर्णविधेः ।। 23 ।।
लादेशो वर्णविधेर्भवत्यन्तरङ्गतः प्रयोजनम् । पचत्वत्र पठत्वत्र । लादेशश्च प्राप्नोति यणादेशश्च। परत्वाद्यणादेशः स्यात् । लादेशो भवत्यन्तरङ्गतः ।
तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरात् ।। 24 ।।
तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वराद्भवत्यन्तरङ्गतः प्रयोजनम्। पूर्वशालाप्रियः। अपरशालाप्रियः । तत्पुरुषान्तोदात्तत्वं च प्राप्नोति, पूर्वपदप्रकृतिस्वरत्वं च। परत्वात्पूर्वपदप्रकृतिस्वरत्वं स्यात्। तत्पुरुषान्तोदात्तत्वं भवत्यन्तरङ्गतः ।
एतान्येतस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या ।
यदि सन्ति प्रयोजनानीत्येषा परिभाषा क्रियते। ननु चेयं च कर्तव्या असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति । किं प्रयोजनम् ? पचावेदम्। पचामेदम् । बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणमैत्वं मा भूदिति । उभे तर्हि कर्तव्ये । नेत्याह । अनयैव
सिद्धम् । इहापि स्योनः स्योनेति,-असिद्धत्वाद्बहिरङ्गलक्षणस्य गुणस्याऽन्तरङ्गलक्षणो यणादेशो भविष्यति ।
यद्यसिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युच्यते-अक्षद्यूः हिरण्यद्यूः-असिद्धत्वाद् बहिरङ्गलक्षणस्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति । नैषः दोषः । असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युक्त्वा ततो वक्ष्यामि -- नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरिति । सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति -- भवत्येषा परिभाषेति, यदयं षत्वतुकोरसिद्धः (6.1.86) इत्याह ।
इयं तर्हि परिभाषा कर्तव्या-असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति। एषा च न कर्तव्या, आचार्यप्रवृत्तिर्ज्ञापयतिभवत्येषा परिभाषेति, यदयं वाह ऊठ् (6.4.132) इत्यूठं शास्ति ।
तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात् ।। 25 ।।
तस्यैतस्य लक्षणस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशादन्तरङ्गतोभिनिर्वृत्तान्न प्राप्नुतः । पूर्वैषुकामशमः अपरैषुकामशमः। गुडोदकं तिलोदकम् । उदके केवले (6.2.96) इति
पूर्वोत्तरपदयोर्व्यपवर्गाभावान्न स्यात् ।
नैषः दोषः । आचार्यप्रवृत्तिर्ज्ञापयति -- पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेशः इति, यदयं नेन्द्रस्य परस्य (7.3.22) इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इन्द्रे द्वावचौ । तत्रैको यस्येति च (6.4.148) इति लोपेनाऽपह्रियते, अपर एकादेशेन , ततोऽनच्क इन्द्रः संपन्नः , तत्र कः प्रसङ्गो वृद्धेः ? पश्यति त्वाचार्यः पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेशः इति। ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति ।

यणादेशादियुवौ ।। 26 ।।
यणादेशादियुवौ अन्तरङ्गतोभिनिर्वृत्तान्न प्राप्नुतः । वैयाकरणः सौवश्च इति । लक्षणं हि भवति -- -य्वोरचि वृद्धिप्रसङ्गे इयुवौ भवतः इति । नैषः दोषः । अनवकाशावियुवौ । अचीत्युच्यते ।। किं पुनः कारणमचीत्युच्यते ? इह मा भूताम्-ऐतिकायनः औपगव इति । स्तामत्रेयुवौ, लोपो व्योर्वलि (6.1.66) इति लोपो भविष्यति । यत्र तर्हि लोपो नास्ति -- प्रैयमेधः प्रैयङ्गव इति ।
उसि पररूपाच्च ।। 27 ।।
उसि पररूपाच्चान्तरङ्गतोभिनिर्वृत्तादियादेशो न प्राप्नोति । पचेयुः यजेयुः .
नैषः दोषः । नैवं विज्ञायते -- याःथ्य;त्येतस्येय् भवतीति । कथं तर्हि ? यास्इत्येस्येय् भवतीति ।
लुक्लोपयणयवायावेकादेशेभ्यः ।। 28 ।।
लोपयणयवायावेकादेशेभ्यो लुक्बलीयानिति वक्तव्यम् ।। लोपात् -- गोमान् प्रियोऽस्य गोमत्प्रियः । यवमत्प्रियः । गोमानिवाचरति गोमत्यते यवयत्यते । यणादेशात् -- ग्रामण्यः कुलं ग्रामणिकुलम् । सेनान्यः कुलं सेनानिकुलम् । अयवायावेकादेशेभ्यः -- गवे हितं गोहितम् । रायः कुलं रैकुलम् । नावः कुलं नौकुलम् । वृकाद्भयं वृकभयम् ।। लुक् च प्राप्नोत्येते च विधयश्च परत्वादेते विधयः स्युः । लुग्बलीयानिति वक्तव्यम्। लुक्यथा स्यात् ।। 2 ।।
चतुर्थे पादे प्रथममाह्निकम् ।।
-1-4-3- यू स्त्र्याख्यौ नदी (243)
यू इति किमर्थम् ? खट्वा। माला । किंच स्यात् ? खट्वाबन्धुः। मालाबन्धुः । नदी बन्धुनि (6.2.109) इत्येष स्वरः प्रसज्येत । इह च बहुखट्वक इति नद्यृतश्च (5.4.153) इति नित्यः कप्प्रसज्येत ।
नैषः दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नापो नदीसंज्ञा भवतीति यदयं ङेराम्नद्याम्नीभ्यः (7.3.116) इति पृथगाब्ग्रहणं करोति ।। इह तर्हि -- मात्रे मातुरिति आण्नद्याः (112) इत्याट्प्रसज्येत ।
किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विदह्रस्वयोः ? किं चातः ? यदि दीर्घयोर्ग्रहणं यू इति निर्देशो नोपपद्यते । दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यते । उत्तरत्र च (संज्ञि) विशेषणं न प्रकल्पेत यू ह्रस्वाविति । यदि यू, न ह्रस्वौ, अथ ह्रस्वौ, न यू । यू ह्रस्वौ चेति विप्रतिषिद्धम् ।। अथ ह्रस्वयोः, हे शकटे अत्रापि प्रसज्येत । नैषः दोषः । अवश्यमत्र विभाषा नदीसंज्ञैषितव्या । उभयं हीष्यते -- हे शकटि, हे शकटे इति (च) ।
इह तर्हि -- शकटिबन्धुः इति नदी बन्धुनि (6.2.109) इत्येष स्वरः प्रसज्येत । इह च
बहुशकटिरिति नद्यृतश्च (5.4.153) इति कप्प्रसज्येत ।। नैषः दोषः । ङिति ह्रस्वश्च (1.4.6)
इत्ययं नियमार्थो भविष्यति -- ङित्येव यू ह्रस्वौ नदीसंज्ञौ भवतो नान्यत्रेति । कैमर्थक्यान्नियमो भवति ? विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् ? नित्या नदी संज्ञा प्राप्ता, सा विभाषा विधेया । तत्रापूर्वो विधिरस्तु नियमो (वाटऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः । अथायं नित्यो योगः स्यात्प्रकल्पेत नियमः ? बाढं प्रकल्पेत । नित्यस्तर्हि भविष्यति । तत्कथम् ? योगविभागः करिष्यते । इदमस्ति, -- यू स्त्र्याख्यौ नदी नेयङुवङ्स्थानावस्त्री (4) वामि (5) । ततो ङिति । ङिति चेयङुवङ्स्थानौ यू वाऽस्त्री नदीसंज्ञौ न भवतः । ततो ह्रस्वौ ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्स्थानौ वा नेति निवृत्तम् ।
यद्येवं शकटये अत्र गुणो न प्राप्नोति । द्वितीयो योगविभागः करिष्यते। शेषग्रहणं न करिष्यते । कथम् ?
इदमस्ति -- यू स्त्र्याख्यौ नदी नेयङुवङ्स्थानावस्त्री वामि । ततो ङिति ङिति चेयङुवङ्स्थानौ यू वाऽस्त्री नदीसंज्ञौ न भवतः । ततो ह्रस्वौ ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्स्थानौ वा नेति निवृत्तम् । ततो घि । घिसंज्ञौ च भवतः स्त्र्याख्यौ यू ह्रस्वौ ङिति । ततोऽसखि । सखिवर्जितौ च यू ह्रस्वौ घिसंज्ञौ भवतः । स्त्र्याख्यौ ङितीति च निवृत्तम् ।। यदि तर्हि शेषग्रहणं न क्रियते नार्थ एकेनापि योगविभागेन । अविशेषेण नदीसंज्ञोत्सर्गः । तस्याः ह्रस्वयोर्घिसंज्ञा बाधिका । तस्यां नित्यं प्राप्तयामियं ङिति विभाषाऽऽरभ्यते ।
अथवा पुनरस्तु दीर्घयोः । ननु चोक्तम् -- निर्देशो नोपपद्यते । दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यत इति । वा छन्दसि (6.1.106) इत्येवं भविष्यति । छन्दसीत्युच्यते। न चेदं छन्दः । छन्दोवत्सूत्राणि भवन्तीति ।
यदप्युच्यते -- उत्तरत्र विशेषणं न प्रकल्पेत यू ह्रस्वाविति,यदि यू, न ह्रस्वौ । अथ ह्रस्वौ, न यू । यू ह्रस्वाविति च विप्रतिषिद्धमिति । नैतद्विप्रतिषिद्धम् । आहायं यू ह्रस्वाविति । यदि यू, न ह्रस्वौ । अथ ह्रस्वौ, न यू । त एवं विज्ञास्यामः -- य्वोर्यौ ह्रस्वाविति । कौ च य्वोर्ह्रस्वौ ? सवर्णौ ।
अथ स्त्र्याख्याविति कोयं शब्दः ? स्त्रियमाचक्षाते स्त्र्याख्यौ । यद्येवं स्त्र्याख्यायाविति प्राप्नोति । अनुपसर्गे हि को विधीयते । न तर्हीदानीमिदं भवति --
यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोयमुञ्छेन जीवति ।।
छन्दोवत्कवयः कुर्वन्ति । नह्येषेष्टिः ।। एवं तर्हि कर्मसाधनो भविष्यति। स्त्रियामाख्यायेते स्त्राख्यौ । यदि कर्मसाधनः कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति, तन्त्र्यै लक्ष्मयै श्रियै भ्रुवै ।। एवं तर्हि
बहुव्रीहिर्भविष्यति, -- स्त्रियामाख्याऽनयोः स्त्र्याख्यौ । एवमपि कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति, -- तन्त्र्यै लक्ष्म्यै श्रियै भ्रुवै । एवं तर्हि विज्भविष्यति। अथ वा पुनरस्तु क एव -- स्त्रियमाचक्षाते स्त्र्याख्याविति । ननु चोक्तं स्त्र्याख्यायाविति प्राप्नोति । अनुपसर्गे हि को विधीयते इति । मूलविभुजादिपाठात्को भविष्यति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम् --
यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ।। इति ।

अथाख्याग्रहणं किमर्थम् ?
नदीसंज्ञायामाख्याग्रहणं स्त्रीविषयार्थम् ।। 1 ।।
नदीसंज्ञायामाख्याग्रहणं क्रियते स्त्रीविषयार्थम् । स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात् । इह मा भूत् -- ग्रामण्ये सेनान्ये स्त्रियै इति ।
प्रथमलिङ्गग्रहणं च ।। 2 ।।
प्रथमलिङ्गग्रहणं च कर्तव्यम् । प्रथमलिङ्गे यौ स्त्र्याख्यौ इति वक्तव्यम् ।
किं प्रयोजनम् ?
प्रयोजनं क्विब्लुप्समसाः ।। 3 ।।
क्विप् -- कुमार्यै ब्राह्मणाय । लुप् -- खरकुट्यै ब्राह्मणाय । समास -- अतितन्त्र्यै ब्राह्मणाय । अतिलक्ष्म्यै ब्राह्मणाय । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।
अवयवस्त्रीविषयत्वात्सिद्धम् ।। 4 ।।
अवयवोत्र स्त्रीविषयस्तदाश्रया नदीसंज्ञा भविष्यति ।
अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधप्रसङ्गे
यण्स्थानप्रतिषेधप्रसङ्गोवयवस्येयङुवङ्स्थानत्वात् ।। 5 ।।
अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधप्रसङ्गे यण्स्थानयोरपि य्वोः प्रतिषेधः प्रसज्येत । आध्यै प्रध्यै ब्राह्मण्यै । किं कारणम् ? अवयवस्य इयङ्स्थानत्वात् । अवयवोऽत्र इयङ्स्थानः ।
सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ तत्प्रतिषेधात् ।। 6 ।।
सिद्धमेतत् । कथम् ? अङ्गरूपं गृह्यते । यस्याऽङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्। न चैतस्याङ्गस्येयुवौ भवतः ।
ह्रस्वेयुव्स्थानप्रवृत्तौ च स्त्रीवचने ।। 7 ।।
ह्रस्वौ चेयुव्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । शकट्यै। अतिशकट्यै ब्राह्मण्यै । क्व मा भूत्? शकटये अतिशकटये ब्राह्मणाय। धेन्वै अतिधेन्वै
ब्राह्मण्यै । क्व मा भूत् ? धेनवे अतिधेनवे ब्राह्मणाय । श्रियै अतिश्रियै ब्राह्मण्यै । क्व मा भूत् ? श्रिये अतिश्रिये ब्राह्मणाय । भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत् ? भ्रुवे अतिभ्रुवे ब्राह्मणाय ।
अपर आह --
ह्रस्वेयुव्स्थानप्रवृत्तौ स्त्रीवचने ।। 8 ।।
ह्रस्वौ चेयुव्स्थानौ च प्रवृत्तावपि स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । किं प्रयोजनम् ? शकट्यै अतिशकट्यै ब्राह्मण्यै । क्व मा भूत् ? शकटये अतिशकटये ब्राह्मणाय । धेन्वै अतिधेन्वै ब्राह्मण्यै । क्व मा भूत् ? धेनवे अतिधेनवे ब्राह्मणाय । श्रियै अतिश्रियै ब्राह्मण्यै । क्व मा भूत् ? श्रिये अतिश्रिये ब्राह्मणाय । भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत् ? भ्रुवे अतिभ्रुवे ब्राह्मणाय ।
किमर्थं पुनरिदमुच्यते ? प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्यं विजानीयात्सर्वमेतद्विकल्पते इति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे ह्रस्वौ चेयुव्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेति ।। 3 ।।
-1-4-9- षष्ठीयुक्तश्छन्दसि वा (249)
योगविभागः कर्तव्यः । षष्ठीयुक्तश्छन्दसि षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति
। ततो वा वा छन्दसि सर्वे विधयो भवन्ति । सुपां व्यत्ययः, तिङां व्यत्ययः, वर्णव्यत्ययः, लिङ्गव्यत्ययः, कालव्यत्ययः, पुरुषव्यत्ययः, आत्मनेपदव्यत्ययः, परस्मैपदव्यत्ययः ।
सुपां व्यत्ययः-युक्ता मातासीद्धुरि दक्षिणायाः दक्षिणायामिति प्राप्ते। तिङां व्यत्ययः-चषालं ये अश्वयूपाय तक्षति तक्षन्तीति प्राप्ते । वर्णव्यत्ययः-त्रिष्टुभौजः शुभितमुग्रवीरम् सुहितमिति प्राप्ते। लिङ्गव्यत्ययः-मधोर्गृह्णाति मधोस्तृप्ता इवासते मधुन इति प्राप्ते। कालव्यत्ययः-श्वोऽग्नीनाधास्यमानेन श्वः सोमेन यक्ष्यमाणेन श्व आधाता, शवो यष्टेति प्राप्ते। पुरुषव्यत्ययः-अधा स वीरैर्दशभिर्वियूयाः वियूयादिति प्राप्ते। आत्मनेपदव्यत्ययः -- ब्रह्मचारिणमिच्छते इच्छतीति प्राप्ते। परस्मैपदव्यत्ययः-प्रतीपमन्य ऊर्मिर्युध्यति अन्वीपमन्य ऊर्मिर्युध्यति युध्यत इति प्राप्ते ।। 9 ।।
-1-4-13- यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेङ्गम् (253)
(अथ यस्माद् ग्रहणं किमर्थम् ?) यस्मादिति व्यपदेशाय ।
अथ प्रत्ययग्रहणं किमर्थम् ? यस्माद्विधिस्तदादि प्रत्ययेङ्गमितीयत्युच्यमाने स्त्री इयती स्त्रीयतीत्यत्रापि प्रसज्येत। प्रत्ययग्रहणे पुनः क्रियमाणे न दोषो भवति ।
अथ विधिग्रहणं किमर्थम् ? यस्मात्प्रत्ययस्तदादि प्रत्ययेङ्गमितीयत्युच्यमाने दधि अधुना, मधु अधुना,अत्रापि प्रसज्येत। विधिग्रहणे पुनः क्रियमाणे न दोषो भवति ।। तदेतत्प्रत्ययग्रहणेन विधिग्रहणेन च समुदितेन क्रियते संनियोगः -- यस्माद्यः प्रत्ययो विधीयते तदादि तस्मिन्नङ्गसंज्ञं भवतीति ।
अथ तदादिग्रहणं किमर्थम् ?
अङ्गसंज्ञायां तदादिग्रहणं स्यादिनुमर्थम् ।। 1 ।।
अङ्गसंज्ञायां तदादिग्रहणं क्रियते स्याद्यर्थं नुमर्थं च। स्याद्यर्थं तावत् -- करिष्यावः करिष्यामः। नुमर्थम् -- कुण्डानि वनानि ।

मित्सुटोरुपसंख्यानम् ।। 2 ।।
मित्वतः सुड्वतश्चोपसंख्यानं कर्तव्यम् । मित्वतः -- भिनत्ति छिनत्ति । अभिनत् अच्छिनत् । सुड्वतः -- संचस्करतुः संचस्करुः ।
किं पुनः कारणं न सिध्यति ? सुटो बहिरङ्गत्वात् । बहिरङ्गः सुट्, अन्तरङ्गो गुणः । असिद्धं
बहिरङ्गमन्तरङ्गे । वक्ष्यत्येतत् ।संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञ्त्रर्थम्।। यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन । इहापि सस्वरतुः सस्वरुः इति संयोगोपधस्येत्येव सिद्धम्। भवेदेवमर्थेन नार्थः।। इदं तु न सिध्यति -- संचस्करतुः संचस्कुरुरिति ।। किं पुनः कारणं न सिध्यति ? इह तस्य वा ग्रहणं तदादेर्वा। न चेदं तद्,नापि तदादि ।
सिद्धं तु तदाद्यादिवचनात् ।। 3 ।।
सिद्धमेतत् । कथम् ? तदाद्याद्यङ्गसंज्ञं भवतीति वक्तव्यम् । किमिदं तदाद्यादीति ? तस्यादिस्तदादिः, तदादिरादिर्यस्य तदिदं तदाद्यादीति ।
स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः । उत्तरपदलोपत्र द्रष्टव्यः । तद्यथा, -- उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः, खरमुखः । एवं तदाद्यादि तदादीति ।
तदेकदेशविज्ञानाद्वा सिद्धम् ।। 4 ।।
तदेकदेशविज्ञानाद्वा सिद्धमेतत् । तदेकदेशभूतं तद्ग्रहणेन गृह्यते । तद्यथा, -- गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । तथा देवदत्तास्थो
गर्भो देवदत्ताग्रहणेन गृह्यते ।
विषम उपन्यासः । इह केचिच्छब्दा अव्यक्तपरिमाणानामर्थानां वाचका भवन्ति -- य एते संख्याशब्दाः परिमाणशब्दाश्च । पञ्च सप्तेति, -- एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति, -- नैवाधिके भवन्ति न च न्यूने । केचिद्यावदेव तद्भवति तावदेवाहुः -- यथैते जातिशब्दा गुणशब्दाश्च । तैलं घृतमिति खार्यामपि भवति द्रोणेपि । शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेपि द्रव्ये । अङ्गसंज्ञा चाप्यव्यक्तपरिमाणानां क्रियते, सा केनाधिकस्य स्यात् ।
एवं तर्ह्याचर्याप्रवृत्तिर्ज्ञापयति -- तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति यदयं नेदमदसोरकोः
(7.1.11) इति सककारयोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यः -- तदेकदेशभूतं तद्ग्रहणेन गृह्यते इति, ततः सककारयोः प्रतिषेधं शास्ति ।
अथ द्वितीयं प्रत्ययग्रहणं किमर्थम् ?
प्रत्ययग्रहणं पदादावप्रसङ्गार्थम् ।। 5 ।।
प्रत्ययग्रहणं क्रियते पदादावङ्गसंज्ञा मा भूदिति । किं च स्यात् ? स्त्र्यर्थम् श्र्यर्थं भ्र्वर्थम्,
अङ्गस्येयङुवङौ स्याताम् ।
परिमाणार्थं च ।। 6 ।।
परिमाणार्थं च द्वितीयं प्रत्ययग्रहणं क्रियते । यस्मात्प्रत्ययविधिस्तदाद्यङ्गमितीयत्युच्यमाने दाशतयस्याप्यङ्गसंज्ञा प्रसज्येत ।
तत्तर्हि कर्तव्यम् ? न कर्तव्यम् । केनेदानीमङ्गकार्यं भविष्यति ? प्रत्यय इति प्रकृत्याङ्गकार्यमध्येष्ये । यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे। प्राकरोत् उपैहिष्ट। उपसर्गात्पूर्वावडाटौ प्राप्नुतः ।
सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ।। 7 ।।
सिद्धमेतत् । कथम् ? प्रत्ययग्रहणे यस्मात्स प्रत्ययो विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीत्येषा परिभाषा कर्तव्या ।
कः पुनरत्र विशेषः, एषा परिभाषा क्रियेत, प्रत्ययग्रहणं वा ? अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ।
प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वराः ।। 8 ।।
धातु -- देवदत्तश्चिकीर्षति । संघातस्य धातुसंज्ञा प्राप्नोति। प्रातिपदिक -- देवदत्तो गार्ग्यः । संघातस्य प्रातिपदिकसंज्ञा प्राप्नोति। प्रत्यय -- महान्तं पुत्रमिच्छति । संघातात्प्रत्ययोत्पत्तिः प्राप्नोति। समास -- ऋद्धस्य राज्ञः पुरुषः । संघातस्य समाससंज्ञा प्राप्नोति। तद्धितविधि -- देवदत्तो गार्ग्यायणः । संघातात्तद्धितोत्पत्तिः
प्राप्नोति । स्वर -- देवदत्तो गार्ग्यः । संघातस्य ञ्निनित्यादिर्नित्यम् (6.1.197) इत्याद्युदात्तत्वं प्राप्नोति। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति न दोषो भवति ।
सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । एवं वक्ष्यामि -- यस्मात् प्रत्ययविधिस्तदादि
प्रत्यये गृह्यमाणे गृह्यते । ततः -- अङ्गम् अङ्गसंज्ञं च भवति यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ।
यदि प्रत्ययग्रहणे यस्मात्स विहितः तदादेर्ग्रहणं भवतीत्युच्यते -- अवतप्तेनकुलस्थितं त
एतत् । उदकेविशीर्णं त एतत् सगतिकेन सनकुलेन च समासो न प्राप्नोति । एवं तर्हि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युक्त्वा ततो वक्ष्यामि -- कृद्ग्रहणे गतिकारकपूर्वस्यापि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीत्येषा परिभाषा कर्तव्या । कान्येतस्याः परिभाषायाः प्रयोजनानि ?
प्रयोजनं समासतद्धितविधिस्वराः ।। 9 ।।
समास -- अवतप्तेनकुलस्थितं त एतत् । उदकेविशीर्णं त एतत् । सगतिकेन सनकुलेन च
समासः सिद्धो भवति । समास। तद्धितविधि -- सांकूटिनम् व्यावक्रोशी । संघातात्तद्धितोत्पत्तिः सिद्धा भवति। तद्धितविधि। स्वर -- दुराद् आगतः दूरादागत इति। अन्तः थाथघञ्क्ताजबित्रकाणाम् (6.2.143 ; 144) इत्येष स्वरः सिद्धो भवति ।। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति ।

सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति -- - भवत्येषा परिभाषेति, यदयं गतिरनन्तरः (6.2.49) इत्यनन्तरग्रहणं करोति ।। 13 ।।

-1-4-14- सुप्तिङन्तं पदम् (254)

अन्तग्रहणं किमर्थम्। न सुप्तिङ्पदमित्येवोच्येत ? केनेदानीं तदन्तानां भविष्यति ? तदन्तविधिना । अत उत्तरं पठति --

पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् ।। 1 ।।

पदसंज्ञायामन्तग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्योऽन्यत्र संज्ञाविधौ प्रत्ययग्रहणं तदन्तविधिर्न भवति इति । किमेतस्य ज्ञापने प्रयोजनम् ?तरप्तमपौ घः (1.1.22) तरप्तमबन्तस्य घसंज्ञा न भवति । किं च स्यात् ? कुमारी गौरितरा । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ।

यद्येतज्ज्ञाप्यते सनाद्यन्ता धातवः (3.1.32) इत्यन्तग्रहणं कर्तव्यम् । कृत्तद्धितसमासाश्च (1.2.46) अन्तग्रहणं कर्तव्यम् । इदं तृतीयं ज्ञापकार्थम् ।। द्वे तावत्क्रियेते न्यास एव । यदप्युच्यते -- कृत्तद्धितसमासाश्चेत्यन्तग्रहणं कर्तव्यमिति । न कर्तव्यम् । अर्थवदिति वर्तते। कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वा ।। 14 ।।

-1-4-15- नः क्ये।

किमर्थमिदमुच्यते न सुबन्तं पदमित्येव सिद्धम्? नियमार्थोऽयमारम्भः । नान्तमेव क्ये पदसंज्ञं भवति नान्यत् । क्व मा भूत् ? वाच्यति स्रुच्यति ।। 15 ।।

-1-4-17- स्वादिष्वसर्वनामस्थाने (257)

असर्वनामस्थान इत्युच्यते तत्र ते राजा तक्षा असर्वनामस्थान इति प्रतिषेधः प्रसज्येत। नाप्रतिषेधात् ।। 1 ।।

नाऽयं प्रसज्यप्रतिषेधः -- सर्वनामस्थाने नेति । किं तर्हि ? पर्युदासोऽयम् -- यदन्यत्सर्वनामस्थानादिति । सर्वनामस्थानेऽव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति।

अप्राप्तेर्वा।। 2 ।।

अथवाऽनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत

एतत् ? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति। ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ।

योगविभागद्वा ।। 3 ।।

अथ वा योगविभागः करिष्यते -- स्वादिषु पूर्वं पदसंज्ञं भवति । ततः सर्वनामस्थानेऽयचिपूर्वं पदसंज्ञं भवति । ततः भम् भसंज्ञं च भवति यजादावसर्वनामस्थान इति। यदि तर्हि सावपि पदं भवति, एचः प्लुतविकारे पदान्तग्रहणं चोदितम्। इह माभूत् -- भद्रं करोषि गौरिति । तस्मिन्क्रियमाणेऽपि प्राप्नोति ।

वाक्यपदयोरन्त्यस्येत्येवं तत् ।

भुवद्वद्भ्यो धारयद्वद्भ्यः पदसंज्ञा।। 4 ।।

एतयोः पदसंज्ञा वक्तव्या । भुवद्वद्भ्यः धारयद्वद्भ्यः ।। 17 ।।

-1-4-18- यचि भम् (258)

भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधः ।। 1 ।।

भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधो वक्तव्यः । अनुकम्पितः षडङ्गुलिः षडिकः।

सिद्धमचः स्थानिवत्त्वात् ।। 2 ।।

सिद्धमेतत् । कथम् ? अचः स्थानिवद्भावाद्भसंज्ञा न भविष्यति। इहापि तर्हि प्राप्नोति -- वागाशीर्दत्तः वाचिक इति । वक्ष्यत्येतत् -- सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनादिति। । इहापि तर्हि प्राप्नोति -- षडङ्गुलिः षडिक इति । वक्ष्यत्येतत् -- षषष्ठाजादिवचनात्सिद्धमिति।

नभोङ्गिरोमनुषां वत्युपसंख्यानम् ।। 3 ।।

नभोङ्गिरोमनुषां वत्युपसंख्यानं कर्तव्यम् । नभस्वत्। अङ्गिरस्वत्। मनुष्वत्।

वृषण्वस्वश्वयोश्च ।। 4 ।।

वृषणित्येतस्य वस्वश्वयोर्भसंज्ञा वक्तव्या। वृषण्वसुः । वृषणश्वस्य .यच्छिरः, वृषणश्वस्य मेने ।। 18 ।।

-1-4-19- तसौ मत्वर्थे (259)

अर्थग्रहणं किमर्थम्। न तसौ मतौ इत्येवोच्येत ? तसौ मतौःथ्य;तीयत्युच्यमान इहैव स्यात् -- पयस्वान् यशस्वान् । इह न स्यात् -- पयस्वी यशस्वी । अर्थग्रहणे पुनः क्रियमाणे मतुपि च सिद्धं भवति, यश्चान्यस्तेन समानार्थस्तस्मिंश्च ।

यद्यर्थग्रहणं क्रियते पयस्वान् अत्र न प्राप्नोति । किं कारणम् ? न हि मतुब्मतुबर्थे वर्तते । मतुबपि मतुबर्थे वर्तते । तद्यथा -- देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते यदि देवदत्तोपि ब्राह्मणो भवति, सोऽप्यानीयते ।। 19 ।।

-1-4-20- अयस्मयादीनि च्छन्दसि (260)

उभयसंज्ञान्यपि।। 1 ।।

उभयसंज्ञान्यपीति वक्तव्यम् । स सुष्टुभा स ऋक्वता गणेन ।। 20 ।।

-1-4-21- बहुषु बहुवचनम् (261)

बहुषु बहुवचनमित्युच्यते । केषु बहुषु ? अर्थेषु । यद्येवं वृक्षः प्लक्षः अत्रापि प्राप्नोति । बहवस्तेऽर्थाः -- मूलं स्कन्धः फलं पलाशमिति ।

एवं तर्हि एकवचनं द्विवचनं बहुवचनमिति शब्दसंज्ञा एताः । येष्वर्थेषु स्वादयो विधीयन्ते तेषु बहुषु । केषु च स्वादयो विधीयन्ते ? कर्मादिषु । न वै कर्मादयो विभक्त्यर्थाः । के
तर्हि ? एकत्वादयः । एकत्वादिष्वपि वै विभक्त्यर्थेष्ववश्यं कर्मादयो निमित्तत्वेनोपादेयाः -- कर्मण एकत्वे, कर्मणो द्वित्वे, कर्मणो बहुत्वे इति । स तर्हि तथा निर्देशः कर्तव्यः। न ह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः । इह च
इत्येके मन्यन्ते तदेके मन्यन्ते इति परत्वादेकवचनं प्राप्नोति। बहुषु बहुवचनमित्येष योगः परः करिष्यते । सूत्रविपर्यासः कृतो भवति । इह च बहुरोदनो बहुः सूप इति परत्वाद् बहुवचनं प्राप्नोति ।
नैषः दोषः । यत्तावदुच्यते -- न ह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देश इति, तन्न । अन्तरेणापि भावप्रत्ययं गुणप्रधानो भवति निर्देशः । कथम् ? इह कदाचिद्गुणो गुणिविशेषको भवति । तद्यथा -- पटः शुक्लः इति । कदाचिच्च गुणिना गुणो व्यपदिश्यते -- पटस्य शुक्लः इति । तद्यदा तावद्गुणो गुणिविशेषको भवति पटः शुक्लः इति तदा सामानाधिकरण्यं गुणगुणिनोः,तदा नान्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः । यदा तु गुणिना गुणो व्यपदिश्यते पटस्य शुक्लः इति स्वप्रधानस्तदा गुणो भवति -- - तदा द्रव्ये षष्ठी,तदाऽन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः ।
न चेह वयमेकत्वादिभिः कर्मादीन्विशेषयिष्यामः । किं तर्हि ? कर्मादिभिरेकत्वादीन्विशेषयिष्यामः । कथम् ?
एकस्मिन्नेकवचनम् । कस्यैकस्मिन् ? कर्मणः । द्वयोर्द्विवचनम् । कयोर्द्वयोः ? कर्मणोः । बहुषु बहुवचनम् । केषां बहुषु ? कर्मणामिति ।। कथं बहुषु बहुवचनमिति ? एतदेव ज्ञापयत्याचार्यः -- नानाधिकरणवाची यो बहुशब्दस्तस्येदं ग्रहणम्। न वैपुल्यवाचिनः इति । किमेतस्य ज्ञापने प्रयोजनम् ? यदुक्तं बहुरोदनो बहुः सूप इति परत्वाद्बहुवचनं प्राप्नोतीति न स दोषो न भवति ।
यदप्युच्यते -- इत्येके मन्यन्ते, तदेके मन्यन्ते इति परत्वादेकवचनं प्राप्नोतीति। नैषः दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यावाची । तद्यथा -- एको द्वौ बहव इति । अस्त्यसहायवाची । तद्यथा -- एकाग्नयः। एकहलानि एकाकिभिः क्षुद्रकैर्जितमिति । अस्त्यन्यार्थे वर्तते । तद्यथा -- सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः । तद्योऽन्यार्थे वर्तते तस्यैव प्रयोगः ।
किमर्थं पुनरिदमुच्यते ?
सुप्तिङामविशेषेण विधानाद् दृष्टविप्रयोगाच्च नियमार्थं वचनम् ।। 1 ।।
सुपोऽविशेषेण प्रातिपदिकमात्राद्विधीयन्ते। । तिङोऽविशेषेण धातुमात्राद्विधीयते। तत्रैतत्स्याद्यद्यप्यविशेषेण विधीयन्ते नैव विप्रयोगो लक्ष्यते इति । दृष्टविप्रयोगाच्च । दृश्यते खल्वपि विप्रयोगः । तद्यथा -- अक्षीणि मे दर्शनीयानि पादा मे सुकुमाराः इति । सुप्तिङोरविशेषविधानाद् दृष्टविप्रयोगत्वाच्च व्यतिकरः प्राप्नोति । इष्यते चाऽव्यतिकरः स्यादिति। तच्चाऽन्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम् । एवमर्थमिदमुच्यते ।
अथैतस्मिन्नियमार्थे सति किं पुनरयं प्रत्ययनियमः -- एकस्मिन्नेवैकवचनं, द्वयोरेव द्विवचनं, बहुष्वेव बहुवचनमिति । आहोस्विदर्थनियमः -- एकस्मिन्नेकवचनमेव, द्वयोर्द्विवचनमेव, बहुषु बहुवचनमेवेति । कश्चात्र विशेषः ?
तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाऽभावोऽसुबन्तत्वात् ।। 2 ।।
तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञा न प्राप्नोति -- उच्चैः नीचैरिति । किं कारणम् ?
असुबन्तत्वात् ।
अर्थनियमे सिद्धम् ।। 3 ।।
अर्थनियमे सिद्धं भवति । अस्त्वर्थनियमः । अथ वा पुनरस्तु प्रत्ययनियमः । ननु
चोक्तम् -- ।तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाभावोऽसुबन्तत्वादिति । नैषः दोषः ।
सुपां कर्मादयोऽप्यर्थाः संख्या चैव, तथा तिङाम् ।। 4।।
सुपां संख्या चैवाऽर्थः कर्मादयश्च । तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र ।। 5।।
प्रसिद्धस्तत्र नियमः ।
नियमः प्रकृतेषु वा ।। 6।।
अथ वा प्रकृतानर्थानपेक्ष्य नियमः । के च प्रकृताः ? एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेव बहुवचनं न द्वयोर्नैकस्मिन्निति ।
अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति -- उत्पद्यन्तेऽव्ययेभ्यः स्वादयः इति। यदयम् -- अव्ययादाप्सुपः (2.4.82) इत्यव्ययाल्लुकं शास्ति ।। 21 ।।
इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य चतुर्थेपादे द्वितीयमाह्निकम् ।
-1-4-23- कारके (263)
किमिदं कारके इति ?(कारक इति) संज्ञानिर्देशः । किं वक्तव्यमेतत् ? न हि कथमनुच्यमानं गंस्यते ? इह हि व्याकरणे ये वैते लोके प्रतीतपदार्थकाः शब्दास्तैर्निर्देशाः क्रियन्ते , या वैताः कृत्रिमाष्टिघुभादिसंज्ञाः । न चायं लोके ध्रुवादीनां प्रतीतपदार्थकः शब्दः, न खल्वपि कृत्रिमा संज्ञा अन्यत्राऽविधानात् । संज्ञाधिकारश्चायम्। तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः ।
कारक इति संज्ञानिर्देशश्चेत्संज्ञिनोपि निर्देशः ।। 1 ।।
कारक इति संज्ञानिर्देशश्चेत्संज्ञिनोपि निर्देशः कर्तव्यः । साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम् ।
इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य ।। 2 ।।
इतरथा ह्यनिष्टं प्रसज्येत । अकारकस्याप्यपादानसंज्ञा प्रसज्येत । क्व ? ग्रामस्य समीपादागच्छतीति। नैषः दोषः । नात्र ग्रामोऽपाययुक्तः । किं

तर्हि ? समीपम् । यदा च ग्रामोऽपाययुक्तो भवति, भवति तदाऽपादानसंज्ञा । तद्यथा, -- ग्रामादागच्छतीति ।
कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ।। 3 ।।
कर्मसंज्ञा च प्राप्नोत्यकथितस्य । क्व ? ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ।
नैषः दोषः । अयमकथितशब्दोऽस्त्येवाऽसंकीर्तिते वर्तते तद्यथा -- कश्चित्कंचित्सञ्चक्ष्याह -- असावत्राकथितः । असंकीर्तित इति गम्यते । अस्त्यप्राधान्ये वर्तते । तद्यथा -- अकथितोऽसौ ग्रामे अकथितोऽसौ नगरे इत्युच्यते यो यत्राऽप्रधानो भवति। तद्यदाऽप्राधान्येऽकथितशब्दो वर्तते तदैष दोषः -- कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ।
अपादानं च वृक्षस्य पर्णं पततीति ।। 4 ।।
अपादानसंज्ञा च प्राप्नोति । क्व ?वृक्षस्य पर्णं पतति, कुड्यस्य पिण्डः पततीति ।
न वाऽपायस्याऽविवक्षितत्वात् ।। 5 ।।
न वैष दोषः । किं कारणम् ? अपायस्याऽविवक्षितत्वात् । नात्रापायो विवक्षितः । किं तर्हि ? सम्बन्धः । यदा चापायो विवक्षितो भवति, भवति तदाऽपादानसंज्ञा । तद्यथा, -- वृक्षात्पर्णं पततीति । सम्बन्धस्तु तदा न विवक्षितो भवति न ज्ञायते कङ्कस्य वा कुरस्य वेति ।
अयं तर्हि दोषः -- कर्मसंज्ञाप्रसङ्गश्चाऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति । नैषः दोषः । कारक इति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम् -- अन्वर्थसंज्ञा यथा विज्ञायेत -- करोतीति कारकमिति ।
अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिः ।। 6 ।।
अन्वर्थमिति चेदकर्तरि कर्तृशब्दो नोपपद्यते करणं कारकमअधिकरणं कारकमिति ।
सिद्धं तु प्रतिकारकं क्रियाभेदात्पचादीनां करणाऽधिकरणयोः कर्तृभावः ।। 7 ।।
सिद्धःकरणाऽधिकरण्योः कर्तृभावः । कुतः ? प्रतिकारकं क्रियाभेदात् । पचादीनां तु प्रतिकारकं क्रिया भिद्यते । किमिदं प्रतिकारकमिति ? कारकं कारकं प्रति
प्रतिकारकम् । कोसौ प्रतिकारकं क्रियाभेदः पचादीनाम् ?
अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः ।। 8 ।।
अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणादिक्रियाः कुर्वन्नेव देवदत्तः पचतीत्युच्यते । तत्र तदा पचिर्वर्तते । एष प्रधान(स्यटकर्तुः पाकः । एतत्प्रधानकर्तुः कर्तृत्वम् ।
द्रोणं पचत्याढकं पचतीति सम्भवनक्रिया धारणक्रिया चाधिकरणस्य पाकः ।। 9 ।।
द्रोणं पचत्याढकं पचतीति सम्भवनक्रियां धारणक्रियां च कुर्वती स्थाली पचतीत्युच्यते । तत्र तदा पचिर्वर्तते । एषोऽधिकरणस्य पाकः । एतदधिकरणस्य कर्तृत्वम् ।
एधाः पक्ष्यन्त्या विक्लितेर्ज्वलिष्यन्तीति ज्वलनक्रियां करणस्य पाकः ।। 10 ।।
एधाः पक्ष्यन्त्या विक्लितेर्ज्वलिष्यन्तीति ज्वलनक्रियां कुर्वन्ति काष्ठानि पचन्तीत्युच्यन्ते । तत्र तदा पचिर्वर्तते । एष करणस्य पाकः । एतत्करणस्य कर्तृत्वम् ।
उद्यमननिपातनानि कर्तुश्छिदिक्रिया ।। 11 ।।
उद्यमननिपातनानि कुर्वन् देवदत्तश्छिनत्तीत्युच्यते । तत्र तदा छिदिर्वर्तते । एष प्रधानकर्तुश्छेदः । एतत्प्रधानकर्तुः कर्तृत्वम् ।
यत्तन्न तृणेन तत्परशोश्छेदनम् ।। 12 ।।
यत्तत्समाने उद्यमने निपतने च परशुना छिद्यते न तृणेन तत्परशोश्छेदनम् । अवश्यं चैददेवं विज्ञेयम् ।
इतरथा ह्यसितृणयोश्छेदनेऽविशेषः स्यात् ।। 13 ।।
यो हि मन्यत उद्यमननिपातनादेवैतद्भवति च्छिनत्तीति, असितृणयोश्छेदने न तस्य विशेषः स्याद् यदसिना
छिद्यते तृणेनापि तच्छिद्येत ।
अपादानादीनां त्वप्रसिद्धिः ।। 14 ।।
अपादानादीनां (तु) कर्तृत्वस्याऽप्रसिद्धिः । यथा हि भवता करणादीनां कर्तृत्वं निदर्शितं न तथाऽपादानादीनां कर्तृत्वं निर्दश्यते ।
न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा ।। 15 ।।
न वैष दोषः । किं कारणम् ? स्वतन्त्रपरतन्त्रत्वात् । सर्वत्रैवात्र स्वातन्त्र्य पारतन्त्र्यं च विवक्षितम् । तयोः पर्यायेण वचनम् । तयोः स्वातन्त्र्यपारतन्त्र्ययोः पर्यायेण वचनं भविष्यति । वचनाश्रया च संज्ञा भविष्यति । तद्यथा, -- बलाहकाद्विद्योतते विद्युत् । बलाहके विद्योतते । बलाहको विद्योतत इति ।
किं तर्ह्युच्यते -- अपादानादीनां त्वप्रसिद्धिरिति ? एवं तर्हि न ब्रूमोऽपादानादीनां कर्तृत्वस्याऽप्रसिद्धिरिति । पर्याप्तं करणाधिकरण्योः कर्तृत्वं निदर्शितमपादानादीनां कर्तृत्वनिदर्शनाय, पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनाय । किं तर्हि ? संज्ञाया अप्रसिद्धिः । यावता सर्वत्रैवाऽत्र स्वातन्त्र्य विद्यते पारतन्त्र्यं च। तत्र परत्वात्कर्तृसंज्ञैव प्राप्नोति। अत्रापि न वा स्वतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञेत्येव ।
यथा पुनरिदं भवता स्थाल्याः स्वातन्त्र्यं निदर्शितं संभवनक्रियां धारणक्रियां च कुर्वती स्थाली स्वतन्त्रेति, क्वेदानीं परतन्त्रा स्यात् ? यत्तत्प्रक्षालनं परिवर्तनं वा । न वा एवमर्थं स्थाल्युपादीयते प्रक्षालनं परिवर्तनं च करिष्यामीति । किं तर्हि ? संभवनक्रियां धारणक्रियां च करिष्यतीति । तत्र चासौ स्वतन्त्रा । क्वेदानीं परतन्त्रा ?
एवं तर्हि स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा । ननु च भोः कर्तृस्थेऽपि यत्ने कथ्यमाने स्थाली

संभवनक्रियां धारणक्रियां च करोति, तत्रासौ स्वतन्त्रा । क्वेदानीं परतन्त्रा स्यात् ?
एवं तर्हि प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा । तद्यथा -- अमात्यादीनां राज्ञा सह समवाये परतन्त्र्यं, व्यवाये स्वातन्त्र्यम् । किं पुनः प्रधानम् ? कर्ता । कथं पुनर्ज्ञायते -- कर्ता प्रधानमिति ? यत्सर्वेषु साधनेषु संनिहितेषु कर्ता प्रवर्तयिता भवति ।
ननु च भोः प्रधानेनापि वै समवाये स्थाल्या अनेनार्थः अधिकरणं कारकमिति । न हि कारकमित्यनेनाऽधिकरणत्वमुक्तम्, अधिकरणमिति वा कारकत्वम् । उभौ चान्योन्यविशेषकौ भवतः । कथम् ? एकद्रव्यसमवायित्वात् । तद्यथा, -- गार्ग्यो देवदत्त इति । न हि गार्ग्य इत्यनेन देवदत्तत्वमुक्तं, देवदत्त इत्यनेन वा गार्ग्यत्वम् । उभौ चान्योन्यविशेषकौ भवत एकद्रव्यसमवायित्वात् ।
एवं तर्हि सामान्यभूता क्रिया वर्तते, तस्या निर्वर्तकं कारकम् ।
अथ वा यावद् ब्रूयात् क्रियायामिति, तावत् कारके इति । एवं च कृत्वा निर्देश उपपन्नो भवति
कारके इति । इतरथा हि कारकेषु इति ब्रूयात् ।। 23 ।।
-1-4-24- ध्रुवमपायेऽपादानम् (264)
ध्रुवग्रहणं किमर्थम् ? ग्रामादागच्छति शकटेन। नैतदस्ति । करणसंज्ञाऽत्र बाधिका भविष्यति। इदं तर्हि -- ग्रामादागच्छन्कंसपात्र्यां पाणिनौदनं भुङ्क्ते इति । अत्राप्यधिकरणसंज्ञा बाधिका भविष्यति ।
इदं तर्हि -- वृक्षस्य पर्णं पतति, कुड्यस्य पिण्डः पततीति ।
जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ।। 1 ।।
जुगुप्साविरामप्रामादार्थानामुपसंख्यानं कर्तव्यम् । जुगुप्सा -- अधर्माज्जुगुप्सते । अधर्माद्बीभत्सते। विराम -- धर्माद्विरमति । धर्मान्निवर्तते । प्रमाद -- धर्मात्प्रमाद्यति । धर्मान्मुह्यति ।
इदं चोपसंख्यानं कर्तव्यम् -- सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति ।
तत्तर्हीदं बहु वक्तव्यम् ? न वक्तव्यम् । इह तावद् -- -अधर्माज्जुगुप्सते अधर्माद्बीभत्सते इति। य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति -- दुःखोऽधर्मो नाऽनेन कृत्यमस्तीति । स बुद्ध्या संप्राप्य निवर्तते । तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्। इह धर्माद्विरमति धर्मान्निवर्तते इति। धर्मात्प्रमाद्यति धर्मान्मुह्यतीति। इह य एष मनुष्यः संभिन्नबुद्धिर्भवति स पश्यति -- नेदं किंचिद्धर्मो नाम नैनं करिष्यामीति । स बुद्ध्या संप्राप्य निवर्तते ।
तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम् । इह च साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति यस्तैः साम्यं गतवान्भवति स एतत्प्रयुङ्क्ते ।
गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् ।। 2 ।।
गतियुक्तेष्वपादानसंज्ञा नोपपद्यते । रथात्प्रवीतात्पतितः । अश्वात्त्रस्तात्पतितः। सार्थाद्गच्छतो हीन इति । किं कारणम् ? अध्रुवत्वात् ।
न वाऽध्रौव्यस्याविवक्षितत्वात् ।। 3 ।।
न वैष दोषः । किं कारणम् ? अध्रौव्यस्याविवक्षितत्वात् नाऽत्राऽध्रौव्यं विवक्षितम् । किं तर्हि ? ध्रौव्यम् । इह तावदश्वात्त्रस्तात्पतित इति, यत्तदश्वेऽश्वत्वमाशुगामित्वं तद्ध्रुवं तच्च विवक्षितम् । रथात्प्रवीतात्पतित इति यद्रथे रथत्वं रमन्तेऽस्मिन् रथ इति तद्ध्रुवं तच्च विवक्षितम् । सार्थाद्गच्छतो हीन इति, यत्तत्सार्थे सार्थत्वं सहार्थीभावस्तद्ध्रुवं तच्च विवक्षितम् ।
यद्यपि तावदत्रैतच्छक्यते वक्तुम्। ये त्वेतेऽत्यन्तंगतियुक्तास्तत्र कथम् -- धावतः पतितस्त्वरमाणात्पतित इति ? अत्रापि -- ।न वाऽध्रौव्यस्याऽविवक्षितत्वादित्येव सिद्धम्। कथं पुनः सतो नामाऽविवक्षा स्यात् ? सतोऽप्यविवक्षा भवति । तद्यथा -- अलोमिका एडका। अनुदरा कन्येति । असतश्च विवक्षा भवति -- समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति ।। 24 ।।
-1-4-25- भीत्रार्थानां भयहेतुः (265)
अयं योगः शक्योऽवक्तुम् । कथं वृकेभ्यो बिभेति दस्युभ्यो बिभेति, चोरेभ्यस्त्राते दस्युभ्यस्त्रायत इति ? इह तावद् -- वृकेभ्यो बिभेति दस्युभ्यो बिभेतीति। य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति -- यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति । स बुद्ध्या संप्राप्य निवर्तते , तत्र ध्रुवमपायेऽपादानम् (1.4.24) इत्येव सिद्धम् । इह चौरेभ्यस्त्रायते दस्युभ्यस्त्रायत इति, य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति स पश्यति -- यदीमं चौराः पश्यन्ति ध्रुवमस्य वधबन्धनादिपरिक्लेशा इति । स बुद्ध्या संप्राप्य निवर्तयति । तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम् ।। 25 ।।
-1-4-26- पराजेरसोढः (266)
अयमपि योगः शक्योऽवक्तुम् । कथम्-अध्ययनात्पराजयते इति ? य एष मनुष्यः प्रेक्षापूर्वकारी भवति ,स पश्यति -- दुःखमध्ययनं दुर्धरं च, गुरवश्च दुरुपचारा इति,स बुद्ध्या संप्राप्य निवर्तते । तत्र ध्रुवमपायेऽपादानम् (1.4.24) इत्येव सिद्धम् ।। 26 ।।
-1-4-27- वारणार्थानामीप्सितः (267)
किमुदाहरणम् ? माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावः, तस्य माषा इर्प्सिताः स्युः । यस्य तु खलु गावो न माषाः, कथं तस्य माषा इर्प्सिताः स्युः ? तस्याऽपि माषा एवेप्सिताः । आतश्चेप्सिताः, यदेभ्यो गा वारयति ।
इह कूपादन्धं वारयतीति कूपेऽपादानसंज्ञा न प्राप्नोति । न हि तस्य कूप इर्प्सितः । कस्तर्हि ? अन्धः । तस्यापि कूप एवेप्सितः । पश्यत्ययम् -- अन्धः कूपं मा प्रापदिति । अथ वा यथैवाऽस्यान्यत्राऽपश्यत इर्प्सैवं कूपेऽपि ।
इह-अग्रेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्राप्नोति । कर्मसंज्ञाऽत्र बाधिका भविष्यति। अग्नावपि तर्हि बाधिका स्यात् । तस्माद्वक्तव्यम् कर्मणो यदीप्सितमिति । इर्प्सितेप्सितमिति वा ।
वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनात् ।। 1 ।।
वारणार्थेषु कर्मग्रहणमनर्थकम् । किं कारणम् ? कर्तुरीप्सिततमं कर्म (1.4.49) इति वचनात् । कर्तुरीप्सिततमं कर्मेत्येव सिद्धम् ।
अयमपि योगः शक्योऽवक्तुम् । कथं माषेभ्यो गा वारयतीति ? पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति ध्रुवः सस्यविनाशः, सस्यविनाशेऽधर्मश्चैव

राजभयं च । स बुद्ध्या सम्प्राप्य निवर्तयति । तत्र ध्रुवमपायेऽपादानम् (1.4.24) इत्येव सिद्धम् ।। 27 ।।
-1-4-28- अन्तर्द्धौ येनाऽदर्शनमिच्छति (268)
अयमपि योगः शक्योऽवक्तुम् । कथम् -- उपाध्यायादन्तर्धत्त इति ? पश्यत्ययं यदि मामुपाध्यायः पश्यति ध्रुवं मे
प्रेषणमुपालम्भो वेति ,स बुद्ध्या सम्प्राप्य निवर्तते । तत्र ध्रुवमपायेऽपादानम् (1.2.24) इत्येव सिद्धम् ।। 28 ।।
-1-4-29- आख्यातोपयोगे (269)
उपयोग इति किमर्थम् ? नटस्य शृणोति, ग्रन्थिकस्य शृणोति ।। उपयोगःथ्य;त्यप्युच्यमानेऽप्यत्र प्राप्नोति । एषोऽपि ह्युपयोगः । आतश्चोपयोगो यदारम्भका रङ्गं गच्छन्ति नटस्य श्रोष्यामः, ग्रन्थिकस्य श्रोष्याम इति ।
एवं तर्ह्युपयोग इत्युच्यते, सर्वश्चोपयोगः। तत्र प्रकर्षगतिर्विज्ञास्यते -- साधीयो य उपयोग इति । कश्च साधीयः ? यो ग्रन्थाऽर्थयोः ।
अथवोपयोगः को भवितुमर्हति ? यो नियमपूर्वकः । तद्यथा -- उपयुक्ता माणवकाःथ्य;त्युच्यन्ते य एते नियमपूर्वकमधीतवन्तो भवन्ति ।
किं पुनराख्यातानुपयोगे कारकमाहोस्विदकारकम् ? कश्चात्र विशेषः ?
आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः ।। 1 ।।
आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञा प्राप्नोति।
अस्तु तर्ह्यकारकम् ।
अकारकमिति चेदुपयोगवचनानर्थक्यम्।। 2 ।।
यद्यकारकमुपयोगवचनमनर्थकम् । अस्तु तर्हि कारकम् । ननु चोक्तम् -- आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः इति । नैषः दोषः । परिगणनं तत्र क्रियते -- दुहियाचिरुधिप्रच्छिभिक्षिचिञामिति ।
अयमपि योगः शक्योऽवक्तुम् । कथम्-उपाध्यायादधीत इति ?. अपक्रामति तस्मात्तदध्ययनम्
। यद्यपक्रामति, किं नात्यन्तायाऽपक्रामति ? सन्ततत्वात् । अथ वा ज्योतिर्वज्ज्ञानानि भवन्ति ।। 29 ।।
-1-4-30- जनिकर्तुः प्रकृतिः (270)
अयमपि योगः शक्योऽवक्तुम् । कथं योगमयाद्वृश्चिको जायते। गोलोमाऽविलोमभ्यो दूर्वा जायन्ते इति ? आपक्रामन्ति तास्तेभ्यः । यद्यपक्रामन्ति किं नात्यन्तायाऽपक्रामन्ति ? सन्ततत्वात् ।
अथवाऽन्याश्चाऽन्याश्च प्रादुर्भवन्ति ।। 30 ।।
-1-4-31- भुवः प्रभवः (271)
अयमपि योगः शक्योऽवक्तुम् । कथं हिमवतो गङ्गा प्रभवतीति ? अपक्रामन्ति तास्तस्मादापः । यद्यपक्रामन्ति, किं नाऽन्त्यन्तायापक्रामन्ति ? सन्ततत्वात् ।। अथवान्याश्चान्याश्च प्रादुर्भवन्ति ।। 31 ।।
-1-4-32- कर्मणा यमभिप्रैति स सम्प्रदानम्
कर्मग्रहणं किमर्थम् ? यमभिप्रैति स सम्प्रादानमितीयत्युच्यमाने कर्मण एव सम्प्रदानसंज्ञा प्रसज्येत । कर्मग्रहणे पुनः क्रियमाणे न दोषो भवति । कर्म निमित्तत्वेनाश्रीयते ।
अथ यंसग्रहणं किमर्थम् ? कर्मणाऽभिप्रैति सम्प्रदानमितीयत्युच्यमाने अभिप्रयत एव सम्प्रदानसंज्ञा प्रसज्येत । यंसग्रहणे पुनः क्रियमाणो न दोषो भवति । यंसग्रहणादभिप्रयतः सम्प्रदानसंज्ञा निर्भज्यते ।
अथाऽभिप्रग्रहणं किमर्थम् ? कर्मणा यमेति स सम्प्रदानमितीयत्युच्यमाने यमेव सम्प्रत्येति तत्रैव स्यात् -- उपाध्यायाय गां ददातीति । इह न स्याद् -- उपाध्यायाय गामदादुपाध्यायाय गां दास्यतीति । अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति । अभिराभिमुख्ये वर्तते, प्रशब्द आदिकर्मणि । तेन यं चाभिप्रैति, यं चाऽभिप्रैष्यति, यं चाभिप्रागादाभिमुख्यमात्रे सर्वत्र सिद्धं भवति ।
क्रियाग्रहणम्।।
क्रियाग्रहणमपि कर्तव्यम् । इहापि यथा स्यात्-श्राद्धाय निगर्हते । युद्धाय सन्नह्यते । पत्ये शेते इति ।। तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कथम् ? क्रियां हि नाम लोके कर्मेत्युपचरन्ति -- कां क्रियां करिष्यसि । किं कर्म करिष्यसीति । एवमपि कर्तव्यम् । कृत्रिमाऽकृत्रिमयोः कृत्रिमे सम्प्रत्ययो भवति ।। क्रियाऽपि कृत्रिमं कर्म । न सिध्यति । कर्तुरीप्सिततमं कर्म (1.4.49) इत्युच्यते, कथं च नाम क्रियया क्रियेप्सितमा स्यात् ? क्रियापि क्रिययेप्सिततमा भवति । कया क्रियया ? सन्दर्शनक्रियया वा, प्रार्थयतिक्रियया वा, अध्यवस्यतिक्रियया वा । इह
य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत्कंचिदर्थं पश्यति, संदृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाय आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलाऽवाप्तिः । एवं क्रियाऽपि कृत्रिमं कर्म ।
एवमपि -- कर्मणः करणसंज्ञा वक्तव्या, सम्प्रदानस्य च कर्मसंज्ञा । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । अग्नौ किल पशुः प्रक्षिप्यते तद्रुरुद्रायोपह्रियत इति ।। 32 ।।
-1-4-37- क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः
किमेत एकार्थाः, आहोस्विन्नानार्थाः ? किं चातः ? यद्येकार्थाः किमर्थं पृथङ्निर्दिश्यन्ते ? अथ नानार्थाः, कथं कुपिना शक्यन्ते विशेषयितुम् ?
एवं तर्हि नानार्थाः, कुपौ त्वेषां सामान्यमस्ति । नह्यकुपितः क्रुध्यति, न वाऽकुपितो द्रुह्यति, न वाऽकुपित ईर्ष्यति, न वाऽकुपितोऽसूयति ।। 37 ।।
-1-4-42- साधकतमं करणम्
तमग्रहणं किमर्थं न साधकं करणमित्येवोच्येत ? साधकं करणमितीयत्युच्यमाने सर्वेषामेव कारकाणां करणसंज्ञा प्रसज्येत । सर्वाणि हि कारकाणि साधकानि । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ।

नैतदस्ति प्रयोजनम् । पूर्वास्तावत्संज्ञा अपवादत्वाद्बाधिका भविष्यन्ति। पराः परत्वादनवकाशत्वाच्च ।
इह तर्हि धनुषा विध्यति अपाययुक्तत्वाच्चाऽपादानसंज्ञा , साधकत्वाच्च करणसंज्ञा प्राप्नोति । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ।
एवं तर्हि लोकत एतत्सिद्धम् । तद्यथा, -- लोके अभिरूपायोदकमानेयम् अभिरूपाय कन्या देयेति, न चानभिरूपे प्रवृत्तिरस्ति, तत्र अभिरूपतमायेति गम्यते । एवमिहाऽपि साधकं करणमित्युच्यते, सर्वाणि च कारकाणि साधकानि, न चाऽसाधके प्रवृत्तिरिति, तत्र साधकतममिति विज्ञास्यते ।
एवं तर्हि सिद्धे सति यत्तमग्रहणं करोति तज्ज्ञापयत्याचार्यः -- कारकसंज्ञायां तरतमयोगो न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? अपादानमाचार्यः किं न्याय्यं मन्यते, यत्र संप्राप्य निवृत्तिः । तेनेहैव स्यात् -- ग्रामादागच्छति, नगरादागच्छतीति । साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्र न स्यात् । कारकसंज्ञायां तरतमयोगो न भवतीत्यत्रापि सिद्धं भवति ।
तथाऽऽधारमाचार्यः किं न्याय्यं मन्यते, यत्र कृत्स्न आधारात्मा व्याप्तो भवति । तेनेहैव स्यात् -- तिलेषु तैलम् दध्नि सर्पिरिति । गङ्गायां गावः, कूपे गर्गकुलमित्यत्र न स्यात् । कारकसंज्ञायां तरतमयोगो न भवतीत्यत्रापि सिद्धं भवति ।। 42 ।।
-1-4-48- उपान्वध्याङ्वसः
वसेरश्यर्थस्य प्रतिषेधः ।। 1 ।।
वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः । ग्रामे उपवसतीति ।। स तर्हि वक्तव्यः ? न वक्तव्यः । नाऽत्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणम् । कस्य तर्हि ? अनुपसर्गस्य । ग्रामेऽसौ वसंस्त्रिरात्रमुपवसतीति ।। 48 ।।
-1-4-49- कर्तुरीप्सिततमं कर्म
तमग्रहणं किमर्थम् ? कर्तुरीप्सितं कर्मेतीयत्युच्यमाने इहाऽग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्रसज्येत। नैष दोषः । कर्मसंज्ञाऽत्र बाधिका भविष्यति । अग्रावपि तहि बाधिका स्यात् । इह पुनस्तमग्रहणे क्रियमाणे तदुपपन्नं भवति यदुक्तं वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनादिति ।
इहोच्यते -- ओदनं पचतीति, यद्योदनः पच्येत द्रव्यान्तरमभिनिर्वर्तेत । नैष दोषः । तादर्थ्यात्ताच्छब्द्यं भविष्यति -- ओदनार्थास्तण्डुला ओदन इति ।
अथेह कथं भवितव्यम् -- तण्डुलानोदनं पचतीति, आहोस्वित् -- तण्डुलानामोदनं पचतीति ? उभयथाऽपि भवितव्यम् । कथम् ? इह हि तण्डुलानोदनं पचतीति द्व्यर्थः पचिः, तण्डुलान्पचन्नोदनं निर्वर्तयतीति ।
इहेदानीं तण्डुलानामोदनं पचतीति द्व्यर्थश्चैव पचिर्विकारयोगे च षष्ठी,तण्डुलविकारमोदनं निर्वर्तयतीति ।
इह कश्चित्कंचिदामन्त्रयते -- सिद्धं भुज्यतामिति । स आमन्त्र्यमाण आह -- प्रभूतं भुक्तमस्माभिरिति । आमन्त्रयमाण आह -- दधि खलु भविष्यति, पयः खलु भविष्यति । आमन्त्र्यमाण आह -- दध्ना खलु भुञ्जीय,
पयसा खलु भुञ्जीयेति । अत्र कर्मसंज्ञा प्राप्नोति । तद्धि तस्येप्सिततमं भवति ।
तस्याप्योदन एवेप्सिततमः। न तु गुणेष्वस्याऽनुरोधः । तद्यथा, -- भुञ्जीयाहमोदनं यदि मृदुविशदः स्यादिति । एवमिहापि दधिगुणमोदनं भुञ्जीय, पयोगुणमोदनं भुञ्जीयेति ।
इर्प्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः क्रियेप्सितत्वात् ।। 1 ।।
इर्प्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञा न प्राप्नोति । गुडं भक्षयतीति । किं कारणम् ? क्रियेप्सितत्वात् । क्रिया तस्येप्सिता ।
न वोभयेप्सितत्वात् ।। 2 ।।
न वैष दोषः । किं कारणम् ? उभयेप्सितत्वात् । उभयं हि तस्येप्सितम् । आतश्चोभयं यस्य हि गुडभक्षणे बुद्धिः प्रसक्ता भवति नासौ लोष्टं भक्षयित्वा कृती भवति ।। यद्यपि तावदत्रैतच्छक्यते वक्तुम्, ये त्वेते राजकर्मिणो मनुष्यास्तेषां कश्चित्कंचिदाह -- कटं कुर्विति । स आह -- नाहं कटं करिष्यामि, घटो मयाऽऽहृतःथ्य;ति । तस्य क्रियामात्रभीप्सितम् ।। यद्यपि तस्य क्रियामात्रमीप्सितं, यस्त्वसौ प्रेषयति तस्योभयमीप्सितमिति ।। 49 ।।
-1-4-50- तथा युक्तं चानीप्सितम्
किमुदाहरणम् ? विषं भक्ष्यतीति । नैतदस्ति । पूर्वेणाप्येतत्सिध्यति । न सिध्यति । कर्तुरीप्सिततमं कर्म (1.4.49) इत्युच्यते, कस्य च नाम विषभक्षणमीप्सितं स्यात् । विषभक्षणमपि कस्यचिदीप्सितं भवति । कथम् ? इह य एष मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते । आतश्चेप्सितं यत्तद्भक्षयति ।। यत्तर्ह्यन्यत्करिष्यामीत्यन्यत्करोति तदुदाहरणम् । कि पुनस्तत् ? ग्रामान्तरमयं गच्छंश्चौरान् पश्यति, अहिं लङ्घयति, कण्टकान्मृदनातीति ।
इर्हेप्सितस्यापि कर्मसंज्ञाऽऽरभ्यतेऽनीप्सितस्यापि यदिदानीं नैवेप्सितं नाप्यनीप्सितं तत्र कथं भवितव्यम् -- ग्रामान्तरमयं गच्छन्वृक्षमूलान्युपसर्पति, कुड्यमूलान्युपसर्पतीति ? अत्रापि सिद्धम् । कथम् ? अनीप्सितमिति नाऽयं प्रसज्यप्रतिषेधः -- इर्प्सितं नेति । किं तर्हि पर्युदासोऽयं -- यदन्यदीप्सितात्तदनीप्सितमिति
। अन्यच्चैवेदीप्सिताद्यन्नैवेप्सितं नाप्यनीप्सितमिति ।। 50 ।।
-1-4-51- अकथितं च
केनाऽकथितम् ? अपादानादिभिर्विशेषकथाभिः ।। किमुदाहरणम् ?
दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तिमाचरितं कविना ।।
दुहि -- गां दोग्धि पयः ।। नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा। । दुहि ।। याचि -- इदं तर्हि -पौरवं गां याचत इति ।। नैतदस्ति । कथितात्र

पूर्वाऽपादानसंज्ञा। ।। न याचनादेवाऽपायो भवति ।। याचितोऽसौ यदि ददाति ततोऽपायेन युज्यते । याचि ।। रुधि -- अन्ववरुणाद्धि गां व्रजम् ।। नैतदस्ति । कथिताऽत्र पूर्वाधिकरणसंज्ञा। रुधि । प्रच्छि -- माणवकं पन्थानं पृच्छति ।। नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा। ।। न प्रश्नादेवाऽपायो भवति । पृष्टोऽसौ यद्याचष्टे ततोऽपायेन युज्यते । प्रच्छि ।। भिक्षि-पौरवं गां भिक्षते ।। नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा। ।। न भिक्षणादेवाऽपायो भवति । भिक्षितोऽसौ यदि ददाति ततोऽपायेन युज्यते । भिक्षि ।। चिञ् -- वृक्षमवचिनोति फलानि ।। नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा। ।। ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना।। ब्रुविशासिगुणेन यत्सचते तच्चोदाहरणम् । किं पुनस्तत् ? पुत्रं ब्रूते धर्मम्, पुत्रमनुशास्ति धर्ममिति ।। नैतदस्ति । कथिताऽत्र पूर्वा संप्रदानसंज्ञा ।। तस्मात् त्रीण्येवोदाहरणानि । पौरवं गां याचते, माणवकं पन्थानं पृच्छति, पौरवं गां भिक्षते इति ।

अथ ये धातूनां द्विकर्मकास्तेषां किं कथिते लादयो भवन्त्याहोस्विदकथिते ? कथिते लादयः ।। कथिते लादिभिरभिहिते गुणकर्मणि का कर्तव्या ?

कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे ।

कथिते लादयश्चेत्स्युः षष्ठी गुणकर्मणि तदा कर्तव्या । दुह्यते गोः पयः याच्यते पौरवस्य कम्बल इति ।। कथम् ?

अकारकं ह्यकथितात्

अकारकं ह्येतद्भवति । किं कारणम् ? अकथितत्वात् ।

कारकं चेत्तु नाऽकथा ।।

अथ कारकं नाऽकथितम् ।। अथ कारके सति का कर्तव्या ?

कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् ।।

कारकं चेद्विजानीयाद्या या प्राप्नोति सा सा कर्तव्या । दुह्यते गोः पयः । याच्यते पौरवात्कम्बल इति ।

कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ।

कथिते लादिभिरभिहिते त्वविधिरेष भवति । किमिदं त्वविधिरिति ? तव विधिस्त्वविधिः । त्वमतिः । किमिदं त्वमतिरिति ? तव मतिस्त्वमतिरिति । नैवमन्ये मन्यन्ते ।। कथं तर्ह्यन्ये मन्यन्ते ? गुणकर्मणि लादिविधिःसपरे। गुणकर्मणिलादिविधयो भवन्ति सह परेण योगेन -- गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ (1.4.52) इति ।

ध्रुवचेष्टितयुक्तिषु चाऽप्यगुणे तदनल्पमतेर्वचनं स्मरत ।।

ध्रुवयुक्तिषु चेष्टितयुक्तिषु चाऽप्यगुणे कर्मणि लादयो भवन्ति, एतदनल्पमतेराचार्यस्य वचनं स्मर्यताम् ।। अपर आह -- -

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।

प्रधानकर्मण्यभिधेये द्विकर्मणां धातूना कर्मणि लादयो भवन्तीति वक्तव्यम् । अजां नयति ग्रामम् । अजा नीयते ग्रामम् । अजा नीता ग्राममिति ।

अप्रधाने दुहादीनाम्

अप्रधाने दुहादीनां कर्मणि लादयो भवन्तीति वक्तव्यम् । दुह्यते गौः पयः ।

ण्यन्ते कर्तुश्च कर्मणः ।।

ण्यन्ते कर्तुश्च कर्मणो लादयो भवन्तीति वक्तव्यम् । गम्यते, यज्ञदत्तो ग्रामं देवदत्तेन ।

के पुनर्धातूनां द्विकर्मकाः ?

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।

द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ।।

अजां नयति ग्रामम् । भारं वहति ग्रामम् । भारं हरति ग्रामम् । गत्यर्थानाम् -- गमयति देवदत्तं ग्रामम् । यापयति देवदत्तं ग्रामम् ।

सिद्धं वाऽप्यन्यकर्मणः ।

सिद्धं वा पुनरेतद्भवति । कुतः ? अन्यकर्मणः । अन्यस्याऽत्राऽजा कर्मान्यस्य ग्रामः । अजामसौ गृहीत्वा ग्रामं नयति ।

अन्यकर्मेति चेद्ब्रूयाल्लादीनामविधिर्भवेत् ।।

अन्यकर्मेति चेद्ब्रूयाल्लादीनामविधिरयं भवेत् । अजा नीयते ग्राममिति । परसाधन उत्पद्यमानेन लेनाऽजाया अभिधानं न प्राप्नोति ।

कालभावाऽध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।

कालभावाध्वगन्तव्या अकर्मकाणां धातूनां कर्मसंज्ञा भवन्तीति वक्तव्यम् । काल-मासमास्ते । मासं स्वपिति ।। भाव -- गोदोहमास्ते । गोदोहं स्वपिति ।। अध्वगन्तव्य-क्रोशमास्ते । क्रोशं स्वपिति ।

(देशश्च।।ट

देशश्चाऽकर्मकाणां कर्मसंज्ञो भवतीति वक्तव्यम् । कुरून्स्वपिति पञ्चालान्स्वपिति ।

विपरीतं तु यत्कर्म तत्कल्म कवयो विदुः ।।

किमिदं कल्मेति ? अपरिसमाप्तं कर्म कल्म । न वा अस्मिन्सर्वाणि कर्मकार्याणि क्रियन्ते । किं तर्हि ? द्वितीयैव ।

यस्मिंस्तु कर्मण्युपजायतेऽन्यद्भावात्वर्थयोगाऽपि च यत्र षष्ठी ।

तत्कर्म कल्मेति च। कल्म नोक्तं धातोर्हि वृत्तिर्न रलत्वतोऽस्ति ।।

एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन ।

तत्रेप्सितस्य किं स्यात्प्रयोजनं कर्मसंज्ञायाः ।।

यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम् ।

इप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन ।।

अथेह कथं भवितव्यम्-नेताऽश्वस्य स्रुघ्नमिति, आहोस्विन्नेताऽश्वस्य स्रुघ्नस्येति ? उभयथा गोणिकापुत्रः ।। 51 ।।
-1-4-52- गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ
शब्दकर्मेति कथमिदं विज्ञायते -- शब्दो येषां क्रियेति, आहोस्वि-च्छब्दो येषां कर्मेति ? कश्चात्र विशेषः ?
शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधः ।। 1 ।।
शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधो वक्तव्यः । के पुनर्ह्वयत्यादयः ? ह्वयति क्रन्दति शब्दायते ।। ह्वयति देवदत्तः । ह्वाययति देवदत्तेन ।। क्रन्दति देवदत्तः । क्रन्दयति देवदत्तेन ।। शब्दायते देवदत्तः । शब्दाययति देवदत्तेनेति ।
शृणोत्यादीनामुपसंख्यानमशब्दक्रियत्वात् ।। 2 ।।
शृणोत्यादीनां चोपसंख्यानं कर्तव्यम् । के पुनः शृणोत्यादयः ? शृणोति विजानाति उपलभ्यते ।। शृणोति देवदत्तः । श्रावयति देवदत्तम् ।। विजानाति देवदत्तः । विज्ञापयति देवदत्तम् ।। उपलभते देवदत्तः । उपलम्भयति देवदत्तम् । किं पुनः कारणं न सिध्यति ? अशब्दक्रियत्वात् । अस्तु तर्हि -- शब्दो येषां कर्मेति ।
शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानम् ।। 3 ।।
शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानं कर्तव्यम् । के पुनर्जल्पतिप्रभृतयः ? जल्पति विलपति आभाषते ।। जल्पति देवदत्तः । जल्पयति देवदत्तम् ।। विलपति देवदत्तः । विलापयति देवदत्तम् ।। आभाषते देवदत्तः । आभाषयति देवदत्तम् ।
दृशेः सर्वत्र ।। 4 ।।
दृशेः सर्वत्रोपसंख्यानं कर्तव्यम् । पश्यति रूपतर्कः कार्षापणम् । दर्शयति रूपतर्कं कार्षापणम् ।
अदिखादिनीवहीनां प्रतिषेधः ।। 5 ।।
अदिखादिनीवहीनां प्रतिषेधो वक्तव्यः ।। अत्ति देवदत्तः । आदयते देवदत्तेन ।। अपर आह -- सर्वमेव प्रत्यवसानकार्यमदेर्न भवतीति वक्तव्यं परस्मैपदमपि। । इदमेकमिष्यते -- क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसनार्थेभ्यः (3.4.76) । इदमेषां जग्धम् ।। खादि -- खादति देवदत्तः । खादयति देवदत्तेन ।। नी-नयति देवदत्तः । नाययति देवदत्तेन ।
वहेरनियन्तृकर्तृकस्य ।। 6 ।।
वहेरनियन्तृकर्तकस्येति वक्तव्यम् । वहति भारं देवदत्तः । वाहयति भारं देवदत्तेन ।। अनियन्तृकर्तृकस्येति किमर्थम् ? वहन्ति बलीवर्दाः यवान् । वाहयति बलीवर्दान् यवान् ।
भक्षेरहिंसार्थस्य ।। 7 ।।
भक्षेरहिंसार्थस्येति वक्तव्यम् । भक्षयति पिण्डीं देवदत्तः । भक्षयति पिण्डीं देवदत्तेन ।। अहिंसार्थस्येति किमर्थम् ? भक्षयन्ति यवान्बलीवर्दाः । भक्षयति बलीवर्दान् यवान् ।
अकर्मकग्रहणे कालकर्मणामुपसंख्यानम् ।। 8 ।।
अकर्मकग्रहणे कालकर्मणामुपसंख्यानं कर्तव्यम् ।। मासमास्ते देवदत्तः । मासमासयति देवदत्तम् । मासं शेते देवदत्तः । मासं शाययति देवदत्तम् ।
सिद्धं तु कालकर्मणामकर्मकवद्वचनात् ।। 9 ।।
सिद्धमेतत् । कथम् ? कालकर्मका अकर्मकवद्भवन्तीति वक्तव्यम् ।। तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अकर्मकाणामित्युच्यते न च केचित्कदाचित्कालभावाध्वभिरकर्मकाः । तं एवं विज्ञास्यामः क्वचिद्येऽकर्मका इति ।।
अथवा येन कर्मणा सकर्मकाश्चाऽकर्मकाश्च भवन्ति तेनाऽकर्मकाणाम्, न चैतेन कर्मणा कश्चिदप्यकर्मकः ।। अथवा यत्कर्म भवति, न च भवति, तेनाऽकर्मकाणाम् । न चैतत्कर्म क्वचिदपि न भवति ।। 52 ।।
-1-4-53- ह्रक्रोरन्यतरस्याम्
ह्रक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानम् ।। 1 ।।
ह्रक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानं कर्तव्यम् । अभिवदति गुरुं देवदत्तः । अभिवादयते गुरुं देवदत्तेन । अभिवादयते गुरुं देवदत्तम् ।। पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यै राजा । दर्शयते भृत्यान् राजा ।। कथं चाऽत्राऽऽत्मनेपदम् ? एकस्य णेरणौ (1.3.67) इति, अपरस्य णिचश्च (1.3.74) इति ।। 53 ।।
-1-4-54- स्वतन्त्रः कर्ता
किं यस्य स्वं तन्त्रं स स्वतन्त्रः ? किं चातः ? तन्तुवाये प्राप्नोति ।
नैष दोषः । अयं तन्त्रशब्दोऽस्त्येव विताने वर्तते । तद्यथा, -- आस्तीर्णं तन्त्रम्, प्रोतं तन्त्रमिति । वितानमिति गम्यते । अस्ति प्राधान्ये वर्तते । तद्यथा, -- स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते । स्वप्रधान इति गम्यते । तद्यः प्राधान्ये वर्तते तन्त्रशब्दस्तस्येदं ग्रहणम् ।
स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानमस्वतन्त्रत्वात् ।। 1 ।।
स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानं कर्तव्यम् । पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति । किं पुनः कारणं न सिध्यति ? अस्वतन्त्रत्वात् ।
न वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीति स्यात् ।। 2 ।।
न वा कर्तव्यम् । किं कारणम् ? स्वातन्त्र्यात् । स्वतन्त्रोऽसौ भवति । इतरथा ह्यकुर्वत्यपि कारयतीति स्यात् यो हि मन्यते -- नाऽसौ स्वतन्त्रः, अकुर्वत्यपि तस्य कारयतीत्येतत्स्यात् ।
नाऽकुर्वतीति चेत्स्वतन्त्रः ।। 3 ।।
न चेदमकुर्वति तस्मिन्कारयतीत्येतद्भवति, स्वतन्त्रोऽसौ भवति ।
शक्यं तावदनेनोपसंख्यानं कुर्वता वक्तुं -- कुर्वन्स्वतन्त्रोऽकुर्वन्नेति । साधीयो ज्ञापकं भवति । प्रेषिते च किलायं क्रियां चाऽक्रियां च

दृष्ट्वाऽध्यवस्यति कुर्वन्स्वतन्त्रोऽकुर्वन्नेति । यदि च प्रेषितोऽसौ न करोति स्वतन्त्रोऽसौ भवतीति ।। 54 ।।
-1-4-55- तत्प्रयोजको हेतुश्च
प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाऽप्रसिद्धिः ।। 1 ।।
प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाया अप्रसिद्धिः प्राप्नोति । स्वतन्त्रप्रयोजको हेतुसंज्ञो भवतीत्युच्यते, न चासौ स्वतन्त्रं प्रयोजयति ।।
स्वतन्त्रत्वात्सिद्धम् ।।
स्वतन्त्रत्वासिद्धमेतत् । स्वतन्त्रमसौ प्रयोजयति ।
स्वतन्त्रत्वात्सिद्धमिति चेत्स्वतन्त्रपरतन्त्रत्वं विप्रतिषिद्धम् ।। 2 ।।
यदि च स्वतन्त्रो न प्रयोज्यः अथ प्रयोज्यो न स्वतन्त्रः, प्रयोज्यः स्वतन्त्रश्चेति विप्रतिषिद्धम् ।
उक्तं वा ।। 3 ।।
किमुक्तम् ? एकं तावदुक्तम् - न वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीत्येतत्स्यात् इति । अपरमुक्तम् -- न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्। स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम् इति ।। 55 ।।
इति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ।
। । ।
-1-4-56- प्राग्रीश्वरान्निपाताः
किमर्थं रेफाधिक इश्वरशब्दो गृह्यते ?
रीश्वराद्वीश्वरान्मा भूत्
रीश्वरादित्युच्यते, वीश्वरान्मा भूदिति -- शकिणमुल्कमुलावीश्वरेतोसुन्कसुनौ (3.4.12; 13) इति ।। नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति -- अनन्तरो य इश्वरशब्दस्य ग्रहणमिति। यदयं कृन्मेजन्तः (1.1.39) इति कृतो मान्तस्यैजन्तस्याऽव्ययसंज्ञां शास्ति ।
कृन्मेजन्तः परोऽपि सः ।
परोऽप्येतस्मात्कृन्मान्त एजन्तश्चास्ति । तदर्थमेतत्स्यात् ।।.यत्तर्ह्यव्ययीभावस्याव्ययसंज्ञां शास्ति तज्ज्ञापयत्याचार्योऽनन्तरो य इश्वरशब्दस्तस्य ग्रहणमिति ।
समासेष्वव्ययीभावः
समासस्यैतज्ज्ञापकं स्यात् -- अव्ययीभाव एव समासोऽव्ययसंज्ञो भवति नाऽन्य इति ।। एवं तर्हि लोकत एतत्सिद्धम् । तद्यथा, -- लोके आ वनान्तादोदकान्तात् प्रियं पान्थमनुव्रजेदिति । य एव प्रथमो वनान्त उदकान्तश्च ततोऽनुव्रजन्ति ।
लौकिकं चाऽतिवर्तते ।।
द्वितीयं तृतीयं च वनान्तमुदकान्तं चानुव्रजन्ति ।। तस्माद्रेफाधिक इश्वरशब्दो ग्रहीतव्यः ।
अथ प्राग्वचनं किमर्थम् ?
प्राग्वचनं संज्ञाऽनिवृत्त्यर्थम् ।। 1 ।।
प्राग्वचनं क्रियते निपातसंज्ञाया अनिवृत्तिर्यथा स्यात् । अक्रियमाणे हि प्राग्वचनेऽनवकाशाः
गत्युपसर्गकर्मप्रवचनीयसंज्ञाः निपातसंज्ञां बाधेरन् । ताः मा बाधिषतेति प्राग्वचनं क्रियते ।। अथ क्रियमाणेऽपि प्राग्वचने यावताऽनवकाशा एताः संज्ञाः कस्मादेव न बाधन्ते ? क्रियमाणे हि प्राग्वचने सत्यां निपातसंज्ञायामेता अवयवसंज्ञा आरभ्यन्ते तत्र वचनात्समावेशो भवति ।। 56 ।।
-1-4-57- चादयोऽसत्त्वे
अयं सत्त्वशब्दोऽस्त्येव द्रव्यपदार्थकः -- तद्यथा, -- सत्त्वमयं ब्राह्मणः, सत्त्वमियं ब्राह्मणीति । अस्ति क्रियापदार्थकः -- सद्भावः सत्त्वमिति । कस्येदं ग्रहणम् ? द्रव्यपदार्थकस्य । कुत एतत् ? एवं च कृत्वा विधिश्च सिद्धो भवति, प्रतिषेधश्च ।
किं पुनरयं पर्युदासो -- यदन्यत्सत्त्ववचनादिति, आहोस्वित्प्रसज्याऽयं प्रतिषेधः -- सत्त्ववचने नेति ? किं चातः ? यदि पर्युदासो विप्र इत्यत्रापि प्राप्नोति । क्रियाद्रव्यवचनोऽयं संघातः, द्रव्यादन्यश्च विधिनाऽऽश्रीयते । अस्ति च प्रादिभिः सामान्यमिति कृत्वा तदन्तविधिना निपातसंज्ञा प्राप्नोति ।
अथ प्रसज्यप्रतिषेधो न दोषो भवति ।। यथा न दोषस्तस्थास्तु ।। 57 ।।
-1-4-58- प्रादयः
प्रादय इति योगविभागः निपातसंज्ञार्थः, एकयोगे हि निपातसंज्ञाभावः।। 1 ।।
प्रादय इति योगविभागः कर्तव्यः । प्रादयोऽसत्त्ववचना निपातसंज्ञा भवन्ति । तत उपसर्गाः क्रियायोगे इति ।। किमर्थो योगविभागः ?
निपातसंज्ञाऽर्थः ।। 2 ।।
निपातसंज्ञा यथा स्यात् ।
एकयोगे हि निपातसंज्ञाऽभावः ।। 3 ।।
एकयोगे हि सति निपातसंज्ञाया अभावः स्यात् । यस्मिन्नेव विशेषे, गत्युपसर्गकर्मप्रवचनीयसंज्ञास्तस्मिन्नेव विशेषे निपातसंज्ञा स्यात् ।
मरुच्छब्दस्योपसंख्यानम् ।। 4 ।।
मरुच्छशब्दस्योपसंख्यानं कर्तव्यम् । मरुद्दत्तो मरुतः । अच उपसर्गाद् (7.4.47) इति तत्वं यथा स्यात् ।
श्रच्छब्दस्योपसंख्यानम् ।। 5 ।।
श्रच्छब्दस्योपसंख्यानं कर्तव्यम् । श्रद्धा । ।। 58।।

-1-4-59- उपसर्गाः क्रियायोगे
प्रादय इति योगविभागः निपातसंज्ञार्थः, एकयोगे हि निपातसंज्ञाभावः।। 1 ।।
प्रादय इति योगविभागः कर्तव्यः । प्रादयोऽसत्त्ववचना निपातसंज्ञा भवन्ति । तत उपसर्गाः क्रियायोगे इति ।। किमर्थो योगविभागः ?
निपातसंज्ञाऽर्थः ।। 2 ।।
निपातसंज्ञा यथा स्यात् ।
एकयोगे हि निपातसंज्ञाऽभावः ।। 3 ।।
एकयोगे हि सति निपातसंज्ञाया अभावः स्यात् । यस्मिन्नेव विशेषे, गत्युपसर्गकर्मप्रवचनीयसंज्ञास्तस्मिन्नेव विशेषे निपातसंज्ञा स्यात् ।
मरुच्छब्दस्योपसंख्यानम् ।। 4 ।।
मरुच्छशब्दस्योपसंख्यानं कर्तव्यम् । मरुद्दत्तो मरुतः । अच उपसर्गाद् (7.4.47) इति तत्वं यथा स्यात् ।
श्रच्छब्दस्योपसंख्यानम् ।। 5 ।।
श्रच्छब्दस्योपसंख्यानं कर्तव्यम् । श्रद्धा । ।। 58।।
-1-4-60- गतिश्च
कारिकाशब्दस्य ।। 1 ।।
कारिकाशब्दयोपसंख्यानं कर्तव्यम् । कारिकाकृत्य। ।
पुनश्चनसौ छन्दसि ।। 2 ।।
पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम् । पुनरुत्स्यूतं वासो देयम् । पुनर्निष्कृतो रथः उशिग्दूतश्चनोहित इति ।
गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीति वचनम् ।। 3 ।।
गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञा भवन्तीति वक्तव्यम् ।। किं प्रयोजनम् ?
प्रयोजनं घञ्ञ्षत्वणत्वे ।। 4 ।।
घञ्ञ् -- प्रवृद्धो भावः प्रभावः । अनुपसर्गे इति प्रतिषेधो मा भूत् ।
षत्वम् -- विगताः सेचका अस्माद्ग्रामाद्विसेचको ग्रामः । उपसर्गादिति षत्वं मा भूत् । णत्वम् -- प्रगता नायका अस्माद् ग्रामात्प्रनायको ग्रामः । उपसर्गादिति णत्वं मा भूत् ।
वृद्धिविधौ च धातुग्रहणानर्थक्यम् ।। 5 ।।
वृद्धिविधौ च धातुग्रहणमनर्थकम् -- उपसर्गादृति धातौ (6.1.91) इति । तत्र धातुग्रहणस्यैतत्प्रयोजनमिह मा भूत् -- प्रर्षभं वनमिति । क्रियमाणे चाऽपि धातुग्रहणे र्प्रच्छकः‍थ्य;त्यत्र प्राप्नोति । यत्क्रियायुक्तास्तं प्रतीति
वचनान्न भवति ।
वृद्धिधिनस्भावाऽबीत्त्वस्वाङ्गादिस्वरणत्वेषु दोषः।। 6।।
वद्विधिनस्भावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु दोषो भवति। वद्विधि -- यदुद्वतो निवतो यासि वप्सन् । वद्विधिः ।। नस्भाव -- प्रणसं मुखम् । उन्नसं मुखम् । नस्भाव ।। अबीत्व -- प्रेपं परेपम् । अबीत्व ।। स्वाङ्गादिस्वर -- प्रस्फिक् प्रोदरः । स्वाङ्गादिस्वर ।। णत्व -- प्र णः शूद्रः, प्र ण आचार्यः, प्र णो राजा, प्र णो वृत्रहा ।। उपसर्गादित्येते विधयो न प्राप्नुवन्ति ।
वद्विधिनस्भावाबीत्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात्सिद्धम् ।। 6 ।।
अनवकाशा एते विधयस्ते वचनप्रामाण्याद्भविष्यन्ति ।
सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु ।। 7 ।।
सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु वक्तव्यः ।। नुम्विधि -- सुलभं दुर्लभम् । उपसर्गादिति नुम् मा भूदिति । न सुदुर्भ्यां केवलाभ्याम् (7.1.68) इत्येतन्न वक्तव्यं भवति ।। नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव ।।
<M.2.286>
तत्व -- सुदत्तम् । अच उपसर्गात्तः (7.4.47) इति तत्वं मा भूदिति ।। षत्व-सुसिक्तं घटशतेन । सुस्तुतं श्लोकशतेन उपसर्गादिति षत्वं मा भूदिति। । सुः पूजायाम् (1.4.94) इत्येतन्न वक्तव्यं भवति ।। नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव ।। णत्व -- दुर्नयं दुर्नीतमिति । उपसर्गादिति णत्वं मा भूदिति ।। 60 ।।
-1-4-61- ऊर्यादिच्विडाचश्च
कृभ्वस्तियोग।। 1 ।।
कृभ्वस्तियोग इति वक्तव्यम् । इहैव यथा स्यात् -- ऊरीकृत्य उरीभूय । इह मा भूत् -- ऊरी पक्त्वा ।। तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । क्रियायोग इत्यनुवर्तते । न चाऽन्यया क्रिययोर्यादिच्विडाचां योगोऽस्ति ।। 60 ।।
-1-4-62- अनुकरणं चाऽनितिपरम्
कथमिदं विज्ञायते -- इतेः परमितिपरं न इतिपरमनितिपरमिति, आहोस्विदितिः परो यस्मात्तदिदमितिपरं न इतिपरमनितिपरमिति ।। किं चातः ? यदि विज्ञायते -- इतेः परमितिपरं न इतिपरमनितिपरमिति, खाडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोति । अथ विज्ञायते -- इतिः परो यस्मात्तदितिपरं न इतिपरमनितिपरमिति, श्रौषड्वौषडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोति ।
<M.2.287>
अस्तु तावदितिः परो यस्मात्तदिदमितिपरम्, न इति परमनितिपरमिति । ननु चोक्तम् -- श्रौषड्वौषडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोतीति । नैष

दोषः । इदं तावदयं प्रष्टव्यः -- अथेह ते प्राग्धातोः (1.4.80) इति कथं गतिमात्रस्य पूर्वप्रयोगो भवति -- उपोद्धरतीति ? गत्याकृतिः प्रतिनिर्दिश्यते । इहापि तर्ह्यनुकरणाऽऽकृतिः प्रतिनिर्दिश्यते ।
किमर्थमिदमुच्यते ?
अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ।। 1 ।।
अनुकरणस्येतिकरणपरत्वप्रतिषेध उच्यते । किं प्रयोजनम् ? अनिष्टशब्दनिवृत्त्यर्थः । अनिष्टशब्दता मा भूदिति । इदं विचारयिष्यते- प्राग्धातुवचनं प्रयोगनियमार्थं वा स्यात्संज्ञानियमार्थं वेति। । तद्यदा प्रयोगनियमार्थं तदाऽनिष्टशब्दनिवृत्त्यर्थमिदं वक्तव्यम् । यदा हि संज्ञानियमार्थं तदा न दोषो भवति ।। 61 ।।
-1-4-63- आदराऽनादरयोः सदसती
इदमतिबहु क्रियते-आदरे अनादरे सद् असदिति । आदरे सदित्येव सिद्धम् । कथमसत्कृत्येति ? तदन्तविधिना भविष्यति । केनेदानीमनादरे भविष्यति ?
<M.2.288>
नञाऽऽदरप्रतषेधं विज्ञास्यामः - न आदरेऽनादर इति ।
नैवं शक्यम् । आदरप्रसङ्गे एव हि स्यादनादरप्रसङ्गे न स्यात् । अनादरग्रहणे पुनः क्रियमाणे बहुव्रीहिरयं विज्ञायते-अवद्यमानादरेऽनादरे इति । तस्मादनादरग्रहणं कर्तव्यम्, असतस्तु तदन्तविधिना सिद्धम् ।। 63 ।।
-1-4-65- अन्तरपरिग्रहे
अन्तःशब्दस्याऽङ्किविधिसमासणत्वेषूपसंख्यानम् ।। 1 ।।
अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानं कर्तव्यम् । अङ्-अन्तर्द्धा ।। किविधिः-अन्तर्द्धिः ।। समासः -- अन्तर्हत्य ।। णत्वम् -- अन्तर्हण्याद्गोभ्यो गाः ।। 65 ।।
-1-4-74- साक्षात्प्रभृतीनि च
साक्षात्प्रभृतिषु च्व्यर्थवचनम् ।। 1 ।।
साक्षात्प्रभृतिषु च्व्यर्थवचनं कर्तव्यम् । असाक्षात्साक्षात्कृत्वा साक्षात्कृत्य । यदा हि साक्षादेव सत्किंचित् क्रियते तदा मा भूदिति ।
मकारान्तत्वं च गतिसंज्ञासंनियुक्तम् ।। 2 ।।
मकारान्तत्वं च गतिसंज्ञासंनियोगेन वक्तव्यम् । लवणंकृत्य ।
<M.2.289>
तत्र च च्विप्रतिषेधः ।। 3 ।।
तत्र च च्व्यन्तस्य प्रतिषेधो वक्तव्यः । लवणीकृत्य ।
न वा पूर्वेण कृतत्वात् ।। 4 ।।
न वा वक्तव्यम् । किं कारणम् ? पूर्वेण कृतत्वात् । अस्त्वनेन विभाषा, पूर्वेण नित्या भविष्यति। ।
इदं तर्हि प्रयोजनम् -- मकारान्तत्वं च गतिसंज्ञासन्नियुक्तमित्युक्तं तच्च्व्यन्तस्य मा भूदिति । एतदपि नास्ति प्रयोजनम् । लवणशब्दस्याऽयं विभाषा लवणं शब्द आदेशः क्रियते । यदि च लवणीशब्दस्याऽपि विभाषा लवणंशब्द आदेशो भवति न किंचिद् दुष्यति । त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवतीति ।। 74 ।।
-1-4-80- ते प्राग्धातोः
किमिदं प्राग्धातुवचनं प्रयोगनियमार्थम् - एते प्रागेव धातोः प्रयोक्तव्याः, आहोस्वित्संज्ञानियमार्थम् -- एते प्राक्चाऽप्राक्च प्रयोक्तव्याः, प्राक्प्रयुज्यमानानां गतिसंज्ञा भवतीति । कश्चाऽत्र विशेषः ?
प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरण परप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ।। 1 ।।
प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? अनिष्टशब्दनिवृत्त्यर्थः । अनिष्टशब्दता मा भूदिति ।
छन्दसिपरव्यवहितवचनं च ।। 2 ।।
छन्दसि परेऽपि व्यवहिताश्च (1.4.81 ; 82) इति वक्तव्यम् ।
संज्ञानियमे सिद्धम् ।। 3 ।।
संज्ञानियमे सति सिद्धमेतद्भवति ।
<M.2.290>
अस्तु तर्हि संज्ञानियमः ।
उभयोरनर्थकं वचनमनिष्टाऽदर्शनात् ।। 4 ।।
उभयोरपि पक्षयोर्वचनमनर्थकम् । किं कारणम् ? अनिष्टाऽदर्शनात् । न हि कश्चित्प्रपचतीति प्रयोक्तव्ये पचति प्रेति प्रयुङ्क्ते । यदि चाऽनिष्टं दृश्येत, ततो यत्नार्हं स्यात् ।
उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थम् ।। 5 ।।
उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थमेतद्वक्तव्यम् -- ऋषभं कूलमुद्रुजम्, ऋषभं कूलमुद्वहम् । । अत्र गतेः प्राग्धातोः प्रयोगो यथा स्यात् ।
यद्युपसर्जनसन्निपाते पूर्वपरव्यवस्थार्थमिदमुच्यते, सुकटङ्कराणि वीरणानीत्यत्र गतेः प्राग्धातोः प्रयोगः प्राप्नोति । आचार्यप्रवृत्तिर्ज्ञापयति -

नाऽत्र गतेः प्राक्प्रयोगो भवतीति। यदयम् इर्षद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खलु (3.3.126) इति खकारमनुबन्धं करोति । कथं कृत्वा ज्ञापकम् ? खित्करणे एतत्प्रयोजनं खितीति मुम् यथा स्यादिति । यदि चाऽत्र गतेः प्राक्प्रयोगः स्यात्, खित्करणमनर्थकं स्यात् । अस्त्वत्र मुम् । अनव्ययस्येति प्रतिषेधो भविष्यति । पश्यति त्वाचार्यो नात्र गतेः प्राग्धातोः प्रयोगो भवतीति। ततः खकारमनुबन्धं करोति ।
नैतदस्ति ज्ञापकम् । यद्यत्र गतेः प्राक्प्रयोगः स्यात्। स्यादेवाऽत्र मुमागमः । कथम् ? कृदग्रहणे
गतिकारकपूर्वस्यापि ग्रहणं भवतीति । तस्मान्नार्थ एवमर्थेन प्राग्धातुवचनेन ।। कथम्-ऋषभं कूलमुद्रुजम्, ऋषभं कूलमुद्वहम् ? नैष दोषः । नैष उदिरुपपदम् । किं तर्हि ? विशेषणम् । उदि कूले रुजिवहोः (3.2.31) उत्पूर्वाभ्यां रुजिवहिभ्यां कूले उपपद इति ।। 80 ।।
-1-4-83- कर्मप्रवचनीयाः
किमर्थं महती संज्ञा क्रियते ? अन्वर्थसंज्ञा यथा विज्ञायेत-कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति । के पुनः कर्म प्रोक्तवन्तः ? ये संप्रति क्रियां नाहुः । के च संप्रति क्रियां नाहुः ? येऽप्रयुज्यमानस्य क्रियामाहुस्ते कर्मप्रवचनीयाः ।। 83 ।।
-1-4-84- अनुर्लक्षणे
किमर्थमिदमुच्यते ? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति । किं च स्यात् ? शाकल्यस्य संहितामनु प्रावर्षत् -- गतिर्गतौ (8.1.70) इति निघातः प्रसज्येत ।
यद्येवं वेरपि कर्मप्रवचनीयसंज्ञा वक्तव्या । वेरपि निघातो नेष्यते-प्रादेशं विपरिलिखति । अस्त्यत्र विशेषः । नाऽत्र वेर्लिखिं प्रति क्रियायोगः । किं तर्हि ? अप्रयुज्यमानम्-प्रादेशं विमाय परिलिखतीति ।
यद्येवमनोरपि कर्मप्रवचनीयसंज्ञया नार्थः । अनोरपि हि न वृषिं प्रति क्रियायोगः । किं तर्हि ? अप्रयुज्यमानम् -- शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत् । इदं तर्हि प्रयोजनं, द्वितीया यथा स्यात् -- कर्मप्रवचनीययुक्ते द्वितीया (2.3.8) इति ।। अत उत्तरं पठति --
अनुर्लक्षणेवचनानर्थक्यं सामान्यकृतत्वात् ।। 1 ।।
अनुर्लक्षणेवचनमनर्थकम् । किं कारणम् ? सामान्यकृतत्वात् । सामान्येनैवात्र कर्मप्रवचनीयसंज्ञा भविष्यति लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ( 1.4.90) इति ।
हेत्वर्थं तु वचनम् ।। 2 ।।
हेत्वर्थमिदं वक्तव्यम् । हेतुः शाकल्यस्य संहिता वर्षस्य, न लक्षणम् । किं वक्तव्यमेतत् ? नहि कथमनुच्यमानं गंस्यते ? लक्षणं हि नाम स भवति येन पुनः पुनर्लक्ष्यते, न यः सकृदपि निमित्तत्वाय कल्पते । सकृच्चाऽसौ शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत् ।
स तर्हि तथा निर्देशः कर्तव्योऽनुर्हेताविति ।। अथेदानीं लक्षणेन हेतुरपि व्याप्तो नार्थोऽनेन । लक्षणेन हेतुरपि व्याप्तः । न ह्यवश्यं तदेव लक्षणं भवत-येन पुनः पुनर्लक्ष्यते । किं तर्हि ? यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति । तद्यथा, -- अपि भवान्कमण्डलुपाणिं छात्रमद्राक्षीदिति । सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति ।
एतदेव तर्हि प्रयोजनम् -- द्वितीया यथा स्यात्, कर्मप्रवचनीययुक्ते द्वितीयेति । एतदपि नास्ति प्रयोजनम् । सिद्धाऽत्र द्वितीया कर्मप्रवचनीययुक्ते इत्येव । न सिध्यति । परत्वाद्धेत्वाश्रया तृतीया प्राप्नोति। ।। 84 ।।
-1-4-89- आङ् मर्यादावचने
आङ्मर्यादाऽभिविध्योः।। 1 ।।
आङ्मर्यादाऽभिविध्योरिति वक्तव्यम् । इहापि यथा स्यात् -- आकुमारं यशः पाणिनेरिति ।। तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । मर्यादावचने इत्येव सिद्धम् । एषाऽस्य यशसो मर्यादा ।। 89 ।।
-1-4-90- लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः
कस्य लक्षणादयोऽर्था निर्दिश्यन्ते ? वृक्षादीनाम् ।। किमर्थं पुनरिदमुच्यते ? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति । नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न च वृक्षादीन्प्रति क्रियायोगः ।
इदं तर्हि प्रयोजनम्, द्वितीया यथा स्यात् -- कर्मप्रवचनीययुक्ते द्वितीया (2.3.8) इति । वृक्षं प्रति विद्योतते वृक्षमनु विद्योतते इति ।। 90 ।।
-1-4-93- अधिपरी अनर्थकौ
किमर्थमधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञोच्यते ? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपर्सगसंज्ञे मा
भूतामिति । नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तौ तं प्रति गत्युपसर्गसंज्ञौ भवतः। अनर्थकौ चेमौ ।
इदं तर्हि प्रयोजनम्, पञ्चमी यथा स्यात् -- पञ्चम्यपाङ्परिभिः (2.3.10) इति, कुतः पर्यागम्यत इति ।
सिद्धं तु पञ्चम्यपादाने इत्येव । आतश्चापादानपञ्चम्येव, यत्राधिशब्देन योगे पञ्चमी न विधीयते तत्रापि श्रूयते -- कुतोऽध्यागम्यते इति ।
एवं तर्हि सिद्धे सति यदनर्थकयोरुपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ति तज्ज्ञापयत्याचार्योऽनर्थकानामप्येषां भवत्यर्थवत्कृतमिति । किमेतस्य ज्ञापने प्रयोजनम् ? निपातस्याऽनर्थकस्य प्रातिपदिकत्वं चोदितं तन्न वक्तव्यं भवति ।
अथवा नेमावनर्थकौ । किं तर्ह्यनर्थकावित्युच्यते ? अनर्थान्तरवाचिनावनर्थकौ, धातुनोक्तां क्रियामाहतुः ।
तदविशिष्टं भवति, यथा शङ्खे पयः ।
यद्येवं धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति -- उक्तार्थानाम प्रयोगः इति । उक्तार्थानामपि प्रयोगो दृश्यते । तद्यथा, -- अपूपौ द्वावानय, ब्राह्मणौ द्वावानयेति ।। 93 ।।
-1-4-96- अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु
इह कस्मान्न भवति -- सर्पिषोऽपि स्यात् गोमूत्रस्यापि स्यात् ? किं च स्यात् । द्वितीया प्रसज्येत कर्मप्रवचनीययुक्ते द्वितीया इति। नैष दोषः । नेमेऽप्यर्था निर्दिश्यन्ते । किं तर्हि ? परपदार्था इमे निर्दिश्यन्ते -- एतेष्वर्थेषु यत्पदं वर्तते तत्प्रति अपिः कर्मप्रवचनीयसंज्ञो भवतीति ।

अथवा यदत्र कर्मप्रवचनीययुक्तं नाऽदः प्रयुज्यते । किं पुनस्तत् ? बिन्दुः । बिन्दोस्तर्हि कस्मान्न भवति ? उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति प्रथमा भविष्यतीति ।। 96 ।।

-1-4-96- अधिरीश्वरे

अधिरीश्वरवचने उक्तम् ।। 1 ।।

किमुक्तम् ? यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम् । प्रथमानुपपत्तिस्तु । स्ववचनात्सिद्धमिति। । अधिः स्वं प्रति कर्मप्रवचनीयसंज्ञो भवतीति वक्तव्यम् ।। 96 ।।

-1-4-99- लः परस्मैपदम्

लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् दिह वचने हि संज्ञाबाधनम् ।। 1 ।।

लादेशे परस्मैपदग्रहणं कर्तव्यम् । किं कारणम् ? पुरुषबाधितत्वात् । इह वचने हि संज्ञाबाधनम् ।

इह हि क्रियमाणेऽनवकाशा पुरुषसंज्ञा परस्मैपदसंज्ञां बाधेत ।

परस्मैपदसंज्ञाऽप्यनवकाशा, सा वचनाद्भविष्यति । सावकाशा परस्मैपदसंज्ञा । कोऽवकाशः ? शतृक्वसू। अवकाशः ।

सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाऽबाधकत्वस्य ।। 3 ।।

यदयं सिचिवृद्धिः परस्मैपदेषु (7.2.1) इति परस्मैपदग्रहणं करोति तज्ज्ञापयत्याचार्यः न पुरुषसंज्ञा परस्मैपदसंज्ञां बाधते इति ।। 99 ।।

-1-4-101- तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः

प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं समसंख्यार्थम् ।। 1 ।।

प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं कर्तव्यम् । आत्मनेपदानां च प्रथममध्यमोतमसंज्ञा भवन्तीति वक्तव्यम् । किं प्रयोजनम् ? समसंख्यार्थम् । संख्यातानुदेशो यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे तिस्रः संज्ञाः, षट् संज्ञिनः, वैषम्यात्संख्यातानुदेशो न स्यात्।। क्रियमाणेऽपि चात्मनेपदग्रहणे --

आनुपूर्व्यवचनं च ।। 2 ।।

आनुपूर्व्यवचनं च कर्तव्यम् । अक्रियमाणे हि कस्यचिदेव त्रिकस्य-प्रथमसंज्ञा स्यात्, कस्यचिदेव मध्यमसंज्ञा, कस्यचिदेवोत्तमसंज्ञा ।

न वैकशेषनिर्देशात् ।। 3 ।।

यत्तावदुच्यते-आत्मनेपदग्रहणं कर्तव्यं समसंख्यार्थमिति, तन्न कर्तव्यम् । संज्ञा अपि षडेव निर्दिश्यन्ते ।

कथम् ? एकशेषनिर्देशात् । एकशेषनिर्देशोऽयम् ।। अथैतस्मिन्नेकशेषनिर्देशे सति किमयं कृतैकशेषाणां द्वन्द्वः-प्रथमश्च प्रथमश्च प्रथमौ। मध्यमश्च मध्यमश्च मध्यमौ, उत्तमश्चोत्तमश्चोत्तमौ । प्रथमौ च मध्यमौ चोत्तमौ च प्रथममध्यमोत्तमा इति । आहोस्वित्कृतद्वन्द्वानामेकशेषः प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः, प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च -- प्रथममध्यमोत्तमा इति। किं चातः ? यदि कृतैकशेषाणां द्वन्द्वः, प्रथममध्यमयोः प्रथमसंज्ञा प्राप्नोति। उत्तमप्रथमयोर्मध्यमसंज्ञा प्राप्नोति। मध्यमोत्तमयोरुत्तमसंज्ञा प्राप्नोति । अथ कृतद्वन्द्वानामेकशेषः न दोषो भवति । यथा न दोषस्तथास्तु ।

किं पुनरत्र न्याय्यम् ? उभयमित्याह । उभयं हि दृश्यते । तद्यथा, -- बहु शक्तिकिटकम्, बहूनि शक्तिकिटकानि । बहुस्थालीपिठरम्, बहूनि स्थालीपिठराणि ।

यदुप्युच्यते -- क्रियमाणेऽप्यात्मनेपदग्रहणे आनुपूर्व्यवचनं कर्तव्यमिति । न कर्तव्यम् । लोकत एतत्सिद्धम् । तद्यथा, -- लोके विहव्यस्य द्वाभ्यां द्वाभ्यामग्निरुपस्थेय इति। न चोच्यते-आनुपूर्व्येणेति, आनुपूर्व्येण चोपस्थीयत इति ।। 101 ।।

-1-4-104- विभक्तिश्च

त्रीणि त्रीणीत्यनुवर्तते।, उताहो न ? किं चातः ? यद्यनुवर्तते, -- - अष्टन आ विभक्तौ (7.2.84) इत्यात्वं न प्राप्नोति । अथ निवृत्तं, प्रथमयोः पूर्वसवर्णः (6.1.102) इत्यत्र प्रत्यययोरेव ग्रहणं प्राप्नोति । यथेच्छसि तथास्तु ।। अस्तु तावदनुवर्तत इति । ननु चोक्तम् अष्टन आ विभक्तावित्यात्वं न प्राप्नोतीति । वचनाद्भविष्यति ।

अथवा पुनरस्तु -- निवृत्तम् । ननु चोक्तं प्रथमयोः पूर्वसवर्णः इत्यत्र प्रत्यययोरेव ग्रहणं प्राप्नोतीति । नैष दोषः । अचीत्यनुवर्तते न चाऽजादी प्रथमौ प्रत्ययौ स्तः । ननु चैवं विज्ञायते -- अजादी यौ प्रथमौ, अजादीनां वा यौ प्रथमाविति । यत्तर्हि तस्माच्छसो नः पुंसि (6.1.103) इत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यः विभक्त्योर्ग्रहणमिति ।

अथवा वचनग्रहणमेव कुर्याद् -- औजसोः पूर्वसवर्णः इति ।। 104 ।।

-1-4-105- युस्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः

किमर्थमिदमुच्यते ?

युष्मदस्मच्छेषवचनं नियमार्थम् ।। 1 ।।

नियमार्थोऽयमारम्भः ।। अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपदनियमः-युष्मदि मध्यम एव, अस्मद्युत्तम एव । आहोस्वित्पुरुषनियमः -- युष्मद्येव मध्यमः, अस्मद्येवोत्तम इति ? किं चातः ? यदि पुरुषनियमः शेषग्रहणं कर्तव्यं शेषे प्रथमः इति । किं कारणम् ? मध्यमोत्तमौ नियतौ, युष्मदस्मदी अनियते, तत्र प्रथमोऽपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं प्रथमनियमार्थम्-शेष एव प्रथमो भवति नान्यत्रेति । अथाप्युपपदनियमः, एवमपि शेषग्रहणं कर्तव्यं शेषे प्रथमः इति । युष्मदस्मदी नियते, मध्यमोत्तमावनियतौ, तौ शेषेऽपि प्राप्नुतः । तत्र शेषग्रहणं कर्तव्यं शेषनियमार्थं -- शेषे प्रथम एव भवति नान्य इति ।

उपपदनियमे शेषग्रहणं शक्यमकर्तुम् । कथम् ? युष्मदस्मदी नियते, मध्यमोत्तमावनियतौ, तौ शेषेऽपि प्राप्नुतः । ततो वक्ष्यामि प्रथमो भवतीति । तन्नियमार्थं भविष्यति -- यत्र प्रथमश्चाऽन्यश्च प्राप्नोति तत्र प्रथम एव भवतीति ।

तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधः शेषत्वात् ।। 2 ।।
तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधो वक्तव्यः । त्वं च देवदत्तश्च पचथः । अहं च देवदत्तश्च पचावः किं कारणम् ? शेषत्वात् । शेषे प्रथमः इति प्रथमः प्राप्नोति ।
सिद्धं तु युष्मदस्मदोः प्रतिषेधात् ।। 3 ।।
सिद्धमेतत् । कथम् ? युष्मदस्मदोः प्रतिषेधात् । शेषे प्रथमः युष्मदस्मदोर्नेति वक्तव्यम् ।
युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन ।। 4 ।।
युष्मदि मध्यमादस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन । युष्मदि मध्यम इत्यस्यावकाशः -- त्वं पचसि । अस्मद्युत्तम इत्यस्यावकाशः -- अहं पचामि । इहोभयं प्राप्नोति -- त्वं चाहं च पचावः । अस्मद्युत्तमः इत्येतद्भवति विप्रतिषेधेन ।
स तर्हि विप्रतिषेधो वक्तव्यः ? न वक्तव्यः । त्यदादीनां यद्यत्परं तत्तच्छिष्यते इत्येवमस्मदः शेषो भविष्यति । तत्राऽस्मद्युत्तमः इत्येव सिद्धम् ।
अनेकशेषभावार्थं तु ।। 5 ।।
अनेकशेषभावार्थं तु स विप्रतिषेधो वक्तव्यः। यदा चैकशेषो न । कदा चैकशेषो न ? सहविवक्षायामेकशेषः, यदा न सहविवक्षा तदैकशेषो नास्ति ।
न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः ।। 6 ।।
न वाऽर्थो विप्रतिषेधेन । किं कारणम् ? युष्मदस्मदोरनेकशेषभावात् तदधिकरणानामपि -- युष्मदस्मदधिकरणानामप्येकशेषेण न भवितव्यम् । त्वं चाहं च पचसि च पचामि चेति ।
क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्राऽनेकशेषभावस्य ।। 7 ।।
क्रियापृथक्त्वे च द्रव्यपृथक्त्वं दृश्यते । तद्यथा, -- पचसि पचामि च त्वं चाहं चेति । तदनुमानमुत्तरयोरपि क्रिययोरेकशेषो न भवतीति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति । तत्रापि ह्येवं भवितव्यम् -- त्वं च देवदत्तश्च पचसि पचति च । अहं च देवदत्तश्च पचामि पचति चेति ।
यत्तावदुच्यते -- न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेध इति, दृश्यते हि युष्मदस्मदोश्चाऽनेकशेषस्तदधिकरणानां चैकशेषः । तद्यथा, -- त्वं चाहं च वृत्रहन्नुभौ संप्रयुज्यावहा इति ।
यदप्युच्यते -- क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्राऽनेकशेषभावस्येति, क्रियापृथक्त्वे स्वल्वपि द्रव्यैकशेषो भवतीति दृश्यते । तद्यथा, -- अक्षाः भज्यन्तां दीव्यन्तामिति । एवं च कृत्वा सोऽपि दोषो भवति यदुक्तं -- तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति ।
नैष दोषः । परिहृतमेतत् सिद्धं तु युष्मदस्मदोः प्रतिषेधादिति ।
स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । शेषे प्रथमो विधीयते, न हि शेषश्चाऽन्यश्च शेषग्रहणेन गृह्यते । भवेत्, प्रथमो न स्यात्, मध्यमोत्तमावपि न प्राप्नुतः । किं कारणम् ? युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते, न च युष्मदस्मदी अन्यश्च युष्मदस्मद्ग्रहणेन गृह्यते । यदत्र युष्मद्यच्चाऽस्मत्तदाश्रयौ मध्यमोत्तमौ भविष्यतः । यथैव तर्हि यदत्र युष्मद्यच्चाऽस्मत्तदाश्रयौ मध्यमोत्तमौ भवतः, एवं योऽत्र शेषस्तदाश्रयः प्रथमः प्राप्नोति ।
एवं तर्हि शेष उपपदे प्रथमो विधीयते । उपोच्चारि पदमुपपदम् । यच्चाऽत्रोपोच्चारि, न स शेषः, यश्च शेषः, न तदुपोच्चारि । भवेत् प्रथमो न स्यात्, मध्यमोत्तमावपि न प्राप्नुतः । किं कारणम् ? युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । उपोच्चारि पदमुपपदम्, यच्चाऽत्रोपोच्चारि, न ते युष्मदस्मदी, ये च युष्मदस्मदी, न तदुपोच्चारि ।
एवं तर्हि शेषेण सामानाधिकरण्ये प्रथमो विधीयते, न चाऽत्र शेषेणैव सामानाधिकरण्यम् । भवेत् प्रथमो न स्यात्, मध्यमोत्तमावपि न प्राप्नुतः । किं कारणम् ? युष्मदस्मद्भ्यां सामानाधिकरण्ये मध्यमोत्तमावुच्येते, न चाऽत्र युष्मदस्मद्भ्यामेव सामानाधिकरण्यम् ।
एवं तर्हि त्यदादीनि सर्वैर्नित्यम् (1.2.72) इत्येवमत्र युष्मदस्मदोः शेषो भविष्यति । तत्र युष्मदि मध्यमोऽस्मद्युत्तम इत्येव सिद्धम् ।
न सिध्यति । स्थानिन्यपीति प्रथमः प्राप्नोति ।। त्यदादीनां खल्वपि यद्यत्परं तत्तच्छिष्यते इति यदा भवतः शेषस्तदाश्रयः प्रथमः प्राप्नोति ।
युष्मदि मध्यमोऽस्मद्युत्तम इत्येवोच्यते । ताविह न प्राप्नुतः -- परमत्वं पचसि, परमाऽहं पचामीति । तदन्तविधिना। भविष्यति । इहापि तर्हि तदन्तविधिना प्राप्नुतः -- अतित्वं पचति, अत्यहं पचतीति । ये चाऽप्येते
समानाधिकरणवृत्तयस्तद्धितास्तत्र च मध्यमोत्तमौ न प्राप्नुतः -- त्वत्तरः पचसि, मत्तरः पचामीति । त्वद्रूपः पचसि, मद्रूपः पचामीति । त्वत्कल्पः पचसि, मत्कल्पः पचामीति ।। एवं तर्हि युष्मदस्मद्वतीत्येवं भविष्यति । इहापि तर्हि प्राप्नुतः-अतित्वं पचति, अत्यहं पचतीति ।
एवं तर्हि युष्मदि साधने अस्मदि साधने इत्येवं भविष्यति । एवं च कृत्वा सोऽप्यदोषो भवति, यदुक्तं -- -तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति ।। अथवा प्रथमः उत्सर्गः करिष्यते।तस्य युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावपवादौ भविष्यतः । तत्र युष्मद्गन्धश्चाऽस्मद्गन्धश्चास्तीति कृत्वा मध्यमोत्तमौ भविष्यतः ।
अथेह कथं भवितव्यम् -- अत्वं त्वं संपद्यते इति त्वद्भवति मद्भवतीति। आहोस्वित्त्वद्भवसि मद्भवामीति ? त्वद्भवति मद्भवतीत्येवं भवितव्यम् । मध्यमोत्तमौ कस्मान्न भवतः ? गौणमुख्ययोर्मुख्ये संप्रत्ययो भवति । तद्यथा, -- गौरनुबन्ध्योऽजोऽग्नीषोमीयः इति न वाहीकोऽनुबध्यते । कथं तर्हि वाहीके वृद्ध्यात्वे भवतः -- गौर्वाहीकस्तिष्ठति गामानयेति ? अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ।। 104-106-107 ।।
-1-4-107- अस्मद्युत्तमः
किमर्थमिदमुच्यते ?
युष्मदस्मच्छेषवचनं नियमार्थम् ।। 1 ।।
नियमार्थोऽयमारम्भः ।। अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपदनियमः-युष्मदि मध्यम एव, अस्मद्युत्तम एव । आहोस्वित्पुरुषनियमः

तत्तर्हि वक्तव्यम्--निमित्तस्वरान्निमित्तिस्वरो बलीयानिति?।।
(समाधानभाष्यम्)
न वक्तव्यम्।
(1222 समाधानसाधकवार्तिकम् ।। 33 ।।)
।। एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य ।।
(व्याख्याभाष्यम्)
यदयं युक्तारोह्यादिष्वेकशितिपाच्छब्दं पठति तज्ज्ञापयत्याचार्यो निमित्तस्वरान्निमित्तिस्वरो बलीयानिति।।
(ज्ञापकत्वनिरासभाष्यम्)
कः पुनरर्हति युक्तारोह्यादिष्वेकशितिपाच्छब्दं पठितुम्। एवं किल नाम पठ्यते--एकः शितिः एकशितिः, एकशितिः पादो यस्येति। तच्च न। एवं विग्रहः करिष्यते--एकः शितिरेषु त इमे एकशितयः, एकशितयः पादा यस्येति एकशितिपादिति।। अथाप्येवं विग्रहः क्रियते--एकः शितिरेकशितिः, एकशितिः पादो यस्येति, एवमपि नार्थः पाठेन। इगन्ते द्विगौ इत्येष स्वरोत्र बाधको भविष्यति।।
<M.2.349>
(आक्षेपान्तरभाष्यम्)
अस्य तर्हि बहुव्रीह्यवयवस्य तत्पुरुषसंज्ञा प्राप्नोति--
सुसूक्ष्मजटकेशेन सुनताजिनवाससा।
समन्तशितिरन्ध्रेणेति।
तत्र को दोषः? ।। तस्यान्तोदात्तत्वं विप्रतिषेधात् । इत्यन्तोदात्तत्वं स्याद्विप्रतिषेधेन।।
(समाधानभाष्यम्)
नैष दोषः। नेदं बहुव्रीह्यवयवस्य तत्पुरुषस्य लक्षणमारभ्यते।। किं तर्हि? यस्य बहुव्रीह्यवयवस्य तत्पुरुषस्य तल्लक्षणमस्ति तस्यान्तोदात्तत्वं भविष्यति विप्रतिषेधेन।।
(आक्षेपभाष्यम्)
ननु चास्याप्यस्ति।। किम्?। विशेषणं विशेष्येण बहुलम् इति ।।
(समाधानभाष्यम्)
बहुलवचनान्न भविष्यति।।
(आक्षेपान्तरभाष्यम्)
अस्य तर्हि बहुव्रीह्यवयवस्य तत्पुरुषसंज्ञा प्राप्नोति--अधिकषष्टिवर्ष इति।। तत्र को दोषः?। । तस्यान्तोदात्तत्वं विप्रतिषेधात् । इत्यन्तोदात्तत्वं स्याद्विप्रतिषेधेन ।।
(आक्षेपबाधकभाष्यम्)
नैष दोषः। इगन्ते द्विगौ इत्येष स्वरो बाधको भविष्यति।।
(आक्षेपान्तरभाष्यम्)
यस्तर्हि नेगन्तः--अधिकशतवर्ष इति।।
(प्रागुक्ताक्षेपस्यापि समञ्ञ्जसत्वभाष्यम्)
इह चाप्यधिकषष्टिवर्ष इति समासान्तः प्राप्नोति डचः प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् इति।।
(आक्षेपबाधकभाष्यम्)
नैष दोषः। अव्ययादेरित्येवं तत्।।
(आक्षेपभाष्यम्)
किं पुनः कारणम्--अव्ययादेरित्येवं तत्?।
(समाधानभाष्यम्)
इह मा भूद्--गोत्रिंशद्, गोचत्वारिंशदिति।।
(आक्षेपभाष्यम्)
बहुव्रीहिसंज्ञा तर्हि प्राप्नोति संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये इति।।
(समाधानभाष्यम्)
न संख्यां संख्येये वर्तयिष्यामः।। कथम्?। एवं विग्रहः करिष्यते--अधिका षष्टिर्वर्षाणामस्येति।।
<M.2.350>
(आक्षेपसाधकभाष्यम्)
यथा तर्हि स योगः प्रत्याख्यायते तथा पूर्वेण प्राप्नोति।। कथं च स योगः प्रत्याख्यायते? । अशिष्यः संख्योत्तरपदः संख्येयार्थाभिधायित्वात् । इति।। प्रत्याख्याते तस्मिन्योगे संख्यां संख्येये वर्तयिष्यामः। तत्रैवं विग्रहः करिष्यते--अधिका षष्टिर्वर्षाण्यस्येति। सर्वथा वयमधिकषष्टवर्षान्न मुच्यामहे।। कथम्?। यावता स योगः प्रत्याख्यायते। अयं च विग्रहोस्ति--अधिका षष्टिर्वर्षाणामस्येति।
(आक्षेपबाधकभाष्यम्)

यत्तु तदुक्तम्--अधिकषष्टिवर्षो न सिद्ध्यतीति, स सिद्धो भवति।। कथम्?। यावता स योगः प्रत्याख्यायते। अयं च विग्रहोस्ति--अधिका षष्टिर्वर्षाण्यस्येति।।
(आक्षेपभाष्यम्)
अधिकशतवर्षस्तु न सिद्ध्यति।।
(समाधानभाष्यम्)
कर्तव्योत्र यत्नः।। समर्थः पदविधिः ।। 1 ।।
इति श्रीमहाभाष्ये द्वितीयाध्यायस्य प्रथमे पादे प्रथममाह्निकम्।।
-2-1-2- सूबामन्त्रिते पराङ्गवत्स्वरे (351)
(222 अतिदेशसूत्रम् ।। 2।1।2 आ ।1। सूत्रम्)
(सुब्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
सुबिति किमर्थम् ?।।
(समाधानभाष्यम्)
करोष्यटन्।।
(समाधानबाधकभाष्यम्)
नैतदस्ति। असामर्थ्यादत्र न भविष्यति।। कथमसामर्थ्यम्?। समानाधिकरणमसमर्थवद्भवतीति।।
(समाधानभाष्यम्)
इदं तर्हि--पीड्ये पीड्यमानेति।।
(पूर्वोक्तसमाधानसाधकभाष्यम्)
इदं चाप्युदाहरणम्--करोष्यटन्।।
(आक्षेपबाधकस्मारणभाष्यम्)
ननु चोक्तम्--असामर्थ्यादत्र न भविष्यतीति। कथमसामर्थ्यम्?। समानाधिकरणमसमर्थवद्भवतीति।।
(समाधानभाष्यम्)
नैष दोषः। अधात्वभिहितमित्येवं तत्।।
(पराङ्गवद्भावविषयनिर्णयाधिकरणम्)
(1223 आक्षेपवार्तिकम् ।। 1 ।।)
।। आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् ।।
(व्याख्याभाष्यम्)
आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यन्तमामन्त्रितकारकं पराङ्गवद्भवतीति वक्तव्यम्। षष्ठ्यन्तं तावत्--मद्राणां राजन्, मगधानां राजन्।। आमन्त्रितकारकम्--कुण्डेनाटन्।।
(आमन्त्रितकारकोदाहरणबाधकभाष्यम्)
नास्त्यत्र विशेषः सति च पराङ्गवद्भावेऽसति वा ।।
(उदाहरणान्तरभाष्यम्)
इदं तर्हि--परशुना वृश्चन्।।
(1224 आक्षेपस्य प्रकारान्तरवार्तिकम्।। 2 ।।)
।। तन्निमित्तग्रहणं वा ।।
(व्याख्याभाष्यम्)
अथ वा तन्निमित्तग्रहणं कर्तव्यम्। आमन्त्रितनिमित्तं परस्याङ्गवद्भवतीति वक्तव्यम्। मद्राणां राजन्।।
(अनन्यथासाधकत्वभाष्यम्)
तच्चावश्यमन्यतरद्वक्तव्यम्।।
(1225 अन्यथासिद्धिवारकवार्तिकम् ।। 3 ।।)
।। अवचने हि सुबन्तमात्रप्रसङ्गः ।।
(व्याख्याभाष्यम्)
अनुच्यमाने त्वेतस्मिन्सुबन्तमात्रस्य पराङ्गवद्भावः प्रसज्येत। अस्यापि प्रसज्येत। क्षत्रेणाग्ने स्वायुः संरभस्व णित्रेणाग्ने मित्रधेये यतस्व।।
(आक्षेपभाष्यम्)
किं पुनरत्र ज्यायः?।।
(समाधानभाष्यम्)
तन्निमित्तग्रहणमेव ज्यायः। इदमपि सिद्धं भवति--गोषु स्वामिन् पशुषु स्वामिन्। एतद्धि नैव षष्ठ्यन्तम्, नाप्यामन्त्रितकारकम्।।
(1226 आक्षेपवार्तिकम् ।। 4 ।।)

।। सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात्स्वरेऽवधारणाच्च।।
(व्याख्याभाष्यम्)
सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानं कर्तव्यम्। तीक्ष्णया सूच्या सीव्यन् तीक्ष्णेन परशुना वृश्चन्।। किं पुनः कारणं न सिद्ध्यति?। अननन्तरत्वात्।।
ननु च परस्य पराङ्गवद्भावे कृते पूर्वस्यापि भविष्यति।।
स्वरेवधारणाच्च ।। स्वरेऽवधारणाच्च न सिद्ध्यति। स्वरेऽवधारणं क्रियते, नानन्तर्ये।।
(1227 आक्षेपवार्तिकम् ।। 5 ।।)
।। परमपि च्छन्दसि ।।
(व्याख्याभाष्यम्)
परमपि च्छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम्। आ ते पितर्मरुतां सुम्नमेतु। प्रति त्वा दुहितर्दिवः। वृणीष्व दुहितर्दिवः।।
(1228 आक्षेपवार्तिकम् ।। 6 ।।)
।। अव्ययप्रतिषेधश्च ।।
(व्याख्याभाष्यम्)
अव्ययानां च प्रतिषेधो वक्तव्यः। उच्चैरधीयान।।
(1229 पर्युदासवार्तिकम् ।। 7 ।।)
।। अनव्ययीभावस्य ।।
(व्याख्याभाष्यम्)
अव्ययीभावस्य नेति वक्तव्यम्। इह मा भूत् उपाग्न्यधीयान ।।
(स्वरेऽवधारणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथ किमर्थं स्वरेवधारणं क्रियते?।।
(1230 समाधानवार्तिकम्।। 8 ।।)
।। स्वरेवधारणं सुबलोपार्थम् ।।
(व्याख्याभाष्यम्)
स्वरेवधारणं क्रियते सुपो लोपो मा भूदिति। परशुना वृश्चन्।।
(1231 समाधानानर्थक्यवार्तिकम् ।। 9 ।।)
।। न वा सुबन्तैकान्तत्वात् ।।
(व्याख्याभाष्यम्)
न वा कर्तव्यम्। किं कारणम्?। सुबन्तैकान्तत्वात्। सुबन्तैकान्तः पराङ्गवद्भावो भवति।।
(1232 आनर्थक्यबाधकवार्तिकम् ।। 10 ।।)
।। प्रातिपदिकैकान्तस्तु सुब्लोपे ।।
(व्याख्याभाष्यम्)
प्रातिपदिकैकान्तस्तु भवति सुब्लोपे कृते।।

(आनर्थक्यसाधकभाष्यम्)
प्रत्ययलक्षणेन सुबन्तैकान्तता स्यात्। तस्मात्स्वरेवधारणं न कर्तव्यं सुबलोपार्थं प्रातिपिदिकस्थायाः सुपो लुगुच्यते। तस्मात्स्वरग्रहणेन नार्थः।।
(प्रयोजनान्तरभाष्यम्)
इदं तर्हि प्रयोजनम्--षत्वणत्वे मा भूतामिति। कूपे सिञ्चन्। चर्म नमन्निति।।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। इह तावत्कूपे सिञ्चन्निति स्वाश्रयं पदादित्वं भविष्यति।।
(प्रयोजननिराकरणैकदेशिभाष्यम्)
चर्म नमन्निति पूर्वपदात्संज्ञायामग इत्येतस्मान्नियमान्न भविष्यति ।।
(निराकरणबाधकभाष्यम्)
ननु च समास एवैतद्भवति पूर्वपदमुत्तरपदमिति।।
(निराकरणसाधकैकदेशिभाष्यम्)
नेत्याह। अविशेषेणैव तद्भवति--पूर्वं पदं पूर्वपदम्। उतरं पदमुत्तरपदम्।। सुबामन्त्रिते ।। 2 ।।
<M.2.355>
-2-1-3- प्राक्कडारात्समासः (352)

(223 अधिकारसूत्रम् ।। 2।1।2 ।। अ.2.सू.)
(प्राग्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
प्राग्वचनं किमर्थम्?।।
(1233 समाधानवार्तिकम् ।। 1 ।।)
।। प्राग्वचनं समाससंज्ञाऽनिवृत्त्यर्थम् ।।
(व्याख्याभाष्यम्)
प्राग्वचनं क्रियते समाससंज्ञाया अनिवृत्तिर्यथा स्यात्। अक्रियमाणे प्राग्वचने अनवकाशा अव्ययीभावादयः संज्ञाः समाससंज्ञां बाधेरन्, ता मा बाधिषतेति प्राग्वचनं क्रियते।।
(एकदेशिनआक्षेपभाष्यम्)
अथ क्रियमाणेपि प्राग्वचने यावता अनवकाशा अव्ययीभावादिसंज्ञाः कस्मादेव न बाधन्ते?।।
(एकदेशिनःसमाधानभाष्यम्)
क्रियमाणे हि प्राग्वचने सत्यां समाससंज्ञायामेता अवयवसंज्ञा आरभ्यन्ते। तत्र वचनात्समावेशो भविष्यति।।
(समाधानबाधकभाष्यम्)
समाससंज्ञाप्यनवकाशा। सा वचनाद्भविष्यति।।
(समाधानसाधकभाष्यम्)
सावकाशा समाससंज्ञा।। कोवकाशः? विस्पष्टादीन्यवकाशः। विस्पष्टं पटुः विस्पष्टपटुः। व्यक्तं पटुः व्यक्तपटुः।।
(समाधानबाधकभाष्यम्)
नैषोवकाशः। एषा ह्याचार्यस्य शैली लक्ष्यते--येनैवावयवकार्यं भवति तेनैव समुदायकार्यमपि भवतीति। येनैव चात्रावयवकार्यं स्वरः क्रियते, तेनैव समुदायवकार्यं समासोपि भविष्यति--विस्पष्टादीनि गुणवचनेषु इति।।
<M.2.356>
(प्रयेजनसमाधानान्तरभाष्यम्)
इदं तर्हि--काकतालीयमजाकृपाणीयम्।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। अत्रापि येनैवावयवकार्यं प्रत्ययोत्पत्तिः क्रियते, तेनैव समुदायकार्यं समाससंज्ञा भविष्यति समासाच्च तद्विषयाद् इति।।
(प्रयोजनान्तरभाष्यम्)
इदं तर्हि--पुनाराजः पुनर्गवः।।
(प्रयोजननिरासभाष्यम्)
अत्राप्यवश्यं तत्पुरुषसंज्ञा वक्तव्या। तत्पुरुषाश्रयः समासान्तो यथा स्यात्।।
(प्रयोजनभाष्यम्)
इदं तर्हि--पुनराधेयम्।।
(प्रयोजननिराकरणभाष्यम्)
अत्राप्यवश्यं गतिसंज्ञा वक्तव्या गतिकारकोपपदात्कृद् इत्येष स्वरो यथा स्यात्।।
(प्रयोजनभाष्यम्)
इदं तर्हि--पुनरुत्स्यूतं वासो देयम्।।

(प्रयोजननिरासभाष्यम्)
अत्राप्यवश्यं गतिसंज्ञा वक्तव्या गतिर्गतौ इति निघातो यथा स्यात्। यदि तन्नास्ति । पुनश्चनसौ छन्दसि। इति।। सति तस्मिंस्तेनैव सिद्धम्।।
<M.2.357>
(प्रयोजनभाष्यम्)
एवमप्येका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः। पर्यायः प्रसज्येत। तस्मात्प्राग्वचनं कर्तव्यम्।।
प्राक्कडारात् ।। 3 ।।
-2-1-4- सह सुपा (353)
(224 केवलसमाससंज्ञासूत्रम् ।। 2।1।2 आ.3 सू.)
(सहवचनप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
सहवचनं किमर्थम्?।।
(1234 समाधानवार्तिकम् ।। 1 ।।)

।। सहवचनं पृथगसमासार्थम् ।।
(व्याख्याभाष्यम्)
सहग्रहणं क्रियते सहभूतयोरेव समाससंज्ञा यथा स्याद् एकैकस्य समाससंज्ञा मा भूदिति।।
(आक्षेपभाष्यम्)
किं च स्यात्, यद्येकैकस्य समाससंज्ञा स्यात् ?।।
<M.2.358>
(समाधानभाष्यम्)
इह ऋक्पाद इति समासान्तः प्रसज्येत। इह राजाश्च इति द्वौ स्वरौ स्याताम्।
(आक्षेपभाष्यम्)
कथं च कृत्वैकैकस्य समाससंज्ञा प्राप्नोति?।।
(आक्षेपबाधकभाष्यम्)
प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा इति। तद्यथा--वृद्धिगुणसंज्ञे प्रत्येकं भवतः।।
(आक्षेपसाधकभाष्यम्)
ननु चायमप्यस्ति दृष्टान्तः--समुदाये वाक्यपरिसमाप्तिः इति। तद्यथा--गर्गाः शतं दण्ड्यन्ताम् इति अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति। सत्येतस्मिन् दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते, इहापि सहग्रहणं कर्तव्यम्। अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन।।
(समाधानभाष्यम्)
एवं तर्हि सिद्धे सति यत्सहग्रहणं करोति--तस्यैतत्प्रयोजनम्--योगाङ्गं यथा विज्ञायेत सति च योगाङ्गे योगविभागः करिष्यते--सह। सुप् समस्यते। केन सह?। समर्थेन। अनुव्यचलद् अनुप्राविशत्।। ततः सुपा सुपा च सह सुप्समस्यते। अधिकारश्च लक्षणं च। यस्य समासस्यान्यल्लक्षणं नास्ति इदं तस्य लक्षणं भविष्यति।पुनरुत्स्यूतं वासो देयम् पुनर्निष्कृतो रथः
(न्यूनतापूर्त्यधिकरणम्)
<M.2.359>
(1235 आक्षेपवार्तिकम् ।। 2 ।।)
।। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ।।
(व्याख्याभाष्यम्)
इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। वाससीःथ्य;व। कन्येःथ्य;व।। सह सुपा ।। 4 ।।
-2-1-5- अव्ययीभावः (354)
(अव्ययीभावसमासप्रकरणम्)
(225 अधिकारसूत्रम् ।। 2।1।2 आ.4.सू.)
(महासंज्ञाप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अन्वर्थसंज्ञा यथा विज्ञायेत--अनव्ययमव्ययं भवतीत्यव्ययीभावः। अव्ययीभावोव्ययसंज्ञो भवतीत्येतन्न वक्तव्यं भवति।। अव्ययीभावः ।। 5 ।।
<M.2.360>
(226 अव्ययीभावसमाससंज्ञासूत्रम् ।। 2।1।2 आ.5 सू.)
-2-1-6- अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्य- संपत्तिसाकल्यान्तवचनेषु (355)
(अनिष्टवारणाधिकरणम्)
(आक्षेपभाष्यम्)
इह कस्मान्न भवति सुमद्राः सुमगधाः सपुत्रः सच्छात्र इति। समृद्धौ साकल्य इति च प्राप्नोति?।।
(आक्षेपबाधकभाष्यम्)
नैष दोषः इह कश्चित्समासः पूर्वपदार्थप्रधानः। कश्चिदुत्तरपदार्थप्रधानः। कश्चिदन्यपदार्थप्रधानः। कश्चिदुभयपदार्थप्रधानः। पूर्वपदार्थप्रधानोव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। न चात्र पूर्वपदार्थप्राधान्यं गम्यते।।
(आक्षेपबाधकयुक्त्यन्तरभाष्यम्)
अथ वा नेमे समासार्था निर्दिश्यन्ते।। किं तर्हि?। अव्ययार्था इमे निर्दिश्यन्ते। एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन सह समस्यत इति।। अव्ययं विभक्ति।। 6 ।।
-2-1-7- यथा ऽसादृश्ये (356 )
(227 अव्ययीभावसंज्ञासूत्रम् ।। 2।1।2 आ.6 सू.)
(सूत्रे यथाशब्दस्याव्युत्पन्नस्यैव ग्रहणाधिकरणम्)
(आक्षेपभाष्यम्)

असादृश्य इति किमर्थम्?।।
<M.2.361>
(समाधानभाष्यम्)
यथा देवदत्तस्तथा यज्ञदत्तः ।।
(आक्षेपभाष्यम्)
असादृश्य इत्युच्यते, तत्रेदं न सिद्ध्यति--यथाशक्ति यथाबलमिति। किं कारणम्?। यथेत्ययं प्रकारवचने थाल्, स च सादृश्ये वर्तते।।
(आक्षेपबाधकभाष्यम्)
नैष दोषः। अयं यथाशब्दोस्त्येवाव्युत्पन्नः प्रातिपदिकं वीप्सावाचि। अस्ति प्रकारवचने थाल्। तत्र यदव्युत्पन्नं प्रातिपदिकं वीप्सावाचि तस्येदं ग्रहणम्।।
(आक्षेपभाष्यम्)
अथ यः प्रकारवचने थाल्, तस्य ग्रहणं कस्मान्न भवति। पूर्वेण प्राप्नोति--सादृश्यसंपत्ति इति।।
(आक्षेपबाधकभाष्यम्)
प्रतिषेधवचनसार्मथ्यान्न भविष्यति।। यथाऽसादृश्ये ।। 7 ।।
-2-1-9- सुप् प्रतिना मात्रार्थे (358)
(228 अव्ययीभावसंज्ञासूत्रम् ।। 2।1।2 आ.7.सू.)
(सुब्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
सुबिति वर्तमाने पुनः सुब्ग्रहणं किमर्थम्?।।
<M.2.362>
(आक्षेपबाधकभाष्यम्)
अव्ययम् इत्येवं तदभूत्। सुब्मात्रे यथा स्यात्माषप्रति सूपप्रति ओदनप्रति।। सुप्प्रतिना ।। 9 ।।
-2-1-10- अक्षशलाकासंख्याः परिणा (359 )
(229 अव्ययीभावसंज्ञासूत्रम् ।। 2।1।2 आं 8 सूं)
(विभक्तिवचनव्यवहारनियमाधिकरणम्)
(1236 विभक्तिनियमवार्तिकम् ।। 1 ।।)
।। अक्षादयस्तृतीयान्ताः परिणा पूर्वोक्तस्य यथा न तदयथाद्योतने ।।
(व्याख्याभाष्यम्)
अक्षादयस्तृतीयान्ताः परिणा सह समस्यन्त इति वक्तव्यम्। पूर्वोक्तस्य यथा न तत्। अयथाजातीयके द्योत्ये। अक्षेणेदं न तथा वृत्तं यथा पूर्वमिति। अक्षपरि शलाकापरि।।
(1237 वचननियमवार्तिकम् ।। 2 ।।)
।। अक्षशलाकयोश्चैकवचनान्तयोः ।।
?B(व्याख्याभाष्यम्)
अक्षशलाकयोश्चैकवचनान्तयोरिति वक्तव्यम्। इह मा भूत्--अक्षाभ्यां वृत्तम्, अक्षैर्वृत्तम्।।
<M.2.363>
(1238 व्यवहारनियमवार्तिकम् ।। 3 ।।)
।। कितवव्यवहारे च ।।
(व्याख्याभाष्यम्)
कितवव्यवहार इति वक्तव्यम्। इह मा भूत्--अक्षेणेदं न तथा वृत्तं शकटेन यथा पूर्वमिति।। अक्षशलाका ।। 10 ।।
-2-1-11- विभाषा
(230 अव्ययीभावसंज्ञासूत्रम् ।। 2.1.2 आ.9 सू.)
(योगविभागाधिकरणम्)
(1239 वार्तिकम् ।। 1 ।।)
(।। विभाषेति योगविभागः ।। )
(भाष्यम्) (विभाषेति) योगविभागः कर्तव्यः। विभाषा इत्ययमधिकारः। ततः--अपपरिपबहिरञ्चवः पञ्चम्या इति।।
(पञ्चमीग्रहणप्रयोजनाधिकरणम्)
(प्रत्याख्यानभाष्यम्)
अपपरिबहिरञ्चवः पञ्चम्या।। पञ्चमीग्रहणं शक्यमकर्तुम्।। कथम्?। सुबन्ते नेति वर्तते। एतैश्च कर्मप्रवचनीयैर्योगे पञ्चमी विधीयते। तत्रान्तरेणापि पञ्चमीग्रहणं पञ्चम्यन्तेन समासो भविष्यति।।
(प्रत्याख्यानबाधकभाष्यम्)

इदं तर्हि प्रयोजनम्। बहिःशब्देन योगे पञ्चमी न विधीयते तत्रापि यथा स्यात्--बहिर्ग्रामं बहिर्ग्रामात्।।
(आक्षेपभाष्यम्)
अथ क्रियमाणे पञ्चमीग्रहणे यावता बहिःशब्देन योगे पञ्चमी न विधीयते कथमिवैतत्सिद्ध्यति।।
(समाधानभाष्यम्)
पञ्चमीग्रहमसार्मथ्यात्।। विभाषापपरि ।। 11 ।।
-2-1-12- अपपरिबहिरञ्चवः पञ्चम्या (360)
(230 अव्ययीभावसंज्ञासूत्रम् ।। 2.1.2 आ.9 सू.)
(योगविभागाधिकरणम्)
(1239 वार्तिकम् ।। 1 ।।)
(।। विभाषेति योगविभागः ।। )
(भाष्यम्) (विभाषेति) योगविभागः कर्तव्यः। विभाषा इत्ययमधिकारः। ततः--अपपरिपबहिरञ्चवः पञ्चम्या इति।।
(पञ्चमीग्रहणप्रयोजनाधिकरणम्)
(प्रत्याख्यानभाष्यम्)
अपपरिबहिरञ्चवः पञ्चम्या।। पञ्चमीग्रहणं शक्यमकर्तुम्।। कथम्?। सुबन्ते नेति वर्तते। एतैश्च कर्मप्रवचनीयैर्योगे पञ्चमी विधीयते। तत्रान्तरेणापि पञ्चमीग्रहणं पञ्चम्यन्तेन समासो भविष्यति।।
(प्रत्याख्यानबाधकभाष्यम्)
इदं तर्हि प्रयोजनम्। बहिःशब्देन योगे पञ्चमी न विधीयते तत्रापि यथा स्यात्--बहिर्ग्रामं बहिर्ग्रामात्।।
(आक्षेपभाष्यम्)
अथ क्रियमाणे पञ्चमीग्रहणे यावता बहिःशब्देन योगे पञ्चमी न विधीयते कथमिवैतत्सिद्ध्यति।।
(समाधानभाष्यम्)
पञ्चमीग्रहमसार्मथ्यात्।। विभाषापपरि ।। 12 ।।
<M.2.364>
(231 अव्ययीभावसंज्ञासूत्रम् ।। 2.1.2 आ.10 सू)
-2-1-13- आङ् मर्यादाभिविध्योः (361)
(प्रत्याख्यानभाष्यम्)
मर्यादाभिविधिग्रहणं शक्यमकर्तुम्। कथम्?।
पञ्चम्येति वर्तते। आङा च कर्मप्रवचनीयेन युक्ते पञ्चमी विधीयते। तयोश्चैवार्थयोराङ् कर्मप्रवचनीयसंज्ञो भवति नान्यत्र।। आङ्मर्यादाभिविध्योः ।। 12 ।।
-2-1-16- यस्य चायामः (364)
(232 अव्ययीभावसंज्ञासूत्रम् ।। 2|1|2 आ.11 सू.)
(उदाहरणनिरूपणाधिकरणम्)
(आक्षेपभाष्यम्)
किमुदाहरणम् ?।।
(समाधानभाष्यम्)
अनुगङ्गं हास्तिनपुरम्। अनुगङ्गं वाराणसी। अनुशोणं पाटलिपुत्रम्।।
(आक्षेपभाष्यम्)
यस्य चायाम इत्युच्यते। गङ्गा चाप्यायता, वाराणस्यप्यायता, तत्र कुत एतत्--गङ्गया सह समासो भविष्यति, नपुनर्वाराणस्येति?।।
(समाधानभाष्यम्)
एवं तर्हि लक्षणेन इति वर्तते। गङ्गा चैव लक्षणम् न वाराणसी ।।
(समाधानान्तरभाष्यम्)
अथ वायस्य चायामः इत्युच्यते। गङ्गा चाप्यायता वाराणस्यप्यायता। तत्र प्रकर्षगतिर्विज्ञास्यते--साधीयो यस्यायामः इति। साधीयश्च गङ्गायाः, न वारणस्याः ।। यस्य चायामः ।। 25 ।।
-2-1-17- तिष्ठद्गुप्रभृतीनि च (265)
(233 अव्ययीभावसंज्ञासूत्रम् ।। 2|1|2 आ.12 सू.)
(चकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थश्चकारः ?।।
(समाधानभाष्यम्)
एवकारार्थः--तिष्ठद्गुप्रभृतीन्येव ।। क्व मा भूत?। परमं तिष्ठद्गु।।

(अर्थविशेषनियमाधिकरणम्)
(1240 वार्तिकम् ।। 1 ।।)
।। तिष्ठद्गु कालविशेषे ।।
(व्याख्याभाष्यम्)
तिष्ठद्गु कालविशेष इति वक्तव्यम्। तिष्ठन्ति गावोऽस्मिन्काले स तिष्ठद्गु। वहद्गु।।
<M.2.365>
(1241 वार्तिकम् ।। 2 ।।)
।। खलेयवादीनि प्रथमान्तान्यन्यपदार्थे।।
(व्याख्याभाष्यम्)
खलेयवादीनि प्रथमान्तान्यन्यपदार्थे समस्यन्त इति वक्तव्यम्। खलेयवम्। खलेबुसम्। लूनयवम्। पूनयवम्। पूयमानयवम्।। तिष्ठद्गुप्रभृतीनि च ।। 16 ।।
-2-1-18- पारेमध्ये षष्ठ्या वा (366)
(234 अव्ययीभावसंज्ञासूत्रम् ।। 2|1|2 आ.13 सू.)
(वावचनप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
वावचनं किमर्थम्?।।
(आक्षेपबाधकभाष्यम्)
विभाषा समासो यथा स्यात्। समासेन मुक्ते वाक्यमपि यथा स्यात्--पारं गङ्गाया इति।।
(आक्षेपसाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। प्रकृता महाविभाषा। तया वाक्यमपि भविष्यति।।
(आक्षेपबाधकभाष्यम्)
इदं तर्हि प्रयोजनम्। अव्ययीभावेन मुक्ते षष्ठीसमासो यथा स्यात्--गङ्गापारमिति।।
(आक्षेपसाधकभाष्यम्)
एतदपि नास्ति प्रयोजनम्। अयमपि विभाषा, षष्ठीसमासोपि,तावुभौ वचनाद्भविष्यतः ।।
(समाधानभाष्यम्)
अत उत्तरं पठति---
(1242 वार्तिकम् ।। 1 ।।)
।। पारेमध्ये षष्ठ्या वावचनम् (अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने)।।
(व्याख्याभाष्यम्)
पारेमध्ये षष्ठ्या वेति वक्तव्यम्।। अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने। अक्रियमाणे हि वावचने षष्ठीसमासस्याभावः स्याद्।। यथैकदेशिप्रधाने। तद्यथा--एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति।। किं पुनः कारणमेकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति?। समासतद्धितानां वृत्तिर्विभाषा, वृत्तिविषये नित्योपवादः।। इह पुनर्वावचने क्रियमाणे एकया वृत्तिर्विभाषा, अपरया वृत्तिविषये नित्योऽपवादः।।
<M.2.366>
(एकारान्तनिपातनाधिकरणम्)
(1243 वार्तिकम् ।। 2 ।।)
।। एकारान्तनिपातनं च ।।
(व्याख्याभाष्यम्)
एकारान्तनिपातनं च कर्तव्यम्। पारेगङ्गमिति।।
(निपातननिराकरणभाष्यम्)
न कर्तव्यम्। सप्तम्या अलुका सिद्धम्।।
(निपातनावश्यकताभाष्यम्)
भवेत् सिद्धं यदा सप्तमी। यदा त्वन्या विभक्तयस्तदा न सिद्ध्यति।। पारेमध्ये ।। 17 ।।
-2-1-20- नदीभिश्च (368)
(235 अव्ययीभावसंज्ञासूत्रम् ।। 2| 1| 2| आ.14 सू.)
(समाहारमात्रविषयकत्वाधिकरणम्)
(1244 वार्तिकम् ।। 1 ।।)
।। नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधः ।।
(व्याख्याभाष्यम्)
नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधो वक्तव्यः। द्वीरावतीको देशः। त्रीरावतीको देशः। नदीभिः संख्या इति प्राप्नोति।।

(वार्तिकप्रत्याख्यानभाष्यम्)
न वक्तव्यः। इह कश्चित्समासः पूर्वपदार्थप्रधानः। कश्चिदुत्तरपदार्थप्रधानः। कश्चिदन्यपदार्थप्रधानः। कश्चिदुभयपदार्थप्रधानः। पूर्वपदार्थप्रधानोऽव्यीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। न चात्र पूर्वपदार्थप्राधान्यं गम्यते।।
<M.2.367>
(आक्षेपभाष्यम्)
ननु च यद्येनोच्यते स तस्यार्थो भवति। अत्र च वयमेताभ्यां पदाभ्यामेतमर्थमुच्यमानं पश्यामः।।
(आक्षेपबाधकभाष्यम्)
एतदेव न जानीमः--यद्येनोच्यते स तस्यार्थ इति।। अपि चान्यपदार्थप्रधानता न कल्पेत--चित्रगुः शबलगुः इति। किं कारणम्?। अत्रापि हि वयमेताभ्यां शब्दाभ्यामेतमर्थमुच्यमानं पश्यामः।।
(आक्षेपसाधकभाष्यम्)
यद्यप्येताभ्यां पदाभ्यामेषोर्थ उच्यते, अन्यपदार्थोपि तु गम्यते। तत्रान्यपदार्थाश्रयो बहुव्रीहिर्भविष्यति।।
इहापि तर्हि यद्यप्यन्यपदार्थो गम्यते, स्वपदार्थोपि गम्यते। तत्र स्वपदाश्रयोऽव्ययीभावः प्राप्नोति।।
(समाधानभाष्यम्)
एवं तर्हीदमिह संप्रधार्यम्--अव्ययीभावः क्रियतां बहुव्रीहिरिति। बहुव्रीहिर्भविष्यति विप्रतिषेधेन।।
(पूर्वपक्षिभाष्यम्)
भवेदेकसंज्ञाधिकारे सिद्धम्, परंकार्यत्वे तु न सिद्ध्यति। आरम्भसार्मथ्यादव्ययीभावः प्राप्नोति, परंकार्यत्वाच्च बहुव्रीहिः ।।
<M.2.368>
(सिद्धान्तिभाष्यम्)
परंकार्यत्वे च न दोषः। नदीभिः संख्यायाः समाहारेऽव्ययीभावो वक्तव्यः। स चावश्यं वक्तव्यः। सर्वमेकनदीतरे।। नदीभिश्च ।। 19 ।।
-2-1-23- द्विगुश्च (371)
(अथ तत्पुरुषप्रकरणम्)
(236 द्विगोस्तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ.15 सू.)
(आक्षेपभाष्यम्)
द्विगोस्तत्पुरुषत्वे कानि प्रयोजनानि?।।
(1245 समाधानवार्तिकम् ।। 1 ।।)
।। द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् ।।
(व्याख्याभाष्यम्)
द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजयन्ति-- पञ्चगवं दशगवं पञ्चराजं दशराजम्।। द्विगुश्च ।। 22 ।।
-2-1-24- द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (372)
(237 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ. 16 सू.)
(न्यूनतापूर्त्यधिकरणम्)
(1246 वार्तिकम् ।। 1 ।।)
।। श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ।।
(व्याख्याभाष्यम्)
श्रितादिषु गमिगाम्यादीनामुपसंख्यानं कर्तव्यम्। ग्रामं गमी ग्रामगमी ग्रामं गामी ग्रामग्रामी।।
<M.2.369>
(तत्पुरुषविधानानर्थक्यपरिहाराधिकरणम्)
(1247 वार्तिकम् ।। 2 ।।)
।। श्रितादिभिरहीने द्वितीयासमासवचनानर्थक्यं बहुव्रीहिकृतत्वात् ।।
(व्याख्याभाष्यम्)
श्रितादिभिरहीनवाचिन्या द्वीतीयायाः समासवचनमनर्थकम्।। किं कारणम्?। बहुव्रीहिकृतत्वात्। इह--यः कष्टं श्रितः, कष्टमनेन श्रितं भवतीति तत्र बहुव्रीहिणा सिद्धम्।।
(1248 बहुव्रीहिवादिवार्तिकम्।। 3 ।।)
।। अहीने द्वितीयास्वरवचनानर्थक्यं च ।।
(व्याक्याभाष्यम्)
अहीने द्वितीयापूर्वपदं प्रकृतिस्वरं भवतीत्येतत् स्वरवचनमनर्थकम्।। किं कारणम्? बहुव्रीहिकृतत्वादेव ।।
(1249 तत्पुरुषवादिवार्तिकम् ।। 4 ।।)
।। जातिस्वरप्रसङ्गस्तु ।।

(व्याख्याभाष्यम्)
जातिस्वरस्तु प्राप्नोति--ग्रामगतः अरण्यगत इति जातिकालसुखादिभ्योनाच्छादनात् क्तोऽकृतमितप्रतिपन्ना इति।।
(1250 बहुव्रीहिवादिवार्तिकम् ।। 5 ।।)
।। तत्र जातादिषु वावचनात्सिद्धम् ।।
(व्याख्याभाष्यम्)
यदेतद् वा जाते इति, एतद् वा जातादिषु इति वक्ष्यामि। इमे जातादयो भविष्यन्ति।।
(आक्षेपभाष्यम्)
ननु च भेदो भवति--बहुव्रीहौ सति समासान्तोदात्तत्वेनापि भवितव्यं पूर्वपदप्रकृतिस्वरत्वेनापि। तत्पुरुषत्वे सति पूर्वपदप्रकृतिस्वरत्वेनैव।।
(आक्षेपबाधकभाष्यम्)
नास्ति भेदः। योपि हि तत्पुरुषमारभते न तस्य दण्डवारितो बहुव्रीहिः। तत्र तत्पुरुषे सति द्वौ समासौ द्वौ स्वरौ, बहुव्रीहौ सति एकः समासो द्विस्वरत्वम् ।।
<M.2.370>
(तत्पुरुषसाधकज्ञापकवादिभाष्यम्)
एवं तर्हि सिद्धे सति यत्तत्पुरुषं शास्ति, तज्ज्ञापयत्याचार्यः समानार्थे केवलं विग्रहभेदाद्यत्र तत्पुरुषः
प्राप्नोति बहुव्रीहिश्च, तत्र तत्पुरुष एव भवति किमेतस्य ज्ञापने प्रयोजनम्?। राज्ञः सखा राजसखः, राजा सखा अस्येति बहुव्रीहिर्न भवति।।
(बहुव्रीहिसाधकापवादवादिभाष्यम्)
नैतज्ज्ञापकसाध्यम्।। अपवादैरुत्सर्गा बाध्यन्ते, इति बाधकेनानेन भवितव्यं सामान्यविहितस्य विशेषविहितेन।। अथ न सामान्यविहितः।।
(तत्पुरुषसाधकसिद्धान्तिभाष्यम्)
यदुच्यते--बहुव्रीहिकृतत्वादिति।। एतदयुक्तम्। अस्ति खल्वपि विशेषो बहुव्रीहेस्तत्पुरुषस्य च।।
(आक्षेपभाष्यम्)
किं शब्दकृतः, अथार्थकृतः?।।
(समाधानभाष्यम्)
शब्दकृतश्चार्थकृतश्च। शब्दकृतस्तावद्--बहुव्रीहौ सति कपा भवितव्यम्। तत्पुरुषे सति न भवितव्यम्।। अर्थकृतः--तत्पुरुषे सति रुहादीनां क्तः कर्तरि भवति धात्वर्थस्यानपवर्गे--आरूढो वृक्षं देवदत्तः। बहुव्रीहौ व्यपवृक्ते कर्मणि भवति--आरूढो वृक्षो देवदत्तेनेति।। अन्यथाजातीयकः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययः अन्यथाजातीयकः
संबन्धाद्। राज्ञः सखा राजसखः। संबन्धादेतद्गन्तव्यम्--नूनं राजाप्यस्य सखेति।। उभयं खल्वपीष्यते--स्वस्ति सोमसखा, पुनरेहि गवांसख इति ।। द्वितीया श्रिता ।। 23 ।।
<M.2.371>
-2-1-26- खट्वा क्षेपे (374)
(238 तत्पुरुषसंज्ञासूत्रम् ।। 2.1.2 आ.17 सू.)
(उदाहरणनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
किमुदाहरणम्?।।
(समाधानभाष्यम्।)
खट्वारूढः
(आक्षेपभाष्यम्)
क्षेप इत्युच्यते। कः क्षेपो नाम?।।
(समाधानभाष्यम्)
अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या। य इदानीमतोन्यथा करोति स उच्यते खट्वारूढोयं जाल्मो नातिव्रतवान्।। खट्वा क्षेपे ।। 25 ।।
-2-1-29- अत्यन्तसंयोगे च (377)
(239 तत्पुरुषसंज्ञासूत्रम् ।। 2|1|2 आ.18 सू.)
(1251 वार्तिकम् ।। 1 ।।)
।। अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तेन समासवचनानर्थक्यम् ।।
(व्याख्याभाष्यम्)
अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तान्तेन चाक्तान्तेन च, कालाः क्तेन इत्येतत्समासवचनमनर्थकम्। अत्यन्तसंयोग इत्येव सिद्धम्।।
(1252 समाधानवार्तिकम् ।। 2 ।।)
।। अनत्यन्तसंयोगार्थं तु ।।
(व्याख्याभाष्यम्)
अनत्यन्तसंयोगार्थं तर्हीदं वक्तव्यम्। षण्मुहूर्ताश्चराचराः। ते कदाचिदहर्गच्छन्ति कदाचिद्रात्रिम्। अहर्गताः। रात्रिगताः।।

<M.2.372>
(समाधानबाधकभाष्यम्)
नैतदस्ति। गतग्रहणादप्येतत्सिद्धम्।।
(समाधानभाष्यम्)
इदं तर्हि--अहरतिसृताः। रात्र्यतिसृताः। मासप्रमितश्चन्द्रमाः।। अत्यन्तसंयोगे च ।। 28 ।।
-2-1-30- तृतीया तत्कृतार्थेन गुणवचनेन (378)
(250 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ.19)
(तत्कृतार्थग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
तत्कृतार्थेनेति किमर्थम्?।।
(समाधानभाष्यम्)
दध्ना पटुः। घृतेन पटुः।।
(समाधानबाधकभाष्यम्)
नैतदस्ति। असामर्थ्यादत्र न भविष्यति।। कथमसामर्थ्यम्?। सापेक्षमसमर्थं भवतीति। नहि दध्नः पटुना सामर्थ्यम्।। केन तर्हि?। भुजिना। दध्ना भुङ्क्ते पटुरिति।।
(समाधानसाधकभाष्यम्)
इहापि तर्हि न प्राप्नोति--शङ्कुलाखण्डः किरिकाण इति। अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम्।। केन तर्हि?। करोतिना। शङ्कुलया कृतः खण्ड इति ।।
(समाधानबाधकभाष्यम्)
वचनाद्भविष्यति।।
(समाधानसाधकभाष्यम्)
इहापि तर्हि वचनात्प्राप्नोति--दध्ना पटुः घृतेन पटुरिति। तस्मात्तत्कृतार्थग्रहणं कर्तव्यम्।।
<M.2.373>
(गुणवचनग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
गुणवचनेनेति किमर्थम्?।।
(समाधानभाष्यम्)
गोभिर्वपावान्। धान्येन धनवान्।।
(आक्षेपभाष्यम्)
किं पुनरिहोदाहरणम्?।।
(समाधानभाष्यम्)
शङ्कलाखण्डो देवदत्त इति।।
(आक्षेपभाष्यम्)
कथं पुनर्गुणवचनेन समास उच्यमानो द्रव्यवचनेन स्यात्?।।
(समाधानभाष्यम्)
इह तृतीया तत्कृतार्थेन गुणेन इतीयता सिद्धम्। सोयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनम्--एवं यथा विज्ञायेत--गुणमुक्तवता गुणवचनेन इति।।
(आक्षेपभाष्यम्)
कथं पुनरयं गुणवचनः सन् द्रव्यवचनः संपद्यते?।।
(समाधानभाष्यम्)
आरभ्यते तत्र मतुब्लोपः-- ।गुणवचनेभ्यो मतुपो लुग्। इति। तद्यथा--शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः। एवं खण्डगुणः खण्डः।।
(लाघवभाष्यम्)
यद्येवं, नार्थस्तत्कृतार्थग्रहणेन। भवति हि शङ्कुलायाः खण्डेन सामर्थ्यम्। असामर्थ्याच्चात्र न भविष्यति दध्ना पटुर्घृतेनं पटुरिति। तस्मान्नार्थस्तत्कृतार्थग्रहणेन ।।
<M.2.374>
(अर्थपदस्य शब्दपरत्वाधिकरणम्)
(1253 आक्षेपवार्तिकम् ।। 1 ।।)
।। तृतीयासमासेर्थग्रहणमनर्थकमर्थगतिर्ह्यवचनात् ।।
(व्याख्याभाष्यम्)

तृतीयासमासेऽर्थग्रहणमनर्थकम्।। किं कारणम्?। अर्थगतिर्ह्यवचनात्। अन्तरेणापि वचनमर्थगतिर्भविष्यति।।
(1254 आक्षेपसाधकवार्तिकम् ।। 2 ।।)
।। निर्देश्यमिति चेत् तृतीयार्थनिर्देशोपि ।।
(व्याख्याभाष्यम्)
अथैवमपि निर्देशः कर्तव्य इति चेत् तृतीयार्थनिर्देशोपि कर्तव्यः स्यात्--तृतीया तदर्थकृतार्थेन इति वक्तव्यम्।।
(तटस्थाक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्?।
(सिद्धान्तिसमाधानभाष्यम्)
न वक्तव्यम्।। नायमर्थनिर्देशः।। किं तर्हि?। योगाङ्गमिदं निर्दिश्यते। सति च योगाङ्गे योगविभागः करिष्यते--तृतीया तत्कृतेन गुणवचनेन समस्यते।। ततः--अर्थेन अर्थशब्देन च तृतीया समस्यते। धान्यार्थः वसनार्थः हिरण्यार्थः। पूर्वसदृशसमोनार्थ इत्यर्थग्रहणं न कर्तव्यं भवतीति।। तृतीया ।। 29 ।।
-2-1-31- पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः (379)
(241 तत्पुरुषसंज्ञासूत्रम् ।। 2|1|2 आ.20)
<M.2.375>
(न्यूनतापूर्त्यधिकरणम्)
(1255 वार्तिकम् ।। 1 ।।)
।। पूर्वादिष्ववरस्योपसंख्यानम् ।।
(व्याख्याभाष्यम्)
पूर्वादिष्ववरस्योपसंख्यानं कर्तव्यम्। मासावरोयं संवत्सरावरोयम्।।
(सदृशग्रहणप्रत्याख्यानाधिकरणम्)
(सदृशग्रहणप्रत्याख्यानभाष्यम्)
सदृशग्रहण उक्तम् ।। किमुक्तम्?। ।सदृशग्रहणमनर्थकं तृतीयासमासवचनात्। ।षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम्। इति।। पूर्वसदृश।। 30 ।।
-2-1-32- कर्तृकरणे कृता बहुलम् (380)
(242 तत्पुरुषसंज्ञासूत्रम् ।। 2|1|2 आ.21)
(अनिष्टवारणाधिकरणम्)
(1256 आक्षेपवार्तिकम् ।। 1 ।।)
।। कर्तृकरणे कृता क्तेन ।।
(व्याख्याभाष्यम्)
कर्तृकरणे कृता क्तेनेति वक्तव्यम्--अहिहतः। नखनिर्भिन्नः। दात्रलूनम्। परशुच्छिन्नम्।। कृता क्तेनेति किमर्थम्?। इह मा भूत्। दात्रेण लूनवान् परशुना छिन्नवान्।।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्?।।
(समाधानभाष्यम्)
न वक्तव्यम्। बहुलवचनात्सिद्धम्। कर्तृकरणे ।। 31 ।।
<M.2.376>
-2-1-33- कृत्यैरधिकार्थवचने (381)
(243 तत्पुरुषसंज्ञासूत्रम् ।। 2|1|2 आ.22)
(इष्टानुपपत्तिपरिहाराधिकरणम्)
(1257 वार्तिकम् ।। 1 ।।
।। कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यते।।
(व्याख्याभाष्यम्)
कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यत इति वक्तव्यम्। बुसोपेन्ध्यं तृणोपेन्ध्यं घनघात्यम्।।
(1258 वार्तिकम् ।। 2 ।।
।। साधनं कृतेति वा पादहारकाद्यर्थम् ।।
(व्याख्याभाष्यम्)
अथ वा साधनं कृता समस्यत इति वक्तव्यम्।। किं प्रयोजनम्?। पादहारकाद्यर्थम्। पादाभ्यां ह्रियते
पादहारकः। गले चोप्यते गलेचोपकः।। कृत्यैरधि।। 32 ।।
-2-1-34- अन्नेन व्यञ्जनम् (382)

-2-1-35- भक्ष्येण मिश्रीकरणम् (383)
(1259 आक्षेपवार्तिकम्।। 1 ।।
अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमित्यसमर्थसमासः (कारकाणां क्रियासमर्थत्वात्) ।।
(व्याख्याभाष्यम्)
अन्नेन व्यञ्जनम् भक्ष्येण मिश्रीकरणम् इत्यसमर्थसमासोयं द्रष्टव्यः।। किं कारणम्?। कारकाणां क्रियासमर्थत्वात्। कारकाणां क्रियया सामर्थ्यमस्ति, न तेषामन्योन्येन। तद्यथा--निश्रयण्या द्वाभ्यां काष्ठाभ्यां सामर्थ्यं न तेषामन्योन्येन ।।
<M.2.377>
(एकदेशिसमाधानभाष्यम्)
एवं तर्ह्याहायम्--अन्नेन व्यञ्जनम् भक्ष्येण मिश्रीकरणम् इति। न चास्ति सामर्थ्यम्। तत्र वचनात्समासो भविष्यति।।
(1260 समाधाननिराकरणवार्तिकम् ।। 2 ।।)
।। वचनप्रामाण्यादिति चेद् नानाकारकाणां प्रतिषेधः ।।
(व्याक्याभाष्यम्)
वचनप्रामाण्यादिति चेन्नानाकारकाणां प्रतिषेधो वक्तव्यः। तिष्ठतु दघ्ना ओदनो देवदत्तेन भुज्यत इति।।
(1261न्यासान्तरेणसमाधानवार्तिकम् ।। 3 ।।)
।। सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च।।
(व्याख्याभाष्यम्)
सिद्धमेतत्।। कथम्?। समानाधिकरणाधिकारे वक्तव्यम्--क्तान्तस्तृतीयापूर्वपदः समस्यते सुपा,
उत्तरपदस्य च लोपो भवति इति। दध्ना उपसिक्तः दध्युपसिक्तः। दध्युपसिक्तः ओदनो दध्योदनः। गुडेन संसृष्टाः-गुडसंसृष्टाः। गुडसंसृष्टा धानाः-गुडधानाः।।
(1262 वार्तिकम् ।। 4 ।।)
।। षष्ठीसमासश्च युक्तपूर्णान्तः ।।
(व्याख्याभाष्यम्)
षष्ठीसमासश्च युक्तपूर्णान्तः समस्यते, उत्तरपदस्य च लोपो वक्तव्यः। अश्वानां युक्तोऽश्वयुक्तः अश्वयुक्तो रथोऽश्वरथः। दध्नः पूर्णो दधिपूर्णः दधिपूर्णो घटो दधिघटः।।
(प्रत्याक्षेपभाष्यम्)
तत्तर्हीदं बहु वक्तव्यम्?।।
(1263 समाधानवार्तिकम् ।। 5 ।।
।। नवाऽसमासेऽदर्शनात् ।।
(व्याख्याभाष्यम्)
न वा वक्तव्यम्। किं कारणम्?।। असमासेऽदर्शनात्। यद्ध्यसमासे दृश्यते समासे च न दृश्यते तद्धि लोपारम्भं प्रयोजयति। न चासमासे उपसिक्तशब्दः संसृष्टशब्दो युक्तशब्दः पूर्णशब्दो वा दृश्यते।।
(वार्तिकावतरणभाष्यम्)
कथं तर्हि सामर्थ्यं गम्यते?।।
(1264 समाधानसाधकवार्तिकम् ।। 6 ।।
।। युक्तार्थसंप्रत्ययाच्च सामर्थ्यम् ।।
(व्याख्याभाष्यम्)
दध्ना युक्तार्थता संप्रतीयते।।
<M.2.378>
(वार्तिकावतरणभाष्यम्)
कथं पुनर्ज्ञायते--दध्ना युक्तार्थता संप्रतीयत इति?।।
(1265 समाधानसाधकवार्तिकम् ।। 7 ।।)
।। संप्रत्ययाच्च तदर्थाध्यवसानम् (संप्रतीयमानार्थलोपे ह्यनवस्था ।।)
(व्याख्याभाष्यम्)
संप्रत्ययाच्च तदर्थोध्यवसीयते।। अवश्यं चैतदेवं विज्ञेयम्। संप्रतीयमानार्थलोपे ह्यनवस्था।। यो हि मन्यते संप्रतीयमानार्थानां शब्दानां लोपो भवतीति। अनवस्था तस्य लोपस्य स्यात्। दधीत्युक्ते बहवोर्था गम्यन्ते मन्दकमुत्तरकं निलीनकमिति। तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात्। तथा गुड इत्युक्ते मधुरशब्दस्य, शृङ्गवेरमिति च कटुकशब्दस्य। अन्तरेणापि खलु शब्दप्रयोगं बहवोऽर्था गम्यन्तेक्षिनिकोचैः पाणिविहारैश्च। तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात्।। अन्नेन।। 33 ।। भक्ष्येण ।। 34 ।।
-2-1-36- चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (384)
(246 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ. 25 ।।

(पाणिनीयन्यासेदूषणाधिकरणम्)
(आक्षेपभाष्यम्)
किं चतुर्थ्यन्तस्य तदर्थमात्रेण समासो भवति?।।
(इष्टापत्तिभाष्यम्)
एवं भवितुमर्हति।।
<M.2.379>
(1266 दूषणवार्तिकम् ।। 1 ।।)
।। चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोविशेषात् ।।
(व्याख्याभाष्यम्)
चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह समासः प्राप्नोति। अनेनापि प्राप्नोति--रन्धनाय स्थाली अवहननायोलूखलमिति।। किं कारणम्?। अविशेषात्। नहि कश्चिद्विशेष उपादीयते--एवंजातीयकस्य चतुर्थ्यन्तस्य तदर्थेन सह समासो भवतीति। अनुपादीयमानविशेषे सर्वप्रसङ्गः।।
(1267 दूषणवार्तिकम् ।। 2 ।।)
।। बलिरक्षिताभ्यां चानर्थकं वचनम् ।।
(व्याख्याभाष्यम्)
बलिरक्षिताभ्यां च समासवचनमनर्थकम्। योहि महाराजाय बलिः स महाराजार्थो भवति। तत्र तदर्थ इत्येव सिद्धम्।।
(पूर्वाचार्यन्यासेदूषणाधिकरणम्)
(पूर्वाचार्यन्यासभाष्यम्)
यदि पुनर् विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इत्येतल्लक्षणं क्रियते ।।
(1268 दूषणवार्तिकम् ।। 3।।)
।। विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम् ।।
(व्याख्याभाष्यम्)
विकृतिः प्रकृत्या इति चेदश्वघासादीनामुपसंख्यानं कर्तव्यम्। अश्वघासः श्वश्रूसुरं हस्तिविधा इति।।
(1269 वार्तिकम् ।। 4 ।।)
।। अर्थेन नित्यसमासवचनम् ।।
(व्याख्याभाष्यम्)
अर्थशब्देन नित्यं समासो वक्तव्यः। ब्राह्मणार्थं क्षत्रियार्थम्।।
(आक्षेपभाष्यम्)
किं विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत इत्यतोर्थेन नित्यसमासो वक्तव्यः?।।
(समाधानभाष्यम्)
नेत्याह। सर्वथाऽर्थेन नित्यसमासो वक्तव्यः विग्रहो मा भूदिति।।
(1270 द्वितीयखण्कडवार्तिकम् ।। 5 ।।)
।। सर्वलिङ्गता च ।।
(व्याख्याभाष्यम्)
सर्वलिङ्गता च वक्तव्या। ब्राह्मणार्थं पयः ब्राह्मणार्थः सूपः ब्राह्मणार्था यवागूरिति।।
(आक्षेपभाष्यम्)
किमर्थेन नित्यसमास उच्यते इत्यतः सर्वलिङ्गता वक्तव्या?।।
<M.2.380>
(समाधानभाष्यम्)
नेत्याह। सर्वथा सर्वलिङ्गता वक्तव्या। किं कारणम्?। अर्थशब्दोयं पुल्लिङ्गः, उत्तरपदार्थप्रधानश्च तत्पुरुषः, तेन पुल्लिङ्गस्यैव समासस्याभिधानं स्यात् स्त्रीनपुंसकलिङ्गस्य न स्यात्।।
(आक्षेपभाष्यम्)
तत्तर्हीदं बहु वक्तव्यम्। ।विकृतिः प्रकृत्येति वक्तव्यम्।।अश्वघासादीनामुपसंख्यानं कर्तव्यम्।।अर्थेन नित्यसमासो वक्तव्यः सर्वलिङ्गता च वक्तव्या।।
(समाधानभाष्यम्)
न वक्तव्यम्। यत्तावदुच्यते--विकृतिः प्रकृत्येति वक्तव्यम् इति। न वक्तव्यम्।
आचार्यप्रवृत्तिर्ज्ञापयति--विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इति। यदयं बलिरक्षितग्रहणं करोति।। कथं कृत्वा ज्ञापकम्?। यथाजातीयकानां समासे बलिरक्षितग्रहणेनार्थः तथाजीतीयकानां समासः। यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते न तदर्थमात्रेण। ततो बलिरक्षितग्रहणमर्थवद्भवति।।

(द्वितीयवार्तिकप्रत्याख्यानभाष्यम्)
यदप्युच्यते--अश्वघासादीनामुपसंख्यानं कर्तव्यम् इति।। न कर्तव्यम्। अश्वघासादयः षष्ठीसमासा भविष्यन्ति। यद्धि यदर्थं भवति अयमपि तत्राभिसंबन्धो भवति--अस्येदम् इति। तद्यथा--गुरोरिदं--गुर्वर्थमिति।।
(आक्षेपभाष्यम्)
ननु च स्वरे भेदो भवति--चतुर्थीसमासे सति पूर्वपदप्रकृतिस्वरत्वेन भवितव्यम्। षष्ठीसमासे सति पुनरन्तोदात्तत्वेन।।
(समाधानभाष्यम्)
नास्ति भेदः। चतुर्थीसमासेपि सत्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्?। आचार्यप्रवृत्तिर्ज्ञापयति--विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति, न चतुर्थीमात्रम् इति। यदयं चतुर्थी तदर्थे अर्थे क्ते च इत्यर्थग्रहणं क्तग्रहणं च करोति।। कथं कृत्वा ज्ञापकम्?। यथाजातीयकानां प्रकृतिस्वरत्वेऽर्थग्रहणेन क्तग्रहणेन चार्थः, तथाजातीयकानां प्रकृतिस्वरत्वम्। यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या भवति न चतुर्थीमात्रम्, ततोर्थग्रहणं क्तग्रहणं चार्यवद्भवति।।
(तृतीयवार्तिकप्रत्याख्यानभाष्यम्)
यदप्युच्यते--अर्थेन नित्यसमासो वक्तव्यः इति। न वक्तव्यः। सर्थप् प्रत्ययः करिष्यते।। किं कृतं भवति?।। न चैव हि कदाचित्प्रत्ययेन विग्रहो भवति। अपि च सर्वलिङ्गता सिद्धा भवति।।
<M.2.381>
(आक्षेपभाष्यम्)
यदि सर्थप् प्रत्ययः क्रियते, इत्संज्ञा न प्राप्नोति।। यथापि कथंचिदित्संज्ञा स्यात्, एवमपि श्यर्थं भ्र्वर्थम्
अङ्गस्य इतीयङुवङौ स्याताम्।।
(समाधानभाष्यम्)
एवं तर्हि बहुव्रीहिर्भविष्यति।। किं कृतं भवति? भवति वै कश्चिदस्वपदविग्रहो बहुव्रीहिः। तद्यथा--शोभनं मुखमस्याः सुमुखीति।।
(आक्षेपभाष्यम्)
नैवं शक्यम्। इह हि महदर्थमित्यात्त्वकपौ प्रसज्येयाताम्।
(समाधानभाष्यम्)
एवं तर्हि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः करिष्यते।। किं कृतं भवति?। न चैव हि कदाचिदादेशेन विग्रहो भवति। अपि च सर्वलिङ्गता सिद्धा भवति।।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्?।।
(समाधानभाष्यम्)
न वक्तव्यम्। योगविभागः करिष्यते--चतुर्थी सुबन्तेन सह समस्यते।। ततः--तदर्थार्थ तदर्थस्य चोत्तरपदस्यार्थशब्द आदेशो भवति।।
(आक्षेपभाष्यम्)
इहापि तर्हि समासः प्राप्नोति--छात्राय रुचितं छात्राय स्वदितमिति।।
(समाधानभाष्यम्)
आचार्यप्रवृत्तिर्ज्ञापयति--तार्दर्थ्य या चतुर्थी सा समस्यते, न चतुर्थीमात्रम् इति। यदयं हितसुखग्रहणं करोति।। कथं कृत्वा ज्ञापकम्?। यथा जातीयकानां समासे हितसुखग्रहणेनार्थस्तथाजातीयकानां समासः।। यदि
च तार्दर्थ्ये या चतुर्थी सा समस्यते, न चतुर्थीमात्रम्; ततो हितसुखग्रहणमर्थवद्भवति।।
(आक्षेपभाष्यम्)
इहापि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः प्राप्नोति--यूपाय दारु यूपदारु।।
(समाधानभाष्यम्)
वा च विधास्यते।।
(आक्षेपभाष्यम्)
इहापि तर्हि विभाषा प्राप्नोति--ब्राह्मणार्थं क्षत्रियार्थमिति।।
<M.2.382>
(समाधानभाष्यम्)
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति--प्रकृतिविकृत्योर्यः समासः तत्र तदर्थस्योत्तरपदस्य वाऽर्थशब्द आदेशो भवति अन्यत्र नित्यः, इति। यदयं बलिरक्षितग्रहणं करोति।।
(आक्षेपभाष्यम्)
एवं तर्हि--उदकार्थो वीवधः स्थानिवद्भावादुदभावः प्राप्नोति। तस्मान्नैवं शक्यम्। न चेदेवम्, ।अर्थेन नित्यसमासो वक्तव्यः।।सर्वलिङ्गता च। ।।
(समाधानभाष्यम्)
नैष दोषः। इदं तावदयं प्रष्टव्यः--अथेह ब्राह्मणेभ्यः इति कैषा चतुर्थी?।। तार्दर्थ्य इत्याह ।। यदि तार्दर्थ्ये चतुर्थी, अर्थशब्दस्य प्रयोगेण न भवितव्यम्--उक्तार्थानामप्रयोग इति।।

(आक्षेपभाष्यम्)
समासोपि तर्हि न प्राप्नोति।।
(समाधानभाष्यम्)
वचनात्समासो भविष्यति।।
(चतुर्थवार्तिकप्रत्याख्यानभाष्यम्)
यदप्युच्यते--।सर्वलिङ्गता वक्तव्या। इति।। न वक्तव्या। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।। चतुर्थी ।। 35 ।।
-2-1-37- पञ्चमी भयेन (385)
(247 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2। आ.26)
(न्यूनतापरिहाराधिकरणम्)
(वार्तिकावतरणभाष्यम्)
अत्यल्पमिदमुच्यते--भयेन इति।।
(1271 वार्तिकम् ।। 1 ।।)
(।। भयभीतभीतिभीभिः ।।)
(भाष्यम्) भयभीतभीतिभीभिरिति वक्तव्यम्।। वृकाद्भयं वृकभयम्।। वृकाद्भीतः वृकभीतः। वृकाद्भीतिः वृकभीतिः। वृकाद्भीः वृकभीरिति।।
(भाष्यम्) अपर आह--
(1272 वार्तिकन्यासान्तरम् ।। 2 ।।)
(।। भयनिर्गतजुगुप्सुभिः ।।)
(भाष्यम्) भयनिर्गतजुगुप्सुभिरिति वक्तव्यम्। वृकभयं ग्रामनिर्गतः अधर्मजुगुप्सुः।। पञ्चमी भयेन ।। 36 ।।
-2-1-40- सप्तमी शौण्डैः (388)
(248 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।27 ।।)
(न्यूनताशङ्कापरिहाराधिकरणम्)
(1272 वार्तिकम् ।। 1 ।।)
(।। शौण्डादिभिः ।।)
(व्याख्याभाष्यम्)
शौण्डादिभिरिति वक्तव्यम्। इहापि यथा स्याद् अक्षधूर्तः स्त्रीधूर्तः अक्षकितवः स्त्रीकितव इति।।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्?।।
<M.2.383>
(समाधानभाष्यम्)
न वक्तव्यम्। बहुवचननिर्देशाच्छौण्डादिभिरिति विज्ञास्यते।। सप्तमी शौण्डैः ।। 39 ।।
-2-1-42- ध्वाङ्क्षेण क्षेपे (390)
(249 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ.28 ।।)
(इष्टानुपपत्तिपरिहाराधिकरणम्)
(1276 वार्तिकम् ।। 1 ।।)
।। ध्वाङ्क्षेणेत्यर्थग्रहणम् ।।
(व्याख्याभाष्यम्)
ध्वाङ्क्षेण क्षेपेऽर्थग्रहणं कर्तव्यम्। इहापि यथा स्यात्--तीर्थकाक इति।।
(आक्षेपभाष्यम्)
क्षेप इत्युच्यते। क इह क्षेपो नाम?।।
(समाधानभाष्यम्)
यथा तीर्थकाका न चिरं स्थातारो भवन्ति। एवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति स उच्यते तीर्थकाक इति।। ध्वाङ्क्षेण ।। 41 ।।
-2-1-43- कृत्यैर्ऋणे (391)
(250 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ.29 ।।)
(इष्टानुपपत्तिपरिहाराधिकरणम्)
(1274 वार्तिकम् ।। 1 ।।)
।। कृत्यैर्नियोगे यद्ग्रहणम् ।।
(व्याख्याभाष्यम्)
कृत्यैर्नियोगे यत्प्रत्ययेनेति वक्तव्यम्। इहापि यथा स्यात्--पूर्वाह्णेगेयं साम, प्रातरध्येयोऽनुवाक इति।।
(आक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम् ?।।
(समाधानभाष्यम्)
न वक्तव्यम्। ऋण इत्येव सिद्धम्। इह यद्यस्य नियोगतः कार्यम्, ऋणं तस्य तद्भवति। तत्र ऋण इत्येव सिद्धम्।।
(अभ्युपगमभाष्यम्)
यद्ग्रहणं च कर्तव्यम्। इह मा भूत्पूर्वाह्ने दातव्या भिक्षा इति।। कृत्यैः ।। 42 ।।
-2-1-47- क्षेपे (395)
(251 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ, 30)
(उदाहरणनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
किमुदाहरणम्?।।
(समाधानभाष्यम्)
अवतप्तेनकुलस्थितं त एतत्।।
<M.2.384>
(आक्षेपभाष्यम्)
क्षेप इत्युच्यते क इह क्षेपो नाम?।।
(समाधानभाष्यम्)
यथा अवतप्ते नकुलाः न चिरं स्थातारो भवन्ति, एवं कार्याण्यारभ्य यो न चिरं तिष्ठति स उच्यते अवतप्तेनकुलस्थितं त एतद् इति।।
(आक्षेपभाष्यम्)
क्षेपे सप्तम्यन्तं क्तान्तेन सह समस्यत इत्युच्यते तत्र ते सगतिकेन सनकुलेन च समासो न प्राप्नोति।।
(समाधानभाष्यम्)
।। क्षेपे सगतिकसकारकसमासे उक्तम् ।।
किमुक्तम्?। कृद्ग्रहणे गतिकारकपूर्वस्यापि-- इति।। क्षेपे ।। 46 ।।
-2-1-48- पात्रेसमितादयश्च (396)
(251 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।2 आ.31)
(चकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थश्चकारः?।।
(समाधानभाष्यम्)
एवकारार्थः। पात्रेसमितादय एव ।। क्व मा भूत्?। परमं पात्रे समिता इति।। पात्रेसमि ।। 47 ।।
-2-1-49- पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन (397)
(252 तत्पुरुषसंज्ञासूत्रम् ।। 2 । 1 । 2 आ. 32)
(एकनदीशब्देऽव्ययीभाववारणाधिकरणम्)
(आक्षेपभाष्यम्)
इह कस्मादव्ययीभावो न भवति--एका नदी एकनदी नदीभिः संख्या इति प्राप्नोति।।
(समाधानभाष्यम्)
नैष दोषः। इह कश्चित्समासः पूर्वपदार्थप्रधानः। कश्चिदुत्तरपदार्थप्रधानः। कश्चिदन्यपदार्थप्रधानः। कश्चिदुभयपदार्थप्रधानः। पूर्वपदार्थप्रधानोव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। न चात्र पूर्वपदार्थप्राधान्यं गम्यते।।
(समाधानभाष्यम्)
अथ वाव्ययीभावः क्रियताम्, तत्पुरुष इति, तत्पुरुषो भविष्यति विप्रतिषेधेन ।।
(आक्षेपभाष्यम्)
भवेदेकसंज्ञाधिकारे सिद्धम्। परंकार्यत्वे तु न सिद्ध्यति। आरम्भसामर्थ्याच्चाव्ययीभावः प्राप्नोति, परंकार्यत्वाच्च तत्पुरुषः प्राप्नोति।।
(समाधानभाष्यम्)
परं कार्यत्वे च न दोषः।। कथम् ?। नदीभिः समाहारेऽव्ययीभावो वक्तव्यः। स चावश्यं वक्तव्यः। सर्वमेकनदीतरे ।। पूर्वका ।। 48 ।।
<M.2.385>
-2-1-51- तद्धितार्थोत्तरपदसमाहारे च (399)
(254 तत्पुरुषसंज्ञासूत्रम् ।। 2। 1 । 3 आ.1)
(समाहारशब्दार्थनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)

समाहार इति कोयं शब्दः?।।
(समाधानभाष्यम्)
समाङ्पूर्वाद्धरतेः कर्मसाधनो घञ्--समाह्रियते समाहार इति।।
(आक्षेपभाष्यम्)
यदि कर्मसाधनः, पञ्च कुमार्यः समाहृताः पञ्चकुमारि दशकुमारि गोस्त्रियोरुपसर्जनस्य इति ह्रस्वत्वं न प्राप्नोति। द्विगुरेकवचनम् इत्येतच्च वक्तव्यम्।।
(समाधानभाष्यम्)
एवं तर्हि भावसाधनो भविष्यति--समाहरणं समाहारः।।
(आक्षेपभाष्यम्)
अथ भावसाधने सति किमभिधीयते?।।
(समाधानभाष्यम्)
यत्तदौत्तराधर्यम्?।।
(आक्षेपभाष्यम्)
कः पुनर्गवां समाहारः।।
(समाधानभाष्यम्)
यत्तदर्जनं क्रयणं भिक्षणमपहरणं वा।।
(आक्षेपभाष्यम्)
यद्येवं विक्षिप्तेपु पूलेषु, गोषु चरन्तीषु न सिद्ध्यति।।
(समाधानभाष्यम्)
एवं तर्हि समभ्याशीकरणं समाहारः।।
<M.2.386>
(आक्षेपभाष्यम्)
एवमपि पञ्चग्रामी षण्णगरी त्रिपुरीति न सिद्ध्यति।। किं कारणम्?। समेकत्ववाची, आङाभिमुख्ये वर्तते, हरतिर्देशान्तरप्रापणे।।
(समाधानभाष्यम्)
नावश्यं हरतिर्देशान्तरप्रापण एव वर्तते।। किं तर्हि?।। सादृश्येपि वर्तते। तद्यथा--मातुरनुहरति पितुरनुहरतीति।।
(समाधानान्तरभाष्यम्)
अथ वा पञ्चग्रामी षण्णगरी त्रिपुरीति। नैवेदमियत्येवावतिष्ठते। अवश्यमसौ ततः किंचिदाकाङ्क्षति क्रियां गुणं वा। यदाकाङ्क्षति तदेकं, स च समाहारः।।
(आक्षेपभाष्यम्)
अयं तर्हि भावसाधने सति दोषः--पञ्चफली आनीयताम् इति भावानयने चोदिते द्रव्यानयनं न प्राप्नोति ।।
(समाधातुं प्रश्नभाष्यम्)
नैष दोषः। इदं तावदयं प्रष्टव्यः अथेह गौरनुबन्ध्योऽजोऽग्नीषोमीयः इति कथमाकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनानि क्रियन्ते इति ।।
(तद्देयप्रश्नोत्तरभाष्यम्)
असंभवाद् आकृतौ आरम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि क्रियन्ते ।।
(प्रश्नोत्तरस्यैव स्वार्थसाधकताभाष्यम्)
इदमप्येवंजातीयकमेव। असंभवाद्भावानयनस्य द्रव्यानयनं भविष्यति।। अथ वा--अव्यतिरेकाद् द्रव्याकृत्योः ।।
(सूत्रन्यासविचाराधिकरणम्)
(आक्षेपभाष्यम्)
किं पुनर्द्विगुसंज्ञा प्रत्ययोत्तरपदयोर्भवति?।।
(अभ्युपगमभाष्यम्)
एवं भवितुमर्हति।।
<M.2.387>
(1275 अभ्युपगमे दोषवार्तिकम् ।। 1 ।।)
।। द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः ।।
(व्याख्याभाष्यम्)
द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः।। का इतरेतराश्रयता?। द्विगुसंज्ञानिमित्ते प्रत्ययोत्तरपदे। प्रत्ययोत्तरपदनिमित्ता च द्विगुसंज्ञा। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते।।
(समाधानभाष्यम्)

एवं तर्हि अर्थे इति वक्ष्यामि।।

(1276 वार्तिकम् ।। 2 ।।
।। अर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिवत् ।।
(व्याख्याभाष्यम्)
अर्थे चेत्तद्धितोत्पत्तिर्न प्राप्नोति। द्वैमातुरः। त्रैमातुरः। पाञ्चनापितिः।। किं कारणम्?। द्विगुनोक्तत्वात्। बहुव्रीहिवत्। तद्यथा -- चित्रगुः शबलगुः इति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति।।
(न्यासान्तरभाष्यम्)
एवं तर्हिसमासतद्धितविधौ इति वक्ष्यामि।

(1277 वार्तिकम् ।। 3 ।।)
।। समासतद्धितविधाविति चेदन्यत्र समाससंज्ञाभावः ।।
(व्याख्याभाष्यम्)
समासतद्धितविधाविति चेदन्यत्र समाससंज्ञा न प्राप्नोति।। क्वान्यत्र?। स्वरे। पञ्चारत्निः दशारत्निः इगन्ते द्विगौ इत्येष स्वरो न प्राप्नोति।।
<M.2.388>
(1278 समाधानवार्तिकम् ।। 4 ।।)
।। सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ।।
(व्याख्याभाष्यम्)
सिद्धमेतत्।। कथम्?। प्रत्ययोत्तरपदयोश्चेति वचनात्। प्रत्ययोत्तरपदयोर्द्विगुसंज्ञा भवतीति वक्तव्यम्।।
(आक्षेपस्मारणभाष्यम्)
ननु चोक्तम्--।द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धि। इति।।
(समाधानसाधकभाष्यम्)
नैष दोषः। इतरेतराश्रयमात्रमेतच्चोदितम्। सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि--।सिद्धं तु नित्यशब्दत्वाद्। इति।।
(समाधानबाधकभाष्यम्)
नेदं तुल्यमन्यैरितरेतराश्रयैः। नहि संज्ञा नित्या ।।
(समाधानसाधकभाष्यम्)
एवं तर्हि भाविनी संज्ञा विज्ञास्यते। तद्यथा। कश्चित्कंचित्तन्तुवायमाह--अस्य सूत्रस्य शाटकं वय इति। स पश्यति--यदि शाटकः न वातव्यः। अथ वातव्यो न शाटकः। वातव्यः शाटकश्चेति विप्रतिषिद्धं भवति। भाविनी खल्वस्य संज्ञाभिप्रेता। स मन्ये वातव्यः यस्मिन्नुते शाटक इत्येतद्भवति इति।। एवमिहापि तस्मिन् द्विगुर्भवति यस्याभिनिर्वृत्तस्य प्रत्यय उत्तरपदमिति चैते संज्ञेभविष्यतः।।
(अभ्युपगमभाष्यम्)
अथ वा पनरस्तु--अर्थे इति।।
(आक्षेपस्मारणम्)
ननु चोक्तम्--।अर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिवद्। इति ।।
(समाधानभाष्यम्)
नैष दोषः। नावश्यमर्थशब्दोभिधेय एव वर्तते।। किं तर्हि? स्यादर्थेपि वर्तते। तद्यथा--दारार्थं घटामहे। धनार्थं भिक्षामहे। दारा नः स्युः। धनानि नः स्युरिति। एवमिहापि तद्धितार्थे द्विगुर्भवतीति तद्धितः स्यादिति।।

(1279 वार्तिकम् ।। 5 ।।)
।। द्विगोर्वा लुग्वचनं ज्ञापकं तद्धितोत्पत्तेः ।।
(व्याख्याभाष्यम्)
अथ वा यदयं द्विगोर्लुगनपत्ये इति द्विगोरुत्तरस्य तद्धितस्य लुकं शास्ति तज्ज्ञापयत्याचार्यः-- उत्पद्यते द्विगोस्तद्धितः इति।।
(समाहारग्रहणसार्थक्याधिकरणम्)
(1280 वार्तिकम् ।। 6 ।।)
।। समाहारसमूहयोरविशेषात्समाहारग्रहणानर्थक्यं तद्धितार्थेन कृतत्वात् ।।
(व्याख्याभाष्यम्)
समाहारः समूह इत्यविशिष्टावेतावर्थौ। समाहारसमूहयोरविशेषात्समाहारग्रहणमनर्थकम्।। किं
कारणम्। तद्धितार्थेन कृतत्वात्। तद्धितार्थे द्विगुः इत्येवमत्र द्विगुर्भविष्यति ।।
<M.2.389>
(आक्षेपभाष्यम्)

यदि तद्धितार्थे द्विगु इत्येवमत्र द्विगुर्भविष्यति, तद्धितोत्पत्तिः प्राप्नोति।।
(आक्षेपबाधकभाष्यम्)
उत्पद्यताम्। लुक् भविष्यति।।
(आक्षेपसाधकभाष्यम्)
लुक्कृतानि प्राप्नुवन्ति।। कानि?। पञ्चपूली दशपूली अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि इति प्रतिषेधः प्राप्नोति।।
पञ्चगवं दशगवम् गोरतद्धितलुकि इति टच् न प्राप्नोति ।।
(समाधानभाष्यम्)
नैष दोषः। अविशेषेण द्विगोर्ङीब् भवति इत्युक्त्वा अपरिमाणबिस्ताचितकम्बल्येभ्यः समाहारे इति वक्ष्यामि तन्नियमार्थं भविष्यति समाहार एव नान्यत्र इति।।
गोरकारो द्विगोः समाहारे।।
अविशेषेण गोष्ठज् भवति इत्युक्त्वा द्विगोः समाहारे इति वक्ष्यामि तन्नियमार्थं भविष्यति--समाहार एव नान्यत्र इति।।
(1281 वार्तिकम् ।। 7 ।।)
।। अभिधानार्थं तु ।।
(व्याख्याभाष्यम्)
अभिधानार्थं तु समाहारग्रहणं कर्तव्यम्। समाहारेणाभिधानं यथा स्यात्, तद्धितार्थेन मा भूदिति।। किं च स्यात्?।। तद्धितोत्पत्तिः प्रसज्येत।।

(अतिप्रसङ्गबाधकभाष्यम्)
उत्पद्यताम्। लुग् भविष्यति।।
(लुकिदूषणभाष्यम्)
लुक्कृतानि प्राप्नुवन्ति।।
(लुकिदूषणपरिहारभाष्यम्)
सर्वापि परिहृतानि।।
(दूषणपरिहारबाधकभाष्यम्)
सर्वाणि परिहृतानि।।
(दूषणपरिहारबाधकभाष्यम्)
न सर्वाणि परिहृतानि। पञ्चकुमारि दशकुमारि लुक् तद्धितलुकि इति ङीपो लुक् प्रसज्येत ।।
(अवान्तरसमासविधानाधिकरणम्)
(1282 विधानान्तरवार्तिकम् ।। 8 ।।)
।। द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ।।
(भाष्यम्) द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासो वक्तव्यः। वाग्दृषदप्रियः। छत्रोपानहप्रिय:। पञ्चगवप्रियः। दशगवप्रियः ।। किं प्रयोजनम्?। समुदायवृत्ताववयवानां मा कदाचिदवृत्तिर्भूदिति ।।
<M.2.390>
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्?।।
(समाधानभाष्यम्)
न वक्तव्यम्। इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। यदा वृत्तिपक्षः तदा सर्वेषामेव वृत्तिः। यदाऽवृत्तिः
पक्षः तदा सर्वेषामवृत्तिः।।
(1283 बहुनांतत्पुरुषविधायकवार्तिकम् ।। 9 ।।)
।। उत्तरपदेन परिमाणिना द्विगोः समासवचनम् ।।
(भाष्यम्) उत्तरपदेन परिमाणिना द्विगोः समासो वक्तव्यः। द्वौ मासौ जातस्य यस्य सः द्विमासजातः त्रिमासजातः।। किं पुनः कारणं न सिद्ध्यति!। सुप्सुपेति वर्तते।।
(विग्रहान्तरेण विधानवैयर्थ्यभाष्यम्)
एवं तर्हि इदं स्यात्--द्वौ मासौ द्विमासं द्विमासं जातस्येति।।
(विग्रहान्तरदूषणभाष्यम्)
नैवं शक्यम्। स्वरे हि दोषः स्यात्। द्विमासजात इति प्राप्नोति। द्विमासजात इति चेष्यते।।
(दूषणान्तरभाष्यम्)
द्व्यह्नजातश्च न सिद्ध्यति। द्व्यहजात इति प्राप्नोति।।
(आक्षेपभाष्यम्)
न चैवं भवितव्यम्?।।

(समाधानभाष्यम्)
भवितव्यं च यदा समाहारे द्विगुः।। द्व्यह्नजातस्तु न सिद्ध्यति।।
(आक्षेपभाष्यम्)
किमुच्यते परिमाणिनेति, नपुनरन्यत्रापि पञ्चगवप्रियः दश गवप्रियः?।।
(1284 विधानसाधकवार्तिकम् ।। 10 ।।)
।। अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदप्रसिद्धिः ।।
(व्याख्याभाष्यम्)
अन्यत्र समुदायो बहुव्रीहिसंज्ञः। अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदं प्रसिद्धम्। उत्तरपदप्रसिद्धेः उत्तरपदे इति द्विगुर्भविष्यति।।
<M.2.391>
(1285 वार्तिकम् ।। 11 ।।)
।। सर्वत्र मत्वर्थे प्रतिषेधः ।।
(भाष्यम्) सर्वेषु पक्षेषु द्विगुसंज्ञायाः मत्वर्थे प्रतिषेधो वक्तव्यः।। किं प्रयोजनम्?। पञ्चखट्वा दशखट्वा। द्विगोः इतीकारो मा भूत्। पञ्चगुर्दशगुः गोरतद्धितलुकि इति टच् मा भूदिति।। तद्धितार्थोत्तरपद ।। 50 ।।
-2-1-52- संख्यापूर्वो द्विगुः (500)
(255 तत्पुरुषे द्विगुसंज्ञासूत्रम् ।। 2।1।3 आ.2 सू)
(अनन्तरयोगस्यैव संबन्धाधिकरणम्)
(आक्षेपभाष्यम्)
किमनन्तरे योगे यः संख्यापूर्वः स द्विगुसंज्ञः, आहोस्वित्पूर्वमात्रे?।।
(विशेषजिज्ञासाभाष्यम्)
किं चातः?।।
(विशेषप्रदर्शकभाष्यम्)
यदानन्तरयोगे। एकशाटीति द्विगोः इतीकारो न प्राप्नोति।।
(विशेषप्रदर्शकशेषभाष्यम्)
अथ पूर्वमात्रे। एकभिक्षा। अत्रापि प्राप्नोति।।
(प्रथमपक्षाभ्युपगमभाष्यम्)
अस्त्वनन्तरे।।
(आक्षेपभाष्यम्)
कथमेकशाटी ?।।
(समाधानभाष्यम्)
ईकारान्तेन समासो भविष्यति--एका शाटी एकशाटी।।
<M.2.392>
(समाधानबाधकभाष्यम्)
इह तर्ह्येकापूपी द्विगोः इतीकारो न प्राप्नोति।।
(द्वितीयपक्षाभ्युपगमभाष्यम्)
अस्तु तर्हि पूर्वमात्रे।।
(आक्षेपभाष्यम्)
कथमेकभिक्षा?।।
(समाधानभाष्यम्)
टाबन्तेन सह समासो भविष्यति--एका भिक्षा एकभिक्षा।
(आक्षेपान्तरभाष्यम्)
इदं तर्हि--सप्तर्षयः इगन्ते द्विगौ इत्येष स्वरः प्राप्नोति।।
(प्रथमपक्षाभ्युपगमभाष्यम्)
अस्तु तर्ह्यनन्तरे ।।
(आक्षेपभाष्यम्)
कथमेकापूपी ?
(समाधानभाष्यम्)
समाहार इत्येव सिद्धम् ।।
(आक्षेपभाष्यम्)
कः पुनरत्र समाहारः।।

(समाधानभाष्यम्)
यत्तद्दानं संभ्रमो वा।।
(आक्षेपभाष्यम्)
इह तर्हि पञ्चहोतारो दशहोतारः। इगन्ते द्विगौ इत्येष स्वरो न प्राप्नोति।।
(द्वीतीयपक्षाभ्युपगमभाष्यम्)
अस्तु तर्हि--पूर्वमात्रे ।।
(आक्षेपभाष्यम्)
कथं सप्तर्षयः?।।
(समाधानभाष्यम्)
अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसि इत्येवमेतत्सिद्धम्।।
(प्रथमपक्षाभ्युपगमभाष्यम्)
अथ वा पुनरस्तु--अनन्तरे।।
(आक्षेपभाष्यम्)
कथं पञ्चहोतारः दशहोतारः ?
(समाधानभाष्यम्)
।आद्युदात्तप्रकरणे दिवोदासादीनां छन्दसि। इत्येव सिद्धम्।। संख्यापूर्वो ।। 51 ।।
<M.2.393>
-2-1-53- कुत्सितानि कुत्सनैः (401)
(256 तत्पुरुषसंज्ञासूत्रम् ।। 2 । 1 । 3 आ.3 सू.)
(उदाहरणनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
किमुदाहरणम् ?।।
(समाधानभाष्यम्)
वैयाकरणखसूचिः।।
(आक्षेपभाष्यम्)
किं व्याकरणं कुत्सितम्, आहोस्विद्वैयाकरणः?।।
(समाधानभाष्यम्)
वैयाकरणः कुत्सितः। तस्मिन्कुत्सिते तत्स्थमपि कुत्सितं भवति।। कुत्सितानि ।। 52 ।।
-2-1-55- उपमानानि सामान्यवचनैः (403)
(257 तत्पुरुषसंज्ञासूत्रम् ।। 2।1।3 आ. 4सू.)
(उपमानोपमेयभावनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
उपमानानीत्युच्यते कानि पुनरुपमानानि। किं यदेवोपमानं तदेवोपमेयम्, आहोस्विदन्यदेवोपमानमन्यदुपमेयम्?।।
(प्रत्याक्षेपभाष्यम्)
किं चातः?।।
<M.2.394>
(प्रथमपक्षे आक्षेपभाष्यम्)
यदि यदेवोपमानं तदेवोपमेयम्, क इहोपमार्थः --गौरिव गौरिति।।
(द्वितीयपक्षे आक्षेपभाष्यम्)
अथान्यदेवोपमानमन्यदुपमेयम्, क इहोपमार्थः --गौरिवाश्व इति।।
(संमाधानभाष्यम्)
एवं तर्हि यत्र किंचित्सामान्यं कश्चिच्च विशेषः तत्रोपमानोपमेये भवतः।।
(आक्षेपभाष्यम्)
किं वक्तव्यमेतत्?।।
(समाधानभाष्यम्)
नहि।। कथमनुच्यमानं गंस्यते?। मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते--अनिर्ज्ञातमर्थं ज्ञास्यामीति। तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानं गौरिव गवय इति। गौर्निर्ज्ञातः गवयोऽनिर्ज्ञातः ।।
(आक्षेपभाष्यम्)
कामं तर्ह्यनेन्नेव हेतुना यस्य गवयो निर्ज्ञातः स्याद् गौरनिर्ज्ञातः, तेन कर्तव्यं स्याद्--गवय इव गौरिति।।

डारौरसः कृते टेरे यथा द्वित्वं प्रसारणे।।
समसंख्येन नार्थोस्ति सिद्धं स्थानेर्थतोन्तरः।।
आन्तर्यतो व्यवस्था त्रय एवेमे भवन्तु सर्वेषाम्।।
टेरेत्वं च परत्वात्कृतेपि तस्मिन्निमे सन्तु।।
(डादेशेसर्वादेशत्वाधिकरणम्)
(1673 वार्तिकम् ।। 4 ।।)
- डाविकारस्य शित्करणं सर्वादेशार्थम् -
(भाष्यम्) डाविकारः शित्कर्तव्यः। किं प्रयोजनम्? सर्वादेशार्थम् शित्सर्वस्य इति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे अलोन्त्यस्य विधयो भवन्ति इत्यन्त्यस्य प्रसज्येत ।।
(1674 वार्तिकम् ।। 5 ।।)
- निघातप्रसङ्गस्तु -
(भाष्यम्) निघातस्तु प्राप्नोति। श्वः कर्ता। तासेः परं लसार्वधातुकमनुदात्तं भवतीत्येष स्वरः प्राप्नोति।।
(प्रथमवार्तिकप्रत्याख्यानभाष्यम्)
यत्तावदुच्यते -- डाविकारस्य शित्करणं सर्वादेशार्थम् इति ।।
(1675 शित्करणप्रत्याख्यानवार्तिकम् ।। 6 ।।
- सिद्धमलोन्त्यविकारात् -
(भाष्यम्) सिद्धमेतत्।। कथम्? अलोन्त्यविकारात्।।
(आक्षेपभाष्यम्)
अस्त्वयमलोन्त्यस्य। का रूपसिद्धिः -- कर्ता?
(1676 समाधानवार्तिकम् ।। 7 ।।)
- डिति टेर्लोपाल्लोपः -
(भाष्यम्) डिति टेर्लोपेन लोपो भविष्यति।।
(बाधकभाष्यम्)
अभत्वान्न प्राप्नोति।।
(समाधानसाधकभाष्यम्)
डित्करणसार्मथ्याद्भविष्यति।।
(1677 शित्करणप्रत्याख्यानवार्तिकम् ।। 8 ।।)
- अनित्त्वाद्वा -
(भाष्यम्) अथ वा अनित्त्वादेतत्सिद्धम्।। किमिदमनित्त्वादिति? अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात्। असत्यां प्रत्ययसंज्ञायामित्संज्ञा न। असत्यामित्संज्ञायां लोपो न। असति लोपेनेकाल्। यदानेकाल् तदा सर्वादेशः। यदा सर्वादेशः तदा प्रत्ययः। यदा प्रत्ययस्तदेत्संज्ञा। यदेत्संज्ञा तदा लोपः।।
(1678 शित्करणप्रत्याख्यानवार्तिकम् ।। 9 ।।)
- प्रश्लिष्टनिर्देशाद्वा -
(भाष्यम्) अथ वा प्रश्लिष्टनिर्देशोयम् -- डा आ डा। सः अनेकाल्शित्सर्वस्य इति सर्वादेशो भविष्यति।।
(प्रत्याख्याननिराकरणभाष्यम्)
यदा तर्ह्ययमन्त्यस्य स्थाने भवति तदा तिङ्ग्रहणेन ग्रहणं न प्राप्नोति।।
(1679 प्रत्याख्यानसाधकवार्तिकम् ।। 10 ।।)
- तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात् -
(भाष्यम्)एकदेशविकृतमनन्यवद्भवति इति तिङ्ग्रहणेन ग्रहणं भविष्यति।।
(आक्षेपभाष्यम्)
स्वरः कथम्?
(1680 वार्तिकम्।। 11 ।।)
- स्वरे विप्रतिषेधात्सिद्धम् -
(भाष्यम्) (इदमिह संप्रधार्यम् -- ) डारौरसः क्रियन्तामनुदात्तत्वमिति। किमत्र कर्तव्यम्? परत्वादनुदात्तत्वम्।। नित्या डारौरसः कृतेऽप्यनुदात्तत्वे प्राप्नुवन्ति, अकृतेऽपि प्राप्नुवन्ति।। अनुदात्तत्वमपि नित्यं कृतेष्वपि डारौरस्सु प्राप्नोति,
अकृतेष्वपि प्राप्नोति।। अनित्यमनुदात्तत्वम्। अन्यस्य कृतेषु डारौरस्सु प्राप्नोति, अन्यस्याकृतेषु। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति।। डारौरसोऽप्यनित्याः। अन्यथास्वरस्य कृतेऽनुदात्तत्वे प्राप्नुवन्ति। अन्यथास्वरस्याकृते। स्वरभिन्नस्य च प्राप्नुवन्तोऽनित्या भवन्ति। उभयोरनित्ययोः परत्वादनुदात्तत्वम्। अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानाद् डारौरसः। टिलोपे उदात्तनिवृत्तिस्वरेण सिद्धम्।।
(बाधकभाष्यम्)

न सिध्यति। किं कारणम्? अन्तरङ्गत्वाद् डारौरसः। तत्रान्तरङ्गत्वाड्डारौरस्सु कृतेषु अनुदात्तत्वं क्रियतां टिलोप इति।। किमत्र कर्तव्यम्? परत्वाट्टिलोपेन भवितव्यम्।।

(वार्तिकतात्पर्यान्तरभाष्यम्)

एवं तर्हि स्वरविप्रतिषेधात् सिद्धम् । न्याय्य एवायं स्वरविप्रतिषेधः। इदमिह संप्रधार्यम् -- अनुदात्तत्वं क्रियतामुदात्तनिवृत्तिस्वर इति। किमत्र कर्तव्यम्? परत्वादनुदात्तत्वम्। अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भविष्यति।।

(आक्षेपभाष्यम्)

तदेतत्क्व सिद्धं भवति यत् पिद्वचनम्। यदपिद्वचनं तत्र न सिध्यति?

(समाधानभाष्यम्)

तत्रापि सिद्धम्। कथम्? इदमद्य लसार्वधातुकानुदात्तत्वं प्रतद्ययस्वरस्यापवादः। न चापवादविषये उत्सर्गोभिनिविशते पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः प्रकल्प्य वापवादविषयं तत उत्सर्गोभिनिविशते। तन्न तावदत्र कदाचित्प्रत्ययस्वरो भवति अपवादं लसार्वधातुकानुदात्तत्वं प्रतीक्षते। तत्रानुदात्तत्वं क्रियतां लोप इति। यद्यपि परत्वाल्लोपः सोसाववियमानोदात्तत्वे अनुदात्ते उदात्तो लुप्यते।।

प्रत्ययस्वरापवादो लसार्वधातुकानुदात्तत्वम्।।

तेन तत्र न प्रसक्तः प्रत्ययस्वरः कदाचित्।।

प्रत्ययस्वरश्च तासेर्वृत्तिसंनियोगशिष्टः।

तेन चाप्यसावुदात्तो लोप्स्यते तथा न दोषः।।

लुटः प्र ।। 85 ।।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य चतुर्थे पादे द्वितीय माह्निकम्।। समाप्तश्चायं पादोऽध्यायश्च।।

# महाभाष्यम्/तृतीयोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/nmk
< महाभाष्यम् | तृतीयोऽध्यायः
-3-1-1- प्रत्ययः (617)
(380 अधिकारसूत्रम्।। 3 । 1। 1 आ. 1 सूत्रम्)
(अधिकारत्वस्थापनाधिकरणम्)
(आक्षेपभाष्यम्।)
अधिकारेणेयं प्रत्ययसंज्ञा क्रियते। सा प्रकृत्युपपदोपाधीनामपि प्राप्नोति। तस्याः प्रतिषेधो वक्तव्यः। प्रकृति गुप्तिज्कितः। उपपद स्तम्बकर्णयोः। उपाधि हरतेर्दृतिनाथयोः पशौ। एतेषां प्रतिषेधो वक्तव्यः।।
(तृतीयस्य प्रत्याक्षेपप्रश्नभाष्यम्)
किं च स्यात् यद्येतेषामपि प्रत्ययसंज्ञा स्यात्?।।
(प्रत्याक्षेपसमाभानभाष्यम्)
परत्वमाद्युदात्तत्वमङ्गसंज्ञेत्येते विधयः प्रसज्येरन्।।
(समाधानभाष्यम्)
अत उत्तरं पठति ---
(1।6।8।1 अधिकारत्वे दूषणनिराकरणवार्तिकप्रथमखण्डम्)
- प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः-
(भाष्यम्) अधिकारेणापि प्रत्ययसंज्ञायां सत्यां प्रकृत्युपपदोपाधीनामप्रतिषेधः। अनर्थकः प्रति षेधोऽप्रतिषेधः।।
प्रत्ययसंज्ञा कस्मान्न भवति?।
(वार्तिकद्वितीयखण्डम्।। 1 ।। )
- निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि-
(भाष्यम्) निमित्तानि हि निमित्तिकार्यार्थानि भवन्ति।
किं पुनर्निमित्तम्। को वा निमित्ती?।।
प्रकृत्युपपदोपाधयो निमित्तम्, प्रत्ययो निमित्ती।। अन्यत्रापि चैष न्यायो दृष्टः नावश्यमिहैव।
क्वान्यत्र?।।
लोके। तद्यथा --- बहुष्वासीनेषु कश्चित्कंचित्पृच्छति --- कतरो देवदत्तः, (कतमो यज्ञदत्त) इति। स आह --- योश्वे, यः पौठे इति। योश्वे यः पीठ इत्युक्ते निमित्तस्य निमित्तिकार्यार्थत्वादध्यवस्यति अयं देवदत्तोऽयं यज्ञदत्त इति। नेदानीमश्वस्य पीठस्य धा देवदत्त इति संज्ञा भवति।।
किं पुनर्निमित्तम्, को वा निमित्ती?।।
निर्ज्ञातोऽर्थो निमित्तम्। अनिर्ज्ञातोऽर्थो निमित्ती। इह च प्रत्ययोऽनिर्ज्ञातः, प्रकृत्युपपदोपाधयो निर्ज्ञाताः।।
क्व।
धातूपदेशे प्रातीपदिकोपदेशे च।। ते निर्ज्ञाता निमित्त्वेनाश्रीयन्ते।। (10)
(1।6।82 समाधानान्तरवार्तिकम्।। 2 ।।)
- प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् -
(भाष्यम्) अथ वा प्रधाने कार्यसंप्रत्ययो भवति।।
किं च प्रधानम्?।
प्रत्ययः। तद्यथा --- बहुषु यात्सु कश्चित्कंचित् पृच्छति को यातीति। स आह --- राजेति। राजेत्युक्ते
प्रधाने कार्यसंप्रत्ययाद्यः पृच्छति, यश्च कथयति, उभयोः संप्रत्ययो भवति।।
किं कृतं पुनः प्राधान्यम्?।।
अर्थकृतम्। यथा पुनर्लोकेऽर्थकृतं प्राधान्यम्।।
शब्दस्येदानीं किं कृतं प्राधान्यम्?। शब्दस्या पूर्वोपदेशः प्राधान्यम्। यस्यापूर्वोपदेशः स प्रधानम्।। प्रकृत्युपपदोपाधयश्च निर्दिष्टाः। क्व ?। धातूपदेशे प्रातिपदिकोपदेशे च।।
(विकारागमानां प्रत्ययसंज्ञापादनभाष्यम्)
यद्येव निमित्तस्य निमित्तिकार्यार्थत्वात् यद्वा ति। विकारागमानां तु प्राप्नोति हनस्त च त्रपुजतुनोः षुकू एतेषां ह्यपूर्वोपदेशात्प्राधान्यम्, निमित्तिनशेचैवैते।।
(1683 विकारागमानां प्रत्ययत्वापत्तिनिराकरणवार्तिकम्।। 6 ।। )
- विकारागमेषु च परविज्ञानात् -
( भाष्यम्) विकारागमेषु च परविज्ञानात् प्रत्ययसंज्ञा न भविष्यति। प्रत्ययः परो भवतीत्युच्यते। न च विकारागमाः परे (संभवन्ति)।।

(आक्षेपभाष्यम्)
किं पुनः कारणं समाने अपूर्वोपदेशे प्रत्ययः परो, न विकारागमाः परे।।
- षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात्-
(भष्यम् षष्ठीनिर्दिष्टं विकारागमयुक्तं भवति। पञ्चमीनिर्दिष्टाच्च प्रत्ययो विधीयते।।
(1685 बाधकवार्तिकम्।। 5 ।। )
- प्रत्ययविधानानुपपत्तिस्तु-
(भाष्यम्) प्रत्ययविधिस्तु नोपपद्यते।। क्व ?। यत्र विकारागमाः शिष्यन्ते हनस्त च त्रपुजतुनोः षुक् इति।।
(अनुपपत्तिकारणप्रश्नभाष्यम्)
किं पुनः कारणं न सिध्यति।
(अनुपपत्तिकारणकथनभाष्यम्)
विकारागमयुक्तत्वात्। अपञ्चमीनिर्दिष्टत्वाच्च।।
(1685 पञ्चमीकरणवार्तिकम्।। 6 ।।)
- तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम्-
(भाष्यम्) तस्मात्तत्र पञ्चमीनिर्देशः कर्तव्यः।।
(सूत्रव्यत्यासकरणप्रश्नभाष्यम्)
(स तर्हि पञ्चमीनिर्देशः कर्तव्यः।। )
(यथान्यासस्थापनभाष्यम्)
न कर्तव्यः। इह तावद् हनस्त च इति धातोरिति वर्तते। त्रपुजतुनोः षुक् इति प्रातिपदिकादिति वर्तते।।
(आपत्तिभाष्यम्)
यद्येवं हनस्त च धातोः क्यप् भवतीति धातुमात्रात् क्यप् प्राप्नोति।।
(आपत्तिवारकभाष्यम्)
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति --- न धातु मात्रात् क्यप् भवति इति, यदयम् एतिस्तुशास्वृदृजुषः क्यप् इति परिगणनं करोति।।
अथ वा हन्तिरेवात्र धातु ग्रहणेनाभिसंभन्त्स्यते हन्तेस्तो भवति धातोः क्यप् भवतीति, कस्माद्? हन्तेरिति।।
(1687 समाधानान्तरवार्तिकम्।। 7 ।।)
(भाष्यम्) अथ वा अर्थाश्रयः प्रत्ययविधिः, यः स्वमर्थं प्रत्याययति स प्रत्ययः।।
किं वक्तव्यमेतत्?।
न हि।।
कथमनुच्यमानं गंस्यते?।
प्रत्यय इति महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्?। लघ्वर्थं चहि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् अन्वर्थसंज्ञा यथा विज्ञायेन प्रत्याययतीति प्रत्ययः।।
(अन्वर्थसंज्ञाङ्गीकारदूषणभाष्यम्)
यदि प्रत्याययतीति प्रत्ययः, अविकादीनां प्रत्ययसंज्ञा न प्राप्नोति। न हि ते किंचित्प्रत्याययन्ति।।
(कर्मसाधनताङ्गीकारभाष्यम्)
एवं तर्हि --- प्रत्याय्यत इति प्रत्ययः।।
(कर्मसाधनतायां दूषणभाष्यम्)
एवमपि सन्नादीनां न प्राप्नोति।।
(उभयसाधनाङ्गीकारभाष्यम्।)
एवं तर्ह्युभयसाधनोयम् कर्तृसाधनः कर्मसाधनश्च।।
(अर्थप्रत्यायनहेतुप्रश्नभाष्यम्)
एवमपि कुत एतत् समाने अपूर्वोपदेशे त्रापुषं जातुषमित्यत्राकारस्तमर्थं प्रत्याययति, न पुनः षकार इति।।
(अर्थप्रत्यायनहेतुप्रतिपादनभाष्यम्)
अन्यत्राप्यकारेण तस्यार्थस्य प्रत्यायनान्मन्यामहे --- अकारस्तमर्थं प्रत्याययति, न पुनः षकार इति।। क्वान्यत्र?। बिल्वादिभ्योऽण्। बैल्वः।।
प्रत्ययः।। 1 ।।
-3-1-2- परश्च (319)
(681 अधिकारसूत्रम्।। 3.1.2 सूत्रम्)
(सूत्रप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते?।।
(समाधानभाष्यम्)

परो यथा स्यात्, पूर्वो मा भूदिति।।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। यमिच्छति पूर्वम्, आह तं विभाषा सुपो बहुच् पुरस्तात् इति।।
(समाधानान्तरभाष्यम्)
मध्ये तर्हि मा भूदिति।
(समाधानान्तरबाधकभाष्यम्)
मध्येपि यमिच्छति, आह तम् --- अव्ययसर्वनाम्नामकच् प्राक् टे रिति।। य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेण वचनं पर एव भविष्यतीति नार्थः परवचनेन।
(समाधानभाष्यम्)
एवमपि येषामेव प्रत्ययानां देशो नियम्यते, त एव नियतदेशाः स्युः। य इदानीमनियतदेशः स कदाचित्परः कदाचित्पूर्वः कदाचिन्मध्ये स्यात्। तद्यथा --- मातुर्वत्सः कदाचिदग्रतः कदाचित्पृष्ठतः, कदाचित्पार्श्वतो भवति। पर एव यथा स्यादित्येवमर्थं परवचनम्।।
(1688 सूत्रप्रत्याख्यानवार्तिकम्।। 1 ।।)
- परवचनमनर्थकं पञ्चमीनिर्दिष्टाद्धि परस्य (कार्यम्)-
(भाष्यम्) परग्रहणमनर्थकम्। किं कारणम्?। पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते। तद्यथा --- -द्व्यन्तरुपसर्गेभ्योऽप इर्दिति।
(प्रत्याख्यानानुपपत्तिभाष्यम्)
विषम उपन्यासः। सतस्तत्र परस्य कार्यमुच्यते।
इहेदानीं कस्य सतः परस्य कार्यं भवितुमर्हति।।
(प्रत्याख्यानोपपादकभाष्यम्)
इहापि सत एव। कथम्?। स्वाभाविकं परत्वम्।
(अनुयोगभाष्यम्)
अथ वाचनिके परत्वे सति परग्रहणेनार्थः कार्यम् --- यदसौ परतः स्यात्।।
अथ वा --- यदस्य परस्य सतः संज्ञा स्यात्।।
(सूत्रावश्यकताभाष्यम्)
यत्र तर्हि पञ्चमी नास्ति तदर्थमयं योगो वक्तव्यः।।
क्व (च) पञ्चमी नास्ति?।
यत्र विकारागमाः शिष्यन्ते।।
क्व च विकारागमाः शिष्यन्ते?। हनस्त च त्रपुजतुनोः षुक् इति।।
(1689 सूत्रप्रत्याख्यानसाधकवार्तिकम्।। 2 ।।)
- विकारागमेषु चोक्तम्-
(भाष्यम्) विकारागमेषु चोक्तम्।।
किमुक्तम्?।
प्रत्ययविधानानुपपत्तिस्तु तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम्।। इति।।
- अत्यन्तापरदृष्टानां वा परभूतलोपार्थम्-
(भाष्यम्) अत्यन्तापरदृष्टानां तर्हि परभूतलोपार्थं परग्रहणं कर्तव्यम्। य एतेऽत्यन्तापरदृष्टाः क्विबादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यात्। अपरभूतानां मा भूदिति।।
किं पुनरत्यन्तापरदृष्टानां परभूतलोपवचने प्रयोजनम्?।
कितिणितीति कार्याणि यथा स्युरिति।।
(सूत्रावश्यकतानिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति --- अत्यन्तापरदृष्टाः परभूता एव लुप्यन्ते इति, यदयं तेषु कादीननुबन्धानासजति।।
कथं कृत्वा ज्ञापकम्?।
अनुबन्धासञ्जन एतत्प्रयोजनम् --- कितिणितीति कार्याणि यथा स्युरिति। यदि चात्यन्तापरदृष्टाः परभूता लुप्यन्ते ततोनुबन्धासञ्जनमर्थवद् भवति।।
(1691 सूत्रावश्यकतावार्तिकम्।। 4 ।।)
- प्रयोगनियमार्थं वा -
(भाष्यम्) प्रयोगनियमार्थं तर्हि परग्रहणं कर्तव्यम्। परभूतानां प्रयोगो यथा स्यात्। अपरभूतानां मा भूदिति।।
(अनुयोगभाष्यम्)
अस्ति पुनः किंचिदनिष्टं दृश्यते यदर्थो नियमः स्यात्।।
(समाधानभाष्यम्)
अस्तीत्याह।।

(1692 अप्रत्ययप्रकृतिदर्शिवार्तिकम्।। 5 ।।)
- प्रकृतेरर्थाभिधानेऽप्रत्ययदर्शनात्-
(भाष्यम्) प्रकृतिरर्थाभिधाने अप्रत्ययिका दृश्यते --- -क्व स देवदत्तः क्व स यज्ञदत्तः बभ्रुः, मण्डुः, लमक इति। बाभ्रव्यो माण्डव्यो लामकायन इति प्रयोक्तव्ये बभ्रुर्मण्डुर्लमक इति प्रयुज्यते।।
(1693 अप्रकृतिकप्रत्ययदर्शिवार्तिकम्।। 6 ।।)
- द्वयसादीनां च केवलानां प्रयोगो दृश्यते --- किमस्य द्वयसम्, किमस्य मात्रम्, काद्यतिथीति।।
(द्वयसादीनां प्रातिपदिकत्वदर्शिभाष्यम्)
द्वयसादयो वृत्तिजसदृशाः अवृत्तिजाः यथा बहुस्तथा।
(1694 सूत्रावश्यकतादर्शिवार्तिकम्।। 7 ।।)
- वावचने चानुत्पत्त्यर्थम्-
(भाष्यम्) वावचने चानुत्पत्त्यर्थं परग्रहणं कर्तव्यम्। वावचने चानुत्पत्तिर्यथा स्यात्।।
(आक्षेपभाष्यम्)
अथ क्रियमाणेपि वै तपरग्रहणे कथमिव वावचनेनानुत्पत्तिर्लभ्या?।।
(समाधानभाष्यम्)
क्रियमाणे परग्रहणे वावचने वा पर इत्येतदभिसंबध्यते। अक्रियमाणे परग्रहणे वाचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः। न च संज्ञायाः। न च संज्ञाया भावाभावाविष्येते।।
(1698 उभयनियमाङ्गीकारसिद्धान्तवार्तिकम्।। 11 ।।
- सिद्धं तूभयनियमात्-
(भाष्यम्) सिद्धमेतत्।। कथम्?। उभयनियमात्। उभयनियमोयम् --- प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव च प्रकृतिरिति।।
किं वक्तव्यमेतत्?।
परग्रहणसार्मथ्याद् अन्तरेणापि परग्रहणं स्यादेवायं परः। पर एव स्यादित्येवमर्थं परग्रहणम्।। परश्च।। 2 ।।
-3-1-3- आद्युदात्तश्च (619)
(382 अधिकारसूत्रम्।। 6।1।1 आ. 3 सूत्रम्)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते?।
(समाधानभाष्यम्) आद्युदात्तो यथा स्यात्। अन्तोदात्तो मा भूदिति।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। यमिच्छत्यन्तोदात्तम्, करोति तत्र चकारमनुबन्धम्। आह च --- चितोन्तउदात्तः इति।।
(प्रयोजनभाष्यम्)
मध्योदात्तस्तर्हि मा भूदिति।।
(प्रयोजननिराकरणभाष्यम्)
मध्योदात्तमपि यमिच्छति, तत्र रेफमनुबन्धं करोति। आह च --- उपोत्तमं रिति इति।।
(प्रयोजनभाष्यम्)
अनुदात्तस्तर्हि मा भूदिति।।
(प्रयोजननिराकरणभाष्यम्)
अनुदात्तमपि यमिच्छति, तत्र पकारमनुबन्धं करोति। आह च अनुदात्तौ सुप्पितौ इति।।
(प्रयोजनभाष्यम्)
स्वरितस्तर्हि मा भूदिति।।
(प्रयोजननिराकरणभाष्यम्)
स्वरितमपि यमिच्छति, करोति तत्र तकारमनुबन्धमनुबन्धम्। आह च तित्स्वरितम् इति।।
(प्रयोजननिराकणोपसंहारभाष्यम्)
एवमपि येषामेव प्रत्ययानां स्वरो नियम्यते त एव नियतस्वराः स्युः य इदानीमनियतस्वरः स कदाचिदाद्युदात्तः कदाचिदन्तोदात्तः कदाचिन्मध्योदात्तः कदाचिदनुदात्तः कदाचित्स्वरितः स्यात्। आद्युदात्त एव यथा स्यादित्येवमर्थमिदमुच्यते।।
(स्वरप्रकरणं विनाप्यत्र प्रत्ययसंज्ञासंनियोगेन स्वरविधिप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथ किमर्थं प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वमनुदात्तत्वं चोच्यते, न यत्रैवान्यः स्वरः, तत्रैवाय मप्युच्येत --- ञ्नित्यादिर्नित्यम् --- ठप्रत्ययस्य च--अदुपदेशाल्लसार्वधातुकमनुदात्तम् --- सुप्पितौ च इति। तत्रायमप्यर्थः --- द्विराद्युदात्तग्रहणं द्विश्चानुदात्तग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते।।
(समाधानभाष्यम्)

- आद्युदात्तस्य प्रत्ययसंज्ञासन्नियोगे प्रयोजनं यस्य संज्ञाकरणं तस्याद्युदात्तार्थम्-
(भाष्यम्) आद्युदात्तस्य प्रत्ययसंज्ञासंनियोगकरण एतत् प्रयोजनम् --- यस्य संज्ञा क्रियते तस्याद्युदात्तत्वं यथा स्यात्।।
(समाधानवार्तिकद्वितीयखण्डम्।। 1 ।।)
- असन्नियोगे हि यस्मात्स विहितस्तदादेराद्युदात्तत्वं तदन्तस्य चानुदात्तत्वम्-
(भाष्यम्) अक्रियमाणे हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतिःथ्य;ति तदादेरेवाद्युदात्तत्वं प्रसज्येत, तदन्तस्य चानुदात्तत्वम्।।
(आक्षेपभाष्यम्)
अथ क्रियमाणेपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे अनुदात्तत्वे च कस्मादेव तदादेराद्युदात्तत्वं न भवति तदन्तस्य वानुदात्तत्वम्।।
(समाधानभाष्यम्)
उत्पन्न प्रत्ययः प्रत्ययाश्रयाणां कार्याणां निमित्तं भवति नोत्पद्यमानः। तद्यथा --- -कृतो घटो घटाश्रयाणां कार्याणां निमित्तं भवति, न क्रियमाणः।।
(1700 समाधानवार्तिकम्।। 2 ।। )
- न वा प्रकृतेराद्युदात्तवचनं ज्ञापकं तदादेरग्रहणस्य -
(भाष्यम्) न वैष दोषः। किं कारणम्?। यदयं ञ्नित्यादिर्नित्यम् इति प्रकृतेराद्युदात्तत्वं शास्ति। तज् ज्ञापयत्याचार्यः --- न तदादेराद्युदात्तत्वं भवतीति।।
(आपत्तिभाष्यम्)
तदन्तस्य तर्ह्यनुदात्तत्वं प्राप्नोति।।
(1701 आपत्तिवारणवार्तिकम्।। 3 ।।
- प्रकृतिस्वरविधानसार्मथ्यात् प्रत्ययस्वराभावः-
(भाष्यम्) यदयं धातोरन्तः प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ति, तज्ज्ञापयत्याचार्यः --- -न तदन्तस्यानुदात्तत्वं भवती ति।।
कथं कृत्वा ज्ञापकम्?।
यत्र ह्यनुदात्तः प्रत्ययः प्रकृतिस्वरस्तत्र प्रयोजयति।
(1702 अत्रसूत्रप्रयोजनवार्तिकम्।। 4 ।।)
- आगमानुदात्तार्थं वा -
(भाष्यम्) आगमानुदात्तार्थे तर्हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते। प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते आगमा अनुदात्ता यथा स्युरिति।।
(1703 आगमानुदात्तत्वप्रयोजननिराकरणवार्तिकम्।। 5 ।।
- न वागमानुदात्तवचनात्-
(भाष्यम्) न वा एतदपि प्रयोजनमस्ति।। किं कारणम्?। आगमानुदात्तवचनात्। आगमा अनुदात्ता भवन्तीति वक्ष्यामि।।
(अनुयोगभाष्यम्)
के पुनरागमा अनुदात्तत्वं प्रयोजयन्ति?।
(उत्तरभाष्यम्)
इट् --- लविता।
?B(इडागमानुदात्तत्वस्य प्रयोजनत्वनिराकरणभाष्यम्)
इट् तावन्न प्रयोजयति।।
(इडागमे प्रयोजनोपपादकभाष्यम्)
इदमिह संप्रधार्यम् --- इट् क्रियतामाद्युदात्तत्वमिति।। किमत्र कर्तव्यम्?। परत्वादिट्।।
नित्यमाद्युदात्तत्वम्। कृतेपीटि प्राप्नोति अकृतेपि प्राप्नोति।।
इडपि नित्यः। कृतेप्याद्युदात्तत्वे प्राप्नोति अकृतेपि।।
अनित्य इट्। अन्यथा स्वरस्य कृते आद्युदात्तत्वे प्राप्नोति। अन्यथा स्वरस्याकृते प्राप्नोति। स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति।।
आद्युदात्तत्वमपि अनित्यम्। अन्यस्य कृते इटि प्राप्नोति। अन्यस्याकृते। शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति।। उभयोरनित्ययोः परत्वादिडागमः।।
(इडागमे प्रयोजननिराकरणोपपादनभाष्यम्)
अन्तरङ्गं तर्हि आद्युदात्तत्वम्। काऽन्तरङ्गता?। उत्पत्तिसन्नियोगेनाद्युदात्तत्वमुच्यते। उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्येडागमः।।
आद्युदात्तत्वमपि नान्तरङ्गम्। यावता प्रत्यय आश्रिते प्रकृतिरप्याश्रिता भवति।।
अन्तरङ्गमेवाद्युदात्तत्वम्।। कथम्?। इदानीमेव ह्युक्तं --- न प्रत्ययस्वरवि धौ तदादिविधिर्भवतीति।।
(सीयुडागमे प्रयोजनभाष्यम्)
सीयुट् तर्हि प्रयोजयति।
(1704 सीयुडागमे प्रयोजनोपपादनवार्तिकम्।। 6 ।।)

- अवचने हि सीयुडादेराद्युदात्तत्वम्-
(भाष्यम्) अक्रियमाणे हि आगमानुदात्तत्वे क्रियमाणेपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे सीयुडादेर्लिङ आद्युदात्तत्वं प्रसज्येत। लविषीय पविषीय।।
(वार्तिककरणानुयोगभाष्यम्)
तत्तर्हि वक्तव्यम् --- आगमा अनुदात्ता भवन्तीति।।
(तद्वार्तिकस्य ज्ञापकसिद्धत्वकरणभाष्यम्)
न वक्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति --- -आगमा अनुदात्ता भवन्ति इति, यदयं यासुट् परस्मैपदेषूदात्तो ङिच्चेत्याह।।
(ज्ञापकत्वानुपपत्तिभाष्यम्)
नैतदस्ति ज्ञापकम्। वक्ष्यत्येतत् यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं च इति।
(ज्ञापकत्वमण्डनभाष्यम्)
शक्यमनेन वक्तुम् --- -यासुट् परस्मैपदेषु भवति, अपिच्च लिङ् भवतीति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्वाचार्यः --- आगमा अविद्यमानवद्भवन्ति इति।
(1705 प्रत्ययसंज्ञासंनियोगेनस्वरविधिप्रयोजन वार्तिकम्।। 7 ।।)
- आद्युदात्तस्य वा लोपार्थम्-
(भाष्यम्) आद्युदात्तस्य तर्हि लोपार्थं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते। प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते लोपे उदात्तनिवृत्तिस्वरः सिद्धो भवति। स्रौग्घ्नी। माथुरी। अत्र हि परत्वाल्लोपाः स्वरं बाधेत।।
(1706 प्रयोजननिराकरणवार्तिकम्।। 8 ।।)
- न वा बहिरङ्गलक्षणत्वात्-
(भाष्यम्) न वैतदपि प्रयोजनमस्ति। किं कारणम्?। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणो लोपः। अन्तरङ्गः स्वरः। असिद्धं बहिरङ्गमन्तरङ्गे।। अवश्यं चैषा परिभाषा आश्रयितव्या।
(17007 परिभाषाभावे दूषणवार्तिकम्।। 9 ।।)
- अवचने हि ञ्नित्कित्स्वतिप्रसङ्गः-
(व्याख्यानभाष्यम्)
अक्रियमाणायां ह्यस्यां परिभाषायां क्रियमाणेपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे ञ्नित्कित्सु अतिप्रसङ्गः स्यात्। औत्सी कंसिकी आत्रेयीति। अत्र हि परत्वाल्लोपो ञ्निन्नित्कित्स्वरान् बाधेत।।
(अन्तरङ्गपरिभाषानङ्गीकारेपि दूषणोद्धारभाष्यम्)
नैष दोषः। ञ्निन्नित्कित्स्वराः प्रत्ययस्वरस्यापवादाः। न चापवादविषये उत्सर्गोभिनिविशते। पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः। प्रकल्प्य चापवादविषयं तत उत्सर्गोभिनिविशते। न तावदत्र कदाचित्प्रत्ययस्वरो भवति, अपवादान् ञ्नित्कित्स्वरान् प्रतीक्षते।।
कंसिक्यां भूयान् परिहारः --- -अन्यस्यात्र उदात्तत्वम्, अन्यस्य लोपः। आदेरुदात्तत्वम् अन्त्यस्य लोपः।।
(परिभाषास्वीकारस्यावश्यकत्वेन प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वस्वरविधेरनावश्यकत्वभाष्यम्)
इदं तर्हि आत्रेयी परत्वाल्लोपः कित्स्वरं बाधेत। तस्मादेषा परिभाषाश्रयितव्या। एतस्यां च सत्यां शक्यं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमवक्तुम्।
(1708 संनियोगस्वरविधौ प्रयोजनान्तरवार्तिकम्।। 10 ।।)
- प्रत्ययाद्युदात्तत्वाद् धातोरन्तः-
(भाष्यम्) प्रत्ययाद्युदात्तत्वाद् धातोरन्त इत्येतद्भवति विप्रतिषेधेन। प्रत्ययाद्युदात्तत्वस्यावकाशः --- यत्रानुदात्ता प्रकृतिः --- समत्वम् सिमत्वम्। धातोरन्त इत्येतस्यावकाशः --- यत्रानुदात्तः प्रत्ययः --- पचति पठतीति। इहोभयं प्राप्नोति --- गोपायति धूपायति। धातोरन्त इत्येतद्भवति विप्रतिषेधेन।।
(1709 प्रासङ्गिकं प्रत्ययसंज्ञासंनियोगेनस्वरान्तरविधि प्रयोजनवार्तिकम्।। 11 ।।)
- पित्स्वरातित्स्वरश्चापि-
(भाष्यम्) पित्स्वरात्तित्स्वरश्चापि भवति विप्रतिषेधेन। पित्स्वरस्यावकाशः --- पचति पठति। तित्स्वरस्यावकाशः --- कार्यं हार्यम्। इहोभयं प्राप्नोति --- -कार्या हार्या। तित्स्वरो भवति विप्रतिषेधेन ।।
(1710 प्रत्ययसंज्ञासंनियोगशिष्टस्वरविधिप्रयोजन वार्तिकम्।। 12 ।।)
- चित्स्वरश्चापि पित्स्वरात्-
(भाष्यम्) पित्स्वराच्चित्स्वरश्चापि भवति विप्रतिषेधेन। चित्स्वरस्यावकाशः --- चलनः कम्पनः। पित्स्वरस्य --- स एव। इहोभयं प्राप्नोति आम्बष्ठ्या सौवीर्या। चित्स्वरो भवति विप्रतिषेधेन।।
(1711 विप्रतिषेधरूपप्रयोजननिराकरणवार्तिकम्।। 13 ।।)
- न वाद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात्-
(भाष्यम्) न वार्थो विप्रतिषेधेन ।। किं कारणम्?। आद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात्। प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे कृते सति शिष्टत्वाद्धातुस्वरो भविष्यति।।

(विप्रतिषेधस्यायुक्तत्ववर्णनभाष्यम्)
अयं चाप्ययुक्तो विप्रतिषेधः पित्स्वरस्य तित्स्वरस्य च। किं कारणम्?।
(1712 विप्रतिषेधायुक्तत्वहेतुवार्तिकम्।। 14 ।।)
- टापि स्वरितेनैकादेशः-
(भाष्यम्) टाप्यपि स्वरितेनैकादेशो भविष्यति।। इदमिह संप्रधार्यम् --- स्वरितत्वं क्रियताम्,एकादेश इति। किमत्र कर्तव्यम्?। परत्वात्स्वरितत्वम्।।
नित्य एकादेशः। कृते स्वरितत्वे प्राप्नोति अकृतेपि।।
स्वरितत्वमपि नित्यम्। कृतेप्येकादेशे प्राप्नोति अकृतेपि।।
अनित्यं स्वरितत्वम्। अन्यस्य कृते एकादेशे प्राप्नोति अन्यस्याकृते शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति।।
एकादेशोप्यनित्यः। अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोति अन्यथास्वरस्याकृते स्वरभिन्नस्य च प्राप्नोति अन्यथास्वरस्याकृते स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति।। (उभयोरनित्ययोः परत्वात् स्वरितत्वम्)।।
अन्तरङ्गस्तर्हि एकादेशः। कान्तरङ्गता?। वर्णावाश्रित्यैकादेशः, पदस्य स्वरितत्वम्।।
स्वरितत्वमप्यन्तरङ्गम्।। कथम्?। वक्ष्यत्येतत् --- पदग्रहणं परिमाणार्थम् इति। उभयोरन्तरङ्गयोः परत्वात् स्वरितत्वम्। स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति।।
(पित्स्वरचित्स्वरविप्रतिषेधायुक्तत्वभाष्यम्)
अयं चाप्ययुक्तो विप्रतिषेधः पित्स्वरस्य चित्स्वरस्य च।। किं कारणम्?।
(1713 हेतुवार्तिकम्।। 14 ।।)
- चापि चित्करणात्-
(भाष्यम्) चापि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति।। आद्युदात्तश्च।। 6 ।।
-3-1-5- गुप्तिज्किद्भ्यः सन् (622)
(686 सन्प्रत्ययविधिसूत्रम्।। 6.1.1 आ.4 )
(आक्षेपभाष्यम्)
गुप्तिज्कितमाना अनुदात्तेतः। गुपादिष्वनुबन्धकरणं किमर्थम्?।।
(1714 प्रयोजनवार्तिकम्।। 1 ।।)
।। ।। गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्-
(भाष्यम्) गुपादिष्वनुबन्धाः क्रियन्ते। आत्मनेपदं यथा स्यात्।।
(अनुबन्धवैयर्थ्यभाष्यम्)
अथ क्रियमाणेष्वप्यनुबन्धेषु आत्मनेपदं न प्राप्नोति। किं कारणम्?। सना व्यवहितत्वात्।।
(आत्मनेपदार्थमनुबन्धसार्थक्यभाष्यम्)
पूर्ववत्सनः इत्येवं भविष्यति।।
(आत्मनेपदानुपपत्तिभाष्यम्)
पूर्ववत्सनः इत्युच्यते। न चैतेभ्यः प्राक् सन आत्मनेपदम्, नापि परस्मैपदं पश्यामः।।
(आत्मनेपदोपपादनभाष्यम्)
एवं तर्ह्यनुबन्धकरणसामर्थ्याद्भविष्यति।।
अथ वा अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति। तद्यथा --- -गोः सक्थनि कर्णे वा कृतं लिङ्गं गोर्विशेषकं भवति।।
(अवयवलिङ्गस्य समुदायविशेषकत्वे दूषणभाष्यम्)
यदि अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति। तदा जुगुप्सयति मीमांसयतीत्यत्रापि प्राप्नोति।।
(दूषणपरिहारभाष्यम्)
अवयवे कृतं लिङ्गं तस्य समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति। सन्नन्तमेव च न व्यभिचरति। णिजन्तं पुर्नव्यभिचरति। तद्यथा। गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति,न गोमण्डलस्य।। गुप्तिज्किद्भ्यः सन्।। 5 ।।
-3-1-6- मान्बधदान् शान्भ्यो दीर्घश्चाभ्यासस्य (9623)
(684 सन्विधिसूत्रम्।। 6.1.1. आ. 5 सूत्रम्)
(अभ्यासरूपसाधनाधिकरणम्)
(1715 आक्षेपवार्तिकम्।। 1 ।।)
- अभ्यासदीर्घेऽवर्णस्य दीर्घप्रसङ्गः-
(भाष्यम्) अभ्यासदीर्घत्वेऽवर्णस्य दीर्घत्वं प्राप्नोति --- मीमांसते
(अभ्यासरूपसाधनभाष्यम्)
ननु च इत्वे कृते दीर्घत्वं भविष्यति।।
(अभ्यासरूपसाधनानुपपत्तिभाष्यम्)

कथं पुनरुत्पत्तिसन्नियोगेन दीर्घत्वमुच्यमानमित्वं प्रतीक्षते।।
(प्रतिबन्दीभाष्यम्)
अथ कथमभ्यासं प्रतीक्षते।।
अथ कथमिति। यथाभ्यासस्येति वचनाद्दीर्घत्वमभ्यासमपेक्षते तथा वचनान्तरविहितमित्वमपीति भावः।।
(प्रतिबन्ध्युत्तरभाष्यम्)
वचनादभ्यासं प्रतीक्षते। अभ्यासस्य दीर्घत्वविधानात्। इत्वं पुनर्न प्रतीक्षते।।
(1716 समाधानवार्तिकम्।। 2 ।।)
- न वाभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वात्-
(भाष्यम्) न वैष दोषः। किं कारणम्?।
अभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वात्। अभ्यासविकारेषु अपवादा उत्सर्गान्नबाधन्तेःथ्य;त्येवं दीर्घत्वमुच्यमानमित्त्वं न बाधिष्यते।।
(न्यासान्तरभाष्यम्)
अथ वा मान्बधदान्शान्भ्य इर् चाभ्यासस्य इति वक्ष्यामि।।
(न्यासान्तरदूषकभाष्यम्)
एवमपि हलादिः शेषापवाद इर्कारः प्राप्नोति।।
(न्यासान्तरेण समाधानभाष्यम्)
इर् चाच इति वक्ष्यामि।।
(न्यासान्तरेण समाधानभाष्यम्)
अथ वा मान्बधदान्शान्भ्यो दीर्घश्चेतोभ्यासस्य इति वक्ष्यामि।।
(न्यासान्तरदूषकभाष्यम्)
सिद्ध्यति। सूत्रं तर्हि भिद्यते
(सिद्धान्तिभाष्यम्)
यथान्यासमेवास्तु।
(आक्षेपस्मारणभाष्यम्)
ननु चोक्तम् --- अभ्यासदीर्घत्वे अवर्णस्य दीर्घत्वप्रसङ्गः इति।।
(परिहारस्मारणभाष्यम्)
परिहृतमेतत् --- न वाभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वाद् इति।।
(परिहारान्तरभाष्यम्)
अथवा नैवं विज्ञायते --- दीर्घश्च अभ्यासस्येति।।
कथं तर्हि?।
दीर्घश्च आभ्यासस्येति।
किमदमाभ्यासस्येति?।
अभ्यासस्य विकार आभ्यासः तस्येति।। मानबधदान्।। 6 ।।
-3-1-7- धातोः कर्मणः समानकर्तृकादिच्छायां वा (623)
(685 सन्प्रत्ययविधिसूत्रम्।। 6.1.1 आ. 6 सूत्रम्)
(धातुग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
धातोरिति किमर्थम्?।।
(आक्षेपवारणभाष्यम्)
प्रकर्तुमैच्छत् प्राचिकीर्षत्। सोपसर्गादुत्पत्तिर्मा भूदिति।।
(1717 धातुग्रहणानर्थक्यवार्तिकम्।। 1 ।।)
- कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम्-
(भाष्यम्) कर्मग्रहणात्सन्विधौ धातुग्रहणमनर्थकम्। कर्मणा समानकर्तृकादिच्छायां वा सन् भवतीत्येव धातोरुत्पत्तिर्भविष्यति।।
(1719 आनर्थक्यबाधकवार्तिकम्।। 2 ।।)
।। ।। सोपसर्गं वै कर्म ।।
(भाष्यम्) सोपसर्गकमिह वै कर्म। तत उत्पत्तिः प्राप्नोति।।
(1719 आनर्थक्यसाधकवार्तिकम्।। 3 ।।)
- सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वात् उपसर्गस्यानुपसर्गं कर्म-
(भाष्यम्) सोपसर्गे कर्मेति चेत् कर्मविशेषक उपसर्गः अनुपसर्गमेव हि कर्म।।
अवश्यं चैतदेवं विज्ञेयम्।

(1720 अनुपसर्गस्य कर्मत्वसाधकवार्तिकम्।। 4 ।।)
- सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वात्-
(भाष्यम्) यो हि मन्यते सोपसर्गं कर्मेति क्रियमाणेऽपि तस्य धातुग्रहणे सनोऽविधिः स्यात्। किं कारणम्?। अकर्मत्वात्।।
(आनर्थक्यबाधकभाष्यम्)
इदं तर्हि प्रयोजनम्। सुबन्तादुत्पत्तिर्मा भूत्।।
(1721 आनर्थक्यसाधकवार्तिकम्।। 5 ।।)
- सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वात्-
(भाष्यम्) सुबन्ताच्च सनोऽप्रसङ्गः। किं कारणम्? क्यजादीनामपवादत्वात्। सुबन्तात्क्यजादयो विधीयन्ते। ते अपवादत्वात् बाधका भविष्यन्ति।।
(1722 आनर्थक्यसाधकवार्तिकम्।। 6 ।।)
- अनभिधानाद्वा -
(भाष्यम्) अथवा अनभिधानात्सुबन्तादुत्परत्तिर्न भविष्यति। न हि सुबन्तादुत्पद्यमानेन सना इच्छाभिधानमस्ति।।
इयं तावदगतिका गतिः - यदुच्यते अनभिधानादिति। यदप्युच्यते सुबन्ताच्चाप्रसङ्गः क्यजदीनामपवादत्वाद् इति, भवेत्कस्माच्चिदप्रसङ्गः स्यादिति आत्मेच्छायाम्। परेच्छायां तु प्राप्नोति राज्ञः पुत्रमिच्छतीति।
एवं तर्हि इदमिह व्यपदेश्यम्। सदाचार्यो न व्यपदिशति। किं समावनकर्तृकादिच्छायां वा इत्युच्यते। न च सुबन्तस्य समानः कर्तास्ति।
एवमपि भवेत् कस्माच्चिदप्रसङ्गः स्यात्, यस्य कर्ता नास्ति। इह तु प्राप्नोति - आसितुमिच्छति शयितुमिच्छतीति।
(आनर्थक्यबाधकभाष्यम्)
इच्छायामर्थे सन् विधीयते इच्छार्थेषु च तुमुन्। तत्र तुमुनोक्तत्वात्तस्यार्थस्य सन् न भविष्यति।।
(आनर्थक्यबाधकभाष्यम्)
एवमपीह प्राप्नोति --- आसनमिच्छति शयनमिच्छतीति।।
(आनर्थक्यसाधकभाष्यम्)
इह यो विशेष उपादीयते उपाधिर्वा द्योत्ये तस्मिंस्तेन भवितव्यम्। यश्चेहार्थो गम्यते --- आसितुमिच्छति शयितुमिच्छतीति --- स्वयं तां क्रियां कर्तुमिच्छतीति। नासाविह गम्यते --- आसनमिच्छति शयनमिच्छति शयनमिच्छतीति - अन्यस्याप्यासनमिच्छतीत्येषोऽर्थो गम्यते।।
अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते --- अद्योत्ये तस्मिंस्तेन भवितव्यमिति। क्रियमाणेऽपि हि तस्य धातुग्रहण
इह प्रसज्येत --- संगतमिच्छति यज्ञदत्तो देवदत्तेनेति।।
(कर्म --- समानकर्तृकपदप्रयोजनाधिकरणम्।)
(1723 कर्म--समानकर्तृकग्रहणानर्थक्यवार्तिकम्।। 7 ।।)
- कर्मसमानकर्तृकग्रहणानर्थक्यमिच्छाभिधाने प्रत्ययविधानात्-
(भाष्यम्) कर्मसमानकर्तृकग्रहणमनर्थकम्। किं कारणम्? इच्छाभिधाने प्रत्ययविधानात्। इच्छायामभिधेयायां
सन्विधीयते।।
(1724 आनर्थक्यसाधकवार्तिकम्।। 8 ।।)
- अकर्मणो ह्यसमानकर्तृकाद्वानभिधानात्-
इच्छायामभिधेयायां सन्विधीयते। न चाकर्मणोऽसमानकर्तृकाद्वा उत्पद्यमानेन सना इच्छाया अभिधानं स्यात्। अनभिधानात् तत उत्पत्तिर्न भविष्यति।।
(1725 धातुग्रहणानर्थक्यबाधकवार्तिकम्।। 9 ।।)
- अङ्गपरिमाणार्थं तु -
(भाष्यम्) अङ्गपरिमाणार्थे तर्ह्यन्यतरत्कर्तव्यं धातुग्रहणं कर्मग्रहणं वा। अङ्गपरिमाणं ज्ञास्यामीति।।
किं पुनरत्र ज्यायः?।
धातुग्रहणमेव ज्यायः। अङ्गपरिमाणं चैव विज्ञातं भवति। अपि च धातोर्विहितः प्रत्ययः शेष आर्धधातुकसंज्ञो भवतीति सन आर्धधातुकसंज्ञापि सिद्धा भवति।।
(सिद्धान्तिकर्तृकमुपालम्भभाष्यम्)
यच्चाप्येतदुक्तम् --- कर्मग्रहणात् सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गे कर्म सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वाद् --- -इति।। स्वपक्षोऽनेन वर्णितः. युक्तमिह द्रष्टव्यं - किं न्याय्यं कर्मेति।।
(सिद्धान्तिभाष्यम्)
एतच्चात्र युक्तम् --- यत्सोपसर्गकं कर्म स्यात्।।
(पूर्वदत्तदूषणोद्धारभाष्यमेकदेशिनः)
ननु चोक्तम् --- सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वाद् --- इति।। नैष दोषः। कर्मण इति नैषा धातुसमानाधिकरणा पञ्चमी कर्मणो धातोरिति। किं तर्हि? अवयवयोगे एषा षष्ठी --- कर्मणो यो धातुरवयव इति।।
(अवयवयोगषष्ठीदूषणभाष्यम्)

यद्यवयवयोगा षष्ठी। केवलादुत्पत्तिर्न प्राप्नोति चिकीर्षति जिहीर्षतीति।।
(अवयवयोगषष्ठीसमर्थनभाष्यम्)
एषोऽपि व्यपदेशिवद्भावेन कर्मणो धातुरवयवो भवति।।
(व्यपदेशिवद्भावदूषणभाष्यम्)
कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यः --- महान्तं पुत्रमिच्छतीति कर्मणो यत्सुबन्तमवयवः इति।।
(व्यपदेशिवद्भावदूषणभाष्यम्)
न कर्तव्यः। असामर्थ्यान्न भविष्यति।।
कथमसामर्थ्यम्?।
सापेक्षमसमर्थं भवतीति।।
(1726 वावचनानर्थक्यवार्तिकम्।। 10 ।।)
- वा वचनाऽऽनर्थक्यं च तत्र नित्यत्वात्सनः-
(भाष्यम्) वा वचनं चाऽनर्थकम्। किं करणम्? तत्र नित्यत्वात्सनः। इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। स्वभावतश्चैतद्भवति वाक्यं च प्रत्ययश्च। तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः। न च संज्ञाया भावाभावाविष्येते। तस्मान्नार्थो वावचनेन।।
(1727 लघुन्यासप्रदर्शकपूर्तिवार्तिकम्।। 11 ।।)
- तुमुन्नन्ताद्वा तस्य च लुग्वचनम्-
(भाष्यम्) तुमुन्नन्ताद्वा सन् वक्तव्यः तस्य च तुमुनो लुग्वक्तव्यः। कर्तुमिच्छति चिकीर्षतीति।।
(1728 लघुन्यासप्रदर्शकपूर्तिवार्तिकम्।। 12 ।।)
- लिङ्न्तमाद्वा -
(भाष्यम्) लिङ्न्तमाद्वा सन्वक्तव्यः। तस्य च लिङो लुक् वक्तव्यः। कुर्यामितीच्छति चिकीर्षति।।
(1729 न्यूनतापूर्तिवार्तिकम्।। 13 ।।)
- आशङ्कायामचेतनेषूपसंख्यानम्-
(भाष्यम्) आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम्। अश्मा लुलुठिषते। कूलं पिपतिषति।।
किं पुनः कारणं न सिध्यति।।
एवं मन्यते चेतनावत एतद्भवतीच्छेति। कूलं चाचेतनम्।।
(अचेतनग्रहणखण्डनभाष्यम्)
अचेतनग्रहणेन नार्थः, आशङ्कायाम् इत्येव। इदमपि सिद्धं भवति --- श्वा मुमूर्षतीति।।
(1730 आशङ्कायामितिवार्तिकप्रत्याख्यानवार्तिकम्।। 14 ।। )
- न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः-
(भाष्यम्) न वा वक्तव्यम्। किं कारणम्? तुल्यकारणत्वात्। तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने ।। किं कारणम्?।
इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यसौ कटं चिकीर्षुर्भवति नासावाघोषयति कटं करिष्यामीति। किं तर्हि? सन्नद्धं रज्जुकीलपूलपाणिं दृष्ट्वा तत इच्छा गम्यते।। कूलस्यापि पिपतिषतो लोष्टाः शीर्यन्ते, भिदा उपजायते देशान्तरमुपसंक्रामति।। श्वानः खल्वपि मुमूर्षवः एकान्तशीलाः शूनाक्षाश्च भवन्ति।।
(1731 आशङ्कावार्तिकवैयर्थ्यवार्तिकम्।। 15 ।।)
- उपमानाद्वा सिद्धम्-
(भाष्यम्) उपमानाद्वासिद्धमेतत्। लुलुठिषत इव लुलुठिषते। पिपतिषति इव पिपतिषति।।
(आशङ्कावार्तिकसार्थक्यभाष्यम्)
न वै तिङन्तेनोपमानमस्ति।।
(आशङ्कावार्तिकवैयर्थ्यभाष्यम्)
एवं तर्हि इच्छेवेच्छा।।
(1732 आशङ्कावार्तिकवैयर्थ्यवार्तिकम्।। 16 ।।)
- सर्वस्य वा चेतनावत्त्वात्-
(भाष्यम्) अथ वा सर्वे चेतनावत्।। एवं ह्याह --- कंसकाः सर्पन्ति, शिरीषोयं स्वपिति, सुवर्चला आदित्यमनुपर्येति। आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति। अयस्कान्तमयः संक्रामति।। ऋषिः पठति --- -शृणोत ग्रावाणः।।
(इष्धतुनिर्णयाधिकरणम्।)
(आक्षेपभाष्यम्)
इमे इषयो बहवः पठ्यन्ते। तत्र न ज्ञायते --- कस्यायमर्थे सन् विधीयते इति?।।
(समाधानभाष्यम्)
इषेश्छत्वभाविनः।।

(आक्षेपभाष्यम्)
यद्येवं कर्तुमन्विच्छिति कर्तुमन्वेषणा अत्रापि प्राप्नोति।।
(सिद्धान्तिसमाधानभाष्यम्)
एवं तर्हि यस्य स्त्रियामिच्छेत्येतद्रूपं निपात्यते।।
कस्य चैतन्निपात्यते?।
कान्तिकर्मणः।।
(क्रियाप्राधान्याधिकरणम्)
(आक्षेपभाष्यम्)
अथेह ग्रामं गन्तुमिच्छतीति कस्य किं कर्म?
(समाधानभाष्यम्)
इषेरुभे कर्मणी।
(उभयोरिषिकर्मत्वबाधकभाष्यम्)
यद्येवं ग्रामं गन्तुमिच्छति ग्रामाय गन्तुमिच्छतीति। गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ न प्राप्नुतः।।
(ग्रामस्य गमिकर्मत्वाङ्गीकारभाष्यम्)
एवं तर्हि गमेर्ग्रामः कर्म। इषेर्गमिः कर्म।
(ग्रामस्य गमिकर्मत्वे दूषणभाष्यम्)
एवमपीष्यते ग्रामो गन्तुमिति। परसाधन उत्पद्यमानेन लेन ग्रामस्याभिधानं न प्राप्नोति।।
एवं तर्हि गमेर्ग्रामः कर्म, इषेरुभे कर्मणी।
(सन्नन्तात्सन्वारणाधिकरणम्)
(आक्षेपभाष्यम्)
अथ सन्नन्तात्सना भवितव्यम् --- चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति।।
(आक्षेपबाधकभाष्यम्)
न भवितव्यम्। किं कारणम्?। अर्थगत्यर्थः शब्दप्रयोगः अर्थं प्रत्यायिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्याऽपरस्य प्रयोगेण न भवितव्यम्। उक्तार्थानामप्रयोगः इति।।
(आक्षेपसाधकभाष्यम्)
न तर्हीदानीमिदं भवति --- -एषितुमिच्छति एषिषिषतीति।।
(आक्षेपबाधकभाष्यम्)
अस्त्यत्र विशेषः --- एकस्यात्र इषेरिषिः साधनं वर्तमानकालश्च प्रत्ययः। अपरस्य --- बाह्यं साधनं सर्वकालश्च प्रत्ययः।।
(आक्षेपसाधकभाष्यम्)
इहापि तर्ह्येकस्येषेः करोतिविशिष्ट इषिः साधनं वर्तमानकालश्च प्रत्ययः। अपरस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः। येनैव खल्वपि हेतुना एतद्वाक्यं भवति --- चिकीर्षितुमिच्छतीति, तेनैव हेतुना वृत्तिरपि प्राप्नोति। तस्मात्सन्नन्तात्सनः प्रतिषेधो वक्तव्यः। तं चापि ब्रुवता इषि सन इति वक्तव्यम्। भवति हि जुगुप्सिषते मीमांसिषते इति।।
(समाधानभूतेष्टिभाष्यम्)
शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते इति।।
धातोः कर्मणः।। 7 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये
तृतीयाध्यायस्य प्रथमे पादे प्रथमाह्निकम्।।
-3-1-8- सुप आत्मनः क्यच् (625)
(386 क्यज्विधिसूत्रम्।। 3.1.2 आ. 1 सूत्रम्)
(चकारानुबन्धप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थश्चकारः।।
(समाधानभाष्यम्)
स्वरार्थः। चितोऽन्तउदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। एकाजयं तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन। प्रत्ययस्वरेणैव सिद्धम्।।
(समाधानान्तरभाष्यम्)
विशेषणार्थस्तर्हि।

क्व विशेषणार्थेनार्थः?।
अस्य च्वौ क्यचि च इति। क्य इति ह्युच्यमाने अपि काकः श्येनायते अत्रापि प्रसज्येत।।
(समाधानान्तरबाधकभाष्यम्)
नैतदस्ति। तदनुबन्धकग्रहणे अतदनुबन्धकस्य ग्रहणं न इत्येवमेतस्य न भविष्यति।
(समाधानान्तरभाष्यम्)
सामान्यग्रहणाविघातार्थस्तर्हि।
क्व च सामान्यग्रहणाविघातार्थेनार्थः?।
नः क्य इति।।
(आत्मग्रहणप्रयोजनकथनाधिकरणम्)
(आक्षेपभाष्यम्)
अथात्मग्रहणं किमर्थम्।
(समाधानभाष्यम्)
आत्मेच्छायां यथा स्यात् परेच्छायां मा भूत् राज्ञः पुत्रमिच्छतीति।।
(समाधानबाधकभाष्यम्)
क्रियमाणेऽपि वै आत्मग्रहणे परेच्छायां प्राप्नोति। किं कारणम्। आत्मन इतीयं कर्तरि षष्ठी। इच्छेत्यकारो भावे। स यद्येवात्मन इच्छति। अथापि परस्य। आत्मन एवेच्छासौ भवति।
(समाधानसाधकभाष्यम्)
नैष दोषः। नात्मग्रहणेनेच्छाभिसंबध्यते।। किं तर्हि?। सुबन्तमभिसंबध्यते --- आत्मनो यत्सुबन्तम् इति।।
(अल्पग्रहणप्रयोजननिराकरणभाष्यम्)
यद्यात्मग्रहणं क्रियते, छन्दसि परेच्छायां न प्राप्नोति --- मा त्वा वृका अघायवो विदन्। तस्मान्नार्थ आत्मग्रहणेन।।
(आक्षेपभाष्यम्)
कस्मान्न भवति राज्ञः पुत्रमिच्छतीति।
(समाधानभाष्यम्)
असामर्थ्यात्।
कथमसामर्थ्यम्। सापेक्षमसमर्थं भवतीति।।
(आक्षेपभाष्यम्)
छन्दस्यपि तर्हि न प्राप्नोति --- मात्वा वृका अघायवो विदन्।।
(समाधानभाष्यम्)
अस्त्यत्र विशेषः। अन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते।।
कथं पुनरन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते?।
(आत्मग्रहणाप्रयोजनसाधकभाष्यम्)
ते चैव हि वृका एवमात्मका हिंस्राः। कश्चात्मनोऽघमेषितुमर्हति। अतोन्तरेणापि तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते।।
यथैव तर्हि च्छन्दस्यघशब्दात् परेच्छायां क्यज् भवति। एवं भाषायामपि प्राप्नोति अघमिच्छतीति। तस्मादात्मग्रहणं कर्तव्यम्।।
छन्दसि कथम्?
आचार्यप्रवृत्तिर्ज्ञापयति --- भवत्यघशब्दात् छन्दसि परेच्छायां क्यजिति। यदयमाह अश्वाघस्यात् इति, क्यचि प्रकृते ईत्वबाधनार्थमाकारं शास्ति।।
(सुब्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथ सुब्ग्रहणं किमर्थम्?।
(प्रयोजनभाष्यम्)
सुबन्तादुत्पत्तिर्यथा स्यात् प्रातिपदिकान्मा भूदिति।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदीकाद्वा।।
(प्रयोजनसाधकभाष्यम्)
अयमस्ति विशेषः। सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति।। प्रातिपदिकात्पुनरुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति।।
(प्रयोजनबाधकभाष्यम्)
ननु च प्रातिपदिकादप्युत्पत्तौ सत्यां पदसंज्ञा सिद्धा। कथम्। आरभ्यते नः क्ये इति। तच्चावश्यं वक्तव्यं सुबन्तादुत्पत्तौ सत्यां नियमार्थम्। तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति।।
(प्रयोजनभाष्यम्)

इदं तर्हि प्रयोजनम् --- सुबन्तादुत्पत्तिर्यथा स्याद्, धातोर्मा भूदिति।।
(प्रयोजनबाधकभाष्यम्)
एतदपि नास्ति प्रयोजनम्। धातोः सन्विधीयते, स बाधको भविष्यति।।
(प्रयोजनसाधकभाष्यम्)
अनवकाशा हि विधयो बाधका भवन्ति न सावकाशाः। सावकाशश्च सन्।। कोऽवकाशः?। परेच्छा।।
(प्रयोजनबाधकभाष्यम्)
न परेच्छायां सना भवितव्यम्।।
किं कारणम्?।
समानकर्तृकादित्युच्यते। यावच्चेहात्मग्रहणम्, तावच्च तत्र समानकर्तृकग्रहणम्।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्। सुबन्तादुत्पत्तिर्यथा स्याद्। वाक्यान्मा भूदिति --- महान्तं पुत्रमिच्छति।।
(इष्टापत्यभिप्रायेण प्रश्नभाष्यम्)
न वा भवति --- महापुत्रीयतीति।।
(इष्टापत्तिनिरासाभिप्रायेण समाधानभाष्यम्)
भवति, यदैतद्वाक्यं भवति --- -महान्, पुत्रो महापुत्रः, महापुत्रमिच्छति महापुत्रीयतीति।। यदा त्वेतद्वाक्यं भवति --- महान्तं पुत्रमिच्छतीति, तदा न भवितव्यम्।। तदा च प्राप्नोति। तदा मा भूदिति।।
(आक्षेपभाष्यम्)
अथ क्रियमाणेऽपि सुब्ग्रहणे कस्यादेवात्र न भवति। सुबन्तं ह्येतद् भवति वाक्यम्।।
(समाधानभाष्यम्)
नैतत् सुबन्तम्। कथम्?। प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतिःथ्य;ति।।
(आक्षेपभाष्यम्)
अथ यदत्र सुबन्तं तस्मादुत्पत्तिः कस्मान्न भवति?।
(1766 समाधानवार्तिकम्।। 1 ।।)
- समानाधिकरणानां सर्वत्रावृत्तिरयोगादेकेन-
(भाष्यम्) समानाधिकरणानां सर्वत्र वृत्तिर्न भवति।। क्व सर्वत्र?। समासविधौ प्रत्ययविधौ च। समासविधौ तावत् --- ऋद्धस्य राज्ञः पुरुषः, महत् कष्टं श्रित इति। प्रत्ययविधौ --- ऋद्धस्योपगोरपत्यम्, महान्तं पुत्रमिच्छतीति।। किं पुनः कारणं समानाधिकरणानां सर्वत्र वृत्तिर्न भवतीति?। अयोगादेकेन। न ह्यत्र एकेन पदेन योगो भवति। इह तावत् ऋद्धस्य राज्ञः पुरुष इति, षष्ठ्यन्तस्य सुबन्तेन सार्मथ्ये सति समासो विधीयते। यच्चात्र षष्ठ्यन्तं न तस्य सुबन्तेन सार्मथ्यम्। यस्य च सार्मथ्यं न तत् षष्ठ्यन्तं वाक्यं तत्। ऋद्धस्योपगोरपत्यमिति षष्ठीसमर्थादपत्येन योगे प्रत्ययो विधीयते यच्चात्र षष्ठ्यन्तं, न तस्यापत्येन योगः, यस्य चापत्येन योगो, न तत् षष्ठीसमर्थं वाक्यं तत्।।
(आक्षेपभाष्यम्)
समानाधिकरणानामिच्युच्यते। अथ कथं व्यधिकरणानाम् --- राज्ञः पुत्रमिच्छतीति।।
(समाधानभाष्यम्)
एवं तर्हि इदं पठितव्यम् सविशेषणानां सर्वत्रावृत्तिरयोगादेकेन --- -इति।।
(1734 वाक्यकर्मत्वे दूषणवार्तिकम्।। 2 ।।)
- द्वितीयानुपपत्तिस्तु-
(भाष्यम्) द्वितीया तु नोपपद्यते महान्तं पुत्रमिच्छतीति। किं कारणम्?। न पुत्र इषिकर्म। यदि पुत्रो नेषिकर्म, न चावश्यं द्वितीयैव, किं तर्हि सर्वा अत्र द्वितीयादयो विभक्तयो न स्युः। महता पुत्रेण कृतं, महते पुत्राय देहि, महतः पुत्रात् आनय, महतः पुत्रस्य स्वं, महति पुत्रे निधेहीति। तस्मान्नैतच्छक्यं वक्तुं न पुत्र इषिकर्मेति। पुत्र एवेषिकर्म। तत्सामानाधिकरण्यान्महतोऽपि द्वितीयादयो भविष्यन्ति।।
(आक्षेपभाष्यम्)
वृत्तिस्तर्हि कस्मान्न भवति?।
(समाधानभाष्यम्)
सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते इति वक्तव्यम्।।
(आक्षेपभाष्यम्)
यदि तर्हि सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते इति उच्यते, मुण्डयति माणवकम् अत्र वृत्तिर्न प्राप्नोति।।
(प्रतिप्रसवेन समाधानभाष्यम्)
एवं तर्हि अमुण्डादीनामिति वक्तव्यम्।।
(तृतियस्याक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम् --- सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते, अमुण्डादीनामिति।।
(सिद्धान्तिभाष्यम्)

न वक्तव्यम्।
(पूर्वपक्षिभाष्यम्)
वृत्तिस्तर्हि कस्मान्न भवति --- महान्तं पुत्रमिच्छतीति।।
(सिद्धान्तिभाष्यम्)
अगमकत्वात्। इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते महान्तं पुत्रमिच्छतीति। नासौ जातुचित्प्रत्ययान्तेन गम्यते --- महान्तं पुत्रीयतीति। एतस्माद्धेतोर्ब्रूमः अगमकत्वादिति। न ब्रूमः --- अपशब्दः स्यादिति। यत्र च गमकं भवति, तत्र वृत्तिः, तद्यथा --- मुण्डयति माणवकमिति।।
(क्यजन्तकारकनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
अथास्य क्यजन्तस्य कानि साधनानि भवन्ति।।
(समाधानभाष्यम्)
भावः कर्ता च।।
(प्रत्याक्षेपभाष्यम्)
अथ कर्म।
(प्रत्याक्षेपसमाधानभाष्यम्)
नास्ति कर्म।।
(आक्षेपभाष्यम्)
ननु चायमिषिः सकर्मकः, यस्यायमर्थे क्यज्विधीयते।।
(आक्षेपपरिहारभाष्यम्)
अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः संपन्नः, न चेदानीमन्यत्कर्मास्ति येन सकर्मकः स्यात्।।
(आक्षेपभाष्यम्।)
कथं तर्ह्ययं, सकर्मको भवति --- -अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति।।
(आक्षेपपरिहारभाष्यम्)
अस्त्यत्र विशेषः --- द्वे ह्यत्र कर्मणी --- उपमानकर्मोपमेयकर्म च, उपमानकर्मान्तर्भूतम्, उपमेयेन कर्मणा सकर्मको भवति। तद्यथा --- अपि काकः श्येनायते इति। अत्र द्वौ कर्तारौ। उपमानकर्ता उपमेयकर्ता च। उपमानकर्तान्तर्भूतः, उपमेयकर्त्रा सकर्तृको भवति।।
(आक्षेपभाष्यम्)
अयं तर्हि कथं सकर्मको भवति --- -मुण्डयति माणवकमिति?।।
(आक्षेपपरिहारभाष्यम्)
अत्रापि द्वे कर्मणी सामान्यं, कर्म, विशेषकर्म च। सामान्यं कर्मान्तर्भूतम्, विशेषकर्मणा सकर्मको भवति।।
(आक्षेपभाष्यम्)
ननु च वृत्त्यैवात्र न भवितव्यम्। किं कारणम्?। असामर्थ्यात्। कथमसामर्थ्यम्?। सापेक्षमसमर्थं भवतीति।।
(समाधानभाष्यम्)
नैष दोषः। नात्रोभौ करोतियुक्तौ मुण्डो माणवकश्च। नहि माणवकत्वं क्रियते।। यदा चोभौ करोतियुक्तौ भवतः, न भवति तदा वृत्तिः। तद्यथा। बलीवर्दं करोति मुण्डं चैनं करोतीति।।
(आक्षेपभाष्यम्)
कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यः --- माणवकं मुण्डमिच्छतीति। नोभविषियुक्ताविति।।
(आक्षेपपरिहारभाष्यम्)
न कर्तव्यः। उभावत्रेषियुक्तौ मुण्डो माणवकश्च। कथम्?। न ह्यसौ मौण्ड्यमात्रेण संतोषं करोति माणवकस्थमसौ मौण्ड्यमिच्छति।
(आक्षेपभाष्यम्)
इहापि तर्हि न प्राप्नोति मुण्डयति माणवकमिति। अत्रापि ह्युभौ करोतियुक्तौ मुण्डो माणवकश्च। न ह्यसौ
मौण्ड्यमात्रेण संतोषं करोति। किं तर्हि?। माणवकस्थमसौ मौण्ड्यं निर्वर्तयति।।
(समाधानभाष्यम्)
एवं तर्हि मुण्डादयो गुणवचनाः। गुणवचनाश्च सापेक्षाः। तत्र वचनात्सापेक्षाणां वृत्तिर्भविष्यति।।
(समाधानभाष्यम्)
अथ वा धातव एव मुण्डादयः।
न चैव ह्यर्था आदिभ्यन्ते क्रियावचनता च गम्यते।।
(समाधानभाष्यम्)
अथ वा नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च। यदा वाक्यम्, न तदा प्रत्ययः। तदा प्रत्ययः, सामान्येन तदा वृत्तिर्भवति। तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। मुण्डयति कम्, माणवकमिति।।

मुण्डविशिष्टेन वा करोतिना तमासुमिच्छति।।
(समाधानभाष्यम्)
अथ वोक्तमेतत् --- -नात्र व्यापारोऽनुगन्तव्यः गमकत्वादिह वृत्तिर्भविष्यति मुण्डयति माणवकमिति।।
सदपीच्छाक्यचः कर्म तदाचारक्यचा हृतम्।
वाक्यवाच्यमतोऽव्यक्तेर्यथाभ्यासः क्रमादिष्विति।।
(आक्षेपभाष्यम्)
अथेह क्यचा भवितव्यम् --- इष्टः पुत्रः इष्यते पुत्रः?।।
(समाधाने मतान्तरभाष्यम्)
केचित्तावदाहुः --- न भवितव्यमिति। किं कारणम्?। स्वशब्देनोक्तत्वात्।।
(मतान्तरेण समाधानभाष्यम्)
अपर आहुः --- -भवितव्यमिति।। किं कारणम्?। धात्वर्थेयं क्यज्विधीयते। स च धात्वर्थः केनचिदेव शब्देन निर्देष्टव्य इति।
(सिद्धान्तिसमाधानभाष्यम्)
इहभवन्तस्तावदाहुः --- न भवितव्यमिति। किं कारणम्?। समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते --- --इष्टः पुत्रः इष्यते पुत्र इति। नासौ जातुचित्प्रत्ययान्तेन गम्यते।।
(1735 आपत्तिनिवारणवार्तिकम्।। 3 ।।)
- क्यचिमान्ताव्ययप्रतिषेधः-
(भाष्यम्) क्यचि मान्ताव्ययानां प्रतिषेधो वक्तव्यः इह मा भूत् --- इदमिच्छति। किमिच्छति। उच्चैरिच्छति। नीचैरिच्छतीति।।
(परिगणनेनापत्तिवारणवार्तिकम्)
- गोसमानाक्षरनान्तात्-
इत्येके वक्तव्यमित्याहुः। (गो) गामिच्छति गव्यति। समानाक्षर --- घटीयति दधीयति मधूयति कर्त्रीयति। नान्तात् --- --राजीयति तक्षीयति।।
सुप आत्मनः।। 8 ।।
-3-1-9- काम्यच्च (626)
(687 काम्यच् प्रत्ययविधिसूत्रम्।। 3.1.2 आ. 2 सूत्रम्)
(काम्यचश्चित्करणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थश्चकारः?।
(परिहारभाष्यम्)
स्वरार्थः। चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।।
(आक्षेपसाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। धातुस्वरेणाप्येतत्सिद्धम्।।
(परिहारान्तरशङ्काभाष्यम्)
ककारस्य तर्हीत्संज्ञापरित्राणार्थ आदितश्चकारः कर्तव्यः।
अत उत्तरं पठति।
(1736 चकारप्रत्याख्यानवार्तिकम्।। 1 ।।)
- काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावात्-
(भाष्यम्) काम्यचश्चित्करणमनर्थकं ककारस्येत्संज्ञा कस्मान्न भवति?। इदर्थाभावात्। इत्कार्याभावादत्रेत्संज्ञा न भविष्यति।।
(हेत्वसिद्धिप्रदर्शकभाष्यम्)
ननु च लोप एवेत्कार्यम्।।
(हेतूपपत्तिभाष्यम्)
अकार्ये लोपः। इह हि शब्दस्य कार्यार्थो वा स्यादुपदेशः श्रवणार्थो वा। कार्ये चेह नास्ति। असति कार्ये यदि श्रवणमपि न स्यात्। उपदेशोऽनर्थकः स्यात्।
(कित्करणप्रयोजनभाष्यम्)
इदमस्ति कार्यम् --- -अग्निचित्काम्यति। कितीति गुणप्रतिषेधो यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते। धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते। न चायं धातोर्विधीयते।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्। उपयट्काम्यति। कितीति संप्रसारणं यथा स्यात्।
(प्रयोजननिराकरणभाष्यम्।)

एतदपि नास्ति प्रयोजनम्। यजादिभिरत्र कितं विशेषयिष्यामः। यजादीनां यः किदिति।। कश्च यजादीनां कित्?। यजादिभ्यो यो विहितः।।
(सिद्धान्तिसमाधानभाष्यम्)
अथापि कथं चिदित्कार्यं स्यात्। एवमपि न दोषः। क्रियते न्यास एव द्विचकारो निर्देशः सुप आत्मनः क्यच् काम्यच्चेति।। अथ वा छान्दसमेतत्। दृष्टानुविधिः छन्दसि भवति। न चात्र संप्रसारणं दृश्यते।। काम्यच्च।। 9 ।।
-3-1-10- उपमानादाचारे (627)
(688 क्यच्प्रत्ययविधिसूत्रम् ।। 6।1।2 आ. 6 सूत्रम्)
(1737 न्यूनतापूरकवार्तिकम्।। 1 ।। )
- अधिकरणाच्च-
(भाष्यम्) अधिकरणाच्चेति वक्तव्यम्। इहापि यथा स्यात् --- -कुटीयति प्रासादे। प्रासादीयति कुट्याम्।। उपमानादाचारे।। 10 ।।
-3-1-11- कर्तुः क्यङ् सलोपश्च (628)
(689 क्यङ्प्रत्ययविधिसूत्रम्।। 6।1।2 आ. 11 सूत्रम्)
(सलोपस्यान्वाचयशिष्टत्वाधिकरणम्।)
(आक्षेपभाष्यम्)
सलोपसन्नियोगेनायं क्यङ् विधीयते तेन यत्रैव सलोपस्तत्रैव क्यङ् स्यात् --- पयायते। इह न स्यात् --- -अपि काकः श्येनायते।।
(आक्षेपपरिहारभाष्यम्)
नैतदस्ति। प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टः सलोपः --- यत्र च सकारं पश्यसीति। तद्यथा --- कश्चिदुक्तो ग्रामे भैक्षं चर देवदत्तं चानय इति। स ग्रामे भैक्षं चरति, यदि च देवदत्तं पश्यति तमप्यानयति।।
(1738 न्यूनतावार्तिकम्।। 1 ।।)
- स लोपो वा -
(भाष्यम्) सलोपो वेति वक्तव्यम्। पयायते पयस्यते।।
(1739 न्यूनतावार्तिकम्।। 2 ।।)
- ओजसोप्सरसोर्नित्यम्-
(भाष्यम्) ओजसोप्सरसो नित्यं सलोपो वक्तव्यः। ओजायमानं योऽर्हि जघान। अप्सरायते।।
(मतान्तरभाष्यम्)
अपर आह --- --सलोपोऽप्सरस एव। ओजस्यते इत्येव भवितव्यम्।।
(आक्षेपभाष्यम्)
कथम् --- -ओजायमानं योऽहि जघान इति?।
(समाधानभाष्यम्)
छान्दसत्वात्सिद्धम्।।
(1740 न्यूनतावार्तिकम् ।। 3 ।।)
- आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा-
(भाष्यम्) आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः। अवगल्भते। अवगल्भायते। विक्लीबते। विक्लीबायते। विहोडते। विहोडायते। किं प्रयोजनम्?। क्रियावचनता यथा गम्येत।।
(क्विब्विधिवैयर्थ्यभाष्यम्)
नैतदस्ति प्रयोजनम्। धातव एवावगल्भादयः।।
(शङ्काभाष्यम्)
न चैव ह्यर्था आदिश्यन्ते।।
(समाधानभाष्यम्)
क्रियावचनता च गम्यते।
(क्विब्विधिप्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्। अवगल्भा विक्लीबा विहोडा। अप्रत्ययात् इत्यकारप्रत्ययो यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
मा भूदेवम्। गुरोश्च हलः इत्येवं भविष्यति।।
(प्रयोजनान्तरभाष्यम्)
इदं तर्हि प्रयोजनम्। अवगल्भांचक्रे विक्लीबांचक्रे। विहोडांचक्रे। कास्प्रत्ययादाममन्त्रे लिटि इत्याम् प्रत्ययो यथा स्यात्।।
अपर आह --- -
(1741 क्विब्विधिमतान्तरवार्तिकम्।। 4 ।।)
- सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः। अश्वति गर्दभतीत्येवमर्थम्-
(अनुयोगभाष्यम्)

न तर्हि इदानीं गल्भाद्यनुक्रमणं कर्तव्यम्।
(समाधानभाष्यम्)
कर्तव्यं च। किं प्रयोजनम्?। आत्मनेपदार्थाननुबन्धानासङ्क्ष्यामीति। गल्भ क्लीब होड।। कर्तुः क्यङ्।। 11 ।।
-3-1-12- भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः (629)
(690 क्यङ्प्रत्ययविधिसूत्रम्।। 6।1।2 आ 5 सूत्रम्।)
(हल्लोपस्यान्वाचयशिष्टत्वाधिकरणम्)
(आक्षेपभाष्यम्)
हलो लोपसन्नियोगेनायं क्यङ् विधीयते। तेन यत्रैव हलो लोपः, तत्रैव प्राप्नोति।।
(आक्षेपपरिहारभाष्यम्)
नैष दोषः। प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टो हलो लोपः यत्र च हलं पश्यसीति।।
(1742 न्यूनतावार्तिकम्।। 1 ।।)
- भृशादिष्वभूततद्भावग्रहणम्-
(भाष्यम्) भृशादिष्वभूततद्भावग्रहणं कर्तव्यम्। इह मा भूत् --- क्व दिवा भृशा भवन्तीति।।
(1743 अच्विग्रहणवैयर्थ्यवार्तिकम्।। 2 ।।)
- च्विप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात्-
(भाष्यम्) च्विप्रतिषेधश्चानर्थकः। किं कारणम्। भवत्यर्थे क्यङ्वचनात्। भवत्यर्थे क्यङ्विधीयते।।
(1744 वैयर्थ्यसाधकवार्तिकम्।। 3 ।।)
- भवति योगे च्विविधानम्-
(भाष्यम्) भवतिना योगे च्विर्विधीयते। तत्र च्विनोक्तत्वात्तस्यार्थस्य क्यङ् न भविष्यति।।
(डाजन्तात्क्यषोऽनुपपत्तिभाष्यम्)
डाजन्तादपि तर्हि न प्राप्नोति --- पटपटायते। डाजपि हि भवतिना योगे विधीयते। भविष्यत्यर्थे क्यष् विधीयते।।
(1745 डाजन्तात्क्यषुपपत्तिवार्तिकम्।। 4 ।।)
- डाचि वचनप्रामाण्यात्-
(भाष्यम्) डाचि वचनप्रामाण्याद्भविष्यति।। किं वचनप्रामाण्यम्?। लोहितादिडाज्भ्यः क्यष् इति।
(आक्षेपभाष्यम्)
इह किंचिदक्रियमाणां चोद्यते। किंचिच्च क्रियमाणं प्रत्याख्यायते। सूत्रभेदः कृतो भवति।
(सिद्धान्तिभाष्यम्)
यथान्यासमेवास्तु।।
(आक्षेपस्मारणभाष्यम्)
ननु चोक्तम् --- इह कस्मान्न भवति क्व दिवा भृशा भवन्तीति।
(परिहारभाष्यम्)
नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्युक्तमिवयुक्तं वा यत् किंचिदिह दृश्यते ततः अन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। तथा ह्यर्थो गम्यते। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति। एवमिहाप्यच्वेरिति प्रतिषेधादन्यस्मिन्नच्व्यन्ते च्विसदृशे कार्यं विज्ञायते। किं चान्यदतोऽच्व्यन्तं च्विसदृशम्। अभूततद्भावः।।
(विप्रतिपत्तिभाष्यम्)
इह काश्चित्प्रकृतयः सोपसर्गाः पठ्यन्ते --- अभिमनस् सुमनस् उन्मनस् दुर्मनस्। तत्र विचार्यते --- भृशादिषूपसर्गः प्रत्ययार्थविशेषणं वा स्यात् अभिभवतौ सुभवतौ उद्भवतौ दुर्भवताविति। प्रकृत्यर्थविशेषणं वा अभिमनस्शब्दात् सुमनस्शब्दात् उन्मनस्शब्दात् दुर्मनस्शब्दाद्वेति।
(आक्षेपभाष्यम्)
युक्तं पुनरिदं विचारयितुम्।।
(आक्षेपोपपादकभाष्यम्)
नन्वनेनासंदिग्धेन प्रकृत्यर्थविशेषणेन भवितव्यम्। यावता प्राक् प्रकृतेः पठ्यन्ते, यदि प्रत्ययार्थविशेषणं स्युः
प्राग्भवतेः पठ्येरन्।।
(विचारौचित्यसाधकभाष्यम्)
नेमे शक्याः प्राग्भवतेः पठितुम्। एवं हि विशिष्टे प्रत्ययार्थे भृशादिमात्रादुत्पत्तिः प्रसज्येत। तस्मान्नैवं शक्यं वक्तुम्। न चेदेवम् जायते विचारणा।।

(विशेषानुयोगभाष्यम्)
कश्चात्र विशेषः?।
(1746 प्रत्ययार्थविशेषणपक्षदूषणवार्तिकम्।। 5 ।।)
- भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषः-

(भाष्यम्) भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषो भवति। अभिमनायते --- तिङ्ङतिङ इति निघातः प्रसज्येत।।
(प्रकृत्यर्थविशेषणपक्षाश्रयणभाष्यम्)
अस्तु तर्हि प्रकृत्यर्थविशेषणम्।
(1747 दूषणवार्तिकम्।। 6 ।।)
- सोपसर्गादिति चेदटि दोषः-
(भाष्यम्) सोपसर्गादिति चेदटि दोषो भवति। स्वमनायतेति।।
(वार्तिकान्तरावतरणभाष्यम्)
अत्यल्पमिदमुच्यते(अटि इति)।
(वार्तिकम्)
- अट्ल्यप्द्विर्वचनेषु-
(भाष्यम्) अट्ल्यप्द्विर्वचनेष्विति वक्तव्यम्। अटि उदाहृतम्। ल्यपि --- सुमनाय्य। द्विर्वचने --- अभिमिमनायिषते।
(दूषणपरिहारभाष्यम्)
नैष दोषः। अवश्यं संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या -असंग्रामयत शूर इत्येवमर्थम्। तन्नियमार्थं भविष्यति संग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गादिति।
(आक्षेपभाष्यम्)
यदि नियमः क्रियेत। स्वरो न सिध्यति।।
(समाधानभाष्यम्)
एवं तर्हि भृशादिषु उपसर्गस्य पराङ्गवद्भावं वक्ष्यामि।
(आक्षेपभाष्यम्)
यदि पराङ्गवद्भाव उच्यते। अट्ल्यब्द्विर्वचनानि न सिध्यन्ति।।
(समाधानभाष्यम्)
स्वरविधाविति वक्ष्यामि।।
(प्रत्ययार्थविशेषणपक्षाङ्गीकारभाष्यम्)
एवं च कृत्वास्तु प्रत्ययार्थविशेषणमिति।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोष इति।।
(परिहारस्मारणभाष्यम्)
स्वरे पराङ्गवद्भावेन परिहृतम्।।
(प्रत्ययार्थविशेषणपक्षदूषणभाष्यम्)
अयं तर्हि प्रत्ययार्थविशेषणे सति दोषः। क्यङो क्तत्वात्तस्यार्थस्य उपसर्गस्य प्रयोगो न प्राप्नोति। किं कारणम्?। उक्तार्थानामप्रयोग इति। तद्यथा --- अपि काकः श्येनायते इत्यत्र क्यङोक्तत्वादाचारार्थस्य आङ्प्रयोगो न
भवति।।
(प्रत्ययार्थविशेषणपक्षे दत्तदूषणपरिहारभाष्यम्)
अस्त्यत्र विशेषः। एकेनात्र विशिष्टे प्रत्ययार्थे प्रत्यय उत्पद्यते। इह पुनरनेकेन। तत्र मनायत इत्युक्ते संदेहः स्यात् --- अभिभवतौ सुभवतौ दुर्भवतौ उद्भवताविति। तत्रासंदेहार्थमुपसर्गः प्रयुज्यते।।
(प्रश्नभाष्यम्)
यत्र तर्ह्येकेन उत्पुच्छयते।।
(समाधानभाष्यम्)
अत्राप्यनेकेन --- पुच्छादुदसने पुच्छाद्व्यसने पुच्छात्पर्यसने चेति।। भृशादिभ्यो भुव्यच्वेः।। 12 ।।
-3-1-13- लोहितादिडाज्भ्यः क्यष् (630)
(691 क्यष्प्रत्ययविधिसूत्रम्।। 6.1.2 आ. 5. सूत्रम्)
(ककारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थः ककारः?।
(प्रयोजनभाष्यम्)
गुणवृद्धिप्रतिषेधार्थः। क्ङिति च इति गुणवृद्धिप्रतिषेधो यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते। धातोश्च विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञां लभते। न चायं धातोर्विधीयते। लोहितादीनि प्रातिपदिकानि।।

(प्रयोजनभाष्यम्)
सामान्यग्रहणार्थस्तर्हि। क्व सामान्यग्रहणार्थेनार्थः?। नः क्ये इति।।
(प्रयोजननिरासभाष्यम्)
नायं नान्ताद्विधीयते।।
(प्रयोजनभाष्यम्)
इह तर्हि यस्य हलः क्यस्य विभाषा इति।।
(प्रयोजननिरासभाष्यम्)
नायं हलन्ताद्विधीयते ।।
(प्रयोजनभाष्यम्)
इह तर्हि आपत्यस्य च तद्धितेऽनाति, क्यच्व्योश्च इति ।।
(प्रयोजननिरासभाष्यम्)
नायमापत्याद्विधीयते।।
(प्रयोजनभाष्यम्)
इह तर्हि क्याच्छन्दसि इति।।
(प्रयोजननिरासभाष्यम्)
याच्छन्दसीत्येव तद्वक्तव्यम्। चुरण्युस्तुरण्युर्भुरण्युरित्येवमर्थम्।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्। यत्तद् -अकृद्यकार इति दीर्घत्वम्, तत्र क्ङिद्ग्रहणमनुवर्तते। तदिहापि यथा स्यात् --- लोहितायतीति।
किं पुनः कारणं तत्र क्ङिद्ग्रहणमनुवर्तते?।
इह मा भूत् --- उरुया धृष्णुयेति।
(आक्षेपभाष्यम्)
यदि तत्र क्ङिद्ग्रहणमनुवर्तते। पित्र्यमिति रीङभावो न प्राप्नोति।।
(समाधानभाष्यम्)
रीङ्भावं क्ङिद्ग्रहणं निवर्तिष्यते।।
(आक्षेपभाष्यम्)
यदि निवर्तते। कथमसूया वसूया च यजामह इति?।।
(समाधानभाष्यम्)
असूयतेरसूया वसूयतेर्वसूया।
(समाधानान्तरभाष्यम्)
अथ वा छान्दसमेतत्। दृष्टानुविधिश्छन्दसि भवति।।
(सिद्धग्रहणानुवृत्तिवैर्यर्थ्यम्)
यदि च्छान्दसत्वं हेतुः। नार्थः क्ङिद्ग्रहणेनानुवर्तमानेन।।
कस्मान्न भवति उरुया धृष्णुयेति?।
छान्दसत्वात्।।
अथ वास्त्वत्र दीर्घत्वं, छान्दसं ह्रस्वत्वं भविष्यति। तद्यथा उपगायन्तु मां पत्नयो गर्भिण्यो युवतय इति।।
(षकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथ किमर्थः षकारः।।
(समाधानभाष्यम्)
विशेषणार्थः। क्व विशेषणार्थेनार्थः?। वा क्यषः इति वा याद् इति ह्युच्यमाने पाश्या अत्रापि प्रसज्येत।।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। परस्मैपदमित्युच्यते। न चात्र परस्मैपदं नाप्यात्मनेपदं पश्यमः।।
(समाधानान्तरभाष्यम्)
सामान्यग्रहणाविघातार्थस्तर्हि।।
क्व सामान्यग्रहणाविघातार्थेनार्थः।?।
क्यच् छन्दसि इति।।
(ककारप्रत्याख्यानभाष्यम्)
याच् छन्दसि इत्येवं च तद्वक्तव्यम्। चुरण्युः तुरण्युर्भुरण्युरित्येवमर्थम्।
(आदिशब्दप्रत्याख्यानाधिकरणम्)

(1748 आदिशब्दप्रत्याख्यानवार्तिकम्।। 1 ।।)
- लोहितडाज्भ्यः क्यष्वचनम्-
(भाष्यम्) लोहितडाज्भ्यः क्यष् वक्तव्यः। लोहितायति लोहितायते। (डाच्) पटपटायति पटपटायते। (दमदमायति। दमदमायते मटमटायति मटमटायते)।
(आक्षेपभाष्यम्)
अथान्यानि लोहितादीनि।।
(1749 समाधानवार्तिकम्।। 2 ।।)
- भृशादिष्वितराणि-
(भाष्यम्) भृशादिष्वितराणि पठितव्यानि। किं प्रयोजनम्?। ङित इति नित्यमात्मनेपदं यथा स्यात्।। लोहितादि।। 13 ।।
-3-1-14- कष्टाय क्रमणे (639)
(692 क्यङ्प्रत्ययविधिसूत्रम्।। 6.1.2 आ. 6 सूत्रम्)
(निपात्यनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
कष्टायेति किं निपात्यते।।
(समाधानभाष्यम्)
कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽनार्जवे क्यङ् निपात्यते। कष्टाय कर्मणे क्रामति कष्टायते।।
(न्यूनताप्रदर्शकभाष्यम्)
अत्यल्पमिदमुच्यते --- कष्टाय क्रमणे इति।।
(1750 विवक्षितवार्तिकम्।। 1 ।।)
सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्।
(भाष्यम्) सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्। सत्र --- सत्रायते --- सत्र। कक्ष --- कक्षायते कक्ष। कष्ट --- कष्टायते कष्ट। कृच्छ्र --- कृच्छ्रायते --- कृच्छ्र। गहन --- गहनायते --- गहन।।
(मतान्तरभाष्यम्)
अपर आह --- -
(वार्तिकरूपान्तरम्)
सत्रादिभ्यश्चतुर्थ्यन्तेभ्यः क्रमणेऽनार्जवे क्यङ् वक्तव्यः ।
तान्येवोदाहरणानि।
(आक्षेपभाष्यम्)
सत्रादिभ्य इति किमर्थम्?।
(समाधानभाष्यम्)
कुटिलाय अनुवाकाय क्रामति।।
(आक्षेपभाष्यम्म्)
चतुर्थ्यन्तेभ्य इति किमर्थम्?।
अजः कष्टं क्रमाति।
(अनुयोगभाष्यम्)
तत्तर्हि वक्तव्यम्।
(सिद्धान्तिभाष्यम्)
न वक्तव्यम्। नेदं प्रत्ययान्तनिपातनम्। किं तर्हि?। तादर्थ्ये एषा चतुर्थी--कष्टाय यत् प्रातिपदिकम् - कष्टार्थे यत्प्रातिपदिकमिति।। कष्टाय।। 14 ।।
-3-1-15- कर्मणो रोमन्थतपोभ्यां वर्तिचरोः (632)
(393 क्यङ्प्रत्ययविधिसूत्रम्।। 3।1।3 आ. 7. सूत्रम्)
(रोमन्थपदार्थनिर्णयाधिकरणम्।)
(आक्षेपभाष्यम्)
रोमन्थ इत्युच्यते। कोऽयं रोमन्थो नाम?।
(समाधानभाष्यम्)
उद्गीर्णस्य वावगीर्णस्य वा मन्थो रोमन्थः। यद्येवं।
(1751 वार्तिकम्।। 1 ।।)
- हनुचलने-
(भाष्यम्) हनुचलन इति वक्तव्यम्। इह मा भूत् --- कीटो रोमन्थं वर्तयतीति।।

(अनुयोगभाष्यम्)
तत्तर्हि वक्तव्यम्।
(1752 समाधानवार्तिकम्।। 2 ।।)
- न वानभिधानात्-
(भाष्यम्) न वा वक्तव्यम्।। कस्मान्न भवति कीटो रोमन्थं वर्तयतीति?। अनभिधानात्।।
(1753 न्यूनतावार्तिकम्।। 3 ।।)
- तपसः परस्मैपदं च-
(भाष्यम्) तपसः परस्मैपदं चेति वक्तव्यम्। तपश्चरति तपस्यति।।
(आक्षेपभाष्यम्)
कथं तपस्यते लोकजिगीषुरग्नेः।।
(समाधानभाष्यम्)
छान्दसत्वाद् भविष्यति।। कर्मणो।। 15 ।।
-3-1-16- बाष्पोष्मभ्यामुद्वमने (633)
(314 क्यङ्प्रत्ययविधिसूत्रम्।। 6।1।2 आ. 8 सूत्रम्)
(1754 न्यूनतापूरकवार्तिकम्।। 1 ।।)
- फेनाच्च-
(भाष्यम्) फेनाच्चेति वक्तव्यम्। फेनायते। बाष्पो।। 16 ।।
-3-1-17- शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे (634)
(695 क्यङ्प्रत्ययविधिसूत्रम्।। 6।1।2 आ. 9 सूत्रम्)
(1755 न्यूनतापूरकवार्तिकम्।। 2 ।।)
- अटाट्टाशीकाकोटापोटासोटाप्रुष्टप्लुष्टाग्रहणम्-
(भाष्यम्) अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्। अटा --- अटायते। अट्टा --- अट्टायते। शीका --- -शीकायते। कोटा --- कोटायते। पोटा --- -पोटायते। सोटा --- सोटायते। प्रुष्टा--प्रुष्टायते। प्लुष्टा --- प्लुष्टायते।।
(1756 न्यूनतापूरकवार्तिकम्।। 2 ।।)
- सुदिनदुर्दिनाभ्यां च-
(भाष्यम्) सुदिनदुर्दिनाभ्यां चेति वक्तव्यम्। सुदिनायते। दुर्दिनायते।।
(1757 वार्तिकम्।। 3 ।।)
- नीहाराच्च-
(भाष्यम्) नीहाराच्चेति वक्तव्यम्। नीहारायते।। शब्दवैर।। 17 ।।
-3-1-18- सुखादिभ्यः कर्तृवेदनायाम् (635)
(393 क्यङ्प्रत्ययविधिसूत्रम्।। 6।1।2 आ. 9 सूत्रम्।)
(कर्तृवेदनापदार्थनिर्णयाधिकरणम्।)
(आक्षेपभाष्यम्)
कर्तृवेदनायामिति किमर्थम्?।
(समाधानभाष्यम्)
इह मा भूत्। सुखं वेदयते प्रसाधको देवदत्तस्य।।
(समाधानबाधकभाष्यम्)
कर्तृवेदनायामित्युच्यमानेऽपि अत्र प्राप्नोति। किं कारणम्?। कर्तुरितीयं कर्तरि षष्ठी। वेदनायामिति चानो भावे। स यथेवात्मनो वेदयते। अथापि परस्य। कर्तृवेदनैवासौ भवति।।
(समाधानसाधकभाष्यम्)
न कर्तृग्रहणेन वेदनाभिसंबध्यते। किं तर्हि?। सुखादीन्यभिसंबध्यन्ते कर्तुर्यानि सुखादीनीति।। सुखादिभ्यः।। 18 ।।
-3-1-19- नमोवरिवश्चित्रङः क्यच् (636)
(397 क्यचप्रत्ययविधिसूत्रम्।। 6.1.2 आ. 10 सूत्रम्)
(वृत्तिघटकनमः शब्दयोगे द्वितीयोपपत्त्यधिकरणम्।)
(1758 द्वितीयानुपपत्तिवार्तिकम्।। 1 ।।)
- नमसः क्यचि द्वितीयानुपपत्तिः-
(भाष्यम्) नमसः क्यचि द्वितीया नोपपद्यते।
नमस्यति देवानिति।। किं कारणम्?। नमः शब्देन योगे चतुर्थी विधीयते सा प्राप्नोति।।
(1759 चतुर्थीप्राप्त्यभाववार्तिकम्।। 2 ।।)

- प्रकृत्यन्तरत्वात् सिद्धम्-
(भाष्यम्) नमः शब्देन योगे चतुर्थी विधीयते। नमस्यतिशब्दश्चायम्।।
(चतुर्थीप्राप्तिसाधकभाष्यम्)
ननु च नमस्यतिशब्दे नमः शब्दोऽस्ति। तेन योगे प्राप्नोति।।
(चतुर्थीप्राप्तिबाधकभाष्यम्)
नैष दोषः। अर्थवतो नमः शब्दस्य ग्रहणम्। न च नमस्यतिशब्दे नमः शब्दोर्थवान्।।
(एकदेशिसमाधानभाष्यम्)
अथ वा --- उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति द्वितीया विभक्तिर्भविष्यति।। अथ वेति।।
(प्रत्ययार्थनिर्देशाधिकरणम्)
(1760 न्यूनतापूरकवार्तिकम्।। 3 ।।)
- क्यजादिषु प्रत्ययार्थनिर्देशः-
(भाष्यम्) क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः। नमसः पूजायाम्। वरिवसः सपर्यायाम्। चित्रङ आश्चर्ये। भाण्डात्समाचयने। चीवरादर्जने परिधाने च। पुच्छादुदसने व्यसने पर्यसने चेति। किं प्रयोजनम्? । क्रियावचनता यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति --- -क्रियावचनाः क्यजादयः इति। यदयं सनाद्यन्ता धातवः इति धातुसंज्ञां शास्ति।। कथं कृत्वा ज्ञापकम्?। धातुसंज्ञावचन एतत्प्रयोजनं धातोः इति तव्यदादीनामुत्पत्तिर्यथा स्यात्। यदि चात्र क्रियावचनता न स्याद् धातुसंज्ञावचनमनर्थकं स्यात्। सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः। किं कारणम्?। साधने तव्यदादयो विधीयन्ते। साधनं च क्रियायाः। क्रियाया अभावात्साधनाभावः। साधनाभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः। पश्यति त्वाचार्यः क्रियावचनाः क्यजादयः इति, ततः सनाद्यन्ता धातवः इति धातुसंज्ञां शास्ति।।
(प्रयोजनान्तरभाष्यम्)
ननु चेदं प्रयोजनं स्यात् परसाधने तव्यदादीनामुत्पत्तिं वक्ष्यामीति।।
(प्रयोजनान्तरनिराकरणभाष्यम्)
न परसाधने उत्पत्त्या भवितव्यम्। किं कारणम्?। साधन इति संबन्धिशब्दोऽयम्। संबन्धिशब्दाश्च पुनरेवमात्मका यदुत संबन्धिनमाक्षिपन्ति। तद्यथा --- मातरि वर्तितव्यं पितरि शुश्रूषितव्यमिति। न चोच्यते --- स्वस्यां मातरि स्वस्मिन् पितरीति। संबन्धाच्चैतद् गम्यते --- -या यस्य माता, यश्च यस्य पितेति। एवमिहापि संबन्धादेतद् गन्तव्यम् --- यस्य धातोर्यत् साधनमिति।।
(प्रत्ययार्थनिर्देशवैयर्थ्यभाष्यम्)
अथ वा धातव एव क्यजादयः।।
(आक्षेपभाष्यम्)
न चैव ह्यर्था आदिश्यन्ते।।
(उत्तरभाष्यम्)
क्रियावचनता च गम्यते। कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति येनैव खल्वपि हेतुना पचादयः
क्रियावचनाः, तेनैव क्यजादयोऽपि। एवमर्थे खल्वप्याचार्यश्चित्रयति क्वचिदर्थानादिशति, क्वचिन्नेति।।
(अर्थादेशावश्यकताभाष्यम्)
एवमप्यर्थादेशनं कर्तव्यम्। कथमिमे अबुधा बोध्येरन्निति।।
(अर्थादेशवैयर्थ्यभाष्यम्)
अथ वा शक्यमेवार्थादेशनमकर्तुम्। कथम्?। करणे इति वर्तते। करणं च करोतेरर्थः। करोतिश्च क्रियासामान्ये वर्तते।। नमो वरि।। 19 ।।
-3-1-21- मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् (638)
(398 णिच्प्रत्ययविधिसूत्रम्।। 3।1।2 आ. 11 सूत्रम्)
(अनुयोगभाष्यम्)
इमौ हलिकली स्तः इकारान्तौ --- (हलिः कलिः)। अस्ति हलशब्दः कलशब्दश्चाकारान्तः। कयोरिदं ग्रहणम्?।
(समाधानभाष्यम्)
याविकारान्तौ तयोरत्वं निपात्यते।।
(प्रश्नभाष्यम्)
किं प्रयोजनम्?।
1761 अत्वनिपातनप्रयोजनवार्तिकम्।। 1 ।।)
- हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्-
(भाष्यम्) हलिकल्योरत्त्वनिपातनं क्रियते सन्वद्भावो मा भूदिति। अजहलद् अचकलत्।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। इकारलोपे कृते अग्लोपिनां नेति प्रतिषेधो भविष्यति।

(प्रयोजनसाधकभाष्यम्)
वृद्धौ कृतायां लोपः तन्नाग्लोप्यङ्गं भवति। इदमिह संप्रधार्यम् --- वृद्धिः क्रियताम्, लोप इति। किमत्र कर्तव्यम्?। परत्वाद् वृद्धिः।।
नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोति, अकृतायामपि (प्राप्नोति)।।
वृद्धिरपि नित्या। कृतेऽपि लोपे प्राप्नोति, अकृतेऽपि।।
अनित्यो लोपः। अन्यस्य कृतायां वृद्धौ प्राप्नोति, अन्यस्याकृतायाम्। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति।।
वृद्धिरप्यनित्या। अन्यस्य कृते लोपे प्राप्नोति, अन्यस्याकृते। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वाद् वृद्धिः। वृद्धौ कृतायां लोपः, तन्नाग्लोप्यङ्गं भवति।।
अत्वे पुनः सति वृद्धिः क्रियतां लोप इति। यद्यपि परत्वाद् वृद्धिः, वृद्धावपि कृतायामगेव लुप्यते। तस्मात्सुष्ठूच्यते --- -हलिकल्योरत्त्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति।। मुण्डमिश्र।। 21 ।।
-3-1-22- धातोरेकाचो हलादेः क्रियासमभिहारे यङ् (639)
(699 यङ्प्रत्ययविधिसूत्रम्।। 6.1.2 आ. 12 सूत्रम्)
(समभिहारशब्दार्थनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
समभिहार इति कोऽयं शब्दः?।।
(उत्तरभाष्यम्)
समभिपूर्वाद्धरतेर्भावसाधनो घञ् --- समभिहरणं समभिहार इति। तद्यथा --- -(पुष्पाभिहारः) उत्पलाभिहारः मालाभिहारः (फलाभिहारः) इति।।
(उत्तरबाधकभाष्यम्)
विषम उपन्यासः। बह्व्यो हीमाः सुमनसः तत्र युक्तः समभिहार इति। इह पुनरेका क्रिया।।
(उत्तरसाधकभाष्यम्)
यद्यप्येका सामान्यक्रिया। अवयवक्रियास्तु बह्व्यः। अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः। ताः कश्चित् कात्स्न्येन करोति। कश्चिदकात्स्न्येन। तत्र यः कात्स्न्येन करोति स उच्यते पापच्यत इति। पुनः पुनर्वा पचति पापच्यते इति।।
(धातुग्रहणप्रत्याख्यानाधिकरणम्)
(पूर्वपक्षभाष्यम्)
अथ धातुग्रहणं किमर्थम्?।
(प्रयोजनभाष्यम्)
इह मा भूत् --- प्राटति भृशमिति।
(प्रत्याख्यानभाष्यम्)
अत उत्तरं पठति ---
(1762 प्रत्याख्यानवार्तिकम्।। 1 ।।)
- यङ्विधौ धातुग्रहण उक्तम्-
(भाष्यम्) यङ्विधौ धातुग्रहणे उक्तम्। किमुक्तम्?। तत्र तावदुक्तम् --- - कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गे कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्यानुपसर्गे कर्म। सोपसर्गस्य हि कर्मत्वे धात्वधिकारेपि सनोऽविधानमकर्मत्वात् इति एवमिहापि क्रियासमभिहारग्रहणाद्यङ्विधौ धातुग्रहणानर्थक्यम्। सोपसर्गः क्रियासमभिहार इति चेत् क्रियासमभिहारविशेषकत्वादुपसर्गस्यानुपसर्गः क्रियासमभिहारः। सोपसर्गस्य हि क्रिया समभिहारत्वे धात्वधिकारेऽपि यङोऽविधानमक्रियासमभिहारत्वाद् इति।।
(एकाज्झलादिग्रहणप्रत्याख्यानाधिकरणम्)
(पूर्वपक्षभाष्यम्)
अथैकाज्झलादिग्रहणं किमर्थम्?।
(समाधानभाष्यम्)
इह मा भूत् --- जागर्त्ति भृशम्। इर्क्षते भृशमिति।।
(1763 प्रत्याख्यानवार्तिकम्।। 2 ।।)
- एकाज्झलादिग्रहणे चोक्तम्-
(भाष्यम्) एकाज्झलादिग्रहणे चोक्तम्। किमुक्तम्। तत्र तावदुक्तम् --- कर्मसमानकर्तृग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात्। अकर्मणो ह्यसमानकर्तृकाद्वा अनभिधानाद् इति। इहापि एकाज्झलादिग्रहणानर्थक्यं च क्रियासमभिहारे यङ्वचनाद् अनेकाचो हलादेर्ह्यनभिधानम् इति।। तच्चावश्यमनभिधानमाश्रयितव्यम्। क्रियमाणेपि ह्येकाज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङाऽर्थस्याभिधानं न भवति, न भवति तत्रोत्पत्तिः तद्यथा --- - भृशं शोभते भृशं रोचते।। यत्र चानेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याभिधानं भवति, भवति
तत्रोत्पत्तिः। तद्यथा --- अटाट्यते अरार्यते अशाश्यते सोसूच्यते सोसूत्र्यते मोमूत्र्यते।।
(1764 न्यूनतापूरकवार्तिकम्।। 3 ।।)
- ऊर्णोतेश्चोपसंख्यानम्।
ऊर्णोतेश्चोपसंख्यानं कर्तव्यम्। प्रोर्णोनूयते। अत्यल्पमिदमुच्यते - ऊर्णोतेरिति।

सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिग्रहणं यङ्विधावनेकाजहलाद्यर्थम्।
(भाष्यम्) सूचिसूत्रिमूत्र्यटर्यत्यशूर्णोतीनां ग्रहणं कर्तव्यम्। किं प्रयोजनम्?। यङ्विधावनेकाजहलाद्यर्थम्। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अटाट्यते। अरार्यते। अशाश्यते। प्रोर्णोनूयते।।
(ाढ़द्य;र्णुग्रहणानावश्यकताभाष्यम्)
ऊर्णोतेर्न वक्तव्यः।
वाच्य ऊर्णोर्णुवद्भावो यङ प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेड्उपग्रहात्।।
(1766 लोटो यङ्बाधकत्ववार्तिकम्।। 5 ।।)
- क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम्-
(भाष्यम्) क्रियासमभिहारे यङो लोड्भवति विप्रतिषेधेन। क्रियासमभिहारे यङ् भवतीत्यस्यावकाशाः --- धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते, अधातुसंबन्धश्च लोलूयते। पोपूयते।। लोटोऽवकाशः --- - धातुर्योनेकाजहलादिः क्रियासमभिहारे वर्तते, धातुसंबन्धश्च स भवान् जागृहि जागृहीत्येवायं जागर्ति, स भवान् ईहस्व ईहस्व इत्येव अयम् ईहते ।। धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते धातुसंबन्धश्च, तस्माद् उभयं प्राप्नोति --- स भवान् लुनीहि लुनीहि इत्येवायं लुनाति। लोड्भवति विप्रतिषेधेन ।।
(अनुयोगभाष्यम्)
न तर्हीदानीमिदं भवति --- स भवान् लोलूयस्व लोलूयस्वेत्येवायं लोलूयत इति।।
(समाधानभाष्यम्)
भवति च।।
(1767 विप्रतिषैधवैयर्थ्यवार्तिकम्।। 6 ।।)
- न वा नानार्थत्वात्कर्तृकर्मणो हि लविधानं क्रियाविशेषे स्वार्थे यङ्-
(भाष्यम्) न वार्थो विप्रतिषेधेन। किं कारणम्? नानार्थत्वात्। का नानार्थता?। कर्तृकर्मणोर्हि लोड्विधीयते। क्रियाविशेषे स्वार्थे यङ्। तत्रान्तरङ्गत्वाद्यङा भवितव्यम्।।
(अनुयोगभाष्यम्)
न तर्हीदानीमिदं भवति --- स भवान् लुनीहि लुनीहीत्येवायं लुनातीति।।
(समाधानभाष्यम्)
भवति च। विभाषा यङ्। यदा न यङ् तदा लोट्।।
(वार्तिकशेषभाष्यम्)
-3-1-23- नित्यं कौटिल्ये गतौ (2634)
लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् 6.1.14 ।।
(1768 नित्यग्रहणानर्थक्यवार्तिकम्।। 7 ।।)
- उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यम्-
(भाष्यम्) उत्तरयोर्योगयोर्विग्रहेण विशेषस्यासंप्रत्ययान्नित्यग्रहणमनर्थकम्। नहि कुटिलं क्रामति इति चङ्क्रम्यत इति गम्यते।।
(अनुयोगभाष्यम्)
अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम्।।
(1769 समाधानवार्तिकम्।। 8 ।।)
- क्रियासमभिहारे च नैतेभ्यः-
(भाष्यम्) क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम् भृशं जपति ब्राह्मणः, भृशं समिधो दहतीत्येव।।
धातोरेकाचो।। 22 ।।
-3-1-25- सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् (642)
(400 णिच्प्रत्ययविधिसूत्रम्।। 6.1.2 आ. 15 सूत्रम्)
(निपातनीयनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
सत्यापेति किं निपात्यते।।
(1770 समाधानवार्तिकम्।। 1 ।।)
- सत्यस्य कृञ्ञ्यापुक् च-
(भाष्यम्) सत्यस्य कृञ्ञि आपुक् च निपात्यते णिच्च। सत्सं करोति सत्यापयति।।
(न्यूनताभाष्यम्)
अत्यल्पमिदमुच्यते सत्यस्य इति।।
(1771 न्यूनतापूरकवार्तिकम्।। 1 ।।)
- णिविधावर्थवेदसत्यानामापुक्च-

(भाष्यम्) णिविधावर्थवेदसत्यानामापुक् चेति वक्तव्यम्। अर्थापयति वेदापयति सत्यापयति।।
(आपुकि दूषणभाष्यम्)
यद्यापुक् क्रियते टिलोपः प्राप्नोति।।
(पुगङ्गीकारमतभाष्यम्)
एवं तर्हि पुक्करिष्यते।।
(पुकि दूषणभाष्यम्)
एवमपि टिलोपः प्राप्नोति।।
(आगङ्गीकारभाष्यम्)
एवं तर्ह्याट्करिष्यते।।
(आकि दूषणभाष्यम्)
एवमपि टिलोपः प्राप्नोति।।
(आगङ्गीकारभाष्यम्)
एवं तर्ह्यक् करिष्यते।।
(आटि दूषणभाष्यम्)
एवमप्यनाकारान्तत्वात् पुङ्गप्राप्नोति।।
(आडङ्गीकारभाष्यम्)
एवं तर्ह्याट् करिष्यते।।
(आटि दूषणभाष्यम्)
एवमप्यनाङ्गत्वात्पुङ्न प्राप्नोति।।
(आपुडङ्गीकारभाष्यम्)
एवं तर्ह्यापुट् करिष्यते।।
(सर्वमतानां निर्दोषताभाष्यम्)
अथ वा पुनरस्त्वापुगेव।।
ननुचोक्तं टिलोपः प्राप्नोतीति।
आपुक्वचनसार्मथ्यान्न भविष्यति।।
अथ वा पुनरस्तु पुगेव।
ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति।
पुग्वचनसार्मथ्यान्न भविष्यति।।
अथ वा पुनरस्त्वागेव।
ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति।।
आग्वचनसार्मथ्यान्न भविष्यति।। सत्यापपाश।। 25 ।।
-3-1-26- हेतुमति च (643)
(401 णिच्प्रत्ययविधिसूत्रम्।। 6.1.2 आ. 16 सूत्रम्)
(हेतुमच्छब्दार्थविशेष्यनिर्णयाधिकरणम्)
(विप्रतिपत्तिभाष्यम्)
कथमिदं विज्ञायते --- हेतुमत्यभिधेये णिज्भवतीति, आहोस्वित् --- -हेतुमति यो धातुर्वर्तते इति।।
(आक्षेपभाष्यम्)
युक्तं पुनरिदं विचारयितुम्। नन्वनेनासंदिग्धेन प्रत्ययार्थविशेषणेन भवितव्यम्, यावता हेतुमति च इत्युच्यते। यदि हि प्रकृत्यर्थविशेषणं स्याद्; हेतुमतः इत्येव ब्रूयात्।।
(आक्षेपबाधकभाष्यम्)
नैतदस्ति। भवन्ति हि विषयसप्तम्योऽपि। तद्यथा --- प्रमाणे यत्प्रातिपदिकं वर्तते स्त्रियां यत् प्रातिपदिकं वर्तत इति।। एवमिहापि हेतुमत्यभिधेये णिज्भवति इति, हेतुमति वा यो धातुर्वर्तते इति जायते विचारणा।।
(समाधानभाष्यम्)
अत उत्तरं पठति --- -
(1770 प्रत्ययार्थविशेषणतावार्तिकम्।। 1 ।।)
- हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थम् यथा तनूकरणे तक्षः-
(भाष्यम्) हेतुमतीति कारकमुपादीयते। किं प्रयोजनम्?। प्रत्ययार्थपरिग्रहार्थम्। एवं सति प्रत्ययार्थः सुपरिगृहीतो भवति। यथा तनूकरणे तक्षः इति तनूकरणमुपादीयते।।
(प्रकृत्यर्थविशेषणतासाधकभाष्यम्)

यदि तर्हि तद्वत्प्रकृत्यर्थविशेषणमिदं भवति। प्रकृत्यर्थविशेषणं हि तत्तत्र विज्ञायते --- तनूकरणक्रियायां तक्षः इति।
(प्रकृत्यर्थविशेषणत्वाभ्युपगमभाष्यम्)
अस्तु प्रकृत्यर्थविशेषणम्। को दोषः?।
(प्रकृत्यर्थविशेषणपक्षदूषणप्रदर्शनभाष्यम्)
इह हि --- उक्तः करोति, प्रेषितः करोतीति णिच् प्राप्नोति।। प्रत्ययार्थविशेषणे सति पुनर्न दोषो भवति। स्वशब्देनोक्तत्वान्न भविष्यति।।
(प्रकृत्यर्थविशेषणपक्षेऽपि दोषाभावप्रतिपादकभाष्यम्)
प्रकृत्यर्थविशेणेऽपि सति न दोषः। यत्र नान्तरेण शब्दमर्थस्य गतिर्भवति,तत्र शब्दः प्रयुज्यते। यत्र ह्यन्तरेणापि शब्दमर्थस्य गतिर्भवति न तत्र शब्दः प्रयुज्यते।।
(प्रकृत्यर्थविशेषणपक्षे दूषणभाष्यम्)
इह तर्हि पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति उभयोः कर्त्रोर्लेनाभिधानं प्राप्नोति।। प्रत्ययार्थविशेषणे सति पुनर्न दोषः। प्रधानकर्तरि लादयो भवन्तीति प्रधानकर्ता लेनाभिधीयते। यश्चात्राप्रधानं कर्ता, सिद्धा तत्र कर्तरीत्येव तृतीया।।
(प्रकृत्यर्थविशेषणपक्षदूषणभाष्यम्)
इह च गमितो ग्रामं देवदत्तो यज्ञदत्तेनेति अव्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थानां क्तः कर्तरीति कर्तरि क्तः प्राप्नोति।।
इह च व्यतिभेदयन्ते व्यतिच्छेदयन्त इति अव्यतिरिक्तो हिंसार्थ इति कृत्वा न गतिहिंसार्थेभ्य इति प्रतिषेधः प्राप्नोति।।
(प्रत्ययार्थविशेषणपक्षाभ्युपगमभाष्यम्)
अस्तु तर्हि प्रत्ययार्थविशेषणम्।
(प्रत्ययार्थविशेषणपक्षदूषणभाष्यम्)
यदि प्रत्ययार्थविशेषणं, पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति। भवति हि तस्य तस्मिन्नीप्सा।
इह च ग्रामं गमयति ग्रामाय गमयतीति व्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ न प्राप्नुतः।।
इह चैधोदकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति कृत्वा कृञ्ञः प्रतियत्ने इति षष्ठी न प्राप्नोति।।
इह च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोति।।
इह चाभिषावयति परिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति कृत्वा उपसर्गात्सुनोतिसुवतीत्यादिना षत्वं न प्राप्नोति।।
(प्रत्ययार्थविशेषणपक्षे प्रथमदूषणपरिहारभाष्यम्)
नैष दोषः। यत्तावदुच्यते --- पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोतीति।। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणीत्येतन्नियमार्थं भविष्यति --- एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति, नान्येषाम् इति।।
(प्रत्ययार्थविशेषणपक्षे द्वितीयदूषणपरिहारभाष्यम्)
यदप्युच्यते --- इह च ग्रामं गमयति ग्रामाय गमयति इति व्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थकर्मणी द्वितीयाचतुर्थ्यौ न प्राप्नुत इति।। नासावेवं प्रेष्यते --- -गच्छ ग्राममिति। कथं तर्हि? साधनविशिष्टां क्रियामसौ प्रेष्यते ग्रामं गच्छ ग्रामाय गच्छेति।।
(तृतीयदूषणपरिहारभाष्यम्)
यदप्युच्यते--इह च एधोदकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति कृत्वा कृञ्ञः प्रतियत्न इति षष्ठी न प्राप्नोतीति।। नासावेवं प्रेष्यते --- -उपस्कुरुष्वैधो दकस्येति। कथं तर्हि साधनविशिष्टां क्रियामसौ प्रेष्यते एधो दकस्योपस्कुरुष्वेति।।
(चतुर्थदुषणपरिहारभाष्यम्)
यदप्युच्यते --- इह भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोतीति।। उक्तं तत्र कृद्ग्रहणस्य प्रयोजनं कर्तृभूतपूर्वमात्रेऽपि षष्ठी यथा स्यादिति।
(पञ्चमदूषणपरिहारभाष्यम्)
यदप्युच्यते --- इह चाभिषावयति परिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति कृत्वा उपसर्गात्सुनोतीत्यादिना षत्वं न प्राप्नोतीति। नासावेवं प्रेष्यते सुनु अभीति। कथं तर्हि? उपसर्गविशिष्टां क्रियामसौ प्रेष्यते अभिषुण्विति।।
(अनुयोगभाष्यम्)
युक्तं पुनरिदं विचारयितुम्। नन्वनेनासंदिग्धेन प्रत्ययार्थविशेषणेन भवितव्यम्। यावता व्यक्तमर्थान्तरं गम्यते पचति पाचयतीति च।।
(समाधानभाष्यम्)
बाढं युक्तम्।। इह पचेः कः प्रधानार्थः?। याऽसौ तण्डुलानां विक्लित्तिः।
अथेदानीं तदभिसंधिपूर्वकं प्रेषणमध्येषणं वा। युक्तं यत्सर्वं पच्यर्थः स्यात्।।
(आक्षेपभाष्यम्)
अथ हेतुमतीति को मत्वर्थः।।
(समाधानभाष्यम्)

हेतुः कर्तास्य स हेतुमतीति।
(1771 निमित्तमात्रस्य हेतुशब्दार्थत्वसमर्थकवार्तिकम्।। 2 ।।)
- हेतुनिर्देशश्च निमित्तमात्रे, भिक्षादिषु दर्शनात्-
(भाष्यम्) हेतुनिर्देशश्च निमित्तमात्रे द्रष्टव्यः। यावद् ब्रूयाद् --- निमित्तं कारणम्, तावद् --- हेतुरिति। किं प्रयोजनम्?। भिक्षादिषु दर्शनात्। भिक्षादिषु हि णिज् दृश्यते --- -भिक्षा वासयति कारीषोग्निरध्यापयतीति।।
(अनुयोगभाष्यम्)
किं पुनः कारणं परिभाषिके हेतौ न सिध्यति?।।
(समाधानभाष्यम्)
एवं मन्यते चेतनावत एतद्भवति --- प्रेषणमध्येषणं चेति। भिक्षाश्चाचेतनाः।।
(समाधानबाधकभाष्यम्)
नैष दोषः। नावश्यं स एव वासं प्रयोजयति य इहोष्यताम् इति ब्रवीति किं तर्हि? तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि वासं प्रयोजयति। भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति।।
तथा कारीषोऽग्निर्निर्वाते एकान्ते सुप्रज्वलितोध्ययनं प्रयोजयति।।
(आक्षेपभाष्यम्)
इह कश्चित्कंचिदाह पृच्छतु मा भवान् अनुयुङ्क्तां मा भवान् इति अत्र णिच् कस्मान्न भवति?
(समाधानभाष्यम्)
अकर्तृत्वात्। न ह्यसौ संप्रति पृच्छति। तूष्णीमास्ते।।
(आक्षेपभाष्यम्)
किं च भो वर्तमानकालाया एव क्रियायाः कर्त्रा भवितव्यम्, न भूतभविष्यत्कालायाः।।
(समाधानभाष्यम्)
भूतभविष्यत्कालाया अपि भवितव्यम्। (अभिसंबन्धस्तत्र क्रियते --- इमां क्रियामकार्षीद्, (इमां क्रियां) करिष्यतीति।।
(प्रागुक्ताकर्तृत्वोपपादनभाष्यम्)
इह पुनर्न कश्चिदभिसंबन्धः क्रियते। न चासौ संप्रति पृच्छति, न चासौ प्रक्ष्यति तूष्णीमास्ते?।
(अकर्तृत्वबाधकभाष्यम्)
यदि तर्हि कर्ता नास्ति। कथं तर्हि कर्तृप्रत्ययेन लोटाभिधीयते?।।
(आक्षेपभाष्यम्)
अथ कथमस्मिन्नपृच्छत्ययं पृच्छतिर्वर्तते?।।
(समाधानभाष्यम्)
अभिसंबन्धस्तत्र क्रियते --- इमां क्रियां कुर्विति।।
(अकर्तृत्वबाधकभाष्यम्)
कर्त्रापि तर्ह्यभिसंबन्धः क्रियते। कथम्?। कर्ता अस्या क्रियाया भवेति।।
(अकर्तृत्वसाधकभाष्यम्)
एवं न च कर्ता कर्तृप्रत्ययेन लोटाभिधीयते।।
(कर्तृत्वसद्भावेऽपि समाधानभाष्यम्)
अथापि कथंचित्कर्ता स्यात्, एवमपि न दोषः। लोटोक्तत्वात् प्रैषस्य णिज्न भविष्यति। विधीयन्ते ह्येतेष्वर्थेषु प्रैषादिषु लोडादयः।। यत्र च द्वितीयः प्रयोज्योऽर्थो भवति भवति तत्र णिच्। तद्यथा --- आसय शाययेति।
(1772 आक्षेपवार्तिकम्।। 3 ।। )
- कृष्यादिषु चानुत्पत्तिः-
(भाष्यम्) कृष्यादिषु चानुत्पत्तिर्वक्तव्या। एकान्ते तूष्णीमासीन उच्यते पञ्चभिर्हलैः कृषतीति। तत्र भवितव्यं पञ्चभिर्हलैः कर्षयतीति।
(1773 समाधानवार्तिकम्।। 4 ।।)
- कृष्यादिषु चानुत्पत्तिर्नाना क्रियाणां कृष्यर्थत्वात्-
(भाष्यम्) कृष्यादिषु चानुत्पत्तिः सिद्धा। कुतः?। नानाक्रियाणां कृष्यर्थत्वात्। नाना क्रियाः कृषेरर्थाः। नावश्यं कृषतिर्विलेखन एव वर्तते। किं तर्हि?। प्रतिविधानं करोति, स कृष्यर्थः।। आतश्च प्रतिविधानेऽपि वर्तते यदहरेवासौ न प्रतिविधत्ते, तदहरेव तत्कर्म न प्रवर्तते।।
(1774 आक्षेपवार्तिकम्।। 5 ।।)
- यज्यादिषु चाविपर्यासः-
(भाष्यम्) यज्यादिषु चाविपर्यासो वक्तव्यः। पुष्यमित्रो यजते याजका याजयन्तीति। तत्र भवितव्यं पुष्यमित्रो याजयते याजका याजयन्तीति।।
(1775 समाधानवार्तिकम्।। 6 ।।)
- यज्यादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वात्-
(भाष्यम्) यज्यादिषु चाविपर्यासः सिद्धः। कुतः। नानाक्रियाणां यज्यर्थत्वात्। नाना क्रिया यजेरर्थाः। नावश्यं

यजिर्हविः प्रक्षेपण एव वर्तते। किं तर्हि। त्यागेऽपि वर्तते। तद्यथा। अहो यजत इत्युच्यते यः सुष्ठु त्यागं करोति। तं च पुष्यमित्रः करोति याजकाः प्रयोजयन्तीति।।
(1776 णिच्प्रत्ययविधिवार्तिकम्।। 7 ।।)
- तत् करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्-
(भाष्यम्) तत् करोतीत्युपसंख्यानं कर्तव्यम्। किं प्रयोजनम्। सूत्रयत्याद्यर्थम्। सूत्रं करोति सूत्रयति (मूत्रयतीति)
(आक्षेपभाष्यम्)
इह व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयतीति वाक्ये षष्ठी, उत्पन्ने च प्रत्यये द्वितीया। केनैतदेवं भवति?।।
(समाधानभाष्यम्)
योसौ सूत्रव्याकरणयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति।।
(1777 णिच्प्रत्ययविधिवार्तिकम्।। 8 ।।)
- आख्यानात्कृतस्तदाचष्टे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकम्-
(भाष्यम्) आख्यानात्कृदन्ताणिज्वक्तव्यः तदाचष्ट इत्येतस्मिन्नर्थे। कृल्लुक्, प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। कंसवधमाचष्टे कंसं घातयति। बलिबन्धमाचष्टे बलिं बन्धयतीति।।
(1778 णिच्प्रतिषेधवार्तिकम्।। 9 ।।)
- आख्यानाच्च प्रतिषेधः-
(भाष्यम्) आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः --- आख्यानमाचष्ट इति।।
(पूर्ववार्तिकस्थाख्यानशब्दग्राह्यनिर्णयाधिकरणम्)
(विप्रतिपत्तिभाष्यम्)
किं पुनर्यान्येतानि संज्ञाभूतानि आख्यानानि तेभ्य उत्पत्त्या भवितव्यम्। आहोस्विन् क्रियाख्यानमात्रात्।।
(विशेषजिज्ञासाभाष्यम्)
किं चातः?।
(संज्ञाभूताख्यानग्रहणपक्षदूषणभाष्यम्)
यदि संज्ञाभूतेभ्यः। इह न प्राप्नोति --- राजागमनमाचष्टे राजानमागमयतीति।।
(क्रियाख्यानमात्रग्रहणपक्षभाष्यम्)
अथ क्रियाख्यानमात्रम्। न दोषो भवति।। यथा न दोषस्तथास्तु।।
(1779 णिच्प्रत्ययवार्तिकम्।। 10 ।।)
- दृश्यर्थायां च प्रवृत्तौ-
(भाष्यम्) दृश्यर्थायां च प्रवृत्तौ कृदन्ताण्णिज् वक्तव्यः, तदाचष्टे इत्येतस्मिन्नर्थे। कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। मृगरमणमाचष्टे मृगान् रमयति।। दृश्यर्थायामिति किमर्थम्?। यदा हि ग्रामे मृगरमणमाचष्टे मृगरमणमाचष्ट इत्येव तदा भवति।।
(1780 णिच्प्रत्ययविधिवार्तिकम्।। 11 ।।)
- आङ् लोपश्च कालात्यन्तसंयोगे मर्यादायाम्-
(भाष्यम्) कालात्यन्तसंयोगे मर्यादायां कृदन्ताण्णिज् वक्तव्यः तदाचष्ट इत्येतस्मिन्नर्थे। आङ्लोपश्च कृल्लुक्
प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। आरात्रिविवासमाचष्टे रात्रिं विवासयतीति।।
(1781 णिच्प्रत्ययविधिवार्तिकम्।। 12 ।।)
- चित्रीकरणे प्रापि -
(भाष्यम्) चित्रीकरणे प्राप्तावर्थे कृदन्ताण्णिज् वक्तव्यः। कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते। सूर्यमुद्गमयतीति।।
(1782 णिच्प्रत्ययविधिवार्तिकम्।। 13 ।।)
- नक्षत्रयोगे ज्ञि-
(भाष्यम्) नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज् वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। पुष्ययोगं जानाति पुष्येण योजयति मघाभिर्योजयति इति।
(अनुयोगभाष्यम्)
तत्तर्हीदं बहु वक्तव्यम्?।
(1783 प्रत्याख्यानवार्तिकम्।। 14 ।।)
न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्।
(भाष्यम्) न वा वक्तव्यम्। किं कारणम्?। सामान्यकृतत्वात् सामान्येनैवात्र णिज् भविष्यति हेतुमतीति।। किं कारणम्?। हेतुतो ह्यविशिष्टम्। हेतुतो ह्यविशिष्टमेतद् भवति। तुल्या हि हेतुता देवदत्ते चादित्ये च।
(आक्षेपभाष्यम्)
न सिध्यति। स्वतन्त्रस्य प्रयोजको हेतुसंज्ञो भवतीत्युच्यते। न चासावादित्यं प्रयोजयति।

(1783 समाधानवार्तिकप्रथमखण्डम्।।)
- स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम्-
(भाष्यम्) यं भवान् स्वतन्त्रप्रयोजकं मुक्तसंशयं न्याय्यं मन्यते पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति, तेनैतत्तुल्यम्।। कथम्?।
(1784 समाधानवार्तिकद्वितीयखण्डम्।। 15)
- प्रवृत्तिर्ह्युभयत्रानपेक्ष्य -
(भाष्यम्) प्रवृत्तिर्ह्युभयत्रानपेक्ष्यैव किंचिद्भवति देवदत्ते चादित्ये च।। नेह कश्चित्परोनुग्रहीतव्य इति प्रवर्तते। सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते।। ये तावदेते गुरुशुश्रूषवो नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते - पारलौकिकं च नो भविष्यति, इह च नः प्रीतो गुरुरध्यापयिष्यतीति।।
तथा --- य एते दासाः कर्मकरा नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते - भक्तं चैलं च लप्स्यामहे। परिभाषाश्च न नो भविष्यन्तीति।।
तथा --- य एते शिल्पिनो नाम एतेऽपि स्वभूत्यर्थे प्रवर्तन्ते - वेतनं च लप्स्यामहे। मित्राणि च नो भविष्यन्तीति।
(वार्तिकादिशेषभाष्यम्)
एवमेतेषु सर्वेषु स्वभूत्यर्थे प्रवर्तमानेषु ---
(1885 देवदत्तादित्ययोः प्रयोज्यत्वसाधकवार्तिकम्।। 16 ।।)
- कुर्वतः प्रयोजकः इति चेत्तुल्यम्-
(भाष्यम्) यदि कश्चित्प्रयोजको नाम कुर्वतो भवति तेनैतत्तुल्यम्।।
(आक्षेपभाष्यम्)
यदि तर्हि सर्व इमे स्वभूत्यर्थे प्रवर्तन्ते, कः प्रयोज्यार्थः?।।
(समाधानभाष्यम्)
यदभिप्रायेषु सज्जन्ते ईदृशौ वध्र्यौ कुरु, ईदृशौ पुटकौ कुरु इति। आदित्यश्चास्याभिप्राये सज्जते। एष तस्याभिप्रायः उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयेय इति।। तं चास्यादित्योभिप्रायं निर्वर्तयति।।
(आक्षेपभाष्यम्)
भवेदिह वर्तमानकालता युक्ता स्याद् उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते सूर्यमुद्गयतीति,
तत्रस्थस्य हि तस्यादित्य उदेति। इह तु कथं वर्तमानकालता कंसे घातयति बलिं बन्धयतीति। चिरहते च कंसे, चिरबद्धे च बलौ।।
(समाधानभाष्यम्)
अत्रापि युक्ता।। कथम्?। ये तावदेते शौभिका नाम एते प्रत्यक्षं कंसं घातयन्ति प्रत्यक्षं च बलिं बन्धयन्तीति।।
(आक्षेपभाष्यम्)
चित्रेषु कथम्?।
(समाधानभाष्यम्)
चित्रेष्वपि उद्गूर्णा निपतिताश्च प्राहारा दृश्यन्ते कंसस्य कृष्णस्य च।।
(आक्षेपभाष्यम्)
ग्रन्थिकेषु कथम्। यत्र शब्दग्रन्थगड्डमात्रं लक्ष्यते।
(समाधानभाष्यम्)
तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशात् तद्द्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति।। आतश्च सतः। व्यामिश्राश्च दृश्यन्ते --- केचित् कंसभक्ता भवन्ति, केचिद्वासुदेवभक्ताः। वर्णान्यत्वं खल्वपि पुष्यन्ति --- केचित्कालमुखा भवन्ति केचिद् रक्तमुखाः। त्रैकाल्यं खल्वपि लोके लक्ष्यते --- गच्छ हन्यते कंसः, गच्छ घानिष्यते कंसः, किं गतेन हतः कंस इति। हेतुमति च ।। 26 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमपादे द्वितीयमाह्निकम्।।
-3-1-27- कण्ड्वादिभ्यो यक् (644)
(402 यक्प्रत्ययविधिसूत्रम्।। 6.1.6 आ. 1 )
(आक्षेपभाष्यम्)
किमर्थः ककारः?।
(समाधानभाष्यम्)
गुणवृद्धिप्रतिषेधार्थः। क्ङितीति गुणवृद्धिप्रतिषेधो यथा स्यात्।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते। धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते। न चायं धातोर्विधीयते। कण्ड्वादीनि हि प्रातिपदिकानि।।
(1786 यकोवैकल्पिकत्वसाधकवार्तिकप्रथमखण्डम्।।)
- कण्ड्वादिभ्यो वावचनम्-
(भाष्यम्) काण्ड्वादिभ्यो वेति वक्तव्यम्।।
(1786 वार्तिकद्वितीयखण्डम्।। 1 ।।)
- अवचने हि नित्यप्रत्ययत्वम्-

(भाष्यम्) अक्रियमाणे हि वावचने नित्यः प्रत्ययविधिः प्रसज्येत।।
(दोषप्रश्नभाष्यम्)
तत्र को दोषः?।।
(1787 दोषकथनवार्तिकम्।। 2 ।।)
- तत्र धातुविधितुक् प्रतिषेधः-
(भाष्यम्) तत्र धातुविधेस्तुकश्च प्रतिषेधो वक्तव्यः स्यात्। कण्ड्वौ कण्ड्वः अचिश्नुधातुभ्रुवां य्वोरियङुवङौ इत्युवङादेशः प्रसज्येत।
इह कण्ड्वा कण्ड्वे इति नोङ्धात्वोः इति विभक्तेरुदात्तत्वप्रतिषेधः प्रसज्येत।।
तुक् च प्रतिषेध्यः, वल्गुर्मन्तुरिति ह्रस्वस्य पिति कृति तुक् इति तुक् प्राप्नोति।।
(1788 दोषकथनवार्तिकम्।। 3 ।।)
- ह्रस्वयलोपौ च-
(भाष्यम्) हस्वयलोपौ च वक्तव्यौ स्याताम्।। ह्रस्व --- वल्गुर्मन्तुरिति।।
किमर्थमिदं न ह्रस्व एवायम्?।
अन्तरङ्गत्वाद् अकृद्यकार इति दीर्घत्वं प्राप्नोति। हस्वः।।
यलोप --- यलोपश्च वक्तव्यः। कण्डूर्मन्तुर्वल्गुरिति।
किमर्थमिदम्, न वलीत्येव सिद्धम्।
वलीत्युच्यते, न चात्र वलं पश्यामः।।
ननु च क्विब्वलादिः।।
क्विपो लोपे कृते वलाद्यभावान्न प्राप्नोति। इदमिह संप्रधार्यम्। क्विब्लोपः क्रियतां वलि लोप इति। किमत्र कर्तव्यम्?। परत्वात् क्विब्लोपः।।
नित्यः खल्वपि क्विब्लोपः कृते यलोपे प्राप्नोति, अकृतेऽपि।। नित्यत्वात् परत्वाच्च क्विब्लोपे कृते वलाद्यभावाद् न प्राप्नोति।
एवं तर्हि प्रत्ययलक्षणेन भविष्यति।।
वर्णाश्रये नास्ति प्रत्ययलक्षणम्।।
(अनुयोगभाष्यम्)
अथ क्रियमाणेऽपि वावचने यदा यगन्तात् क्विप् तदैते दोषाः कस्मान्न भवन्ति।।
(समाधानभाष्यम्)
नैतेभ्यस्तदा क्विबुत्पद्यते। किं कारणम्?। अन्येभ्योपि दृश्यते इत्युच्यते। नैतेभ्यः तदा क्विब्दृश्यते।।
(अनुयोगभाष्यम्)
यथैव तर्हि क्रियमाणेऽपि वावचने अन्येभ्योऽपि दृश्यते इत्यत्र क्विब् न भवति। एवमक्रियमाणेऽपि वावचने न भविष्यति।।
(क्विपीष्टापत्तिभाष्यम्)
अवश्यमेतेभ्यः क्विबेषितव्यः। किं प्रयोजनम्। एतानि रूपाणि यथा स्युरिति।।
(अनुयोगभाष्यम्)
तत्तर्हि वावचनं कर्तव्यम्।
(समाधानभाष्यम्)
न कर्तव्यम्। उभयं कण्ड्वादीनि धातवश्च प्रातिपदिकानि च।। आतश्चोभयम्। कण्डूयतीति हि क्रियां कुर्वाणे प्रयुज्यते। अस्ति मे कण्डूरिति वेदनामात्रस्य सांनिध्ये।।
अपर आह --- -
धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घे मन्ये धातुर्विभाषितः।।
इति।। कण्ड्वादिभ्यो यक्।। 27 ।।
-3-1-30- कमेर्णिङ् (647)
(403 णिङ्प्रत्ययविधिसूत्रम्।। 3।1।3 आ. 2)
(आक्षेपभाष्यम्)
किमर्थो णकारः।
(समाधानभाष्यम्।)
वृद्ध्यर्थः। ञ्णितीति वृद्धिर्यथा स्यादिति।
(समाधानबाधकभाष्यम्)
क्रियमाणेपि वैणकारे वृद्धिर्न प्राप्नोति। किं कारणम्। क्ङिति चेति प्रतिषेधात्।
(समाधानसाधकभाष्यम्)
णित्करणसामर्थ्याद्भविष्यति।
(समाधानबाधकभाष्यम्)

अत उत्तरं पठति --- --
(1789 समाधानबाधकवार्तिकम्।। 1 ।।)
- णिङि णित्करणस्य सावकाशत्वाद् वृद्धिप्रतिषेधप्रसङ्गः-
(भाष्यम्) णिङि णित्करणं सावकाशम्। कोवकाशः?। सामान्यग्रहणार्थो णकारः। क्व सामान्यग्रहणार्थेन णकारेणार्थः?। णेरनिटि इति। णिङिणित्करणस्य सावकाशत्वाद् वृद्धेः प्रतिषेधः प्राप्नोति।।
(प्रतिबन्दीभाष्यम्)
ङित्करणमपि सावकाशम्। कोऽवकाशः?। सामान्यग्रहणाविघातार्थो ङकारः। क्व सामान्यग्रहणाविघातार्थेनार्थः?। अत्रैव।।
(ङित्करणवैयर्थ्यभाष्यम्)
शक्योत्रसामान्यग्रहणाविघातार्थोऽन्योऽनुबन्ध आसङ्क्तुम्। तत्र ङकारानुबन्धाद् वृद्धिप्रतिषेधः प्राप्नोति।
(ङित्करणसार्थक्यभाष्यम्)
अवश्यमत्रात्मनेपदार्थो ङकारोनुबन्ध आसङ्क्तव्यः। ङित इत्यात्मनेपदं यथा स्यात्।।
(प्रतिबन्दीबाधकभाष्यम्)
एवमप्युभयोः सावकाशयोः प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोति।।
(प्रतिषेधाप्राप्तिभाष्यम्)
एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति --- न कमेर्वृद्धि प्रतिषेधो भवतीति। यदयं न कम्यमिचमामिति मित्संज्ञायाः प्रतिषेधं शास्ति।।
(1790 ज्ञापकत्वबाधकं मित्प्रतिषेधसार्थक्यवार्तिकम्।। 2 ।।)
- मित्प्रतिषेधस्य चार्थवत्त्वात्-
(भाष्यम्) मित्प्रतिषेधस्य चार्थवत्त्वादृद्धिप्रतिषेधः प्राप्नोति। अर्थवान् मित्प्रतिषेधः। कोर्थः?। णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं मा भूदिति।
(ज्ञापकत्वसाधकभाष्यम्)
ननु तस्या अपि क्ङितिचेति प्रतिषेधेन भवितव्यम्।
(ज्ञापकत्वबाधकभाष्यम्)
न भवितव्यम्। उक्तमेतत् क्ङिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोरवीत्यर्थमिति।
(ज्ञापकत्वसाधकभाष्यम्)
एवं तर्हि णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं न प्राप्नोति। किं कारणम्। णिङा व्यवहितत्वात्।
(ज्ञापकत्वबाधकभाष्यम्)
लोपे कृते नास्ति व्यवधानम्।
(ज्ञापकत्वबाधकभाष्यम्)
स्थानिवद्भावाद्व्यवधानमेव।
(ज्ञापकत्वबाधकभाष्यम्)
णिङ्येव तर्हि मा भूदिति।
(ज्ञापकत्वसाधकभाष्यम्)
णिङि च न प्राप्नोति। किं कारणम्?। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति।
(ज्ञापकत्वसाधकयुक्त्यन्तरभाष्यम्)
नैव वा पुनर्णिङन्तस्य णिचि वृद्धिः प्राप्नोति। किं कारणम्। णिङा व्यवहितत्वात्।।
लोपो कृते नास्ति व्यवधानम्।।
स्थानिवद्भावाद् व्यवधानमेव।।
(ज्ञापकत्वबाधकभाष्यम्)
इदं तर्हि प्रयोजनम्। यत्तत् चिण्णमुलोर्दीर्घोन्यतरस्याम् इति दीर्घत्वं शास्ति, तत्कमेर्णिङि मा भूदिति।।
(ह्रस्वघटितन्यासकरणे लाघवभाष्यम्)
किं पुनः कारणं तत्र दीर्घोन्यतरस्यामित्युच्यते, न ह्रस्वोन्यतरस्यामित्येवोच्येत। यथाप्राप्तं कमेर्ह्रस्वत्वमेव।। तत्रायमप्यर्थः --- ह्रस्वग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। क्व प्रकृतम्?। मितां ह्रस्वः इति।
(आक्षेपभाष्यम्)
का रूपसिद्धिः। अशमि अशामि। शमंशमम्। शामंशामम्।।
(समाधानभाष्यम्)
वृद्ध्या सिद्धम्।।
(आक्षेपसाधकभाष्यम्)
न सिध्यति। नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्धिप्रतिषेधः प्राप्नोति।।
(आक्षेपबाधकभाष्यम्)

नैष दोषः। चिण्कृतोः स वृद्धिप्रतिषेधो, न णिचि।।
(आक्षेपसाधकभाष्यम्)
इह तर्हि। अजनि अजानि जनंजनम्। जानंजानम्। जनिवध्योश्चेति वृद्धिप्रतिषेधः प्राप्नोति।।
(आक्षेपबाधकभाष्यम्)
सोपि चिण्कृतोरेव, न णिचि।।
(ह्रस्वघटितन्यासे गौरवभाष्यम्)
णिज्व्यवहितेषु तर्हि यङ्लोपे चोपसंख्यानं कर्तव्यं स्यात्। शमयन्तं प्रयोजितवान् अशमि अशामि। शमंशामि। शंशमंशंशमम्। शंशामंशंशामम्।।
किं पुनः कारणं न सिध्यति?।
चिण्णमुल्परे णौ मितामङ्गानां ह्रस्वो भवतीत्युच्यते। यश्चात्र णिः चिण्णमुल्परः, तस्मिन्निमिदङ्गम्। यस्मिंश्चमिदङ्गम्, नासौ णिश्चिण्णमुल्परः।।
णिलोपे तर्हि कृते चिण्णमुल्परः।।
स्थानिवद्भावान्न चिण्णमुल्परः।।
(दीर्घघटितन्यासेऽनुयोगभाष्यम्)
अथ दीर्घोऽन्यतरस्यामित्युच्यमाने यावता स्थानिवद्भावः कथमेवैतावता सिध्यति।।
(समाधानभाष्यम्)
एतदिदानीं दीर्घग्रहणस्य प्रयोजनम् --- दीर्घविधिं प्रत्यजादेशो न स्थानिवद्भवतीति स्थानिवत्त्वप्रतिषेधः सिद्धो भवति।।
(आक्षेपभाष्यम्)
यदा खल्वप्यायादय आर्धधातुके वा भवन्ति तदा णिचि णिङ् नास्ति तदर्थे च मित्प्रतिषेधः स्यात्। तस्मात्प्रतिषेधः प्राप्नोति।।
(समाधानभाष्यम्)
उक्तं वा। किमुक्तम्। तद्धितकाम्योरिक्प्रकरणादिग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः नचैषां इग्लक्षणा वृद्धिरिति।। कमेर्णिङ्।। 30 ।।
-3-1-31- आयादय आर्धधातुके वा (648)
(404 विकल्पसूत्रम्।। 3।1।3 आ. 3)
(आर्धधातुक इति सप्तम्यर्थनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
कथमिदं विज्ञायते --- आयादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति। आहो स्विद् --- आयादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते आयादीनामुत्पत्तिर्भवतीति।।
(प्रत्याक्षेपभाष्यम्)
किंगतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम्?।।
(प्रत्याक्षेपसमाधानभाष्यम्)
गतमित्याह। कथम्?। यदा तावदायादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वायादीनां निवृत्तिर्भवतीति तदाऽविशेषेण सर्वमायादिप्रकरणमनुक्रम्य आयादय आर्धधातुके वा इत्युच्यते।।
यदाप्यायादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनामुत्पत्तिर्भवतीति तदैकं वाक्यं तच्चेदं च। गुपूधूपविच्छिपणिपनिभ्य आयः। आर्धधातुके वा। ऋतेरीयङ्। आर्धधातुके वा। कमेर्णिङ्। आर्धधातुके वा इति।।
(अनुयोगभाष्यम्)
कश्चात्र विशेषः?।
(1791 विशेषदर्शकवार्तिम्।। 1 ।।)
- आयादिभ्यो यदार्धधातुकम् आयादिप्रकृतेर्यदार्धधातुकमिति चोभयथाऽनिष्टप्रसङ्गः-
(भाष्यम्) आयादिभ्यो यदार्धधातुकम् आयादिप्रकृतेर्यदार्धधातुकम् इति चोभयथाऽनिष्टं प्राप्नोति।।
यदि विज्ञायते आयादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति। गुप्तिः --- --जुगोपेति चेष्टं न सिध्यति। इदं चानिष्टं प्राप्नोति --- -गोपांचकार गोपेति। इदं त्विष्टं सिद्धं भवति --- -गोपायांचकार गोपायेति।।
(द्वितीयपक्षदूषणभाष्यम्)
अथ विज्ञायते --- आयादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवतीति। गुप्तिर्जुगोपेति चेष्टं सिद्धं भवति। इदं चानिष्टं न प्राप्नोति --- गोपांचकार गोपेति। इदं त्विष्टं न सिध्यति --- -गोपायांचकार गोपायेति।।
(सिद्ध्युपपत्तिभाष्यम्)
इदं तावदिष्टं सिद्धं भवति गोपायांचकारेति।। कथम्?। अस्त्वत्रायादिप्रकृतेर्यदार्धधातुकं लिद्तस्मिन्नवस्थिते वा आयादयः आम्मध्ये पतिष्यति यथा विकरणस्तद्वत्।।
(अनुपपत्तिभाष्यम्)
इदं तर्हीष्टं न सिध्यति --- -गोपायेति।।
(1792 इष्टसाधकन्यासान्तरवार्तिकम्।। 2 ।।)

- सिद्धं तु सार्वधातुके नित्यवचनादनाश्रित्य वा विधानम्-
(भाष्यम्) सिद्धमेतत्। कथम्?। अविशेषेणायादीनां वा विधिमुक्त्वा सार्वधातुके नित्यम् इति वक्ष्यामि।।
(1793 स्यादिबलीयस्त्वापत्तिवार्तिकम्।। 3 ।।)
- स्यादिबलीयस्त्वं तु विप्रतिषेधेन तुल्यनिमित्तत्वात्-
(भाष्यम्) स्यादिभिस्त्वायादीनां बाधनं प्राप्नोति।। किं कारणम्?। विप्रतिषेधेन तुल्यनिमित्तत्वात्। तुल्यं हि निमित्तमायादीनां स्यादीनां च। स्यादीनामवकाशः --- करिष्यति हरिष्यति। आयादीनामवकाशः --- -गोपायति धूपायतीति। इहोभयं प्राप्नोति --- गोपायिष्यति धूपायिष्यतीति। परत्वात् स्यादयः प्राप्नुवन्ति।।
(1794 स्यादीनामायादिबाधानापत्तिवार्तिकम्।। 4 ।।)
- न वाऽऽयादिविधानस्यानवकाशत्वात्-
(भाष्यम्) न वैष दोषः। किं कारणम्?। आयादिविधानस्यानवकाशत्वात्। अनवकाशा आयादयः उच्यन्ते च ते
वचनाद्भविष्यन्ति।।
(अवकाशभाष्यम्)
ननु चेदानीमेवावकाशः प्रक्लृप्तः --- गोपायति धूपायतीति।।
(अवकाशाभावभाष्यम्)
अत्रापि शप् स्यादिर्भवति।।
(अवकाशभाष्यम्)
यद्यत्रापि शप् स्यादिर्भवति। न त्वत्रास्तिविशेषः सति वा शप्यसति वा।।
अन्यदिदानीमेतद् --- -यदुच्यते नास्ति विशेषः इति। यत्तु तदुक्तम् --- --आयादीनां स्यादिभिरव्याप्तोऽवकाशः इति, स नास्त्यवकाशः। अवश्यं खल्वप्यत्र शप्स्यादिरेषितव्यः। किं प्रयोजनम्?। गोपायन्ती धूपायन्तीति
शप्श्यनोर्नित्यम् इति नित्यो नुम् यथा स्यात्।।
(आक्षेपभाष्यम्)
यदि तर्हि अनवकाशा आयादयः आयादिभिः स्यादीनां बाधनं प्राप्नोति।।
(समाधानभाष्यम्)
यथा पुनरयं सूत्रभेदेन परिहारः यदि पुनः शपि नित्यम् इत्युच्यते।।
(आक्षेपभाष्यम्)
सिध्यति। सूत्रं तर्हि भिद्यते।।
(सिद्धान्तिभाष्यम्)
यथान्यासमेवास्तु।।
(दोषस्मारणभाष्यम्)
ननु चोक्तम् --- - आयादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्ग इति।
(दूषणोद्धारभाष्यम्)
नैष दोषः। आर्धधातुक इति नैषा परसप्तमी। का तर्हि?। विषयसप्तमी। आर्धधातुके विषय इति तत्रार्धधातुकविषये आयादिप्रकृतेरायादिषु (वा) कृतेषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति।। आयादयः।। 31 ।।
-3-1-32- सनाद्यन्ता धातवः (649)
(405 धातुसंज्ञासूत्रम्।। 3।1।3 आ.4)
(अतग्रहणप्रयोजनाधिकरणम्।)
(आक्षेपभाष्यम्)
अन्तग्रहणं किमर्थम्, न सनादयो धातवः इत्येवोच्येत?।
(प्रत्याक्षेपभाष्यम्)
केनेदानीं तदन्तानां भविष्यति।।
(प्रत्याक्षेपसमाधानभाष्यम्)
तदन्तविधिना।।
(समाधानभाष्यम्)
अत उत्तरं पठति --- -
(1795 समाधानवार्तिकम्।। 1 ।।)
- सनादिष्वन्तग्रहण उक्तम्-
किमुक्तम्। पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् इति। इदं चापि प्रत्ययग्रहणम्। अयं चापि संज्ञाविधिः।।

(सूत्रारभ्यप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)
किमर्थं पुनरिदमुच्यते। न भूवादयो धातव इत्येव सिद्धम्।।
(सूत्रारभ्यसाधकभाष्यम्)
न सिध्यति। पाठेन धातुसंज्ञा क्रियते। न चैते तत्र पठ्यन्ते।।
(सूत्रप्रत्याख्यानसाधकप्रत्याक्षेपभाष्यम्)
कथं तर्ह्यन्येषामपठ्यमानानां धातुसंज्ञा भवति --- अस्तेर्भूः ब्रुवो वचिः चक्षिङ ख्याञ्त्रिति।।
(सूत्रारम्भसाधकप्रत्याक्षेपसमाधानभाष्यम्)
यद्यप्येते तत्र न पठ्यन्ते। प्रकृतयस्त्वेषां पठ्यन्ते। तत्र स्थानिवद्भावात्सिद्धम्।।
(सूत्रप्रत्याख्यानभाष्यम्)
इमेऽपि तर्हि यद्यपि तत्र न पठ्यन्ते। येषां त्वर्थे आदिश्यन्तेउते तत्र पठ्यन्ते। तत्र स्थानिवद्भावात्सिद्धम्।।
(सूत्रारम्भसाधकभाष्यम्)
न सिध्यति। आदेशाः स्थानिवदित्युच्यते। न चेमे आदेशाः।।
(सूत्रप्रत्याख्यानसाधकभाष्यम्)
इमे अप्यादेशाः।। कथम्?। आदिश्यते यः स आदेशः। इमे चाप्यादिश्यन्ते।।
(स्थानिवत्त्वानुपपत्तिभाष्यम्)
एवमपि षष्ठीनिर्दिष्टस्यादेशाः स्थानिवद्भवन्तीत्युच्यते। न चेमे षष्ठीनिर्दिष्टस्यादिश्यन्ते।।
(स्थानिवत्त्वोपपादनभाष्यम्)
षष्ठीग्रहणं निवर्तिष्यते।।
(निवृत्तिदूषणभाष्यम्)
यदि निवर्तते। अपवादे उत्सर्गकृतं प्राप्नोति। कर्मण्यण् आतोऽनुपसर्गे कः इति केऽप्यण्कृतं प्राप्नोति।।
(दूषणपरिहारभाष्यम्)
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नापवादे उत्सर्गकृतं भवतीति। यदयं श्यन्नादीन् कांश्चिच्छ्रितः करोति श्यन्श्नम्श्नाश्नुरिति।। सनाद्यन्ता धातवः।। 32 ।।
(विधिप्रकरणे प्रत्ययप्रकरणे विकरणप्रकरणम्)
-3-1-33- स्यतासी लृलुटोः (650)
(406 स्यतास्प्रत्ययविधिसूत्रम्।। 3।1।3 आ. 5 )
(विकरणानामुत्सर्गापवादत्वनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
इमे विकरणाः पठ्यन्ते। तत्र न ज्ञायते --- क उत्सर्गः, कोऽपवाद इति।। तत्र वक्तव्यम् --- अयमुत्सर्गः, अयमपवाद इति।।
(समाधानभाष्यम्)
इमे ब्रूमः --- यगुत्सर्गः, अपवादाः शबादयः स्यादयश्च।।
(वार्तिकशेषभाष्यम्)
यदि यगुत्सर्गः, अपवादः शबादिः स्यादयश्च--
(1796 आक्षेपवार्तिकम्।। 1 ।।)
- अपवादविप्रतिषेधाच्छबादिबाधनम्-
(भाष्यम्) अपवादविप्रतिषेधाच्छबादिभिः स्यादीनां बाधनं प्राप्नोति। शबादीनामवकाशः --- पचति पठति। स्यादीनामवकाशः पक्ष्यते यक्ष्यते। इहोभयं प्राप्नोति--पक्ष्यति यक्ष्यति। परत्वाच्छबादयः प्राप्नुवन्ति।।
(1797 आक्षेपबाधकवार्तिकम्।। 2 ।।)
- आक्षेपबाधकवार्तिकम्।। 2 ।।)
(भाष्यम्) अपवादो नाम स भवति यत्रानेकलक्षणप्रसङ्गः।। अत्र च भावकर्मणोर्यग्विधीयते, कर्तरि शप्। कः प्रसङ्गो यद्भावकर्मणोर्यकं कर्तरि शबादयो बाधेरन्।।
(1798 अन्यविधोत्सर्गापवादत्वविदूषणवार्तिकम्।। 3 ।।)
- अपवादविप्रतिषेधाच्छ्यन्नादिबाधनम्-
(भाष्यम्) अपवादविप्रतिषेधात् श्यन्नादिभिः स्यादीनां बाधनं प्राप्नोति। श्यन्नादीनामवकाशः --- -दीव्यति सीव्यति। स्यादीनामवकाशः --- पक्ष्यति यक्ष्यति। इहोभयं प्राप्नोति --- देविष्यति सेविष्यतीति। परत्वाच्छ्यन्नादयः प्राप्नुवन्ति।।
(आक्षेपबाधकभाष्यम्)
नैष दोषः। शबादेशाः श्यनादयः करिष्यन्ते।। शप् च स्यादिभिर्बाध्यते। तत्र दिवादिभ्यः स्यादिविषये शबेव नास्ति कुतः श्यन्नादयः।।
(आक्षेपभाष्यम्)
तत्तर्हि शपो ग्रहणं कर्तव्यम्।।

(समाधानभाष्यम्)
न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्?। कर्तरि शब् इति।।
(समाधानबाधकभाष्यम्)
तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः।।
(समाधानबाधकभाष्यम्)
नैष दोषः। दिवादिभ्य इत्येषा पञ्चमीशबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति।।
(समाधानबाधकभाष्यम्)
प्रत्ययविधिरयं न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति।।
(समाधानसाधकभाष्यम्)
नायं प्रत्ययविधिः। विहितः प्रत्ययः प्रकृतश्चानुवर्तते।।
(समाधानान्तरभाष्यम्)
अथ वा अनुवृत्तिः करिष्यते --- सार्वधातुके यक् स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवतीति। कर्तरि शप् स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति। दिवादिभ्यः श्यन् स्यतासी लृलुटोः च्लि लुङि च्ले)
सिज्भवति।।
(समाधानान्तरभाष्यम्)
अथ वान्तरङ्गः स्यादयः। काऽन्तरङ्गता?। लावस्थायामेव स्यादयः। सार्वधातुके श्यन्नादयः।। स्यतासी।। 33 ।।
-3-1-34- सिब्बहुलं लेटि (659)
(407 सिब्विकरणविधिसूत्रम्।। 3|1|3 आ. 6)
(1799 छान्दसत्वनियमवार्तिकम्।। 1 ।।)
- सिबुत्सर्गः छन्दसि-
(भाष्यम्) सिबुत्सर्गश्छन्दसि कर्तव्यः।।
(1800 सनादिषु विधानवार्तिकम्।। 2 ।।)
- सनाद्यन्तेनेषत्वाद्यर्थः-
(भाष्यम्) सनाद्यन्ताधिकारे च कर्तव्यः। किं प्रयोजनम्?। नेषत्वाद्यर्थः। इन्द्रो नस्तेन नेषतु। गावो नेष्टादिति।।
(1801 सनादिवर्गीयत्ववैयर्थ्यवार्तिकम्।। 3 ।।)
- प्रकृत्यन्तरत्वात्सिद्धम्-
(भाष्यम्) प्रकृत्यन्तरत्वात्सिद्धमेतत्।।
कथं प्रकृत्यन्तरं नेषः?।।
(पित्करणप्रत्याख्यानाधिकरणम्)
(आक्षेपभाष्यम्)
अथ किमर्थः पकारः?।।
(आक्षेपबाधकभाष्यम्)
स्वरार्थः अनुदात्तौ सुप्पितौ इत्येष स्वरो यथा स्यादिति।।
(1803 प्रत्याख्यानवार्तिकम्।। 5 ।।)
- पित्करणानर्थक्यं चानच्कत्वात्-
(भाष्यम्) पित्करणं चानर्थकम्। कुतः?। अनच्कत्वात्। अनच्कोऽयम्। तत्र नार्थः स्वरार्थेनानुबन्धेन पकारेण।।
(प्रत्याख्यानबधकभाष्यम्)
इटि कृते साच्को भविष्यति।।
(1804 प्रत्याख्यानसाधकवार्तिकम्।। 6 ।।)
- इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम्-
(भाष्यम्) आगमानुदात्तत्वेनेटोऽनुदात्तत्वं भविष्यति।।
(प्रत्याख्यानबाधकभाष्यम्)
एवं तर्हि सबयं कर्तव्यः। किं प्रयोजनम्?। यदवयासिसीष्ठाः एकाज्लक्षण इट्प्रतिषेधो मा भूदिति।।
(आक्षेपभाष्यम्)
क्वायमकारः श्रूयते?।
(समाधानभाष्यम्)
न क्वचिच्छ्रूयते। लोपोऽस्य भविष्यति। अतो लोपः आर्धधातुक इति।।
(प्रत्याख्यानसाधकभाष्यम्)
यदि न क्वचिच्छ्रूयते। नार्थः स्वरार्थेन पकारेणानुबन्धेन।।

(पकारप्रयोजनभाष्यम्)
एवमपि कर्तव्यः?। किं प्रयोजनम्। अनुदात्तस्य लोपो यथा स्यादुदात्तस्य लोपो मा भूदिति। किं च स्यात्?। उदात्तनिवृत्तिस्वरः प्रसज्येत।।
(1805 सिपो णित्वविधिवार्तिकम्।। 7 ।।)
- सिब् बहुलं छन्दसि णित्-
(भाष्यम्) सिब् बहुलं छन्दसि णिद् वक्तव्यः सविता धर्मे साविषत्। प्र ण आयूंषि तारिषत्।। सिब्बहुलम्।। 34 ।।
(आम्विकरणप्रकरणम्)
-3-1-35- कास्प्रत्ययादाममन्त्रे लिटि (652)
(408 आम्विकरणविधिसूत्रम्।। 3।1।3 आ. 7)
(1806 आम्विधिवार्तिकम्।। 1 ।।)
- कास्ग्रहणे चकास उपसंख्यानम्-
(भाष्यम्) कास्ग्रहणे चकास उपसंख्यानं कर्तव्यम्। चकासांचकार।।
(न्यासान्तरेण वैयर्थ्यभाष्यम्)
न कर्तव्यम्। चकास्प्रत्ययादिति वक्ष्यामि।।
(1807 न्यासान्तरेपि वार्तिककरणम्।। 2 ।।)
- चकास्ग्रहणे कास उपसंख्यानम्-
(भाष्यम्) चकास्ग्रहणे कास उपसंख्यानं कर्तव्यम्। कासांचक्रे।।
(दूषणभाष्यम्)
यथान्यासमेवास्तु।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् कास्ग्रहणे चकास उपसंख्यानम् इति।।
(दूषणोद्धारभाष्यम्)
नैष दोषः। चकास्शब्दे काश्शब्दोऽस्ति तत्र कास्प्रत्ययादित्येव सिद्धम्।।
(दूषणस्थैर्यभाष्यम्)
न सिध्यति। किं कारणम्। अर्थवतः कास्शब्दस्य ग्रहणम्। न च चकास्शब्दे काश्शब्दोऽर्थवान्।।
(समाधानसिद्धान्तिवार्तिकशेषभाष्यम्)
एवं तर्हि।
(1808 समाधानवार्तिकम्।। 3 ।।)
- कास्यनेकाचश्चुलुम्पाद्यर्थम्-
(भाष्यम्) कास्यनेकाचः इति वक्तव्यम्। किं प्रयोजनम्?। चुलुम्पाद्यर्थम्। चुलुम्पांचकार दरिद्रांचकार।। कास्प्रत्यया।। 35 ।।
-3-1-36- इजादेश्च गुरुमतोऽनृच्छः (653)
(409 आम्प्रत्ययविधिसूत्रम्।। 3.1.3 आ. 8)
(1809 आक्षेपवार्तिकम्।। 1 ।।)
- गुरुमत आम्विधाने लिण्निमित्तात् प्रतिषेधः-
(भाष्यम्) गुरुमत आम्विधाने लिण्निमित्ताद् गुरुमतः प्रतिषेधो वक्तव्यः। इयेष उवोष। गुणे कृते इजादेश्च गुरुमतोनृच्छ इत्याम् चप्रसज्जेत।।
(प्रत्याक्षेपभाष्यम्)
गुरुमद्वचनमिदानीं किमर्थं स्यात्?।
(1810 प्रत्याक्षेपबाधकवार्तिकम्।। 1 ।।)
- गुरुमद्वचनं किमर्थमिति चेद् णल्युत्तमे यजादिप्रतिषेधार्थम्-
(भाष्यम्) गुरुमद्वचनं किमर्थमिति चेण्णलि उत्तमे यजादीनां मा भूदीति। इयज अहम्।। उवप अहम्।।
(1811 आक्षेपबाधकवार्तिकम्।। 2 ।।)
- उपदेशवचनात्सिद्धम्-
(भाष्यम्) उपदेशे गुरुमत इति वक्तव्यम्।।
(आक्षेपभाष्यम्)
यद्युपदेशग्रहणं क्रियते उच्छेराम् वक्तव्यः। व्युच्छांचकारेति।
(1812 आक्षेपबाधकवार्तिकम्।। 3 ।।)
- ऋच्छिप्रतिषेधो ज्ञापक उच्छेराम्भावस्य -
(भाष्यम्) यदयम् अनृच्छः इति प्रतिषेधं शास्ति तद् ज्ञापयत्याचार्यः --- तुङ्निमित्ता यस्य गुरुमत्ता भवति तस्मादाम् इति।।
(गौरवापत्तिभाष्यम्)
स तर्हि ज्ञापकार्थ ऋच्छिप्रतिषेधो वक्तव्यः?।।

(अनन्यासिद्धफलसाधकत्वेन गौरवाङ्गीकारभाष्यम्)
ननु चावश्यं प्रास्यर्थोऽपि वक्तव्यः?।।
(फलस्यान्यथासिध्या गौरवसाधकभाष्यम्)
नार्थः प्रास्यर्थेन। ऋच्छत्यृताम् इति ऋच्छेर्लिटि गुणवचनं ज्ञापकम् --- र्नच्छेर्लिट्याम् भवतिःथ्य;ति।।
(अन्यथासिध्यनुपपत्तिभाष्यम्)
नैतदस्ति ज्ञापकम्। अर्त्यर्थमेतस्यात्।।
(प्रश्नभाष्यम्)
कथं पुनर्ऋच्छेर्लिटि। गुण उच्यमानोऽर्त्यर्थः शक्यो विज्ञातुम्?।
(समाधानभाष्यम्)
सार्मथ्यात्। ऋच्छिर्लिटि नास्तीति कृत्वा प्रकृत्यर्थो विज्ञास्यते। तद्यथा --- तिष्ठतेरित् जिघ्रतेर्वे ति। चङि तिष्ठतिजिघ्रती न स्त इति कृत्वा प्रकृत्यर्थो विज्ञायते।।
(अनुयोगभाष्यम्)
किं पुनरर्तेर्लिटि गुणवचने प्रयोजनम्?।
(उत्तरभाष्यम्)
आरतुः। आरुः । एतद्रूपं यथा स्यात्।।
(अनुयोगभाष्यम्)
किं पुनः कारणं न सिध्यति?।
(गुणवचनावश्यकताभाष्यम्)
द्विर्वचने कृते (सवर्णदीर्घत्वम्) सवर्णदीर्घत्वे च (कृते) यदि तावद्धातुग्रहणेन ग्रहणम्, ऋकारान्तानां लिटि गुणो
भवतीति गुणे कृते रपरत्वे च अरतुः अरुरित्येतद्रूपं प्रसज्येत।। अथाभ्यासग्रहणेन ग्रहणम्। उरदत्वे रपरत्वम् हलादिशेषः। अत आदेरिति दीर्घत्वम् तत आतो लोप इटिच इत्याकारलोपे अतुः उरिति वचनमेव श्रूयेत।।
गुणे पुनः सति गुणे कृते रपरत्वे च द्विर्वचनम् हलादिः शेषः अत आदेरिति दीर्घत्वम् ततः सिद्धं भवति --- -आरतुरारुरिति। यथा आटतुः आटुरिति।।
(अनुयोगपूर्वकमारतुरित्यादिसिद्धिभाष्यम्)
किं पुनः कारणं सवर्णदीर्घत्वं तावद्भवति न पुनरुस्त्वम्।। परत्वादुस्त्वेन भवितव्यम्।।
(गुणविधानावश्यकाभाष्यम्)
अन्तरङ्गत्वात्सवर्णदीर्घत्वं प्राप्नोति। अन्तरङ्गं सवर्णदीर्घत्वं बहिरङ्गमुरत्वम्। कान्तरङ्गता। वर्णावाश्रित्य सवर्णदीर्घत्वमङ्गस्योरत्वम्।।
(गुणानावश्यकताभाष्यम्)
उस्त्वमप्यन्तरङ्गम्। कथम्?। वक्ष्येत्येतत्प्रागभ्यासविकारेभ्योऽङ्गाधिकारःइति। उभयोरन्तरङ्गयोः परत्वादुस्त्वम्। उस्त्वे च कृते रपरत्वम् हलादिः शेषः अत आदे रिति दीर्घत्वं परस्य रूपस्य यणादेशः सिद्धं भवति --- आरतुः आरुरिति।
(गुणस्यान्यथासिद्धिप्रतिपादनभाष्यम्)
अथापि कथं चिदर्तेर्लिटि गुणेनार्थः स्यात्। एवमपि न दोषः ऋच्छत्यृताम् इति ऋकारोऽप्यत्र निर्दिश्यते। कथम्। प्रश्लिष्टनिर्देशोऽयम् --- -ऋच्छति ऋ ऋताम् --- ऋच्छत्यृतामिति।।
(आक्षेपभाष्यम्)
इहापि तर्हि प्राप्नोति --- -चक्रतुश्चक्रुरिति।
(समाधानभाष्यम्)
संयोगादिग्रहणं नियमार्थं भविष्यति --- संयोगादेरेवाकेवलस्य नान्यस्याकेवलस्येति।।
(आक्षेपभाष्यम्)
तदेतदन्तरेणार्तेर्लिटि गुणवचनं, रूपं सिद्धं भवति। अन्तरेण च ऋच्छिग्रहणम् अर्तेर्लिटि गुणः सिद्धः स एषोऽनन्यार्थ ऋच्छिप्रतिषेधो वक्तव्यः। उच्छेर्वा आम् वक्तव्यः।
(सिद्धान्तभाष्यम्)
उभयं न वक्तव्यम्। उपदेशग्रहणं न करिष्यते।।
कस्मान्न भवति --- इयेष उवोषेति।।
(1893 वार्तिकम्।। 4 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति।
(1894 प्रतिषेधवार्तिकम्।। 5 ।।)
- ढ्य;र्णोतेश्चोपसंख्यानम्-
(भाष्यम्) ढ्य;र्णोतेश्चोपसंख्यानं कर्तव्यम् प्रोर्णुनाव।।

(प्रत्याख्यानभाष्यम्)
न कर्तव्यम्,
वाच्य ाढ्य;र्णोर्णुवद्भावे यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेड्डपग्रहात्।।
अथ वा उकारोऽप्यत्र निर्दिश्यते। कथम्?।
अविभक्तिको निर्देशः --- अनृच्छ उ अनृच्छो दया यासश्चेति।। इजादेश्च।। 36 ।।
-3-1-38- उषविदजागृभ्योन्यतरस्याम् (655)
(410 आम्विकरणविधिसूत्रम्।। 3.1.3 आ. 9)
(1895 वार्तिकम्।। 1 ।।)
- विदेराम् कित् -
(भाष्यम्) विदेराम किद्वक्तव्यः। विदांचकार।।
(वार्तिकवैयर्थ्यभाष्यम्)
न वक्तव्यः। विदिरकारान्तः।।
(दूषणभाष्यम्)
यद्यकारान्तः, वेत्तीति गुणो न सिध्यति।।
(दूषणपरिहारभाष्यम्)
लिट्सन्नियोगेन।।
(दूषणभाष्यम्)
एवमपि विवेदेति न सिध्यति।।
(दूषणपरिहारभाष्यम्)
एवं तर्हि आम् सन्नियोगेन।।
भारद्वाजीयाः पठन्ति विदेराम् कित ।।
निपातनाद्वा अगुणत्वम्- इति ।। उषविद ।। 38 ।।
-3-1-39- भीह्रीभृहुवां श्लुवच्च (656)
(411 आम्विकरणविधिसूत्रम्।। 3.1.3 आ. 10)
(आक्षेपभाष्यम्)
श्लुवदतिदेशे किं प्रयोजनम्?।
(समाधानभाष्यम्)
श्लुवदतिदेशे प्रयोजनं द्वित्वेत्वे बिभरांचकार।। भीह्रीभृ।। 39 ।।
-3-1-40- कृञ्चानुप्रयुज्यते लिटि (657)
(412 आम्संनियोगेनानुप्रयोगविधिसूत्रम्। 3.1.3 आ.11 )
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते।
(आक्षेपबाधकभाष्यम्)
अनुप्रयोगो यथा स्यात्।
(आक्षेपसाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। आमन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोर्थ इति कृत्वानुप्रयोगो भविष्यति।।
(समाधानवार्तिकशेषभाष्यम्)
अत उत्तरं पठति --- -
(1816 प्रयोजनवार्तिकम्।। 1 ।।)
- कृञोऽनुप्रयोगवचनमस्तिभुवोः प्रतिषेधार्थम्-
(भाष्यम्) कृञोऽनुप्रयोगवचनं क्रियते (किं प्रयोजनम्?। अस्तिभुवोः प्रतिषेधार्थम्) अस्तिभुवोरनुप्रयोगो मा भूदिति।।
(1817 प्रयोजनान्तरवार्तिकम्।। 2 ।।)
- आत्मनेपदविध्यर्थं च-
(भाष्यम्) आत्मनेपदविध्यर्थं च कृञोनुप्रयोगवचनं क्रियते। आत्मनेपदं यथा स्यात्।
(2 यप्रयोजनस्य यत्नान्तरसाध्यताभाष्यम्)
उच्यमानेऽप्येतस्मिन्नवश्यमात्मनेपदार्थो यत्नः कर्तव्यः।
(प्रथमप्रयोजननिराकरणभाष्यम्)
अस्तिभूप्रतिषेधार्थेन चापि नार्थः।।

(1818 भ्वस्त्यनुप्रयोगे इष्टापत्तिवार्तिकम्।। 3 ।।)
- इष्टः सर्वानुप्रयोगः-
(भाष्यम्) सर्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते।।
(आक्षेपभाष्यम्)
किमिष्यत एव आहोस्वित्प्राप्नोति?।।
(इष्टापत्तिभाष्यम्)
इष्यते च, प्राप्नोति च। कथम्?। कृञ्निति नेदं धातुप्रग्रहणम् किं तर्हि?। प्रत्याहारग्रहणम्।। क्व सन्निविष्टानां प्रत्याहारः।।
कृभ्वस्तियोगे इत्यतः प्रभृत्याकृञ्त्रो ञ्ञकारात्।।
(1819 प्रत्याख्यानवार्तिकम्।। 4 ।।)
- सर्वानुप्रयोग इति चेदशिष्यमर्थाभावात्-
(भाष्यम्) सर्वानुप्रयोग इति चेदशिष्यं कृञ्ञोऽनुप्रयोगवचनम्। किं कारणम्?। अर्थाभावात्। आमन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वा अनुप्रयोगो भविष्यति।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम् --- -कृभ्वस्तीनामेवानुप्रयोगो यथा स्यात् पचादीनां मा भूदिति।।
(प्रत्याख्यानभाष्यम्)
एतदपि नास्ति प्रयोजनम्।
(1820 प्रत्याख्यानवार्तिकम्।। 5 ।।)
- अर्थाभावाच्चान्यस्य सिद्धम् -
(भाष्यम्) (अर्थाभावाच्चान्यस्य सिद्धमेतत् कुतः) कृभ्वस्तयः क्रियासामान्यवाचिनः क्रियाविशेषवाचिनः पचादयः। न च सामान्यवाचिनोरेव विशेषवाचिनोरेव वा प्रयोगो भवति। तत्र विशेषवाचिन उत्पत्तिः। सामान्यवाचिनोऽनुप्रयोक्ष्यन्ते।।
(1821 प्रयोजनवार्तिकम्।। 6 ।।)
- लिट् परार्थं वा -
(भाष्यम्) लिट्परार्थं तर्हि कृञ्ञोऽनुप्रयोगवचनं क्रियते। लिट्परस्यैवानुप्रयोगो यथा स्यात्। अन्यपरस्य मा भूदिति।।
किं परस्य पुनः प्राप्नोति?। लट्परस्य।।
(प्रत्याख्यानसाधकभाष्यम्)
न लट्परस्यानुप्रयोगेण भूतकालो विशेषितः स्यात्।।
(प्रयोजनभाष्यम्)
निष्ठापरस्य तर्हि मा भूत्।।
(प्रत्याख्यानभाष्यम्)
न निष्ठापरस्यानुप्रयोगेण पुरुषोपग्रहौ विशेषितौ स्याताम्।।
(प्रयोजनभाष्यम्)
लुङ्परस्य तर्हि मा भूत्।।
(प्रत्याख्यानभाष्यम्)
न लुङ्परस्यानुप्रयोगेणानद्यतनभूतकालो विशेषितः स्यात्।।
(प्रयोजनभाष्यम्)
अयं तर्हि भूते परोक्षानद्यतने लङ् विधीयते
हशश्वतोर्लङ्च इति, तत्--परस्य मा भूदिति।।
(प्रत्याख्यानभाष्यम्)
एतदपि नास्ति प्रयोजनम्।। एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यति। तद्यथा --- गोषु स्वामी अश्वेषु चेति। न हि भवति गोषु वाश्वानां च स्वामीति।।
(1822 प्रयोजनवार्तिकम्।। 7 ।। )
- अर्थसमाप्तेर्वानुप्रयोगो न स्यात्-
(भाष्यम्) अर्थसमाप्तेस्तर्ह्यनुप्रयोगो न स्यात्।
आमन्तेन च परिसमाप्तोऽर्थ इति कृत्वा अनुप्रयोगो न स्यात्।।
(प्रत्याख्यानभाष्यम्)
एतदपि नास्ति प्रयोजनम्। इदानीमेव ह्युक्तमामन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वानुप्रयोगो भविष्यतीति।।
(1823 प्रयोजनवार्तिकम्।। 8 ।।)
- विपर्यासनिवृत्त्यर्थं वा -
(भाष्यम्) विपर्यासनिवृत्तर्थं तर्हि कृञ्ञोऽनुप्रयोगवचनं क्रियते। इर्हांचक्रे। चक्रे इर्हामिति मा भूत्।

(1842 प्रयोजनवार्तिकम्।। 9 ।।)
- व्यवहितनिवृत्त्यर्थं च-
(भाष्यम्) व्यवहितनिवृत्त्यर्थं च कृञ्त्रोऽनुप्रयोगवचनं क्रियते। अन्वेव च कृञ्त्रोऽनुप्रयोगो यथा स्यात् --- इहाँचक्रे।। (व्यवहितस्य मा भूदिति) इहाँ देवदत्तश्चक्रे इति।। कृञ्चानु ।। 40 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।।
-3-1-43- च्लि लुङि (660)
(413 च्लिविकरणविधिसूत्रम्।। 3.1.4 आ .1)
(च्लिग्रहणप्रयोजनाधिकरणम्।)
(आक्षेपभाष्यम्)
क्वाऽयं च्लिः श्रूयते।।
(आक्षेपबाधकभाष्यम्)
न श्रूयते। एतस्य सिजादय आदेशा उच्यन्ते।।
(आक्षेपसाधकभाष्यम्)
यदि न क्वचिच्छ्रूयते,किमर्थं च्लिरूत्सर्गः क्रियते। न सिजुत्सर्ग एव कर्तव्यः तस्य क्सादयोऽपवादा भविष्यन्ति।।
(समाधानभाष्यम्)
अत उत्तरं पठति ---
(1825 प्रथमप्रयोजनवार्तिकम्।। 1 ।।)
-च्ल्युत्सर्गः सामान्यग्रहणार्थः-
(भाष्यम्) च्लिरुत्सर्गः क्रियते। (किं प्रयोजनम्?) सामान्यग्रहणार्थः।। क्वं सामान्यग्रहणार्थेनार्थः? मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्योलेः इति। तत्रावरतस्त्रयाणां ग्रहणं कर्तव्यं स्यात् --- चङङोः, सिचश्चेति।।
(1826 द्वितीयप्रयोजनवार्तिकम्।। 2 ।।)
- क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः-
(भाष्यम्) क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः चिरुत्सर्गः क्रियते च्लेरनिटः इति क्सः सिद्धो भवति।।
(1827 प्रयोजनान्तरवार्तिकम्।। 3 ।।)
- घस्लृभावे च -
(भाष्यम्) घस्लृभावे च च्लावेव कृते लृदितः इत्यङ् सिद्धो भवति।।
(चकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथ चित्करणं किमर्थम्?
(1828 प्रयोजनवार्तिकम्।। 4 ।।)
- च्लेः चित्करणं विशेषणार्थम् -
(भाष्यम्) च्लेश्चित्करणं क्रियते। किमर्थम्? विशेषणार्थम्। क्व विशेषणार्थेनार्थः? च्लेः सिच् इति। लेः सिच् इत्युच्यमाने लिङ्सिटोरपि प्रसज्येत।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। लुङीत्युच्यते। न च लुङि लिङ्लिटौ स्तः।।
(इकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथेदित्करणं किमर्थम्।।
(1829) प्रयोजनवार्तिकम्।। 5 ।।)
- इदित्करणं सामान्यग्रहणार्थम् -
(भाष्यम्) इदित्करणं क्रियते। (किमर्थम्?) सामान्यग्रहणार्थम्। क्व सामान्यग्रहणार्थेनार्थः? मन्त्रे घसह्वरणशवृदहाद्वृचूकृगमिजनिभ्यो लेः इति, आमः इति च।
(चकारप्रयोजनसाधकभाष्यम्)
इकारे चेदानीं सामान्यग्रहणार्थे क्रियमाणे अवश्यं सामान्यग्रहणाविघातार्थश्चकारः कर्तव्यः।। क्व सामान्यग्रहणाविघातार्थेनार्थश्चकारेण? अत्रैव
(च्ल्युत्सर्गेपि प्रथमप्रयोजननिराकरणभाष्यम्)
यत्तावदुच्यते --- - च्लिरुत्सर्गः सामान्यग्रहणार्थ इति।।
क्रियमाणेऽपि वै च्ल्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति --- च्लि लुङि लेरिति।।
(च्ल्युत्सर्गे लाघवभाष्यम्)
यदेतत् लेः इति, तत्परार्थे भविष्यति। कथम्? यदेतद् गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु इति अत्र सिचो ग्रहणम्। एतद् लेः इति वक्ष्यामि।।

(दूषणभाष्यम्)
यदि लेरित्युच्यते धेटश्धातुः शब्यं प्राप्नोति --- --अदधद् अधाद् अधासीद्। अदधादित्येतदपि प्राप्नोति।।
(दूषणपरिहारभाष्यवार्तिकम्।।)
- न चङो लुकि द्विर्वचनम् -
(व्याख्याभाष्यम्)
न चङो लुकि द्विर्वचनेन भाव्यम्। किं कारणम्? चङि इत्युच्यते न चात्र चङं पश्यामः।।
(दूषणसाधकभाष्यम्)
प्रत्ययलक्षणेन।
(दूणषबाधकभाष्यम्)
न लुमतातस्मिन् इति प्रत्ययलक्षणप्रतिषेधः ।।
(दूषणभाष्यम्)
बहुवचने तर्हि चातुः शब्यं प्राप्नोति --- अदधत् अधुः अधासिषुः अधानित्यपि प्राप्नोति।।
(दूषणपरिहारभाष्यम्)
नैष दोषः। आत इति जुस्भावो भविष्यति।।
(दूषणसाधकभाष्यम्)
न सिध्यति। सिज्ग्रहणं तत्रानुवर्तते।।
(दूषणपरिहारभाष्यम्)
सिज्ग्रहणं तत्र निवर्तिष्यते।।
(दूषणभाष्यम्)
यदि निवर्तिते अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति।।
(दूषणपरिहारभाष्यम्)
एवं तर्हि लुक् सिजपवादो विज्ञास्यते।।
(दूषणभाष्यम्)
यदि लुक् सिजपवादो विज्ञायते। मा हि दातामित्यत्र आदिस्सिचो।?न्यतरस्याम् इत्येष स्वरो न प्राप्नोति। तस्मान्नैतच्छक्यं (वक्तृम्) ----लुक्सिजपवाद इति।
(सिद्धान्तिभाष्यम्)
न चेदेवमुच्यते अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति। तस्माद् आतः इत्यत्र सिज्ग्रहणमनुवर्तते। तस्मिंश्चानुवर्तामाने धेटश्धातुःशब्यं प्राप्नोति। तस्माह गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु इत्यत्र सिज्ग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति --- च्लि लुङि च्लेः सिच् लेरिति।।
(द्वितीयप्रयोजननिराकरणभाष्यम्)
यदप्युच्यते --- क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थ इति।। धातुमेवात्रानिट्त्वेन विशेषयिष्यामः --- धातोरनिट इति।।
कथं पुनर्धातुर्नामानिट् स्यात्?
धातुरेवानिट्।। कथम्? अनिमित्तं वा इटः अनिट्।। न वा तस्मादिडस्ति सोऽयमनिट् अनिडिति।।
(आक्षेपभाष्यम्)
अथ धातो विशेष्यमाणे क्व योऽनिट् इति विशेषयिष्यते? यदि विज्ञायते --- -निष्ठायामनिटः इति। भूयिष्ठेभ्यः प्राप्नोति। भूयिष्ठा हि शलन्ता इगुपधानिष्ठायामनिटः।।
अथ विज्ञायते लिटि योऽनिडिति। न कुतश्चित्प्राप्नोति। सर्वे हि शलन्ता इगुपधा लिटि सेटः।।
(समाधानभाष्यम्)
किं पुनः कारणं धातौ विशेष्यमाण एतयोर्विशेषयोर्विशेषयिष्यते। न पुनर्यत्र सामान्येनेटो विधिप्रतिषेधौ? क्व सामान्येन? वलाद्यार्धधातुके।।
(तृतीयप्रयोजनप्रत्याख्यानभाष्यम्)
यदप्युच्यते - घस्लृभावे चेति। आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु। तत्रार्धधातुकसामान्ये घस्लृभावे कृते लृदित इति अङ् भविष्यति।। च्लिलुङि।। 43 ।।
-3-1-44- च्लेः सिच् (661)
(414 च्लेः सिजादेशविधिसूत्रम्।। 3.1.4 आ. 2)
(चकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थश्चकारः?।
विशेषणार्थः। क्व विशेषणार्थेनार्थः?। सिचिवृद्धिः परस्मैपदेषु इति। सौ वृद्धिः इतीयत्युच्यमाने अग्निर्वायुरित्यत्रापि प्रसज्येत।।
(प्रयोजननिराकरणभाष्यम्)

नैतदस्ति प्रयोजनम्। परस्मैपदेष्वित्युच्यते। न चात्र परस्मैपदं पश्यामः।।
(प्रयोजनभाष्यम्)
स्वरार्थस्तर्हि। चितोऽन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। अनच्कोयम् तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन।
(प्रयोजनसाधकभाष्यम्)
इति कृते साच्को भविष्यति।।
(प्रयोजनबाधकभाष्यम्)
तत्र प्रत्ययाद्युदात्तत्वेनेट उदात्तत्वं भिविष्यति।।
(प्रयोजनसाधकभाष्यम्)
न सिध्यति। आगमा अनुदात्ता भवन्तीति अनुदात्तत्वं प्राप्नोति।
(समाधानभाष्यम्)
अत उत्तरं पठति --- -
(1830 प्रयोजनबाधकवार्तिकम्।। 1 ।।)
- अर्थवत्तु चित्करणसार्मथ्याद्धीट उदात्तत्वम्-
(भाष्यम्) नैष देषः। अर्थवत्तु सिचश्चित्करणम्। कोऽर्थः?। सिचः चित्करणसार्मथ्याद्धि इट उदात्तत्वं भविष्यति।। (नाप्राप्ते प्रत्ययस्वरे आगमानुदात्तत्वमारभ्यते तद्यथैव प्रत्ययस्वरं बाधते एवं स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत।।)
(1831 वार्तिकद्वितीयखण्डम्।।)
- तस्माच्चित्करणम्-
(भाष्यम्) तस्माच्चकारः कर्तव्यः।।
(सिच इकारोच्चारणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथेदित्करणं किमर्थम्?।
(1832 प्रयोजनवार्तिकम्।। 3 ।।)
- इदित्करणं नकारलोपाभावार्थम्-
(भाष्यम्) इदित्करणं क्रियते। नकारलोपो मा भूदिति। अमंस्त अमंस्थाः अनिदितां हल उपधायाः क्ङिति इति।
(1833 प्रयोजननिराकरणवार्तिकम्।। 4 ।।)
-न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाभावस्य-
(भाष्यम्) न चैतत्प्रयोजनमस्ति। किं कारणम्?। यदयं हनः सिच् इति हन्तेः सिचः कित्त्वं शास्ति तज् ज्ञापयत्याचार्यः न सिजन्तस्य नकारलोपो भवति इति।।
(प्रयोजनसाधकभाष्यम्)
नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्।। किम्?। सिच्येव नकारलोपो यथा स्यात्, परस्मिन्निमित्ते माभूदिति।
(विशेषप्रश्नभाष्यम्)
कः पुनरत्र विशेषः। सिचि वा नलोपे सति परस्मिन्निमित्ते वा।
(विशेषप्रदर्शकोत्तरभाष्यम्)
अयमस्ति विशेषः --- -सिचि नलोपे सति नलोपस्यासिद्धत्वादकारलोपो न भवति। परस्मिन्पुनर्निमित्ते सति नकारलोपे कृते अकारलोपः प्रसज्येत।। समानाश्रयमसिद्धम्। व्याश्रयं तु सिद्धमेव। व्याश्रयं चेदम्।।
(विशेषाभावसाधकभाष्यम्)
ननु च परस्मिन्नपि निमित्ते नकारलोपे सति अकारलोपो न भवति। कथम्?। असिद्धं बहिरङ्गमन्तरङ्ग इति।।
(प्रागुक्तप्रयोजननिराकरणदाढर्य भाष्यम्)
तदेतद्धन्तेः सिचः कित्करणं ज्ञापकमेव न सिजन्तस्य नकारलोपो भवति इति।।
(1834 उपायान्तरवार्तिकम्।। 5 ।।)
-इदिद्वा स्थानिवत्वात्-
(भाष्यम्) अथाऽप्यनेनेदिताऽर्थः स्यात्। इदितोऽयमादेशः स्थानिवद्भावादिदिद्भविष्यति।।
(1836 सिज्विधिवार्तिकम्।। 6 ।।)
-स्पृशमृशकृषतृपदृपां सिज्वा -
(भाष्यम्) स्पृशमृशकृषतृपदृपां सिज् वेति वक्तव्यम्। स्पृश --- -अस्पृक्षद् अस्प्राक्षीत्। मृश --- -तृप --- -अतृपद् अत्राप्सीत् दृप --- अदृपद् अद्राप्सीत्।। किं प्रयोजनम्। सिच् यथा स्यात्।।
(अनुयोगभाष्यम्)

अथ क्सः सिद्धः।।
(उत्तरभाष्यम्)
कथम्?। शल इगुपधादनिटः क्सः इत्येव।।
(वार्तिकवैयर्थ्यभाष्यम्)
सिजपि सिद्धः।। कथम्?। च्लेः चित्करणं प्रत्याख्यायते। तत्र च्लावेव झल्लक्षणेऽमागमे कृते विहतनिमित्तत्वात् क्सो न भविष्यति।।
(दूषणभाष्यम्)
यद्येवम् अन्त्यस्य सिजादयः प्राप्नुवन्ति।।
(1836 दूषणपरिहारवार्तिकम्।। 7 ।।)
- सिद्धं तु सिचो यादित्वात्-
(भाष्यम्) सिद्धमेतत्। कथम्? यादित्वात्।। यादिः सिच् करिष्यते। सः अनेकाल् शित्सर्वस्य इति सर्वादेशो भविष्यति।। किं पुनर्न श्रूयते यकारः?। लुप्तनिर्दिष्टो यकारः।।
(आक्षेपभाष्यम्)
चङङोः कथम्।
(1837 समाधानभाष्यम्।। 8 ।।)
- चङङोः प्रश्लिष्टनिर्देशात्सिद्धम्-
(भाष्यम्) चङङोरपिप् सिद्धम्। कथम्?। प्रश्लिष्टनिर्देशात्।) प्रश्लिष्टनिर्देशोऽयम् --- --च अङ्चंङ्। अ अङ् अङ्। सः अनेकाल् शित्सर्वस्य इति सर्वादेशो भविष्यति।।
(अनुयोगभाष्यम्)
चिणः कथम्।
(1838 समाधानवार्तिकम्।। 9 ।।)
।। चिणोऽनित्त्वत्-
(भाष्यम्) चिणः चकारस्य अनित्त्वात्सिद्धम्।। किमिदमनित्त्वादिति?। अन्त्यस्यायं स्थाने भवन्नप्रत्ययः स्यात्। असत्यां प्रत्ययसंज्ञायामित्संज्ञा न। असत्यामित्संज्ञायां लोपो न। असति लोपे अनेकाल्। यदाऽनेकाल् तदा सर्वादेशः। यदा सर्वादेशस्तदा प्रत्ययः। यदा प्रत्ययः तदेत्संज्ञा। यदेत्संज्ञा तदा लोपः।।
(वार्तिकसिद्धान्तभाष्यम्)
एष च तत्र वार्तिककारस्य निर्णयः सप्रयोजनं चित्करणमिति।।
(चकारस्यानित्त्वे दूषणान्तरभाष्यम्)
अपि च त्रैशब्द्यं न प्रकल्प्यते। अस्पृक्षत् अस्प्राक्षीत् अस्पार्क्षादिति। सिचि पुनः सति विभाषा सिच् सिध्यति झल्लक्षणोऽमागमो विभाषा।।
(सिज्विधेरावश्यकताभाष्यम्)
यस्य खल्वपि अमा अङो निमित्तं न विहन्यते स स्यादेव।। तस्मात् सुष्ठूच्यते स्पृशमृशकृषतृपदृपां सिज्वेति।। च्लेः सिच्।। 44 ।।
-3-1-45- शल इगुपधादनिटः क्सः (662)
(415 च्लेः क्सादेशविधिसूत्रम्।। 3.1.4 आ. 3)
(1839 आक्षेपवार्तिकम्।। 1 ।।)
- क्सविधान इगुपधाभावः च्लेर्गुणनिमित्तत्वात्-
(भाष्यम्) क्सविधाने इगुपधत्वस्याभावः। किं कारणम्?। च्लेर्गुणनिमित्तत्वात्। च्लिर्गुणस्य निमित्तम्। तत्र च्लावेव गुणे कृते इगुपधात् --- इति क्सो न प्राप्नोति।।
(1840) समाधानवार्तिम्।। 2 ।।)
- न वा क्सस्याऽनवकाशत्वादपवादो गुणस्य-
(भाष्यम्) न वा एष दोषः। किं कारणम्?। क्सस्यानवकाशत्वात्। अनवकासः क्सो गुणं बाधिष्यते।।
(1841 आक्षेपवार्तिकम्।। 3 ।।)
- अनिड्वचनमविशेषणं च्लेर्नित्यादिष्टत्वात्-
(भाष्यम्) अनिड्वचनमविशेषणम्। किं कारणम्। च्लेर्नित्यादिष्टत्वात्। नित्यादिष्टः च्लिः न क्वचित् श्रूयते। तत्र च्लेरनिट इति क्सो न प्राप्नोति।
(1842 दूषणपरिहारवार्तिकप्रथमखण्डम्।। 4 ।।)
- न वा क्सस्य सिजपवादत्वात् तस्य चानिडाश्रयत्वादनिटि प्रसिद्धे क्सविधिः-
(भाष्यम्) न वैष दोषः। किं कारणम्?। क्सस्य सिजपवादत्वात्। सिजपवादः क्सः। स चानिडाश्रयः। नचापवादविषयमुत्सर्गोऽभिनिविशते। पूर्वं ह्यपवादाः प्रवर्तन्ते पश्चादुत्सर्गाः प्रकल्प्य चापवादविषयमुत्सर्गो भिनिविशते। तन्न तावदत्र कदाचित् सिज् भवति क्समपवादं प्रतीक्षते। क्सस्य सिजपवादत्वात्।। तस्य चानिडाश्रयत्वाद् अनिट् प्रसिद्धः। अनिटि प्रसिद्धे क्सविधिः । अनिटि प्रसिद्धे क्सो भविष्यति।।
सिजिदानीं क्व भविष्यति?।

(1842 वार्तिकद्वितीयखण्डम्।। 5 ।।)
- शेषे सिज्विधानम्-
(भाष्यम्) शेषे सिज्विधानं भविष्यति अकोषीद् अमोषीद् इति।। शल इगुपधा।। 45 ।।
-3-1-46- श्लिष आलिङ्गने (663)
(416 च्लेः क्सादेशनियमसूत्रम्।। 3.1.4 आ.4)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते?।
(आक्षेपपरिहारभाष्यम्)
नियमार्थम्। नियमार्थोऽयमारम्भः --- श्लिष आलिङ्गन एव क्सो यथा स्यात्। इह मा भूत् --- उपाश्लिषद् जतु च काष्ठं च, समाश्लिषद् ब्राह्मणकुलमिति।।
अत उत्तरं पठति --- -
(1846 नियमानुपपत्तिवार्तिकम् ।। 1 ।।)
- श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात्-
(भाष्यम्) श्लिष आलिङ्गन इति नियमस्यानुपपत्तिः।। किं कारणम्?। विधेयभावात्।।
कैमर्थक्यान्नियमो भवति। विधेयं नास्तीति कृत्वा।।
इह चास्ति विधेयम्। किम्?। पुषादिपाठादङ्प्राप्तः तद्बाधनार्थः क्सो विधेयः।।
तत्रापूर्वो विधिरस्तु नियमो वेति।।
अपूर्व एव विधिः स्यान्न नियमः।।
(दूषणप्रश्नभाष्यम्)
किं च स्याद्, यदायं नियमो न स्यात्?।
(दूषणभाष्यम्)
आत्मनेपदेष्वालिङ्गनेऽनालिङ्गने च क्सः प्रसज्जयेत।।
(दूषणान्तरभाष्यम्)
यथैव क्सोऽङं बाधते, एवं चिणमपि बाधेत --- उपाश्लेषि कन्या देवदत्तेनेति।।
(1844 दूषणपरिहारिन्यासान्तरवार्तिकप्रथमखण्डम्।। 2 ।।)
- सिद्धं तु श्लिष आलिङ्गनेऽचिण्विषये-
(भाष्यम्) सिद्धमेतत्।। कथम्?। श्लिष आलिङ्गने अचिण्विषये क्सो भवतीति वक्तव्यम्।।(1845
न्यासान्तरवार्तिकद्वितीयखण्डम्।। 3 ।।)
- अङ्विधाने च श्लिषोऽनालिङ्गने-
(भाष्यम्) अङ्विधाने च श्लिषोऽनालिङ्गने इति वक्तव्यम्।।
(आक्षेपभाष्यम्)
सिध्यति। सूत्रं तर्हि भिद्यते।
(सिद्धान्तिभाष्यम्)
यथान्यासमेवास्तु।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् इति।
(सिद्धान्तिभाष्यम्)
नैष दोषः।
(1846 सिद्धान्तिवार्तिकम्।। 4 ।।)
- योगविभागात्सिद्धम्-
(भाष्यम्) योगविभागः करिष्यते। श्लिषः श्लिषः क्सो भवति। किमर्थमिदम्?। पुषादिपाठादङ् प्राप्नोति तद्बाधनार्थम्।।
ततः आलिङ्गने। आलिङ्गने च श्लिषः क्सो भवति।। इदमिदानीं किमर्थं स्यात्? नियमार्थम्। श्लिष
आलिङ्गने एव।। क्व मा भूत्?। उपाश्लिषज्जतु च काष्ठं च, समाश्लिषद् ब्राह्मणकुलमिति।
(दूषणान्तरपरिहारभाष्यम्)
यदप्युच्यते --- -यथैव च क्सोऽङं बाधते, एवं चिणमपि बाधेतेति। पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् इत्येवं क्सोऽङं बाधिष्यते न चिणम्।। अथवा तत्र वक्ष्यति --- चिणित्यनुवर्तमाने पुनश्चिण्ग्रहणस्य प्रयोजनम्। चिणेव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति।। श्लिष आलिङ्गने।। 46 ।।
-3-1-48- णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (665)
(417 च्लेश्चङादेशविधिसूत्रम्।। 3.1.4 आ. 5)

(1846 शेषपूर्तिवार्तिकम्।। 1 ।।)
- णिश्रिद्रस्रुषु कमेरुपसंख्यानम्-
(भाष्यम्) णिश्रिद्रुस्रुषु कमेरुपसंख्यानं कर्तव्यम्।।
नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः।।
(1847 न्यूनतापूर्तिवार्तिकम्।। 2 ।।)
- कर्मकर्तरि च-
(भाष्यम्) कर्मकर्तरि चोपसंख्यानं कर्तव्यम्। कारयति कटं देवदत्तः अचीकरत कटः स्वयमेव। उच्छ्रयति कटं देवदत्तः उदशिश्रियत कटः स्वयमेवेति।।
(1848 न्यूनताखण्डनवार्तिकम्।। 3 ।।)
- न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम्-
(भाष्यम्) न वा कर्तव्यम्। किं कारणम्?। कर्मण्यविधानात्। नहि कश्चित्कर्मणि विधीयते यश्चङं बाधेत।। कर्तृत्वाच्च कर्मकर्तुः सिद्धम्।। अस्ति च कर्मकर्तरि कर्तृत्वमिति कृत्वा चङ् भविष्यति।।
(खण्डनयुक्तिबाधकभाष्यम्)
ननु चायं कर्मणि विधीयते चिण् भावकर्मणोः इति।।
(खण्डनयुक्तिसाधकभाष्यम्)
प्रतिषिध्येते तत्र यक्चिणौ --- यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञ्ञामुपसंख्यानम् इति।।
(प्रतिषेधायोग्यस्थलदर्शकभाष्यम्)
यस्तर्हि न हेतुमण्णिच् उदपुपुच्छत गौः स्वयमेवेति।।
(समाधानभाष्यम्)
अत्रापि यथा भारद्वाजीयाः पठन्ति, तथा भवितव्यं प्रतिषेधेन --- - यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञ्आत्मनेपदाकर्मकाणामुपसंख्यानं कर्तव्यम् इति।। णिश्रिद्रुस्रुभ्यः।। 48 ।।
-3-1-52- अस्यतिवक्तिख्यातिभ्योङ् (669)
(418 च्लेरङादेशविधिसूत्रम्।। 6.1.4 आ. 6)
(आक्षेपभाष्यम्)
अस्यतिग्रहणं किमर्थम्?।
(1849 सिद्धान्तिसमाधानवार्तिकम्।। 1 ।।)
- अस्यतिग्रहणमात्मनेपदार्थं पुषादित्वात्-
(भाष्यम्) अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम्।। किमुच्यते आत्मनेपदार्थमिति, न पुनः परस्मैपदार्थमपि स्यात्?।
पुषादित्वात् । पुषादिपाठात् परस्मैपदेष्वङ्भविष्यति।।
(1850 न्यूनतापूर्तिवार्तिकम्।। 2 ।।)
- कर्मकर्तरि च-
(भाष्यम्) कर्मकर्तरि चोपसंख्यानं कर्तव्यम्। पर्यास्थेतां कुण्डले स्वयमेव।।
(न्यूनतापरिहारभाष्यम्)
अत्रापि।
(1841 न्यूनतापरिहारवार्तिकम्।। 3 ।।
- न वा कर्मण्यविधानात् कर्तृत्वाच्च कर्मकर्तुः सिद्धम्-
(भाष्यम्) इत्येव।। अस्यतिवक्ति।। 52 ।।
-3-1-58- जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च (675)
(419 च्लेरङादेशविधिसूत्रम्।। 3.1.4 आ. 7)
(सूत्रपाठविचारभाष्यम्)
इदं ग्लुचिग्रहणं ग्लुञ्चिग्रहणं च क्रियते। अन्यतरच्छक्यमकर्तुम्। यदि तावद्ग्लुचिग्रहणं क्रियते। ग्लुञ्चिग्रहणं न करिष्यते। तेनैव सिद्धं न्यग्लुचद् न्यग्लोचीत्। इदमिदानीं ग्लुञ्चेरूपं न्यग्लुञ्चीत्।।
अथ ग्लुञ्चिग्रहणं क्रियते ग्लुचिग्रहणं न करिष्यते तेनैव सिद्धं न्यग्लुचद् न्यग्लुञ्चीत्। इदमिदानीं ग्लुचेरूपं न्यग्लोचीदिदिति।। जॄस्तम्भुद्द।। 58।।
-3-1-60- चिण्ते पदः (677)
(420 च्लेश्चिणादेशविधिसूत्रम्।। 3.1.4 आ. 8)
(तप्रत्ययनिर्णयाधिकरणम्)
(अनुयोगभाष्यम्)

अयं तशब्दोस्त्येवात्मनेपदम्, अस्ति परस्मैपदम्, अस्त्येवैकवचनम्, अस्ति बहुवचनम्। कस्येदं ग्रहणम्?।
(उत्तरभाष्यम्)
यः पदेरस्ति। कश्च पदेरस्ति?। पदिरयमात्मनेपदी।। चिण् ते।। 60 ।।
-3-1-66- चिण् भावकर्मणोः (683)
(421 च्लेश्चिणादेशविधिसूत्रम्। 3.1.4 आ .9)
(चिण्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
चिणिति वर्तमाने पुनश्चिण्ग्रहणं किमर्थम्?।
(समाधानभाष्यम्)
नेत्येवं तदभूद् विध्यर्थमिदम्।।
(भाष्यम्) अथ वा चिणिति वर्तमाने पुनश्चिण्ग्रहणस्यैतत्प्रयोजनं चिणेव यथा स्याद् यदन्यत्प्राप्नोति तन्माभूत्। चिण् भाव।। 66 ।।
-3-1-67- सार्वधातुके यक् (684)
(422 यग्विकरणविधिसूत्रम्।। 3.1.4 आ.10)
(भावकर्मणोर्वचनव्यवस्थाधिकरणम्)
(आक्षेपभाष्यम्)
इह पश्यामः कर्मणि द्विवचनबहुवचनान्युदाह्रियन्ते पच्येते ओदनौ पच्यन्ते ओदना इति। भावे पुनः एकवचनमेव --- आस्यते भवता, आस्यते भवद्भ्याम्, आस्यते भवद्भिरिति। केनैतदेवं भवति?।
(समाधानभाष्यम्)
कर्माऽनेकम्, तस्याऽनेकत्वाद् द्विवचनबहुवचनानि भवन्ति। भावः पुनरेक एव।।
(आक्षेपभाष्यम्)
कथं तर्हि इह द्विवचनबहुवचनानि भवन्ति पाकौ पाका इति?।
(सामाधानभाष्यम)
आश्रयभेदात्। यदसौ द्रव्यं श्रितो भवति भावस्तस्य भेदाद् द्विवचनबहुवचनानि भवन्ति।।
(दूषणभाष्यम्)
इहापि तर्हि यावन्तस्ते तां क्रियां कुर्वन्ति, सर्वे ते तस्या आश्रयभूता भवन्ति, तद्भेदाद् द्विवचनबहुवचनानि प्राप्नुवन्ति।।
(दूषणोद्धारभाष्यम्)
एवं तर्हि इदं तावदयं प्रष्टव्यः --- किमभिसमीक्ष्यैतत् प्रयुज्यते - पाकौ पाका इति।
यदि तावत्पाकविशेषानभिसमीक्ष्य यश्चौदनस्य पाकः, यश्च गुडस्य, यश्च तिलानां बहवस्ते शब्दाः सरूपाश्च। तत्र युक्तं बहुवचनमेकशेषश्च। तिङभिहिते चापि तथा भावे बहुवचनं श्रूयते। तद्यथा - उष्ट्रासिका आस्यन्ते, हतशायिकाः शयन्त इति।
अथ कालविशेषानभिसमीक्ष्य यश्चाद्यतनः पाकः, यश्च ह्यस्तनः, यश्च श्वस्तनस्तेऽपि बहवः शब्दाः सरूपाश्च। तत्र युक्तं बहुवचनमेकशेषश्च। तिङभिहिते चापि तथा भावेऽसारूप्यादेकशेषो न भवति --- आसि आस्यते आसिष्यते इति।।
अस्ति खल्वपि विशेषः तिङभिहितस्य भावस्य कृदभिहितस्य च। कृदभिहितो भावो द्रव्यवद्भवति।। किमिदं द्रव्यवदिति?। द्रव्यं क्रियया समवायं गच्छति।। कं समवायं गच्छति? द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति।। तद्वच्चास्य भावस्य कृदभिहितस्य भवति पाको वर्तते इति।। क्रियावन्न भवति।। किमिदं क्रियावदिति?। क्रिया क्रियया समवायं न गच्छति --- पचति पठतीति।। तद्वच्चास्य कृदभिहितस्य न भवति --- पाको वर्तत इति।।
(विशेषान्तरभाष्यम्)
अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य, तिङभिहितस्य च --- तिङभिहितेन भावेन कालपुरुषोपग्रहा व्यज्यन्ते, कृदभिहितेन पुनर्न व्यज्यन्ते।।
(विशेषान्तरभाष्यम्)
अस्ति खल्वपि विशेषः --- तिङभिहितस्य भावस्य, कृदभिहितस्य च --- तिङभिहितो भावः कर्त्रा संप्रयुज्यते, कृदभिहितः पुनर्न संप्रयुज्यते।।
यावता किंचिच्च सामान्यं कश्चिच्च विशेषः।।
युक्तं यदयमपि विशेषः स्याद् --- लिङ्गकृतः संख्याकृतश्च।।
(आक्षेपभाष्यम्)
इदं विचार्यते --- भावकर्मकर्तारः सार्वधातुकार्था वा स्युः, विकरणार्था वेति।। कथं च सार्वधातुकार्था स्युः कथं वा विकरणार्थाः? भावकर्मवाचिनि सार्वधातुके यक् भवति, कर्तृवाचिनि सार्वधातुके शब् भवतीति सार्वधातुकार्थाः। भावकर्मणोर्यक् भवति सार्वधातुके कर्तरि शब् भवति सार्वधातुक इति विकरणार्थाः।।
(अनुयोगभाष्यम्)
कश्चात्र विशेषः?।
(1852 सार्वधातुकार्थपक्षे दूषणवार्तिकम्।। 1 ।।)

- भावकर्मकर्तारः सार्वधातुकार्था श्चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वात्-
(भाष्यम्) भावकर्मकर्तारः सार्वधातुकार्थाश्चेद् एकद्विबहुषु नियमस्यानुपपत्तिः।। किं कारणम्?। अतदर्थत्वात्। न हीदानीमेकत्वादय एव विभक्त्यर्थाः।। किं तर्हि?। भावकर्मकर्तारोऽपि।।
(विकरणार्थपक्षाङ्गीकारभाष्यम्)
सन्तु तर्हि विकरणार्थाः।
(1853 विकरणार्थत्वपक्षदूषणवार्तिकम्।। 2 ।।)
- विकरणार्था इति चेत् कृताभिहिते विकरणाभावः-
(भाष्यम्) विकरणार्था इति चेत् कृताभिहिते विकरणो न प्राप्नोति --- धारयः पारयः इति।
(सार्वधातुकार्थवादिभाष्यम्)
किमुच्यते --- कृताभिहिते इति, --- न लेनाप्यभिधानं भवति?।
(विकरणार्थवादिभाष्यम्)
न शक्यं लेनाभिधानमाश्रयितुम्। पक्षान्तरमिदमास्थितम् --- भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वेति। यदि च लेनाप्यभिधानं स्याद् नेदं पक्षान्तरं स्यात्।।
(सार्वधातुकार्थवादिभाष्यम्)
कथमशक्यम्। यदा भवानेवाह लः कर्मणि च भावे चाकर्मकेभ्य इति?।
(विकरणार्थवादिभाष्यम्)
एवं वक्ष्यामि लः कर्मणो भावाच्चाकर्मकेभ्य इति।
(सार्वधातुकार्थवादिभाष्यम्)
यस्मिंस्तर्हि ले विकरणा न श्रूयन्ते, कस्तत्र भावकर्मकर्तॄनभिधास्यति? क्व च न श्रूयन्ते। य एते लुग्विकरणाः श्लुविकरणाश्च।।
(विकरणार्थवादिभाष्यम्)
अत्राप्युक्ते कर्तृत्वे लुग्भविष्यति।।
(सार्वधातुकार्थसाधकभाष्यम्)
यस्मिंस्तर्हि ले विकरणा नैवोत्पद्यन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति। क्व च नैवोत्पद्यन्ते?। लिङ्लिटोः।। तस्मान्नैवं शक्यं वक्तुं न लेनाप्यभिधानं भवतीति। भवति चेदभिहिते विकरणाभाव इत्येव।।
(विकरणार्थसाधकभाष्यम्)
एवं तर्हीदं स्यात् --- यदा भावकर्मणोर्लः, तदा कर्तरि विकरणाः। यदा कर्तरि लः, तदा भावकर्मणोर्विकरणाः।।
(सार्वधातुकार्थवादिभाष्यम्)
इदमस्य यद्येव स्वाभाविकम्, अथापि वाचनिकम् प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इति। न चास्ति संभवो यदेकस्याः प्रकृतेर्द्वयोर्नानार्थयोर्युगपत्सहायीभावः स्यात्। एवं च कृत्वा एकपक्षी भूतमेवेदं भवति सार्वधातुकार्था एवेति।।
(सार्वधातुकार्थपक्षदूषणस्मारणभाष्यम्)
ननु चोक्तम् भावकर्मकर्तारः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वाद् इति।।
(दूषणपरिहारभाष्यम्)
नैष दोषः।
(1854 सिद्धान्तवार्तिकम्।। 3 ।।)
- सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम्-
(भाष्यम्) सुपां तिङां च संख्या चैवार्थः कर्मादयश्च।।
(1855 वार्तिकम्।। 4 ।।)
- प्रसिद्धो नियमस्तत्र -
(भाष्यम्) प्रसिद्धस्तत्र नियमः।।
(1856 वार्तिकम्।। 5 ।।)
- नियमः प्रकृतेषु वा-
(भाष्यम्) अथ वा प्रकृतानर्थानपेक्ष्य नियमः।। के च प्रकृताः?। एकत्वादयः। एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु। द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु। बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति।।
(1857 यग्विधिवार्तिकम्।। 6 ।।)
- भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम्-
(भाष्यम्) भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानं कर्तव्यम्। पच्यते ओदनः स्वयमेव। पठ्यते विद्या स्वयमेव।।
किं पुनः कारणं न सिध्यति?।
(1858 शपोबलीयस्त्वप्रतिपादकं वार्तिकम्।। 7 ।।)
- विप्रतिषेधाद्धि शपो बलीयस्त्वम्-

(भाष्यम्) विप्रतिषेधाद्धि शपो बलीयस्त्वं प्राप्नोति। शपोऽवकाशः --- पचति पठति। यकोऽवकाशः --- -पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति। इहोभयं प्राप्नोति --- पच्यते ओदनः स्वयमेव, पठ्यते विद्या स्वयमेवेति। परत्वात् शप् प्राप्नोति।।
(1859 कर्मकर्तरियग्विधिवार्तिकवैर्यथ्यवार्तिकम्।। 8 ।।)
- योगविभागात् सिद्धम् -
(भाष्यम्) योगविभागः करिष्यते --- चिण्भावकर्मणोः। ततः सार्वधातुके यक् भावकर्मणोः। ततः कर्तरि। कर्तरि च यक् भवति, भावकर्मणोः।
(योगविभागदूषणभाष्यम्)
यथैव तर्हि कर्मणि कर्तरि यक् भवति। एवं भावेऽपि कर्तरि यग् प्राप्नोति ---
एति जीवन्तमानन्दो नरं वर्षशतादपि।
नास्य किं चिद्रुजति रोग इति।।
(दूषणोद्धारभाष्यम्)
द्वितीयो योगविभागः करिष्यते --- चिण् भावे। ततः कर्मणि कर्मणि च चिण् भवतीति। ततः सार्वधातुके यक्। सार्वधातुके यक् भवति भावे कर्मणि च। ततः कर्तरि कर्तरि च यग्भवति। कर्मणीत्यनुवर्तते। भाव इति निवृत्तम्।।
ततः शप्। शप् च भवति कर्तरीत्येव। कर्मणीति निवृत्तम्।।
(यगुपसंख्यानवादिभाष्यम्)
एवमप्युपसंख्यानं कर्तव्यम्।
(1860 उपसंख्यानहेतुवार्तिकम्।।9 ।।)
- विप्रतिषेधाद्धि श्यनो बलीयस्त्वम्-
(भाष्यम्) विप्रतिषेधाद्धि श्यनो बलीयस्त्वं प्राप्नोति। श्यनोऽवकाशः --- दीव्यति सीव्यतीति। यकोऽवकाशः --- - पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति। इहोभयं प्राप्नोति --- दीव्यते स्वयमेव सीव्यते स्वयमेवेति। परत्वात् श्यन् प्राप्नोति।।
(उपसंख्यानवैर्यथ्यभाष्यम्)
ननु चैतदपि योगविभागेनैव सिद्धम्।
(उपसंख्यानसार्थक्यभाष्यम्)
न सिध्यति। अनन्तरा या प्राप्तिः सा योगविभागेन शक्या निवारयितुम्। कुत एतत्?। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति। परा प्राप्तिरप्रतिषिद्धा तया श्यन् प्राप्नोति।
(उपसंख्यानवैर्यथ्यभाष्यम्)
ननु चेयं प्राप्तिः परां प्राप्तिं बाधेत।।
(उपसंख्यानसार्थक्यभाष्यम्)
नोत्सहते प्रतिषिद्धा सती बाधितुम्।।
(उपसंख्यानवैर्यथ्यभाष्यम्)
एवं तर्हि शबादेशाः श्यन्नादयः करिष्यन्ते। शप् च यका बाध्यते। तत्र दिवादिभ्यो यग्विषये शबेव नास्ति कुतः श्यन्नादयः।।
(प्रत्याक्षेपभाष्यम्)
तत्तर्हि शपो ग्रहणं कर्तव्यम्।।
(प्रत्याक्षेपसमाधानभाष्यम्)
न कर्तव्यम्। प्रकृतमनुवर्तते।। क्व प्रकृतम्। कर्तरि शबिति।।
(आदेशत्वानुपपत्तिभाष्यम्)
तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः।।
(आदेशत्वोपपादकभाष्यम्)
दिवादिभ्यः इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति।।
(आदेशत्वानुपपत्तिभाष्यम्)
प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति।।
(आदेशत्वोपपादकभाष्यम्)
नायं प्रत्ययविधिः विहितः प्रत्ययः प्रकृतश्चानुवर्तते।।
(उपसंख्यानवैयर्यभाष्यम्)
अथ वा भावकर्मणोरित्यननुवृत्त्यैव सिद्धे सत्यनुवृत्तिर्यको भावाय। इह सार्वधातुके यगिति अन्तरेण भावकर्मणोरित्यनुवृत्तिं सिद्धम्। सोऽयमेवं सिद्धे सति यद्भावकर्मग्रहणमनुवर्तयति तस्येतत्प्रयोजनं कर्मकर्तर्यपि यग् यथा स्यादिति।।
(1861 योगविभागान्तरवार्तिकम् ।। 10 ।।)
- कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधावचनाय-
(भाष्यम्) कर्तरीति च योगविभागः कर्तव्यः श्यनः पूर्वविप्रतिषेधं मा वोचमिति।
(उपसंख्यानवैर्यथ्ययुक्त्यन्तरभाष्यम्।)

अथ वा कर्मवद्भाववचनसार्मथ्याद्यक् भविष्यति।।
अस्त्यन्यत् कर्मवद्भाववचने प्रयोजनं किम्। आत्मनेपदं यथा स्यात्।
(युक्त्यनुपपत्तिभाष्यम्)
वचनादात्मनेपदं भविष्यति।।
(युक्त्यनुपपत्तिभाष्यम्)
चिण् तर्हि यथा स्यात्।।
(सार्मथ्योपपत्तिभाष्यम्)
चिणपि वचनाद्भविष्यति।।
(सार्मथ्यानुपपत्तिभाष्यम्)
चिण्वद्भावस्तर्हि यथा स्यात्।।
(सार्मथ्योपपत्तिभाष्यम्)
नैकं प्रयोजनं योगारम्भं प्रयोजयति।। तत्र कर्मवद्भाववचनसामर्थ्याद् यक् भविष्यति।।
(उपसंख्यानवैयर्थ्ययुक्त्यन्तरभाष्यम्)
अथ वा आचार्यप्रवृत्तिर्ज्ञापयति कर्मकर्तरि यग् भवति इति यदयं न दुहस्नुनमां यक्चिणौ इति यक्चिणोः प्रतिषेधं शास्ति।। सार्वधातुके।। 67 ।।
-3-1-71- यसोऽनुपसर्गात् (688)
(423 श्यन्विकल्पविधिसूत्रम्।। 3.1.4 आ. 11)
(आक्षेपभाष्यम्)
अनुपसर्गादिति किमर्थम्?।
(समाधानभाष्यम्)
आयस्यति प्रयस्यति।।
(प्रत्याख्यानभाष्यम्)
अनुपसर्गादिति शक्यमकर्तुम्।।
कथमायस्यति प्रयस्यतीति?।।
संयसश्च इत्येतन्नियमार्थं भविष्यति --- संपूर्वादेव यसः, नान्यपूर्वात् इति।। यसोऽनुपसर्गात्।। 71 ।।
-3-1-78- रुधादिभ्यः श्नम् (695)
(424 श्नम्विधिसूत्रम्।। 3.1.4 आ. 12)
(शित्वप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थः शकारः?
(प्रयोजनभाष्यम्)
सार्वधातुकार्थः। शित्सार्वधातुकम् इति सार्वधातुकसंज्ञा। सार्वधातुकमपिद् इति ङित्त्वम्। ङितीति गुणप्रतिषेधो यथा स्याद् --- भिनत्ति छिनत्तीति।।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते। यस्माच्च प्रत्ययविधिस्तदादि प्रत्यये परतोऽङ्गसंज्ञं भवति। यस्माच्च प्रत्ययविधिः न तत् प्रत्यये परतः। यच्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः।।
(प्रयोजनानन्तरभाष्यम्)
इदं तर्हि प्रयोजनम् - आर्धधातुकसंज्ञा मा भूदिति । किञ्च स्यात् ? वलादिलक्षण इट् प्रसज्येत ।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। वलादेरार्धधातुकस्याङ्गस्येडुच्यते। यस्माच्च प्रत्ययविधिः तदादिप्रत्यये परतोङ्गसंज्ञं भवति। यस्माच्चात्र प्रत्ययविधिः न तत् प्रत्यये परतः। यच्च प्रत्यये परतो न तस्मात् प्रत्ययविधिः।
(उत्तरभाष्यम्)
अत उत्तरं पठति ---
(1862 समाधानवार्तिकम्।। 1 ।।)
- श्नमि शित्करणं प्वादिह्रस्वार्थम् -
(भाष्यम्) श्नमि शित्करणं क्रियते। प्वादिह्रस्वार्थम्। प्वादीनां शिति ह्रस्वत्वं यथा स्यात् --- -पृणति मृणतीति।।
(1863 समाधाननिरासवार्तिकम्।। 2 ।।)
- न वा धात्वन्यत्वात् -
(भाष्यम्) न वा कर्तव्यम्। किं कारणम्। धात्वन्यत्वात्। धात्वन्तरे पृणिमृणी।।
(आक्षेपभाष्यम्)

यत्तर्हि न धात्वन्तरं, यत्र भूम्यां वृणसे।।
(आक्षेपबाधकभाष्यम्)
नैष श्नम्। श्न एवैतद्ध्रस्वत्वम्।।
(आक्षेपसाधकभाष्यम्)
यदि श्नो ह्रस्वत्वम्, स्वरो न सिध्यति --- वृणसे - अदुपदेशाल्लसार्वधातुकमनुदात्तं भवतीति एष स्वरो न प्राप्नोति। तस्माच्छ्वमेषः।।
(आक्षेपबाधकभाष्यम्)
यदि श्नम् श्नसोरल्लोपः प्रसज्येत।।
(आक्षेपसाधकभाष्यम्)
उपधाया इति वर्तते। अनुपधात्वान्न भविष्यति।।
(आक्षेंपबाधकभाष्यम्)
न शक्यमुपधाया इति विज्ञातुम्। इह हि दोषः स्यात्। अङ्क्त अञ्जन्तीति। तस्माच्छ्व एवैतद् ह्रस्वत्वम्।।
(स्वरानुपपत्तिभाष्यम्)
यद्येवम्। स्वरः कथम्?
(1864 स्वरोपपादकवार्तिकम्।। 3 ।।)
- बहुलं पित्सार्वधातुकं छन्दसि -
(भाष्यम्) सार्वधातुकस्य छन्दसि बहुलं पित्त्वं वक्तव्यम्। पितश्चैवापित्त्वं दृश्यते। अपितश्च पित्त्वम्। पितस्तावदपित्त्वम् --- मातरं प्रमिणीमि जनित्रीम्। अपितश्च पित्त्वम्--श्रृणोत ग्रावाणः।
(गौरवभाष्यम्)
तत्तर्हि श्नो ह्रस्वत्वं वक्तव्यम्।
(इष्टापत्तिभाष्यम्)
अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्। उपगायन्तु मां पत्नयो गर्भिणयो युवतय इत्येवमर्थम्।
(प्रयोजनान्तरभाष्यम्)
विशेषणार्थं तर्हि।। क्व विशेषणार्थेनार्थः।। श्नान्नल्लोप इति। नान्नल्लोप इतीयत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि प्रसज्येत।।
(प्रयोजनान्तरबाधकभाष्यम्)
दीर्घत्वे कृते न भविष्यति।।
(प्रयोजनान्तरसाधकभाष्यम्)
इदमिह संप्रधार्यं दीर्घत्वं क्रियतां नान्नल्लोप इति किमत्र कर्तव्यम्? परत्वान्नलोपः स्यात्। तस्माच् शकारः कर्तव्यः।।
(आक्षेपभाष्यम्)
अत क्रियमाणेऽपि शकारे इह कस्मान्न भवति? विश्नानां प्रश्नानामिति।
(समाधानभाष्यम्)
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।। रुधादिभ्यः।। 78 ।।
-3-1-79- तनादिकृञ्भ्य उः (696)
(425 तनादिगणे उविकरणविधिसूत्रम्।। 3.1.4 आ. 13)
(कृञ्ग्रहणप्रत्याख्यानाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं करोतेः पृथग्ग्रहणं क्रियते, न तनादिभ्य इत्येवोच्येत?।
(समाधानभाष्यम्)
अन्यानि तनोत्यादिकार्याणि मा भूवन्निति। कानि?। अनुनासिकलोपादीनि।
(समाधानबाधकभाष्यम्)
दैवरक्ताः किंशुकाः। अनुनासिकाभावादेवानुनासिकलोपो न भविष्यति।।
(प्रयोजनान्तरभाष्यम्)
इदं तर्हि तनादिकार्यं मा भूत् तनादिभ्यस्तथासोः इति।।
(प्रयोजनान्तरनिरासभाष्यम्)
ननु च भवत्येवात्र हस्वादङ्गादि ति।।
(प्रयोजनान्तरसाधकभाष्यम्)
तेनैव यथा स्याद्, अनेन मा भूदिति।।
(प्रयोजनान्तरबाधकभाष्यम्)
कः पुनरत्र विशेषः --- -तेन वा सति, अनेन वा?।
(प्रयोजनान्तरसाधकभाष्यम्)

तेन सति सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावः सिद्धो भवति। अनेन पुनः सति चिण्वद्भवावो न स्यात्।।
(प्रयोजनान्तरबाधकभाष्यम्)
अनेनापि सति सिद्धश्चिण्वद्भावः। कथम्?। विभाषा लुक्। यदा न लुक्, सिज्लोपः। तत्र सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावो वा भविष्यति।।
तनादित्वात्कृञ्त्रः सिद्धं, सिज्लोपे च न दुष्यति। चिण्वद्भावे न दोषः स्यात्, सोपि प्रोक्तो विभाषया।। तनादिकृञ्भ्यः।। 79 ।।
-3-1-80- धिन्विकृण्व्योरच (697)
(426 उविकरणविधिसूत्रम्।। 3.1.4 आ. 14)
(अत्वविधिप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
क्वायमकारः श्रूयते?।
(उत्तरभाष्यम्)
न क्वचिच्छ्रूयते। लोपोस्य भविष्यतिउअतो लोप आर्धधातुके इति।।
(आक्षेपभाष्यम्)
यदि न क्वचिछ्रूयते किमर्थमयमुच्यते। न लोपः इत्येवोच्येत।।
(आक्षेपबाधकभाष्यम्)
नैवं शक्यम्। लोपे सति गुणः प्रसज्येत। अत्वे पुनः सति अकारलोपस्य स्थानिवद्भावाद् गुणो न भविष्यति।।
(आक्षेपसाधकभाष्यम्)
ननु च लोपेऽपि सति न धातुलोप आर्धधातुके इति प्रतिषेधो भविष्यति।।
(आक्षेपबाधकभाष्यम्)
आर्धधातुकनिमित्ते लोपे स प्रतिषेधः। न चैष आर्धधातुकनिमित्तो लोपः।। अपि च प्रत्याख्यायते खल्वपि स योगः। तस्मिन्प्रत्याख्याते गुणः स्यादेव। तस्मादत्वं वक्तव्यम्।
(नकारोच्चारणप्रत्याख्यानाधिकरणम्)
(आक्षेपभाष्यम्)
अथ किमर्थं नुमनुषक्तयोर्धिन्विकृण्व्योर्ग्रहणं क्रियते, न धिविकृव्योः इत्येवोच्येत।।
(आक्षेपबाधकभाष्यम्)
धिविकृव्योः इतीयत्युच्यमाने अत्वे कृते अनिष्टे देशे नुम् प्रसज्येत।।
(आक्षेपसाधकभाष्यम्)
इदमिह संप्रधार्यम् --- नुम् क्रियताम्, अत्वमिति। किमत्र कर्तव्यम्?। परत्वान्नुमागमः।।
(आक्षेपबाधकभाष्यम्)
अन्तरङ्गमत्वम्। कान्तरङ्गता?। प्रत्ययोत्पत्तिसंनियोगेनात्वमुच्यते। उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्य नुमागमः।।
(आक्षेपसाधकभाष्यम्)
नुमप्यन्तरङ्गः। कथम्?। वक्ष्यत्येतत् नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम् इति। उभयोरन्तरङ्गयोः परत्वान्नुमागमः। तस्माद् धिविकृव्योरिति वक्तव्यम्।। धिन्विकृण्व्योः।। 80 ।।
-3-1-83- हलः श्नः शानज्झौ (700)
(427श्नाविकरणस्य शानजादेशविधिशूत्रम्। 3.1.4 आ.15)
(शानचि शकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थः शकारः?।
(आक्षेपबाधकभाष्यम्)
शित्सार्वधातुकम् इति सार्वधातुकसंज्ञा, सार्वधातुकमपिद् इति ङित्त्वम् क्ङिति इति गुणप्रतिषेधो यथास्याद् --- कुषाण पुषाणेति।।
(सिद्धान्तिसमाधानभाष्यम्)
अत उत्तरं पठति --- --
(1865 शानचि शकारवैर्यथ्यवार्तिकम्।। 1 ।।)
- श्नाविकारस्य शित्करणानर्थक्यं स्थानिवत्त्वात्-
(भाष्यम्) श्नाविकारस्य शित्करणमनर्थकम्। किं कारणम्। स्थानिवत्त्वात्। शितोयमादेशः स्थानिवद्भावात् शिद्भविष्यति।।
(1866 शानचि शकारस्य प्रयोजनवार्तिकम्।। 2 ।। )
- अर्थवत्तु ज्ञापकं सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वस्य-
(भाष्यम्) अर्थवत्तु श्नाविकारस्य शित्करणम्। कोर्थः?। ज्ञापनार्थः। किं ज्ञाप्यते?एतज् ज्ञापयत्याचार्यः --- सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्ति इति।।
(प्रयोजनप्रश्नभाष्यम्।।)

किमेतस्य ज्ञापने प्रयोजनम्?।
(1867 प्रयोजनवार्तिकम्।। 3 ।।)
- प्रयोजनं हि तातङोरपित्त्वम्-
(भाष्यम्) हेः पित्त्वं न प्रतिषेध्यम्। पितोयमादेशः स्थानिवद्भावात्पित्स्यात्। सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति नायं पिद्भविष्यति।।
तातङि च ङकारो नोच्चार्यो भवति। पितोयमादेशः स्थानिवद्भावात्पित् स्यात्। सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति नायं पिद्भविष्यति।।
(1868 प्रयोजनवार्तिकम्।। 4 ।।)
- तबादिषुचाङित्त्वम्-
(भाष्यम्) तबादिषु च ङित्त्वं न प्रतिषेध्यम्। श्रृणोत ग्रावाणः। ङित इमे आदेशा स्थानिवद्भावद्भवन्तीति नेमे ङितो भविष्यन्ति।।
(1869 ज्ञापनदूषणवार्तिकम्।। 5 ।।)
- तस्य दोषो मिप आदेशे पिदभावः-
(भाष्यम्) तस्यैतस्य लक्षणस्य दोषो मिप आदेशे पितोऽभावः। आचिनवमकरवम्। पितोयमादेशः स्थानिवद्भावात् पिद्भवति। सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति। नायं पित्स्यात्।। अत्यल्पमिदमुच्यते --- मिप आदेशः इति। तिप्सिम्मिपामादेशा इति वक्तव्यम्। वेद वेत्थ।।
(1870 दूषणवार्तिकम्।। 6 ।।)
- कित्करणाद्वा सिद्धम्-
(भाष्यम्) अथ वा अवश्यमत्र सामान्यग्रहणाविघातार्थः ककारोनुबन्धः क्व सामान्यग्रहणाविघातार्थेनार्थः?। वसोः संप्रसारणम् इति। तेनैव यत्नेन गुणो न भविष्यति।। अस्य ज्ञापकस्य सन्ति दोषाः, सन्ति च प्रयोजनानि।। समादोषा भूयांसो वा। तस्मान्नार्थोनेन ज्ञापकेन।
(आक्षेपभाष्यम्)
कथं यानि प्रयोजनानि।
(समाधानभाष्यम्)
तानि क्रियन्ते न्यास एव।।
(आक्षेपभाष्यम्)
एवमपि भवेत् पित्करणसार्मथ्यात् पित्कृतं स्यात् ङित्करणसार्मथ्याद् ङित्कृतम्। यत्तु खलु पिति ङित्कृतं प्राप्नोति ङिति च पित्कृतम्। केन तन्न स्यात्। तस्माद्वक्तव्यं पिन्न ङिद्भवति ङिच्च पिन्न भवतीति।
(समाधानभाष्यम्)
न वक्तव्यम्। एवं वक्ष्यामि --- सार्वधातुकं ङिद्भवति, पिन्न एवं तावत्पितो ङित्त्वं प्रतिषिद्धम्। ततः --- -असंयोगाल्लिट् किद्भवति ङिच्च पिन्न भवतीति। एवं ङितः पित्त्वं प्रतिषिद्धम्।। हलः श्रः।। 83 ।।
-3-1-84- छन्दसि शायजपि (701)
(428 श्नाविकरणस्य शायजादेशविधिसूत्रम्।। 3.1.4 आ. 16 )
(1872 अहौशायज्विधिवार्तिकम्।। 1 ।।)
- शायच् छन्दसि सर्वत्र-
(भाष्यम्) शायच् छन्दसि सर्वत्रेति वक्तव्यम्।। क्व सर्वत्र?। हौ चाहौ च किं प्रयोजनम्?। महीरस्कभायद्, यो अस्कभायद् उद्गृभायत उन्मथायतेत्येवमर्थम्।। छन्दसि शायजपि।। 84 ।।
-3-1-85- व्यत्ययो बहुलम् (702)
(429 छन्दसि व्यत्ययविधिसूत्रम्।। 3.1.4 आ.17)
(1873 वार्तिकम्।। 1 ।।)
- योगविभागः-
(भाष्यम्) योगविभागः कर्तव्यः --- व्यत्ययः। व्यत्ययो भवति स्यादीनामिति। आण्डा शुष्णस्य भेदति। भिनत्तीत्येवं प्राप्ते। स च न मरति। न म्रियत इति प्राप्ते।। ततो बहुलम्। बहुलं छन्दसि विषये सर्वे विधयो भवन्तीति। सुपां व्यत्ययः, तिङां व्यत्ययः, वर्णव्यत्ययः, लिङ्गव्यत्ययः, पुरुषव्यत्ययः, कालव्यत्ययः, आत्मनेपदव्यत्ययः, परस्मै
पदव्यत्यय इति।। सुपां व्यत्ययः --- युक्ता मातासीद्धुरि दक्षिणायाः। दक्षिणायामिति प्राप्ते।। तिङां व्यत्ययः --- चाषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते।। वर्णव्यत्ययः --- त्रिष्टुभौजः शुभितमुग्रवीरम्। शुधितमिति प्राप्ते।। लिङ्गव्यत्ययः --- मधोस्तृप्ता इवासते। मधुन इति प्राप्ते।। पुरुषव्यत्ययः --- अधा स वीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते।। कालव्यत्ययः--श्वोग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन। आधातायष्टेति प्राप्ते।। आत्मनेपदव्यत्ययः --- ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते।। परस्मैपदव्यत्ययः --- प्रतीपमन्य ःढ्द्य;र्मिर्युध्यति। युध्यत इति प्राप्ते।।
सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन।। व्यत्ययो।। 85 ।।
-3-1-86- लिङ्याशिष्यङ् (703)

(439 अङ्विधिसूत्रम्।। 3.1.4 आ. 18)
(आक्षेपभाष्यम्)
अयमाशिषि अङ्विधीयते। तस्य किं प्रयोजनम्?।
(1874 प्रयोजनवार्तिकम्।। 1 ।।)
- आशिष्यङः प्रयोजनं स्थागागमिवचिविदयः-
(भाष्यम्) स्था --- उपस्थेयं वृषभं तुग्रियाणाम् स्था।। गा --- -अञ्जसा सत्यमुपगेयम्। गा।। गमि --- -यज्ञेन प्रतिष्ठां गमेयम्। गमि।। वचि --- मन्त्रं वोचे माग्नये। वचि।। विदि --- विदेयमेनां मनसि प्रविष्टाम्। विदि।।
(1875 अङ्विधानवार्तिकम्।। 2 ।।)
- शकिरुह्योश्च-
(भाष्यम्) शकिरुह्योश्चेति वक्तव्यम्। शकेम त्वा समिधं (साधया धियः)। अस्रवन्ती मारुहेमास्वस्तये।
(1876 अग्विधिवार्तिकम्।। 3 ।।)
- दृशेरक् पितरं च दृशेयं मातरं च दृशेयम्-
(भाष्यम्) दृशेरग्वक्तव्यः। पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम्।।
(आडागमविध्याक्षेपभाष्यम्)
इह उपश्थेयामेत्यत्र आडपि वक्तव्यः। न ह्यङैव सिध्यति।।
(समाधानभाष्यम्)
न वक्तव्यः। सार्वधातुकत्वात् सलोपः, आर्धधाकत्वादेत्वम्। तत्रोभयलिङ्गत्वात् सिद्धम्।। लिङ्याशिष्यङ्।। 86 ।।
इति श्रीमद्भगवत्पतञ्जलीविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्।।
-3-1-87- कर्मवत्कर्मणा तुल्यक्रियः (704)
(431 कर्मवद्भावसूत्रम्।। 3.1.5 आ.1 सू.)
(आक्षेपभाष्यम्)
वत्करणं किमर्थम्?। (समाधानभाष्यम्)
स्वाश्रयमपि यथा स्याद् भिद्यते कुसूलेनेति। अकर्मकाणां भावे लो यथा स्यात्।।
(आक्षेपभाष्यम्)
कर्मणेतिकिमर्थम्?।
(भाष्यम्) करणाधिकरणाभ्यां तुल्यक्रियः कर्ता यः स कर्मवन्मा भूत्। साध्वसिश्छिनत्ति, साधु स्थाली पचतीति।।
(आक्षेपभाष्यम्)
तुल्यक्रिय इति किमर्थम्?।
(समाधानभाष्यम्)
पचत्योदनं देवदत्तः।।
(आक्षेपभाष्यम्)
तुल्यक्रिय इत्यप्युच्यमानेऽत्र पाप्नोति। अत्रापि हि कर्मणा तुल्यक्रियः कर्ता।
(समाधानभाष्यम्)
न तुल्यक्रियग्रहणेन समानक्रियत्वमभिधीयते। किं तर्हि। यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते यथा कर्मणि। स कर्मणा तुल्यक्रियः कर्ता कर्मवद्भवतीति।
(1877 परिसंख्यावार्तिकम्।। 1 ।।)
- कर्मवदकर्मकस्य कर्ता-
(भाष्यम्) अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम्। किं प्रयोजनम्?। सकर्मकस्य कर्ता कर्मवन्माभूत्। भिद्यमानः कुसूलः पात्राणि भिनत्तीति।
(1878 परिसंख्यावार्तिकम्।। 2 ।।)
- तथा कर्मदृष्टश्चेत्समानधातौ-
(भाष्यम्) तथा कर्मदृष्टश्चेत्समानधाताविति वक्तव्यम्। इह मा भूत् --- पचत्योदनं देवदत्तः। राध्यत्योदनः स्वयमेवेति।।
(1879 परिसंख्यावार्तिकम्।। 3 ।।)
- तथा कर्मस्थभावकानां कर्मस्थक्रियाणां च-
(भाष्यम्) तथा कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवतीति वक्तव्यम्। कर्तृस्थभावकानां कर्तृस्थक्रियाणां च कर्ता कर्मवन्मा भूदिति। कर्मस्थभावकानाम् --- आसयति देवदत्तम्, शाययति देवदत्तम्, स्थापयति देवदत्तम्।। कर्मस्थक्रियाणाम् --- गामवरुणद्धि, करोति कटम्। कर्तृस्थभावकानाम् - चिन्तयति, मन्त्रयते।। कर्तृस्थक्रियाणाम् --- गच्छति, धावति, हसति।।
(प्रथमपरिसंख्यावार्तिकवैयर्थ्यभाष्यम्)
यत्तावदुच्यते --- अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम् इति।। न वक्तव्यम्। वक्ष्यत्येतत् --- सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति।।
(द्वितीयपरिसंख्यावार्तिकवैयर्थ्यभाष्यम्)

यदप्युच्यते --- कर्मदृष्टश्चेत् समानधाताविति वक्तव्यमिति ।। न वक्तव्यम्। धातोरिति वर्तते। धातोः कर्मणः कर्तुरयं कर्मवद्भाव उच्यते। तत्र संबन्धादेतद् अगंतव्यम् --- यस्य धातोर्यत् कर्म तस्य चेत् कर्ता स्यादिति। तद्यथा --- धातोः कर्मण्यण् भवतीति, तत्र सम्बन्धादेतद् गम्यते यस्य धातोर्यत्कर्मेति। इह मा भूत् --- आहर कुम्भं करोति कटमिति।

(तृतीयपरिसंख्यावार्तिकवैयर्थ्यभाष्यम्)

यदप्युच्यते --- कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवतीति वक्तव्यम्। कर्तृस्थभावकानां

कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भूदिति।। न वक्तव्यम्। कर्मस्थया क्रियया यं कर्तारमुपमिमीते। न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्मणि क्रियायाः प्रवृत्तिरस्ति।।

(कर्मवद्भावफलविचाराधिकरणम्)

(आक्षेपभाष्यम्)

किं पुनः कर्मकर्तरि कर्माश्रयमेव भवति, आहोस्वित् कर्त्राश्रयमपि?।। किं चातः?।

यदि कर्माश्रयमेव, चङ्शप्कृद्विधयो न सिध्यन्ति। चङः --- अचीकरत कटः स्वयमेव। चङ्।। शप् --- नमते दण्डः स्वयमेव। शप्।। कृद्विधिः --- भिदुरं काष्ठं स्वयमेव।।

अथ कर्त्राश्रयमपि, सिद्धमेतद् भवति।। (किं तर्हीति)।

(1880 कर्त्राश्रयत्वे दूषणवार्तिकम्।। 4 ।।)

- आत्मनेपदशबादिविधिप्रतिषेधः-

(भाष्यम्) आत्मनेपदं विधेयं शबादीनां च प्रतिषेधो वक्तव्यः।।

(दूषणपरिहारभाष्यम्)

उभयं क्रियते न्यास एव।

(सूत्रप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थं पुनरिदमुच्यते?।

(1881 समाधानवार्तिकम्। 5 ।।)

- कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात्-

(भाष्यम्) कर्मकर्तरि कर्तृत्वमस्ति। कुतः?। स्वातन्त्र्येणैवात्र कर्ता विवक्षितः।।

(आक्षेपभाष्यम्)

किं पुनः सतः स्वातन्त्र्यस्य विवक्षा, आहोस्विद्विवक्षामात्रम्?।

(समाधानभाष्यम्)

सत इत्याह। कथं ज्ञायते।। इह भिद्यते कुसूलेनेति। न चान्यः कर्ता दृश्यते, क्रिया चोपलभ्यते।।

(आक्षेपभाष्यम्)

किं च भो विग्रहवतैव क्रियायाः कर्त्रा भवितव्यम्, न पुनर्वातातपकाला अपि कर्तारः स्युः।।

(समाधानभाष्यम्)

भवेत्सिद्धं यदि वातातपकालानामन्यतमः कर्ता स्यात्। यस्तु खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नान्यः कर्ता भवति अन्यदतः कुसूलात्।।

(आक्षेपभाष्यम्)

यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्यः कर्ता नास्ति। इह तु कथं स्याल्लूयते केदारः स्वयमेवेति। यत्रासौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन्दृश्यते।

(समाधानभाष्यम्)

अत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता भवति अन्यदतः केदारात्।।

(भाष्यम्) अस्ति प्रयोजनमेतत्?। किं तर्हीति।

(1882 कर्मवद्भावविषयपरिसंख्यावार्तिकम्।। 6 ।।)

- तत्र लान्तस्य कर्मवदनुदेशः-

(भाष्यम्) लान्तस्य कर्मवदनुदेशः कर्तव्यः। लान्तस्य कर्ता कर्मवद्भवतीति वक्तव्यम्। (1883 परिसंख्यापरिहेयदर्शकवार्तिकम्।। 7 ।।)

- अन्यथा हि कृत्यक्तखलर्थेषु प्रतिषेधः-

(भाष्यम्) अक्रियमाणे हि लग्रहणे कृत्यक्तखलर्थेषु प्रतिषेधो वक्तव्यः स्यात्। कृत्य --- भेत्तव्यः कुसूल इति कर्म। स यदा स्वातन्त्र्येण विवक्षितस्तदास्य कर्मवद्भावः स्यात्, तस्य प्रतिषेधो वक्तव्यः तस्मिन् प्रतिषिद्धे अकर्मकाणां भावे कृत्यो भवतीति भावे कृत्यो यथा स्याद् भेत्तव्यं कुसूलस्य, भेत्तव्यं कुसूलेनेति। कृत्य।। क्त --- भिन्नः कुसूल इति कर्म। स यदा स्वातन्त्र्येण विवक्षितो भवति, तदास्य कर्मवद्भावः स्यात्, तस्य प्रतिषेधो वक्तव्यः। तस्मिन्

प्रतिषिद्धे अकर्मकाणां भावे क्तो भवतीति भावे क्तो यथा स्याद् भिन्नं कुसूलेनेति। क्त।। खलर्थ --- इर्षद्भेदः कुसूल इति कर्म। स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भावः स्यात्। तस्य प्रतिषेधो वक्तव्यः। तस्मिन्प्रतिषिद्धे अकर्मकाणां भावे खल्भवतीति भावे खल् यथा स्यात्।

इर्षद्भेदं कुसूलेनेति। खलर्थ।।
(आक्षेपभाष्यम्)
तत्तर्हि लग्रहणं कर्तव्यम्।।
(सिद्धान्तिसमाधानभाष्यम्)
न कर्तव्यम्। क्रियते न्यास एव --- व्यत्ययो बहुलल्लिलङ्याशिष्यङ् इति द्विलकारको निर्देशः।।
(1884 सूत्रवैयर्थ्यवार्तिकम्।। 8 ।।)
- सिद्धं तु प्राकृतकर्मत्वात्-
(भाष्यम्) सिद्धमेतत्। कथम्?। प्राकृतकर्मत्वात्। प्राकृतमेवैतत् कर्म। तया कटं करोति, शकटं करोतीति।।
(आक्षेपभाष्यम्)
कथं प्रनर्ज्ञायते प्राकृतमेवैतत्कर्मेति।।
(1885 वैयर्थ्यहेतुवार्तिकम्।। 9 ।।)
- आत्मसंयोगेऽकर्मकर्तुः कर्मदर्शनात्-
(भाष्यम्) आत्मसंयोगेऽकर्मकर्तुः कर्म दृश्यते। क्व?। हन्त्यात्मानम्। आत्मना हन्यत इति।
(वैषम्यविघटकसूत्रसार्थक्यभाष्यम्)
विषम उपन्यासः। हन्त्यात्मानमिति कर्म दृश्यते, कर्ता न दृश्यते। आत्मना हन्यत इति च कर्ता दृश्यते, न कर्म दृश्यते।।
(1886 वैषम्योपपादकवार्तिकम्।। 10 ।।)
- पदलोपश्च-
(भाष्यम्) पदलोपश्चात्र द्रष्टव्यः। हन्त्यात्मानमात्मा। आत्मना हन्यत आत्मेति।।
(शङ्काभाष्यम्)
कः पुनरात्मानं हन्ति, को वात्मना हन्यते?।
(उत्तरभाष्यम्)
द्वावात्मानौ --- शरीरात्मा, अन्तरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुः खे अनुभवति। शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुः खे अनुभवति।।
(1887 आक्षेपवार्तिकम्।। 11 ।।)
- सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति-
(भाष्यम्) सकर्मकाणां प्रतिषेधो वक्तव्यः। किं प्रयोजनम्?। अन्योन्यमाश्लिष्यतः अन्योन्यं संस्पृशतः अन्योन्यं संगृह्णीत इति।।
(1888 सकर्मकप्रतिषेधाय नियमवार्तिकम्।। 12 ।।)
- तपेर्वा सकर्मकस्य वचनं नियमार्थम्-
(भाष्यम्) तपेर्वा पुनः सकर्मकस्य वचनं नियमार्थं भविष्यति --- तपेरेव सकर्मकस्य नान्यस्य सकर्मकस्येति।
(आक्षेपभाष्यम्)
तस्य तर्ह्यन्यकर्मकस्यापि प्राप्नोति। उत्तपति सुवर्णं सुवर्णकारः। उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति।।
(1889 समाधानवार्तिकम्।। 13 ।।)
- तस्य च तपः कर्मकस्यैव-
(भाष्यम्) तस्य च तपः कर्मकस्यैव कर्ता कर्मवद्भवति नान्यकर्मकस्य।।
(आक्षेपभाष्यम्)
किमिदं तप इति?।
(उत्तरभाष्यम्)
तपेरयमौणादिकोऽस्कारो भावसाधनः।
(आक्षेपभाष्यम्)
कः प्रकृत्यर्थः, कः प्रत्ययार्थः?।
(समाधानभाष्यम्)
स एव संतापः।।
कथं पुनः स एव नाम प्रकृत्यर्थः स्यात् स एव च प्रत्ययार्थः?।
(भाष्यम्) सामान्यतपेरवयवतपिः कर्म भवति। तद्यथा --- स एतान् पोषानपुषत् गोपोषमश्वपोषं रैपोषमिति
सामान्यपुषेरवयवपुषिः कर्म भवति। एवमिहापि सामान्यतपेरवयवतपिः कर्म भवति।।
(1890 कर्मवद्भावविकल्पवार्तिकम्।। 14 ।।)
- दुहिपच्योर्बहुलं सकर्मकयोः-
(भाष्यम्) दुहिपच्योः सकर्मकयोः कर्ता कर्मवद्बहुलं भवतीति वक्तव्यम्। दुग्धे गौः पयः स्वयमेव। तस्मादुदुम्बरः सलोहितं फलं पच्यते।।
बहुलवचनं किमर्थम्?।

परस्मैपदार्थम्।
यद्येवं नार्थो बहुलवचनेन। न हि परस्मैपदमिष्यते।।
(1891 श्यन्विधिवार्तिकम्।। 15 ।।)
- सृजियुज्योः श्यंस्तु-
(भाष्यम्) सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। श्यंस्तु भवति।
सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यः चिणात्मनेपदार्थः। सृज्यते मालाम्, असर्जि मालामिति।।
युजेस्तु न्याय्ये कर्मकर्तरि यकोऽभावाय। युज्यते ब्रह्मचारी योगम्।।
(1892 कर्मवद्भावविधिवार्तिकम्।। 16 ।।)
- करणेन तुल्यक्रियः कर्ता बहुलम्-
(भाष्यम्) करणेन तुल्यक्रियः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। परिवारयति कण्डकैर्वृक्षः, परिवारयन्ते कण्टका वृक्षम्।।
(1893 प्रतिषेधवार्तिकम्।। 17 ।।)
- स्रवत्यादीनां प्रतिषेधः-
(भाष्यम्) स्रवत्यादीनां प्रतिषेधो वक्तव्यः। स्रवति कुण्डिका उदकम् स्रवति कुण्डिकाया उदकम्। स्रवन्ति वलीकान्युदकम् स्रवति वलीकेभ्य उदकम्।।
(आक्षेपभाष्यम्)
स तर्हि प्रतिषेधो वक्तव्यः?।
(समाधानभाष्यम्)
न वक्तव्यः। तुल्यक्रिय इत्युच्यते। क्रियान्तरं चात्र गम्यते। इह तावत्स्रवति कुण्डिका उदकमिति विसृजतीति गम्यते। स्रवति कुण्डिकाया उदकमिति निष्क्रामतीति गम्यते।। स्रवन्ति वलीकान्युदकमिति विसृजन्तीति गम्यते। स्रवति वलीकेभ्य उदकमिति पततीति गम्यते।।
(1894 यक्चिण्प्रतिषेधवार्तिकम्।। 18 ।।)
- भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्-
(भाष्यम्) भूषाकर्मकिरादिसनन्ताच्च अन्यत्रात्मनेपदात् प्रतिषेधो वक्तव्यः। भूषयते कन्या स्वयमेव। अबुभूषत अन्या स्वयमेव। मण्डयते कन्या स्वयमेव। अममण्डत कन्या स्वयमेव।। किरादि --- अवकिरते हस्ती स्वयमेव। अवाकीर्ष्ट हस्ती स्वयमेव। (गिरते ग्रासः स्वयमेव। अगीर्ष्ट ग्रासः स्वयमेव)। सन् --- चिकीर्षते कटः स्वयमेव।
अचिकीर्षिष्ट कटः स्वयमेव।। कर्मवद्।। 87 ।।
-3-1-89- न दुहस्नुनमां यक्चिणौ (706)
(432 यक्चिण्प्रतिषेधसूत्रम्।। 3।1।5 आ.2)
(1895 यक्चिण्प्रतिषेधवार्तिकम्।। 1 ।।)
- यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञ्ञामुपसंख्यानम्-
(भाष्यम्) यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञ्ञामुपसंख्यानं कर्तव्यम्।। णि --- कारयते कटः स्वयमेव। अचीकरत कटः स्वयमेव। णि।। श्रि --- उच्छ्रयते दण्डः स्वयमेव। उदशिश्रियत दण्डः स्वयमेव। श्रि।। ब्रूञ् --- -ब्रूते कथा स्वयमेव। अवोचत कथा स्वयमेव।।
भारद्वाजीयाः पठन्ति --- -
(1896 भारद्वाजीयवार्तिकम्।। 2 ।।)
- यक्चिणोः प्रतिषेधे-
(भाष्यम्) णिश्रन्थिग्रन्थिब्रूञ्ञात्नेपदाकर्मकाणामुपसंख्यानम् इति।। न दुहस्नु।। 89 ।।
-3-1-90- कुषिरजोः प्राचां श्यन् परस्मैपदं च (707)
(433 कर्मवद्भावे श्यन्परस्मैपदविधिसूत्रम्।। 3 । 1 । 5 आ 3 )
(1897 श्यन्विषयपरिसंख्यावार्तिकम्।।1 ।।)
- कुषिरजोः श्यन्विधाने सार्वधातुकवचनम्-
(भाष्यम्)कुषिरजोः श्यन्विधाने सार्वधातुकग्रहणं कर्तव्यम्।।
(1898 अन्यथानुपपत्तिवार्तिकम्।।2 ।।)
- अवचने हि लिङ्लिटोः प्रतिषेधः-
(भाष्यम्) अक्रियमाणे हि सार्वधातुकग्रहणे लिङ्लिटोः प्रतिषेधो वक्तव्यः स्यात्। चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव रङ्क्षीष्ट वस्त्रं स्वयमेव।।
(आक्षेपभाष्यम्)
क्रियमाणे चापि सार्वधातुकग्रहणे कतीह कुष्णानाः पादा इति अत्रापि प्राप्नोति।। श्यना च स्यादीनां बाधनं प्राप्नोति। कोषिष्यते पादः स्वयमेव। अकोषि पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अरञ्चि वस्त्रं स्वयमेव।।।
(परिसंख्यावार्तिकवैयर्थ्यभाष्यम्)
यत्तावदुच्यते --- सार्वधातुकग्रहणं कर्तव्यमिति। न कर्तव्यम्। प्रकृतमनुवर्तते।। क्व प्रकृतम्?। सार्वधातुके यगिति।

(अनुवर्तनेऽन्वयविचारभाष्यम्)
यदि तदनुवर्तते पूर्वस्मिन्योगे किं समुच्चयः --- ले च, सार्वधातुके चेति। आहोस्वित् --- लग्रहणं सार्वधातुकविशेषणम्।। किं चातः?।
यदि समुच्चयः, कतीह भिन्दानाः कुसूला इत्यत्रापि प्राप्नोति।।
अथ लग्रहणं सार्वधातुकविशेषणम्। लिङ्लिटोर्न सिध्यति --- बिभिदे कुसूलः स्वयमेव, भित्सीष्ट कुसूलः स्वयमेवेति।।
(सार्वधातुकविशेषणत्वस्वीकारभाष्यम्)
अस्तु लग्रहणं सार्वधातुकविशेषणम्।।
(दूषणस्मारकभाष्यम्)
ननु चोक्तं लिङ्लिटोर्न सिध्यतीति।।
(दूषणपरिहारभाष्यम्)
लिङ्लिङ्ग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्। कास्प्रत्ययादाममन्त्रे लिटि लिङ्याशिष्यङिति च।।
एवं च कृत्वा सोऽप्यदोषो भवति --- यदुक्तं कतीह कुष्णानाः पादा इत्यत्रापि प्राप्नोतीति। इहापि लविशिष्टं सार्वधातुकग्रहणमनुवर्तते।।
(दूषणान्तरनिराकरणभाष्यम्)
यदप्युच्यते --- श्यना च स्यादीनां बाधनं प्राप्नोतीति।। यक्प्रतिषेधसंबन्धेन श्यनं वक्ष्यामि --- -न दुहस्नुनमां यक्चिणौ। ततः --- कुषिरजोः प्राचाम्। कुषिरजोः प्राचां यक्चिणौ न भवतः। ततः --- श्यन् परस्मैपदं चेति।।
(आक्षेपभाष्यम्)
यथैव तर्हि यको विषये श्यन् भवति, एवं चिणोपि विषये प्राप्नोति --- -अकोषि पादः स्वयमेव। अरञ्जि वस्त्रं स्वयमेव।।
(समाधानभाष्यम्)
एवं तर्हि द्वितीयो योगविभागः --- करिष्यते --- न दुहस्नुनमां चिण् भवति। ततो यक् यक् च न भवति दुहस्नुनमाम्। ततः कुषिरजोः प्राचां यक् न भवति। ततः श्यन् परस्मैपदं चेति।।
अथ वा --- अनुवृत्तिः करिष्यते --- स्यतासी लृलुटोः च्लि लुङि च्लेः सिज् भवतीति। कर्तरि शप् स्यतासी लृलुटोः च्लि लुङि च्लेः सिज् भवतीति। दिवादिभ्यः श्यन् स्यतासी लृलुटोः च्लि लुङि च्लेः सिज् भवतीति। कुषिरजोः प्राचां श्यन्परस्मैपदं च स्यतासी लृलुटोः च्लि लुङि च्लेः सिज् भवतीति।।
अथ वान्तरङ्गः स्यादयः।। कान्तरङ्गता?। लावस्थायामेव स्यादयः। सार्वधातुके श्यन्।। कुषिरजोः प्राचाम्।। ९० ।।
-3-1-91- धातोः (708)
(434 अधिकारसूत्रम्।। 3.1.5 आ.4)
(आधिकारावधिनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
आकुतोयं धात्वधिकारः। किं प्राग्लादेशात्। आहोस्विद् आ तृतीयाध्यायपरिसमाप्तेः?।
(1899 वार्तिकम्।। 1 ।।)
- धात्वधिकारः प्राग्लादेशात्-
(भाष्यम्) प्राग्लादेशाद्धात्वधिकारः।।
(1891 हेतुवार्तिकम्।।2 ।।)
- लादेशे हिव्यवहितत्वादप्रसिद्धिः-
(भाष्यम्) अनुवर्तमाने हि लादेशे धात्वधिकारे व्यवहितत्वादप्रसिद्धिः स्यात्।। किं च स्यात्?।
(1901 दोषदर्शकवार्तिकम्।। 3 ।।)
- आद्ये योगे न व्यवाये तिङः स्युः-
(भाष्यम्) आद्ये योगे विकरणैर्व्यवहितत्वात्तिङो न स्युः। पचति पठति।।
इदमिह संप्रधार्यम्। विकरणाः क्रियन्ताम्, आदेशा इति। किमत्र कर्तव्यम्?।
परत्वादादेशाः।।
नित्या विकरणाः। कृतेष्वप्यादेशेषु प्राप्नुवन्ति अकृतेष्वपि प्राप्नुवन्ति। नित्यत्वाद्विकरणेषु कृतेषु विकरणैर्व्यवहितत्वादादेशा न प्राप्नुवन्ति।।
अनवकाशास्तर्ह्यादेशाः।।
सावकाशा आदेशाः। कोऽवकाशः। य एते लुग्विकरणाः श्लुविकरणा- लिङ्लिटौ च।।
(1902 दूषणान्तरवार्तिकम्।।4 ।।)
- न स्यादेत्वं टेष्टितां यद्विधत्ते-
(भाष्यम्) यच्च टित्संज्ञकानां टेरेत्वं विधत्ते, तच्च विकरणैर्व्यवहितत्वादादेशानां न स्यात्।।
(1903 दूषणान्तरवार्तिकम्।।5 ।।)
- एशः शित्वम्-
(भाष्यम्) एकारश्च शित्कर्तव्यः। किं प्रयोजनम्?। सित्सर्वस्ये ति सर्वस्यादेशो यथा स्यात्। अक्रियमाणे हि
शकारे तस्मादित्युत्तरस्यादेः परस्य इति तकारस्यैत्वे कृते द्वयोरेकारयोः श्रवणं प्रसज्येत। निवृत्ते पुनर्लादेशे धात्वधिकारे अलोन्त्यस्य विधयो

भवन्तीत्येकारस्य एकारवचने प्रयोजनं नास्तीति कृत्वा अन्तरेणापि शकारं सर्वादेशो भविष्यति।।
(1904 दूषणान्तरवार्तिकम्।। 6 ।।)
- यच्च लोटो विधत्ते-
(भाष्यम्) यच्च लोटो विधीयते। तच्च विकरणैर्व्यवहितत्वान्न स्यात्। किं पुनस्तत्?। लोटो लङ्वत्। एरुः। सेर्ह्यपिच्च। वा छन्दसी ति।
(1905 दूषणान्तरवार्तिकम्।। 7 ।।)
- यच्चाप्युक्तं लिङ्लिङोस्तच्च न स्यात्-
(भाष्यम्) (यच्चाप्युक्तं लङ्लिङोः, तच्च न स्यात्।) किं पुनस्तत्?। नित्यं ङितः। इतश्च। तस्थस्थमिपां तांतंतामः। लिङः सीयुट्। यासुट् परस्मैपदेषूदात्तो ङिच्चेति।। तस्मात्प्राग्लादेशाद्धात्वधिकारः।।
(प्राग्लादेशाद्धात्वधिकारपक्षे दूषणोपक्रमभाष्यम्)
यदि प्राग्लादेशाद्धात्वधिकारः।।
(1906 प्राग्लादेशाद्धात्वधिकारे दूषणवार्तिकम्।। 8 ।।)
- अकारः -
(भाष्यम्) अकारः शित्कर्तव्यः। किं प्रयोजनम्?। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अनुवर्तमाने पुनर्लादेशे धात्वधिकारे तस्सादित्युत्तरस्य आदेः परस्ये ति थकारस्यात्वे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात् --- पेच यूयं चक्र यूयमिति।।
(दूषणोद्धारभाष्यम्)
ननु च निवृत्तेपि लादेशे धात्वधिकारे अलोन्त्यस्य विधयो भवन्तीत्यकारस्याकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति।।
(दूषणस्थापकाभाष्यम्)
अस्त्यन्यदकारस्याकारवचने प्रयोजनम्। किम्?। वक्ष्यत्येतत् --- -- अकारस्याकारवचनं समसंख्यार्थमिति।।
(1907 प्राग्लादेशाद् धात्वधिकारे दूषणान्तरवार्तिकम्।। 9 ।।)
(- आर्धधातुकसंज्ञायां धातुग्रहणम्-)
(भाष्यम्) आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम्। धातोः परस्यार्धधातुकसंज्ञा यथा स्यात्। इह मा भूद् वृक्षत्वं वृक्षतेति।। तस्माल्लादेशे धात्वधिकारोनुर्वत्यः।।
(प्रथमदूषणस्मारणभाष्यम्)
ननु चोक्तम् --- आद्ये योगे न व्यवाये तिङः स्युरिति।।
(दूषणोद्धारवार्तिकम्)
नैष दोषः।
(1908 दूषणोद्धारवार्तिकम्।। 10 ।।)
(- आनुपूर्व्यात्सिद्धमेतत्। नात्राकृतेष्वादेशेषु विकरणाः प्राप्नुवन्ति। किं कारणम्?। सार्वधातुके विकरणा उच्यन्ते। न चाकृतेष्वादेशेषु सार्वधातुकत्वं भवति।।
(दूषणसाधकभाष्यम्)
ये तर्हि नैतस्मिन्विशेषे विधीयन्ते। के पुनस्ते?।
(दूषणपरिहारभाष्यम्)
अत्रापि धातुग्रहणं विहितविशेषणम् --- धातोर्विहितस्य लस्येति।।
(दूषणभाष्यम्)
यद्येवं विन्दतीति णलादयः प्राप्नुवन्ति।।
(दूषणपरिहारभाष्यम्)
धातुनात्र विहितं विशेषयिष्यामः। विदिना आनन्तर्ये, धातोर्विहितस्य लस्य विदेरनन्तरस्येति।।
(दूषणभाष्यम्)
इह तर्हि अजक्षिष्यन् अजागरिष्यन् इति अभ्यस्ताद् झेर्जुस् भवतीति जुस्भावः प्राप्नोति।।
(दूषणपरिहारभाष्यम्)
अत्रापि धातुना विहितं विशेषयिष्यामः। अभ्यस्तेनानन्तर्यम्। धातोर्विहितस्याभ्यस्तादनन्तरस्येति।।
(आक्षेपभाष्यम्)
आत इत्यत्र कथं विशेषयिष्यसि?।।
यदि तावद्धातुग्रहणं विहितविशेषणम्। आकारग्रहणमानन्तर्यविशेषणम्। अलुनन् अपुनन् इत्यत्रापि प्राप्नोति।।
(भाष्यम्) अथाकारग्रहणं विहितविशेषणं धातुग्रहणमानन्तर्यविशेषणम्। अपिबन् अजिघ्रन् इत्यत्रापि प्राप्नोति।।
(भाष्यम्) अस्तु तर्हि धातुग्रहणं विहितविशेषणमाकारग्रहणमानन्तर्यविशेषणम्।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तमलुनन्नपुनन्नित्यत्रापि प्राप्नोतीति।।

(दूषणपरिहारभाष्यम्)
नैष दोषः। लोपे कृते न भविष्यति।।
(दूषणसाधकभाष्यम्)
नात्र लोपः प्राप्नोति। किं कारणम्। इत्वेन बाध्यते।।
(दूषणबाधकभाष्यम्)
नात्रेत्वं प्राप्नोति। किं कारणम्। अन्तिभावेन बाध्यते।।
(दूषणबाधकभाष्यम्)
लोप इत्वेन। इत्वमन्तिभावेन। अन्तिभावो जुस्भावेन। जुस्भावो लोपेनेति चक्रकमव्यवस्था प्रसज्येत।।
(दूषणबाधकभाष्यम्)
नास्ति चक्रकप्रसङ्गः। न चाव्यवस्थाकारिणाशास्त्रेण भाव्यम्। शास्त्रेण नाम व्यवस्थाकारिणा भवितव्यम्। न चात्र हलादिना मुहूर्तमपि शक्यमवस्थातुम्। तावत्येवात्रान्तिभावेन भवितव्यम्। अन्तिभावे कृते लोपः। लोपेन व्यवस्था भविष्यति।
(तृतीयदूषणोद्धारभाष्यम्)
यदप्युच्यते --- एशः शित्वमिति। क्रियते न्यस एव।।
(सूत्रप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
कानि पुनरस्य योगस्य प्रयोजनानि।
(1909 प्रयोजनवार्तिकम्।। 11 ।।)
- प्रयोजनं प्रातिपदिकप्रतिषेधः-
(भाष्यम्) प्रातिपदिकप्रतिषेधः प्रयोजनम्। धातोस्तव्यदादयो यथा स्युः प्रातिपदिकान्माभूवन्निति।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। साधने तव्यदादयो विधीयन्ते। साधनं च क्रियायाः। क्रियाऽभावात् साधनाऽभावादसत्यपि धात्वधिकारे प्रातिपदिकात्तव्यदादयो न भविष्यन्ति।।
(1910 प्रयोजनवार्तिकम्।। 12 ।।)
(भाष्यम्) स्वपादिषु तर्हि प्रयोजनम्। स्वपिति। सुपितीति मा भूत्।।
(1911 प्रयोजनवार्तिकम्।। 13 ।।)
- अङ्गसंज्ञा च-
(भाष्यम्) अङ्गसंज्ञा च प्रयोजनम्। यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति धातोरङ्गसंज्ञा सिद्धा भावति।।
(1912 प्रयोजनवार्तिकम्।। 14 ।।)
- कृत्संज्ञा च-
(भाष्यम्) कृत्संज्ञा च प्रयोजनम्। धातोर्विहितः प्रत्ययः कृत्संज्ञो भवतीति कृत्संज्ञा सिद्धा भवति।।
(1913 प्रयोजनवार्तिकम्।। 15 ।।)
- उपपदसंज्ञा च-
(भाष्यम्) उपपदसंज्ञा च प्रयोजनम्। तत्रैतस्मिन् धात्वधिकारे यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवतीति
उपपदसंज्ञा सिद्धा भवति।।
(प्रयोजननिराकरणभाष्यम्)
कृदुपपदसंज्ञे तावन्न प्रयोजयतः। अधिकारादप्येते सिद्धे।।
(अनिराकृतप्रयोजनभाष्यम्)
स्वपादिषु तर्हि अङ्गसंज्ञा च प्रयोजनम्।
(1994 सूत्रवैयर्थ्यवार्तिकम्।। 16 ।।)
- धातुग्रहणमनर्थकं यङ्विधौ धात्वधिकारात्-
(भाष्यम्) धातुग्रहणमनर्थकम्।। किं कारणम्? यङ्विधौ धात्वधिकारात्। यङ्विधौ धातुग्रहणं प्रकृतमनुवर्तते। तच्चावश्यमनुर्वत्यम्।।
(1995 अधिकारत्वहेतुवार्तिकम्।। 17 ।।)
- अनधिकारे ह्यङ्गसंज्ञाभावः-
(भाष्यम्) अनिधाकरे हि सति अङ्गसंज्ञाया अभावः स्यात् --- करिष्यति हरिष्यति।।
(दूषणभाष्यम्)
यदि तदनुवर्तते। चूर्णचुरादिभ्यो णिज् भवति धातोश्चेति धातुमात्राण्णिच् प्राप्नोति।।
(1996 दूषणपरिहारवार्तिकम्।। 18 ।।)
- हेतुमद्वचनं तु ज्ञापकमन्यत्राभावस्य-
(भाष्यम्) यदयं हेतुमति चेत्याह, तज्ज्ञापयत्याचार्यो न धातुमात्राण्णिज्भवती ति।।

(आक्षेपभाष्यम्)
इह तर्हि कण्ड्वादिभ्यो यग् भवतीति धातोश्चेति धातुमात्राद्यक् प्राप्नोति।
(1997 समाधानवार्तिकम्।। 19 ।।)
- कण्ड्वादिषु च व्यपदेशिवद्वचनात्सिद्धम्-
(भाष्यम्) यदयं कण्ड्वादिभ्यो यग्भवतीत्याह, तज्ज्ञापयत्याचार्यो न धातुमात्राद्यग्भवती ति।।
अथ वा कण्ड्वादीनेव धातुग्रहणेन संभन्त्स्यामः --- कण्ड्वादिभ्यो धातुभ्यो यगिति।। धातोः।। 91 ।।
<M.3.131>
-3-1-92- तत्रोपपदं सप्तमीस्थम् (709)
(435 उपपदसंज्ञाधिकरसूत्रम् ।। 3 । 1 । 5 आ. 5 )
(स्थग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
स्थग्रहणं किमर्थम्।
(समाधानभाष्यम्)
तत्रोपपदं सप्तमी इतीयत्युच्यमाने यत्रैव सप्तमी श्रूयते तत्रैव स्यात्--स्तम्बेरमः। कर्णेजपः। यत्र वैतेन शब्देन निर्देशः क्रियते सप्तम्यां जनेर्ड इति। इह न स्यात् --- कुम्भकारो नगरकारः।। स्थग्रहणे पुनः क्रियमाणे यत्र सप्तमी श्रूयते, यत्र (चसप्तमी) न श्रूयते यत्र वैतेन शब्देन निर्देशः क्रियते, यत्र वान्येन शब्देन, सप्तमीस्थमात्रे सिद्धं भवति।।
(तत्र ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अथ तत्रग्रहणं किमर्थम्।
(1918 समाधानवार्तिकम्।। 1 ।।)
- तत्रग्रहणं विषयार्थम्-
(भाष्यम्) (तत्रग्रहणं क्रियते। किमर्थम्?। विषयार्थम्) विषयः प्रतिनिर्दिश्यते। तत्रैतस्मिन्धात्वधिकारे सप्तमीनिर्दिष्टमुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति।।
(सामर्थ्यविचाराधिकरणम्)
(1919 समर्थग्रहणवार्तिकम्।। 2 ।।)
- उपपदसंज्ञायां समर्थवचनम्-
(भाष्यम्) उपपदसंज्ञायां समर्थग्रहणं कर्तव्यम्। समर्थमुपपदं प्रत्ययस्येति वक्तव्यम्। इह मा भूत् आहर कुम्भम्, करोति कटम् इति।।
<M.3.132>
(आक्षेपभाष्यम्)
अथ क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोति।।
(काक्वा प्रत्याक्षेपभाष्यम्)
न वा भवितव्यं महाकुम्भकार इति।।
(प्रत्याक्षेपसमाधानभाष्यम्)
भवितव्यं यदैतद्वाक्यं भवति --- महान्कुम्भो महाकुम्भः महाकुम्भं करोतीति महाकुम्भकारः। यदा त्वेतद्वाक्यं भवति --- महान्तं कुम्भं करोतीति तदा न भवितव्यम्। यदा च प्राप्नोति तदा मा भूदिति।।
(समर्थग्रहणवैयर्थ्यभाष्यम्)
यत्तावदुच्यते --- समर्थग्रहणं कर्तव्यमिति।। न कर्तव्यम्। धातोरिति वर्तते। धातोः कर्मण्यण् भवति। तत्र संबन्धादेतद्गन्तव्यं यस्य धातोर्यत्कर्मेति।।
(आक्षेपवारणभाष्यम्)
यदप्युच्यते --- क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्?। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम् --- अन्वर्थसंज्ञा यथा विज्ञायेत उपोच्चारितं पदमुपपदमिति। यच्चात्रोपोच्चारितं न तत्पदम्, यच्च पदं न तदुपोच्चारितम्।।
(भाष्यम्) यावता चेदानीं पदगन्धोस्ति पदविधिरयं भवति। पदविधिश्च समर्थानां भवति। तत्रासामर्थ्यान्न भविष्यति।।
<M.3.133>
(च्व्यन्तोपपदे प्रत्ययोत्पत्तिविचाराधिकरणम्)
(आक्षेपभाष्यम्)
अथ च्व्यन्त उपपदे किमणा भवितव्यम् अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमिति।।
(समाधानभाष्यम्)
न भवितव्यम्। किं कारणम्?। प्रकृतिविवक्षितत्वात्। प्रकृतिविवक्षायां च्विर्विधीयते। तत्सापेक्षम्। सापेक्षं चासमर्थं भवति।।

(प्रश्नभाष्यम्)
न तर्हि इदानीमिदं भवति --- इच्छाम्यहं काशकटीकारमिति।।
(समाधानभाष्यम्)
इष्टमेवैतद्गोनर्दीयस्य।।
(1921 वार्तिकम्।। 3 ।।)
- निमित्तोपादानं च -
(भाष्यम्) निमित्तोपादानं च कर्तव्यम्। निमित्तमुपपदं प्रत्ययस्येति वक्तव्यम्।।
(1922 हेतुवार्तिकम्।। 4 ।।)
- अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः-
(भाष्यम्) अक्रियमाणे हि निमित्तोपादाने अनुपपदेऽपि प्रत्ययः प्रसज्यते।।
(आक्षेपभाष्यम्)
निर्देश इदानीं किमर्थः स्यात्?।
(1923 वार्तिकम्।। 5 ।।)
- निर्देशः संज्ञाकरणार्थः-
(भाष्यम्) (ठकर्मणि इत्यादीनां निर्देशः क्रियते। किमर्थः? संज्ञाकरणार्थः। प्रत्ययसंनियोगेन संज्ञा यथा क्रियेत--) यदा उपपदे प्रत्ययस्तदोपपदसंज्ञां वक्ष्यामीति।।
(आक्षेपभाष्यम्)
तत्तर्हि निमित्तोपादानं कर्तव्यम्?।
(सिद्धान्तिभाष्यम्)
न कर्तव्यम्।।
(1924 निमित्तोपादानवैयर्थ्यवार्तिकम्।। 6 ।।)
- तत्र वचनमुपपदसंनियोगार्थम्-
(भाष्यम्) तत्र वचनं क्रियते तदुपपदसंज्ञासंनियोगार्थं भविष्यति। कर्मण्यण्विधीयते तत्र च प्रत्ययो भवतीति।।
<M.3.134>
(आक्षेपभाष्यम्)
ननु चान्यत्तत्रग्रहणस्य प्रयोजनमुक्तम्। किम्। तत्रग्रहणं विषयार्थमिति।।
(समाधानभाष्यम्)
अधिकारादप्येतत्सिद्धम्।। तत्रोपपदम्।। 92 ।।)
(कृत्प्रकरणम्)
-3-1-93- कृदतिङ् (710)
(436 कृत्संज्ञाधिकरसूत्रम्।। 3 । 1 । 5 आ 6)
(आतिङ्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अतिङिति किमर्थम्?।
(समाधानभाष्यम्)
पचति पठति।।
(अतिङ्ग्रहणवैयर्थ्यभाष्यम्)
अतिङिति शक्यमकर्तुम्।।
(आक्षेपभाष्यम्)
कस्मान्न भवति --- -पचति पठतीति।।
(समाधानभाष्यम्)
धातोः परस्य कृत्संज्ञा। प्राक् च लादेशाद्धात्वधिकारः।।
(आक्षेपभाष्यम्)
एवमपि स्थानिवद्भावात्प्राप्नोति।।
(प्रतिबन्दीभाष्यम्)
अथातिङित्युच्यमाने यावता स्थानिवद्भावः। कथमिवैतत्सिध्यति।।
(समाधानभाष्यम्)
प्रतिषेधवचनसार्मथ्यात्।।
(समाधानान्तरभाष्यम्)

अथ वा तिङ्भाविनो लकारस्य कृत्संज्ञाप्रतिषेधः।।
(आक्षेपभाष्यम्)
किं च स्यात्। यद्यत्र कृत्संज्ञा स्यात्?।।
(समाधानभाष्यम्)
कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा स्यात्। प्रातिपदिकात् इति स्वाद्युत्पत्तिः प्रसज्येत।।
(दूषणोद्धारभाष्यम्)
नैष दोषः। एकत्वादिषु अर्थेषु स्वादयो विधीयन्ते। ते चात्र तिङोक्ता एकत्वादय इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति।।
(प्रयोजनभाष्यम्)
टाबादयस्तर्हि तिङन्ताद् मा भूवन्निति।।
(प्रयोजननिराकरणभाष्यम्)
स्त्रियां टाबादयो विधीयन्ते। न च तिङन्तस्य स्त्रीत्वेन योगोस्ति।।
(प्रयोजनभाष्यम्)
अणादयस्तर्हि तिङन्तान्मा भूवन्निति।।
(प्रयोजननिराकरणभाष्यम्)
अपत्यादिष्वणादयो विधीयन्ते। न च तिङन्तस्यापत्यादिभिर्योगोस्ति।। अथापि कथंचिद्योगः स्यात्। एवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न तिङन्तादणादयो भवन्तीति। यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति --- -अतिशायने तमबिष्ठनौ। तिङश्च ।।
(प्रयोजनभाष्यम्)
इह तर्हि पचति पठतीति ह्रस्वस्य पिति कृति तुग्भवती ति तुक् प्राप्नोति।।
(प्रयोजननिराकणभाष्यम्)
धातोरि ति वर्तते।।
(प्रयोजनभाष्यम्)
एवमपि चिकीर्षतीत्यत्रापि प्राप्नोति।।
(प्रयोजननिराकरणभाष्यम्)
अत्रापि शपा व्यवधानात्।
(प्रयोजनसाधकभाष्यम्)
एकादेशे कृते नास्ति व्यवधानम्।
(प्रयोजननिराकरणभाष्यम्)
एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेवेति।। कृदतिङ्।। 93 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादेपञ्चममाह्निकम्।।
-3-1-94- वाऽसरूपोऽस्त्रियाम् (711)
(437 सूत्रम्।। 3 । 1 । 6 आ. 1 )
(आक्षेपभाष्यम्)
कथमिदं विज्ञायते --- स्त्रियामभिधेयायां वाऽसरूपो न भवतीति। आहोस्वित् स्त्रीप्रत्ययेष्वि ति?।। किं चातः?।
(अभिधेयपरत्वदूषणभाष्यम्)
यदि विज्ञायते --- -स्त्रियामभिधेयायाम् इति --- लव्या लवितव्या अत्र वाऽसरूपो न प्राप्नोति।।
(स्त्रीप्रत्ययपरत्वदूषणभाष्यम्)
अथ विज्ञायते --- स्त्रीप्रत्ययेषु इति, व्यावक्रोशी व्यावक्रुष्टिरिति न सिध्यति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि नैवं विज्ञायते --- स्त्रियामभिधेयायाम्, नापि स्त्रीप्रत्ययेष्विति। कथं तर्हि? स्त्रीग्रहणं स्वरयिष्यते।। तत्र स्वरितेनाधिकारगतिर्भवतीति स्त्रियाम् इत्यधिकृत्य ये प्रत्यया विहितास्तेषां प्रतिषेधो विज्ञास्यते।।
(सूत्रप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं पुनरिदमुच्यते?।।
(1925 समाधानवार्तिकम्।। 1 ।।)
- असरूपस्य वावचनमुत्सर्गस्य बाधकविषयेऽनिवृत्त्यर्थम्-
(भाष्यम्) असरूपस्य वावचनं क्रियते। उत्सर्गस्य बाधकविषयेऽनिवृत्तिर्यथा स्यात्। तव्यत्तव्यानीयर उत्सर्गाः तेषामजन्ताद्यदपवादः --- -चेयम् चेतव्यमित्यपि यथा स्यात्।।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। अजन्ताद्यद्विधीयते। हलन्तात् ण्यद्विधीयते। एतावन्तश्च धातवो यदुताजन्ता हलन्ताश्च। उच्यन्ते च तव्यदादयस्ते

वचनाद्भविष्यन्ति।।
(प्रयोजनभाष्यम्)
एवं तर्हि ण्वुल्तृचावुत्सर्गौ, पचादिभ्योऽजपवादः --- पचतीति पचः। पक्ता पाचक इत्यपि यथा स्यात्।।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् --- -अजपि सर्वधातुभ्यो वक्तव्य इति।।
(प्रयोजनभाष्यम्)
एवं तर्हि ण्वुल्तृजच उत्सर्गाः। तेषामिगुपधात्कोपवादः --- विक्षिपः विलिखः । विक्षेप्ता विक्षेपक इत्यपि यथा स्यात्।।
अस्ति प्रयोजनमेतत्। किं तर्हीति।
(1926 आक्षेपवार्तिकम्।। 2 ।।)
- तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते-
(भाष्यम्) तत्रोत्पत्तिर्विभाषा प्राप्नोति यथा तद्धिते।।
(आक्षेपबाधकभाष्यम्)
अस्तु, यदा विक्षिपो विलिख इत्येतन्न, तदा विक्षेप्ता विक्षेपक इत्येतद्भविष्यति।।
(आक्षेपसाधकभाष्यम्)
यद्येतल्लभ्येत कृतं स्यात्। तत्तु न लभ्यम्। किं कारणम्?। यथा तद्धित इत्युच्यते।।
तद्धितेषु च सर्वमेवोत्सर्गापवादं विभाषा, उत्पद्यते वा न वा।।
(1927 समाधानवार्तिकम्।। 3 ।।)
- सिद्धं त्वसरूपस्य बाधकस्य वावचनात्-
(भाष्यम्) सिद्धमेतत्। कथम्?। असरूपस्य बाधकस्य वावचनात् असरूपो वा बाधको भवतीति इति वक्तव्यम्।।
(आक्षेपभाष्यम्)
सिध्यति। सूत्रं तर्हि भिद्यते।।
(समाधानभाष्यम्)
यथान्यासमेवास्तु।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् --- - तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते इति।।
(दूषणपरिहारभाष्यम्)
नैष दोषः। अस्ति कारणं येन तद्धितेषु विभाषोत्पत्तिर्भवति। किं कारणम्?। प्रकृतिस्तत्र प्रकृत्यर्थे वर्तते, अन्येन च शब्देन प्रत्ययार्थोभिधीयते। इह पुनर्न केवला प्रकृतिः प्रकृत्यर्थे वर्तते। नचान्यः शब्दोस्ति यस्तमर्थमभिदधीतेति कृत्वा तेनानुत्पत्तिर्न भविष्यति।।
अथ वा समयः --- कृतः --- न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः इति। एतस्मात्समयादनुत्पत्तिर्न भविष्यति।।
(आक्षेपभाष्यम्)
ननु च य एव तस्य समयस्य कर्ता स एवेदमप्याह। यद्यसौ तत्र प्रमाणम्, इहापि प्रमाणं भवितुमर्हति।।
(समाधानभाष्यम्)
प्रमाणमसौ तत्र चेह च। सार्मथ्यं त्विह द्रष्टव्यं शब्दानां प्रयोगे। न चानुत्पत्तौ सार्मथ्यमस्ति। ततोनुत्पत्तिर्न भविष्यति।।
(आक्षेपभाष्यम्)
कथं तर्हि तद्धितेष्वनुत्पत्तौ सार्मथ्यं भवति?।।
(समाधानभाष्यम्)
अन्येन प्रत्ययेन सार्मथ्यम्। केन?। षष्ठ्या।। अथ वा रूपवत्तामाश्रित्य वाविधिरुच्यते। न चानुत्पत्ती रूपवती। तेनानुत्पत्तिर्न भविष्यति।।
(आक्षेपभाष्यम्)
एवमपि कुत एतत् --- अपवादो विभाषा भविष्यति, न पुनरुत्सर्ग इति।।
(समाधानभाष्यम्)
न चैवास्ति विशेषो यदपवादो विभाषा स्याद्, उत्सर्गो वा।। अपि च सापेक्षोयं निर्देशः क्रियते वाऽसरूप इति। न चोत्सर्गवेलायां किंचिदपेक्ष्यमस्ति। अपवादवेलायां पुनरुत्सर्गोपेक्ष्यते। तेन यो रूपवानन्यपूर्वो बाधकः प्राप्नोति, स वा बाधको भविष्यति।। कः पुनरसौ?। अपवादः।।
(आक्षेपभाष्यम्)
यदि यो रूपवानन्यपूर्वो बाधकः प्रप्नोति स वा बाधको भवतीत्युच्यते। क्विबादिषु समावेशो न प्राप्नोति --- ग्रामणीः ग्रामनाय इति। न ह्येते रूपवन्तः।।
(समाधानभाष्यम्)
एतेपि रूपवन्तः। कस्यामवस्थायाम्?। उपदेशावस्थायाम्।।
(वार्तिकशेषभाष्यम्)

यद्येवम्।
(1928 आक्षेपवार्तिकम्।। 4 ।।)
- अनुबन्धविभिन्नेषु विभाषाप्रसङ्गः-
(भाष्यम्) अनुबन्धविभिन्नेषु विभाषा प्राप्नोति --- -कर्मण्यण् आतोनुपसर्गे क इति कविषयेऽणपि प्राप्नोति।
(1929 समाधानवार्तिकम्।। 5 ।।)
- सिद्धमनुबन्धस्यानेकान्तत्वात्-
(भाष्यम्) सिद्धमेतत्। कथम्?। अनुबन्धस्यानेकान्तत्वात्। अनेकान्ता अनुबन्धाः।।
(समाधानान्तरभाष्यम्)
अथ वा प्रयोगेऽसरूपाणां वाविधिर्न्याय्यः।।
(1930 दूषणवार्तिकम्।। 4 ।।)
- प्रयोगे लादेशेषु प्रतिषेधः-
(भाष्यम्) प्रयोगे चेल्लादेशेषु प्रतिषेधो वक्तव्यः। ह्योऽपचत् इत्यत्र लुङपि प्राप्नोति। श्वः पक्तेत्यत्र लृडपि प्राप्नोति।।
(दूषणपरिहारभाष्यम्)
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति --- न लादेशेषु वासरूपो भवति इति। यदयं हशश्वतोर्लङ् च इत्याह।।
(समाधानान्तरभाष्यम्)
अथ वा प्रयोगेऽसरूपाणां वाविधौ न सर्वमिष्टं संगृहीतमिति कृत्वा द्वितीयः प्रयोग उपास्यते।। कोसौ?। उपदेशो नाम।। उपदेशे चैतेऽसरूपाः।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् --- - अनुबन्धविभिन्नेषु विभाषाप्रसङ्ग इति।।
(दूषणपरिहारस्मारणभाष्यम्)
परिहृतमेतत् --- - सिद्धमनुबन्धस्यानेकान्तत्वाद् इति।।
(दूषणभाष्यम्)
अथैकान्तेषु दोष एव।।
(दूषणपरिहारभाष्यम्)
एकान्तेषु च न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति --- नानुबन्धकृतमसारूप्यं भवति इति। यदयं ददातिदधात्योर्विभाषां शास्ति।।
(परिहारान्तरभाष्यम्)
अथवाऽसरूपो वा बाधको भवतीत्युच्यते। अपवादश्च नाम अनुबन्धभिन्नो वा भवति रूपान्यत्वेन वा। तेनानेनावश्यं किंचित्त्याज्यं किंचिच्च संगृहीतव्यम्। तद्यदनुबन्धकृतमसारूप्यम्, तन्नाश्रयिष्यामः, यत्तु रूपान्यत्वेनासारूप्यम्, तदाश्रयिष्यामः।।
(परिहारान्तरभाष्यम्)
अथवा --- असरूपो वा बाधको भवती त्युच्यते। सर्वश्चासरूपः तत्र प्रकर्षगतिर्विज्ञास्यते --- साधीयो योसरूपः इति।। कश्च साधीयान्?। यः प्रयोगे, प्राक् च प्रयोगात्।।
(परिहारान्तरभाष्यम्)
अथवा --- असरूपो वा बाधको भवतीत्युच्यते। न चैवं सति कश्चिदपि सरूपः। त एवं विज्ञास्यामः --- क्वचिद्येऽसरूपाः इति। अनुबन्धभिन्नाश्च प्रयोगे सरूपाः।।
(आक्षेपभाष्यम्)
अथ कथमिदं विज्ञायते अस्त्रियामिति --- किं स्त्रियां न भवति इति, आहोस्वित् प्राक् स्त्रिया भवति इति। कश्चात्र विशेषः?।
(1939 दूषणवार्तिकम्।। 5 ।।)
- स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः-
(भाष्यम्) स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषा प्राप्नोति।। क्त --- -हसितं छात्रस्य शोभनम्। घञपि प्राप्नोति।। ल्युट् --- -हसनं छात्रस्य शोभनम्। घञपि प्राप्नोति।। तुमुन् --- इच्छति भोक्तुम्। लिङ्लोटावपि प्राप्नुतः।। खलर्थः --- -ईषत्पानः सोमो भवता। खलपि प्राप्नोति।।
(स्त्रियाः प्राग् इति पक्षाङ्गीकारभाष्यम्)
एवं तर्हि स्त्रियाः प्रागिति वक्ष्यामि।
(1932 दूषणवार्तिकम्।।6 ।।)
- स्त्रियाः प्रागिति चेत् क्त्वायां वावचनम्-
(भाष्यम्) स्त्रियाः प्रागिति चेत्क्त्वायां वावचनं कर्तव्यम्। आसित्वा भुङ्क्ते। आस्यते भोक्तुमित्यपि यथा स्यात्।
(1933 दूषणवार्तिकम्।। 7 ।।)
- कालादिषु तुमुन्विधाने वावचनम्-
(भाष्यम्) कालादिषु तुमुन्विधाने वावचनं कर्तव्यम्। कालो भोजनस्येत्यपि यथा स्यात्।।
(1934 वार्तिकम्।. 8 ।।)

- अर्हे तृज्विधानम्-
(भाष्यम्) अर्हे तृज् विधेयः। इमे अर्हे कृत्या विधीयन्ते ते विशेषविहिताः सामान्यविहितं तृचं बाधेरन्।।
(दूषणोद्धारभाष्यम्)
नैष दोषः । भावकर्मणोः कृत्या विधीयन्ते कर्तरितृच्। कः प्रसङ्गो यद्भावकर्मणोः कृत्याः कर्तरि तृचं बाधेरन्। (1935 वार्तिकन्यासान्तरम्।। 9 ।।)
- अर्हे कृत्यतृज्विधानम्-
(भाष्यम्) अर्हे कृत्यतृचो विधेयाः।। अयमर्हे लिङ् विधीयते। स विशेषविहितः सामान्यविहितान् कृत्यतृचो वा बाधेत।। वासरूपोस्त्रियाम्।। 94 ।।
(अथ कृत्प्रकरणे कृत्यप्रकरणम्)
-3-1-96- तव्यत्तव्यानीयरः (713)
(439 प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ.3)
(1939 प्रत्ययविधिवार्तिकम्।। 1 ।।)
- केलिमर उपसंख्यानम्-
(भाष्यम्) केलिमर उपसंख्यानं कर्तव्यम्। पचेलिमा माषाः पक्तव्याः। भिदेलिमाः सरलाः भेत्तव्याः।
(1939 प्रत्ययविधिवार्तिकम्।। 2 ।।)
- वसेस्तव्यत् कर्तरि णिच्च-
(भाष्यम्) तद्धितो वा पुनरेष भविष्यति। वास्तुनि भवो वास्तव्यः।। तव्यत्तव्या।। 96 ।।
(अथ यत्प्रत्ययप्रकरणम्)
-3-1-97- अचो यत् (714)
(440 यत्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ.4)
(अज्ग्रहणप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
अज्ग्रहणं किमर्थम्?।
(प्रयोजनभाष्यम्)
अजन्ताद्यथा स्याद्, हलन्तान्मा भूदिति।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। हलन्ताण्ण्यद्विधीयते, स बाधको भविष्यति।।
(प्रयोजनसाधकभाष्यम्)
यथैव तर्हि ण्यद्यतं बाधते। एवं तव्यदादीनपि बाधेत। अज्ग्रहणे पुनः क्रियमाणे अजन्ताद्यद्विधीयते, हलन्ताण्ण्यद्विधीयते। एतावन्तश्च धातवो यदुताजन्ता हलन्ताश्च। उच्यन्ते च तव्यदादयः। ते वचनाद्भविष्यन्ति।।
(प्रयोजनबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। वासरूपेण तव्यदादयो भविष्यन्ति।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्। अजन्तभूतपूर्वमात्रादपि यथा स्यात् --- लव्यम्, पव्यम्। आर्द्धधातुकसामान्ये गुणे कृतेपि प्रत्ययसामान्येपि च वान्तादेशे कृते हलन्तादितिण्यत् प्राप्नोति।। तथा दित्स्यं धित्स्यम्। आर्द्धधातुकसामान्ये अकारलोपे कृते हलन्तादिति ण्यत् प्राप्नोति। अज्ग्रहणसामर्थ्याद्यदेव भवति।
(1941 यत्प्रत्ययवार्तिकम्।। 1 ।।)
- यति जनेरुपसंख्यानम्-
(भाष्यम्) यति जनेरुपसंख्यानं कर्तव्यम्। जन्य वत्सेन।।
अत्यल्पमिदमुच्यते(--जनेः इति।)
(1942 वार्तिकन्यासान्तरम्।। 2 ।।)
- तकिशसिचतियतिजनीनामुपसंख्यानमिति वक्तव्यम्-
(भाष्यम्) तकि--तक्यम्। शसि --- शस्यम्। चतिचत्यम्। यति --- -यत्यम्। जनि--जन्यम्।।
(1942 कृत्ययत्प्रत्ययवार्तिकम्।। 2 ।।)
- हनो वा वध च-
(भाष्यम्) हन्तेर्वा यद्वक्तव्यः। वध इत्ययं चादेशः। वध्यः। घात्यः।।
(1943 तद्धितानुपपत्तिभाष्यम्)
यदि तद्धितः, समासो न प्राप्नोति --- -असिवध्यो मुसलध्य इति। यति पुनः सति साधनं कृतेति वा पादहारकाद्यर्थम् इति समासः सिद्धो भवति।।
(तद्धितोपपत्तिभाष्यम्)
यति पुनरसिवधशब्दादेवोत्पत्तिः स्याद्। असिवधमर्हतीति।।

(तद्धितानुपपत्तिभाष्यम्)
नैवं शक्यं वक्तुम्। स्वरे हि दोषः स्यात् --- असिवध्यः एवं स्वरः प्रसज्येत। असिवध्य इति चेष्यते।। अचो।। 97 ।।
-3-1-100- गदमदचरयमश्चानुपसर्गे (717)
(441 यत्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 5)
(1944 यत्प्रत्ययविधिवार्तिकम्।। 1 ।।)
- अनुपसर्गाच्चरेराङि चागुरौ -
(भाष्यम्) अनुपसर्गाच्चरेरित्यत्राङि चागुराविति वक्तव्यम्। आचर्यो देशः।।
अगुराविति किमर्थम्?।
आचार्य उपनयमानः।। गदमद।। 100 ।।
-3-1-103- अर्यः स्वामिवैश्ययोः (720)
(442 यत्प्रत्ययविधिसूत्रम्।। 3 । 1। 6 । आ. 6)
(1945 अन्तोदात्तत्वविधिवार्तिकम्।। 1 ।।)
- स्वामिन्यन्तोदात्तत्वं च-
(भाष्यम्) स्वामिन्यन्तोदात्तत्वं च वक्तव्यम्। अर्यः स्वामीति।। अर्यः स्वामि ।। 103 ।।
-3-1-105- अजर्यं सङ्गतम् (722)
(443 यत्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ.7)
(आक्षेपभाष्यम्)
सङ्गतमिति। किं प्रत्युदाह्रियते?।
(समाधानभाष्यम्)
अजरः कम्बलः, अजरिता कम्बल इति।
(आक्षेपभाष्यम्)
किं पुनः कारणं कर्तृसाधन एव प्रत्युदाह्रियते, न भावसाधनः प्रत्युदाहार्यः।
(समाधानभाष्यम्)
एवं तर्हि,
(1946 वार्तिकम्।। 1 ।।)
- अजर्यं कर्तरि-
(भाष्यम्) अजर्यं कर्तरीति वक्तव्यम्।।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्।
(समाधानभाष्यम्)
न वक्तव्यम्। गत्यर्थानां क्तः कर्तरि विधीयते तेन योगाद् अजर्यं कर्तरि भविष्यति।।
(आक्षेपभाष्यम्)
गत्यर्थानां वै क्तः कर्मण्यपि विधीयते। तेन योगादजर्यं कर्मण्यपि प्राप्नोति।।
(समाधानभाष्यम्)
जीर्यतिरकर्मकः।
(आक्षेपभाष्यम्)
भावे तर्हि प्राप्नोति।
(प्रत्याक्षेपभाष्यम्)
संगतग्रहणमिदानीं किमर्थं स्यात्?।
(समाधानभाष्यम्)
कर्तृविशेषणं संगतग्रहणम्। संगतं कर्तृचेद्भवतीति। तद्यथा --- हृषेर्लोमसु इति लोमानि चेत्कर्तॄणि भवन्तीति।। अजर्यम्।। 105 ।।
(अथ क्यप्प्रत्ययप्रकरणम्)
-3-1-106- वदः सुपि क्यप् च (726)
(444 प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ.8)
(1947 परिसंख्यावार्तिकम्।। 1 ।।)
(भाष्यम्) वदः सुप्यनुपसर्गग्रहणं कर्तव्यम्। इह मा भूत् --- प्रवाद्यं संवाद्यम्।
(आक्षेपभाष्यम्)
तत्तर्हि कर्तव्यम्।
(समाधानभाष्यम्)

न कर्तव्यम्। अनुपसर्ग इति वर्तते।।
(वार्तिकसार्थक्यभाष्यम्)
एवं तर्ह्यन्वाचष्टे --- --अनुपसर्ग इत्येवं वर्तते इति।।
(वार्तिकवैयर्थ्यभाष्यम्)
नैतदन्वाख्येयम् --- अधिकारा अनुवर्तन्तेःथ्य;ति। एष एव च न्यायो यदुत अधिकारा अनुवर्तेरन् इति।। वदः सुपि।। 106 ।।
-3-1-107- भुवो भावे (724)
(445 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ.8)
(आक्षेपभाष्यम्)
भावग्रहणं किमर्थम्?।
(प्रयोजनभाष्यम्)
कर्मणि मा भूदिति।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। भवतिरकर्मकः।
(प्रयोजनसाधकभाष्यम्)
अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति। तेनानुभाव्यमामन्त्रणमित्यत्रापि प्राप्नोति।।
(प्रयोजनबाधकभाष्यम्)
एतदपि नास्ति प्रयोजनम्। अनुपसर्गे इति वर्तते।
(प्रयोजनभाष्यम्)
उत्तरार्थं तर्हि भावग्रहणं कर्तव्यम्। हनस्त च भावे यथा स्यात् --- -श्वहत्या वर्तते। इह मा भूत् श्वघात्यो वृषलः इति।। भुवो भावे।। 107 ।।
-3-1-108- हनस्त च (725)
(446 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 1 । 3 आ .9 )
(1948 वार्तिकम्।। 1 ।।)
- हनस्तश्चित्स्त्रियां छन्दसि-
(भाष्यम्) हनस्त चेत्यत्र चित्स्त्रियां छन्दसि इति वक्तव्यम्। तां भ्रूणहत्यां निगृह्यानुचरणम्। अस्यै त्वा भ्रूणहत्यायै चतुर्थं प्रतिगृह्यते।
(आक्षेपभाष्यम्)
स्त्रियामिति किमर्थम्?।
(समाधानभाष्यम्)
आघ्नते दस्युहत्याय।
(आक्षेपभाष्यम्)
छन्दसीति किमर्थम्?।
(समाधानभाष्यम्)
श्वहत्या दस्युहत्या वर्तते।। हनस्त च।। 108 ।।
-3-1-109- एतिस्तुशास्वृदृजुषः क्यप् (726)
(447 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 10)
(आक्षेपभाष्यम्)
क्यबिति वर्तमाने पुनः क्यब्ग्रहणं किमर्थम्?।
(समाधानभाष्यम्)
क्यबेव यथा स्यात्। यदन्यत्प्राप्नोति तन्मा भूदिति।
(प्रत्याक्षेपभाष्यम्)
किं चान्यत् प्राप्नोति?।
(प्रत्याक्षेपसमाधानभाष्यम्)
ण्यत्।
(समाधानभाष्यम्)
ओरावश्यके ण्यतः स्तौतेः क्यप् पूर्वविप्रतिषिद्धम् इति वक्ष्यति, स पूर्वविप्रतिषेधो न पठितव्यो भवति।। अथवा हनस्तश्चित्स्त्रियां छन्दसि चोदितः, स न वक्तव्यो भवति।।
(1949 परिसंख्यावार्तिकम्।। 1 ।।)
(भाष्यम्) क्यब्विधौ वृञ्ग्रहणं कर्तव्यम्। इह मा भूत् --- वार्या ऋत्विजः इति।।
(1950 क्यप्प्रत्ययवार्तिकम्।। 2 ।।)
- अञ्जेश्चोपसंख्यानं संज्ञायाम्-

(भाष्यम्) अञ्जेश्चोपसंख्यानं संज्ञायां कर्तव्यम्। आज्यम्।।
(आक्षेपभाष्यम्)
यदि क्यप्। वृद्धिर्न प्राप्नोति। तस्माण्ण्यदेषः।।
(ण्यदनुपपत्तिभाष्यम्)
यदिण्यत्। उपधालोपो न प्राप्नोति। तस्मात् क्यबेवैषः।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् --- -वृद्धिर्न प्राप्नोतीति।
(दूषणोद्धारभाष्यम्)
आङ्पूर्वस्य प्रयोगो भविष्यति।
(दूषणभाष्यम्)
यद्येवमवग्रहः प्राप्नोति।।
(दूषणोद्धारभाष्यम्)
न लक्षणेन पदकारा अनुर्वत्याः, पदकारैर्नाम लक्षणमनुर्वत्यम्। यथालक्षणं पदं कर्तव्यम्।। एतिस्तुशास्।। 109 ।।
-3-1-111- इर् च खनः (728)
(448 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 11)
(आक्षेपभाष्यम्)
दीर्घोच्चारणं किमर्थम्। न इ च खनः इत्येवोच्येत।।
(प्रत्याक्षेपभाष्यम्)
का रूपसिद्धिः --- खेयम्?।
(प्रत्याक्षेपसमाधानभाष्यम्)
आद्गुणेन सिद्धम्।।
(आक्षेपबाधकभाष्यम्)
न सिध्यति। षत्वतुकोरसिद्धः इति एकादेशस्यासिद्धत्वात्तुक् प्रसज्येत।।
(आक्षेपसाधकभाष्यम्)
नैतदस्ति। पदान्तपदाद्योरेकादेशोऽसिद्धः। नैष पदान्तपदाद्योरेकादेशः तस्माद् इ च खनः इत्येव वक्तव्यम्।। इर्च खनः।। 111 ।।
-3-1-112- भृञोऽसंज्ञायाम् (729)
(449 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 1 6 आ.12)
(आक्षेपभाष्यम्)
असंज्ञायामिति किमर्थम्।
(समाधानभाष्यम्)
भार्या।
(1951 आक्षेपवार्तिकम्।। 1 ।।)
- भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात्-
(भाष्यम्) भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधः। अनर्थकः प्रतिषेधः अप्रतिषेधः। किं कारणम्?। अन्येन विहितत्वात्। अन्येन लक्षणेन स्त्रियां क्यब्विधीयते संज्ञायां समजनिषदनिपदमनविदषुञ्शीङ्भृञिणः इति।।
(प्रत्याक्षेपभाष्यम्)
प्रतिषेध इदानीं किमर्थः स्यात्?।
(1952 प्रत्याक्षेपसमाधानवार्तिकम्।। 2 ।।)
- प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः-
(भाष्यम्) प्रतिषेधः किमर्थ इति चेद्, अस्त्रीसंज्ञाऽस्ति। तदर्थः प्रतिषेधः स्यात् --- भार्या नामक्षत्रियाः।
(1953 समाधानवार्तिकम्।। 3 ।।)
- सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात्-
(भाष्यम्) सिद्धमेतत्। कथम्?। स्त्रियां संज्ञाप्रतिषेधो वक्तव्यः। संज्ञायां
समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः। ततो न स्त्रियां भृञः इति।।
(आक्षेपभाष्यम्)
सिध्यति। सूत्रं तर्हि भिद्यते।।
(सिद्धान्तिभाष्यम्)
यथान्यासमेवास्तु।।
(दूषणस्मारणभाष्यम्)

ननु चोक्तम् --- - भृञ्ञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वाद् इति।।
(दूषणोद्धारभाष्यम्)
नैष दोषः। भावे इति तत्रानुवर्तते। कर्मसाधनश्चायम्।।
(भाष्यम्) अथ वा य एते संज्ञायां विधीयन्ते, तेषु नैवं विज्ञायते --- संज्ञायामभिधेयायामिति। किं तर्हि?। प्रत्ययान्तेन चेत्संज्ञा गम्यत इति।।
(पक्षान्तरभाष्यम्)
अपर आह --- -
(1954 आक्षेपश्लोकवार्तिकम्।। 4 ।।)
- संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति-
(1955 समाधानश्लोकवार्तिकम्।। 5 ।।)
- स्त्रियां भावाधिकारोस्ति तेन भार्या प्रसिध्यति -
(व्याख्याभाष्यम्)
भाव इति तत्र वर्तते। कर्मसाधनश्चायम्।
(1956 समाधानान्तरश्लोकवार्तिकम्।। 6 ।।)
- अथ वा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम्-
(व्याख्याभाष्यम्)
अथ वा कृत्यल्युटो बहुलमिति एवमत्रापि ण्यद्भविष्यति।
(1957 दृष्टान्तश्लोकवार्तिकम्।। 7 ।।)
- यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा -
(1958 वार्तिकम्।। 8 ।।)
- समश्च बहुलम्-
(भाष्यम्) समश्च बहुलमुपसंख्यानं कर्तव्यम्। संभृत्या एव संभाराः। संभार्या एव संभाराः।। भृञ्ञोसंज्ञायाम्।। 112 ।।
-3-1-114- राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः (731)
(450 क्यप्निपातनविधिसूत्रम्।। 3 । 1 । 6 आ . 13)
(1959 अर्थनिर्देशवार्तिकम्।। 1।।)
- सूर्यरुच्याव्यथ्याः कर्तरि-
(भाष्यम्) सूर्यरुच्य आव्यथ्य इत्येते कर्तरि निपात्यन्ते। किं निपात्यते?। सूर्यः सूसर्तिभ्याम्, सरतेरुत्त्वम्, सुवतेर्वा रुडागमः।। सरणाद्वा सुवति कर्मणीति वा सूर्यः।। रुच्यः। रोचतेसौ रुच्यः। न व्यथत इत्यव्यथ्यः।।
(1960 वार्तिकम्।। 2 ।।)
(भाष्यम्) कुप्यं संज्ञायामिति वक्तव्यम्। गोप्यमन्यत्।
(1961 वार्तिकम्।। 3 ।।)
- कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च-
(भाष्यम्) कृष्टपच्यस्यान्तोदात्तत्वं च वक्तव्यं संज्ञायां कर्मकर्तरि चेति वक्तव्यम्। कृष्टे पच्यन्ते स्वयमेव।
कृष्टपच्याश्च मे। यो हि कृष्टे पक्तव्यः स कृष्टपाक्यो भवति।। राजसूय।। 114 ।।
-3-1-118- प्रत्यपिभ्यां ग्रहेः (765)
(451 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ.14)
(1962 परिसंख्यावार्तिकम्।। 1 ।।)
- प्रत्यपिभ्यां ग्रहेश्छन्दसि-
(भाष्यम्) प्रत्यपिभ्यां ग्रहेः छन्दसीति वक्तव्यम्। मत्तस्य न प्रतिगृह्यम्। अनृतं हि मत्तो वदति तस्मान्नापि गृह्यम्।। प्रतिग्राह्यमपि ग्राह्यमित्येवान्यत्र।। प्रत्यपिभ्याम्।। 118 ।।
-3-1-122- अमावस्यदन्यतरस्याम् (739)
(452 ण्यत्प्रत्ययवृद्धिविकल्पविधिसूत्रम्।। 3 । 1 । 6 आ. 15)
(आक्षेपभाष्यम्)
कस्यायमनुबन्धः?।
(समाधानभाष्यम्)
प्रधानस्य।
(समाधानबाधकभाष्यम्)
यदि प्रधानस्य। अमावस्या इत्येवं स्वरः प्रसज्येत। अमावस्या इति चेष्यते। तथा अमावास्याग्रहणेनामावस्याग्रहणं न प्राप्नोति।।
(समाधानभाष्यम्)
एवं तर्हि निपातनस्य।।

(समाधानबाधकभाष्यम्)
यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति श्रोत्रियंश्छन्दोधीते इति व्यपवर्गाभावात् ञ्नित्याद्युदात्तत्वं न प्राप्नोति।।
(समाधानभाष्यम्)
एवं तर्हि --- --
(1936 श्लोकवार्तिकम्।। 1 ।।)
- अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्-
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति।।
(भाष्यम्) अमा।। 122 ।।
-3-1-123- छन्दसि
निर्ष्टक्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि (740)
(453 छान्दसनिपातनसूत्रम्।। 3 । 1 । 6 आ. 16)
(आक्षेपभाष्यम्)
निर्ष्टक्य इति किं निपात्यते।
(1934 निपातनप्रदर्शकवार्तिकम्।। 1 ।।)
- निर्ष्टक्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थः-
(भाष्यम्) यथा कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः।।
(मतान्तरभाष्यम्)
अपर आह --- -
(1965 मतान्तरवार्तिकम्।। 2 ।।)
- निर्ष्टक्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात्। ण्यदायादेश इत्येतावुपचाय्ये निपातितौ-
(भाष्यम्) निर्ष्टक्ये चिन्वीत पशुकामः।
(1966 निपातनीयवार्तिकम्।)
- ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः। ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः-
(भाष्यम्) ण्यदेकस्मात् --- निर्ष्टक्यः। चतुर्भ्यः क्यप् --- -देवहूयः, प्रणीयः, उन्नीयः, उच्छिष्यः। चतुर्भ्यश्च यतो विधिः --- मर्यः, स्तर्या, ध्वर्यः, खन्यः। ण्यदेकस्मात् --- -खान्यः। यशब्दश्च --- देवयज्या। द्वौ क्यपौ --- आपृच्छ्यः, प्रतिषीव्यः। ण्यद्विधिश्चतुः --- ब्रह्मवाद्यः, भाव्यः, स्ताव्यः उपचाय्यपृडम्। उपपूर्वाच्चिनोतेरायादेशोपि निपात्यते। नहि ण्यतैव सिध्यति।
(1967 वार्तिकम्।। 4 ।।)
- हिरण्य इति च-
(भाष्यम्) हिरण्य इति च वक्तव्यम्। उपचेयपृडमित्येवान्यत्र।। छन्दसि निर्ष्टक्य।। 123 ।।
(इति क्यप् प्रकरणम्)
-3-1-124- ऋहलोर्ण्यत् (741)
(454 ण्यत्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 17)
(1968 वार्तिकम्।। 1 ।।)
- पाणौ सृजेर्ण्यद्विधिः-
(भाष्यम्) पाणौ सृजेर्ण्यद्विधेयः। पाणिर्सग्यारज्जुः।।
(1969 वार्तिकम्।। 2 ।।)
- समवपूर्वाच्च-
(भाष्यम्) समवपूर्वाच्चेति वक्तव्यम्। समवर्सग्या रज्जुः।।
(1970 वार्तिकम्।। 3 ।।)
- लपिदभिभ्यां च-
(भाष्यम्) लपिदभिभ्यां चेति वक्तव्यम्। अपलाप्यम्। अपदाभ्यम्।। ऋहलो ।। 124 ।।
-3-1-125- ओरावश्यके (742)
(455 ण्यत्प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 18)
(आक्षेपभाष्यम्)
कथमिदं विज्ञायते --- आवश्यके उपपदे, आहोस्विद् --- द्योत्य इति।
(1971 उपपदपक्षदूषणवार्तिकम्।। 1 ।।)
- आवश्यक उपपद इति चेद् द्योत्य उपसंख्यानम्-
(भाष्यम्) आवश्यके उपपदे इति चेद् द्योत्ये उपसंख्यानं कर्तव्यम्। पाव्यं लाव्यम्।।
(द्योत्यपक्षाभ्युपगमभाष्यम्)

अस्तु तर्हि द्योत्ये।
(1972 द्योत्यपक्षदूषणवार्तिकम्।। 2 ।।)
- द्योत्य इति चेत्स्वरसमासानुपपत्तिः-
(भाष्यम्) द्योत्य इति चेत् स्वरसमासानुपपत्तिः प्राप्नोति। अवश्यलाव्यम्। अवश्यपाव्यम्।।
(दूषणोद्धारभाष्यम्)
नैष दोषः। मयूरव्यंसकादित्वात् समासः। विस्पष्टादिवत् स्वरश्च।।
(1973 पूर्वविप्रतिषेधवार्तिकम्।। 3 ।।)
- ओरावश्यके ण्यतः स्तौतेः क्यप् पूर्वविप्रतिषिद्धम्-
(भाष्यम्) ओरावश्यके ण्यतः स्तौतेः क्यप् भवति पूर्वविप्रतिषेधेन। ओरावश्यके ण्यद्भवतीत्यस्यावकाशः --- अवश्यलाव्यम्। अवश्यपाव्यम्। क्यपोवकाशः --- स्तुत्यः। इहोभयं
प्राप्नोति --- अवश्यस्तुत्यः। क्यप् भवति पूर्वविप्रतिषेधेन।।
(आक्षेपभाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।
(समाधानभाष्यम्)
न वक्तव्यः। उक्तं तत्र क्यबिति वर्तमाने पुनः क्यब्ग्रहणस्य प्रयोजनम् --- क्यबेब यथा स्याद्, यदन्यत् प्राप्नोति तन्मा भूदिति।। ओरावश्यके 125 ।।
-3-1-127- आनाय्योऽनित्ये (744)
(456 ण्यत्प्रत्ययायादेशनिपातनसूत्रम्।। 3 । 1 । 6 आ. 1)
(1974 परिसंख्यावार्तिकम्।। 1 ।।)
- दक्षिणाग्नौ-
(भाष्यम्) दक्षिणाग्नाविति वक्तव्यम्। आनेयोऽन्यः।।
(1975 पूर्वपक्षवार्तिकम्।। 2 ।।)
- आनाय्योऽनित्य इति चेद् दक्षिणाग्नौ कृतं भवेत्-
(1976 समाधानवार्तिकम्।। 3 ।।
- एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत्-
(भाष्यम्) आनाय्यो ।। 127 ।।
-3-1-129- पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु (743)
(457 ण्यत्प्रत्ययादिनिपातनविधिसूत्रम्।। 3 । 1 । 6 आ.20)
(आक्षेपभाष्यम्)
पाय्यनिकाय्ययोः किं निपात्यते?।
(1977 समाधानवार्तिकम्।। 1 ।।)
- पाय्यनिकाय्ययोरादिपत्वकत्वनिपातनम्-
(भाष्यम्) पाय्यनिकाय्ययोरादिपत्वमादिकत्वं च निपात्यते।। मेयं निचेयमित्येवान्यत्र।। पाय्यसा ।। 129 ।।
-3-1-130- क्रतौ कुण्डपाय्यसंचाय्यौ (747)
(458 ण्यत्प्रत्ययादिनिपातनसूत्रम्।। 3 । 1 । 6 आ.21)
(1978 वार्तिकम्।। 1 ।।)
- कुण्डपाय्ये यद्विधिः-
(भाष्यम्) कुण्डपाय्ये यद्विधेयः।। कुण्डपाय्यः क्रतुः।। क्रतौ कुद्द।। 130 ।।
-3-1-131- अग्नौपरिचाय्योपचाय्यसमूह्याः (748)
(459 ण्यत्प्रत्ययायादेशादिनिपातनसूत्रम्।। 3 । 1 । 6 आ.22)
(1979 आक्षेपवार्तिकम्।। 1 ।।)
- समूह्य इत्यनर्थकं वचनं सामान्यकृतत्वात्-
(भाष्यम्) समूह्य इत्यनर्थकं वचनम्।। किं कारणम्।। सामान्यकृतत्वात्। सामान्येनैवात्रण्यद्भविष्यति ऋहलोर्ण्यद् इति।
(आनर्थक्यबाधकभाष्यम्)
वह्यर्थे तर्हि निपातनं कर्तव्यम्। वहेर्ण्यद्यथा स्यात्।।
(1980 आक्षेपसाधकवार्तिकम्।। 2 ।।)
- वह्यर्थमिति चेद् ःढ्य;हेस्तदर्थत्वात्सिद्धम्-
(भाष्यम्) उहिरति वह्यर्थे वर्तते।
(आक्षेपभाष्यम्)

कथं पुनरन्यो नामान्यस्यार्थे वर्तते। कथमूहिर्वह्यर्थे वर्तते?।
(समाधानभाष्यम्)
बह्वर्था अपि धातवो भवन्ति।
(आक्षेपभाष्यम्)
अस्ति पुनः क्वचिदन्यत्रापि ःढ्य;हिर्वह्यर्थे वर्तते।
(समाधानभाष्यम्)
अस्तीत्याह।
(1981 आनर्थक्यसाधकान्तरवार्तिकम्।। 3 ।।)
- ःढ्य;हिविग्रहच्च ब्राह्मणे सिद्धम्-
(भाष्यम्) ःढ्य;हिविग्रहाच्च ब्रह्मणे सिद्धमेतत्। समूह्यं चिन्वीत पशुकामः। पशवो वै पुरुषः पशूनेवास्मै तत्समूहतीति।। अग्नौ षहि।। 131 ।।
-3-1-132- चित्याग्निचित्ये च (749)
(460 निपातनसूत्रम्।। 3 । 1 । 6 आ. 23 )
(1982 वार्तिकम्।। 1 ।।)
- अग्निचित्येत्यन्तोदात्तो भावे -
(भाष्यम्) अग्निचित्येतिभावेन्तोदात्तो भवति। अग्निचयनमेवाग्निचित्या।। चित्याग्नि।। 132 ।।
(इति कृत्यप्रकरणम्)
-3-1-133- ण्वुल्तृचौ (750)
(461 प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 24)
(आक्षेपभाष्यम्)
किमर्थश्चकारः।
(समाधानभाष्यम्)
स्वरार्थः। चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। एकाजयम्। तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन प्रत्ययस्वरेणैव सिद्धम्।.
(समाधानान्तरभाष्यम्)
विशेषणार्थस्तर्हि। क्व विशेषणार्थेनार्थः?। असृन्तृच् --- इति। तृ इत्युच्यमाने मातरौ मातरः पितरौ पितर इत्यत्रापि प्राप्नोति।।
(समाधानबाधकभाष्यम्)
स्वसृनसृग्रहणं नियमार्थं भविष्यति। एतयोरेव योनिसंबन्धयोः, नान्येषां योनिसंबन्धानामिति।।
(समाधानान्तरभाष्यम्)
सामान्यग्रहणाविघातार्थस्तर्हि। क्व सामान्यग्रहणाविघातार्थेनार्थः?।। अत्रैव।। यदेतत्तृन्तृचोर्ग्रहणम्, एतत् तृ इति वक्ष्यामि।।
(समाधानसाधकभाष्यम्)
स्वसृनसृग्रहणं नियमार्थं भविष्यति --- -एतयोरेव योनिसंबन्धयोः, नान्येषां योनिसंबन्धानामिति।।
(सामान्यग्रहणाविधातभाष्यम्)
तुश्छन्दसि तुरिष्ठेमेयः स्विति चोभयोर्ग्रहणं यथा स्यात्।।
(1983 धातुपरिसंख्यावार्तिकम्।। 1 ।।)
- ण्वुलि सकर्मकग्रहणम्-
(भाष्यम्)ण्वुलि सकर्मकग्रहणं कर्तव्यम्। इह मा भूद् --- आसिता शयिता इति।।
(1984 परिसंख्यानिराकरणवार्तिकम्।। 2 ।।)
- न वा धातुमात्राद्दर्शनाद्ण्वुलः-
(भाष्यम्) न वा वक्तव्यः। किं कारणम्?। धातुमात्राद्दर्शनाद् ण्वुलः। धातुमात्राण्ण्वुल् दृश्यते। इमे अस्य आसकाः। इमे अस्य शायकाः। उत्थिता आसका वैश्रवणस्येति।।
(1985 कालपरिसंख्यावार्तिकम्।। 3 ।।)
- तृजादिषु वर्तमानकालोपादानमध्यापकवेदाध्यायाद्यर्थम्-
(भाष्यम्) तृजादिषु वर्तमानकालोपादानं कर्तव्यम्। किं कारणम्?। अध्यापकवेदाध्यायाद्यर्थम्। अध्यापकः वेदाध्यायः। अधीतवत्यध्येष्यमाणे वा मा भूद् इति।।
(1986 परिसंख्यानिराकरणवार्तिकम्।। 4 ।।)
- न वा कालमात्रे दर्शनादन्येषाम्-
(भाष्यम्) न वा वक्तव्यम्। किं कारणम्?। कालमात्रे दर्शनादन्येषाम्। कालमात्रे ह्यन्ये प्रत्यया दृश्यन्ते। चर्चापारः शमनीपारः।। ण्वुल्तृचौ।। 133 ।।

-3-1-134- नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (751)
(432 प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 25 )
(1987 इष्टसाधकवार्तिकम्।। 1 ।।)
- अजपि सर्वधातुभ्यः-
(भाष्यम्) अजपि सर्वधातुभ्यो वक्तव्यः इहापि यथा स्याद् --- भवः सव इति।।
(आक्षेपभाष्यम्)
न तर्हीदानीमिदं पचाद्यनुक्रमणं कर्तव्यम्।
(समाधानभाष्यम्)
कर्तव्यं च। किं प्रयोजनम्?।
(1988 गणपाठप्रयोजनवार्तिकम्।। 2 ।।)
- पचाद्यनुक्रमणमनुबन्धासंजनार्थमपवादबाधनार्थं च-
(भाष्यम्) अनुबन्धासंजानार्थं तावत्। नदट् नदी। चोरट् चोरी। अपवादबाधनार्थम्। जारभरा श्वपचेति। नन्दिग्रहि।। 134 ।।
-3-1-135- इगुपधज्ञाप्रीकिरः कः (752)
(अथ कप्रत्ययप्रकरणम्)
(436 कप्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ. 26)
(1989 वार्तिकम्।। 1 ।।)
- इगुपधेभ्य उपसर्गे कविधिर्मेषाद्यर्थः-
(भाष्यम्) इगुपधेभ्य उपसर्गे को विधेयः। किं प्रयोजनम्। मेषाद्यर्थः। मेषः देवः सेवः।।
(1990 निराकरणवार्तिकम्।। 2 ।।)
- न वा बुधादीनां दर्शनादनुपसर्गेऽपि-
(भाष्यम्) न वा को विधेयः। किं कारणम्। बुधादीनां दर्शनादनुपसर्गेऽपि। बुधादीनामनुपसर्गेऽपि को दृश्यते बुधः युधः भिद इति।।
(आक्षेपभाष्यम्)
कथं मेषः देवः सेव इति।
(समाधानभाष्यम्)
पचादिषु पाठः करिष्यते।। इगुपधज्ञा।। 135 ।।
-3-1-137- पाघ्राध्माधेट्दृशः शः (754)
(434 शप्रत्ययवधिसूत्रम्।। 3 । 1 । 6 आद्द 27)
(1991 वार्तिकम्।। 1 ।।)
- जिघ्रः संज्ञायां प्रतिषेधः -
(भाष्यम्) जिघ्रः संज्ञायां प्रतिषेधो वक्तव्यः। व्याजिघ्रतीति व्याघ्रः।।
(आक्षेपभाष्यम्)
इह केचिच्छस्यैव प्रतिषेधमाहुः। केचिज्जिघ्रभावस्य। किं पुनरत्र न्याय्यम्।।
(समाधानभाष्यम्)
शस्यैव प्रतिषेधो न्याय्यः। जिघ्रभावे हि प्रतिषेद्धे केन शे आकारलोपः स्यात्।। पाघ्राध्मा।। 137 ।।
-3-1-138- अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च (755)
(435 शप्रत्ययविधिसूत्रम्।। 3 । 6 आद्द 28 )
(1992 अव्याप्तिवारकवार्तिकम्।। 1 ।।)
- अनुपसर्गान्नौ लिम्पेः -
(भाष्यम्) अनुपसर्गान्नौ लिम्पेरिति वक्तव्यम्। निलिम्पा नाम देवाः।
(1993 परिसंख्यावार्तिकम्।। 2 ।।)
- गवि च विन्देः संज्ञायामुपसंख्यानम्-
(भाष्यम्) गवि चोपपदे विन्देः संज्ञायामुपसंख्यानं कर्तव्यम्। गोविन्दः।।
(न्यूनतापूरकभाष्यम्)
अत्यल्पमिदमुच्यते गवीति।।
(1994 वार्तिकम्।। 3 ।।)
- गवादिष्विति वक्तव्यम्-
(भाष्यम्) गोविन्दः। अरविन्दः।। अनुपसर्गाल्लिम्प।। 138 ।।
-3-1-140- ज्वलितिकसन्तेभ्यो णः (757)
(466 णप्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आद्द 29)

(1995 न्यूनतापूरकवार्तिकम्।। 1 ।।)

- तनोतेर्नउपसंख्यानम्-

(भाष्यम्) तनोतेर्न उपसंख्यानं कर्तव्यम्। अवतनोतीत्यवतानः।। ज्वलितिक।। 140 ।।

-3-1-145- शिल्पिनि ष्वुन् (732)

(467 ष्वुन् प्रत्ययविधिसूत्रम्।। 3 । 1 । 6 आ‌द्द 30)

(1996 परिसंख्यावार्तिकम्।। 1 ।।)

- नृतिखनिरञ्जिभ्यः-

(भाष्यम्) नृतिखनिरञ्जिभ्य इति वक्तव्यम्। इहमा भूत् --- वायकः।। शिल्पिनि ष्वुन्।। 145 ।।

-3-1-149- प्रुसृल्वः समभिहारे वुन् (766)

(468 वुन् प्रत्ययविधिसूत्रम्।। 3 । 6 आ‌द्द 3)

- प्रुसृल्वः साधुकारिणि वुन्विधानम्-

(भाष्यम्) प्रुसृल्वः साधुकारिणि वुन्विधेयः। सकृदपि यः सुष्ठु करोति तत्र यथा स्यात्।। बहुशोपि यो दुष्ठु करोति तत्र मा भूद् इति।। प्रुसृल्वः।। 149 ।।

-9-9-999-

# महाभाष्यम्/तृतीयोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nml
< महाभाष्यम् | तृतीयोऽध्यायः
-3-2-1- कर्मण्यण् (768)
(439 अण्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आद्द 1 )
(1997 परिसंख्यावार्तिकम्।। 1 ।।)
(- कर्मणि निर्वत्यमानविक्रियमाण इति वक्तव्यम्। इह मा भूत्----आदित्यं पश्यति, हिमवन्तं श्रृणोति, ग्रामं गच्छतीति।।
(1998 अप्राप्तविधायकवार्तिकम्।। 2 ।।)
- कर्मणि निर्वत्यमानविक्रियमाणे इति चेद् वेदाध्यायादीनामुपसंख्यानम्-
(भाष्यम्) कर्मणि निर्वत्यमानविक्रियमाण इति चेद्वेदाध्यायादीनामुपसंख्यानं कर्तव्यम्। वेदाध्यायः चर्चापारः शमनीपारः।।
(1999 परिगणनवार्तिकम्।। 3 ।।)
- यत्र च नियुक्तः-
(भाष्यम्) यत्र च नियुक्तस्तत्र चोपसंख्यानं कर्तव्यम्। छत्रधारः द्वारपालः।।
(2000 परिगणनवार्तिकम्।। 4 ।।)
- हृग्रहिनीवहिभ्यश्च-
(भाष्यम्) हृग्रहिनीवहिभ्यश्च वक्तव्यम्। द्द---भारहारः। हृ।। ग्रहि---कमण्डलुग्राहः। ग्रहि।। नी---उष्ट्रप्रणायः। नी।। वहि---भारवाहः। वहि।।
(2001 परिगणनप्रत्याख्यानवार्तिकम्।। 5 ।।)
- अपरिगणनं वा -
(भाष्यम्) न वार्थः परिगणनेन।।
(आक्षेपभाष्यम्)
कस्मान्न भवति----आदित्यं पश्यति, हिमवन्तं श्रृणोति, ग्रामं गच्छतीति?।
(2002 प्रत्याख्यानहेतुवार्तिकम्।। 6 ।।)
- अनिभिधानात्-
(भाष्यम्) अनभिधानादेव न भविष्यति।
(2003 विप्रतिषेधवार्तिकम्।। 7 ।।)
- अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन-
(भाष्यम्) अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन। अनुपपदस्यावकाशः----पचतीति पचः, कर्मोपपदस्यावकाशः----कुम्भकारः नगरकारः। इहोभयं प्राप्नोति---ओदनपाचः। कर्मोपपदो भवति विप्रतिषेधेन।।
अनुपपदस्यावकाशः---विक्षिपः विलिखः। कर्मोपपदस्य स एव। इहोभयं प्राप्नोति---काष्ठभेदः। कर्मोपपदो भवति विप्रतिषेधेन।।
अनुपपदस्यावकाशः----जानातीति ज्ञः। कर्मोपपदस्य स एव। इहोभयं प्राप्नोति---अर्थज्ञः। कर्मोपपदो भवति विप्रतिषेधेन।।
(विप्रतिषेधायुक्तत्वभाष्यम्)
नैष युक्तो विप्रतिषेधाः। अनुपपदस्तृतीयः। ण्वुल्तृजचः। तेषां णः । तस्य कः। स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत।।
(विप्रतिषेधसाधकभाष्यम्)
कर्मोपपदोपि तृतीयः। ण्वुल्तृजचः। तेषामण्। अणः कः। उभयोस्तृतीययोर्युक्तो विप्रतिषेधः।।
(विप्रतिषेधोदाहरणान्तरभाष्यम्)
अनुपपदस्यावकाशः---लिम्पतीति लिम्पः। कर्मोपपदस्य ---स एव। इहोभयं प्राप्नोति---कुड्यलेप इति। कर्मोपपदो भवति विप्रतिषेधेन।।
(विप्रतिषेधबाधकभाष्यम्)
नैष युक्तो विप्रतिषेधः। अनुपपदस्तृतीयः। ण्वुल्तृजचः। तेषां कः। कस्य शः। स यथैव शः कं बाधते एवं कर्मोपपदमपि बाधेत।।
(सिध्युपायप्रश्नभाष्यम्)
का तर्हि गतिः?।
(सिध्युपायभाष्यम्)
मध्येऽपवादाः पूर्वान् विधीन्बाधन्ते नोत्तरानि त्येवं शः कं बाधिष्यते, कर्मोपपदं न बाधिष्यते।।
(विप्रतिषेधोदाहरणान्तरभाष्यम्)
अनुपपदस्यावकाशः सुग्लः सुम्लः। कर्मोपपदस्य स एव। इहोभयं प्राप्नोति। गोसंदायः बडवासंदायः। कर्मोपपदो भवति विप्रतिषेधेन।।
(विप्रतिषेधबाधकभाष्यम्)
नैष युक्तो विप्रतिषेधः। अनुपपदस्तृतीयः। ण्वुल्तृजचः। तेषां णः। तस्य कः। स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत।।
(गतिप्रश्नभाष्यम्)

का तर्हि गतिः?।
(गतिभाष्यम्)
पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानित्येवमयं को णं बाधिष्यते, कर्मोपपदं न बाधिष्यते।।
(2004 णप्रत्ययविधिवार्तिकम्।। 8 ।।)
- शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च-
(भाष्यम्) शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्यः, पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। शीलिमांसशीलः। मांसशीला। कामि--- मांसकामः मांसकामा। भक्षि----मांसभक्षः मांसभक्षा। आचरी---कल्याणाचारः कल्याणाचारा।।
(2005 णप्रत्ययवार्तिकम्।। 9 ।।)
- इर्क्षिक्षमिभ्यां च-
(भाष्यम्) इर्क्षिक्षमिभ्यां चेति वक्तव्यम्। सुखप्रतीक्षः सुखप्रतीक्षा। कल्याणक्षमः कल्याणक्षमा।।
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते?।
(समाधानभाष्यम्)
पूर्वपदप्रकृतिस्वरत्वं वक्ष्यामि। इर्कारश्च माभूदिति।।
(प्रयोजननिराकरणभाष्यम्)
नेतदस्ति प्रयोजनम्। इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति। तत्र योसौ भक्षयतेरच् तदन्तेन बहुव्रीहिः।।
(ज्ञापनभाष्यम्)
एवं तर्हि सिद्धे सति यत्कर्मोपपदं णं शास्ति तज्ज्ञापयत्याचार्यः---समानेर्थे केवलं विग्रहभेदाद् यत्र कर्मोपपदश्च प्राप्नोति बहुव्रीहिश्च, कर्मोपदस्तत्र भवतिःथ्य;ति।।
किमेतस्य ज्ञापने प्रयोजनम्?।
काण्डलावः। काण्डानि लावोऽस्येति बहुव्रीहिर्न भवति।।
(ज्ञापनवैर्यथ्यभाष्यम्)
भवति बहुव्रीहिरपि मांसे कामोस्य मांसकामः मांसकामुक इति वा।। (न त्वम्भोभिगमा।) न त्विदं भवति अम्भोऽभिगामोऽस्या अम्भोभिगमा इति। किं तर्हि?। अम्भोभिगामीःथ्य;त्येव भवति। काण्डलावेपि च विग्रहाभावान्न ज्ञापकस्य प्रयोजनं भवतीति। नैषोस्ति विग्रहः----काण्डानिलावोऽस्येति।।
(2006 वार्तिकम्।। 10 ।।)
- अन्नादायेति च कृतां व्यत्ययश्छन्दसि-
(भाष्यम्) अन्नादायेति च कृतां व्यत्ययश्छन्दसिद्रष्टव्यः। अन्नादायान्नपतये य आहुतिमन्नादां कृत्वा।। कर्मण्यम्।। 1 ।।
(अथ कप्रत्ययप्रकरणम्)
-3-2-3- आतोऽनुपसर्गे कः (770)
(470 कप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.2 सू.)
(2006 कबाधकवार्तिकम्।। 1 ।।)
- कविधौ सर्वत्र प्रसारणिभ्यो ङः-
(भाष्यम्) कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः। ब्रह्मज्य इति।।
(आक्षेपभाष्यम्)
किमुच्यते--सर्वत्रेति?।
(समाधानभाष्यम्)
अन्यत्रापि। नावश्यमिहैव।
क्वान्यत्र?।
आह्वः प्रह्व इति।।
(2008 हेतुवार्तिकम्।। 2 ।।)
- के हि संप्रसारणप्रसङ्गः-
(भाष्यम्) के हि सति संप्रसारणं प्रसज्येत। संप्रसारणे कृते संप्रसारणस्य पूर्वत्वे च उवङादेशः। आहुव इत्येतद्रूपं प्रसज्येत।।
(आक्षेपभाष्यम्)
स तर्हि वक्तव्यः?।
(वार्तिकप्रत्याख्यानभाष्यम्)
न वक्तव्यः। अस्त्वत्र संप्रसारणम्। संप्रसारणे कृते आकारलोपः। तस्य स्थानिवद्भावादुवङादेशो न भविष्यति।।
(वार्तिकस्थापनभाष्यम्)
पूर्वत्वे कृते प्राप्नोति।।

(वार्तिकप्रत्याख्यानभाष्यम्)
एवं तर्हीदमिह संप्रधार्यम्----आकारलोपः क्रियताम्, पूर्वत्वमिति। किमत्र कर्तव्यम्?। परत्वाद् आकारलोपः।।
(वार्तिकस्थापनभाष्यम्)
न सिध्यति। अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति।।
(वार्तिकप्रत्याख्यानभाष्यम्)
एवं तर्हि वार्णादाङ्गं बलीयः इत्याकारलोपो भविष्यति।।
(प्रकारान्तरेण आकारलोपसाधकभाष्यम्)
एवं तर्हि---इदमिह संप्रधार्यम्। आकारलोपः क्रियतां, संप्रसारणमिति। किमंत्र कर्तव्यम्?। परत्वादकारलोपः।।
(वार्तिकस्थापनभाष्यम्)
नित्यं संप्रसारणम् कृतेऽप्याकारलोपे प्राप्नोति, अकृतेऽपि।।
(वार्तिकप्रत्याख्यानवादिभाष्यम्)
आकारलोपोपि नित्यः। कृतेपि संप्रसारणे प्राप्नोति, अकृतेपि।।
(वार्तिकावश्यकतासमर्थकभाष्यम्)
अनित्य आकारलोपः। न हि कृते संप्रसारणे प्राप्नोति। अन्तरङ्गं हि पूर्वत्वं बाधते।।
(वार्तिकप्रत्याख्यानभाष्यम्)
यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्। न च संप्रसारणमेवाकारलोपस्य निमित्तं विहन्ति। अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम्।।
(वार्तिकाभावे लक्ष्यतीत्युपसंहारभाष्यम्)
उभयोर्नित्ययोः परत्वादाकारलोपः। आकारलोपे कृते संप्रसारणे कृते यणादेशेन सिद्धं रूपम्आह्वः प्रह्व इति।।
(वार्तिकावश्यकतासाधकभाष्यम्)
एवमपि न सिध्यति। योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः आदिष्टाच्चैषोऽचः पूर्वो भवति।।
(वार्तिकप्रत्याख्यानभाष्यम्)
एवं तर्हि आकारलोपस्यासिद्धत्वादुवङादेशो न भविष्यति।।
(अनिष्टापत्तिभाष्यम्)
इहापि तर्ह्याकारलोपस्यासिद्धत्वादुवङादेशो न स्याद् जुहुवतुः जुहुवुरिति।।
(समाधानभाष्यम्)
अस्त्यत्र विशेषः। अकृतेत्रात्वे पूर्वत्वं भवति।। इदमिह संप्रधार्यम्---आत्वं क्रियताम्, पूर्वत्वमिति। किमिह कर्तव्यम्?। परत्वात्पूर्वत्वम्।।
(समाधानबाधकभाष्यम्)
न सिध्यति। अन्तरङ्गत्वादात्वं प्राप्नोति।। एवं तर्हीदमिह संप्रधार्यम्---आत्वं क्रियताम्, संप्रसारणमिति। किमत्र कर्तव्यम्?। परत्वादात्वम्।।
(समाधानसाधकभाष्यम्)
नित्यं संप्रसारणम्, कृतेऽप्यात्वे प्राप्नोति, अकृतेऽपि।।
(समाधानसाधकभाष्यम्)
आत्वमपि नित्यम्। कृतेऽपि संप्रसारणे प्राप्नोति, अकृतेऽपि।।
(समाधानसाधकभाष्यम्)
अनित्यमात्वम्। नहि कृते संप्रसारणे प्राप्नोति। परत्वात्पूर्वत्वेन भवितव्यम्।।
(समाधानबाधकभाष्यम्)
यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्। न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति। अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम्। उभयोर्नित्ययोः परत्वादात्वम्। आत्वे कृते संप्रसारणम्।।
(समाधानभाष्यम्)
एवं तर्हि पूर्वत्वे योगविभागः करिष्यते---संप्रसारणात् संप्रसारणात्परः पूर्वो भवति।। ततः एङ एङश्च संप्रसारणात्पूर्वो भवति।। किमर्थमिदम्?। अकृते आत्वे पूर्वत्वं यथा स्यात्।। ततः पदान्तादिति ठएङः इत्येव।।
(आक्षेपभाष्यम्)
इहापि तर्ह्यकृत आत्वे पूर्वत्वं स्याद् आह्वः प्रह्व इति।।
(समाधानभाष्यम्)
अस्त्यत्र विशेषः। आकारान्तलक्षणः कप्रत्ययविधिः। तेनानेनावश्यमात्वं प्रतीक्ष्यम्। लिट् पुनरविशेषेण धातुमात्राद्विधीयते। नित्यं प्रसारणं ह्वो यण् वार्णादाङ्गं न पूर्वत्वं हि।
योनादिष्टादचः। पूर्वस्तत्कार्ये स्थानिवत्त्वं हि।।
प्रोवाच भगवान्कात्यस्तेनासिद्धिर्यणस्तु ते।
आतः को लिण्नैङः पूर्वः सिद्ध आह्वस्तथा सति।। आतोऽनुपसर्गे।। 3 ।।
-3-2-4- सुपि स्थः (771)

(471 कप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.3 सूत्रम्)
(2009 भावार्थविधिवार्तिकम्।। 1 ।।)
- सुपि स्थो भावे च-
(भाष्यम्) सुपिस्थ इत्यत्र भावे चेति वक्तव्यम्। इहापि यथा स्यात्---आखूत्थो वर्तते। श्येनोत्थः शलभोत्थः।।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्।
(प्रत्याख्यानभाष्यम्)
न वक्तव्यम्।
(2010 प्रत्याख्यानसाधकवार्तिकम्।। 2 ।।)
- योगविभागात्सिद्धम्-
(भाष्यम्) योगविभागः करिष्यते----आतोऽनुपसर्गे कः आतोऽनुपसर्गे को भवति। ततः---सुपि सुपि चातः को भवति। कच्छेन पिबति कच्छपः। कटाहेन पिबति कटाहपः। द्वाभ्यां पिबति द्विपः। ततः----स्थः स्थश्च सुपि को भवति।। किमर्थमिदम्?। भावे यथा स्यात्।।
(आक्षेपभाष्यम्)
कुतो नु खल्वेतद् भावे भविष्यति, न पुनः कर्मादिष्वपि कारकेष्विति।
(समाधानभाष्यम्)
योगविभागादयं कर्तुरपकृष्यते। न चान्यस्मिन्नर्थे आदिश्यते। अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्तीति। तद्यथा गुप्तिज्किद्भ्यः सन् यावादिभ्यः कन् इति। सोऽसौ स्वार्थे भवन्भावे भविष्यति।। सुपि स्थः।। 4 ।।
-3-2-5- तुन्दशोकयोः परिमृजापनुदोः (772)
(472 कप्रत्ययविधिसूत्रम्। 3 । 2 । 1 आ.4)
(2011 अर्थपरिसंख्यावार्तिकम्।। 1 ।।)
- तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः-
(भाष्यम्) तुन्दशोकयोः परिमृजापनुदोरित्यत्र आलस्यसुखाहरणयोः इति वक्तव्यम्। तुन्दपरिमृजोऽलसः। शोकापनुदः पुत्रो जातः। यो हि तुन्दं परिमार्ष्टि तुन्दपरिमार्जः स भवति। यश्च शोकमपनुदति शोकापनोदः स भवति।।
(2012 कप्रत्ययविधिवार्तिकम्।। 2 ।।)
- कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्-
(भाष्यम्) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानं कर्तव्यम्। मूलविभुजो रथः। नखमुचानि धनूंषि। काकगुहास्तिलाः। सरसीरुहं कुमुदम्।। तुन्दशोकयोः।। 5 ।।
-3-2-8- गापोष्टक् (775)
(473 टक्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.5 )
(2013 उपपदपरिसंख्यावार्तिकम्।। 1 ।।)
- सुराशीध्वोः पिबतेः-
(भाष्यम्) सुराशीध्वोः (पिबते) रिति वक्तव्यम्। इह मा भूत्----क्षीरपा ब्राह्मणीति।। पिबतेरिति च वक्तव्यम्। या हि सुरां पाति सुरापा सा भवति।।
(2014 वार्तिकम्।। 2 ।।)
- बहुलं तणि-
(भाष्यम्) बहुलं तणीति वक्तव्यम्।
किमिदं तणीति?।
संज्ञाछन्दसोर्ग्रहणम्। या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति। या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति।। गापोष्टक्।। 8 ।।
(अथ अच्प्रकरणम्)
-3-2-9- हरतेरनुद्यमनेऽच् (776)
(474 अच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.6)
(2015 अच्प्रत्ययविधिवार्तिकम्।। 1 ।।)
- अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्-
(भाष्यम्) अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघठीधनुष्षु ग्रहेरुपसंख्यानं कर्तव्यम्। शक्तिग्रहः। शक्ति।। लाङ्गलः----लाङ्गलग्रहः। लाङ्गल।। अङ्कुश---अङ्कुशग्रहः। अङ्कुश।। यष्टि---यष्टिग्रहः। यष्टि।। तोमर---तोमरग्रह। तोमर।। घट----घटग्रहः। घट।। घटी---घटीग्रहः । घटी।। धनुष्---धनुर्ग्रहः। धनुष्।।
(2013 वार्तिकम्।। 2 ।।)
- सूत्रे च धार्यर्थे-
(भाष्यम् सूत्रे च धार्यर्थे ग्रहेरुपसंख्यानं कर्तव्यम्। सूत्रग्रहः।। धार्यर्थ इति किमर्थम्?। यो हि सूत्रं गृह्णाति सूत्रग्राहः स भवति।। हरतेरनुद्यमने ।। 9

।।
-3-2-13- स्तम्बकर्णयोरमिजपोः (780)
(475 अच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ।7)
(2017 अर्थपरिसंख्यावार्तिकम्।। 1 ।।)
- स्तम्बकर्णयोर्हस्तिसूचकयोः-
(भाष्यम्) स्तम्बकर्णयोरित्यत्र हस्तिसूचकयोरिति वक्तव्यम्। स्तम्बेरमो हस्ती। कर्णेजपः सूचकः। स्तम्बेरन्ता कर्णे जपितेत्येवान्यत्र।। स्तम्बकर्णयोः।। 13 ।।
-3-2-14- शमि धातोः संज्ञायाम् (789)
(476 अच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.8)
(आक्षेपभाष्यम्)
धातुग्रहणं किमर्थम्?।
(2018 समाधानवार्तिकम्।। 1 ।।)
- शमि संज्ञायां धातुग्रहणं कृञ्ञो हेत्वादिषु टप्रतिषेधार्थम्-
(भाष्यम्) शमि संज्ञायां धातुग्रहणं क्रियते कृञ्ञो हेत्वादिषु टो मा भूदिति। शमि संज्ञायां धातोरज्भवतीत्यस्यावकाशः शंभवः शंवदः। टस्यावकाशः---श्राद्धकरः पिण्डकरः। शंकरा नाम परिव्राजिका शंकरा नाम शकुनिका तच्छीला च, तस्यामुभयं प्राप्नोति। परत्वाटः स्यात्।। धातुग्रहणसार्मथ्यादजेव भवति।।
(वार्तिकोक्तप्रयोजनप्रत्याख्यानभाष्यम्)
कुरणवाडवस्त्वाह---नैषा शंकरा। शंगरा एषा।। कुत एतत्?। गृणातिः शब्दकर्मा। तस्यैष प्रयोगः।। शमि धातो।। 14 ।।
-3-2-15- अधिकरणे शेतेः (782)
(477 अच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 । आ.9)
(2019 उपपदपरिसंख्यावार्तिकम्।। 1 ।।)
- अधिकरणे शेतेः पार्श्वादिषूपसंख्यानम्-
(भाष्यम्) अधिकरणे शेतेः पार्श्वादिषूपसंख्यानं कर्तव्यम्। पार्श्वशयः पृष्ठशयः उदरशयः।।
(2020 उपपदपरिसंख्यावार्तिकम्।। 2 ।।)
- दिग्धसहपूर्वाच्च-
(भाष्यम्) दिग्धसहपूर्वाच्चेति वक्तव्यम्। दिग्धसहशयः।।
(2021 उपपदन्यूनतापूरकवार्तिकम्।। 3 ।।)
- उत्तानादिषु कर्तृषु-
(भाष्यम्) उत्तनादिषु कर्तृष्विति वक्तव्यम्। उत्तानशयः। अवमूर्धशयः।
(2022 उपपदवार्तिकम्।। 4 ।।)
- गिरौ डश्छन्दसि-
(भाष्यम्) गिरावुपपदे छन्दसि डो वक्तव्यः। गिरौ शेते गिरिशः।।
(2023 प्रत्याख्यानवार्तिकम्।। 5 ।।)
- तद्धितो वा -
(भाष्यम्) तद्धितो वा पुनरेष भविष्यति। गिरौशेते गिरिरस्यास्तीति गिरिशः।। अधिकरणे।। 15 ।।
(टप्रत्ययप्रकरणम्)
-3-2-17- भिक्षासेनादायेषु च (784)
(आक्षेपभाष्यम्)
इह कस्मान्न भवति---कुरूंश्चरति पञ्चालांश्चरतीति?।
(समाधानभाष्यम्)
अधिकरण इति वर्तते।।
ननु च कर्मणीत्यपि वर्तते। तत्र कुत एतद् अधिकरणे भविष्यति न पुनः कर्मणीति।।
(2024 समाधानवार्तिकम्।। 1 ।।)
- चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य-
(भाष्यम्) यदयं भिक्षासेनादायेषु च इति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो न भवति कर्मणीति चरेष्टः।। 16 ।।
-3-2-21- दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु।(788)
(479 कृञ्ञष्टप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ. 11 सूत्रम्)
(2025 अच्प्रत्ययविधिवार्तिकम्।। 1 ।।)
- किंयतद्बहुषु कृञ्ञोऽज्विधानम्-

(भाष्यम्) किंयत्तद्बहुषु कृञ्ञोज्विधानं कर्तव्यम्। किंकरा यत्करा तत्करा बहुकरा।। दिवाविभा।। 21 ।।
-3-2-24- स्तम्बशकृतोरिन् (791)
(अथेन्प्रत्ययप्रकरणम्)
(2026 अर्थपरिसंख्यावार्तिकम्।। 1 ।।)
- स्तम्बशकृतोर्व्रीहिवत्सयोः-
(भाष्यम्) स्तम्बशकृतोरित्यत्र व्रीहिवत्सयोरिति वक्तव्यम्। स्तम्बकरिर्व्रीहिः शकृत्करिर्वत्सः।। स्तम्बशकृतो।। 24 ।।
-3-2-26- फलेग्रहिरात्मंभरिश्च (793)
(481 इन्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.13)
(आक्षेपभाष्यम्)
आत्मंभरिरिति किं निपात्यते।
(समाधानभाष्यम्)
आत्मनो मुम् भृञ्ञश्चेन्प्रत्ययः।।
(न्यूनताप्रदर्शकभाष्यम्)
अत्यल्पमिदमुच्यते आत्मनः इति।
(2027 न्यूनतापूरकवार्तिकम्।। 1 ।।)
- भृञ्ञः कुक्ष्यात्मनोर्मुम् च-
(भाष्यम्) भृञ्ञः कुक्ष्यात्मनोर्मुम् चेति वक्तव्यम्। कुक्षिंभरिः। आत्मंभरिश्चरति यूथमसेवमानः।। फलेग्रहिरात्मं।।
26 ।।
-3-2-28- एजेः खश् (794)
(482 खश्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ. 14 सू)
(2028 खश्प्रत्ययविधिवार्तिकम्।। 1 ।।)
- खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः-
(भाष्यम्) खश्प्रकरणे वातशुनीतिलशर्धेषु अजधेट्तुदजहातिभ्य इति वक्तव्यम्। वातमजाः मृगाः वात।। शुनी---शुनिंधयः। शुनी।। तिल---तिलंतुदः। तिल।। शर्ध ---- शर्धंजहा माषाः।। शर्ध।। एजेः।। खश्।। 28 ।।
-3-2-28- एजेः खश् 794
(482 खश्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ. 14 सू)
(2028 खश्प्रत्ययविधिवार्तिकम्।। 1 ।।)
- खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः -
(भाष्यम्) खश्प्रकरणे वातशुनीतिलशर्धेषु अजधेट्तुदजहातिभ्य इति वक्तव्यम्। वातमजाः मृगाः वात।। शुनी---शुर्निधयः। शुनी।। तिल---तिलंतुदः। तिल।। शर्ध----शर्धंजहा माषाः।। शर्ध।। एजेः खश्।। 28 ।।
-3-2-29- नासिकास्तनयोर्ध्माधेटोः (796)
(473 खश्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ. 15 सूत्रम्)
(2029 करणीयसूत्रपाठदर्शकवार्तिकम्।। 1।।)
- स्तने धेटः-
(भाष्यम्) स्तने धेट इति वक्तव्यम्। स्तनंधयः। ततो,
(2030 करणीयसूत्रपाठदर्शकवार्तिकम्।। 2 ।।)
- मुष्टौ ध्मश्च-
(भाष्यम्) मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम्। मुष्टिंधमः मुष्टिंधयः।
(2031 करणीयसूत्रपाठदर्शकवार्तिकम्।। 3 ।।)
- नासिकायां ध्मश्च धेष्टश्च-
(भाष्यम्) नासिकायां ध्मश्च धेटश्चेति वक्तव्यम्। नासिकंधमः। नासिकंधयः।।
(न्यूनताप्रदर्शकभाष्यम्)
अत्यल्पमिदमुच्यते।
(2032 न्यूनतापूरकवार्तिकम्।। 4 ।।)
- नासिका नाडीमुष्टिघटीखारीषु-
(भाष्यम्) नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्।
नासिकंधयः नासिकंधमः। नासिका।। नाडिंधयः नाडिंधमः घटिंधयः। घटी।। खारिंधयः खारिंधमः। खारी।। नासिकास्तन।। 29 ।।
-3-2-30- नाडीमुष्ट्योश्च (797)
(2029 करणीयसूत्रपाठदर्शकवार्तिकम्।। 1।।)

- स्तने धेटः-
(भाष्यम्) स्तने धेट इति वक्तव्यम्। स्तनंधयः। ततो,
(2030 करणीयसूत्रपाठदर्शकवार्तिकम्।। 2 ।।)
- मुष्टौ ध्मश्च-
(भाष्यम्) मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम्। मुष्टिंधमः मुष्टिंधयः।
(2031 करणीयसूत्रपाठदर्शकवार्तिकम्।। 3 ।।)
- नासिकायां ध्मश्च धेष्टश्च-
(भाष्यम्) नासिकायां ध्मश्च धेटश्चेति वक्तव्यम्। नासिकंधमः। नासिकंधयः।।
(न्यूनताप्रदर्शकभाष्यम्)
अत्यल्पमिदमुच्यते।
(2032 न्यूनतापूरकवार्तिकम्।। 4 ।।)
- नासिका नाडीमुष्टिघटीखारीषु-
(भाष्यम्) नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्।
नासिकंधयः नासिकंधमः। नासिका।। नाडिंधयः नाडिंधमः घटिंधयः। घटी।। खारिंधयः खारिंधमः। खारी।। नासिकास्तन।। 30 ।।-3-3-38- प्रियवशे वदः खच् (805)
(484 खच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.16 सू.)
(2033 खच्प्रत्ययवार्तिकम्।। 1 ।।)
- खच्प्रकरणे गमेः सुपि उपसंख्यानम्-
(भाष्यम्) खच्प्रकरणे गमेः सुपि उपसंख्यानं कर्तव्यम्। मितंगमो हस्ती मितंगमा हस्तिनी।।
(2034 वार्तिकम्।। 2 ।।)
- खच्च डिद्वा-
(भाष्यम्) डे च विहायसो विह इत्ययमादेशो वक्तव्यः विहगः।। प्रियवशे।। 38 ।।
-3-2-48- अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः (7815)
(485 गमेर्डप्रत्ययविधिसूत्रम्।। 3 । 2 ।। 1 ।। आ.17 सू.)
(2037 उपपदन्यूनतापूरकवार्तिकम्।। 1 ।।)
- डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम्-
(भाष्यम्) डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानं कर्तव्यम्। सर्वत्रगः पन्नगः।।
(2038 न्यूनतापूरकवार्तिकम्।। 2 ।।)
- उरसो लोपश्च-
(भाष्यम्) उरसो लोपश्च वक्तव्यः उरगः।।
(2039 न्यूनतापूरकवार्तिकम्।। 3 ।।)
- सुदुरोरधिकरणे-
(भाष्यम्) सुदुरोरधिकरणे डो वक्तव्यः। सुगः दुर्गः।।
(2040 न्यूनतापूरकवार्तिकम्।। 4 ।।)
- निसो देशे -
(भाष्यम्) निसो देशे डो वक्तव्यः। निर्गो देशः।। अपर आह----
(2041 अपरिसंख्यातोपपदवार्तिकम्।। 5 ।।)
- डप्रकरणे अन्येष्वपि दृश्यते-
(भाष्यम्) डप्रकरणे अन्येष्वपि डो भवतीति वक्तव्यम्। तत्र स्त्र्यगारगः अश्नुते यावदन्नाय ग्रामगः ध्वंसते गुरुतल्पग इति।। अन्तात्यन्ता।। 48 ।।
-3-2-49- आशिषि हनः (816)
(486 डप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.18 सू.)
(2042 अन्प्रत्ययादिविधिवार्तिकम्।। 1 ।।)
- दारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः। अन्त्यस्य च टो वक्तव्यः। दार्वाघाटस्ते वनस्पतीनाम्।।
(2043 वार्तिकम्।। 2 ।।)
- चारौ वा -
(भाष्यम्) चारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः। अन्त्यस्य च टो वा वक्तव्यः। वर्णसंघाटः वर्णसंघातः। पदसंघाटः पदसंघातः।। आशिषि।। 49 ।।
-3-2-52- लक्षणे जायापत्योष्टक् (819)

(487 टक्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.19 सूत्रम्)
(आक्षेपभाष्यम्)
कथमिदं विज्ञायते---लक्षणे कर्तरि, आहोस्वित् लक्षणवति कर्तरीति। किं चातः?। यदि विज्ञायते----लक्षणे कर्तरी ति। सिद्धं जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखेति। इदं तु न सिध्यति---जायाघ्नो ब्राह्मणः, पतिघ्नी
वृषलीति।।
अथ विज्ञायते---लक्षणवति कर्तरीति। सिद्धं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति। जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखेति न सिध्यति।।
(प्रथमकल्पस्वीकरणभाष्यम्)
अस्तु तर्हि लक्षणे कर्तरीति।।
(दूषणभाष्यम्)
कथं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति?।
(दूषणोद्धारभाष्यम्)
अकारो मत्वर्थीयः। जायाघ्नोऽस्मिन्नस्ति सोऽयं जायाघ्न इति।।
(आक्षेपभाष्यम्)
पतिघ्नी वृषलीति न सिध्यति।।
(द्वितीयकल्पस्वीकरणभाष्यम्)
अस्तु तर्हि लक्षणवति कर्तरीति।।
(दूषणस्मारणभाष्यम्)
कथंजायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति?।
(समाधानभाष्यम्)
अमनुष्यकर्तृके च इत्येवं भविष्यति।। लक्षणे।। 52 ।।
-3-2-53- अमनुष्यकर्तृके च 820
(488 टक्प्रत्ययविधिसूत्रम् ।। 3।2।1।। आ. 20 सू.)
(2045 न्यूनतापरिहारवार्तिकम् )
- अप्रमाणिककर्तृके -
(भाष्यम् )
अप्रमाणिककर्तृक इति वक्तव्यम्। इह मा भूत् - नगरघातो हस्ती।।
(आक्षेपभाष्यम्)
यद्यप्राणिकर्तृक इत्युच्यते , शशघ्नी शकुनीति न सिध्यति।।
(समाधानभाष्यम्)
अस्तु तर्हि अमनुष्यकर्तृके च इत्येव ।
(आक्षेपभाष्यम्)
कथं नगरघातो हस्ती?
(समाधानभाष्यम्)
कृत्यल्युटो बहुलम् इत्येवात्राण् भविष्यति
अमनुष्यकर्तृके ।। 53 ।।
-3-2-55- पाणिघताडघौ शिल्पिनि (822)
(489 टक्प्रत्ययवत्वादिविधिसूत्रम्।। 3 । 2 । 1 आ.21)
(2046 न्यूनतापरिहारवार्तिकम्।। 1 ।।)
- राजघ उपसंख्यानम्-
(भाष्यम्) राजघ उपसंख्यानं कर्तव्यम्। राजघः।। पाणिघताडघौ ।। 55 ।।
-3-2-56- आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् (823)
(490 ख्युन्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.22)
(2047 च्विप्रतिषेधवैयर्थ्यवार्तिकम्।। 1 ।।)
- ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषात्-
(भाष्यम्) ख्युनि च्विप्रतिषेधो अनर्थकः। किं कारणम्?। ल्युट्ख्युनोरविशेषात्। ख्युना मुक्ते ल्युटा भवितव्यम्। न चैवास्ति विशेषः च्व्यन्त उपपदे ख्युनो वा ल्युटो वा। तदेव रूपम् स एव च स्वरः।।
(विशेषदर्शकभाष्यम्)
अयमस्ति विशेषः। ल्युटि सति इर्कारेण भवितव्यम्। ख्युनि सति न भवितव्यम्।।
(अविशेषदर्शकभाष्यम्)

ख्युन्यपि सति इकारेण भवितव्यम्। एवं हि सौनागाः पठन्ति---- नञ्स्नञ्त्रीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् इति।।
(विशेषप्रदर्शनभाष्यम्)
अयं तर्हि विशेषः----ख्युनि सति नित्यसमासेन भवितव्यम्। उपपदसमासो हि नित्यसमास इति। ल्युटि सति न भवितव्यम्।।
(अविशेषप्रदर्शनभाष्यम्)
ल्युट्यपि सति भवितव्यम्। गतिसमासोपि हि नित्यसमासः। च्व्यन्तं गतिसंज्ञं भवति।।
(2048 प्रयोजनवार्तिकम्।। 2 ।।)
- मुमर्थं तु-
(भाष्यम्) मुमर्थे तर्हि प्रतिषेधो वक्तव्यः। ख्युनि सति मुमा भवितव्यम्, ल्युटि सति न भवितव्यम्।।
(2049 प्रयोजननिरासवार्तिकम्।। 3 ।।)
- मुमर्थमिति चेन्नाव्ययत्वात्-
(भाष्यम्) मुमर्थमिति चेत्। तन्न। किं कारणम्?। अव्ययत्वात्। अनव्ययस्य मुमुच्यते। च्व्यन्तं चाव्ययसंज्ञं भवति।।
(2050 प्रयोजनवार्तिकम्।। 4 ।।)
- उत्तरार्थं तु -
(भाष्यम्) उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः। कर्तरि भुवः खिष्णुच्खुकञौ अच्वावित्येव। आढ्यीभविता।।
(आक्षेपभाष्यम्)
अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुज् विधीयते सोत्र कस्मान्न भवति?।
(समाधानभाष्यम्)
रूढिशब्दप्रकारास्ताच्छीलिकाः। न च रूढिशब्दागतिभिर्विशेष्यन्ते। न हि भवति----देवदत्तःउप्रदेवदत्त इति।। आढ्य।। 56 ।।
-3-2-57- कर्तरि भुवः खिष्णुच्खुकञौ (824)
(491 प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 । आ 19 सू.)
(इकारादित्वनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं खिष्णुजिकारादिः क्रियते, न ख्स्नुरित्येवोच्येत। तत्रायमप्यर्थः---स्वरार्थश्चकारो न कर्तव्यो भवति।
(प्रत्याक्षेपभाष्यम्)
केनेदानीमिकारादित्वं क्रियते?।
(2051 प्रत्याक्षेपसमाधानवार्तिकम्।। 1 ।।)
- इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः-
(भाष्यम्) भवतिरुदात्तस्तस्योदात्तत्वादिड्भविष्यति।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनं खिदयं क्रियते। तत्र चर्त्वे कृते संदेहः स्यात्----किद्वा, खिद्वेति।।
(प्रयोजननिराकरणभाष्यम्)
संदेहमात्रमेतद्भवति। सर्वसंदेहेषु चेदमुपतिष्ठते---व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति। खिदिति व्याख्यास्यामः।।
(2052 प्रत्योजनवार्तिकम्।। 2 ।।)
- नञ्स्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः-
(भाष्यम्) इदं तर्हि प्रयोजनं कृत्योकेष्णुच्चार्वा दयश्च इत्येष स्वरो यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। अयमपि इटि कृते षत्वे णत्वे चेष्णुजेव भविष्यति।।
(प्रयोजनसाधकभाष्यम्)
न सिध्यति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। अथ वा असिद्धं खल्वपि षत्वम्। तस्यासिद्धत्वादिष्णुजेव भवति।।
इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः।
नञ्स्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः।।
कर्तरि भुवः।। 58 ।।
-3-2-59- ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च (826)
(493 प्रत्ययविधिसूत्रम्।। 3 2 । 1 आ.21)
(प्रश्नभाष्यम्)
दधृगिति किं निपात्यते।
(2053 समाधानवार्तिकम्।। 1।।)
- धृषेर्द्विर्वचनमन्तोदात्तत्वं च-
(भाष्यम्) धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते।। ऋत्विग्द।। 59 ।।

-3-2-60- त्यादिषु दृशोऽनालोचने कञ्च (827)
(494 कञ्क्विन्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.22)
(आक्षेपभाष्यम्)
किमर्थो ञकारः।
(समाधानभाष्यम्)
स्वरार्थः ञ्नितीत्याद्युदात्तत्वं यथा स्यात्।।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। भविष्यति। क्व विशेषणार्थेनार्थः?। कञ्क्वरबि ति। कन्क्वरबित्युच्यमाने याविका इत्यत्रापि प्रसज्येत।।
(2054 उपपदान्तरेऽपि प्रत्ययविधिवार्तिकम्।। 1 ।।)
- कृदर्थानुपपत्तिस्तु-
(भाष्यम्) कृदर्थस्तु नोपपद्यते। दृशेः कर्तरि प्राप्नोति।।
(2056 तद्धितविधिवार्तिकम्।। 3 ।।)
- इवार्थे तु तद्धितः-
(भाष्यम्) इवार्थे त्वयं तद्धितो द्रष्टव्यः। स इवायं तादृक् तादृशः। अन्य इवायमन्यादृक् अन्यादृश इति।
(कृदर्थोपपादनभाष्यम्)
अथ वा युक्त एवायं कृदर्थः। कर्मकर्ताऽयम्। तमिवेमं पश्यन्ति जनाः। सोयं स इव दृश्यमानस्तमिवात्मानं पश्यति तादृक्। अन्यमिवेमं पश्यन्तिजनाः सोयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति अन्यादृगिति।। त्यदादिषु।। 60 ।।
-3-2-61- सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् (828)
(495 क्विप्प्रत्ययविधिसूत्रम्।। 3। 2 । 1 आदृ 23)
(2057 वार्तिकम्।। 1 ।।)
- सदादिषु सुब्ग्रहणम्-
(भाष्यम्) सदादिषु सुब्ग्रहणं कर्तव्यम्। होता वोदिषत। अतिथिर्दुरोणसत्।।
(प्रश्नभाष्यम्)
न तर्हीदानीमुपसर्गेऽपीति कवक्तव्यम्।।
(समाधानभाष्यम्)
वक्तव्यं च। किं प्रयोजनम्। किं ज्ञाप्यम्?। एतज्ज्ञापयत्याचार्यः----अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति इति। किमेतस्य ज्ञापने प्रयोजनम्?। वदः सुप्यनुपसर्गग्रहणं चोदितम्।। तन्न वक्तव्यं भवति।। सत्सूद्विष।। 61 ।।
-3-2-68- आदोनन्ने (835)
(अथ विट्प्रकरणम्)
(496---497 विट्प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आदृ 24-25)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न अदोनन्ने इत्येव सिद्धम्।
(समाधानभाष्यम्)
न सिध्यति। छन्दसीति वर्तते। भाषार्थोऽयमारम्भः।।
(समाधानबाधकभाष्यम्)
पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तम्। तच्चावश्यं निर्वत्यम्। आमादित्येवमर्थम्।।
(समाधानभाष्यम्)
अत उत्तरं पठति।
(2058 समाधानवार्तिकम्।। 1 ।।)
- अदोनन्नेक्रव्यग्रहणं वासरूपनिवृत्यर्थम्-
(भाष्यम्) अदोनन्ने क्रव्यग्रहणं क्रियते वासरूपो मा भूदिति।। अदोन।। क्रव्ये च ।। 68।।
-3-2-69- क्रव्ये च (836)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न अदोनन्ने इत्येव सिद्धम्।
(समाधानभाष्यम्)
न सिध्यति। छन्दसीति वर्तते। भाषार्थोऽयमारम्भः।।
(समाधानबाधकभाष्यम्)
पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तम्। तच्चावश्यं निर्वत्यम्। आमादित्येवमर्थम्।।
(समाधानभाष्यम्)

अत उत्तरं पठति।
(2058 समाधानवार्तिकम्।। 1 ।।)
- अदोनन्नेक्रव्यग्रहणं वासरूपनिवृत्यर्थम्-
(भाष्यम्) अदोनन्ने क्रव्यग्रहणं क्रियते वासरूपो मा भूदिति।। अदोन।। क्रव्ये च ।। 69।।
-3-2-71- मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् (838)
(अथ ण्विन् प्रकरणम्)
(498 ण्विन् प्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आद्द 26)
(2059 ण्विन् बाधकवार्तिकम्।। 1 ।।)
- श्वेतवहादीनां डस्-
(भाष्यम्) श्वेतवहादीनां डस्वक्तव्यः।। श्वेतवा इन्द्रः।।
(2060 पूर्वशेषवार्तिकम्।। 2 ।।)
- पदस्य च-
(भाष्यम्) पदस्येति च वक्तव्यम्। इह मा भूत्---श्वेतवाहौ श्वेतवाह इति।।
(प्रयोजनप्रश्नभाष्यम्)
किं प्रयोजनम्?।।
(2061 प्रयोजनवार्तिकम्।। 3 ।।)
- र्वर्थम्-
(भाष्यम्) रुर्यथा स्यात्।।
(प्रयोजननिराकरणभाष्यम्)
क्रियते र्वर्थे निपातनम्----अवयाः श्वेतवाः पुरोडाश्च इति। आतश्च र्वर्थम्। उक्थशः शब्दस्य सामान्येन रुः सिद्धः। न तस्य निपातनं क्रियते।।
(निपातनानावश्यकताभाष्यम्)
तन्न वक्तव्यं भवति।।
(निपातनावश्यकताभाष्यम्)
अवश्यं तद्वक्तव्यम्। दीर्घार्थम्।।
(निपातनावश्यकताभाष्यम्)
नैतदस्ति प्रयोजनम्। सिद्धमत्र दीर्घत्वम्---अत्वसन्तस्य चाधातोरि ति।।
(निपातनावश्यकताभाष्यम्)
यत्र तेन न सिध्यति तदर्थम्।। क्व च तेन न सिध्यति?। संबुद्धौ---हेश्वेतवाः इति।।
(प्रश्नभाष्यम्)
न तर्हीदानीं डस्वक्तव्यः।।
(समाधानभाष्यम्)
वक्तव्यश्च। किं प्रयोजनम्?। उत्वार्थम्। श्वेतवोभ्यां श्वेतवोभिः।। मन्त्रे श्वेत।। 71 ।।
-3-2-77- स्थः क च (744)
(499 कक्विप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आद्द 27)
(प्रश्नभाष्यम्)
किमर्थं स्थः कक्विपावुच्येते। नु क्विप्सिद्धः अन्येभ्योपि दृश्यते इति, कश्च आतोऽनुपसर्गे कः इति?।।
(उत्तरभाष्यम्)
न सिध्यति। विशेषविहितः कः सामान्यविहितं क्विपं बाधेत।।
(अन्यथासिद्धिभाष्यम्)
वासरूपेण क्विबपि भविष्यति।।
(अनन्यथासिद्धप्रयोजनभाष्यम्)
इदं तर्हि शंस्थः शंस्थाः।।
(अन्यथासिद्धभाष्यम्)
उक्तमेतत्---- शमिसंज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् इति। स यथैवाच् टं बाधते। एवं कक्विपावपि बाधेत।। स्थः क च।। 77 ।।
-3-2-78- सुप्यजातौ णिनिस्ताच्छील्ये (845)
(500 णिनिप्रतययविधिसूत्रम्।। 3 । 2 । 1 आद्द 28)
(आक्षेपभाष्यम्)
सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम्?।
(समाधानभाष्यम्)

अनुपसर्ग इत्येवं तदभूत्। इदं सुम्मात्रे यथा स्यात्---उदासारिण्यः प्रत्यासारिण्य इति।।
(2062 वार्तिकम्।। 1 ।।)
- णिन्विधौ साधुकारिण्युपसंख्यानम्-
(भाष्यम्) णिन्विधौ साधुकारिण्युपसंख्यानं कर्तव्यम्। साधुकारी साधुदायी।।
(2063 वार्तिकम्।। 2 ।।)
- ब्रह्मणि वदः-
(भाष्यम्) ब्रह्मणि वद उपसंख्यानं कर्तव्यम्। ब्रह्मवादिनो वदन्ति।। सुप्यजा।। 78 ।।
-3-2-80- व्रते (847)
(501 णिनिप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आद 29)
(प्रश्नभाष्यम्)
किमुदाहरणम्?।
(समाधानभाष्यम्)
अश्राद्धभोजी।।
(आक्षेपभाष्यम्)
किं योऽश्राद्धं भुङ्क्ते सोश्राद्धभोजी?।। किं चातः?। यदासावश्राद्धं न भुङ्क्ते तदास्य व्रतलोपः स्यात्। तद्यथा स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदास्य व्रतलोपो भवति।।
(पर्युदासेन समाधानभाष्यम्)
एवं तर्हि णिन्यन्तेन समासो भविष्यति। न श्राद्धभोज्यश्राद्धभोजीति।।
(समाधानबाधकभाष्यम्)
नैवं शक्यम्। स्वरे हि दोषः स्यात्। अश्राद्धभोजीत्येवं स्वरः प्रसज्येत। अश्राद्धभोजीत्येवं चेष्यते।।
(प्रतिसज्यप्रतिषेधाङ्गीकारभाष्यम्)
एवं तर्हि नञ्त्र एवायं भुजिप्रतिषेधवाचिनः श्राद्धशब्देनासमर्थसमर्थसमासः---न भोजी श्राद्धस्येति।।
(प्रसज्यप्रतिषेधे गौरवभाष्यम्)
स तर्ह्यसमर्थसमासो वक्तव्यः।।
(इष्टापत्तिभाष्यम्)
यद्यपि वक्तव्यः। अथ वै तर्हि बहूनि प्रयोजनानि।। कानि?। असूर्यपश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी ब्राह्मणः। सुडनपुंसकस्येति।। व्रते।। 80 ।।
-3-2-83- आत्ममाने खश्च (850)
(502 खशिणनिप्रत्ययविधिसूत्रम्।। 3 । 2 । 1 आ.30)
(आक्षेपभाष्यम्)
आत्मग्रहणं किमर्थम्?।
(समाधानभाष्यम्)
परमाने मा भूदिति।।
(समाधानानुपपत्तिभाष्यम्)
क्रियमाणेपि वै आत्मग्रहणे परमाने प्राप्नोति।। किं कारणम्?। आत्मन इतीयं कर्तरि षष्ठी। मान इत्यकारो भावे । स यद्येवात्मानं मन्यतेऽथापि परम्। आत्मन एवासौ मानो भवति।
(समाधानसाधकभाष्यम्)
नैष दोषः। आत्मन इतीयं कर्मणि षष्ठी। कथम्?। कर्तृकर्मणोः कृति इति।।
(समाधानबाधकाक्षेपभाष्यम्)
ननु च कर्तर्यपि वै तेनैव विधीयते। तत्र कुत एतत्---कर्मणि भविष्यति, न पुनः कर्तरीति।।
(समाधानान्तरभाष्यम्)
एवं तर्हि,
(2064 वार्तिकम्।। 1 ।।)
(- कर्मकर्तरि च-)
(भाष्यम्) कर्मकर्तरि खश् चेति वक्तव्यम्।।
(प्रश्नभाष्यम्)
तत्तर्हि वक्तव्यम्।।
(समाधानभाष्यम्)
न वक्तव्यम्। आत्मन इतीयं कर्मणि षष्ठी। कथम्?। कर्तृकर्मणोः कृति इति।।

(समाधानबाधकस्मारणभाष्यम्)
ननु चोक्तं कर्तर्यपि वै तेनैव विधीयते। तत्र कुत एतत्। कर्मणि भविष्यति न पुनः कर्तरीति?।।
(प्रत्याख्यानसाधकभाष्यम्)
एवं तर्हि आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते।।
(प्रत्याख्यानबाधकभाष्यम्)
एवमपि कर्मकर्तृग्रहणं कर्तव्यम्। कर्मापदिष्टो यग्यथा स्यात्, श्यन्माभूदिति।।
(प्रत्याक्षेपभाष्यम्)
कश्चात्र विशेषः यको वा श्यनो वा।।
(प्रत्याक्षेपसमाधानभाष्यम्)
यति सत्यन्तोदात्तत्वेन भवितव्यम्। श्यनि सपाद्युदात्तत्वेन।।
(विशेषाभावभाष्यम्)
श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्?। खश्स्वरः श्यन्स्वरं बाधिष्यते।।
(विशेषबाधकभाष्यम्)
सतिशिष्टत्वात् श्यन्स्वरः प्राप्नोति।।
(विशेषबाधकभाष्यम्)
आचार्यप्रवृत्तिर्ज्ञापयति सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधत इति यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति।।
(ज्ञपनस्यविशेषविषयत्वभाष्यम्)
लसार्वधातुक एवैतज्ज्ञापकं स्यात्।।
(ज्ञपकस्यसामान्यविषयत्वभाष्यम्)
नेत्याह। अविशेषेण ज्ञापकम्। आत्ममाने ।। 83 ।।
इति श्रीमद्भगवत्पतञ्चलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्।।
-3-2-84- भूते (851)
(506 अधिकारसूत्रम्।। 3 । 2 । 2 आ.1)
(भूतपदार्थविशेष्यभूतपदार्थनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
भूत इत्युच्यते। कस्मिन् भूते?।
(समाधानभाष्यम्)
काले।
(भाष्यम्) न वै कालाधिकारोस्ति।।
(भाष्यम्) एवं तर्हि धातोरिति वर्तते। धातौ भूते।।
(भाष्यम्) धातुर्वै शब्दः। न च शब्दस्य भूत भविष्यद्वर्तमानतायाः संभवोस्ति।।
(आक्षेपवार्तिकशेषभाष्यम्)
यद्येवं।
(2065 आक्षेपवार्तिकम्।। 1 ।।)
- निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः-
(भाष्यम्) निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात्।।
का इतरेतराश्रयता?।
भूतकालेनायं शब्देन निर्देशः। क्रियते। निर्देशोत्तरकालं च भूतकालता। तदेतदितरेतराश्रयं भवति।। इतरेतराश्रयाणि कार्याणि च न प्रकल्पन्ते।।
(2066 समाधानवार्तिकम्।। 2 ।।)
- अव्ययनिर्देशात्सिद्धम्-
(भाष्यम्)
अव्ययवता शब्देन निर्देशः करिष्यते। अवर्तमाने अभविष्यतीति।
(अनुयोगभाष्यम्)
स तर्हि अव्ययवता शब्देन निर्देशः कर्तव्यः?।
(समाधानभाष्यम्)
न कर्तव्यः। अव्ययमेष भूतेशब्दः। नैषा भवतेर्निष्ठा।।
कथमव्ययत्वम्?।
उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपाताव्ययमित्यव्ययसंज्ञा।।
(निष्ठापक्षेपि समाधानभाष्यम्)

अथापि भवतेर्निष्ठा। एवमप्यव्ययमेव। कथम्?। नव्येतीत्यव्ययमिति।
क्व पुनर्न व्येति?।
एतौ कालविशेषौ भविष्यद्वर्तमानौ। स्वभावतो भूते एव वर्तते।।
(वार्तिकावतरणभाष्यम्)
यदि तर्हि न व्येतीत्यव्यम्-----
(2037 अधिकारवैर्य्यर्थ्याक्षेपवार्तिकम्।। 3 ।।)
- न वा तद्विधानस्यानन्यत्राभावात्-
(भाष्यम्) न वा भूताधिकारेणार्थः। किं कारणम्?। तद्विधानस्यान्यत्राभावात्। येऽपि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते तेऽप्येतौ कालविशेषौ न वियन्ति भविष्यद्वर्तमानौ। स्वभावतो भूत एव वर्तन्ते।।
(समाधानवार्तिकावतरणभाष्यम्)
अत उत्तरं पठति-----
(2038 समाधानवार्तिकम्।। 4 ।।)
(- प्रयोजनं कुमारघाती शीर्षघाती आखुहा बिडालः सुत्वानः सुन्वन्तः सुषुपुषोऽनेहाः अग्निमादधानस्य-)
(भाष्यम्) भूताधिकारस्य प्रयोजनम्। कुमारघाती, शीर्षघाती, आखुहा बिडालः, सुत्वानः सुन्वन्तः सुषुपुषोऽनेहाः अग्निमादधानस्य (भूतकालनिवृत्त्यर्थंभविष्यद्वर्तमानकालसंप्रत्ययार्थम्?))।।
कुमारघाती शीर्षघातीति भविष्यद्वर्तमानार्थो भूतनिवृत्त्यर्थः।।
आखुहा बिडाल इति भवतिष्यद्वर्तमानार्थो भूतनिवृत्त्यर्थः। इतरथा हि ब्रह्मादिनियमस्त्रिषु कालेषु निवर्तकः स्यात्।।
सुत्वानः सुन्वन्तः। यज्ञसंयोगे ङ्वनिपस्त्रिषु कालेषु शतापवादो मा भूत्।।
सुषुपुषः। नजिङ् सर्वकालापवादो मा भूत्।।
अनेहा इति वर्तमानकाल एव। अन्यत्र अनहन्ता।।
आदधानस्य कानचश्चानश् ताच्छील्यादिषु सर्वकालापवादो मा भूत्। अग्निमादधानस्येत्येवान्यत्र भूते।। 84 ।।
-3-2-87- ब्रह्मभ्रूणवृत्रेषु क्विप् (854)
(504 क्विप्प्रत्ययनियमसूत्रम्।। 3 । 2 । 2 आ.2 )
(आक्षेपभाष्यम्)
किमर्थं ब्रह्मदिषु हन्तेः क्विब्विधीयते, न क्विप्चान्येभ्योपि दृश्यते इत्येव सिद्धम्?।
(2069 समाधानवार्तिकम्।। 1 ।।)
- ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम्-
(भाष्यम्) नियमार्थोयमारम्भः।। (ब्रह्मादिष्वेव हन्तेर्भूते क्विब्यथा स्यादिति।।)
किमविशेषेण?।
(भाष्यम्) नेत्याह। उपपदविशेषे एतस्मिंश्च विशेषे।।
(भाष्यम्) अथ ब्रह्मादिषु हन्तेर्णिनिना भवितव्यम्?।
न भवितव्यम्। किं कारणम्?।
उभयतोनियमात्।
(भाष्यम्) उभयतो नियमोयम्। ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति। क्विबेव हन्तेर्भूते ब्रह्मादिष्विति।।
(2070 दृष्टोपपत्तिवार्तिकम्।। 2।। )
- तथा चोत्तरस्य वचनार्थः-
(भाष्यम्) एवं च कृत्वोत्तरस्य योगस्य वचनार्थ उपपन्नो भवति-----बहुलं छन्दसि इति। यो मातृहा पितृहा भ्रातृहा। न च भवति-----अमित्रघात इति।। ब्रह्मभ्रूण।। 87 ।।
-3-2-93- कर्मणीनि विक्रियः (860)
(405 इनिप्रत्ययविधिसूत्रम्।। 3 । 2 । 2 आ.3 )
(2079 वार्तिकम्।। 1 ।।)
- कर्मणि कुत्सिते-
(भाष्यम्) कर्मणि कुत्सिते इति वक्तव्यम्। इह मा भूत्-----धान्यविक्राय इति।।
-3-2-101- अन्येष्वपि दृश्यते (868)
(506 डप्रत्ययविधिसूत्रम्।। 3 । 2 । 2 आ 4)
(2072 वार्तिकम् ।। 1 ।।)।
- अन्येभ्योपि दृश्यते-
(भाष्यम्) अन्येभ्योपि दृश्यत इति वक्तव्यम्। इहापि यथा स्यात्----आखा उखा परिखा।। अन्येष्वपि।। 101।।
-3-2-102- निष्ठा (869)

507 निष्ठासंज्ञकप्रत्ययविधिसूत्रम्।। 3 2 । 2 आ. 5)
(2073 अन्योन्याश्रयदूषणवार्तिकम्।। 1 ।।)
- निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः-
(भाष्यम्) निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात्।।
केतरेतराश्रयता?।
सतोः क्तक्तवत्वोः संज्ञया भवितव्यम्। संज्ञया च क्तक्तवतू भाव्येते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते।।
(2074 गौरवापत्तिवार्तिकम्।। 2।।)
- द्विर्वा क्तक्तवतुग्रहणम्-
(भाष्यम्) द्विर्वा क्तक्तवतुग्रहणं कर्तव्यं भवति---क्तक्तवतू भूते। क्तक्तवतू निष्ठा इति।।
(गैरववारणभाष्यम्)
यदि पुनरिहैव निष्ठासंज्ञाप्युच्येत---क्तक्तवतू भूते। ततो निष्ठा क्तक्तवतू निष्ठासंज्ञौ भवत इति।।
किं कृतं भवति?।
द्विः क्तक्तवतुग्रहणं न कर्तव्यं भवति।।
(गौरवस्यापरिहार्यताभाष्यम्)
एवमपि तौ इति वक्तव्यं स्यात्। वक्ष्यति ह्येतत्---- तौ सदिति वचनमसंसर्गार्थम् इति। असंसक्तयोर्भूतकालेन क्तक्तवत्वोर्निष्ठा संज्ञा यथा स्यात---ञिमिदा। मिन्नः। ञिक्ष्विदा क्ष्विण्णः।।
(अन्योन्याश्रयाद्विः करणदूषणपरिहारभाष्यम्)
यदि पुनरदृष्टश्रुतावेव क्तक्तवतू गृहीत्वा निष्ठा संज्ञोच्येत।
(परिहाराशक्यत्वभाष्यम्)
नैवं शक्यम्। दृष्टस्रुतयोर्हि न स्यात्---ञिमिदा---मिन्नः, ञिक्ष्विदा-----क्ष्विण्ण इति। तस्मान्नैवं शक्यम्। न चेदेवं, द्विः क्तक्तवतुग्रहणं कर्तव्यं भवति। इतरेतराश्रयं वा भवति।।
(अन्योन्याश्रयपरिहारस्मारणभाष्यम्)
नैष दोषः। इतरेतराश्रयमात्रमेतद्भवति। सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि--- सिद्धं तु
नित्यशब्दत्वाद् इति।।
(उक्तपरिहाराप्राप्तिभाष्यम्)
नेदं तुल्यमन्यैरितरेतराश्रयैः। न हि संज्ञा नित्या।।
(परिहारान्तरस्मारणभाष्यम्)
एवं तर्हि भाविनी संज्ञा विज्ञास्यते। तद्यथा कश्चित्कंचित्तन्तुवायमाह---अस्य सूत्रस्य शाटकं वय इति। स पश्यति---यदि शाटको न वातव्यः। अथ वातव्यो, न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेता। स मन्ये वातव्यः यस्मिन्नुते शाटक इत्येतद्भवति इति। एवमिहापि तौ भूते काले भवतो ययोरभिनिर्वृत्तयोर्निष्ठेत्येषा संज्ञा भविष्यति।।
(2075 निष्ठाविधिवार्तिकम्।। 3 ।।)
- आदिकर्मणि निष्ठा-
(भाष्यम्) आदिकर्मणि निष्ठा वक्तव्या। प्रकृतः कटं देवदत्त इति।।
(प्रश्नभाष्यम्)
किं पुनः कारणं न सिध्यति?।
(2076 हेतुवार्तिकम्।। 4 ।।)
- यद्वा भवन्त्यर्थे-
(भाष्यम्) यद्वा भवन्त्या अर्थे भाष्यते। प्रकृतः कटे देवदत्तः प्रकरोति कटं देवदत्त इति।।
(2077 प्रत्याख्यानवार्तिकम्।। 5 ।।)
- न्याय्या त्वाद्यपवर्गात्-
(भाष्यम्) न्याय्या त्वेषा भूतकालता। कुतः?। आद्यपवर्गात्। अदिरत्रापवृक्तः। एष च नाम न्याय्यो भूतकालः---यत्र
किंचिदपवृक्तं दृश्यते।।
(2078 (2076 वार्तिक) प्रत्याख्यानवार्तिकम्।। 6 ।।)
- वा चाद्यतन्याम्-
(भाष्यम्) वा चाद्यतन्यां भाष्यते। प्रकृतः कटं देवदत्तः, प्राकार्षीत्कटं देवदत्त इति।
(आक्षेपभाष्यम्)
किं शक्यन्त एते शब्दाः प्रयोक्तुमित्यतो न्याय्यैषा भूतकालता।।
(समाधानभाष्यम्)
नावश्यं प्रयोगादेव। क्रिया नामेयमत्यन्तापरदृष्टा अनुमानगम्या न शक्या पिण्डीभूता निदर्शयितुम्। यथा गर्भो निर्लुठित इति। सासौ येन येन

शब्देनाभिसंबध्यते तावति तावति परिसमाप्यते तद्यथा---कश्चित्पाटलिपुत्रं जिगमिषुरेकमहर्गत्वाह इदमद्य गतम् इति। न च तावता तस्य व्रजिक्रिया समाप्ता भवति। यत्तु गतं तदभिसमीक्ष्यैतत् प्रयुज्यते इदमद्य गतम् इति। एवमिहापि यत्कृतं तदभिसमीक्ष्यैतत्प्रयुज्यते---प्रकृतः कटं देवदत्तः इति। यदा हि वेणिकान्तः कटोभिसमीक्षितो भवति। प्रकरोति कटम् इत्येव तदा भवितव्यम्।। निष्ठा।। 102 ।।

-3-2-106- लिटः कानज्वा (873)

(508 लिटः कानज्विधिसूत्रम्।। 3 । 2 । 2 आ.6 )

(वाग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थं कानच्क्वस्वोर्वावचनं क्रियते।

- कानच्क्वस्वोर्वावचनं छन्दसि तिङो दर्शनात्-

(भाष्यम्) कानच्क्वस्वोर्वावचनं क्रियते। छन्दसि तिङो दर्शनात्। छन्दसि तिङपि दृश्यते---अहं सूर्यमुभयतो ददर्श। अहं द्यावापृथिवी आततानेति।।

(2080 समाधानासंगतिवार्तिकम्।। 2 ।।)

- न वानेन विहितस्यादेशवचनात्-

(भाष्यम्) न वा एतत्प्रयोजनमस्ति। किं कारणम्?। अनेन विहितस्यादेशवचनात्।।

(आक्षेपभाष्यम्)

अस्त्वनेन विहितस्यादेशः। केनेदानीं छन्दसिविहितस्य लिटः तिङः श्रवणं भविष्यति।।

(समाधानभाष्यम्)

छन्दसि लुङ्लङ्लिटः इत्यनेन। तदेतद्वावचनं तिष्ठतु तावत् सांन्यासिकम्।।

(कित्करणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

अथ कित्करणं किमर्थम्। न असंयोगाल्लिट्कित् इत्येव सिद्धम्।

(2081 प्रयोजनवार्तिकम्।। 3 ।।)

- कित्करणं संयोगान्तार्थम्-

(भाष्यम्) कित्करणं क्रियते। संयोगान्तार्थम्। संयोगान्ताः प्रयोजयन्ति। बन्धे वृत्रस्य यद्बद्धधानस्य रोदसी। त्वमर्णवान् बद्बधानाँ अरम्णाः। अञ्चेः आजिवानिति।।

(प्रयोजननिराकरणभाष्यम्)

छान्दसौ कानच्क्वसू। लिट् च छन्दसि सार्वधातुकमपि भवति। तत्र सार्वधातुकमपिद् ङिद्वद्भवति। ङित्वादुपधालोपे भविष्यति।।

(2082 प्रयोजनान्तरवार्तिकम्।। 4 ।।)

- ऋकारान्तगुणप्रतिषेधार्थं वा-

(भाष्यम्) ऋकारान्तानां गुणप्रतिषेधार्थं तर्हि कित्त्वं वक्तव्यम्। अयं हि लिटि ऋकारान्तानां प्रतिषेधविषये गुण

आरभ्यते। स यथैवेह प्रतिषेधं बाधित्वा गुणो भवति----तेरतुः तेरुरिति। एवमिहापि स्यात्---तितीर्वान्, तितिराण इति। पुनः कित्करणात् प्रतिषिध्यते। तस्मात्कित्त्वं कर्तव्यम्।। लिटः कानञ्ज्वा।। 106 ।।

-3-2-107- क्वसुश्च (874)

(509 लिटः क्वसुविधिसूत्रम्।। 3 । 2 । 2 आ.7)

(वाग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थं कानच्क्वस्वोर्वावचनं क्रियते।

- कानच्क्वस्वोर्वावचनं छन्दसि तिङो दर्शनात्-

(भाष्यम्) कानच्क्वस्वोर्वावचनं क्रियते। छन्दसि तिङो दर्शनात्। छन्दसि तिङपि दृश्यते---अहं सूर्यमुभयतो ददर्श। अहं द्यावापृथिवी आततानेति।।

(2080 समाधानासंगतिवार्तिकम्।। 2 ।।)

- न वानेन विहितस्यादेशवचनात्-

(भाष्यम्) न वा एतत्प्रयोजनमस्ति। किं कारणम्?। अनेन विहितस्यादेशवचनात्।।

(आक्षेपभाष्यम्)

अस्त्वनेन विहितस्यादेशः। केनेदानीं छन्दसिविहितस्य लिटः तिङः श्रवणं भविष्यति।।

(समाधानभाष्यम्)

छन्दसि लुङ्लङ्लिटः इत्यनेन। तदेतद्वावचनं तिष्ठतु तावत् सांन्यासिकम्।।

(कित्करणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

अथ कित्करणं किमर्थम्। न असंयोगाल्लिट्कित् इत्येव सिद्धम्।
(2081 प्रयोजनवार्तिकम्।। 3 ।।)
- कित्करणं संयोगान्तार्थम्-
(भाष्यम्) कित्करणं क्रियते। संयोगान्तार्थम्। संयोगान्ताः प्रयोजयन्ति। बन्धे वृत्रस्य यद्बद्धधानस्य रोदसी। त्वमर्णवान् बद्बधानाँ अरम्णाः। अञ्चेः आजिवानिति।।
(प्रयोजननिराकरणभाष्यम्)
छान्दसौ कानच्क्वसू। लिट् च छन्दसि सार्वधातुकमपि भवति। तत्र सार्वधातुकमपिद् ङिद्वद्भवति। ङित्वादुपधालोपे भविष्यति।।
(2082 प्रयोजनान्तरवार्तिकम्।। 4 ।।)
- ऋकारान्तगुणप्रतिषेधार्थं वा-
(भाष्यम्) ऋकारान्तानां गुणप्रतिषेधार्थं तर्हि कित्त्वं वक्तव्यम्। अयं हि लिटि ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते। स यथैवेह प्रतिषेधं बाधित्वा गुणो भवति----तेरतुः तेरुरिति। एवमिहापि स्यात्---तितीर्वान्, तितिराण इति। पुनः कित्करणात् प्रतिषिध्यते। तस्मात्कित्त्वं कर्तव्यम्।। लिटः कानञ्वा।। 107 ।।
-3-2-108- भाषायां सदवसश्रुवः (895)
(590 क्वसुः विधिसूत्रम्।। 3। 2 । 2 आ.8)
(2083 लिड्विकल्पवार्तिकम्।। 1 ।।)
- भाषायां सदादिभ्यो वा लिट्-
(भाष्यम्) भाषायां सदादिभ्यो वा लिड्वक्तव्यः। किं प्रयोजनम्?।।
(2084 लिड्विकल्पवार्तिकशेषवार्तिकम्।। 2 ।।)
- तद्विषये लुङोऽनिवृत्त्यर्थम्-
(भाष्यम्) तस्य लिटो विषये लुङोऽनिवृत्तिर्यथा स्यात्। उपसेदिवान् कौत्सः पाणिनिम्। उपासदत्।।
(2085 लङ्समावेशवार्तिकम्।। 3 ।।)
- अनद्यतनपरोक्षयोश्च-
(भाष्यम्) अनद्यतनपरोक्षयोश्च वा लिड्वक्तव्यः। उपसेदिवान् कौत्सः पाणिनिम्। उपासीदत्। उपससाद।।
(2086 हेतुवार्तिकम्।। 4 ।।)
- अपवादविप्रतिषेधाद्धि तयोर्भावः-
(भाष्यम्) अपवादविप्रतिषेधाद्धि तौ स्याताम्। कौ?। लङ्लिटौ।।
(2087 वार्तिकम्।। 5 ।।)
- तस्य क्वसुरपरोक्षे नित्यम्-
(भाष्यम्) तस्य लिटो भाषायां क्वसुरपरोक्षे नित्यमिति वक्तव्यम्।।
(अपरोक्षग्रहणप्रत्याख्यानभाष्यम्)
अपरोक्षग्रहणेन नार्थः। तस्य क्वसुर्नित्यमित्येव।।
केनेदानीं लिटः परोक्षे श्रवणं भविष्यति?।।
परोक्षे लिडित्यनेन।।
तत्तर्हि वक्तव्यम्?।।
न वक्तव्यम्। अनुवृत्तिः करिष्यते। भाषायां सदादिभ्यो वा लिङ् भवति। लिटश्च क्वसुर्भवति।। ततो लुङ् लुङ् भूते काले भवति। भाषायां सदादिभ्यो वा लिड् भवति,लिटश्च क्वसुर्भवति।। ततः----अनद्यतने लङ् । अनद्यतने भूतकाले लङ् भवति। भाषायां सदादिभ्यो वा लिड् भवति, लिटश्च क्वसुर्भवति।। (ततः---) परोक्षे लिट्। परोक्षे लिड् भवति। भाषायां सदादिभ्यो वा लिड्भवति लिटश्च क्वसुर्भवति। तत्रायमप्यर्थः---- तस्य क्वसुरपरोक्षे नित्यम् इत्येतन्न वक्तव्यं भवति।। भाषायां सद।। 108 ।।
-3-2-109- उपेयिवाननाश्वाननूचानश्च (876)
(511 क्वसुप्रत्ययसंनियोगनिपातनसूत्रम्।। 3 । 2 । 2 आ.9)
(आक्षेपभाष्यम्)
किमर्थमुपेयिवानिति निपातनं क्रियते।।
(2088 निपातनप्रयोजनवार्तिकम्।। 1 ।।)
- उपेयुषि निपातनमिडर्थम्-
(भाष्यम्) उपेयुषि निपातनं क्रियते इडर्थम्। इड्यथा स्यादिति।।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। सिद्धोऽत्रेड् वस्वेकाजाद्घसाम् इत्येव।
(प्रयोजनबाधकभाष्यम्)
द्विर्वचने कृतेऽनेकाच्त्वान्न प्राप्नोति।

(प्रयोजनबाधकभाष्यम्)
इदमिह संप्रधार्यं, द्विर्वचनं क्रियतामिडिति। किमत्र कर्तव्यम्। परत्वादिडागमः।।
(साधकभाष्यम्)
नित्यं द्विर्वचनं कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति।।
(बाधकभाष्यम्)
इडपि नित्यः, कृतेऽपि द्विर्वचने एकादेशे च प्राप्नोत्यकृतेऽपि प्रप्नोति।।
(साधकभाष्यम्)
नात्रैकादेशः प्राप्नोति। किं कारणम्। दिर्घःथ्य;णः कितीति इति दीर्घत्वेन बाध्यते। तदेतदुपेयुषि निपातनमिडर्थे क्रियते।।
(2089 दूषणवार्तिकम्।। 2 ।।)
- उपेयुषि निपातनमिडर्थमिति चेदजादावतिप्रसङ्गः-
(भाष्यम्) उपेयुषि निपातनमिडर्थमिति चेदजादाविटोऽतिप्रसङ्गो भवति। उपेयुषा उपेयुषे उपेयुषः उपेयुषीति।।
(2090 निपातनीयान्तरवार्तिकम्।। 3 ।।)
- एकादिष्टस्येय्भावार्थं तु-
(भाष्यम्) एकादिष्टस्येय्भावार्थं तु निपातनं क्रियते। एकादिष्टस्य इर्य् इत्येतद्रूपं निपात्यते।।
(उक्तदूषणस्मारणभाष्यम्)
ननु चोक्तं नात्रैकादेशः प्राप्नोति। किं कारणम्?। दिर्घ इणः किति इति दीर्घत्वेन बाध्यत इति।।
(तद्दूषणासामञ्जस्यभाष्यम्)
तद्धि न सुष्ठूच्यते। न हि दीर्घत्वमेकादेशं बाधते। कस्तर्हि बाधते?। यणादेशः। स चापि क्व बाधते?। यत्रास्य निमित्तमस्ति। यत्र हि निमित्तं नास्ति निष्प्रतिद्वन्द्वस्तत्रैकादेशः।।
(2091 निपातनीयान्तरवार्तिकम्।। 4 ।।)
- व्यञ्जने यणादेशार्थं वा-
(भाष्यम्) अथ वा व्यञ्जन एव यणादेशो निपात्यते। यणादेशे कृते एकाच इतीट् सिद्धो भवति।।
(ऋष्यन्तरमतभाष्यम्)
अपर आह----
(2092 वार्तिकम्।। 5 ।।)
- नोपेयिवान्निपात्यो द्विर्वचनादिड्भविष्यति परत्वाद्-
(भाष्यम्) द्विर्वचनं क्रियतामिडिति परत्वादिड् भविष्यति विप्रतिषेधेन।।
(आक्षेपभाष्यम्)
इहापि तर्हि द्विर्वचनादिट् स्याद् बिभिद्वान् चिच्छिद्वानिति।।
(2093 वार्तिकम्।। 6 ।।)
- अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः-
(भाष्यम्) अन्येषामेकाचां द्विर्वचनं नित्यम्----कृतेऽपीटि प्राप्नोति, अकृतेऽपि।
(2094 वार्तिकम्।। 7 ।।)
- अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य-
(भाष्यम्) अस्य पुनरिट् चैवं नित्योऽस्य हि द्विर्वचनं च न विहन्यते।
(2095 वार्तिकम्।। 8 ।।)
- द्विर्वचने चैकाच्त्वात्-
(भाष्यम्) द्विर्वचने कृते एकादेशे चैकाज्भवति।
(2096 वार्तिकम्।। 9 ।।)
- तस्मादिड्बाधते द्वित्वम्-
(भाष्यम्) तस्मादिड् द्विर्वचनं बाधते।।
(2097 वार्तिकम्।। 10 ।।)
- अनूचानः कर्तरि-
(भाष्यम्) अनूचानः कर्तरीति वक्तव्यम्। अनूक्तवाननूचानः। अनूक्तमित्येवान्यत्र।।
नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात्।
अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः।।
अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य। द्विर्वचने चैकाच्त्वात्तस्मादिड्बाधते द्वित्वम्।।
उपेयि।। 109 ।।
-3-2-110- लुङ् (877)

(512 लुङ्विधिसूत्रम्।। 3 । 2 । 2 आ. 10)
(2098 आक्षेपवार्तिकम्।। 1 ।।)
- लुङ्लृटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात्-
(भाष्यम्) लुङ्लृटोरपवादः प्राप्नोति। अगमामघोषान्। अपाम पयः। अशयिष्महि पूतीकतृणेषु। गमिष्यामो घोषान् पास्यामः पयः शयिष्यामहे पूतीकतृणेषु। किं कारणम्। भूतभविष्यतोरविशेषवचनात्। भूतभविष्यतोर्ह्यविशेषेणैतौ विधीयेते लुङ्लृटौ, तयोर्विशेषविहितौ लङ्लुटावपवादौ प्राप्नुतः।।
(2099 आक्षेपोद्धारवार्तिकम्।। 2 ।।)
- न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम्-
(भाष्यम्) न वा एष दोषः। किं कारणम्?। अपवादस्य निमित्ताभावात्। नात्रापवादस्य निमित्तमस्ति। किं कारणम्?। अनद्यतने हि तयोर्विधानम्। अनद्यतने हि तौ लङ्लुटौ विधीयेते। न चात्रानद्यतनः कालो विवक्षितः। किं तर्हि?। भूतकालसामान्यं भविष्यत्कालसामान्यं च।
(आक्षेपभाष्यम्)
यद्यपि तावदेतच्छक्यते वक्तुम्---गमिष्यामो घोषान्पास्यामः पयः। शयिष्यामहे पूतीकतृणेषु। यत्रैतन्न ज्ञायते---किं कदेति। इह तु कथम्----अगमाम घोषान्, अपाम पयः, अशयिष्महि पूतीकतृणेष्विति। यत्रैतन्निर्ज्ञातं भवति अमुष्मिन्नहनि गतमिति।।
(समाधानभाष्यम्)
अत्रापि नवापवादस्यनिमित्ताभावादनद्यतने हि तयोर्विधानमित्येव। कथं पुनः सतो नामाविवक्षा स्यात्। सतोऽप्यविवक्षा भवति। तद्यथाऽलोमिका एडका अनुदरा कन्येति। असतश्च विवक्षा भवति। तद्यथा समुद्रः कुण्डिका विन्ध्योवर्धितकमिति।
(3000 वार्तिकम्।। 3 ।।)
(भाष्यम्) वसेर्लुङ्रात्रिशेषे वक्तव्यः। न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कंचित्पृच्छति क्व भवानुषित इति, स आह अमुत्रावात्सम् इति। अमुत्रावसमिति प्राप्नोति।।
(3001 वार्तिकम्।। 4 ।।)
- जागरणसन्ततौ-
(भाष्यम्) जागरणसंतताविति वक्तव्यम्। यो हि मुहूर्तमात्रमपि स्वपिति तत्र अमुत्रावसम् इत्येव भवितव्यम्।। लुङ् ।। 110 ।।
-3-2-111- अनद्यतने लङ् (878)
(593. लङ्विधिसूत्रम्।। 3 । 2 । आद्द 11 )
(3002 आक्षेपवार्तिकम्।। 1 ।।)
- अनद्यतन इतिबहुव्रीहिनिर्देशोऽद्य ह्योऽमुक्ष्महीति-
(भाष्यम्) अनद्यतन इति बहुव्रीहिनिर्देशः----कर्तव्यः। अविद्यमानाद्यतनोनद्यतन इति।। किं प्रयोजनम्?। अद्य ह्योभुक्ष्महीति।। अद्य च ह्यश्चाभुक्ष्महीति व्यामिश्रे व्यामिश्रे लुङेव यथा स्यात्।।
(आक्षेपभाष्यम्)
यद्येवमद्यतेनपि लङ् प्राप्नोति। न ह्यद्यतनेद्यतनो विद्यते।
(आक्षेपबाधकभाष्यम्)
अद्यतनेपि हि अद्यतनो विद्यते। कथम्?। व्यपदेशिवद्भावेन।
(3003 वार्तिकम्।। 2 ।।)
- परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये-
(भाष्यम्) परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शिनविषये लङ्वक्तव्यः। अरुणद्यवनः साकेतम्। अरुणद्यवनो मध्वमिकाम्।।
(आक्षेपभाष्यम्)
परोक्ष इति किमर्थम्?।
उदगादादित्यः।।
(आक्षेपभाष्यम्)
लोकविज्ञात इति किमर्थम्?।
(प्रत्युदाहरणभाष्यम्)
चकार कटं देवदत्तः।।
(आक्षेपभाष्यम्)
प्रयोक्तुर्दर्शनविषय इति किमर्थम्?।
(प्रत्युदाहरणभाष्यम्)
जघान कंसं किल वासुदेवः।। अनद्यतने।। 111 ।।
-3-2-114- विभाषा साकाङ्क्षे (881)
(514 लृङ्विकल्पसूत्रम्।। 3 । 2 । 2 आद्द 12)
(आक्षेपभाष्यम्)

किमुदाहरणम्?।
(समाधानभाष्यम्)
अभिजानासि देवदत्त कश्मीरान् गमिष्यामः। तत्र सक्तून् पास्यामः। अभिजानासि देवदत्त कश्मीरानगच्छाम। तत्र सक्तूनपिबाम।।
(आक्षेपभाष्यम्)
भवेत् पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात्, परं तु कथं साकाङ्क्षम्।
(समाधानभाष्यम्)
परमपि साकाङ्क्षम्। कथम्?। अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम्।।
(3004 वार्तिकम्।। 1 ।।)
- विभाषा साकाङ्क्षे सर्वत्र-
(भाष्यम्) विभाषा साकाङ्क्षे सर्वत्रेति वक्तव्यम्। क्व सर्वत्र?। यदि चायदि च। यदि तावत्-------अभिजानासि देवदत्त यत्कश्मीरान् गमिष्यामः, यत्कश्मीरानगच्छाम। यत्तत्रौदनं भोक्ष्मामहे, यत्तत्रौदनमभुञ्ज्महि। अयदि----अभिजानासि देवदत्त कश्मीरान् गमिष्यामः कश्मीरानगच्छाम। तत्रौदनं भोक्ष्यामहे।। तत्रौदनमभुञ्ज्महि।। विभाषा साद ।। 114 ।।
-3-2-115- परोक्षे लिट् (882)
(515 लिड्विधिसूत्रम्।। 3 । 2 । 2 आद 16)
(परोक्षशब्दसिध्यधिकरणम्)
(आक्षेपभाष्यम्)
परोक्ष इत्युच्यते। किं परोक्षं नाम?।
(समाधानभाष्यम्)
परमक्ष्णः परोक्षम्।।
(प्रश्नभाष्यम्)
अक्षि पुनः किम्?।
(समाधानभाष्यम्)
अश्नोतेरयमौणादिकः करणसाधनः सिप्रत्ययः। अश्नुतेऽनेनेत्यक्षि।
(आक्षेपभाष्यम्)

यद्येवं परोक्षमिति प्राप्नोति।
(दूषणपरिहारभाष्यम्)
नैष दोषः।।
(3005 निपातनवार्तिकम्।। 1 ।।)
- परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम्-
(भाष्यम्) परशब्दस्याक्षशब्दे उत्तरपदे परोभावो वक्तव्यः।।
(3006 निपातनान्तरवार्तिकम्।। 2 ।।)
- उत्वं वादेः पारदक्ष्णः -
(भाष्यम्) अथ वा परशब्दादुत्तरस्याक्षिशब्दस्योत्वं वक्तव्यम्।।
(3007 निपातनान्तरवार्तिकम्।। 3 ।।)
- सिद्धं वास्मान्निपातनात्-
(भाष्यम्) अथ वा निपातनादेव सिद्धं परोक्षे लिड् इति।।
(परोक्षार्थविशेष्यविचाराधिकरणम्)
(आक्षेपभाष्यम्)
कस्मिन्पुनः परोक्षे लिड् भवति?।
(समाधानभाष्यम्)
काले।
(समाधानबाधकभाष्यम्)
न वैकालाधिकारोस्ति।
(समाधानान्तरभाष्यम्)
एवं तर्हि धातोः इति वर्तते, धातौ परोक्षे।।
(समाधानबाधकभाष्यम्)
धातुर्वै शब्दः। न च शब्दस्य प्रत्यक्षपरोक्षतायां संभवोस्ति।
(समाधानसाधकभाष्यम्)

शब्देऽसंभवादर्थे कार्यं विज्ञास्यते---परोक्षे धातौउपरोक्षे धात्वर्थ इति।।
(आक्षेपभाष्यम्)
कः पुनर्धात्वर्थः।
(समाधानभाष्यम्)
क्रिया क्रियायां परोक्षायामिति।।
(समाधानबाधकभाष्यम्)
यद्येवं ह्योपचदित्यत्र लिट् प्राप्नोति। किं कारणम्?। क्रिया नामेयमत्यन्तापरदृष्टा अनुमानगम्याऽशक्या पिण्डीभूता निर्दर्शयितुम्। यथा गर्भो निर्लुठितः।।
(समाधानभाष्यम्)
एवं तर्हि साधनेषु परोक्षेषु।
(आक्षेपभाष्यम्)
साधनेषु च परोक्षेषु भवतः कः संप्रत्ययः?।
(समाधानभाष्यम्)
यदि तावद् गुणसमुदायः साधनम्। साधनमप्यनुमानगम्यम्।।
(भाष्यम्) अथान्यद् गुणेभ्यः साधनम्, भवति प्रत्यक्षपरोक्षतायां संभवः।।
(आक्षेपभाष्यम्)
अथ यदानेन रथ्यायां तण्डुलोदकं दृष्टं कथं तत्र भवितव्यम्,
(समाधानभाष्यम्)
यदि तावत्साधनेषु परोक्षेषु?। पपाचेति भवितव्यम्। भवन्ति हि तस्य साधनानि परोक्षाणि।
(भाष्यम्) अत य एते क्रियाकृता विशेषाश्चीत्काराः फूत्काराश्च तेषु परोक्षेषु, एवमपि पपाचेति भवितव्यम्।।
(परोक्षकालनिर्णयाधिकरणम्)
(आक्षेपभाष्यम्)
कथंजातीयकं पुनः परोक्षं नाम?।
(समाधानभाष्यम्)
केचित्तावदाहुः---वर्षशतवृत्तं परोक्षमिति।।
अपर आहुः---वर्षसहस्रवृत्तं परोक्षमिति।।
अपर आहुः----कुड्यकटान्तरितं परोक्षमिति।।
अपर आहुः-----द्व्यहवृत्तं त्र्यहवृत्तं चेति।।
(उत्तमपुरुषोपपादनाधिकरणम्)
(आक्षेपभाष्यम्)
सर्वथोत्तमो न सिध्यति।।
(3008 समाधानवार्तिकम्।। 4 ।।)
- सुप्तमत्तयोरुत्तमः-
(भाष्यम्) सुप्तमत्तयोरुत्तम इति वक्तव्यम्। सुप्तोहं किल विललाप। मत्तोहं किल विललाप। सुप्तोन्वहं किल विललाप। मत्तोन्वहं किल विललाप।।
(परोक्षत्वाङ्गीकारभाष्यम्)
अथ वा भवति वै कश्चिज्जाग्रदपि वर्तमानं कालं नोपलभते। तद्यथा वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोपलेभे।
किं पुनः कारणं कश्चिज्जाग्रदपि वर्तमानकालं नोपलभते?.
मनसा प्रयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसांनिध्यात्।
(3009 लिड्विधिवार्तिकम्।। 5 ।।)
- परोक्षे लिडत्यन्तापह्नवे च-
(भाष्यम्) परोक्षे लिट् इत्यत्र अत्यन्तापह्नवे च इति वक्तव्यम्। नो खण्डिकान् जगाम। नोकलिङ्गाञ्जगाम।
न कारिसोमं प्रपपावग्ने, न दार्वजस्य प्रतिजग्राह, को मे मनुष्यः प्रहरेद्वधाय।।
परो भावः परस्याक्षे परोक्षे लिटि दृश्यताम्।
उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात्। परोक्षे लिट्।। 115 ।।
-3-2-118- लट् स्मे (885)
(516 लड्प्रत्ययविधिसूत्रम्।। 3 । 2 । 2 आ.14)
(3010 ---11 वार्तिकद्वयम्।। 1।।)
- स्मपुरा भूतमात्रे न स्मपुराद्यतने -
(भाष्यम्) स्मपुरा भूतमात्रे न स्मपुराद्यतनेति वक्तव्यम्।

(आक्षेपभाष्यम्)
किमयं स्मादिविधिः पुरान्तोऽविशेषेण भूतमात्रे भवति। तत्र वक्तव्यं स्मलक्षणः पुरालक्षणश्चाद्यतने न भवत इति।।
आहोस्वित् स्मलक्षणः पुरालक्षणश्चाविशेषेण भूतमात्रे भवतः इति। तत्र स्माद्यर्थे न स्मपुराद्यतन इति वक्तव्यम्?।
(3012 पूर्ववार्तिकप्रत्याख्यानवार्तिकम्।। 2 ।।)
- स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति न स्मपुराद्यतन इति ब्रुवता कात्यायनेनेह-
(भाष्यम्) स्मादिविधिः पुरान्तो यद्यविशेषेण भवति, किं वार्तिककारः प्रतिषेधेन करोति---न स्मपुराद्यतन इति।।
(3013 वार्तिकम्।। 2 ।।)
- अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति नञ्कार्यम्-
(भाष्यम्) लट् स्मे इत्यत्रानद्यतन इत्येतदनुवर्तिष्यते।।
(3014 वार्तिकम्।। 3 ।।)
- अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ।। न पुराद्यतन इति भवेदेतद्वाच्यम्-
(भाष्यम्)तत्रैतावद्वक्तव्यं स्याद्----- ठन पुराद्यतन इति।।
(3015 वार्तिकम्।। 4 ।।)
- तत्र चापि लुङ्ग्रहणम्-
(भाष्यम्) तत्र चापि लुङ्ग्रहणं ज्ञापकम्---न पुरालक्षणोद्यतने भवतीति।।
(भाष्यम्) अथ बुद्धिरियम् अविशेषेण स्मपुराहेतू इति तत्र चापि श्रृणुभूयः।।
अपरोक्षे चेत्येष प्राक् पुरिसंशब्दनादविनिवृत्तः। सर्वत्रानद्यतनस्तथासति नञ्ञा किमिह कार्यम्।।
(अपरोक्षे च इत्यस्य प्रत्याख्यानभाष्यम्)
स्मादावपरोक्षे चेत्यकार्यमपि शक्यमेतदितिविद्धि।
शक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र।।
(सूत्रसमर्थनभाष्यम्)
स्यादेषा तव बुद्धिः स्मलक्षणेप्येवमेव सिद्धमिति।
लट् स्म इति भवेन्नार्थस्तस्मात्कार्यं परार्थं तु। एवं तर्हि ज्ञापयत्याचार्यः----स्मलक्षणः पुरालक्षणश्चानद्यतने भवतः इति।। लट् स्मे।। 118 ।।
-3-2-120- ननौ पृष्टप्रतिवचने (887)
(517 लड्विधिसूत्रम्।। 3 । 2 । 2 आ.15)
- ननौ पृष्टप्रतिवचन इत्यशिष्यं क्रियासमाप्तेर्विवक्षितत्वात्-
(भाष्यम्) ननौ पृष्टप्रतिवचन इति अशिष्यो लट्। किं कारणम्?। क्रियासमाप्तेर्विवक्षितत्वात्। क्रियाया अत्र असमाप्तिर्विवक्षिता। एष एव न्याय्यो वर्तमानः कालः यत्र क्रियाया असमाप्तिर्भवति तत्र वर्तमाने लट् इत्येव सिद्धम्।।
(दूषणभाष्यम्)
यदि वर्तमाने लट् इत्येव लड् भवति। शतृशानचौ च प्राप्नुतः।।
(इष्टापत्तिभाष्यम्)
इष्येते शतृशानचौ---ननु मां कुर्वन्तं पश्य, ननु मां कुर्वाणं पश्येति।। ननौ पृष्टद ।। 120 ।।
-3-2-122- पुरि लुङ् चास्मे (889)
(598 लुङ्लड्विधिसूत्रम्।। 3 । 2 । 2 आद 16)
(3017 वार्तिकम्।। 1 ।।)
- हशश्वद्भ्यां पुरा-
(भाष्यम्) हशश्वल्लक्षणात्पुरालक्षणो भवति विप्रतिषेधेन। हशश्वल्लक्षणस्यावकाशः---इति हाकरोत् इति ह चकार, ----शश्वदकरोत् शश्वच्चकार पुरालक्षणस्यावकाशो----रथेनायं पुरा याति रथेनायं पुरायासीत्। इहोभयं प्राप्नोति-----रथेन हशस्वत्पुरा याति रथेन हशश्वत्पुरायासीत्। पुरालक्षणो भवति विप्रतिषेधेन।।
(3018 वार्तिकम्।। 2 ।।)
- स्मः सर्वेभ्यो विप्रतिषेधेन-
(भाष्यम्) स्मलक्षणः सर्वेभ्यो भवति विप्रतिषेधेन। हशस्वल्लक्षणात्पुरालक्षणाच्च। हशश्वल्लक्षणस्यावकाशः---इति
हाकरोत्उःथ्य;ति ह चकार। शश्वदकरोत्शश्वच्चकार। पुरालक्षणस्यावकाशः----णस्यावकाशः----धर्मेण स्म कुरवो युध्यन्ते। इह सर्वे प्राप्नोति---न ह स्म वै पुरा शश्वदग्निरपरशुवृक्णं दहति। स्मलक्षणो लड् भवति विप्रति षेधेन।। पुरि लुङ्।। 122 ।।
(इति भूताधिकारः)
-3-2-123- वर्तमाने लट् (890)
(अथ वर्तमानकालाधिकारः)
(519 लट्प्रत्ययविधिसूत्रम्।। 3 । 2 । 2 आ.17)
- प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात्।। -

(भाष्यम्) प्रवृत्तस्याविरामे शासितव्या भवन्ती। इहाधीमहे, इह वसामः, इह पुष्यमित्रं याजयाम इति।। किं पुनः कारणं न सिध्यति?। अवर्तमानत्वात्।।
(3020 आक्षेपवार्तिकम्।। 2 ।।)
- नित्यप्रवृत्ते च कालाविभागात्-
(भाष्यम्) नित्यप्रवृत्ते च शासितव्या भवन्ती। तिष्ठन्ति पर्वताः स्रवन्ति नद्य इति। किं पुनः कारणं न सिध्यति? कालाविभागात्। इह भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानः कालः। न चात्र भूतभविष्यन्तौ कालौ स्तः।।
(3021 प्रथमाक्षेपबाधकवार्तिकम्।। 3।।)
- न्याय्या त्वारम्भानपवर्गात्-
(भाष्यम्) न्याय्या त्वेषा वर्तमानकालता। कुतः? न्याय्यं मन्यते भुङ्क्ते देवदत्त इति। आरम्भानपवर्गात्। आरम्भोत्रानपवृक्तः। एष एव च नाम न्याय्यो वर्तमानकालो यत्रारम्भो नपवृक्तः।।
(3022 वार्तिकगम्।। 4 ।।)
- अस्ति च मुक्तसंशये विरामः-
(भाष्यम्) यं खल्वपि भवान्मुक्तसंशयं वर्तमानकालं न्यायं मन्यते भुङ्क्ते देवदत्त
इति। तेनैतत्तुल्यम्। सोपि ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति। यद्यत्र युक्ता वर्तमानकालता दृश्यते। इहापि युक्ता दृश्यताम्।।
(2023 द्वितीयाक्षेपबाधकवार्तिकम्।। 5 ।।)
- सन्ति च कालविभागाः-
(भाष्यम्) सन्ति च खल्वपि कालविभागाः तिष्ठन्ति पर्वताः, स्थास्यन्ति पर्वताः, तस्थुः पर्वता इति।
(आक्षेपभाष्यम्)
किं शक्यन्त एते शब्दाः प्रयोक्तुमित्यतः सन्ति कालविभागाः?।
(समाधानभाष्यम्)
नावश्यं प्रयोगादेव। इह हि भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्ताः तिष्ठतेरधिकरणम्। इह तावत् तिष्ठन्ति पर्वताः इति, संप्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु। स्थास्यन्ति पर्वताः इति इत उत्तरं ये राजानो भविष्यन्ति पर्वताः इति। इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु। तस्थुः पर्वताः इति, इह हि ये राजानो बभूवुस्तेषां याः क्रियास्तास्वतिक्रान्तासु।।
(आक्षेपभाष्यम्)
अपर आहुः----नास्ति वर्तमानः काल इति।। अपि चात्र श्लोकानुदाहरन्ति---
(भाष्यम्) न वर्तते चक्रमिषुर्न पात्यते।
न स्यन्दन्ते सरितः सागराय।
कूटस्थोयं लोको न विचेष्टितास्ति।
यो ह्येवं पश्यति सोप्यनन्धः।।
मीमांसको मन्यमानो युवा मेधाविसंमतः।
काकं स्मेहानुपृच्छति किं ते पतितलक्षणम्।।
अनामते न पतसि अतिक्रान्ते च काक न।
यदि संप्रति पतसि सर्वो लोकः पतत्ययम्।।
हिमवानपि गच्छति।।
अनागतमतिक्रान्तं वर्तमानमिति त्रयम्।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते।।
(आक्षेपपरिहारभाष्यम्)
क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम्। तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्।।
(मतान्तरेणाक्षेपपरिहारभाष्यम्)
अपर आह---अस्ति वर्तमानः काल इति। आदित्यगतिवन्नोपलभ्यत इति।। अपि चात्रश्लोकमुदाहरन्ति---
विसस्य वाला इव दह्यमाना।
न लक्ष्यते विकृतिः सन्निपाते।
अस्तीति तां वेदयन्ते त्रिभावाः।
सूक्ष्मो हि भावोऽनुमितेन गम्यः।। इति।।
वर्तमाने लट्।। 123 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्।।
-3-2-124- लटः शतृशानचावप्रथमासमानाधिकरणे (819)
(520 लटः शतृशानज्विधिसूत्रम्।। 3 । 2 । 3 आ.1)

(आदेशोपपादनाधिकरणम्)
(3024 आदेशानुपपत्तिवार्तिकम्।। 1 ।।)
- लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिर्यथान्यत्र-
(भाष्यम्) लस्य अप्रथमासमानाधिकरणेनायोगादादेशयोरनुपपत्तिर्यथान्यत्र। तद्यथा ----अन्यत्रापि लस्याप्रथमासमानाधिकरणेन योगो न भवति। क्वान्यत्र?। लङि---अपचदोदनं देवदत्तं इति।।
(3025 अन्यथा दूषणापत्तिवार्तिकम्।। 2 ।।)
- योग इति चेदन्यत्रापि योगः स्यात्-
(भाष्यम्) अथ मतमेतत्----भवति योग इति। अन्यत्रापि योगः स्यात्।। क्वान्यत्र?। लङि---अपचदोदनं देवदत्त इति।।
(अनुपपत्तिपरिहारभाष्यम्)
न क्वचिद्योग इति कृत्वातः सर्वत्र योगेन भवितव्यम्। क्वचिद्वाऽयोग इति कृत्वा सर्वत्रायोगेन।। तद्यथा---समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न। न चेदानीं कश्चिदर्थवान् इति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वानर्थक इति सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुं यल्लटोऽप्रथमासमानाधिकरणेन योगो भवति, लङो न भवति, स्वाभाविकमेतत्।।
(परिहारान्तरभाष्यम्)
अथ वाऽऽदेशेन सामानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं प्रकृतेरपि सामानाधिकरण्यं भवति इति। तद्यथा---धूमं दृष्ट्वा अग्निरत्र इति गम्यते। त्रिविष्टब्धकं दृष्ट्वा परिव्राजक इति।
(परिहारान्तरासंभवभाष्यम्)
विषम उपन्यासः---प्रत्यक्षस्तेनाग्निधूमयोरभिसंबन्धः कृतो भवति, त्रिविष्टब्धकपरिव्राजकयोश्च ननु तद्विदेशस्थमपि दृष्ट्वाध्यवस्यति अग्निरत्र परिव्राजकोत्रेति।
(प्रत्यक्षस्यानुमानाबाधकताभाष्यम्)
भवति वै प्रत्यक्षादप्यनुमानबलीयस्त्वम्। तद्यथाऽलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्च गम्यते नैतदस्ति इति।।
(अनुमानसाधकव्याप्तिसाधकभाष्यम्)
कस्यचित्खल्वपि सकृत्कृतोभिसंबन्धोऽत्यन्ताय कृतो भवति। तद्यथा---वृक्षपर्णयोः---अयं वृक्षः इदं पर्णम् इति। स तद्विदेशस्थमपि दृष्ट्वा जानाति वृक्षस्येदं पर्णम् इति।।
(आक्षेपभाष्यम्)
किं पुनरयं पर्युदासो यदन्यत्प्रथमासमानाधिकरणादिति, आहोस्वित् प्रसज्यप्रतिषेधः प्रथमासमानाधिकरणेनेति।
(प्रत्याक्षेपभाष्यम्)
कश्चात्र विशेषः।
(3026 पर्युदासे दूषणवार्तिकम्।। 3 ।।)
- लटः शतृशानचावप्रथमासमानाधिकरणे इति चेत्प्रत्ययोत्तरपदयोरुपसंख्यानम्-
(भाष्यम्) लटः शतृशानचावप्रथमासमानाधिकरण इति चेत् प्रत्ययोत्तरपदयोरुपसंख्यानं कर्तव्यम्। कौर्वतः पाचतः कुर्वद्भक्तिः, पचतभक्तिः, कुर्वाणभक्तिः, पचमानभक्तिरिति।
(प्रसज्यप्रतिषेधाङ्गीकारवार्तिकम्)
अस्तु तर्हि प्रसज्यप्रतिषेधः प्रथमासमानाधिकरणे नेति।
(3027 प्रसज्यप्रतिषेधदूषणवार्तिकम्।। 4 ।।)
- प्रथमाप्रतिषेधे उत्तरपदे आदेशानुपपत्तिः-
(भाष्यम्) प्रथमाप्रतिषेधे उत्तरपदे आदेशयोरनुपपत्तिः कुर्वती चासौ भक्तिश्च कुर्वद्भक्तिः पचद्भक्तिः, कुर्वाणभक्तिः,
पचमानभक्तिरिति। ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तेषु शतृशानचौ न प्राप्नुतः। कुर्वत्तरः, पचत्तरः, कुर्वाणतरः, पचमानतरः कुर्वद्रूपः पचद्रूपः, कुर्वाणरूपः, पचमानरूपः, कुर्वत्कल्पः, पचत्कल्पः, कुर्वाणकल्पः,
पचमानकल्प इति।
(3028 समाधानवार्तिकम्।। 5 ।।)
(भाष्यम्) सिद्धमेतत्। कथम्?। प्रत्ययोत्तरपदयोश्च शतृशानचौ भवतः इति वक्तव्यम्।
(3029 समाधानदूषणप्रत्ययाप्रसिद्धिवार्तिकम्।। 6 ।।)
- तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः-
(भाष्यम्) तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः। आदेशनिमित्तः प्रत्ययः प्रत्ययनिमित्तश्चादेशः तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते।।
(3030 समाधानदूषणोत्तरपदाप्रसिद्धिवार्तिकम्।। 7 ।।)
- उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः-
(भाष्यम्) उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः। उत्तरपदनिमित्तः सुप्सुबन्तनिमित्तं चोत्तरपदम्। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते।

(3031 प्रत्ययप्रसिद्धिसमाधानवार्तिकम्।। 8 ।।
- न वा लकारस्य कृत्वात् प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम्-
(भाष्यम्) न वा एष दोषः। किं कारणम्?। लकारस्य कृत्वात् प्रातिपदिकत्वम्। लकारः कृत्। कृत् प्रातिपदिकमिति प्रातिपदिकसंज्ञा। तदाश्रयं प्रत्ययविधानम्। प्रातिपदिकाश्रया स्वाद्युत्पत्तिर्भविष्यति।।
(3032 उत्तरपदप्रसिद्धिसमाधानवार्तिकम्।। 9 ।।)
- तिङादेशात् सुबुत्पत्तिः-
(भाष्यम्) तिङादेशः क्रियतां सुबुत्पत्तिरिति परत्वात्सुबुत्पत्तिर्भविष्यति।
(3033 वार्तिकशेषवार्तिकम्।। 10 ।।)
- तस्मादुत्तरपदप्रसिद्धिः-
(भाष्यम्) तस्मादुत्तरपदस्य प्रसिद्धिर्भविष्यति। उत्तरपदे प्रसिद्धे उत्तरपद इति शतृशानचौ भविष्यतः।।
(समाधानदूषणभाष्यम्)
इहापि तर्हि तिङादेशात्सुबुत्पत्तिः स्यात्---पचति पठतीति।।
(दूषणपरिहारभाष्यम्)
अस्त्यत्र विशेषः नित्योऽत्र तिङादेशः। उत्पन्नेऽपि सुपि प्राप्नोत्यनुत्पन्नेऽपि प्राप्नोति। नित्यत्वात् तिङादेशे कृते सुबुत्पत्तिर्न भविष्यति।।
(दूषणभाष्यम्)
इहापि तर्हि नित्यत्वात्तिङादेशः स्यात्। कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिरिति।
(दूषणपरिहारभाष्यम्)
अस्त्यत्र विशेषः। शतृशानचौ तिङपवादौ तौ चात्र निमित्तवन्तौ। न चापवादविषये उत्सर्गोऽभिनिविशते। पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः। प्रकल्प्य चापवादविषयं तत उत्सर्गोभिनिविशते। न तावदत्र कदाचित् तिङ् भवति। अपवादौ शतृशानचौ प्रतीक्षते।।
(दूषणपरिहारदूषणभाष्यम्)
तदेतत् क्व सिद्धं भवति। यत्र सामान्यादुत्पत्तिः। यत्र हि विशेषाद् अत इञ्ञ् इति इतरेतराश्रयमेव तत्र भवति। वीक्षमाणस्यापत्यं वैक्षमामणिरिति। इह च शतृशानचौ प्राप्नुतः पचतितरां जल्पतितरां पचतिरूपं जल्पतिरूपं पचतिकल्पं जल्पतिकल्पं पचति पठतीति।।
(प्रश्नभाष्यम्)
तदेतत्कथं कृत्वा सिद्धं भवति?।
(3034 समाधानवार्तिकम्।। 11 ।।)
- शतृशानचौ यदि लटो वा -
(भाष्यम्) यदि लटः शतृशानचौ वा भवतः व्यवस्थितविभाषा च। तेनेह च भविष्यतः----कौर्वतः पाचतः कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिः कुर्वत्तरः पचत्तरः कुर्वाणतरः पचमानतरः कुर्वद्रूपः पचद्रूपः कुर्वाणरूपः पचमानरूपः कुर्वत्कल्पः पचत्कल्पः कुर्वाणकल्पः पचमानकल्पः पचन्पठन्निति च लटः शतृशानचौ। इह च न भविष्यतः----पचतितरां जल्पतितरां पचतिरूपं जल्पतिरूपं पचतिकल्पं जल्पतिकल्पं पचति पठतीति च लटः शतृशानचौ।।
(प्रश्नभाष्यम्)
तत्तर्हि वावचनं कर्तव्यम्।।
(समाधानभाष्यम्)
न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्?। नन्वोर्विभाषा इति।
(आक्षेपभाष्यम्)
यदि तदनुवर्तते वर्तमाने लट् इति लडपि विभाषा प्राप्नोति।।
(समाधानभाष्यम्)
संबन्धमनुवर्तिष्यते। नन्वोर्विभाषा। पुरिलुङ्चास्मे विभाषा। लटः शतृशानचौ विभाषा। पुरि लुङ् चास्म इति निवृत्तिम्।।
(प्रश्नभाष्यम्)
न तर्हीदानीमप्रथमासमानाधिकरण इति वक्तव्यम्?।
(समाधानभाष्यम्)
वक्तव्यं च। किं प्रयोजनम्?। नित्यार्थम्। अप्रथमासमानाधिकरणे नित्यौ शतृशानचौ यथा स्याताम्।।
(आक्षेपभाष्यम्)
क्व तर्हिदानीं विभाषा?।
(समाधानभाष्यम्)
प्रथमासमानाधिकरणे पचन् पचतीति पचमानः पचते इति।। लटः शतृ।। 124 ।।
-3-2-126- लक्षणहेत्वोः क्रियायाः (893)
(521 शतृशानज्विधिसूत्रम्।। 3 । 2 । 3 आ. 2 )
(3035 वार्तिकम्।।1 ।।)

- लक्षणहेत्वोः क्रियायाः गुण उपसंख्यानम्-
(भाष्यम्) लक्षणहेत्वोः क्रियाया गुण उपसंख्यानं कर्तव्यम्। तिष्ठन्मूत्रयति गच्छन्भक्षयतीति।
(3036 शतृशानज्विधिवार्तिकम्।।2 ।।)
- कर्तुश्च लक्षणयोः पर्यायेणाच योगे-
(भाष्यम्) कर्तुश्च लक्षणयोः पर्यायेणाचयोगउपसंख्यानं कर्तव्यम्। योधीयान आस्ते स देवदत्त इति। आसीनोधीते स देवदत्त इति।।
(प्रश्नभाष्यम्)
अचयोग इति किमर्थम्?।
(प्रत्युदाहरणभाष्यम्)
य आस्ते चाधीते च, स चैत्रः।
(3037 शतृशानज्विधिवार्तिकम्।। 3 ।।)
- तत्त्वाख्याने च-
(भाष्यम्) तत्त्वाख्याने चोपसंख्यानं कर्तव्यम्। शयाना वर्धते दूर्वा, आसीनं वर्धते विसमिति।।
(3038 विकल्पवार्तिकम्।। 4 ।।)
- सदादयश्च बहुलम्-
(भाष्यम्) सदादयश्च बहुलमिति वक्तव्यम्। सन् ब्राह्मणः। अस्ति ब्राह्मणः। विद्यते ब्राह्मण इति।।
(3039 विकल्पवार्तिकम्।। 5 ।।)
- इङ्जुहोत्योर्वावचनम्-
(भाष्यम्) इङ्जुहोत्योर्वेति वक्तव्यम्। अधीते, अधीयानः। जुहोति, जुह्वत्।
(3040 शतृशानज्विधिवार्तिकम्।। 6 ।।)
- माङ्याक्रोशे-
(भाष्यम्) माङ्याक्रोश इति वक्तव्यम्। मापचन्। मा पचमानः।।
(प्रश्नभाष्यम्)
तत्तर्हि वक्तव्यम्।।
(समाधानभाष्यम्)
न वक्तव्यम्। लक्षणहेत्वोः क्रियायाः इत्येव सिद्धम्। इह तावत्तिष्ठन् मूत्रयतीति, तिष्ठतिक्रिया मूत्रयतिक्रियाया लक्षणम्। गच्छन्भक्षयतीति, गच्छतिक्रिया भक्षयतिक्रियाया लक्षणम्। योधीयान आस्ते स देवदत्त इति, अध्ययनक्रिया आसनक्रियाया लक्षणम्। य आसीनोधीते स देवदत्त इति आसिक्रियाऽध्ययनक्रियाया लक्षणम्।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्----अचयोग इति वक्ष्यामीति। इह मा भूत्---य आस्ते चाधीते च स चैत्र इति।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। नैतत् क्रियालक्षणम्। किं तर्हि?। कर्तृलक्षणमेतत्--शयाना वर्धते दूर्वेति शेतिक्रिया वृद्धिक्रियाया लक्षणं भवति। आसीनं वर्धते विसमिति आसिक्रिया वृद्धिक्रियाया लक्षणमिति। सदादयश्च बहुलम् । इङ्जुहोत्योर्वा माङ्याक्रोश इत्येतद्वक्तव्यमेव।। लक्षणहेत्वोः।। 126 ।।
-3-2-127- तौ सत् (894)
(522 सत्संज्ञासूत्रम्।। 3 । 2 । 3 आ.)
(आक्षेपभाष्यम्)
तौग्रहणं किमर्थम्?।
(प्रयोजनभाष्यम्)
शतृशानचौ प्रतिनिर्दिश्येते।।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। प्रकृतौ शतृशानचावनुवर्तिष्यते। क्व प्रकृतौ?। लटः शतृशानचावप्रथमासमानाधिकरणे इति।
(समाधानभाष्यम्)
अत उत्तरं पठति।
(3049 समाधानवार्तिकम्।। 1 ।।)
- तौ सदिति वचनमसंसर्गार्थम्-
(भाष्यम्) तौ ग्रहणं क्रियते। (किमर्थम्?।) असंसर्गार्थम्। असंसक्तयोरेतैर्विशेषैः शतृशानचोः सत्संज्ञा यथा स्यादिति।।
(आक्षेपभाष्यम्)
ननु चैते विशेषा निवर्तन्ते।
(समाधानभाष्यम्)

यद्यप्येते विशेषा निवर्तन्ते। अयं तु खलु वर्तमानः कालोऽवश्यमुत्तरार्थोनुर्वत्यः। तस्मिन्ननुवर्तमाने वर्तमानकालविहितयोरेव शतृशानचोः सत्संज्ञा स्यात्। भूतभविष्यत्कालविहितयोर्न स्यात्।।
(आक्षेपभाष्यम्)
किं पुनर्भूतभविष्यत्कालविहितयोः सत्संज्ञावचने प्रयोजनम्?।
(3042 वार्तिकम्।। 2 ।।)
- प्रयोजनं पूरणगुणसुहितार्थसदिति-
(भाष्यम्) ब्राह्मणस्य पक्ष्यन्। ब्राह्मणस्य पक्ष्यमाणः।।
(आक्षेपभाष्यम्)
अथ क्रियमाणेपि तौग्रहणे कथमेवासंसक्तयोरेतैर्विशेषैः सत्संज्ञा लभ्या?।
(समाधानभाष्यम्)
लभ्येत्याह। कथम्?। ताविति शब्दतः। सद् इति योगे क्रियमाणे तौ ग्रहणं योगाङ्गमुपजायते। सति च योगाङ्गे योगविभागः करिष्यते। तौ तावेतौ शतृशानचौ धातुमात्रात्परस्य प्रत्ययस्य भवतः। ततः सत्। सत्संज्ञौ भवतः शतृशानचाविति।।
(आक्षेपभाष्यम्)
इहापि तर्हि प्राप्नुतः कारको हारक इति।
(3043 वार्तिकम्।। 3 ।।)
- अवधारणं लृटि विधानम्-
(भाष्यम्) लृटः सद्वेत्येतन्नियमार्थं भविष्यति। लृट एव धातुमात्रात्परस्य नान्यस्येति।।
(नियमार्थत्वानुपपत्तिभाष्यम्)
कैमर्थक्यान्नियमो भवति। विधेयं नास्ति इति कृत्वा। इह चास्ति विधेयम्।। किम्?। नित्यौ शतृशानचौ प्राप्तौ तौ विभाषाविधेयौ। तत्रापूर्वो विधिरस्तु नियमोस्त्विवति अपूर्व एव विधिः स्यान्न नियमः।।
(3044 नियमार्थत्वोपपत्तिवार्तिकम्।। 4 ।।)
- योगविभागतश्च विहितं सत्-
(भाष्यम्) एवं तर्हि योगविभागः करिष्यते----लृटः सत्। लृटः सत्संज्ञकौ भवतः। किमर्थमिदम्?। नियमार्थम्। लृट एव धातुमात्रात्परस्य नान्यस्येति।। ततो वा। वा च लृटः शतृशानचौ सत्संज्ञौ भवतः।। तत्रायमप्यर्थः----सद्विधिर्नित्यमप्रथमासमानाधिकर
णे इति वक्ष्यति, तन्न वक्तव्यं भवति।।
(आक्षेपभाष्यम्)
अथ यावेतावुत्तरौ शत्रानौ किमेतौ लादेशौ, आहोस्विदलादेशौ।
(प्रत्याक्षेपभाष्यम्)
कश्चात्र विशेषः?।।
(3045 लादेशपक्षे दूषणवार्तिकम्।। 5 ।।)
- उत्तरयोर्लादेशे वावचनम्-
(भाष्यम्) उत्तरयोर्लादेशे वावचनं कर्तव्यम्। पचमानः यजमानः। पचते यजत इत्यपि यथा स्यात्।।
(3046 दूषणान्तरवार्तिकम्।। 6 ।।)
- साधनाभिधानं च-
(भाष्यम्) साधनाभिधानं च प्राप्नोति लः कर्मणि च भावे चाकर्मकेभ्य इति भावकर्मणोरपि प्राप्नुतः।।
(3047 दूषणवार्तिकम्।। 7 ।।)
- स्वरः-
(भाष्यम्) स्वरश्च साध्यः । कतीह पचमानाः। अदुपदेशाल्लसार्वधातुकमनुदात्तं भवती त्येष स्वरः प्राप्नोति।।
(3048 दूषणवार्तिकम्।। 8 ।।)
- उपग्रहप्रतिषेधश्च-
(भाष्यम्) उपग्रहस्य च प्रतिषेधो वक्तव्यः। कतीह निघ्नानाः तङानावात्मनेपदम् इत्यात्मनेपदसंज्ञा प्राप्नोति।।
(अलादेशपक्षाङ्गीकारभाष्यम्)
स्तां तर्हि अलादेशौ।
(3049 दूषणवार्तिकम्।। 9 ।।)
- अलादेशे षष्ठीप्रतिषेधः-
(भाष्यम्) अलादेशे षष्ठीप्रतिषेधो वक्तव्यः सोमं पवमानः। नडमाघ्नानः। अधीयन्पारायणम्। लप्रयोगे नेति प्रतिषेधो न प्राप्नोति।।
(दूषणवारणभाष्यम्)
मा भूदेवम् तृन्नित्येवं भविष्यति। कथम्?। तृन्निति नेदं प्रत्ययग्रहणम् किं तर्हि?।। प्रत्याहारग्रहणम्।।
(प्रश्नभाष्यम्)

क्व संनिविष्टानां प्रत्याहारः?।
(समाधानभाष्यम्)
लटः शतृ इत्यत आरभ्यातृनो नकारात्।
(दूषणभाष्यम्)
यदि प्रत्याहारग्रहणं चोरस्य द्विषन् वृषलस्य द्विषन् अत्रापि प्राप्नोति।।
(3050 समाधानवार्तिकम्।। 10 ।।)
- द्विषः शतुर्वावचनम्-
(भाष्यम्) द्विषः शतुर्वेति वक्तव्यम्। तच्चावश्यं वक्तव्यम्। प्रत्ययग्रहणे सति प्रतिषेधार्थम्। तदेव प्रत्याहारग्रहणे सति विध्यर्थं भविष्यतीति।। तौ सत्।। 127 ।।
-3-2-135- तृन् (902)
(अथ ताच्छीलिकप्रकरणम्)
(523 तृन्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 ।। आ.4)
(3051 वार्तिकम्।। 1 ।।)
- तृन्विधावृत्विक्षु चानुपसर्गस्य-
(भाष्यम्) तृन्विधौ ऋत्विक्षु चानुपसर्गस्येति वक्तव्यम्। होता पोता।।
(आक्षेपभाष्यम्)
अनुपसर्गस्येति किमर्थम्?।
(प्रत्युदाहरणभाष्यम्)
प्रशास्ता प्रतिहर्ता।।
(3052 वार्तिकम्।। 2।।)
- नयतेः षुक् च-
(भाष्यम्) नयतेः षुग्वक्तव्यः। तृंश्च प्रत्ययो वक्तव्यः। नेष्टा।
(3053 प्रत्याख्यानवार्तिकम्।। 3 ।।)
- न वा धात्वन्यत्वात्-
(भाष्यम्) न वा वक्तव्यः। किं कारणम्?। धात्वन्यत्वात्। धात्वन्तरं नेषतिः।।
(प्रश्नभाष्यम्)
कथं ज्ञायते?।।
(3054 प्रत्याख्यानहेतुवार्तिकम्।। 4 ।।)
- नेषतुनेष्टादिति दर्शनात्-
(भाष्यम्) नेषतुनेष्टादिति हि प्रयोगो दृश्यते इन्द्रो वस्तेन नेषतु। गावो नेष्टात्।।
(3055 वार्तिकम्।। 5 ।।)
- त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च-
(भाष्यम्) त्विषेर्देवतायां तृन्वक्तव्यः। अकारश्चोपधायाः। अनिट्त्वं च वक्तव्यम्। त्वष्टा।।
(प्रश्नभाष्यम्)
किं पुनरिदं त्विषेरेवानिट्त्वम्।
(समाधानभाष्यम्)
नेत्याह। यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैष शेषोऽनिट्त्वं चेति।।
(3056 वार्तिकम्।। 6 ।।)
- क्षदेश्च युक्ते-
(भाष्यम्) क्षदेश्च युक्ते तृन्वक्तव्यः। क्षत्ता।।
(3057 वार्तिकम्।। 7 ।।)
- छन्दसि तृच्च-
(भाष्यम्) छन्दसि तृच्च तृञ्च वक्तव्यः।। क्षतृभ्यः संगृहीतृभ्यः। क्षतृभ्यः संगृहीतृभ्यः।। तृन्।। 135 ।।
-3-2-139- ग्लाजिस्थश्च क्स्नुः (906)
(524 क्स्नुप्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आ. 5)
(प्रत्ययस्य गित्त्वनिर्णयाधिकरणम्)
(3058 कित्त्वे दूषणवार्तिकम्।। 1 ।।)
- स्नोः कित्त्वे स्थ इर्कारप्रतिषेधः-
(भाष्यम्) स्नोः कित्त्वे स्थ इर्कारस्य प्रतिषेधो वक्तव्यः। स्थास्नुरिति। घुमास्था---- इतीत्वं प्राप्नोति।।

(अकिदङ्गीकरभाष्यम्)
एवं तर्ह्यकित्करिष्यते।।
(3059 अकिदङ्गीकारे दूषणवार्तिकम्।। 2 ।।)
- अकिति गुणप्रतिषेधः।-
(भाष्यम्) यद्यकित् क्रियते, गुणप्रतिषेधो वक्तव्यः। जिष्णुरिति।
(3060 दूषणान्तरवार्तिकम्।। 3 ।।)
- भुव इट् प्रतिषेधश्च-
(भाष्यम्) भुव इट्प्रतिषेधश्च वक्तव्यः।
किं चान्यत्?।
गुणप्रतिषेधश्च। भूष्णुरिति।।
(किदङ्गीकारभाष्यम्)
अस्तु तर्हि कित्।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् स्नोः कित्वे इर्कारप्रतिषेध इति।
(दूषणोद्धारभाष्यम्)
नैष दोषः।
(3061 स्नुविधिवार्तिकम्।। 4 ।।)
- स्थादंशिभ्यां स्नुश्छन्दसि-
(भाष्यम्) स्थादंशिभ्यां स्नुश्छन्दसि वक्तव्यः। स्थास्नु जङ्गमं दङ्क्ष्णवः पशवः इति। स इदानीं स्थः स्नुरविशेषेण विधास्यते।।
(आक्षेपभाष्यम्)
सिध्यति। सूत्रं तर्हि भिद्यते।।
(सिद्धान्तिभाष्यम्)
यथान्यासमेवास्तु।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं स्नोः कित्वे स्थ इर्कारप्रतिषेध इति।।
(समाधानभाष्यम्)
एवं तर्हि गित्करिष्यते।।
(3062 वार्तिकम्।। 5 ।।)
- स्नोर्गित्वान्न स्थ इर्कारः-
(भाष्यम्) स्नोर्गित्वात् स्थ इर्कारो न भविष्यति। किं कारणम्?।
(3063 हेतुवार्तिकम्।। 6 ।।)
- क्ङितोरीत्वशासनात्-
(भाष्यम्) क्ङितोरीत्वं शिष्यते।।
(आक्षेपभाष्यम्)
इह तर्हि जिष्णुरिति गुणः प्राप्नोति।
(3064 समाधानवार्तिकम्।। 7 ।।)
- गुणाभावस्त्रिषु स्मार्यः-
(भाष्यम्) गुणाभावस्त्रिषु स्मर्तव्यः। गितिकिति ङिति चेति।।
(प्रश्नभाष्यम्)
तद्गकारग्रहणं कर्तव्यम्।।
(समाधानभाष्यम्)
न कर्तव्यम्। क्रियते न्यास एव। ककारे गकारश्चत्वभूतौ निर्दिश्यते----क्क्ङति चेति। (
(आक्षेपभाष्यम्)
इह तर्हि भूष्णुरिति श्र्युकः किति इतीट् प्रतिषेधो न प्राप्नोति।।
(3065 समाधानवार्तिकम्।। 8 ।।)
- श्र्युकोनिट्त्वं गकोरितोः-
(भाष्यम्) श्र्युकोनिट्त्वं गकारककारयोरिति वक्तव्यम्।।
(प्रश्नभाष्यम्)
तद्गकारग्रहणं कर्तव्यम्।।

(समाधानभाष्यम्)
न कर्तव्यम्। क्रियते न्यास एव। ककारे गकारश्चत्वभूतो निर्दिश्यते श्र्युकः क्किती ति।।
(आक्षेपभाष्यम्)
यद्येवं चंत्वस्यासिद्धत्वाद् हशि च इत्युत्वं प्राप्नोति।।
(समाधानभाष्यम्)
सौत्रो निर्देशः।। अथवाऽसंहितया निर्देशः करिष्यते---श्र्युकः क्कितीति।।
-3-2-141- शमित्यष्टाभ्यो घिनुण् (908)
(525 घिनुण्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आ.6)
(आक्षेपभाष्यमा)
घिनणयं वक्तव्यः। घिनुणि हि सति शमिनौ शमिनः तमिनौ तमिन इति उगिदचां सर्वनामस्थान इति नुम्प्रसज्येत।
(घिनुण्वादिभाष्यम्)
नैष दोषः। झल्ग्रहणं तत्र चोदयिष्यति।
(घिनण्वाद्याक्षेपभाष्यम्)
इह तर्हि शमिनितरा शमिनीतरा तमिनितरा तमिनीतरा। उगितो घादिषु नद्या अन्यतरस्यां ह्रस्वो भवती इत्यतरस्यां हस्वत्वं प्रसज्येत। तस्माद् घिनणंय वक्तव्यः।
(घिनुण्वादिभाष्यम्)
इष्यत एव हस्वत्वम्।।
(3066 वार्तकम्।। 1।।)
- घिनुणकर्मकाणाम्-
(भाष्यम्) घिनुणकर्मकाणामिति वक्तव्यम्। इह मा भूत्---संपृणक्ति शाकमिति।।
(3067 वार्तिकप्रत्याख्यानम्।। 2 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?। अनभिधानादिति।। शमित्यष्टा।। 141 ।।
-3-2-146- निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्ञ् (913)
(526 वुञ्ञ्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 । आ. 7)
(आक्षेपभाष्यम्)
किमर्थं निन्दादिभ्यो वुञ्ञ्विधीयते। न ण्वुलैव सिद्धम्। नह्यस्ति विशेषः। निन्दादिभ्यो ण्वुलो वा वुञ्ञो वा। तदेवरूपं स एव स्वरः।।
(3038 वार्तिकम्।। 1 ।।)
- वुञ्ञमनेकाचः-
(भाष्यम्) वञ्ञमनेकाचः प्रयोजयन्ति। असूयकः।
(आक्षेपभाष्यम्)
अथ येऽत्रैकाचः पठ्यन्ते। तेषां ग्रहणं किमर्थम्। न तेषां ण्वुलैव सिद्धम्।
(आक्षेपबाधकभाष्यम्)
न सिध्यति। अयं तच्छीलादिष्वर्थेषु तृन्विधीयते स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत।
(आक्षेपसाधकभाष्यम्)
वाऽसरूपेण न्यायेन ण्वुलपि भविष्यति।
अत उत्तरं पठति----
(3069 समाधानवार्तिकम्।। 2 ।।)
- निन्दादिभ्यो वुञ्ञ्वचनमन्येभ्योण्वुलः प्रतिषेधार्थम्-
(भाष्यम्) निन्दादिभ्यो वुञ्ञ्वचनं क्रियते ( किमर्थम्?) ज्ञापकार्थम्। किं ज्ञाप्यम्?। एतज्ज्ञापयत्याचार्यः तच्छीलादिषु वासरूपन्यायेनान्येभ्यो ण्वुल् न भवतीति।
(6070 वार्तिकम्।। 1 ।।)
- तृजादिप्रतिषेधार्थं वा एके-
(भाष्यम्) अथ वा एके मन्यन्ते---एतज्ज्ञापयत्याचार्यः ताच्छीलिकेषु सर्व एव तृजादयो वासरूपेण न भवन्तीति निन्दहिंस।। 146 ।।
-3-2-150- जुचङ्क्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः (927)
(युच्प्रत्ययप्रकरणम्)
527 युच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आइ 8)
(3071 वार्तिकम्।। 1 ।।)
- पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात्-

(भाष्यम्) पदिग्रहणमनर्थम्। किं कारणम्?। अनुदात्तेतश्च हलादेः। इति सिद्धत्वात्। अनुदात्तेतश्च हलादेः इत्येवात्र युच् सिद्धः।
(भाष्यम्) न सिध्यति। अयं पदेरुकञ् विधीयते---लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् इति। स विशेषविहितः सामान्यविहितं युचं बाधेत।।
वासरूपन्यायेन युजपि भविष्यति।।
(3072 वार्तिकम्।। 2 ।।)
- असरूपनिवृत्त्यर्थं तु-
(भाष्यम्) असरूपनिवृत्त्यर्थं तर्हि पदिग्रहणं क्रियते।
एतज्ज्ञापयत्याचार्यः ताच्छीलिकेषु ताच्छीलिका वासरूपेण न भवन्तीति।।
(आक्षेपभाष्यम्)
यद्येतज्ज्ञाप्यते सूददीपदीक्षश्च इति दीपिग्रहणमनर्थकम्। अयं दीपे रो विधीयते---नमिकम्पिस्म्य जसकमहिंसदीपो र इति स विशेषविहितः सामान्यविहितं युचं बाधिष्यते।।
(समाधानभाष्यम्)
एवं तर्हि सिद्धे सति यद् दीपिग्रहणं करोति। तज्ज्ञापयत्याचार्यः भवति युचो रेण समावेश इति।।
(प्रश्नभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम्?।
(समाधानभाष्यम्)
कम्रा कन्या कमना कन्येत्येतत्सिद्धं भवति।। जुचंक्रम्य।। 150 ।।
-3-2-158- स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् (935)
(528 आलुच्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आ.9)
(आक्षेपभाष्यम्)
किमर्थमालुज्विधीयते, न लुशेवोच्यत।
(प्रश्नभाष्यम्)
का रूपसिद्धिः?। स्पृहयालुः दयालुः।
(उत्तरभाष्यम्)
शपि कृते अतो दीर्घो यञी ति दीर्घो भविष्यति।
(समाधानभाष्यम्)
एवं तर्हि। सिद्धे सति यदालुचं शास्ति, तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?।
आलुचि शीङ्ग्रहणं चोदयिष्यति। तन्न कर्तव्यं भवति।
(3073 वार्तिकम्।। 1 ।।)
- आलुचि शीङ्ग्रहणम्-
(भाष्यम्) आलुचि शीङ्ग्रहणं कर्तव्यम्। शयालुः।। स्पहिगृहि।। 158 ।।
-3-2-171- आदृगमहनजनः किकिनौ लिट् च (948)
(529 किकिन्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आ.10)
(आक्षेपभाष्यम्)
किमर्थं किकिनोः कित्त्वं क्रियते। न असंयोगाल्लिट् कित् इत्येव सिद्धम्।
(3074 आक्षेपबाधकवार्तिकम्।। 1 ।।)
- किकिनोः कित्वमृकारगुणप्रतिषेधार्थम्-
(भाष्यम्) किकिनोः कित्करणं क्रियते। (किमर्थम्?।) ऋकारस्य गुणप्रतिषेधार्थम्। अयमृकारान्तानां लिटि गुणः
प्रतिषेधविषये आरभ्यते ऋच्छत्यृताम् इति। स यथेह भवति आतस्तरतुरातस्तरुरिति। एवमिहापि प्रसज्येत---मित्रावरुणौ ततुरिः, दूरे अध्वा जगुरिरिति। स पुनः कित्वेन बाध्यते।
(6075 वार्तिकम्।। 2 ।।)
।। 8 ।। उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्-
(भाष्यम्) उत्सर्गश्छन्दसि किकिनौ वक्तव्यौ। किं प्रयोजनम्?। सदादिभ्यो दर्शनात्। सदादिभ्य हि किकिनौ दृश्येते। सदिरमिनमिमनिविचीनां सेदिः, रेमिः, मेनिः, नेमिश्चक्रमिवाभवत्। विविचिं रत्नधातमम्।।
(6076 वार्तिकम्।। 3 ।।)
- भाषायां धाञ्कृसृजनिनमिभ्यः-
(भाष्यम्) भाषायां दाञ्कृसृजनिनमिभ्यः किकिनौ वक्तव्यौ। धाञ्----दधिः। कृ---चक्रिः। सृ---सस्रिः। जनि---जज्ञिः। नज्ञिः। नमि---नेमिः।
(3077 वार्तिकम्।। 4 ।।)

- सासहिवावहिचाचलिपापतीनां निपातनम्-
(भाष्यम्) सासहिवावहिचाचलिपापतीनां निपातनं कर्तव्यम्। वृषा सहमानं सासहिः। वावहिः चाचलिः पापतिः।।
अपर आह----
(3078 वार्तिकम्।। 5 ।।)
- सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ-
(भाष्यम्) तान्येवोदाहरणानि।। आदृगम।। 171 ।।
-3-2-174- भियः क्रुक्लुकनौ (951)
(530 क्रुक्लुकन्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आ.11)
(3079 वार्तिकम्।। 1 ।।)
- भियः क्रुकन्नपि-
(भाष्यम्) भियः क्रुकन्नपि वक्तव्यः। भीरुकः।। भियः क्रु।। 174 ।।
-3-2-178- अन्येभ्योऽपि दृश्यते (955)
(531 क्विप्प्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आदृ 12)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते। न क्विप् चान्येभ्योपि दृश्यते इत्येव सिद्धम्।
(3080 वार्तिकम्।। 1 ।।)
- क्विब्विधिरनुपपदार्थः-
(भाष्यम्) अनुपपदार्थोयमारम्भः। पचेः पक्। भिदेः भित्। छिदेः छित्।
(आक्षेपभाष्यम्)
अथ योत्र सोपपदस्तस्य ग्रहणं किमर्थम्। न तेनैव सिद्धम्।
(समाधानभाष्यम्)
न सिध्यति। इह केचिद् आ क्वेः इति सूत्रं पठन्ति। केचित् प्राक् क्वेः इति । तत्र ये आक्वेः इति पठन्ति तैः क्विबप्याक्षिप्तो भवति। तत्र तच्छीलादिष्वर्थेषु क्विब् यथा स्यात्।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। य एवासाविशेषविहितः स तच्छीलादिषु भविष्यति। अन्यत्र च।।
(समाधानसाधकभाष्यम्)
न सिध्यति। अयं तच्छीलादिष्वर्थेषु तृन्विधीयते स विशेषविहितः सामान्यविहितं क्विपं बाधेत।।
(बाधकभाष्यम्)
वासरूपेण क्विबपि भविष्यति।।
(समाधानसाधकभाष्यम्)
न सिध्यति। इदानीमेवह्युक्तम्----तच्छीलादिष्वर्थेषु वासरूपेण तृजादयो न भवन्ति इति। क्विप्चापि तृजादिः।।
(3081 वार्तिकम्।। 2 ।।)
- वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च-
(भाष्यम्) वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घत्वं च वक्तव्यम्। क्विप्च।। वचि---वाक्।। प्रच्छि शब्दप्राट्। आयतस्तु---आयतस्तूः। कटप्रु----कटप्रूः। जु---जूः। श्रि---श्रीः।।
(मुन्यन्तरवाक्यम्)
अपर आह----
वचिप्रच्छयोरसम्प्रसारणं चेति वक्तव्यम्।
(प्रश्नभाष्यम्)
तत्तर्हि वक्तव्यम्।
(समाधानभाष्यम्)
न वक्तव्यम्। दीर्घवचनसार्मथ्यात्सम्प्रसारणं न भविष्यति। इदमिह सम्प्रधार्यम्। दीर्घत्वं क्रियतां सम्प्रसारणमिति। किमत्र कर्तव्यम्?। परत्वात्सम्प्रसारणम्। अन्तरङ्गं दीर्घत्वम्। का अन्तरङ्गता?। प्रत्ययोत्पत्तिसन्नियोगेन दीर्घत्वमुच्यते। उत्पन्ने प्रत्यये सम्प्रसारणम्। तत्रान्तरङ्गत्वाद्दीर्घत्वे कृते सम्प्रसारणम्। सम्प्रसारणपूर्वत्वे कृते कार्यकृतत्वात्पुनर्दीर्घत्वं न स्यात्। तस्मात् सुष्ठूच्यते। दीर्घवचनसार्मथ्यात् सम्प्रसारणं न भवतीति।
(3082 वार्तिकम्।। 3 ।।)
- द्युतिगमिजुहोतीनां द्वे च-
(भाष्यम्) द्युतिगमिजुहोतीनां द्वे चेति वक्तव्यम्। दिद्युत्। गमि। जगत्।। जुहोतेर्दीर्घश्च।। जुहूः।।
(3083 वार्तिकम्।। 4 ।।)

(- दृणातेर्हृस्वश्च द्वे च क्विप् च-)
(भाष्यम्) दृणातेर्हृस्वश्च द्वे च क्विप्चेति वक्तव्यम्। ददृत्।।
(धात्वन्तरसाधनभाष्यम्)
जुहूर्जुहोतेर्हूयतेर्वा। ददृत् दृणातेर्दीर्यतेर्वा।। जूः ज्वरतेर्जीर्यतेर्वा।
(3084 वार्तिकम्।। 5 ।।)
- ध्यायतेः सम्परसारणं च-
(भाष्यम्) ध्यायतेः सम्पसारणं च क्विप्च वक्तव्यः।। धीः।।
(धात्वन्तरसाधनभाष्यम्)
धीर्ध्यायतेर्दधातेर्वा।। अन्येभ्यो।। 178 ।।
-3-2-180- विप्रसंभ्यो ड्वसंज्ञायाम् (957)
(532 डुप्रत्ययविधिसूत्रम्।। 3 । 2 । 3 आ.13)
(3085 वार्तिकम्।। 1 ।।)
- डुप्रकरणे मितद्रावादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम्-
(भाष्यम्) डुप्रकरणे मितद्रावादिभ्य उपसंख्यानं कर्तव्यम्। किं प्रयोजनम्?। धातुविधितुक्प्रतिषेधार्थम्। धातुविधेस्तुकश्च प्रतिषेधो यथा स्यात्। मितद्रुः मितद्रू मितद्रवः। अचिश्नुधातुभ्रुवाम् इत्युवङादेशो भा भूत्। इह च मितद्रूवा। मितद्रवे----नोङ्धात्वोः इति प्रतिषेधो मा भूत्।। तुग्विधि---मितद्रुः। हस्वस्य पिति कृति तुग् इति तुङ् मा भूदिति।। विप्रसंभ्योड्व।। 180 ।।
-3-2-188- मतिबुद्धिपूजार्थेभ्यश्च (965)
(433 कर्तरि क्तप्रत्ययविधिसूत्रम्।। 3 । 2 । 3 ।। आ.14)
शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टः च रुषितः चोभावभिव्याहृत इत्यपि।।
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः।।
न म्रियन्ते अमृताः।। मतिबुद्धि।। 188 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम्।। पादश्च समाप्तः।।
पादश्चायं द्वितीयः समाप्तः।।
-9-9-999-

# महाभाष्यम्/तृतीयोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nmm
< महाभाष्यम् | तृतीयोऽध्यायः
-3-3-1- उणादयो बहुलम् (966)
(534 उणादीनामपि त्वीकरसूत्रम्।। 3 । 3 । 1 आ.1)
(आक्षेपभाष्यम्)
बहुलवचनं किमर्थम्?
(3086 वार्तिकम्।। 1 ।।)
- बाहुलकं प्रकृतेस्तनुदृष्टेः-
(भाष्यम्) तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यो दृश्यन्ते।।
(3087 वार्तिकम्।। 2 ।।)
- प्रायसमुच्चयनादपि तेषाम्-
(भाष्यम्) प्रायेण खल्वपि ते समुच्चिता न सर्वे समुच्चिताः।
(3088 वार्तिकम्।। 3 ।।)
- कार्यसशेषविधेश्च तदुक्तम्-
(भाष्यम्) कार्याणि खल्वपि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि।
(आक्षेपभाष्यम्)
किं पुनः कारणं तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यः? किं च कारणं प्रायेण समुच्चिता न सर्वे समुच्चिताः? किं च कारणं कार्याणि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि?
(3089 समाधानवार्तिकम्।। 4 ।।)
- नैगमरूढिभवं हि सुसाधु-
(भाष्यम्) नैगमाश्च रूढिभावाश्चौणादिकाः सुसाधवः कथं स्युः।
(3090 वार्तिकम्।। 5 ।।)
- नाम च धातुजमाह निरुक्ते -
(भाष्यम्) नाम खल्वपि धातुजमेवमाहुर्नैरुक्ताः।।
(3091 वार्तिकम्।। 6 ।।)
- व्याकरणे शकटस्य च तोकम्-
(भाष्यम्) वैयाकरणानां च शाकटायन आह धातुजं नामेति।।
(आक्षेपभाष्यम्)
अथ यस्य विशेषपदार्थो न समुत्थितः कथं तत्र भवितव्यम्।
(3092 समाधानवार्तिकम्।। 7 ।।)
- यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्-
(भाष्यम्) प्रकृतिं दृष्ट्वा प्रत्यय ऊहितव्यः। प्रत्ययं च दृष्ट्वा प्रकृतिरूहितव्या।।
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु।। उणादयो।। 1 ।।
-3-3-3- भविष्यति गम्यादयः (968)
(भविष्यत्कालाधिकारः)
(565 भविष्यति गम्यादीनां साधकसूत्रम्।। 3। 3। 1 आद्द2 )
(3093 दूषणवार्तिकम्।। 1 ।।)
- भविष्यतीत्यनद्यतन उपसंख्यानम्-
(भाष्यम्) भविष्यतीत्यनद्यतन उपसंख्यानं कर्तव्यम्।श्वो ग्रामं गमी।।
किं पुनः कारणं न सिध्यति?
लृटायं निर्देशः क्रियते। लृट् चानद्यतने लुटा बाध्यते। तेन लृट एव विषये एते प्रत्ययाः स्युः लुटो विषये न स्युः।
(3094 दूषणान्तरवार्तिकम्।। 2 ।।)
- इतरेतराश्रयं च-
(भाष्यम्) इतरेतराश्रयं च भवति। का इतरे तराश्रयता? भविष्यत्कालेन अयं निर्देशः क्रियते, निर्देशोत्तरकाला च भविष्यत्कालता। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते।।

(3095 समाधानवार्तिकम्।। 3 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्? एकं तावदुक्तम्--- न वाऽपवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् इति।।
(शेषभाष्यम्)
अपरमप्युक्तम्------ अव्ययनिर्देशात्सिद्धम् इति। अव्ययवता शब्देन निर्देशः कर्तव्यः। अवर्तमाने भूत इति।
स तथा निर्देशः कर्तव्यः।
न कर्तव्यः। अव्ययमेष भविष्यतिशब्दः। नैष भवतेर्लृट् ।।
कथमव्ययसंज्ञा? विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा ठनिपातोव्ययम् इत्यव्ययसंज्ञा। अथापि भवतेर्लृट्, एवमप्यव्ययमेव। कथम्? न व्येतीत्यव्ययमिति। क्व पुनर्न व्येति। एतौ कालविशेषौ भूतवर्तमानौ स्वभावतो भविष्यत्येव वर्तेते।।
यदि तर्हि नव्येतीत्यव्ययमिति।
न वा तद्विधानस्यान्यत्राभावात् । न वा भविष्यदधिकारेणार्थः।। किं कारणम्? तद्विधानस्यान्यत्राभावात्। येऽपि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते, एतेऽप्येतौ कालविशेषौ न वियन्ति भूतवर्तमानौ स्वभावतो भविष्यत्येव वर्तन्ते।।
(समाधानभाष्यम्)
अत उत्तरं पठति।
(3096 वार्तिकम्।। 4 ।।)
- भविष्यदधिकारस्य प्रयोजनं यावत्पचति पुरापचतीत्यनपशब्दत्वाय-
भविष्यतिग।। 6 ।।
-3-3-4- यावत्पुरानिपातयोर्लट् (939)
(3097 वार्तिकम्।। 1 ।।)
- यावत्पुरादिषु लड्विधिर्लुटः पूर्वविप्रतिषिद्धम्-
(भाष्यम्) यावत् पुरादिषु लड्विधिर्भवति लुटः पूर्वविप्रतिषेधेन। यावत्पुरानिपातयोर्लङ्गवतीत्यस्यावकाशः-----यावद्भुङ्क्ते। पुराभुङ्क्ते। लुटोवकाशः श्वः कर्ता श्वोध्येता। इहोभयं प्राप्नोति----यावत् श्वो। पुरा श्वो भुङ्क्ते। लड् भवति पूर्वविप्रतिषेधेन।।
(प्रश्नभाष्यम्)
स तर्हि पूर्विप्रतिषेधो वक्तव्यः।।
(समाधानभाष्यम्)
न वक्तव्यः। अनद्यतने लुड् इत्यत्र यावत्पुरानिपातयोर्लड् इत्येतदनुवर्तिष्यते।। यावत्पुरा।। 4 ।।
-3-3-7- लिप्स्यमानसिद्धौ च।। (972)
(536 लट्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आद्द 4)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते । न निप्स्यमानसिद्धिरपि लिप्सैव। तत्र किंवृत्ते लिप्सायामित्येव सिद्धम्।।
(समाधानभाष्यम्)
अकिंवृत्तार्थायमारम्भः। यो भवतामोदनं ददाति स स्वर्गे लोकं गच्छति। यो भवतामोदनं दास्यति स स्वर्गे लोकं गमिष्यति।। लिप्स्यमाद्द।। 7 ।।
-3-3-10- तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (975)
(537 तुमुन्ण्वुल्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1आ.5)
(आक्षेपभाष्यम्)
किमर्थे क्रियायामुपपदे क्रियार्थायां ण्वुल्विधीयते, न अविशेषेण विहितः ण्वुल्। स क्रियायां चोपपदे क्रियार्थायामन्यत्र च भविष्यति।।
(समाधानभाष्यम्)
ण्वुलि सकर्मकग्रहणं चोदितम्। अकर्मकार्थोयमारम्भः। आसको व्रजति। शायको व्रजतीति।।
(समाधानबाधकभाष्यम्)
प्रत्याख्यातं तत् न वा धातुमात्राद्दर्शनाद्दर्शनाद् ण्वुलः इति।।
(समाधानान्तरभाष्यम्)
एवं तर्हि तृजादिषु वर्तमानकालोपादानं चोदितम्। अवर्तमानकालार्थोयमारम्भः।।
(समाधानबाधकभाष्यम्)
तदपि प्रत्याख्यातम्---- न वा कालमात्रे दर्शनादन्येषाम् इति।।
(प्रयोजनान्तरभाष्यम्)
इदं तर्हि प्रयोजनम्-----अकेनोर्भविष्यदाधर्मण्ययोः इत्यत्र षष्ठ्याः प्रतिषेध उक्तः। स यथा स्यात्।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। य एवासावविशेषेण विहितः स यदा भविष्यति तदास्य प्रतिषेधो भविष्यति।
(प्रयोजनभाष्यम्)

एवं तर्हि भविष्यदधिकारविहितस्य प्रतिषेधो यथा स्यात्। इह माभूत्---अङ्ग यजतां लप्स्यन्तेऽस्य याजकाःउय एनं याजयिष्यन्तीति।
(प्रयोजननिरासभाष्यम्)
नैष भविष्यत्कालः।। कस्तर्हि? भूतकालः।।
कथं तर्हि भविष्यत्कालता गम्यते?
धातुसंबन्धे प्रत्ययाः इति।।
(आक्षेपभाष्यम्)
यस्तर्हि न धातुसंबन्धः। इमेऽस्य याजकाः। इमेऽस्य लावका इति।।
(समाधानभाष्यम्)
एषोपि भूतकालः।।
कथं तर्हि भविष्यत्कालता गम्यते?
संबन्धात्। स च तावत्तैरयाजितो भवति। तस्य च तावत्तैर्यवा अलूना भवन्ति। उच्यते च।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्---अयं क्रियायामुपपदे क्रियार्थायां तुमुन् विधीयते। स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत।।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। भावे तुमुन्विधीयते कर्तरि ण्वुल्। तत्र कः प्रसङ्गो यद्भावे विहितस्तुमुन्कर्तरि विहितं ण्वुलं बाधेत।।
(प्रयोजनभाष्यम्)
लृट् तर्हि बाधेत।।
(प्रयोजननिराकरणभाष्यम्)
वासरूपेण ण्वुलपि भविष्यति।।
(3098 वार्तिकावतरणसमाधानभाष्यम्।। 1 ।।)
अत उत्तरं पठति---
(3099 समाधानवार्तिकम्।। 2 ।।)
- ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं तृजादिप्रतिषेधार्थम्-
(भाष्यम्) ण्वलुः क्रियार्थोपपदस्य पुनर्विधानं क्रियते। (किमर्थम्?) ज्ञापकार्थम्।। किं ज्ञाप्यम्? एतज्ू ज्ञापयत्याचार्यः----क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ति इति। ण्वुलपि तृजादिः।। तुमन्ण्वुलौ।। 10 ।।
?B-3-3-11- भाववचनाश्च (976)
(537 भावार्थकप्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.6 )
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न अविशेषेण भावे ये प्रत्यया विहितास्ते क्रियायामुपपदे क्रियार्थायाम् अन्यत्र च भविष्यन्ति।।
(समाधानवार्तिकावतरणभाष्यम्।।)
अत उत्तरं पठति----
(4000 वार्तिकम्।। 1 ।।)
- भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम्-
(भाष्यम्) भाववचनानां च यथाविहितानां प्रतिपदविध्यर्थोऽयमारम्भः।
इदानीमेव ह्युक्तं क्रियार्थायां वाऽसरूपेण तृजादयो न भवन्तीति। भवाववचनाश्चापि तृजादयः।।
अस्ति प्रयोजनमेतत्।
किं तर्हीति।
(4001 वार्तिकम्।। 1 ।।)
- यथाविहिता इति तु -
(भाष्यम्) यथाविहिता इति तु वक्तव्यम्। किं प्रयोजनम्? (इह) याभ्यः प्रकृतिभ्यो येन विशेषण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तनैव विशेषेण क्रियायामुपपदे क्रियार्थायां यथा स्युः। व्यतिकरो मा भूदिति।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्।।
(सामाधानभाष्यम्)
न वक्तव्यम्। इह भावे प्रत्यया भवन्तीतीयता सिद्धम्। सोयमेवं सिद्धे सति यद्वचनग्रहणं करोति। तस्यैतत्प्रयोजनम्। ---वाचका यथा स्युरिति। यदि च याभ्यः प्रकृतिभ्यः येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषेण क्रियायामुपपदे क्रियार्थायामपि भवन्ति ततोमी ततोमी वाचकाः कृताः स्युः। अथ हि धातुमात्राद् वा स्युः प्रत्ययमात्रं वा स्यात्, ततो नामी वाचकाः कृताः स्युः।। भाववचनाश्च।। 11 ।।
-3-3-12- अण् कर्मणि च (977)
(539 अण्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.7)

(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न अविशेषेण कर्मण्यण् इत्यण्विहितः। स क्रियायामुपपदे क्रियार्थायाम् अन्यत्र च भविष्यति।
(4002 समाधानवार्तिकम्।। 2 ।।)
- अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम्-
(भाष्यम्) अणः पुनर्वचनं क्रियते अपवादविषयेऽनिवृत्तिर्यथा स्यात्। गोदायो व्रजति कम्बलदायो व्रजतीति।।
(आक्षेपभाष्यम्)
किमुच्यते---अपवादविषये अनिवृत्त्यर्थमिति, न पुनरुत्सर्गविषये प्रतिपदविध्यर्थे स्यात्।।
इदानीमेव ह्युक्तम्---क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। अण् चापि तृजादिः।।
(समाधानभाष्यम्)
एवं तर्ह्युभयमनेन क्रियते। अपवादविषये चानिवृत्तिः। उत्सर्गविषये च प्रतिपदविधिः।।
कथं पुनरेनेन यत्नेनोभयं लभ्यम्?
लभ्यमित्याह। कथम्? कर्मग्रहणसार्मथ्यात्।। कथं पुनरन्तरेण कर्मग्रहणं कर्मण्यण् लभ्यः?
(समाधानभाष्यम्)
वचनग्रहणमपि प्रकृतमनुवर्तते।
अस्ति प्रयोजनमेतत्।
किं तर्हीति।
(4003 वार्तिकम्।। 1 ।।)
- अपर्यायेणेति तु -
(भाष्यम्) अपर्यायेणेति तु वक्तव्यम्। कदाचिद्धि कर्मणि स्यात् कदाचित् क्रियायामुपपदे क्रियार्थायामिति।।
(प्रश्नभाष्यम्)
तत्तर्हि वक्तव्यम्?
(समाधानभाष्यम्)
न वक्तव्यम्। चेन संनियोगः करिष्यते---अण् कर्मणि च।। किं च? अन्यत्उठक्रियायामुपपदे क्रियार्थायामिति।।
(दूषणभाष्यम्)
एवमपि प्रत्येकमुपपदसंज्ञा न प्राप्नोति।।
(समाधानभाष्यम्)
चेनैव संनियोगः करिष्यते। प्रत्येकं च वाक्यपरिसमाप्तिर्दृष्टेति प्रत्येकमुपपदसंज्ञा भविष्यति।। अण् कर्मणि 12 ।।
-3-3-13- लृट् शेषे च (978)
(540 लृड्विधिसूत्रम्।। 3 । 3 । 1 आद्द 8)
(आक्षेपभाष्यम्)
शेषग्रहणं किमर्थम्?
(4004 वार्तिकम्।। 2 ।।)
- लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम्-
(भाष्यम्) लृटि शेषवचनं क्रियते क्रियायां प्रतिपदविधिर्यथा स्यात्।।
(4005 हेतुवार्तिकम्।। 3 ।।)
- अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात्-
(भाष्यम्) अविशेषेण हि विधाने सति लृटोऽभावः स्यात्। करिष्यामीति व्रजति।। किं कारणम्? प्रतिषिद्धत्वात्। इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। लृट्वापि तृजादिः।।
अस्ति प्रयोजनमेतत्। किं तर्हीति।
(पूर्वपक्षभाष्यम्)
साधीयस्तुखलु शेषग्रहणेन क्रियार्थोपपदाद्लृण्निर्भज्यते। किं कारणम्। अक्रियार्थोपपदत्वात्। शेष इत्युच्यते। शेषश्च कः। यदन्यत् क्रियायाः क्रियार्थायाः।
(पूर्वोक्तसमाधानवार्तिकाशयप्रदर्शकसमाधानभाष्यम्)
एवं तर्हि-----
(4006 वार्तिकम्।। 1 ।।)
- लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम्-
(भाष्यम्) लृटि शेषवयनं क्रियते क्रियायां प्रतिपदविधिर्यथा स्यात्। लृट् शेषे च। करिष्यति हरिष्यति इति। क्व च।
क्रियायामुपपदे क्रियार्थायामिति।।
(प्रश्नभाष्यम्)

स तर्हि चकारः कर्तव्यः।।
(समाधानभाष्यम्)
न कर्तव्यः। कथम्? इह लृङ् भवति इतीयता सिद्धम्। सोयमेवं सिद्धे सति यत् शेषग्रहणं करोति तस्यैतत्प्रयोजनम्-----योगाङ्गं यथा विज्ञायेत। सति च यौगाङ्गे योगविभागः करिष्यते-----लृट् लृट् भवति क्रियायामुपपदे क्रियार्थायामिति। ततः शेषे। शेषे च लृङ् भवति इति।। लृट् शेषे च।। 13 ।।
-3-3-14- लृटः सद्वा (979)
(541 लृटः सदादेशविधिसूत्रम्।। 3 । 3। 1 आ.9)
(4007 वार्तिकम्।। 1 ।।)
- सद्विधिर्नित्यमप्रथमासमानाधिकरणे-
(भाष्यम्) सद्विधिरप्रथमासमानाधिकरणे नित्यमिति वक्तव्यम्। पक्ष्यन्तं पश्य पक्ष्यमाणं पश्य। क्व तर्हीदानीं विभाषा?
प्रथमासमानाधिकरणे। पक्ष्यन्पक्ष्यति। पक्ष्यमाणः पक्ष्यते।।
-3-3-15- अनद्यतने लुट् (990)
(542 लुङ्विधिसूत्रम्।। 3 । 3 । 1 आद्द10)
(4008 वार्तिकम्।। 3 ।।)
- योगविभागः-
(भाष्यम्) योगविभागः कर्तव्यः----अनद्यतने। अनद्यतने लृटः सत्संज्ञौ भवतः। श्वोग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन। ततः लुट्। लुट् च भवत्यनद्यतने। श्वः कर्ता। श्वोध्येता।
केन विहितस्यानद्यतने लृटः सत्संज्ञावुच्येते।।
एतदेव ज्ञापयति----भवत्यनद्यतने लृड् इति। यदयमनद्यतने लृटः सत्संज्ञौ शास्ति।। एवं च कृत्वा सोप्यदोषो भवति। यदुक्तं भविष्यतदीत्यनद्यतन उपसंख्यानम् इति।
(4009 वार्तिकम्।। 3 ।।)
- परिदेवने श्वस्तनीभविष्यन्त्यर्थे-
(भाष्यम्) परिदेवने श्वस्तनीभविष्यन्त्या अर्थे इति वक्तव्यम्। इयं तु कदा गन्ता यैवं पादौ निदधाति। अयं तु कदाध्येता य एवमनभियुक्त इति।
(4010 वार्तिकम्।। 1 ।।)
- कालप्रकर्षात्तूपमानम्-
(भाष्यम्) कालप्रकर्षात्तूपमानं भविष्यति। गन्तेवेयं गन्ता नेयं गमिष्यति। अध्येतेवायमध्येता नायमध्येष्यते।।
न वै तिङन्तेनोपमानमस्ति।
(भाष्यम्) एवं तर्ह्यनद्यतन इवानद्यतन इति।। अनद्यतने।। 15 ।।
(घञ्प्रत्ययाधिकारः)
-3-3-16- पदरुजविशस्पृशो घञ् (999)
(542 घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.11)
(4011 वार्तिकम्।। 1 ।।)
- स्पृश उपतापे-
(भाष्यम्) स्पृश उपतापे इति वक्तव्यम्। इह मा भूत्---कम्बलस्पर्शं इति पदरु।। 16 ।।
-3-3-17- सृ स्थिरे (992)
(543 घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.12)
(4012 वार्तिकम्।।1 ।।)
- व्याधिमत्स्यबलेषु-
(भाष्यम्) व्याधिमत्स्यबलेष्विति वक्तव्यम्। अतिसारो व्याधिः। विसारो मत्स्यः। बले--शालसारः। खदिरसारः।। सृस्थिरे।। 17 ।।
-3-3-18- भावे (993)
(545 आक्षेपवार्तिकम् ।। 1 ।।)
- भावे सर्वलिङ्गो निर्देशः कर्तव्यः भूतौ, भवने, भावे, इति ।
किं प्रयोजनम्?
सर्व लिङ्गे भावे एते प्रत्यया यथा स्युरिति ।।
किं पुनः कारणं न सिध्यति ?
पुल्लिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च । तेन पुल्लिङ्गे एव भावे एकवचने चैते प्रत्ययाः स्युः। स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोश्च न स्युः ।।
नात्र निर्देशस्तन्त्रम् ।।
(आक्षेपसाधकभाष्यम् )

कथं पुनस्तेनैव च नाम निर्देशः क्रियते । तच्चातन्त्रं स्यात् । तत्कारी च भवांस्तद् द्वेषी च ।।
(आक्षेपबाधकभाष्यम् )
नान्तरीयकत्वादत्र पुल्लिङ्गेन निर्देशः क्रियते, एकवचनेन च । अवश्यं कया चिद्विभक्त्या केन चिल्लिङ्गेन निर्देशः कर्तव्यः । तद्यथा कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति, नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृज्यति । तथा कश्चिन्मांसार्थी मत्स्यान्सशकलान्सकण्टकानाहरति, नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वात्पुल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च । न ह्यत्र निर्देशस्तन्त्रम् । कया चिद्विभक्तया केनचिच्च लिङ्गेन निर्देशः कर्तव्यः ।।
(आक्षेपबाधकयुक्त्यन्तरभाष्यम्)
अथ वा कृभ्वस्तयः क्रियासामान्यवाचिनः, क्रियाविशेषवाचिनः पचादयः । यच्चात्र पचतेर्भवतिभैवति, न तद् भवतेः पचतिर्भवति । यच्च भवतेः पचतिर्भवति, न तत् पचतेर्भवतिर्भवति ।।
किंच पचतेर्भवतिर्भवति ?
सामान्यम् ।।
किं च भवतेः पचतिर्भवति ?
विशेषः ।।
तद्यथा --- उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाह --- ठ उपाध्यायं भवानभिवादयताम् इति । स गत्वा मातुलमभिवादयते । तथा - मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाह ---- ठमातुलं भवानभिवादयताम् इति । स गत्वा उपाध्यायमभिवादयते ।। एवमिहापि पचतेर्भवतौ यत्तन्निर्दिश्यते ।। भावे ।। 18 ।।
-3-3-19- अकर्तरि च कारके संज्ञायाम् (994)
(545 अधिकारसूत्रम् घञ्प्रत्ययविधिसूत्रं च।। 3 । 3 1 आ 14 ।।)
(आक्षेपभाष्यम्)
कारकग्रहणं किमर्थम्?
(4013 वार्तिकम्।। 1 ।।)
- कारकग्रहणमनादेशे स्वार्थविज्ञानात्-
(भाष्यम्) कारकग्रहणं क्रियते।। (किंकारणम्?) अनादेशे स्वार्थविज्ञानात्। अनादेशे अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति----तद्यथा, गुप्तिज्किद्भ्यः सन् यावादिभ्यः कन् इति। एवमिमेऽपि प्रत्ययाः स्वार्थे स्युः। स्वार्थे मा
भूवन्कारके यथा स्युरित्येवमर्थमिदमुच्यते।।
(नियमार्थत्वप्रयोजनभाष्यम्)
नैतदस्ति प्रयोजनम्। विहितः प्रत्ययः स्वार्थे भावे घञ्जिति।।
(नियमखण्डनभाष्यम्)
तेनातिप्रसक्तमिति कृत्वा नियमोयं विज्ञायते---अकर्तरि संज्ञायामेवेति।।
(प्रश्नभाष्यम्)
अस्ति चेदानीं कश्चित्संज्ञाभूतो भावो यदर्थो विधिः स्यात्।।
(उत्तरभाष्यम्)
अस्तीत्याह। आवाहो विवाह इति।।
(नियमखण्डनभाष्यम्)
कैमर्थक्यान्नियमो भवति। विधेयं नास्तीति कृत्वा इह चास्ति विधेयम्।। किम्? अकर्तरि च कारके संज्ञायां घञ्विधेयः। तत्रापूर्वो विधिरस्तु नियमोस्त्विति। अपूर्व एव विधिर्भविष्यति न नियमः।।
(समाधानभाष्यम्)
तदेव तर्हि प्रयोजनं स्वार्थे मा भूवन्निति।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं विहितः प्रत्ययः स्वार्थे भावे घञ्जितीति।।
(दूषणोद्धारभाष्यम्)
अन्यः स भावो बाह्यः प्रकृत्यर्थात्।। अनेनेदानीमभ्यन्तरे भावे स्यात्।।
(प्रश्नभाष्यम्)
कः पुनरनयोर्भावयोर्विशेषः?
(समाधानभाष्यम्)
उक्तो भावभेदो भाष्ये।।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। नञ्जिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्न्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्ये विज्ञायते तथा ह्यर्थो

गम्यते। तद्यथा---अब्राह्मणमानय इत्युक्ते ब्राह्मणसदृशं पुरुषमानयति। नासौ लोष्टमानीय कृती भवति। एवमिहापि अकर्तरि इति कर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते।
किं चान्यदकर्तृ कर्तृसदृशम्?
कारकम्।।
(प्रयोजनभाष्यम्)
उत्तरार्थं तर्हि कारकग्रहणं कर्तव्यम्----परिमाणाख्यायां सर्वेभ्यः कारके यथा स्यात्। इह मा भूत्----एका तिलोच्छ्रितिः द्वे श्रुती इति। घञ्‌नुक्रमणमजब्विषये अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् इति वक्ष्यति। तन्न वक्तव्यं भवति।।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। अत्राप्यकर्तरीत्येवानुवर्तिष्यते।।
(4014 संज्ञाग्रहणप्रत्याख्यानवार्तिकम्।। 2 ।।)
- संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात्-
(भाष्यम्) संज्ञाग्रहणं चानर्थकम्। किं कारणम्? सर्वत्र घञो दर्शनात्। असंज्ञायामपि घञ्दृश्यते----को भवता लाभो लब्धः को भवता दायो दत्तः इति।।
(आक्षेपभाष्यम्)
यदि संज्ञाग्रहणं न क्रियते, अतिप्रसङ्गो भवति----कृतः कट इत्यत्र कारः कटः इति प्राप्नोति।।
(4015 वार्तिकम्।। 3 ।।)
- अतिप्रतसङ्ग इति चेदभिधानलक्षणत्वात् प्रत्ययस्य सिद्धम्-
(भाष्यम्) अतिप्रसङ्ग इति चेत्। तन्न। किं कारणम्? अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्। अभिधानलक्षणाः कृत्तद्धितसमासाः। अनभिधानाद् न भविष्यन्ति।। अकर्तरि च।। 19 ।।
-3-3-20- परिमाणाख्यायां सर्वेभ्यः (995)
(546 घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.15)
(आक्षेपभाष्यम्)
सर्वग्रहणं किमर्थम्।
(आक्षेपनिरासभाष्यम्)
सर्वेभ्यो धातुभ्यो घञ् यथा स्यात्। अजपोरपि विषये----एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ।।
(3016 वार्तिकम्।। 1 ।।)
- सर्वग्रहणमनर्थकं परिमाणाख्यायामिति सिद्धत्वात्-
(भाष्यम्) सर्वग्रहणमनर्थकम्। किं कारणम्? परिमाणाख्यायामिति सिद्धत्वात्। परिमाणाख्यायामित्येव घञ् सिद्धः अजपोरपि विषये, नार्थः सर्वग्रहणेन।।
(आनर्थक्यनिराकरणभाष्यम्)
अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्? एकः पाको द्वौ पाकौ त्रयः पाका इति।
(आनर्थक्यसाधकभाष्यम्)
न पूर्वोणाप्येतत् सिद्धम्।
(आनर्थक्यपरिहारभाष्यम्)
न सिध्यति।। संज्ञायाम् इति पूर्वो योगः। न चैषा संज्ञा।।
(आनर्थक्यसाधकभाष्यम्)
प्रत्याख्यायते संज्ञाग्रहणम्। अथापि क्रियते। एवमपि न दोषः। अजपावपि संज्ञायामेव। यथाजादीयक उत्सर्गः तथाजातीयकेनापवादेनापि भवितव्यम्।
(आनर्थक्यपरिहारभाष्यम्)
उत्तरार्थं तर्हि----इङश्च। सर्वेभ्योपि यथा स्यात्।।
(आनर्थक्यभाष्यम्)
ननु चायमिङ् एक एव वण्ठरण्डाकल्पः। वण्ठो मृतभार्यः।
(आनर्थक्यपरिहारभाष्यम्)
सर्वेषु साधनेषु यथा स्यात्। उपेत्याधीयते तस्मादित्युपाध्यायः। अस्मिन्नधीयते इत्यध्यायः। अध्यायन्यायोद्यावसंहाराधारावायाश्च इत्येतन्निपातनं न कर्तव्यं भवति।।
(आनर्थक्यसाधकभाष्यम्)
एतदपि नास्ति प्रयोजनम्। क्रियते न्यास एव।।
(आनर्थक्यबाधकभाष्यम्)
उत्तरार्थमेव तर्हि वक्तव्यम्---कर्मव्यतिहारे णच् स्त्रियाम् इति सर्वेभ्यो यथा स्यात्।।

(आनर्थक्यसाधकभाष्यम्)
एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्---- कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् । पृथक्तुग्रहणं बाधक बाधनार्थम् । व्यावचोरी व्यावर्चच्यर्थम् । तत्र व्यतीक्षादिषु दोषः । सिद्धं तु प्रकृते स्त्रीग्रहणे णञ्ग्रहणं णिञ्ग्रहणं चेति।।
उत्तरार्थमेव तर्हि--अभिविधौ भाव इनुण सर्वेभ्यो यथा स्यात् । सांराविणम्।
(आनर्थक्यबाधकभाष्यम्)
एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्--अभिविधौ भावग्रहणं नपुसंके क्तादिनिवृत्यर्थम् । पृथक् तु ग्रहणं बाधकबाधनार्थं न तु ल्युट् इति ।
(आनर्थक्यबाधकभाष्यम्)
इदं तर्हि प्रयोजनम्---प्रकृत्याश्रयो योऽपवादस्तस्य बाधनं यथा स्याद् अर्थाश्रयो योऽपवादस्तस्य बाधनं मा
भूदिति। एका तिलोच्छ्रितिः। द्वे श्रुती इति।। घञ्ञनुक्रमणमजब्विषये। अवचने हि स्त्री प्रत्ययानामप्यपवादविज्ञानम् इति चोदयिष्यति। तन्न वक्तव्यं भवति।
(4017 वार्तिकम्।। 2 ।।)
- घञ्ञनुक्रमणमजव्विषये-
(भाष्यम्) घञ्ञनुक्रमणमजब्विषय इति वक्तव्यम्।
(4018 वार्तिकम्।। 3 ।।)
- अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम्-
(भाष्यम्) अनुच्यमाने ह्येतस्मिन् स्त्रीप्रत्ययानामप्यपवादोऽयं विज्ञायेत-----एका तिलोच्छ्रितिः द्वे श्रुती इति।
(4019 वार्तिकम्।। 4 ।।)
- दारजारौ कर्तरि णिलुक् च-
(भाष्यम्) दारजारौ कर्तरि वक्तव्यौ। णिलुक् च वक्तव्यः। दारयन्तीति दाराः। जरयन्तीति जाराः।।
(4020 वार्तिकम्।। 5 ।।)
- करणे वा-
(भाष्यम्) करणे वा वक्तव्यौ। दीर्यन्ते तैर्दाराः। जीर्यन्ति तैर्जाराः।। परिमाणा।। 20 ।।
-3-3-21- इङश्च (996)
(547 घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.16)
(4021 वार्तिकम्।।1 ।।)
- इङश्चेत्यत्रापादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीप्-
(भाष्यम्) इङश्चेत्यत्रापादाने स्त्रियामुपसंख्यानं कर्तव्यं तदन्ताच्च वा ङीष् वक्तव्यः। उपेत्याधीयतेऽस्या उपाध्यायी उपाध्याया।।
(4022 वार्तिकम् ।। 2 ।।)
- शृवायुवर्णनिवृतेषु-
(भाष्यम्) शृ इत्येतस्माद्वायुवर्णिनिवृतेषु घञ् वक्तव्यः। शारो वायुः। शारो वर्णः। गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः।। इङश्च।। 21 ।।
-3-3-36- समि मुष्टौ (1011)
(548 ग्रहेर्घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ. 17)
- समि मुष्टावित्यनर्थकं वचनं परिमाणाख्यायामिति सिद्धत्वात्-
(भाष्यम्) समि मुष्टाविति वचनमनर्थकम्। किं कारणम्? परिमाणाख्यायामिति सिद्धत्वात्। परिमाणाख्यायाम् इत्येवात्र घञ् सिद्धः।।
(4024 समाधानवार्तिकम्।। 2 ।।)
- अपरिमाणार्थं तु-
(भाष्यम्) अपरिमाणार्थोऽयमारम्भः। मल्लस्य संग्राहः। मुष्टिकस्य संग्राह इति ।।
(4025 निपातनपरिसंख्यावार्तिकम्।। 3 ।।)
- उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोरर्थयोः-
(भाष्यम्) उद्ग्राभो निग्राभ इति इमौ शब्दौ छन्दसि वक्तव्यौ स्रुगुद्यमननिपातनयोरर्थयोः। उद्ग्राभं च निग्राभं च ब्रह्मदेवा अवीवृधन्।। समि मुष्टौ।। 36 ।।
-3-3-43- कर्मव्यतिहारे णच् स्त्रियाम् (1018)
(549 णच्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.19)
(आक्षेपभाष्यम्)
स्त्रीग्रहणं किमर्थम्।
(4023 वार्तिकम्।। 1 ।।)
- कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम्-
(भाष्यम्) कर्मव्यतिहारे स्त्रीग्रहणं क्रियते व्यतिपाकार्थम्। इह मा भूत्---व्यतिपाको वर्तते।
(आक्षेपभाष्यम्)

अथ किमर्थं पृथग्ग्रहणम्।
(4027 वार्तिकम्।। 2 ।।)
- पृथग्ग्रहणं बाधकबाधनार्थं व्यावचोरीव्यावर्चच्यर्थम्-
(भाष्यम्) पृथग्ग्रहणं क्रियते (किं प्रयोजनम्?) बाधकबाधनार्थं, ये तस्यबाधकास्तद्बाधनार्थम्।
किं प्रयोजनम्।
व्यावचोरी व्यावर्चच्यर्थम्। व्यावचोरी वर्तते। व्यावचर्ची वर्तते।
(4028 दूषणवार्तिकम्।।3 ।।)
- तत्र व्यतीक्षादिषु दोषः-
(भाष्यम्) तत्र व्यतीक्षादिषु दोषो भवति। व्यतीक्षा वर्तते। व्यतीहा वर्तते।।
(4029 दूषणोद्धारवार्तिकम्।।4 ।।)
- सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं च-
(भाष्यम्) सिद्धमेतत्। कथम्। प्रकृत एव स्त्रीग्रहणेऽयं योगः कर्तव्यः---स्त्रियां क्तिन्। ततः कर्मव्यतिहारे णच्। ततो णिचः।। कर्मव्यति।। 43 ।।
-3-3-44- अभिविधौ भाव इनुण् (1019)
(550 इनुण्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.19)
(आक्षेपभाष्यम्)
भावग्रहणं किमर्थम्?।
(4030 समाधानवार्तिकम्।। 1 ।।)
- अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् -
(भाष्यम्) अभिविधौ भावग्रहणं क्रियते नपुंसके क्तादिनिवृत्त्यर्थम्। नुपंसकलिङ्गे भावे क्तादयो मा भूवन्निति।
(आक्षेपभाष्यम्)
अथ किमर्थं पृथग्ग्रहणं क्रियते।
(4031 वार्तिकशेषः ।। 2 ।।)
- पृथग्ग्रहणं बाधकबाधनार्थम् -
(भाष्यम्) पृथग्ग्रहणं क्रियते बाधकबाधनार्थम्। ये तस्य बाधकास्तद्बाधनार्थम्।।
(4032 वार्तिकशेषः।। 2 ।।)
- न तु ल्युटः-
(भाष्यम्) ल्युटो बाधनं नेष्यते, संकूटनमित्येव भवति।। अभिविधौ।। 44 ।।
-3-3-56- एरच् (1031)
(551 इवर्णान्तादच्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.20)
(4033 वार्तिकम्।। 1 ।।)
- अज्विधौ भयस्योपसंख्यानम् -
(भाष्यम्) अज्विधौ भयस्योपख्यानं कर्तव्यम्। भयम्।।
(उपालम्भभाष्यम्)
अत्यल्पमिदमुच्यते भयस्येति।
भयादीनामिति वक्तव्यम्। इहापि यथा स्यात्--भयं,वर्षम्।।
(प्रश्नभाष्यम्)
किं प्रयोजनम्?।
(4034 वार्तिकशेषः।। 2 ।।)
- नपुंसके क्तादिनिवृत्त्यर्थम् -
(भाष्यम्) नपुंसकलिङ्गे भावे क्तादयो मा भूवन्निति।।
(4035 वार्तिकम्।। 3 ।।)
- कल्प्यादिभ्यः प्रतिषेधः -
(भाष्यम्) कल्प्यादिभ्यः प्रतिषेधो वक्तव्यः। कल्पः अर्थः मन्त्र इति।।
(4036 वार्तिकम्।। 4 ।।)
- जवसवौ छन्दसि -
(भाष्यम्) जवसवौ छन्दसि वक्तव्यौ ऊर्वोरस्तु मे जवः। अयं मे पञ्चौदनः सवः।। एरच् ।। 56 ।।
-3-3-58- ग्रहवृदृनिश्चिगमश्च (1033)
(552 अप्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.21)
(आक्षेपभाष्यम्)

किमर्थं निष्पूर्वाच्चिनोतेरब् विधीयते। नाचैव सिद्धम्। न ह्यस्ति विशेषो निष्पूर्वाच्चिनोतेरपो वा, अचो वा, तदेव रूपम्, स एवास्य स्वरः।।
(आक्षेपबाधकभाष्यम्)
न सिध्यति। हस्तादाने चौरस्तेये इति घञ् प्राप्नोति तद्बाधनार्थम्।
(समाधानभाष्यम्)
अत उत्तरं पठति----
(3037 प्रयोजननिराकरणवार्तिकम्।। 1 ।।)
- अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात्-
(भाष्यम्) अब्विधौ निश्चिग्रहणमनर्थकम्। किं कारणम्? स्तेयस्य घञ्विधौ प्रतिषेधात्। स्तेयस्य घञ्विधौ प्रतिषेध उच्यते। निष्पूर्वश्चिनोतिः स्तेये वर्तते।।
(प्रयोजनभाष्यम्)
अस्तेयार्थं तर्हीदं वक्तव्यं निष्पूर्वाच्चिनोतेरस्तेये अब् यथा स्यात्।।
(4038 प्रयोजननिरासवार्तिकम्।। 2 ।।)
- अस्तेयार्थिमिति चेन्नानिष्टत्वात्-
(भाष्यम्) अस्तेयार्थमिति चेत् । तन्न। किं कारणम्? अनिष्टत्वात्। नहि निष्पूर्वाच्चिनोतेरस्तेये अबिष्यते। किं तर्हि? घञेवेष्यते।।
(प्रयोजनभाष्यम्)
एवं तर्हि सिद्धे स्ति यन्निष्पूर्वाच्चिनोतेरपं शास्ति तज्ज्ञापयत्याचार्यः यत्तद् अन्तः थाथघञ्क्ताजबित्रकाणाम् इति, तन्निष्पूर्वाच्चिनोतेर्न भवतीति।। किमेतस्य ज्ञापने प्रयोजनम्? निश्चयः। एष स्वरः सिद्धो भवति।।
(4039 वार्तिकम्।। 3 ।।)
- वशिरण्योश्चोपसंख्यानम्-
(भाष्यम्) वशिरण्योश्चोपसंख्यानं कर्तव्यम्। सवशं सैन्धवम्। धनंजयं रणे रणे।।
(4040 कविधिवार्तिकम्।। 4 ।।)
- घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्-
(भाष्यम्) घञर्थे को विधेयः। किं प्रयोजनम्?
स्थास्नापव्यधिहनियुध्यर्थम्। स्था--प्रतिष्ठन्तेस्मिन्धान्यानीति प्रस्थः। हिमवतः श्रृङ्गे। स्था। स्ना--प्रस्नान्ति अस्तिन्निति प्रस्नः। स्ना। पा---प्रपिबन्त्यस्यामिति प्रपा। पा। व्यधि---आविध्यन्ति तेनाविधः। व्यधि। हनि--विघ्नन्ति तस्मिन्मनांसि विघ्नः। हनि। युधि----आयुध्यन्ते तेनायुधम्।। ग्रहवृद्द।। 58 ।।
-3-3-83- स्तम्बे क च (1058)
(553 हनेः कप्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.22)
(आक्षेपभाष्यम्)
कस्मादयं को विधीयते।
(समाधानभाष्यम्)
हन्तेरित्याह।
(प्रश्नभाष्यम्)
तद्धन्तिग्रहणं कर्तव्यम्?
(समाधानभाष्यम्)
न कर्तव्यम्?
प्रकृतमनुवर्तते। क्व प्रकृतम्? हनश्च वधः इति।
(समाधानबाधकभाष्यम्)
तद्वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम्।
(समाधानसाधकभाष्यम्)
यद्यादेशाः। घनस्वरो न सिध्यति----घनः इति।
(निपातनाङ्गीकारभाष्यम्)
सन्तु तर्हि निपातनानि।
(दूषणस्मारणभाष्यम्)
ननु चोक्तम् तद्वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुमिति।
(दूषणोद्धारभाष्यम्)
संबन्धमनुवर्तिष्यते।
(आदेशपक्षस्वीकारभाष्यम्)
अथ वा पुनः सन्तु आदेशाः।।

(दूषणस्मारणभाष्यम्)
ननु चोक्तम् स्वरो न सिध्यतीति।
(दूषणस्मारणभाष्यम्)
नैष दोषः। अकारान्ता आदेशाः।।
अकारान्ता इति।
(आक्षेपभाष्यम्)
अथ यदा इषीकया स्तम्बो हन्यते कथं तत्र भवितव्यम्।।
(समाधानभाष्यम्)
केचित्तावदाहुः----स्तम्बघ्नेति भवितव्यम्।।
-3-3-90- यजयाचयतविच्छप्रच्छरक्षो नङ् (1065)
(444 नङ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.23 सू.)
(4041 वार्तिकम्।। 1 ।।)
- यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधः-
(भाष्यम्) यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधो वक्तव्यः। प्रश्न इति।।
(ङ्कारप्रत्याख्यानभाष्यम्)
एवं तर्हि अङित्करिष्यते।
(4042 दूषणवार्तिकम्।। 2 ।।)
- अङिति गुणप्रतिषेधः-
(भाष्यम्) यद्यङिद् गुणस्य प्रतिषेधो वक्तव्यः---विश्न इति।।
(दूषणभाष्यम्)
सूत्रं च भिद्यते।
(समाधानभाष्यम्)
यथान्यासमेवास्तु।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेध इति।
(दूषणोद्धारभाष्यम्)
नैष दोषः। निपातनादेतत् सिद्धम्।। किं निपातनम्? प्रश्ने चासन्नकाले इति।। यजयाच।। 90 ।।
(स्न्यधिकारोक्तप्रत्ययाः)
-3-3-94- स्त्रियां क्तिन् (1079)
(555 क्तिन्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.24)
(4043 वार्तिकम्।। 1 ।।)
- स्त्रिया क्तिन्नाबादिभ्यश्च-
(भाष्यम्) स्त्रियां क्तिनित्यत्र आबादिभ्यश्च इति वक्तव्यम्। आप्तिः। राद्धिः। दीप्तिः।।
(4044 वार्तिकम्।। 2 ।।)
- निष्ठायां वा सेटोऽकारवचनात्सिद्धम्-
(भाष्यम्) अथ वा निष्ठायां सेटः अकारो भवतीति वक्तव्यम्।।
(आक्षेपभाष्यम्)
यदि निष्ठायां सेटोऽकारो भवतीत्युच्यते। स्रंसाध्वंसेति न सिध्यति। स्रस्तिः ध्वस्तिरिति प्राप्नोति।
(प्रत्याक्षेपभाष्यम्)
किं पुनरिदं परिगणनं त्रय एवाबादयः। आहो स्विदुदाहरणमात्रम्। किं चातः।
(प्रत्याक्षेपसमाधानभाष्यम्)
यदि परिगणनम्, भेदो भवति। अथोदाहरणमात्रम्, नास्ति भेदः।
(समाधानभाष्यम्)
स्रस्तिः ध्वस्तिरित्येव भवितव्यम्।। स्त्रियां क्तिन् ।। 94 ।।
-3-3-95- स्थागापापचो भावे (1080)
(556 क्तिन्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ. 25)
4045 आक्षेपवार्तिकम्।। 1।।)
- स्थादिभ्यः सर्वापवादप्रसङ्गः-
(भाष्यम्) स्थादिभ्यः सर्वापवादः क्तिन्प्राप्नोति स यथैवाङं बाधते एवं ण्वुलिञ्ञावपि बाधेत---कां त्वं स्थायिकां कां त्वं स्थायिम्।।

(4046 वार्तिकम्।। 2 ।।)
- सिद्धं तु अङ्विधाने स्थादिप्रतिषेधात्-
(भाष्यम्) सिद्धमेतत्। कथम्। अङ्विधाने एव स्थादीनां प्रतिषेधो वक्तव्यः। प्रतिषिद्धे तस्मिन् क्तिनेव भविष्यति।।
(दूषणभाष्यम्)
सिध्यति। सूत्रं तर्हि भिद्यते।।
(सिद्धान्तिसमाधानभाष्यम्)
यथान्यासमेवास्तु।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं स्थादिभ्यः सर्वापवादप्रसङ्ग इति।।
(दूषणोद्धारभाष्यम्)
नैष दोषः। पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान् इत्येवमयं स्त्रियां क्तिन्नङं बाधिष्यते। ण्वुलिञ्ञौ न बाधिष्यते।।
(4047 वार्तिकम्।। 3 ।।)
- श्रुयजिषिस्तुभ्यः करणे-
(भाष्यम्) श्रुयजिषिस्तुभ्यः करणे क्तिन्वक्तव्यः। श्रूयतेऽनयेति श्रुतिः इज्यतेऽनयेति इष्टिः। इष्यतेऽनयेति इष्टिः। स्तूयतेऽनयेति स्तुतिः।।
(4048 वार्तिकम्।। 4 ।।)
- ग्लाम्लाज्याहाभ्यो निः-
(भाष्यम्) ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः। ग्लानिः म्लानिः। ज्यानिः। हानिः।। स्थागापा ।। 95 ।।
-3-3-98- व्रजयजोर्भावे क्यप् (1086)
(448 क्यप्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ. 26)
- क्यब्विधिरधिकरणे च-
(भाष्यम्) क्यब्विधिरधिरकरणे चेति वक्तव्यम्। समजन्ति तस्यां समज्या।। व्रजयजो।। 98।।
-3-3-100- कृञः श च (1085)
(558 शक्यप्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 । आ. 27 )
(4050 वार्तिकम्।। 1 ।।)
- कृञः श चेति वावचनम्-
(भाष्यम्) कृञः श चेति वावचनं कर्तव्यम्।। किं प्रयोजनम्? क्तिन्नपि यथा स्यात्। कृतिः।। कृञः श।। 100 ।।
-3-3-101- इच्छा (1086)
(559 शप्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.28)
(प्रश्नभाष्यम्)
किं निपात्यते?
(समाधानभाष्यम्)
इषेः शे यगभावः।
(आक्षेपभाष्यम्)
अत्यल्पमिदमुच्यते इच्छेति।
(4051 वार्तिकम्।। 1 ।।)
- इच्छापरिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् -
(भाष्यम्) इच्छापरिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानं कर्तव्यम्।।
(4052 वार्तिकम्।। 2 ।।)
- जागर्तेरकारो वा -
(भाष्यम्) (जागर्तेरकारो वा वक्तव्यः) जागर्या । जागरा ।। इच्छा ।। 101 ।।
-3-3-104- षिद्भिदादिभ्योऽङ् (1089)
(560 अङ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.29)
(4053 वार्तिकम्।। 1 ।।)
- भिदा विदारणे-
(भाष्यम्) भिदा विदारण इति वक्तव्यम्। भित्तिरन्या।।
(4054 वार्तिकम्।। 3 ।।)
(- छिदा द्वैधीकरणे- )
(भाष्यम्) छिदा द्वैधीकरणे इति वक्तव्यम्। छित्तिरन्या।
(4055 वार्तिकम्।। 3 ।।)

- आरा शस्त्र्याम्-
(भाष्यम्) आरा शस्त्र्यामिति वक्तव्यम्। आर्तिरन्या।
(4056 वार्तिकम्।। 4 ।।)
- धारा प्रपाते-
(भाष्यम्) धारा प्रपात इति वक्तव्यम्। धृतिरन्या।
(4057 वार्तिकम्।। 5 ।।)
- गुहा गिर्योषध्योः-
(भाष्यम्) गुहा गिर्योषध्येरिति वक्तव्यम्। गूढिरन्या। षिदि्भदा।। 104
-3-3-107- ण्यासश्रन्थो युच् (1092)
(561 युच्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आह्न 30)
(आक्षेपभाष्यम्)
किमर्थश्चकारः।।
(समाधानभाष्यम्)
स्वरार्थः। चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।
(प्रयोजननिराकरणभाष्यम्)
नैतदस्ति प्रयोजनम्। उदात्त इति वर्तते भुवीरा उदात्तः इति।।
(आक्षेपभाष्यम्)
यद्युदात्त इति वर्तते----व्रजयजोर्भावे क्यप् किमर्थः। पकारः।।
(समाधानभाष्यम्)
तुगर्थः। ह्रस्वस्य पिति कृतीति।।
(आक्षेपभाष्यम्)
उदात्त इत्येव हि वर्तते।।
एवमपि कुत एतत्तदन्तस्योदात्तत्वं भविष्यति,न पुनरादेरिति।
(समाधानभाष्यम्)
उदात्त इत्यनुवर्तनसार्मथ्यात् यस्य अप्राप्तः स्वरस्तस्य भवति। कस्य चाप्राप्तः। अन्तस्य।।
(प्रयोजनान्तरभाष्यम्)
सामान्यग्रहणाविघातार्थस्तर्हि।
क्व समामान्यग्रहणाविघातार्थेनार्थः?
युवोरनाकाविति।
(प्रयोजनान्तरनिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्-- सिद्धं तु युवोरनुनासिकवचनादिदि।।
(4058 वार्तिकम्।। 1 ।।)
- युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम्-
(भाष्यम्) युच्प्रकरणे घट्ट्वन्दिविदिभ्य उपसंख्यानं कर्तव्यम्। घट्टना। वन्दना। वेदना।।
(4059 वार्तिकम्।। 2 ।।)
- इषेरनिच्छार्थस्य -
(भाष्यम्) इषेरनिच्छार्थस्येति वक्तव्यम्। अन्विष्यते अन्वेषणा।।
(4060 वार्तिकम्।। 3 ।।)
- परेर्वा-
(भाष्यम्) परेर्वेति वक्तव्यम्। अन्यां परीष्टिं चर। अन्यां पर्येषणां चर।। ण्यासश्रन्थो।। 107 ।।
-3-3-108- रोगाख्यायां ण्वुल्बहुलम् (1093)
(562 ण्वुल्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.31)
(4031 वार्तिकम्।। 1 ।।)
- धात्वर्थनिर्देशे ण्वुल्-
(भाष्यम्) धात्वर्थनिर्देशे ण्वुल् वक्तव्यः। का नामासिका अन्येष्वीहमानेषु। का नाम शायिका अन्येष्वधीयानेषु।
(4062 वार्तिकम्।। 2 ।।)
- इक्श्तिपौ धातुनिर्देशे-
(भाष्यम्) इक्श्तिपावित्येतौ प्रत्ययौ धातुनिर्देशे वक्तव्यौ। पचेर्ब्रूहि पचतेर्ब्रूहि।
(4063 वार्तिकम्।। 3 ।।)

- वर्णात्कारः-
(भाष्यम्) वर्णात्कारप्रत्ययो वक्तव्यः। अकारः।।
(4064 वार्तिकम्।। 4 ।।)
- रादिफः-
(भाष्यम्) रादिफो वक्तव्यः। रेफः।।
(4065 वार्तिकम्।। 5 ।।)
- मत्वर्थाच्छः-
(भाष्यम्) मत्वर्थाच्छो वक्तव्यः। एवं मत्वर्थीयः।।
(4066 वार्तिकम्।। 6 ।।)
- इञ्‌ वपादिभ्यः-
(भाष्यम्) इञ्‌ वपादिभ्यो वक्तव्यः। वापिः। आजिः। आतिः। आदिः।।
(4067 वार्तिकम्।। 7 ।।)
- इक्‌ वपादिभ्यः-
(भाष्यम्) इञ्‌ वपादिभ्यो वक्तव्यः। वापिः। वासिः। वादिः।।
(4068 वार्तिकम्।। 8 ।।)
- इक्‌ कृष्यादिभ्यः-
(भाष्यम्) इक्‌ कृष्यादिभ्यो वक्तव्यः। कृषिः। किरिः। गिरिः।।
(4069 वार्तिकम्।। 9 ।।)
- संपदादिभ्यः क्विप्-
(भाष्यम्) संपदादिभ्यः क्विब्‌ वक्तव्यः। सम्पत्‌ । विपत्। प्रतिपत्। आपत्। परिषत्। रोगाख्या।। 108 ।।
-3-3-113- कृत्यल्युटो बहुलम्‌ (1098)
(536 इष्टार्थविधिसूत्रम्।। 3 । 3। 1 । आ.32)
(4070 वार्तिकम्।। 1 ।।)
- कृतो बहुलं पादहारकाद्यर्थम्-
(भाष्यम्) कृतो बहुलमिति वक्तव्यम्। (किमर्थम्?) पादहारकाद्यर्थम्। पादाभ्यां ह्रियते पदाहारकः। गले चोप्यते गलेचोपकः। श्वोग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन।। कृत्यल्युटो बहुलम्।। 113 ।।
-3-3-119- गोचरसंचरवहव्रजव्यजापणनिगमाश्च (1104)
(64 घप्रत्ययान्तनिपातनसूत्रम्।। 3 । 3 । 1 आद्द33)
(4071 वार्तिकम्।। 1 ।।)
- गोचरादीनामग्रहणं प्रायवचनाद्‌ यथा कषः निकष इति-
(भाष्यम्) गोचरादीनां ग्रहणं शक्यमकर्तुम्।। घञ्‌ कस्मान्न भवति?
प्रायवचनाद्‌ यथा कषः निकष इति। प्रायवचनाद्‌ घञ्‌ न भवति।। गोचरसंचर।। 119 ।।
-3-3-121- हलश्च (1106)
(565 घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 । आ.34)
(4072 वार्तिकम्।। 1 ।।)
- घञ्विधाववहाराधारावायानामुपसंख्यानम्-
(भाष्यम्) घञ्विधौ अवहाराधारावायानामुपसंख्यानं कर्तव्यम्। अवह्रियन्ते अस्मिन्नवहारः। आध्रियन्तेऽस्मिन्नाधारः। एत्यैतस्मिन्वयन्त्यावावायः।। हलश्च।। 121।।
-3-3-123- उदङ्कोनुदके (1108)
(566 घञ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आद्द 35)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते। न हलश्च इत्येव सिद्धम्।
(समाधानभाष्यम्)
अनुदक इति वक्ष्यामीति। इह मा भूत्---उदकोदञ्चनः।।
(4076 प्रत्याख्यानवार्तिकम्।। 1 ।।)
- उदङ्कोनुदकग्रहमानर्थक्यं च प्रायवचनाद्यथा गोदोहनः प्रसाधन इति-
(भाष्यम्) उदङ्कोनुदकग्रहणं चानर्थकम्।। घञ्‌ कस्मान्न भवति?
प्रायवचनाद्‌ घञ्‌ न भवति। यथा गोदोहनः प्रसाधन इति।। उदङ्कोऽनु।। 123 ।।
-3-3-125- खनो घ च (1110)

(567 घप्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.36)
(4074 वार्तिकम्।। 1 ।।)
- खनो डडरेकेकवकाः-
डो वक्तव्यः---आखः। डरो वक्तव्यः---आखरः।। इको वक्तव्यः---आखनिकः।। इकवको वक्तव्यः ---आखनिकवकः खनो घ च।। 125 ।।
-3-3-126- इर्षद्दुः सुषु कृच्छ्राकृच्छ्रार्थेषु खल् (1111)
(खलर्थप्रकरणम्)
(568 खल्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.37)
(4075 वार्तिकम्।। 1 ।।)
- अजब्भ्यां स्त्रीखलनाः-
(भाष्यम्) अजब्भ्यां स्त्रीखलना भवन्ति विप्रतिषेधेन। अजपोरवकाशः----चयः। लवः।। स्त्रीप्रत्ययनानमवकाशः----कृतिः। हृतिः।। इहोभयं प्राप्नोति---चितिः स्तुतिः।।
खलोवकाशः----इर्षद्भेदः। सुभेदः।। अजपोः स एव।। इहोभयं प्राप्नोति----इर्षच्चयः। सुचयः। इर्षल्लवः।
सुलवः।।
अनस्यावकाशः-----इध्मप्रव्रश्चनः। अजपोः स एव।। इहोभयं प्राप्नोति---पलाशचयनः। अविलवनः।। स्त्रीखलना भवन्ति विप्रतिषेधेन।।
(4076 वार्तिकम्।। 2 ।।)
- स्त्रियाः खलनौ विप्रतिषेधेन-
(भाष्यम्) स्त्रियाः खलनौ भवतो विप्रतिषेधेन। स्त्रीप्रत्ययानामवकाशः----कृतिः। हृतिः। खलोवकाशः---इर्षद्भेदः। सुभेदः। इहोभयं प्राप्नोति----इर्षद्भेदा। सुभेदा।।
अनस्यावकाशः----इध्मप्रव्रश्चनः।। स्त्रीप्रत्ययानां स एव।। इहोभयं प्राप्नोति---सक्तुधानी। तिलपीडनी।। खलनौ भवतो विप्रतिषेधेन।। इर्षद्दुः---सुषु।। 126 ।।
-3-3-127- कर्तृकर्मणोश्च भूकृञ्ञोः (1112)
(569 खल्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आ.38)
(4077 वार्तिकम्।। 1 ।।)
।। खल् कर्तृकर्मणोश्च्व्यर्थयोः-
(भाष्यम्) खल् कर्तृकर्मणोः च्व्यर्थयोरिति वक्तव्यम्। अनाढ्येन भवता इर्षदाढ्येन शक्यं भवितुम् इर्षदाढ्यंभवं भवता। दुराढ्यंभवम्। स्वाढ्यंभवम्।।
(4078 वार्तिकम्।। 2 ।।)
- कर्तृकर्मग्रहणं चोपपदसंज्ञार्थम्-
(भाष्यम्) कर्तृकर्मग्रहणं चोपपदसंज्ञार्थे द्रष्टव्यम्। तद् द्वेष्यं विजानीयाद् अभिधेययोरिति। तदाचार्यः सुहृद् भूत्वान्वाचष्टे---कर्तृकर्मग्रहणं चोपपदसंज्ञार्थमिति।। कर्तृकंर्म।। 127 ।।
-3-3-130- अन्येभ्योपि दृश्यते (1115)
(570 युच्प्रत्ययविधिसूत्रम्।। 3 । 3 । 1 आद्द 39)
(4079 वार्तिकम्।। 1 ।।)
- भाषायां शासियुधिदृशिधृषिभ्यो युच्-
(भाष्यम्) भाषायां शासियुधिदृशिधृषिभ्यो युज्वक्तव्यः। दुः शासनः। दुर्योधनः। दुर्दर्शनः। दुर्धर्षणः।।
(4080 वार्तिकम्।। 1 ।।)
- मृषेश्च-
(भाष्यम्) मृषेश्चेति वक्तव्यम्। दुर्मर्षणः।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।।
-3-3-131- वर्तमानसामीप्ये वर्तमानवद्वा (1116)
तृतीयाध्यास्य तृतीये पादे द्वितीयमाह्निकम्।।
(571 अतिदेशसूत्रम्।। 3 । 3 । 2 आ.1)
(आक्षेपभाष्यम्)
वत्करणं किमर्थम्?
(आक्षेपपरिहारभाष्यम्)
वर्तमानसामीप्ये वर्तमाने वा इतीयत्युच्यमाने-वर्तमाने ये प्रत्यया विहितास्ते वा वर्तमानसामीप्ये धातुमात्रात्स्युः। वत्करणे पुनः क्रियमाणे न दोषो भवति।।
भाष्यम्--यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन वर्तमाने प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन वर्तमानसामीप्ये भवन्ति। ततोमी वर्तमानवत्कृताः स्युः। अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यात् । नामी वर्तमानवत्कृताः स्युः।

(आक्षेपभाष्यम्)
इह वर्तमानसामीप्ये वर्तमानवद्वा इति उक्त्वा लडेवोदाह्रियते। यदि पुनर्वा लड्भवतीत्येवोच्येत। (समाधानवार्तिकावतरणभाष्यम्)
अत उत्तरं पठति---
(4081 समाधानवार्तिकम्।। 1।।)
- वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम्-
(भाष्यम्) वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते।। (किं प्रयोजनम्?) शत्राद्यर्थम्। शत्राद्यर्थोयमारम्भः। एषोस्मि पचन्। एषोस्मि पचमान इति।।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। लडादेशौ शतृशानचौ। तत्र वा लड्भवति इत्येव सिद्धम्।।
(प्रयोजनभाष्यम्)
यौ तर्ह्यलडादेशौ, एषोस्मि पवमानः एषोस्मि यजमान इति।।
यौ चापि लडादेशौ, तावपि प्रयोजयतः।। वर्तमानविहितस्य लटः शतृशानचावुच्येते अविशेषविहितश्चायां योगः।।
शत्राद्यर्थमिति खल्वप्युच्यते बहवश्च शत्रादयः। एषोस्मि अलंकरिष्णुः। एषोस्मि प्रजनिष्णुः।। वर्तमानसा।। 131।।
-3-3-132- आशंसायां भूतवच्च (1117)
(572 अतिदेशसूत्रम्।। 3 । 3 । 2 आ.2)
(सूत्रप्रयोजनभाष्यम्)
आशंसा नाम भविष्यत्काला।।
(4082 आक्षेपवार्तिकम्।। 1 ।।)
- आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः-
(भाष्यम्) आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः।।
(4083 समाधानवार्तिकम्।। 2 ।।)
- न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम्-
(भाष्यम्) न वा वक्तव्यः। किं कारणम्? अपवादस्य निमित्ताभावात्। नात्रापवादस्य निमित्तमस्ति। कथम्? अनद्यतने हि तयोर्विधानम्। अनद्यतने हि तौ विधीयेते लङ्लिटौ। न चात्रानद्यतनः कालो विवक्षितः। कस्तर्हि? भूतकालसामान्यम्।।
(4084 आक्षेपवार्तिकम्।। 3 ।।)
- आशंसासं भावनयोरविशेषात्तद्विधानस्याप्राप्तिः-
(भाष्यम्) आशंसासंभावनमित्यविशिष्टावेतावर्थौ।।
आशंसासंभावनयोरविशेषात्।। तद्विधानस्याप्राप्तिः।
आशंसायां ये विधीयन्ते, ते संभावनेऽपि प्राप्नुवन्ति। ये च संभावने विधीयन्ते, ते आशंसायामपि प्राप्नुवन्ति।।
किं तर्ह्युच्यते---अप्राप्तिरिति।
न साधीयः प्राप्तिर्भवति। इष्टा व्यवस्था न प्रकल्पेन। न सर्वे सर्वत्रेष्यन्ते।।
(4085 समाधानवार्तिकम्।। 4 ।।)
- न वा संभावनावयवत्वादाशंसायाः-
(भाष्यम्) न वा एष दोषः। किं कारणम्? संभावनावयवत्वादाशंसायाः। संभावनावयवात्मिका आशंसा नाम प्रधारितोर्थः। अभिनीतश्चानभिनीतश्च।। संभावनं नाम प्रधारितोर्थः। अभिनीत एव।।
(4076 समाधानवार्तिकम्।। 5 ।।)
- अर्थासंदेहो वालमर्थत्वात्संभावनस्य-
(भाष्यम्) अथ वा अर्थासंदेह एव पुनरस्य। किं कारणम्? अलमर्थत्वात्संभावनस्य। संभावने आलमर्थ्ये गम्यते। आशंसायां पुनरनालमर्थ्यम्।।
(अर्थासंदेहभाष्यम्)
आचार्यप्रवृत्तिर्ज्ञापयति---संभावनेऽपि नालमर्थ्ये गम्यते इति। यदयं संभावनेऽलमिति चेत् इत्याह। तस्मात्सुष्ठूच्यते---- न वा संभावनावयवत्वादाशंसाया इति।। आशंसायां भूत्।। 132।।
-3-3-133- क्षिप्रवचने लृट् (1118)
(476 लृड्विधिसूत्रम्।। 3 । 3 । 2 आ.3)
(4087 वार्तिकम्।। 1 ।।)
- क्षिप्रवचने लृट आशंसावचने लिङ्विप्रतिषेधेन-
(भाष्यम्) क्षिप्रवचने लृट आशंसावचने लिङ्भवति विप्रतिषेधेन। क्षिप्रवचने लृड् भवतीत्यस्य अवकाशः---उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे। आशंसावचने लिङ् भवतीत्यस्यावकाशः। उपाध्याश्चेदागतः आशंसे युक्तोधीयीय। इहोभयं प्राप्नोति---उपाध्यायश्चेदागतः आशंसे क्षिप्रमधीयीय। लिङ् भवति विप्रतिषेधेन।।
(4088 वार्तिकम्।। 2 ।।)

- अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात्-
(भाष्यम्) अनिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यः। किं कारणम्? अनिष्पन्नत्वात्। देवश्चेद् वृष्टो निष्पन्नाः शालयः। तत्र भवितव्यं संपत्स्यन्ते शालय इति।।
(4089 वार्तिकम्।। 3 ।।)
- सिद्धं तु भविष्यत्प्रतिषेधात्-
(भाष्यम्) सिद्धमेतत्। कथम्? भविष्यत्प्रतिषेधात्। यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति।। कश्चिदाह----देवश्चेद् वृष्टः संपत्स्यन्ते शालय इति। स उच्यते----मैवं वोचः, संपन्नाः शालयः इत्येवं ब्रूहि।।
(4090 वार्तिकम्।। 4 ।।)
- हेतुभूतकालसंप्रेक्षितत्वाद्वा-
(भाष्यम्) हेतुभूतकालसंप्रेक्षितत्वाद्वा पुनः सिद्धमेतत्। हेतुभूतकालं वर्षम्। वर्षकाला च क्रिया।
(आक्षेपभाष्यम्)
यदि तर्हि निष्पन्नोर्थः, किं निष्पन्नकार्याणि न क्रियन्ते? कानि? भोजनादीनि।।
(समाधानभाष्यम्)
अन्यदिदानीमेतदुच्यते----किं निष्पन्नकार्याणि न क्रियन्ते इति। यत्तु तन्निष्पन्नोर्थो न निष्पन्न इति। स निष्पन्नोर्थः, अवश्यं खल्वपि कोष्ठगतेष्वपि शालिषु अवहननादीनि प्रतीक्ष्याणि।। एवमिहापि निष्पन्नोर्थः। अवश्यं तु जननादीनि प्रतीक्ष्याणि।।
(4091 वार्तिकम्।। 5 ।।)
- अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात्-
(भाष्यम्) अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः। कूपोस्ति कूपो भविष्यति कूपो भविता कूपोभूत् कूप आसीत् कूपो बभूवेति।
(प्रश्नभाष्यम्)
कथं पुनर्ज्ञायते भवन्त्या एषोर्थ इति? कर्तुर्विद्यमानत्वात् । कर्तात्र विद्यते। कथं पुन हि कथं पुनर्ज्ञायते कर्तात्र विद्यत इति । कूपोनेन कादचिद् दृष्टः । न चास्य कंचिदप्यपायं पश्यति। स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति कूपोत्रास्तीति।
(4-92 समाधानवार्तिकम्)
सिद्धं तु यथास्वकालं समुच्चारणात्।।
सिद्धमेतत् । कथम्। यथास्वकालमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति ।
(आक्षेपभाष्यम्)
कथं पुनर्ज्ञायते यथास्वकालमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति।
(4093 वार्तिकम् ।।7।।)
अवात्वात्।।
यन्न वा भाष्यन्ते।
असिद्धविपर्यासश्च ।।
असिद्ध विपर्यासः। न हीह कश्चित् कूपोस्ति इति प्रयोक्तव्ये कूपोभूदिति प्रयुङ्क्ते। किं पुनः कारणं न वा भाष्यन्ते
असिद्ध विपर्यासः। इह हि किंचिदिन्द्रियकर्म किंचिद् बुद्धिकर्म । इन्द्रियकर्म समासादनम्, बुद्धिकर्म व्यवसायः। एहं हि कश्चित्पाटलिपुत्रं जिगमिषुराह--योयमध्वा गन्तव्यः आपाटलिपुत्रात्। एतस्मिन्कूपो भविष्यति। अनद्यतने
कूपो भवेतिति। समासाद्य कूपोस्ततीति समासाद्यातिक्रम्य कूपोभूदिति। समासाद्यातिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति। तद्यदेन्द्रियकर्म तदैता विभक्तयः । यदा हि बुद्धिकर्म तदा वर्तमाना भविष्यति ।। क्षिप्रवचने।।133।।
-3-3-135- नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः (1119)
(574 लङ्लुटोर्निषेधविधिसूत्रम्।। 3 । 3 । 2 आ.4)
(आक्षेपभाष्यम्)
किमर्थमिमौ द्वौ प्रतिषेधावुच्येते। न अद्यतनवत् इत्येवोच्येत।
(4095 समाधानवार्तिकम्।। 1 ।।)
- नानद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधः-
(भाष्यम्) नानद्यतनवत् प्रतिषेधे लङ्लुटोः प्रतिषेधो द्रष्टव्यः।
(4096 हेतुवार्तिकम्।। 2 ।।)
- अद्यतनवद्वचने हि विधानम्-
(भाष्यम्) अद्यतनवद्वचने हि सति विधानमिदं विज्ञायेत।।
तत्र को दोषः?
(4097 दोषदर्शकवार्तिकम्।। 3 ।।)
- तत्र लड्विधिप्रसङ्गः-
(भाष्यम्) तत्र लड्विधिः प्रसज्येत।।

(4098 दोषान्तरवार्तिकम्।। 4 ।।)
- लुङ्लृटोश्चायाथाकालम्-
(भाष्यम्) लुङ्लृटोश्चायथाकालं प्रयोगः प्रसज्येत। लुङोपि विषये लृट् स्यात्। लृटश्च विषये लुङ् यथा स्यात्। अद्य पुनरयं द्वौ प्रतिषेधावुक्त्वा तूष्णीमास्ते। यथाप्राप्तमेवाद्यतने भविष्यति।। नानद्यतन।। 135 ।।
-3-3-136- भविष्यति मर्यादावचनेऽवरस्मिन् (1120)
(575 लुटो निषेधसूत्रम्।। 3 । 3 । 2 । आ.5)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते। न नानद्यतनवद् इत्येव सिद्धम्?
(4099 वार्तिकम्।। 1 ।।)
- भविष्यति मर्यादावचनेवरस्मिन्नित्यक्रियाप्रबन्धार्थम्-
(भाष्यम्) अक्रियाप्रबन्धार्थोयमारम्भः।।
(आक्षेपभाष्यम्)
किमुच्यते अक्रियाप्रबन्धार्थ इति, न पुनः क्रियाप्रबन्धार्थोऽपि स्यात्?
(5000 वार्तिकम्।। 2 ।।)
- क्रियाप्रबन्धार्थमिति चेद् वचनानर्थक्यम्-
(भाष्यम्) क्रियाप्रबन्धार्थमिति चेद वचनमनर्थकं भवति। सिद्धं क्रियाप्रबन्धे पूर्वेणैव।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्----अनहोरात्राणाम् इति वक्ष्यामि इति। इह मा भूद्----योयं त्रिंशद्रात्र आगामी तस्य योवरः पञ्चदशरात्र इति।
(5001 वार्तिकम्।। 3 ।।)
।। अहोरात्रप्रतिषेधार्थमिति चेन्नानिष्टत्वात्-
(भाष्यम्) अहोरात्रप्रतिषेधार्थमिति चेत्।। तन्न। किं कारणम्? अनिष्टत्वात्। अत्रपि नानद्यतनवत् इत्येवेष्यते।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनं भविष्यतीति वक्ष्यामीति। इह मा भूत्----योयमध्वा गत आपाटालिपुत्रात्तस्य यदवरं साकेतादिति।
(समाधानभाष्यम्)
नानिष्टत्वात्। अत्रापि नानद्यतनवदित्येवेष्यते।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनं मर्यादावचन इति वक्ष्यामीति। इह मा भूत---योयमध्वा अपरिमाणो गन्तव्यः तस्ययदवरं साकेतादिति।
नानिष्टत्वात्। अत्रापि नानद्यतनवदित्येवेष्यते।
-3-3-137- कालविभागे चानहोरात्राणाम् (1121)
(576 लुटोनिषेधविधिसूत्रम्।। 3 । 3 । 2 । आ. 6)
(5002 आक्षेपवार्तिकम्।। 1 ।।)
- अनहोरात्राणामिति तद्विभागे प्रतिषेधः-
(भाष्यम्) अनहोरात्राणामिति चेत्तद्विभागे प्रतिषेधो वक्तव्यः। योयं त्रिंशद्रात्र आगामी तस्य योवरोर्धमास इति।
(5003 वार्तिकम्।।1 ।।)
- तैश्च विभागे-
(भाष्यम्)तैश्च विभागे प्रतिषेधो वक्तव्यः। योयं मास आगामी तस्य योवरः पञ्चदशरात्रः।।
तद् द्वेष्यं विजानीयात्---अहोरात्राणामेवाहो रात्रैर्विभागे प्रतिषेधो भवतीति। तदाचार्यः सुहृद्भूत्वान्वाचष्टे अनहोरात्राणामिति तेषां विभागे तैश्च विभाग इति।। कालवि।। 137 ।।
-3-3-138- परस्मिन्विभाषा (1122)
(577 लुटो विकल्पिविधिसूत्रम्।। 3 । 3 । 2 आ.7)
(आक्षेपभाष्यम्)
कस्मिन्परस्मिन्?
(समाधानभाष्यम्)
कालविभागे।
कुत एतत्?
योगविभागकरणसार्मथ्यात्। परस्मि।। 138 ।।
-3-3-139- लिङ्निमित्ते लृङ् क्रियातिपत्तौ (1124)
(578 लृङ्विधिसूत्रम्।। 3 । 3 । 2 आ.8)
(5004 वार्तिकम्।। 1 ।।)

- साधनातिपत्तावपि-
(भाष्यम्) साधनातिपत्तावित्यपि वक्तव्यम्। इहापि यथा स्यात्। अभोक्ष्यत भवान्मांसेन यदि मत्समीप आसिष्यतेति।।
(आक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम्।।
(सिद्धान्तिभाष्यम्)
न वक्तव्यम्। नान्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति। साधनातिपत्तिश्चेत् क्रियातिपत्तिरपि भवति। तत्र क्रियातिपत्तावित्येव सिद्धम्।। लिङ्निमित्ते।। 139 ।।
-3-3-140- भूते च (1125)
(579 लृङ्विधिसूत्रम्।। 3 । 3 । 2 आ९ 9)
(5005 वार्तिकम्।। 1 ।।)
- भूते लृङुताप्यादिषु-
(भाष्यम्) भूते लृङ् उताप्यादिषु द्रष्टव्यः। उताध्यैष्यत। अप्यध्यैष्यत।। भूते।। 140 ।।
-3-3-141- वोताप्योः (1126)
(580 लृङ्विकल्पाधिकारसूत्रम्।। 3 । 3 । 2 आ.10)
(5006 वार्तिकम्।। 1 ।।)
- विभाषा गर्हाप्रभृतौ प्रागुतापिभ्याम्-
(भाष्यम्) विभाषा गर्हाप्रभृतौ प्रागुतापिभ्यामिति वक्तव्यम्। वोताप्योरि इति ह्युच्यमाने संदेहः स्यात्----प्राग्वोतापिभ्यां, सह वेति। तदाचार्यः सुहृद्भूत्वान्वाचष्टे-----विभाषा गर्हाप्रभृतौ प्रागुतापिभ्यामिति।। वोताप्योः।। 141 ।।
-3-3-142- गर्हायां लडपिजात्वोः (1127)
(581 लड्विधिसूत्रम्।। 3 । 3 । 2 आ.11)
(4007 वार्तिकम्।। 1 ।।)
- गर्हायां लड्विधानार्थक्यं क्रियाऽसमाप्तेर्विवक्षितत्वात्-
(भाष्यम्) गर्हायां लड्विधानमनर्थकम्। किं कारणम्? क्रियाया असमाप्तेर्विवक्षितत्वात्। क्रियाया अत्रासमाप्तिर्विवक्षिता। एष एव च नाम न्याय्यो वर्तमानः कालः यत्र क्रिया अपरिसमाप्ता भवति। तत्र वर्तमाने लड् इत्येव सिद्धम्।
(आक्षेपभाष्यम्)
यदि वर्तमाने लड् इत्येवमत्र लड् भवति।।
शतृशानचावपि तर्हि प्राप्नुतः।
(इष्टापत्तिभाष्यम्)
इष्येते च शतृशानचौ---अपि मां याजयन्तं पश्य। अपि मां याजयमानं पश्य।। गर्हायां ल।। 142 ।।
-3-3-145- अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि (1130)
582 लिङ् लृट्विधिसूत्रम्।। 3 । 3 । 2 आ.12)
(5008 अकिंवृत्तग्रहणानर्थक्यवार्तिकम्।। 1 ।।)
- किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम्-
(भाष्यम्) किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणमनर्थकम्। निवृत्तं किंवृत्ते इति, तस्मिन्नवृत्ते अविशेषण किंवृत्ते चाकिंवृत्ते च भविष्यति।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्---उपपदसंज्ञां वक्ष्यामीति।
(प्रश्नभाष्यम्)
उपपदसंज्ञावचने किं प्रयोजनम्?
(प्रयोजनभाष्यम्)
उपपदमतिङ् इति समासो यथा स्यात्।
(प्रयोजनप्रत्याख्यानभाष्यम्)
अतिङितिप्रतिषेधः प्राप्नोति।
(प्रयोजनभाष्यम्)
यदा तर्हि लृटः सत्संज्ञौ तदोपपदसंज्ञा भविष्यति।
(प्रयोजननिराकरणभाष्यम्)
भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्येते अविशेषविहितश्चायम्।। अनवक्लृप्त्य।। 145 ।।
-3-3-147- जातुयदोर्लिङ् (1132)
(583 लिङ्विधिसूत्रम्।। 3 । 3 । 2 आ.13 )
(5009 वार्तिकम्।। 1 ।।)

- जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम्-
(भाष्यम्) जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानं कर्तव्यम्। यदा भवद्विधः क्षत्रियं याजयेत्। यदि भवद्विधः क्षत्रियं याजयेत्।। जातुयदोर्लि।। 147 ।।
-3-3-151- शेषे लृडयदौ ,(1136)
(587 लृट्प्रत्ययविधिसूत्रम्।। 3 । 3 । 2 आ.14)
- चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वात्-
(भाष्यम्) चित्रीकरणे यदि प्रतिषेधोनर्थकः। किं कारणम्? अर्थान्यत्वात्, नहि यदावुपपदे चित्रीकरणं गम्यते। किं तर्हि? संभावनम्।। शेषे लृड।। 151 ।।
-3-3-156- हेतुहेतुमतोर्लिङ् (1141)
(585 लिङ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 2 आ.15)
(5011 वार्तिकम्।। 1 ।।)
- हेतुहेतुमतोर्लिङ् वा -
(भाष्यम्) हेतुहेतुमतोर्लिङ्वेति वक्तव्यम्। दक्षिणेन चेद्यायात्, न शकटं पर्याभवेत्। दक्षिणेन चेद्यास्यति, न शकटं पर्याभविष्यति।
(5012 वार्तिकम्।। 2 ।।)
- भविष्यदधिकारे च-
(भाष्यम्) भविष्यदधिकारे इति वक्तव्यम्। इह मा भूत्---वर्षतीति धावति। हन्तीति पलायत इति।।
(आक्षेपभाष्यम्)
अथेदानीं शतृशानचावत्र कस्मान्न भवतः?
(समाधानभाष्यम्)
देवत्रातो गलो ग्राह इति योगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः।। हेतुहेतुमतो।। 156 ।।
-3-3-157- इच्छार्थेषु लिङ्लोटौ (1142)
(586 लिङ्लोट्प्रत्ययविधिसूत्रम्।। 3 । 3 । 2 आ.16)
(5013 वार्तिकम्।। 1 ।।)
- इच्छार्थेषु लिङ् लोटौ कामप्रवेदने चेत्-
(भाष्यम्) कामप्रवेदनं चेद्गम्यत इति वक्तव्यम्। इह मा भूत्----इच्छन् कटं करोतीति।। इच्छार्थेषु।। 157 ।।
-3-3-161- विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् (1146)
(587 लिङ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 2 आ.17)
(आक्षेपभाष्यम्)
विध्यधीष्टयोः को विशेषः?
(समाधानभाष्यम्)
विधिर्नाम प्रेषणम्। अधीष्टं नाम सत्कारपूर्विका व्यापारणा।।
(आक्षेपभषाष्यम्)
अथ निमन्त्रणामन्त्रणयोः को विशेषः?
(समाधानभाष्यम्)
संनिहितेन निमन्त्रणं भवति। असंनिहितेनामन्त्रणम्।।
(समाधानबाधकभाष्यम्)
नैषोस्ति विशेषः। असंनिहितेनापि निमन्त्रणं भवति। संनिहितेन चामन्त्रणम्।।
(सिद्धान्तिसमाधानभाष्यम्)
एवं तर्हि यन्नियोगतः कर्तव्यं तन्निमन्त्रणम्।।
किं पुनस्तत्?
हव्यं कव्यं च। ब्राह्मणेन सिद्धं भुज्यताम् इत्युक्ते अधर्मः प्रत्याख्यातुः।। आमन्त्रणे कामचारः।
(आक्षेपभाष्यम्)
कथं पुनरिदं विज्ञायते, निमन्त्रणादीनामर्थ इति। आहो स्विन्निमन्त्रणादिषु गम्यमानेष्विति। कश्चात्र विशेषः?
(5014 प्रथमाक्षेपवार्तिकम्।। 1।।)
- निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात्-
(भाष्यम्) निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययो नोपपद्यते। किं कारणम्? प्रकृत्यभिहितत्वात्। प्रकृत्याऽभिहितः सोऽर्थ इति कृत्वा प्रत्ययो न प्राप्नोति।।
(5015 द्वितीयाक्षेपवार्तिकम्।। 2 ।।)

- द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात्-
(भाष्यम्) द्विवचनबहुवचनयोश्चाप्रसिद्धिः। किं कारणम्? एकार्थत्वात्। एकोयमर्थो निमन्त्रणं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति।।
(द्योत्यत्वपक्षाङ्गीकारभाष्यम्)
अस्तु तर्हि निमन्त्रणादिषु गम्यमानेष्विति।।
(द्योत्यत्वे दूषणभाष्यम्)
इहापि (तर्हि) प्राप्नोति---देवदत्तो भवन्तमामन्त्रयते, देवदत्तो भवन्तं निमन्त्रयते इति।।
(5016 समाधानवार्तिकम्।। 3 ।।)
- सिद्धं तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात्-
(भाष्यम्) सिद्धमेतत्। कथम्? द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे प्रत्ययो भवति इति वक्तव्यम्।। के पुनः प्रकृता अर्थाः? भावकर्मकर्तारः।।
(आक्षेपभाष्यम्)
एवमपि भवेत्सिद्धम्---प्राप्नोतु भवानामन्त्रणम् अनुभवतु भवानामन्त्रणम् इति यत्र द्वितीय आकाङ्क्ष्यते। इदं तु न सिध्यति---निमन्त्रयै, आमन्त्रयै इति।।
(समाधानभाष्यम्)
अत्रापि द्वितीय आकाङ्क्ष्यते। कः? निमन्त्रिरेव। निमन्त्रयै निमन्त्रणम्, आमन्त्रयै आमन्त्रणमिति।।
(प्रश्नभाष्यम्)
कथं पुनर्निमन्त्रिर्नाम निमन्त्रणमाकाङ्क्षेत्।।
(समाधानभाष्यम्)
दृष्टश्च भावेन भावयोगः। तद्यथा। इषिरिषिणा युज्यते, स्त्रीत्वं च स्त्रीत्वेन। यावता चात्रापि द्वितीय आकाङ्क्ष्यते।।
(वाचकत्वपक्षाङ्गीकारभाष्यम्)
अस्तु तर्हि निमन्त्रणादीनामर्थ इति।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वादिति।
(दूषणोद्धारभाष्यम्)
नैष दोषः। योसौ द्वितीय आकाङ्क्ष्यते स एव मम प्रत्ययार्थो भविष्यति।।
(वाचकत्वपक्षे द्वितीयदूषणस्मारणभाष्यम्)
अयं तर्हि दोषः---द्विवचनबहुवचनाप्रसिद्धिरेकार्थत्वादिति।।
(दूषणोद्धारभाष्यम्)
एषोप्यदोषः।
(5017 वार्तिकम्।। 4 ।।)
- सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम्-
(भाष्यम्) सुपां संख्या चैवार्थः कर्मादयश्च।।
(5018 वार्तिकम्।। 5 ।।)
- प्रसिद्धो नियमस्तत्र-
(भाष्यम्) प्रसिद्धस्तत्र नियमः।
(5019 वार्तिकम्।। 6 ।।)
- नियमः प्रकृतेषु वा-
(भाष्यम्) अथवा प्रकृतानर्थानपेक्ष्य नियमः।। के च प्रकृताः? एकत्वादयः। एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु। द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु। बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति।। विधिनिद्द।। 161 ।।
-3-3-163- प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च (1148)
(588 कृत्यलिङ्प्रत्ययविधिसूत्रम्।। 3 । 3 । 2 आ.18 )
(आक्षेपभाष्यम्)
किमर्थं प्रैषादिष्वर्थेषु कृत्या विधीयन्ते, न अविशेषेण विहिताः कृत्याः ते प्रैषादिषु भविष्यन्ति, अन्यत्र च।।
(5020 वार्तिकम्।। 1 ।।)
- प्रैषादिषु कृत्यानां वचनं नियमार्थम्-
(भाष्यम्) प्रैषादिषु कृत्यानां वचनं क्रियेत।। किं प्रयोजनम्? नियमार्थम्। नियमार्थोयमारम्भः। प्रैषादिष्वेव कृत्या यथा स्युरिति।।
(5021 वार्तिकम्।। 2 ।।)
- प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम्-
(भाष्यम्) प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टं प्राप्नोति। न हि प्रैषादिष्वर्थेष्वेव कृत्या इष्यन्ते। किं तर्हि? अविशेषेण। बुसोपेन्ध्यं तृणोपेन्ध्यम्। घनघात्यम्।।

(5022 वार्तिकम्।। 3 ।।)
- विध्यर्थं तु स्त्रियाः प्रागिति वचनात्-
(भाष्यम्) विध्यर्थे तु प्रैषादिषु कृत्यानां वचनम्। अयं प्रैषादिष्वर्थेषु लङ्विधीयते स विशेषविहितः सामान्यविहितान् कृत्यान्बाधेत्।।
(कृत्यसाधकभाष्यम्)
वासरूपेण कृत्या अपि भविष्यन्ति।।
(कृत्यबाधकभाष्यम्)
न स्युः। किं कारणम्? स्त्रियाः प्रागिति वचनात्। प्राक् स्त्रियां वाऽसरूपः।। प्रैषातिसर्ग।। 163 ।।
-3-3-167- कालसमयवेलासु तुमुन् (1152)
(589 तुमुन्प्रत्ययविधिसूत्रम्।। 3 । 3 । 2 आ.19)
(5023 वार्तिकम्।। 1 ।।)
- प्रथमान्तेषु-
(भाष्यम्) प्रथमान्तेष्विति वक्तव्यम्।। किं प्रयोजनम्? इह मा भूत्----काले भुङ्क्ते।।
(प्रश्नभाष्यम्)
तत्तर्हि वक्तव्यम्।
(समाधानभाष्यम्)
न वक्तव्यम्। प्रैषादिष्विति वर्तते। तच्चावश्यं प्रैषादिग्रहणमनुर्वत्यम्। प्रथमान्तेष्विति ह्युच्यमाने इहापि प्रसज्येत
कालः पचति भूतानि कालः संहरति प्रजाः इति।। कालसमय।। 167 ।।
इति श्रीमद्भगवत्पतञ्ञ्जलिविरचते व्याकरणमहाभाष्ये तृतीयस्याध्यास्य तृतीये पदे द्वितीयमाह्निकम्। पादश्च तृतीयः समाप्तः।।
-9-9-999-

# महाभाष्यम्/तृतीयोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/nmn
< महाभाष्यम् | तृतीयोऽध्यायः
-3-4-1- धातुसंबन्धे प्रत्ययाः (1162)
तृतीयाध्यायस्य चतुर्थपादे प्रथममाह्निकम्।।
(590 कालान्तरे प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.1)
(आक्षेपभाष्यम्)
प्रत्यय इति वर्तमाने पुनः प्रत्ययग्रहणं किमर्थम्।
(समाधानभाष्यम्)
अधातुप्रत्ययानामपि धातुसंबन्धे साधुत्वं यथा स्यात्। गोमानासीत्। गोमान्भवितेति।।
(प्रश्नभाष्यम्)
इह पश्यामः भूतकालो भविष्यत्कालेनाभिसंबध्यमानो भविष्यत्कालः संपद्यते। कस्मान्न भविष्यत्कालो भूतकालेनाभिसंबध्यमानो भूतकालः संपद्यते।
(5024 समाधानवार्तिकम्।। 1 ।।)
- धातुसंबन्धे प्रत्ययस्य यथाकालविधानात्सिद्धम्-
(भाष्यम्) धातुसंबन्धे यथाकालविहिता एवैते प्रत्ययाः। स्वेषु स्वेषु कालेषु प्रयुज्यन्ते।।
(आक्षेपभाष्यम्)
कथं तर्हि कालान्यत्वं गम्यते।।
(5025 समाधानवार्तिकम्।। 2 ।।)
- उपपदस्य तु कालान्यत्वम्-
(भाष्यम्) उपपदस्यैतत्कालान्यत्वम्।।
(आक्षेपभाष्यम्)
कुतो नु खल्वेतत्----अग्निष्टोमयाजीत्येतदुपपदं भवति, न पुनर्जनितेति?।
(समाधानभाष्यम्)
एवं तर्ह्यस्त्यादिभिर्योगे। अस्त्यादिविषयाः प्रत्ययाः साधव इति वक्ष्यामि।
(प्रश्नभाष्यम्)
के पुनरस्त्यादयः?।
(समाधानभाष्यम्)
अस्तिभूजनयः।।
(आक्षेपभाष्यम्)
एवमपि यदास्त्यादीनामेवास्त्यादिभिर्योगस्तदा न ज्ञायते कः कस्य कालमनुवर्तते इति।
भाविकृत्यमासीत्। पुत्रो जनिष्यमाण आसीत्।।
(समाधानभाष्यम्)
एवं तर्हि वाक्यमेवैतदेवं विषयं प्रयुज्यते। अग्निष्टोमयाजीत्येतत्तस्मिन्भविता। कस्मिन्योस्य पुत्रोजनिता। कदा। यदानेनाग्निष्टोमेनेष्टं भवति।। धातुसंबन्धे।। 1 ।।
-3-4-2- क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः (1163)
(591 कालान्तरे लोड्विधिसूत्रम्।। 3 । 4 । 1 आ.2)
(5026 वार्तिकम्।। 1 ।।)
- हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम्-
(भाष्यम्) हिस्वयोः परस्मैपदात्मनेपदग्रहण कर्तव्यम्। हिः परस्मैपदानां यथा स्यात्स्व आत्मनेपदानामिति।। किं प्रयोजनम्?। लादेशप्रतिषेधार्थम्। लादेशौ हिस्वौ मा भूतामिति।।
(प्रश्नभाष्यम्)
किं च स्यात्----यदि लादेशौ हिस्वौ स्याताम्।
(समाधानभाष्यम्)
तिङन्तं पदमिति पदसंज्ञा न स्यात्।।
(समाधानबाधकभाष्यम्)
मा भूदेवम्। सुबन्तं पदमिति पदसंज्ञा भविष्यति।

(आक्षेपभाष्यम्)
कथं स्वाद्युत्पत्तिः।
(5027 समाधानवार्तिकम्।। 2 ।।)
- लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम्-
(भाष्यम्) लकारः कृत् तस्य कृत्त्वात् कृत्प्रादिपदिकमिति प्रातिपदिकसंज्ञा तदाश्रया प्रतिपदिकाश्रया स्वाद्युत्पत्तिरपि भविष्यति।।
(आक्षेपभाष्यम्)
यदि स्वाद्युत्पत्तिः, सुपां श्रवणं प्राप्नोति।
(आक्षेपबाधकभाष्यम्)
अव्ययादिति सुबूलुक् भविष्यति।।
कथमव्ययत्वम्?।
विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपातोऽव्ययमिति अव्ययसंज्ञा।।
(दूषणभाष्यम्)
इह तर्हि स भवान् लुनीहि लुनीहीत्येवायं लुनाति तिङतिङः इति निघातो न प्राप्नोति।
(5028 प्रयोजनवार्तिकम्।। 3 ।।)
- समसंख्यार्थे च-
(भाष्यम्) समसंख्यार्थे च हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्। हिः परस्मैपदानां यथा स्यात्। स्व आत्मनेपदानाम्। व्यतिकरो माभूदिति।
(5029 प्रथमवार्तिकोक्तदूषणवारकवार्तिकम्।। 4 ।।)
- न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य-
(भाष्यम्) न वा हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्।। किं कारणम्?। तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य। यदयं वा च तध्वमोः इत्याह तज्ज्ञापयत्याचार्यः----पदादेशौ हिस्वौ इति।।
(5030 आक्षेपवार्तिकम्।। 5 ।।)
- तत्र पदादेशे पित्त्वाटोः प्रतिषेधः-
(भाष्यम्) तत्र पदादेशे पित्त्वस्याटश्च प्रतिषेधो वक्तव्यः। पित्त्वस्य तावत्----स भवान्लुनीहि लुनीहित्येवायं लुनाति। आटः खल्वपि---सोहं तुनीहि लुनीहीत्येवं लुनामि।
(पित्त्वप्रतिषेधानावश्यकत्वभाष्यम्)
पित्त्वस्य तावन्न वक्तव्यः। पित्त्वप्रतिषेधे योगविभागः करिष्यते। इह सोर्हि सेर्हिर्भवति। ततः अपिच्च अपिच्च
भवति यावान् हिर्नामेति।
(आट्प्रतिषेधानावश्यकत्वभाष्यम्)
आटश्चापि प्रतिषेधो न वक्तव्यः। आटि कृते साट्कस्यादेशो भविष्यति। इदमिह संप्रधार्यम्। आट् क्रियताम्, आदेश इति। किमत्र कर्तव्यम्?। परत्वादाडागमः।।
नित्य आदेशः। कृतेप्याटि प्राप्नोत्यकृतेपि प्राप्नोति।।
आडपि नित्यः। कृतेप्यादेशे प्राप्नोत्यकृतेपि।।
अनित्य आट्। अन्यस्य कृतेप्यादेशे प्राप्नोत्यन्यस्याकृतेपि प्राप्नोति शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति।।
आदेशोप्यनित्यः। अन्यस्य कृते आटि प्राप्नोति अन्यस्याकृते प्राप्नोति। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो
भवति। उभयोरनित्ययोः परत्वादाडागमः।। आटि कृते साट्कस्यादेशो भविष्यति।।
(आक्षेपभाष्यम्)
इदं तर्हि भुङ्क्ष्व भुङ्क्ष्व इत्येवं भुनजै इति श्नसोरल्लोपः इत्यकारलोपो न प्राप्नोति।
(आक्षेपपरिहारस्मारणभाष्यम्)
समसंख्यार्थत्वं चाप्यपरिहृतमेव।
(5061 समाधानवार्तिकम्।। 6 ।।)
- सिद्धं तु लोण्मध्यमपुरुषस्यैकवचनस्य क्रियासमभिहारे द्विर्वचनात्-
(भाष्यम्) सिद्धमेतत्।। कथम्?। लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवतः। इति वक्तव्यम्।।
(आक्षेपभाष्यम्)
केन विहितस्य क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनमुच्यते?।
(समाधानभाष्यम्)
एतदेव ज्ञापयत्याचार्यो भवति क्रियासमभिहारे लोट् इति। यदयं क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनं शास्ति।।
(ज्ञापकत्वनिरासभाष्यम्)
कुतो न खल्वेतत्----ज्ञापकादत्र लोड् भविष्यति। न पुनर्य एवासावविशेषविहितः स यदा क्रियासमभिहारे भवति तदा तस्य द्विर्वचनं भवतीति।।

(दूषणान्तरभाष्यम्)
लोण्मध्यमपुरुषैकवचन एव खल्वपि सिद्धं स्यात्। इमौ चान्यौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां वचनानामिष्येते।
(दूषणभाष्यम्)
सूत्रं च भिद्यते।
(समाधानभाष्यम्)
यथान्यासमेवास्तु।
(आक्षेपस्मारणभाष्यम्)
ननु चोक्तं हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थे समसंख्यार्थे चेति।
(समाधानभाष्यम्)
नैष दोषः।
(5032 वार्तिकम्।। 6 ।।)
- योगविभागात्सिद्धम्-
(भाष्यम्) योगविभागः करिष्यते-----क्रियासमभिहारे लोट् क्रियासमभिहारे लोड् भवति। ततो लोटो हिस्वौ लोटो हिस्वौ भवतः। लोडित्येबानुवर्तते लोटौ यौ हिस्वाविति।। कथम् वा च तध्वमोः इति?। वा च तध्वंभाविनो लोट इत्येवमेतद् विज्ञायते।। क्रियासमभिहारे।। 2 ।।
-3-4-4- यथाविध्यनुप्रयोगः पूर्वस्मिन् (1165)
(592 अनुप्रयोगविधिसूत्रम्।। 3 । 4 । 1 आ.3)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते।
(प्रयोजनभाष्यम्)
अनुप्रयोगो यथा स्यात्।।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। हिस्वान्तवमव्यक्तपदार्थकम् तेनापरिसमाप्तोर्थ इति कृत्वा अनुप्रयोगो भविष्यति।।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम् यथाविधीति वक्ष्यामीति।।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। समुच्चये सामान्यवचनस्य इति वक्ष्यति। तत्रान्तरेण वचनं यथा विध्यनुप्रयोगो भविष्यति।। यथाविध्व।। 4 ।।
-3-4-5- समुच्चये सामान्यवचनस्य (1166)
(593 अनुप्रयोगविधिसूत्रम्।। 3 । 4 । 1 । आ.4)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते।
(प्रयोजनभाष्यम्)
अनुप्रयोगो यथा स्यात्।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्। हिस्वान्तमनभिव्यक्तपदार्थकं तेनापरिसमाप्तोर्थ इति कृत्वानुप्रयोगो भविष्यति।
(प्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनं सामान्यवचनस्येति वक्ष्यामीति।।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। सामान्यवचनस्यानुप्रयोगोस्तु विशेषवचनस्येति। सामान्यवचनस्यैवानुप्रयोगो भविष्यति। लघुत्वात्।। समुच्चये सा।। 5 ।।
-3-4-8- उपसंवादाशङ्कयोश्च (1169)
(594 लेड्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.5)
(5033 आक्षेपवार्तिकम्।। 1 ।।)
- उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात्-
(भाष्यम्) उपसंवादाशङ्कयोर्वचनार्थकम्। किं कारणम्?। लिङर्थत्वात्। लिङर्थे लेट् इत्येव सिद्धम्।। कः पुनर्लिङर्थः?। केचित्तावदाहुः----हेतुहेतुमतोर्लिङ् इति। अपर आहुः----वक्तव्य एतैतस्मिन्विशेषे लिङ्। प्रयुज्यते हि लोके यदि मे भवानिदं कुर्याद्र, अहमपि त इदं दद्यामिति। उपसंवादा।। 8 ।।
-3-4-9- तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः (1170)
(अथाव्ययसंज्ञककृत्प्रकरणम्)
(595 सेप्रभृतिप्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आद्द6)

(आक्षेपभाष्यम्)
तुमर्थे इत्युच्यते कस्तुमर्थो नाम।
(समाधानभाष्यम्)
कर्ता तुमर्थः।
(समाधाननिरासभाष्यम्)
यद्येवं नार्थस्तुमर्थग्रहणेन येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना सयादयोपि भविष्यन्ति।।
(समाधानसाधकभाष्यम्)
एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्यः अस्त्यन्यः कर्तुस्तुमुनोर्थः इति।। कः पुनरसौ?। भावः।।
(आक्षेपभाष्यम्)
कुतो नु खल्वेतद्। भावे तुमुन् भविष्यति, न पुनः कर्मादिषु कारकेषु स्यादिति।।
(समाधानभाष्यम्)
ज्ञापकात्तावदयं कर्तुरपकृष्यते। न चान्यस्मिन्नर्थे आदिश्यते। अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ती ति स्वार्थे भविष्यति। तद्यथा। गुप्तिज्किद्भ्यः सन् यावादिभ्यः कन् इति। सोऽसौ स्वार्थेभवन् भावे भविष्यति। किमेतस्य ज्ञापने प्रयोजनम्---अव्ययकृतो भावे भवन्ति इत्येतन्न वक्तव्यं भवति।। तुमर्थे से।। 9 ।।
-3-4-19- उदीचां माङो व्यतीहारे (1180)
(596 क्त्वाप्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.7)
(नानुबन्धकृतमनेजन्तत्वम् इति परिभाषाज्ञापनाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं मेङः सानुवन्धकस्यात्वभूतस्य ग्रहणं क्रियते। न उदीचां मेङः इत्योवोच्येत्। तत्रायमप्यर्थः----उदीचां मेङः इति व्यतीहारग्रहणं न कर्तव्यं भवति। किं कारणम्। द्विषयो हि सः। व्यतीहारविषय एव मयतिः।।
(समाधानभाष्यम्)
एवं तर्हि सिद्धे सति यन्मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति तज्ज्ञापयत्याचार्यः नानुबन्धकृतमनेजन्तत्वं भवति इति।।
(आक्षेपभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम्?।
(समाधानभाष्यम्)
तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु पृथक्त्वनिर्देशोऽनाकारान्तत्वात् इत्युक्तम्, तन्न वक्तव्यं भवति।।
(आक्षेपभाष्यम्)
किमर्थं पुनरिदमुच्यते, न समानकर्तृकयोः पूर्वकाले इत्येव सिद्धम्।
(समाधानभाष्यम्)
अपूर्वकालार्थोयमारम्भः। पूर्वं ह्यसौ याचते पश्चादपमयते।। उदीचां माङो व्यतीहारे।। 19 ।।
-3-4-21- समानकर्तृकयोः पूर्वकाले (1182)
(597 क्त्वाप्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आद्द 8)
(आक्षेपभाष्यम्)
इह कस्मान्न भवति पूर्वं भूङ्क्ते पश्चाद् व्रजतीति।।
(समाधानभाष्यम्)
स्वशब्देनोक्तत्वान्न भवति।।
(आक्षेपभाष्यम्)
न तर्हीदानीमिदं भवति---पूर्वं भुक्त्वा ततो व्रजतीति।
(समाधानभाष्यम्)
नैतत् क्रियापौर्वकाल्यम्। किं तर्हि?। कर्तृपौर्वकाल्यमेतत्। पूर्वं ह्यसौ भुक्त्वान्येभ्यो भोक्तृभ्यः ततः पश्चाद् व्रजति अन्येभ्यो व्रजितृभ्यः।
(आक्षेपभाष्यम्)
इह कस्मान्न भवति। आस्यते भोक्तुमिति। कुतः कस्मान्न भवति?। किमासेः आहो स्विद् भुजेः।।
(आक्षेपभाष्यम्)
भुजेः कस्मान्न भवति,
(समाधानभाष्यम्)
अपूर्वकालत्वात्।
(आक्षेपभाष्यम्)
आसेस्तर्हि कस्मान्न भवति।
(समाधानभाष्यम्)

यस्मादत्र लङ् भवति।
(आक्षेपभाष्यम्)
एतदत्र प्रष्टव्यं लङत्र कथं भवतीति।
(समाधानभाष्यम्)
लट् चात्र वासरूपेण भविष्यति।
(5034 आक्षेपवार्तिकम्।। 1 ।।)
- समानकर्तृकयोरिति बहुष्वप्राप्तिः (द्विवचननिर्देशात्)-
(भाष्यम्) समानकर्तृकयोरिति बहुषु क्त्वा न प्राप्नोति। स्नात्वा भुक्त्वा पीत्वा व्रजतीति।।
किं पुनः कारणं न सिध्यति?।
द्विवचननिर्देशात्।
द्विवचनेनायं निर्देशः क्रियते। तेन द्वयोरेव पौर्वकाल्ये स्याद् बहूनां न स्यात्।।
(5035 समाधानवार्तिकम्।। 2 ।।)
- सिद्धं तु क्रियाप्रधानत्वात्-
(भाष्यम्) सिद्धमेतत्। कथम्?। क्रियाप्रधानत्वात्। क्रियाप्रधानोयं निर्देशः। नात्र निर्देशस्तन्त्रम्।।
(प्रश्नभाष्यम्)
कथं पुनस्तेनैव निर्देशः क्रियते तच्चातन्त्रं स्यात्। तत्कारी च भवान् तद्द्वेषी च।।
(उत्तरभाष्यम्)
नान्तरीयकत्वादत्र द्विवचनेन निर्देशः क्रियते। अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः। तद्यथा---कश्चिदन्नार्थीशालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपालालान्युत्सृजति। तथा----कश्चित् मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात्स
यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति। एमिहापि नान्तरीयकत्वाद् द्विवचनेन निर्देशः क्रियते। न ह्यत्र निर्देशस्तन्त्रम्।।
(समाधानबाधकभाष्यम्)
एवमपि लोकविज्ञानान्न सिध्यति। तद्यथा----लोके ब्राह्मणानां पूर्व आनीयतामित्युक्ते सर्वपूर्व आनीयते एवमिहापि सर्वपूर्वायाः क्रियायाः प्राप्नोति।।
(5063 समाधानवार्तिकम्।। 3 ।।)
- अनन्त्यवचनात्तु सिद्धम्-
(भाष्यम्) समानकर्तृकयोरनन्त्यस्येति वक्तव्यम्-
(आक्षेपभाष्यम्)
सिध्यति सूत्रं तर्हि भिद्यते।।
(समाधानभाष्यम्)
यथान्यासमेवास्तु। (दूषणस्मारणभाष्यम्)
ननु चोक्तं समानकर्तृकयोरिति बहुष्वप्राप्तिः इति।
(परिहारस्मारणभाष्यम्)
परिहृतमेतत्--- सिद्धं तु क्रियाप्रधानत्वाद् इति।।
(परिहारासंभावभाष्यम्)
नैष दोषः। सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यम्। स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति। एवं च कृत्वा प्रयोगोऽप्यनियतो भवति। स्नात्वा भुक्त्वा पीत्वा व्रजति। पीत्वा भुक्त्वा स्नात्वा व्रजति।।
(5037 आक्षेपवार्तिकम्।।4 ।।)
- व्यादाय स्वपितीत्युपसंख्यानमपूर्वकालत्वात्-
(भाष्यम्) व्यादाय स्वपितीत्युपसंख्यानं कर्तव्यम्। किं पुनः कारणं न सिध्यति। अपूर्वकालत्वात्। पूर्वं ह्यसौ
स्वपिति पश्चाद्व्याददाति।
(5038 समाधानवार्तिकम्।।5 ।।)
- न वा स्वप्नस्यापरकलात्वात्-
(भाष्यम्) न वा वक्तव्यम्। किं कारणम्। स्वप्नस्यापरकालत्वात्। अपरकालः स्वप्नः अवश्यमसौ व्यादाय मुहूर्तमपि स्वपिति।। समानकर्तृक।। 21 ।।
-3-4-24- विभाषाग्रे प्रथमपूर्वेषु (1185)
(597 क्त्वाणमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.9)
(आक्षेपभाष्यम्)
किमयं प्राप्ते विभाषा आहोस्विदप्राप्ते।।

(प्रत्याक्षेपभाष्यम्)
कथं च प्राप्ते, कथं चाप्राप्ते।
(प्रत्याक्षेपसमाधानभाष्यम्)
आभीक्ष्ण्य इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते।। किं चातः?।
(प्राप्तविभाषायां दूषणम्)
यदि प्राप्ते।आधीक्ष्ण्येऽनिष्टा विभाषा प्राप्नोति। अन्यत्र चेष्टा न सिध्यति।
(अप्राप्तविभाषायां दूषणभाष्यम्)
अथाप्राप्ते-----
(5039 अप्राप्तविभाषायां दूषणवार्तिकम्।। 1 ।।)
- अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः-
अग्रादिषु अप्राप्तविधेः समासस्य प्रतिषेधो वक्तव्यः।।
(प्रश्नभाष्यम्)
स तर्हि प्रतिषेधो वक्तव्यः।
(समाधानभाष्यम्)
न वक्तव्यः।
(5040 भाष्यवार्तिकम्।। 2 ।।)
- उक्तं च-
(भाष्यम्) उक्तमेतत्। अमैवाव्ययेनेत्यत्र एवकारकरणस्य प्रयोजनम्-----अमैवाव्ययेन यत्तुल्यविधानमुपपदं तत्र समासो यथा स्याद्, अमा चान्येन च यत्तुल्यविधानमुपपदं तत्र मा भूदिति।। विभाषाग्रे।। 24 ।।
-3-4-26- स्वादुमि णमुल् (1187)
(598 णमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 । आद्द 10)
(आक्षेपभाष्यम्)
किमर्थं स्वादुमि मकारान्तनिपातनं क्रियते । न, खमुञ्प्रकृतः सोऽनुवर्तिष्यते?।
(5041 प्रयोजनवार्तिकम्।। 1 ।।)
- स्वादुमि मान्तनिपातनमीकाराभावार्थम्-
(भाष्यम्) स्वादुमि मान्तनिपातनं क्रियते इर्काराभावार्थम्। इर्कारो मा भूदिति। स्वाद्वीं कृत्वा यवागूं भूङ्क्ते। स्वादुंकारं यवागूं भुङ्क्त इति।
(5042 प्रयोजनान्तरवार्तिकम्।। 2 ।।)
- च्व्यन्तस्य च मकारान्तर्थम्-
(भाष्यम्) च्व्यन्तस्य च मकारान्तत्वं यथा स्यात्। अस्वादु स्वादु कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते।।
(5043 आक्षेपवार्तिकम्।। 3 ।।)
।। आच तुमुनः प्रत्ययाः समानाधिकरणे।।
।। ।। आच तुमुनः प्रत्ययाः समानाधिकरणे मवन्तीति वक्तव्यम्।। केन?। अनुप्रयोगेण।। किं प्रयोजनम्?। स्वादुंकारं यवागूर्भुज्यते देवदत्तेनेति देवदत्ते तृतीया यथा स्यात्।।
(आक्षेपभाष्यम्)
किं च कारणं न स्यात्?।
(कारणप्रदर्शनभाष्यम्)
णमुलाभिहितः कर्तेति।।
(तृतीयासाधकभाष्यम्)
ननु च भुजिप्रत्ययेन अनभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विदिर्भविष्यति तृतीया।
(द्वितीयापत्तिभाष्यम्)
यदि सत्यभिधाने चानभिधाने च कुतश्चिदभिधानमिति कृत्वा अनभिहिताश्यो विधिर्भविष्यति तृतीया। यवाग्वां द्वितीया प्राप्नोति। किं कारणम्। णमुलानभिहितं कर्मेति।।
(द्वितीयाबाधकभाष्यम्)
यदि पुनरयं कर्मणि विज्ञायेत।
(द्वितीयानुपपत्तिभाष्यम्)
नैवं शक्यम्। इह हि स्वादुकारं यवागूं भुङ्क्ते देवदत्त इति यवाग्वं द्वितीया न स्यात्। किं कारणम्। णमुलाभिहितं कर्मेति।
(द्वितीयानुपपत्तिभाष्यम्)
ननु च भुजिप्रत्ययेनानभिहितं कर्मेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया।
(तृतीयोपपत्तिभाष्यम्)

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया देवदत्ते तृतीया प्राप्नोति। किं कारणम्?। णमुलानभिहितः कर्तेति।
(प्रश्नभाष्यम्)
अथानेन क्त्वायामर्थः। पक्त्वौदनो भुज्यते देवदत्तेनेति।।
(उत्तरभाष्यम्)
बाढमर्थः। देवदत्ते तृतीया यथा स्यात्। किं च कारणं च स्यात्?। क्त्वयाभिहितः कर्तेति।।
(तृतीयासाधकभाष्यम्)
ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया।।
(द्वितीयापत्तिभाष्यम्)
यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया। ओदने द्वितीया प्राप्नोति।। किं कारणम्?। क्त्वयानभिहितं कर्मेति।।
(द्वितीयापत्तिवारणभाष्यम्)
यदि पुनरयं कर्मणि विज्ञायेत।।
(द्वितीयानुपपत्तिभाष्यम्0
नैवं शक्यम्। इह हि पक्त्वा ओदनं भुङ्क्ते देवदत्त इति ओदने द्वितीया न स्यात्।।
किं च कारणं न स्यात्?।
क्त्वयाऽभिहितं कर्मेति।।
(द्वितीयोपपत्तिभाष्यम्)
ननु च भुजिप्रत्ययेन अनभिहितं कर्मेति कृत्वा अनभिहिताश्रया विभक्तिर्भविष्यति द्वितीया।।
(तृतीयापत्तिभाष्यम्)
यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया। ओदने द्वितीया प्राप्नोति।। किं कारणम्?। क्त्वयानभिहितः कर्तेति।
(प्रश्नभाष्यम्)
अथानेन तुमुन्यर्थः। भोक्तुमोदनः पच्यते देवदत्तेनेति।।
(उत्तरभाष्यम्)
बाढमर्थः। देवदत्ते तृतीया यथा स्यात्।।
किं च कारणं न स्यात्?। तुमुनाभिहितः कर्तेति।।
(तृतीयोपपत्तिभाष्यम्)
ननु च पचिप्रत्ययेनानभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया।।
(द्वितीयापत्तिभाष्यम्)
यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भिविष्यति तृतीया। ओदने द्वितीया प्राप्नोति। किं कारणम्?। तुमुनानभिहितं कर्मेति कृत्वा।।
(द्वितीयावारणभाष्यम्0
यदि पुनरयं कर्मणि विज्ञायेत।।
(द्वितीयानुपपत्तिभाष्यम्)
नैवं शक्यम्। इह हि भोक्तुमोदनं पचति देवदत्त इति ओदने द्वितीया न स्यात्।
किं च कारणं न स्यात्?। तुमुनाभिहितं कर्मेति।।
(द्वितीयोपपत्तिभाष्यम्)
ननु च पचिप्रत्ययेनानभिहितं कर्मेति कृत्वा अनभिहिताश्रयो विधिर्भवति। द्वितीया।।
(तृतीयापत्तिभाष्यम्)
यदि सत्यभिधाने चानभिधाने च कृतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया। देवदत्ते तृतीया प्राप्नोति। किं कारणम्?। तुमुनानभिहितः कर्तेति।।
(प्रश्नभाष्यम्)
अथ अनेनेहार्थः। पक्त्वौदनं ग्रामो गम्यते देवदत्तेनेति।
(अभ्युपगम भाष्यम्)
बाढमर्थः। देवदत्ते तृतीया यथा स्यात्।
किं च कारणं न स्यात्?।
क्त्वायाभिहितः कर्तेति।।
(तृतीयोपपत्तिभाष्यम्)

ननु च गमिप्रत्ययेनानभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया।
(द्वितीयापत्तिवारणभाष्यम्)
यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया।। यदुक्तमोदने द्वितीया प्राप्नोतीति स इह दोषो न जायते।
(प्रश्नभाष्यम्)
तत्तर्हि वक्तव्यम् आच तुमुनः समानाधिकरणे इति।।
(उत्तरभाष्यम्)
न वक्तव्यम्। अव्ययकृतो भावे भवन्तीति भावे भविष्यन्ति।।
(प्रश्नभाष्यम्)
किं वक्तव्यमेतत्।
(उत्तरभाष्यम्)
नहि। कथमनुच्यमानं गंस्यते। तुमर्थे इति वर्तते।।
तुमर्थश्च कः।
भावः।। स्वादुमि।। 26 ।।
-3-4-32- वर्षप्रमाण ःढ्य;लोपश्चास्यान्यतरस्याम् (1193)
(599 णमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आद्द 11)
(आक्षेपभाष्यम्)
ःढ्य;लोपश्चास्यान्यतरस्यां ग्रहणं शक्यमकर्तुम्।
(प्रत्याक्षेपभाष्यम्)
कथं गोष्पदप्रं वृष्टो देव इति।।
(प्रत्याक्षेपसमाधानभाष्यम्)
प्रातः पूरणकर्मा। तस्मादेष कः।।
(अनिष्टापत्तिभाष्यम्)
यदि कः, विभक्तीनां श्रवणं प्राप्नोति।।
(इष्टापत्तिभाष्यम्)
श्रूयन्त एवात्र विभक्तयः। तद्यथा---एकेन गोष्यदप्रेणेति।। वर्षप्रमा।। 32 ।।
-3-4-37- करणे हनः (1198)
(600 णमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.12)
- हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात्-
(भाष्यम्) हनः करणे वचनमनर्थकम्। किं कारणम्?। हिंसार्थेभ्यो णमुल्विधानात्। हिंसार्थेभ्यो णमुल्विधीयते। तेनैव सिद्धम्।।
(5045 आक्षेपबाधकवार्तिकम्।। 2।।)
- अर्थवत्त्वाहिंसार्थस्य विधानात्-
(भाष्यम्) अर्थवत्तु हन्तेर्णमुल्वचनम्। कोर्थः?। अहिंसार्थस्य विधानात्। अहिंसार्थस्य हन्तेर्णमुल् यथा स्यात्।।
(आक्षेपभाष्यम्)
अस्ति पुनरयं क्वचिद्धन्तिरहिंसार्थः यदर्थोविधिः स्यात्।।
(समाधानभाष्यम्)
अस्तीत्याह। पाण्युपघातं वेदिं हन्ति।।
(5046 प्रत्योजनान्तरवार्तिकम्।। 3।।)
?B- नित्यसमासार्थं च-
(भाष्यम्) नित्यसमासार्थस्च हिंसार्थादपि हन्तेरनेन विधिरेषितव्यः।
(आक्षेपभाष्यम्)
कथं पुनरिच्छतापि हिंसार्थाद्धन्तेरनेन विधिर्लभ्यः। अनेनास्तु तेन वेति तेन स्याद्विप्रतिषेधेन।।
(समाधानभाष्यम्)
हन्तेः पूर्वविप्रतिषेधो वार्तिकेनैव ज्ञापितः। यदयं नित्यसमासार्थे चेत्याह। तज् ज्ञापयत्याचार्यः----हिंसार्थादपि हन्तेरनेन विधिर्भवतीति।। करणे इनः।। 37 ।।
-3-4-41- अधिकरणे बन्धः (1202)
(601 णमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.13)
(आक्षेपभाष्यम्)
इह कस्मान्न भवति ग्रामे बन्ध इति।।

(समाधानभाष्यम्)
एवं वक्ष्वामि अधिकरणे बन्धः संज्ञायाम् ततः कत्रोर्जीवपुरषयोर्नशिबहोः इति।
(आक्षेपभाष्यम्)
कथमट्टालिकाबन्धं बद्धः। चण्डालिकाबन्धं बद्धः?
(समाधानभाष्यम्)
उपमाने कर्मणि च इत्येवं भविष्यति।। अधिकरणे।। 41 ।।
-3-4-60- तिर्यच्यपवर्गे (1221)
(602 क्त्वाणमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आद्द 14)
(आक्षेपभाष्यम्)
अयुक्तोयं निर्देशः। तिरश्चीति भवितव्यम्।।
(समाधानभाष्यम्)
सौत्रो निर्देशः।। तिर्यच्य।। 60 ।।
-3-4-62- नाधार्थप्रत्यये च्व्यर्थे (1223)
(603 क्त्वाणमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 आ.15)
(आक्षेपभाष्यम्)
अर्थग्रहणं किमर्थम्?।
(समाधानभाष्यम्)
नाधाप्रत्यय इतीयत्पुच्यमाने इहैव स्यात्----द्विधाकृत्य। इह च न स्यात्----द्वैधं कृत्य। अर्थग्रहणे पुनः क्रियमाणे न दोषो भवति। नाधाप्रत्यये च सिद्धं भवति। यश्चान्यस्तेन समानार्थः।
(आक्षेपभाष्यम्)
अथ प्रत्ययग्रहणं किमर्थम्?।
(समाधानभाष्यम्)
इह हि मा भूत्---हिरुक् कृत्वा पृथक् कृत्वा।। नाधार्थ।। 62 ।।
-3-4-64- अन्वच्यानुलोम्ये (1225)
(604 क्त्वाणमुल्प्रत्ययविधिसूत्रम्।। 3 । 4 । 1 . 16)
(आक्षेपभाष्यम्)
अयुक्तोयं निर्देशः। अनूचीति भवितव्यम्।
(समाधानभाष्यम्)
सौत्रोयं निर्देशः।। अन्वच्या।। 64 ।।
(अव्ययकृतः समासाः)
-3-4-67- कर्तरि कृत् (1228)
(अथ कृतादीनां शक्तिबोधकप्रकरणम्)
(605 कृत्प्रत्ययशक्तिबोधकसूत्रम्।। 3 । 4 । 1 आ.17)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते।
(5047 समाधानवार्तिकम्।। 1 ।।)
- कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात्-
(भाष्यम्) कर्तरि कृतो भवन्तीत्युच्यते। (किं कारणम्?) अनादेशे स्वार्थविज्ञानात्। अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति। तद्यथा----गुप्तिज्किद्भ्यः सन् यावादिभ्यः कन्निति। एवमिमे प्रत्ययाः कृतः स्वार्थे स्युः। स्वार्थे मा भूवन्। कर्तरि यथा स्युः।। एवमर्थमिदमुच्यते।।
(प्रयोजननिरासभाष्यम्)
नैतदस्ति प्रयोजनम्।। यमिच्छति स्वार्थे, आह तं भावे घञ् भवतीति।।
(प्रयोजनभाष्यम्)
कर्मणि तर्हि मा भूवन्निति।
(प्रयोजननिरासभाष्यम्)
कर्मण्यपि यमिच्छत्याह तं धः कर्मणि ष्ट्रन् इति।
(प्रयोजनभाष्यम्)
करणाधिकरणयोस्तर्हि मा भूवन्निति।
(प्रयोजननिरासभाष्यम्)
करणाधिकरणयोरपि यमिच्छत्याह तं ल्युट् करणाधिकरणयोर्भवति इति।

(प्रयोजनभाष्यम्)
संप्रदानापादानयोस्तर्हि मा भूवन्निति।
(प्रयोजननिरासभाष्यम्)
संप्रदानापादानयोरपि यमिच्छत्याह तं दाशगोघ्नौ संप्रदाने भीमादयोपादाने इति। य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेण वचनं कर्तर्येव भविष्यति।।
(प्रयोजनभाष्यम्)
तदेव तर्हि प्रयोजनम्। स्वार्थे मा भूवन्निति।
(प्रयोजननिरासस्मारणभाष्यम्)
ननु चोक्तं स्वार्थे यमिच्छत्याह तं भावे घञ्भवतीति।
(प्रयोजननिरासासंभवभाष्यम्)
अन्यः स भावो बाह्यः प्रकृत्यर्थात्। अनेनेदानीमाभ्यन्तरे भावे स्युः। तत्र मा भूवन्निति कर्तृग्रहणम्।।
(आक्षेपभाष्यम्)
कः पुनरेतयोर्भावयोर्विशेषः।
(समाधानभाष्यम्)
उक्तो भावभेदो भाष्ये।
(काकुप्रश्नभाष्यम्)
अस्ति प्रयोजनमेतत्।
(समाधानभाष्यम्)
किं तर्हीति।
(5048 आक्षेपवार्तिकम्।। 2 ।।
- तत्र ख्युनादिप्रतिषेधो नानावाक्यत्वात्-
(भाष्यम्) तत्र ख्युनादीनां प्रतिषेधो वक्तव्यः। ख्युनादयः कर्तरि मा भूवन्निति।।
(आक्षेपबाधकभाष्यम्)
ननु च करणे ख्युनादयो विधीयन्ते तेन कर्तरि न भविष्यन्ति।।
(आक्षेपसाधकभाष्यम्)
तेन च करणे स्युरनेन च कर्तरि।
(आक्षेपबाधकभाष्यम्)
ननु चापवादत्वात् ख्युनादयो बाधकाः स्युः।।
(आक्षेपसाधकभाष्यम्)
न स्युः।। किं कारणम्?। नानावाक्यत्वाद्। नानावाक्यं तच्चेदं च। समाने वाक्ये चापवादैरुत्सर्गा बाध्यन्ते। नानावाक्यत्वाद्बाधनं न प्राप्नोति।
(5049 समावेशवार्तिकम्।। 3 ।।)
- तद्वच्च कृत्येष्वेवकारकरणम्(तच्च भव्याद्यर्थम्)-
(भाष्यम्) एवं च कृत्येष्वेवकारः क्रियते तयोरेव कृत्यक्तखलर्था इति भावे चाकर्मकेभ्य इति।
किं प्रयोजनम्?।
तच्च भव्याद्यर्थम्। भव्यादिषु समावेशः सिद्धो भवति। गेयो माणवकः साम्नाम्।। गेयानि माण वकेन सामानीति।।
(5050 असमावेशवार्तिकम्।। 4 ।।)
- ऋषिदेवतयोस्तु कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य-
(भाष्यम्) यदयं कर्तरि चर्षिदेवतयोः इति सिद्धे सति समावेशार्थे चकारं शास्ति तज्ज्ञापयत्याचार्यः----न भवति समावेशः इति।।
(आक्षेपभाष्यम्)
किमर्थे तर्हि कृत्येष्वेवकारः क्रियते?
(5051 वार्तिकम्।। 5 ।।)
- एवकारकरणं च चार्थे तच्च भव्याद्यर्थम्-
(भाष्यम्) एवकारकरणं च चार्थे द्रष्टव्यम्। तयोर्भावकर्मणोः कृत्या भवन्ति भव्यादीनां कर्तरि च।।
किं प्रयोजनम्।
तच्च भव्याद्यर्थं, भव्यादिषु समावेशः सिद्धो भवति। गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति।
(असमावेशवार्तिकनिरासभाष्यम्)
यत्तावदुच्यते--- ऋषिदेवतयोः कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य इति।। नैतज्ज्ञापकसाध्यम्-----अपवादैरुत्सर्गा बाध्यन्ते इति।। एष एव न्यायः----यदुतापवादैरुत्सर्गा बाध्येरन्।।
(दूषणस्मारकभाष्यम्)

ननु चोक्तम्। नानावाक्यत्वाद् बाधनं न प्राप्नोति इति।। न विदेशस्थमिति कृत्वातो नानावाक्यं भवति।
(समाधानभाष्यम्)
विदेशस्थमपि सदेकं वाक्यं भवति। तद्यथा द्वितीयेऽध्याये लुगुच्यते, तस्य चतुर्थषष्ठ्योरलुगुच्यतेऽपवादः।।
(पूर्ववार्तिकदूषणभाष्यम्)
यदप्युच्यते एवकारकरणं च चार्थे इति।। कथं पुनरन्यो नामान्यस्यार्थे विद्यते। कथमेवकारश्चार्थे वर्तते। स एष एवकारः स्वार्थे वर्तते।
(आक्षेपभाष्यम्)
किं प्रयोजनम्।
(समाधानभाष्यम्)
ज्ञापकार्थम्।
(अनुयोगभाष्यम्)
किं ज्ञाप्यते?
(समाधानभाष्यम्)
एतज् ज्ञापयत्याचार्यः इत उत्तरं समावेशो भवति इति।।
(अनुयोगभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम्।
(समाधानभाष्यम्)
तच्च भव्याद्यर्थम्।
भव्यादिषु समावेशः सिद्धो भवति। गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति।।
(आक्षेपभाष्यम्)
यद्येतज्ज्ञाप्यते इहापि समावेशः प्राप्नोति---दाशगोघ्नौ संप्रदाने भीमादयोपादान इति।
(समाधानभाष्यम्)
अत्रापि सिद्धं भवति। यदयम् आदिकर्मणि क्तः कर्तरि च इति सिद्धे समावेशे, समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यः प्रागमुतः समावेशो भवति इति।।
(अनुयोगभाष्यम्)
किं पुनरयं प्रत्ययनियमः धातोः परः अकारः अकशब्दो वा नियोगतः कर्तारं ब्रुवन् कृत्संज्ञश्च प्रत्ययसंज्ञश्चेति।।
(भाष्यम्) आहोस्वित्संज्ञानियमो धातोः परः अकारः अकशब्दो वा स्वभावतः कर्तारं ब्रुवन् कृत्संज्ञश्च भवति प्रत्ययसंज्ञश्चेति।।
(तटस्थस्य विशेषजिज्ञासाभाष्यम्)
कश्चात्र विशेषः।
(5052 संज्ञानियमवादिनः प्रत्ययनियमे दूषणवार्तिकम्।। 6 ।।
- तत्र प्रत्ययनियमेऽनिष्टप्रसङ्गः-
(भाष्यम्) तत्र प्रत्ययनियमे सति अनिष्टं प्राप्नोति। काष्ठभिदब्राह्मणः। वलभिदब्राह्मणः एषोपि नियोगतः कर्तारं ब्रुवन् कृत्संज्ञश्च स्यात् प्रत्ययसंज्ञश्चेति।
(5053 वार्तिकम्।। 7 ।।)
- संज्ञानियमे सिद्धम्-
(भाष्यम्) संज्ञानियमे सति सिद्धं भवति।
(प्रत्ययनियमवादिभाष्यम्)
यदि संज्ञानियमः।
(5054 दूषणवार्तिकम्।। 8 ।।)
- विभक्तादिषु दोषः-
(भाष्यम्) विभक्ता भ्रातरः पीता गाव इति न सिध्यति।। प्रत्ययनियमे पुनः सति परिगणिताभ्यः प्रकृतिभ्यः परः क्तो नियोगतः कर्तारमाह। न चेमास्तत्र परिगण्यन्ते प्रकृतयः।।
(5055 संज्ञानियमवादिवार्तिकम्।। 9 ।।)
- विभक्तादिषु चाप्राप्तिः प्रकृतेः प्रत्ययपरवचनात्-
(भाष्यम्) विभक्तादिषु च प्रत्ययनियमस्याप्राप्तिः। किं कारणम्?। प्रकृतेः प्रत्ययपरवचनात्। परिगणिताभ्यः प्रकृतिभ्यः परः क्तः स्वभावतः कर्तारमाह। न चेमास्तत्र परिगण्यन्ते।।
(आक्षेपभाष्यम्)
न तर्हीदानीमयं साधुर्भवति?।
(समाधानभाष्यम्)
भवति साधुर्न तु कर्तरि।

(प्रश्नभाष्यम्)
कथं तर्हि कर्तृत्वं गम्यते।
(समाधानभाष्यम्)
अकारो मत्वर्थीयः। विभक्तमेषामस्तीति विभक्ताः पीतमेषामस्तीति पीता इति।।
(समाधानान्तरभाष्यम्)
अथ वा उत्तरपदलोपोत्र द्रष्टव्यः----विभक्तधनाः विभक्ताः पीतोदकाः पीता इति।। कर्तरि कृत्।। 67 ।।
-3-4-69- लः कर्मणि च भावे चाकर्मकेभ्यः (1230)
(606 लकारशक्तिबोधकसूत्रम्।। 3 । 4 । 1 आ. 18)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते।
(समाधानभाष्यम्)
ल एतेषु साधनेषु यथा स्यात्। कर्तरि कर्मणि च भावे चाकर्मकेभ्य इति।
(समाधानबाधकभाष्यम्)
नैतदस्ति प्रयोजनम्। भावकर्मणोः आत्मनेपदं विधीयते, शेषात्कर्तरिपरस्मैपदम्। एतावांश्च लकारःउयदुत परस्मैपदम्, आत्मनेपदं च। स चायमेवं विहितः।।
(समाधानवार्तिकावतरणभाष्यम्)
अत उत्तरं पठति----
(5056 समाधानवार्तिकम्।। 1 ।।)
- लग्रहणं सकर्मकनिवृत्त्यर्थम्-
(भाष्यम्) लग्रहणं क्रियते (किं प्रयोजनम्?) सकर्मकनिवृत्त्यर्थम्। सकर्मकाणां भावे लो मा भूदिति।।
(सूत्रप्रत्याख्यानभाष्यम्)
यदि पुनस्तत्रैवाकर्मकग्रहणं क्रियते।।
(सूत्रारम्भभाष्यम्)
तत्तत्राकर्मकग्रहणं कर्तव्यम्।।
(सूत्रप्रत्याख्यानभाष्यम्)
ननु चेहापि क्रियते भावे चाकर्मकेभ्य इति।।
(सूत्रारम्भभाष्यम्)
परार्थमेतद् भविष्यति तयोरेव कृत्यक्तखलर्थाः भावे चाकर्मकेभ्य इति।।
(सूत्रप्रत्याख्यानभाष्यम्)
एवमपि यावदिह लग्रहणं तावत् तत्राकर्मकग्रहणम्।। इह वा लग्रहणं क्रियते। तत्र वाऽकर्मकग्रहणम्। कोन्वत्र विशेषः?।
(सूत्रारम्भभाष्यम्)
अयमस्ति विशेषः-----इह लग्रहणे क्रियमाने आनः कर्तरि सिद्धो भवति। तत्र पुनरकर्मकग्रहणे क्रियमाणे आनः कर्तरि न प्राप्नोति।।
(सूत्रप्रत्याख्यानभाष्यम्)
तत्राप्यकर्मकग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति। कथम्?। भावकर्मणोः इत्यतो यदन्यदात्मनेपदानुक्रमणम्, तत्सर्वं कर्त्रर्थम्।।
(5057 प्रत्याख्यानवादिवार्तिकम्।। 2 ।।)
- विप्रतिषेधाद्वानः कर्तरि-
(भाष्यम्) विप्रतिषेधाद्वा आनः कर्तरि भविष्यति।। तत्र भावकर्मणोः इत्येतदस्तु कर्तरि कृद् इति। कर्तरि कृद् इत्येतद्भविष्यति विप्रतिषेधेन।।
(5058 आरम्भवादिवार्तिकम्।। 3 ।।)
- सर्वप्रसङ्गस्तु-
(भाष्यम्) सर्वेभ्यस्तु धातुभ्य आनः कर्तरि प्राप्नोति। परस्मैपदिभ्योपि।।
(प्रत्याख्यानभाष्यम्)
नैष दोषः। अनुदात्तङित इत्येष योगो नियमार्थो भविष्यति।।
(आरम्भवादिभाष्यम्)
यद्येष योगो नियमार्थः, विधिर्न प्रकल्पते---आस्ते शेते इति। अथ विध्यर्थः, आनस्य नियमो न प्राप्नोति---आसीनः शयान इति। अथ विध्यर्थः, आनस्य नियमो न प्राप्नोति---आसीनः शयान इति। तथा नेर्विश इत्येवमाद्यनुक्रमणं
यदि नियमार्थम्, ---विधिर्न प्रकल्पते। अथ विध्यर्थम्,---आनस्य नियमो न प्राप्नोति।
(प्रत्याख्यानभाष्यम्)
अस्तु तर्हि नियमार्थम्।
(दूषणस्मारणभाष्यम्)

ननु चोक्तं विधिर्न प्रकल्पते इति।
(दूषणस्मारणभाष्यम्)
विधिश्च प्रक्लृप्तः। कथम्?। भावकर्मणोः इत्यत्र अनुदात्तङितः इत्येतदनुवर्तिष्यते।।
(आक्षेपभाष्यम्)
यद्यनुवर्तते। एवमपि अनुदात्तङितः एव भावकर्मणोरात्मनेपदं प्राप्नोति।।
(आक्षेपपरिहारभाष्यम्)
एवं तर्हि योगविभागः करिष्यते----अनुदात्तङित आत्मनेपदम् भवति।। ततो भावकर्मणोः।। ततः कर्तरि कर्तरि चात्मनेपदं भवति। अनुदात्तङित इत्येव। आस्ते शेते। भावकर्मणोरिति निवृत्तम्। ततः कर्मव्यतिहारे कर्तरीत्येवानुवर्तते। अनुदात्तङितः इत्यपि निवृत्तम्।
(आक्षेपपरिहारभाष्यम्)
यदप्युच्यते---तथा नेर्विश इत्येवमाद्यनुक्रमणं यदि नियमार्थे, विधिर्न प्रकल्पने। अथ विध्यर्थमानस्य नियमो न प्राप्नोतीति।। अस्तु विध्यर्थम्।।
(दूषणस्मारणभाष्यम्)
ननु चोक्तमानस्य नियमो न प्राप्नोतीति।
(दूषणवारणभाष्यम्)
नैष दोषः। यथैवात्राप्राप्तास्तङो भवन्त्येवमानोपि भविष्यति।
(5059 सूत्रारम्भवादिवार्तिकम्।। 4 ।।)
- सर्वत्राप्रसङ्गस्तु-
(भाष्यम्) सर्वेषु च साधनेष्वानो न प्राप्नोति। विप्रतिषेधाद्धानः कर्तरि इति भावकर्मणोर्न स्यात्। कर्तर्येव स्यात्।। इह पुनर्लग्रहणे क्रियमाणे कर्तरि कृद् इत्येतदस्तु, लः कर्मणि च भावे चाकर्मकेभ्य इति, लः कर्मणि च भावे चाकर्मकेभ्यः इत्येतद्भविष्यति विप्रतिषेधेन।।
(5060 दूषणवार्तिकम्।। 5 ।।)
- सर्वप्रसङ्गस्तु-
(भाष्यम्) लादेशः सर्वेषु साधनेषु प्राप्नोति। शतृक्वसू च भावकर्मणोरपि प्राप्नुतः।
(दूषणवारणभाष्यम्)
नैष दोषः। शेषात्परस्मैपदं कर्तरि इत्येवं तौ कर्तारं ह्रियेते।। लः कर्मणि च।। 69 ।।
-3-4-77- लस्य (1238)
(607 अधिकारसूत्रम्।। 3 । 4 । 1 आ.19)
(5061 आक्षेपवार्तिकम्।। 1 ।।)
- लादेशे सर्वप्रसङ्गोऽविशेषात्-
(भाष्यम्) लादेशे सर्वस्य प्रसङ्गः। सर्वस्य लकारस्यादेशः प्राप्नोति। अस्यापि प्राप्नोति। लुनाति लभते। किं कारणम्?। अविशेषात्। न हि कश्चिद्विशेष उपादीयते---एवं जातीयस्य लकारस्यादेशो भवतीति। अनुपादीयमाने विशेषे सर्वप्रसङ्गः।।
(5062 अक्षेपपरिहारवार्तिकम्।। 2 ।।)
- अर्थवद्ग्रहणात्सिद्धम्-
(भाष्यम्) अर्थवतो लकारस्य ग्रहणम्। न चैषोर्थवान्।।
(5063 आक्षेपपरिहारानुपपत्तिवार्तिकम्।। 3 ।।)
- अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु-
(भाष्यम्) अर्थवद्ग्रहणात्सिद्धमिति चेत्।। तन्न। किं कारणम्?। वर्णग्रहणमिदम्। न चैतद्वर्णग्रहणेषु भवति अर्थवद्ग्रहणे नानर्थकस्य इति।।
(5064 आक्षेपोपसंहारवार्तिकम्।। 4 ।।)
- तस्माद्विशिष्टग्रहणम्-
(भाष्यम्) तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम्।।
(आक्षेपपरिहारभाष्यम्)
न कर्तव्यम्। धातोरिति वर्तते।
(आक्षेपभाष्यम्)
एवमपि शाला माला मल्ल इत्यत्रापि प्राप्नोति।
(आक्षेपपरिहारभाष्यम्)
उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।
(आक्षेपभाष्यम्)
एवमपि नन्दन इत्यत्रापि प्राप्नोति।
(परिहारभाष्यम्)
इत्संज्ञात्र बाधिका भविष्यति।

(आक्षेपभाष्यम्)
इहापि तर्हि बाधेत---पचति पठतीति।
(समाधानभाष्यम्)
इत्कार्याभावादत्रेत्संज्ञा न भविष्यति।
(समाधानबाधकभाष्यम्)
इदमस्तीत्कार्यम्। लिति प्रत्ययात्पूर्वमुदात्तं भवति इत्येष स्वरो यथा स्यात्।
(समाधानसाधकभाष्यम्)
लितीत्युच्यते। न चात्र लितं पश्यामः।।
अथापि कथंचिद्वचनादनुवर्तनाद्वा इत्संज्ञकानामादेशः स्यात्। एवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न लादेशेषु लित्कृतं भवतीति। यदयं णलं लितं करोति।।
(पूर्वोक्ताक्षेपपरिहारभाष्यम्)
अथाप्युणादयो व्युत्पाद्यन्ते। एवमपि न दोषः। क्रियते विशिष्टग्रहणं लस्येति।।
(5065 वार्तिकम्।। 5 ।।)
- लादेशो वर्णविधेः पूर्वविप्रतिषिद्धम्-
(भाष्यम्) लादेशो वर्णाविधेर्भवति पूर्वविप्रतिषेधेन। लादेशस्यावकाशः---पचतु पठतु। वर्णविधेरवकाशः-----दध्यत्र मध्वत्र। इहोभयं प्राप्नोति---पचत्वत्र पठत्वत्रेति। लादेशो भवति पूर्वविप्रतिषेधेन।।
(प्रश्नभाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।
(डत्तरभाष्यम्)
न वक्तव्यः। उक्तं वा । किमुक्तम्?। लादेशो वर्णविधेरन्तरङ्ग इति।। लस्य।। 77 ।।
-3-4-79- टित आत्मनेपदानां टेरे (1240)
(608 टेरेत्वादेशविधिसूत्रम्।। 3 । 4 । 1 आ.20 ।।)
(5067 आक्षेपवार्तिकम्।। 1 ।।)
- टित एत्वे आत्मनेपदेष्वान प्रतिषेधः-
(भाष्यम्) टित एत्वे आत्मनेपदेष्वानस्य प्रतिषेधो वक्तव्यः। पचमानः। यजमानः। टित इत्येत्वं प्राप्नोति।।
(4068 वार्तिकम्।। 2 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?। ज्ञापकं वा सानुबन्धकस्यादेशवचनमित्कार्याभावस्य इति।।
(समाधानबाधकभाष्यम्)
नैतदस्त्युक्तम्। एवं किल तदुक्तं स्यात्।
(उक्तसमाधानसञ्ञ्जनार्थं सामानाधिकरण्यान्वयप्रदर्शकभाष्यम्)
यद्येवं विज्ञायते---टित् आत्मनेपदं टिदात्मनपदं टिदात्मनेपदानामिति। तच्च न।
(वैयधिकरण्यान्वयाङ्गीकारभाष्यम्)
टितो लकारस्य यान्यात्मनेपदानीत्येवमेतद्विज्ञायते।।
(सामानाधिकरण्यान्वये दूषणभाष्यम्)
अवश्यं चैतदेवं विज्ञेयम्। टित् आत्मनेपदं टिदात्मनेपदं टिदात्नेपादानामिति हि विज्ञायमाने अकुर्वि इत्यत्रापि प्रसज्येत।।
(प्रसक्त्यनुपपत्तिभाष्यम्)
नैष टित्। कस्तर्हि?। ठित्। स चावश्यं ठित् कर्तव्यः। आदिर्मा भूदिति।
(आक्षेपभाष्यम्)
कथम् इटोत्इति।।
(उत्तरभाष्यम्)
इठोत् इति वक्ष्यामीति।।
(ठित्करणावश्यकत्वभाष्यम्)
तच्चावश्यं वक्तव्यम्। पर्यवापाद्यस्य मा भूत्---लविषीष्ट।
(ठित्करणदूषणभाष्यम्)
इह तर्हि इषमूर्जमहमित आदीति आऽतो लोप इटि च इत्याकारलोपो न प्राप्नोति। तस्माट्टिदेषः।।
(आक्षेपभाष्यम्)
आदिस्तर्हि कस्मान्न भवति।
(समाधानभाष्यम्)

सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्ति तानेको नोत्सहते विहन्तुमिति कृत्वा आदिर्न भविष्यति।।
(प्रश्नभाष्यम्)
पर्यवपाद्यस्य तर्हि कस्मान्न भवति--लविषीष्टेति?।
(समाधानभाष्यम्)
असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति।
(समाधानभाष्यम्)
इदं तर्ह्युक्तम्---प्रकृतानामात्मनेपदानामेत्वं भवतीति। के च प्रकृताः?। तादयः।।
(भाष्यम्) आने मुग्ज्ञापकं त्वेत्वे, टित्तङामिशिसीरिचः। डारौरः सु, टिदटितः, प्रकृते तद्, गुणे कथम्।। टित आत्मने।। 79 ।।
-3-4-82- परस्मैपदानां णलतुसुस्थलथुसणल्वमाः (1243)
(609 लिटः परस्मैपदानामादेशविधिसूत्रम्।। 3 । 4 । 1 आ.21)
(5039 आक्षेपवार्तिकम्।। 1 ।।)
- णलः शित्करणं सर्वादेशार्थम्-
(भाष्यम्) णल् शित्कर्तव्यः। किं प्रयोजनम्। सर्वादेशार्थम्?। शित्सर्वस्य इति सर्वादेशो यथा स्यात्।। अक्रियमाणे हि शकारे अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत।।
(5070 समाधानवार्तिकम्।। 2 ।।)
(भाष्यम्) किमुक्तम्?। अनित्त्वात् सिद्धम् इति। णकारः क्रियते। तस्य अनित्त्वात्सिद्धमिति।।
(आक्षेपभाष्यम्)
क एष परिहारोऽन्याय्यः?। शकारमसि चोदितः। णकारं करिष्यामि शकारं न करिष्यामीति। णकारो वात्र क्रियेत शकारो वा। कोन्वत्र विशेषः?।
(समाधानभाष्यम्)
(अयमस्ति विशेषः) अवश्यमत्र णकारो वृद्ध्यर्थः कर्तव्यः णितीति वृद्धिर्यथा स्यात्।
(णकारवैयर्थ्यभाष्यम्)
नार्थो वृद्ध्यर्थेन णाकरेण। णित्वे योगविभागः करिष्यते----इदमस्ति गोतो णित्। ततः अल् अल् च णिद्भवति। ततः उत्तमो वा इति।
(शित्करणप्रत्याख्यानभाष्यम्)
एवमपि क एष परिहारोऽन्याय्यः। शकारमसिचोदितः लकारं करिष्यामि शकारं न करिष्यामीति। लकारो वा क्रियेत शकारो वा कोन्वत्र विशेषः।
(लकारस्य न्याय्यताभाष्यम्)
अयमस्ति विशेषः। अवश्यमत्र स्वरार्थो लकार इत्कर्तव्यः। लिति प्रत्ययात् पूर्वमुदात्तं भवतीत्येष स्वरो यथा स्यात्।
(लकारवैयर्थ्यभाष्यम्)
नैतदस्ति प्रयोजनम्। धातुस्वरे कृते द्विर्वचनं तत्रान्तर्यतोन्तोदात्तस्यान्तोदात्त आदेशो भविष्यति।।
(आक्षेपभाष्यम्)
कथं पुनरयमन्तोदात्तः स्यात्। यदैकाच्।
(समाधानभाष्यम्)
व्यपदेशिवद्भावेन।
(आक्षेपभाष्यम्)
यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्तः। एवमाद्युदात्तोऽपि। तत्रान्तर्यत आद्युदात्तस्य आद्युदात्त आदेशः प्रसज्येत।
(समाधानभाष्यम्)
तस्यमेवमेतत्। न त्विदं लक्षणमस्ति----धातोरादिरुदात्तो भवतीति। इदं पुनरस्ति---धातोरन्त उदात्तो भवतीति। सोयं, लक्षणेनान्तोदात्तः, तत्रान्तर्यतोऽन्तोदात्तक्यान्तोदात्त आदेशो भविष्यति।
(समाधानबाधकभाष्यम्)
एतदप्यादेशे नास्ति---आदेशस्यान्त उदात्तो भवतीति। प्रकृतितोऽनेन स्वरो लभ्यः। प्रकृतिश्चास्य यथैवान्तोदात्ता, एवमाद्युदात्ताऽपि।।
(द्विः प्रयोगपक्षेऽपि शित्करणदूषणापादकभाष्यम्)
द्विः प्रयोगे खल्वपि द्विर्वचने उभयोरन्तोदात्तत्वं प्रसज्येत।
(शित्ववादिमतेन दूषणोद्धारभाष्यम्)
अनुदात्तं पदमेकवर्जमिति नास्ति यौगमपद्येन संभवः।
(शित्ववादिमते दूषणस्थापनपूर्वकं लकारसार्थक्योपसंहारभाष्यम्)
पर्यायः प्रसज्येत। तस्मात्स्वरार्थो लकारः कर्तव्यः।। लकारः क्रियते, तस्यानित्त्वात्सिद्धम्।।
(5072 आक्षेपवार्तिकम्।। 3 ।।)
- अकारस्य शित्करणं सर्वादेशार्थम्-
(भाष्यम्) अकारः शित्कर्तव्यः। किं प्रयोजनम्?। सर्वादेशार्थम्। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत।।

(आक्षेपबाधकभाष्यम्)
ननु च अकारस्य अकारवचने प्रयोजनं नास्तीति कृत्वा अन्तरेण शकारं सर्वादेशो भविष्यति।।
(आक्षेपसाधकभाष्यम्)
अस्त्यन्यदकारस्य अकारवचने प्रयोजनम्। किम्?।
(5072 वार्तिकम्।। 4 ।।)
- अकारवचनं समसंख्यार्थम्-
(भाष्यम्) संख्यातानुदेशो यथा स्यत्।
(5073 वार्तिकम्।। 5 ।।)
- तस्माच्छित्करणम्-
(भाष्यम्) तस्माच्छकारः कर्तव्यः।।
(आक्षेपभाष्यम्)
स तर्हि शकारः कर्तव्यः।
(सिद्धान्तिभाष्यम्)
न कर्तव्यः। क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्। अ अ इति। सोऽसौ अनेकाल्। अनेकाल् शित्सर्वस्येति सर्वादेशो भविष्यति।। परस्मैद्द।। 82 ।।
-3-4-85- लोटो लङ्वत् (1246)
(610 अतिदेशसूत्रम्।। 3 । 4 । 1 आ.22)
(5074 समाधानवार्तिकम्।। 1 ।।)
- लङ्वदतिदेशे जुस्भावप्रतिषेधः-
(भाष्यम्) लङ्वदतिदेशे जुस्भावस्य प्रतिषेधो वक्तव्यः। यान्तु वान्तु। लङः शाकटायनस्येति जुस्भावः प्राप्नोति।।
(5075 समाधानवार्तिकम्।। 1 ।।)
- उत्ववचनात्सिद्धम्-
(भाष्यम्) उत्वमत्र बाधकं भविष्यति।।
(समाधानबाधकभाष्यम्)
अनवकाशा हि विधयो बाधका भवन्ति। सावकाशं चोत्वम्। कोऽवकाशः पचतु---पठतु।।
(समाधानसाधकभाष्यम्)
अत्रापीकारलोपः प्राप्नोति। तद्यथैवोत्वमीकारलोपं बाधते। एवं जुस्भावमपि बाधेत।
(समाधानबाधकभाष्यम्)
न बाधते। किं कारणम्?। येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते इकारलोपे उत्वमारभ्यते। जुस्भावे पुनः प्राप्ते चाप्राप्ते च ।। अथ वा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते इत्येवमिदमुत्वमिकारलोपं बाधते जुस्भावं न बाधते।।
(समाधानान्तरभाष्यम्)
एवं तर्हि वक्ष्यति तत्र लङ्ग्रहणस्य प्रयोजनम्। लङेव यो लङ् तत्र यथा स्यात्। लङ्वद्भावेन यो लङ् तत्र मा भूदिति।। लोटो लङ्वत्।। 85 ।।
-3-4-87- सेर्ह्यपिच्च (1238)
(611 आदेशविधिसूत्रम्।। 3 । 4 । 1 आद्द 23)
-3-4-89- मेर्निः (1250)
(612 आदेशविधिसूत्रम्।। 3 । 4 । 1 आ.24)
(5076 आक्षेपवार्तिकम्।। 1 ।।)
- हिन्योरुत्वप्रतिषेधः-
(भाष्यम्) हिन्योरुत्वस्य प्रतिषेधो वक्तव्यः। लुनीहि। लुनानि। एरुः इत्युत्वं प्राप्नोति।।
(5077 आक्षेपपरिहारवार्तिकम्।।2 ।।)
- न वोच्चारणसार्मथ्यात्-
(भाष्यम्) न वा वक्तव्यः। किं कारणम्? उच्चारणसार्मथ्यात्। उच्चारणसार्मथ्यादत्रोत्वं न भविष्यति। अलघीयश्चैव हि इकारोच्चारणमुकारोच्चारणात्। इकारं चोच्चारयति। उकारं च नोच्चारयति। तस्यैतत्प्रयोजनम---उत्वं मा भूदिति।। सेर्ह्यपिच्च। मेर्निः।। 89 ।।
-3-4-93- एत ऐ (1254)
(693 आदेशविधिसूत्रम्।। 3 । 4 । 1 आ. 25)
(5078 आक्षेपवार्तिकम्।। 1।।)
- एत ऐत्वे आड्गुणप्रतिषेधः-
(भाष्यम्) एत ऐत्वे आड्गुणस्य प्रतिषेधो वक्तव्यः। पचावेदम्। पचामेदम्। आड्गुणे कृते एत ऐ इत्यैत्वं प्राप्नोति।।
(5079 आक्षेपबाधकवार्तिकम्।। 2 ।।)

- न वा बहिरङ्गलक्षणत्वात्-
(भाष्यम्) न वा वक्तव्यः। किं कारणम्?। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षण आद्गुणः। अन्तरङ्गमैत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे।। एत ऐ।। 93 ।।
-3-4-102- लिङः सीयुट् (1263)
(614 आगमविधिसूत्रम्।। 3 । 4 । 1 । आ.26)
(5080 आक्षेपवार्तिकम्।। 1 ।।)
- यासुडादेः सीयुट् प्रतिषेधः-
(भाष्यम्) यासुडादेः सीयुटः प्रतिषेधो वक्तव्यः। चिनुयुः। सुनुयुः। लिङः सीयुट् इति सीयुट् प्राप्नोति।।
(5081 आक्षेपपरिहारवार्तिकम्।। 2 ।।)
- न वा वाक्यापकर्षात्-
(भाष्यम्) न वा वाक्तव्यः। किं कारणम्?। वाक्यापकर्षात्। वाक्यापकर्षाद् यासुट् सीयुटं बाधिष्यते।
(5082 वार्तिकम्।। 3 ।।)
- सुट्तिथोस्त्वपकर्षविज्ञानम्-
(भाष्यम्) सुटोपीदानीं तिथोरपकर्षो विज्ञायेत। कृषीष्ट। कृषीष्टः। हृषीष्ट। हृषीष्ठाः।
(5083 आक्षेपवार्तिकम्।। 4 ।।)
- अनादेश्च सुड्वचनम्-
(भाष्यम्) अनादेश्च सुड्वक्तव्यः। कृषीयास्तां कृषीयास्थाम्। तकारथकारादेर्लिङ इति सुण् न प्राप्नोति।
(5084 आक्षेपपरिहारवार्तिकम्।। 5 ।।)
- न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम्-
(भाष्यम्) न वा वक्तव्यम्। किं कारणम्?। तिथोः प्रधानभावात्। तिथावत्र प्रधानं तयोर्विशेषणं लिङ्ग्रहणम्। नैवं विज्ञायते। तकारथकारादेर्लिङ इति। कथं तर्हि? तकारथकारयोः सुड् भवति। तौ चेल्लिङ इति।। लिङः सीयुट्।। 102 ।।
-3-4-103- यासुट् परस्मैपदेषूदात्तो ङिच्च (1264)
(615 आगमविधिसूत्रम्।। 3 । 4 । 1 । आद्द 27)
(आक्षेपभाष्यम्)
किमर्थं यासुटो ङित्वमुच्यते।
(5085 आक्षेपपरिहारवार्तिकम्।। 1 ।।)
- यासुटो ङिद्वचनं पिदर्थम्-
(भाष्यम्) (यासुटो ङित्वं क्रियते। किं प्रयोजनम्?। पिदर्थम्) पिति वचनानि प्रयोजयन्ति।।
(आक्षेपभाष्यम्)
अथ किमर्थमुदात्तवचनं क्रियते।
(5086 परिहारवार्तिकम्।। 2 ।।)
- उदात्तवचनं च -
(भाष्यम्) (उदात्त इति उच्यते। किं प्रयोजनम्।) किम्। पिदर्थमेव।
(5087 परिहारान्तरवार्तिकम्।। 3 ।।)
- आगमानुदात्तार्थे वा-
(भाष्यम्) अथ वा एतज्ज्ञापयत्याचार्यः----आगमा अनुदात्ता भवन्तीति।।
(ज्ञापकत्वानुपपत्तिभाष्यम्)
असत्यन्यस्मिन्प्रयोजने ज्ञापकं भवति। उक्तं चैतद्---यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति।।
(ज्ञापकत्वानुपपत्तिभाष्यम्)
शक्यमनेन वक्तुम्। यासुट् परस्मैपदेषु भवति, अपिच्च लिङ् भवतीति। सोयऽमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः आगमा अनुदात्ता भवन्ति इति।। यासुट् परस्मैपदेषूदात्तो ङिच्च।। 103 ।।
-3-4-110- आतः (1271)
(616 नियमसूत्रम्।। 3 । 4 । 1 आ.28)
(आक्षेपभाष्यम्)
किमिदं जुस्याकारग्रहणं नियमार्थम्। आहो स्वित्प्रापकम्।।
(प्रत्याक्षेपभाष्यम्)
कथं च नियमार्थं स्यात्। कथं वा प्रापकम्।
(प्रत्याक्षेपसमाधानभाष्यम्)
यदि सिज्ग्रहणमनुवर्तते। ततो नियमार्थम्।।

अथ निवृत्तम्। ततः प्रापकम्।।
(विशेषजिज्ञासाभाष्यम्)
कश्चात्र विशेषः।
(5088 नियमपक्षदूषणवार्तिकम्।। 1 ।।)
- जुस्याकारग्रहणं नियमार्थमिति चेत् सिज्लुक्ग्रहणम्-
(भाष्यम्) जुसि आकारग्रहणं नियमार्थमिति चेत् सिज्लुग्ग्रहणं कर्तव्यम्। आतः सिज्लुगन्तादिति वक्तव्यम्। इह मा भूत्----अकार्षुः। अहार्षुः।।
(5089 विध्यर्थत्वपक्षाङ्गीकारभाष्यम्)
प्रापकमिति चेत्प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्यः। अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति।
(5090 दूषणान्तरवार्तिकम्)
एवकारकरणं च ।।
भाष्यम्-- एवकारकरणं च कर्तव्यम्। लङः शाकटायनस्यैवेति। नियमार्थे पुनः सति नार्थ एवकारकरणेन ।
(आक्षेपभाष्यम्)
ननु च प्रापकेऽपि सति सिद्धे विधिरारभ्यमाणोन्तरेणैवकारं नियमार्थो भविष्यति।
(समाधानभाष्यम्)
इष्टतोऽवधारणार्थस्तर्ह्येवकारः कर्तव्यः--यथैवं विज्ञायते लङः शाकटायनस्यैव इति। मैवं विज्ञायि लङ एव
शाकटायनस्य इति।
(आक्षेपभाष्यम्)
किं च स्यात्।
(समाधानभाष्यम्)
लुङः शाकटायनस्य न स्यात् । अदुः। अयुः। अधुः। अस्थुः।।
(5091 गौरववार्तिकम्)
भाष्यम्--लङ्ग्रहणं च कर्तव्यम्-- लङः शाकटायनस्यैव इति। नियमार्थे पुनः सति नार्थो लङ्ग्रहणेन । आतो ङित इति वर्तते। न चान्य आकारादनन्तरो ङिदस्ति अन्यदतो लङः।
(निमार्थत्वपक्षाङ्गीकरभाष्यम्)
अस्तु तर्हि नियमार्थम्।
(दूषणस्मारणभाष्यम्)
ननु चोक्तं जुस्याकारग्रहणं नियमार्थमिति चेत् सिज्लुक्ग्रहणम् इति।
(दूषणस्मारणभाष्यम्)
नैष दोषः। तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः। यो द्वाभ्यामनन्तरः, आतश्च सिचश्च ।
(आक्षेपभाष्यम्)
अथ तदेवकारकरणं नैव कर्तव्यम्।
(सिद्धान्तसमाधानभाष्यम्)
कर्तव्यं च । किं प्रयोजनम्। उत्तरार्थम्। लिट् च लिङाशिषि आर्धधातुकमेव यथा स्यात्। इतरथा हि वचनादार्धधातुकसंज्ञा स्यात्। तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा।
(आक्षेपभाष्यम्)
अथ तल्लङ्ग्रहणं नैव कर्तव्यम्।
(समाधानभाष्यम्)
कर्तव्यं च किं प्रयोजनम् लङेव यो लङ् तत्र यथा स्यात्। लङ्गवद्भावेन यो लङ् तत्र मा भूदिति।। आतः।।110।।
-3-4-114- आर्धधातुकं शेषः (1271)
(5092 आक्षेपवार्तिकम्)
।। आर्धधातुकसंज्ञायां धातुग्रहणम् ।।
(भाष्यम् ) आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्धधातुकसंज्ञा यथा स्यात् इह मा भूत् ---- वृक्षत्वं वृक्षतेति ।
(5093 आक्षेपवार्तिकम् ।। 2 ।।)
।। क्रियमाणे चापि धातुग्रहणे, स्वादिप्रतिषेधः ।।
(भाष्यम्) स्वादीनां प्रतिषेधो वक्तव्यः । इह मा भूत् लूभ्यां लूभिः इति ।
(आक्षेपपरिहारभाष्यम्)
अनुक्रान्तापेक्षं शेषग्रहणम् ।
(परिहारानुपपत्तिभाष्यम् )
एवमपि अग्निकाम्यति वायुकाम्यतीति प्राप्नोति । तस्माद्धातुग्रहणं कर्तव्यम् ।

(आक्षेपभाष्यम् )
तत्तर्हि धातुग्रहणं कर्तव्यम् ?।
(समाधानभाष्यम् )
न कर्तव्यम् । आतृतीयपरिसमाप्तेर्धात्वधिकारः प्रकृतोऽनुवर्तते । क्व प्रकृतः ?।धातोरेकाचो हलादेः इति ।
(समाधानासंगतिभाष्यम्)
एवमपि श्रीकाम्यति भूकाम्यतीति प्राप्नोति ।
(समाधानसंगतिभाष्यम् )
तद्विधानात् सिद्धम् । विहितविशेषणं धातुग्रहणं ठधातोर्यो विहितः इति । ठधातोरेष विहितः संकीर्त्य धातोरित्येवं यो विहित इति । आर्धधातुकम् ।। 114 ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायश्च चतुर्थे पादे प्रथममाह्निकम् ।। पादश्चाध्यायश्च समाप्तस्तृतीयः ।।

# महाभाष्यम्/चतुर्थोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/nmo
< महाभाष्यम् | चतुर्थोऽध्यायः
4-1
-4-1-1- ङ्याप्प्रातिपदिकात् (1275)
(अधिकारप्रयोजनाधिकरणम्)
(आक्षेपभाष्यम्)
ङ्याप्प्रातिपदिकग्रहणं किमर्थम्।
(समाधानभाष्यम्)
ङ्याप्प्रातिपदिकात्स्वादयो यथा स्युः। धातोर्मा भूवन्निति।।
(प्रयोजननिरासभाष्यम्))
नैतदस्ति प्रयोजनम्। धातोस्तव्यदादयो विधीयन्ते, तेऽपवादत्वाद्बाधका भविष्यन्ति।।
(प्रयोजनपरभाष्यम्)
तिङन्तात्तर्हि मा भूवन्निति।।
(प्रयोजनपरिहारभाष्यम्)
एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते। ते चात्र तिङोक्ता एकत्वादय ःथ्य;ति कृत्वा, उक्तार्थत्वान्न भविष्यन्ति।।
(प्रयोजनपरभाष्यम्)
टाबादयस्तर्हि तिङन्तान्मा भूवन्निति।।
(प्रयोजननिरासभाष्यम्)
स्त्रियां टाबादयो विधीयन्ते। न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति।।
(प्रयोजनपरभाष्यम्)
अणादयस्तर्हि तिङन्तान्मा भूवन्निति।।
(प्रयोजननिरासभाष्यम्)
अपत्यादिष्वर्थेष्वणादयो विधीयन्ते। न च तिङन्तस्यापत्यादिभिर्योगोऽस्ति।।
(अभ्युपगमभाष्यम्)
अथापि कथंचिद्योगः स्यात्। एवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति--न तिङन्तादणादयो भवन्तीति यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति--अतिशायने तमबिष्ठनौ, तिङश्चेति।।
(वार्तिकावतरणभाष्यम्)
अत उत्तरं पठति--
(5094 प्रयोजनवार्तिकम्।। 1 ।।)
- ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् -
(भाष्यम्) ङ्याप्प्रातिपदिकग्रहणं क्रियते, अङ्गभपदसंज्ञार्थम्। अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरिति।।
(वार्तिकोक्तप्रयोजननिराकरणभाष्यम्)
क्व पुनरिहाङ्गभपदसंज्ञार्थेन ङ्याप्प्रातिपदिकग्रहणेनार्थः?।
टाबादिषु।
नैतदस्ति प्रयोजनम्।
ग्रहणवद्भ्यष्टाबादयो विधीयन्ते।
उगितो ङीब्भवति।
अतष्टाब्भवतीति यत्तच्छब्दरूपं गृह्यते, तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।।
(अभ्युपगमवादभाष्यम्)
अथापि कश्चिदग्रहणः।
एवमपि न दोषः।
स्त्रियां टाबादयो विधीयन्ते। यत्तच्छब्दरूपं स्त्रियां वर्तते, तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।।
(आशंकानिराकरणभाष्यम्)
अणादिषु तर्हि।
अणादयोऽपि ग्रहणवद्भ्यो विधीयन्ते--गर्गादिभ्यो यञ्, नडादिभ्यः फगिति। यत्तच्छब्दरूपं गृह्यते, तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।।
(अभ्युपगमवादभाष्यम्)

अथापि कश्चिदग्रहणः।
एवमपि न दोषः। अपत्यादिष्वर्थेष्वणादयो विधीयन्ते। यत्तच्छब्दरूपमपत्यादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।।
(आशंकानिराकरणभाष्यम्)
स्वार्थिकेषु तर्हि।
स्वार्थिका अपि ग्रहणवद्भ्यो विधीयन्ते--यावादिभ्यः कन्, प्रज्ञादिभ्योऽणिति। यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।।
(अभ्युपगमवादभाष्यम्)
यस्तर्ह्यग्रहणः। शुक्लतमः शुक्लतरः कृष्णतमः कृष्णतर ाः्थ्य;ति।
अत्रापि न यावच्छुक्लःउतावच्छुक्लतरः, प्रकृष्टः शुक्लःउशुक्लतरः। यत्तच्छब्दरूपं प्रकृष्टे वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।
(आशंकानिराकरणभाष्यम्)
स्वादिषु तर्हि।
एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते। यत्तच्छब्दरूपमेकत्वादिष्वर्थेषु वर्तते। तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति।।
(आक्षेपभाष्यम्)
कथं पुनरिहोच्यमानाः स्वादय एकत्वादिष्वर्थेषु शक्या विज्ञातुम्।।
(समाधानभाष्यम्)
एकवाक्यत्वात्। एकं वाक्यंतच्चेदं च।
यद्येकं वाक्यं तच्चेदं च किमर्थं नानादेशस्थं क्रियते? कौशलमात्रमेतदाचार्यो दर्शयति--यदेकं वाक्यं सन्नानादेशस्थं करोति, अन्यदपि किंचित्संग्रहीष्यामीति।।
(5095 द्वितीयप्रयोजनवार्तिकम्।। 2 ।।)
- यच्छयोश्च लुगर्थम् -
(भाष्यम्) यच्छयोस्तर्हि लुगर्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते। कंसीयपरशव्ययोर्यञञौ लुक्च ाः्थ्य;ति ङ्याप्प्रातिपदिकात्परस्य लुग्यथा स्यात्। अक्रियमाणे हि ङ्याप्प्रातिपदिकग्रहणे प्रकृतेरपि लुक् प्रसज्येत।।
(प्रयोजननिराकरणभाष्यम्)
एतदपि नास्ति प्रयोजनम्। यथापरिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति--प्रत्ययस्य भविष्यति।।
(अनिष्टापत्युद्भावकभाष्यम्)
एवमप्युकारसकारयोः प्रसज्येत। कमेः सः कंसः। परान् शृणातीति परशुरिति।।
(समाधानभाष्यम्)
उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।।
(5096 सिद्धान्तवार्तिकम्।। 3 ।।)
- वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थम् -
(भाष्यम्) वृद्धावृद्धावर्णस्वरद्वयज्लक्षणे तर्हि प्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते। वृद्धात्,
अवृद्धात्, अवर्णान्तात्, अनुदात्तादेः, द्व्यचः, ाः्थ्य;त्येतानि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरिति।।
(एकदेश्याक्षेपभाष्यम्)
अथाक्रियमाणे ङ्याप्प्रातिपदिकग्रहणे कस्यैतानि विशेषणानि स्युः।।
(एकदेशिसमाधानभाष्यम्)
समर्थविशेषणानि।।
(दोषनिरूपकभाष्यम्)
तत्र को दोषः।।
उदीचां वृद्धादगोत्रात्। ाः्थ्य;ह च प्रसज्येत। ज्ञानां ब्राह्मणानामपत्यमिति। एतद्धि समर्थं वृद्धम्।।
ाः्थ्य;ह च न स्यात्। ज्ञयोर्ब्राह्मण्योरपत्यमिति। एतद्धि समर्थमवृद्धम्। वृद्ध।।
(दोषप्रदर्शकभाष्यम्)
।। अवृद्ध, प्राचामवृद्धात्फिन्बहुलम्। ाः्थ्य;ह च प्रसज्येत--ज्ञयोर्ब्राह्मण्योरपत्यमिति। एतद्धि समर्थमवृद्धम्। ाः्थ्य;ह च न स्यात्--ज्ञानां ब्राह्मणानामपत्यमिति। एतद्धि समर्थं वृद्धम्। अवृद्ध।।
अवर्ण, अत ाः्थ्य;ञ्भवतीति--ाः्थ्य;हैव स्यात्--दक्षस्यापत्यं दाक्षिरिति। एतद्धि समर्थमकारान्तम्। ाः्थ्य;ह च न स्यात्--दक्षयोरपत्यं दक्षाणामपत्यमिति। एतद्धि समर्थमनवर्णान्तम्। अवर्ण।।
स्वर, अनुदात्तादेरञ्भवति। ाः्थ्य;ह च प्रसज्येत--वाचो विकारस्त्वचो विकार ाः्थ्य;ति। एतद्धि समर्थमनुदात्तादि। ाः्थ्य;ह च न स्यात्--सर्वेषां विकार ाः्थ्य;ति। एतद्धि समर्थमुदात्तादि। स्वर।।
द्व्यज्लक्षण, द्व्यचष्ठन्निति। ाः्थ्य;ह च प्रसज्येत--वाचा तरति त्वचा तरतीति। एतद्धि समर्थं द्व्यच्। ाः्थ्य;ह च न स्यात्--घटेन तरतीति। एतद्धि समर्थमद्व्यच्।।
(समर्थाधिकारफलप्रदर्शकभाष्यम्)

अस्ति पुनः समर्थविशेषणे सति किंचिदिष्टं संगृहीतं भवति। आहोस्विद्दोषान्तमेव। अस्तीत्याह। किम्? साम्ना तरति वेम्ना तरतीति। एतद्धि समर्थमपि द्व्यच् ङ्याप्प्रातिपदिकमपि।।
(आक्षेपभाष्यम्)
अथ ङ्याब्ग्रहणं किमर्थम्। न प्रातिपदिकादित्येव सिद्धम्।।
(समाधानभाष्यम्)
न सिध्यति।
अप्रत्यय ःथ्य;ति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति।।
(प्रत्याक्षेपभाष्यम्)
यद्येष ङ्याब्ग्रहणे हेतुः। त्यूङ्ग्रहणमपि कर्तव्यम्। तावपि हि प्रत्ययौ।।
(प्रत्याक्षेपनिरासभाष्यम्)
तिग्रहणे तावद्वार्तम्। तद्धितः प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति।।
ःढ्य;ङ्ग्रहणे चापि वार्तम्। उवर्णान्तादूङ्विधीयते तत्रैकादेशः। एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति।।
(आक्षेपसमर्थकभाष्यम्)
यद्येष ःढ्य;ङोऽग्रहणे हेतुः। आब्ग्रहणमपि न कर्तव्यम्। आबपि ह्यकारान्ताद्विधीयते। तत्रैकादेशः। एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति।।
यस्तर्ह्यनकारान्तात्--कुञ्चा, उष्णिहा, देवविशेति। अत्राप्यकारान्ताद् वृत्तिर्लक्ष्यते--क्रुञ्चानालभेत, उष्णिहककुभौ, देवविशं च मनुष्यविशं चेति।।
(आब्ग्रहणवादिभाष्यम्)
ःथ्य;ह तावदुष्णिहककुभाविति।
आप एवैतदौत्तरपदिकं ह्रस्वत्वम्।।
ःथ्य;ह खल्वपि देवविशं च मनुष्यविशं चेति।
नास्ति विशेषः। अकारान्तादम् उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति।।
(प्रत्याख्यानवादिभाष्यम्)
यत्तावदुच्यते--
ःथ्य;ह तावदुष्णिहककुभावित्याप एवैतदौत्तरपदिकं ह्रस्वत्वमिति।।
संज्ञाछन्दसोरित्येवं तत्।।
नैषा संज्ञा, नापीदं छन्दः।।
यदप्युच्यते ःथ्य;ह खल्वपि देवविशं च मनुष्यविशं चेति।।
नास्ति विशेषः--अकारान्तादम् उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति।।
स्वरे विशेषः--यद्यत्र व्यञ्जनान्तादुत्पत्तिः स्याद् देवविशमित्येवं स्वरः प्रसज्येत। देवविशमिति चेष्यते। तस्मात्क एष एवं विषयः।।
(आब्ग्रहणवादिभाष्यम्)
ःथ्य;दं तर्हि--पादोऽन्यतरस्याम् टाबृचि ःथ्य;ति।।
ऋचीत्युच्यते।।
तत्र च्छान्दसत्वाद्भविष्यति।।
ऋचीति नेदं छन्दो विवक्षितम्--काठकं कालापकं मौदकं पैप्पलादकं वा। किं तर्हि--प्रत्ययार्थविशेषणमेतत्। ऋक्चेत्प्रत्ययार्थो भवतीति।।
एतदपि नास्ति प्रयोजनम्। पदशब्दः पादशब्दसमानार्थोऽकारान्तश्छन्दसि दृश्यते--तस्याः सप्ताक्षरमेकं पदम्, एकः पाद ःथ्य;त्यर्थः। तस्मादुत्पत्तिर्भविष्यति।।
ःथ्य;दं तर्हि--डाबुभाभ्यामन्यतरस्याम् ःथ्य;ति। बहुराजा बहुराजे बहुराजा ःथ्य;ति।।
(5097 सिद्धान्तवार्तिकम्।। 4 ।।)
- ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् -
(भाष्यम्) ङ्याब्ग्रहणमनर्थकम्।।
किं कारणम्?
प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्।।
प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येषा परिभाषा कर्तव्या।
कः पुनरत्र विशेषः?
एषा वा परिभाषा क्रियेत, ङ्याब्ग्रहणं वा?
अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि।।
(जिज्ञासाभाष्यम्)
कानि?

(5098 प्रयोजनवार्तिकम्।। 5 ।।)
- सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् -
(भाष्यम्) सर्वनामविधिः प्रयोजनम्। सर्वनाम्नः सुडिहैव स्यात्--येषाम्, तेषाम्।।
यासाम्, तासामित्यत्र न स्यात्।।
(प्रयोजनखण्डनभाष्यम्)
नैतदस्ति प्रयोजनम्।
अवर्णान्ताट्टाब्विधीयते। तत्रैकादेशे कृतेऽन्तादिवद्भावात्सुड् भविष्यति।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--सर्वनाम्नस्तृतीया च ःथ्य;हैव स्यात्--भवता हेतुना, भवतो हेतोरिति।
भवत्या हेतुना, भवत्या हेतोरित्यत्र न स्यात्। सर्वनाम।।
(व्याख्यानभाष्यम्)
स्वर, कुसूलकूपकुम्भशालं बिले ःथ्य;हैव स्यात्--कुसूलबिलम्।
कुसूलीबिलमित्यत्र च न स्यात्। स्वर।।
(व्याख्यानभाष्यम्)
समास द्वितीया श्रितादिभिः सह समस्यते। ःथ्य;हैव स्यात्--कष्टं श्रितःउकष्टश्रितः।
कष्टं श्रिताउकष्टश्रितेत्यत्र न स्यात्।।
(वार्तिकोक्तप्रयोजनखण्डनभाष्यम्)
एतदपि नास्ति प्रयोजनम्। श्रितशब्दोऽकारान्तस्तत्रैकादेशे कृतेऽन्तादिवद्भावाद्भविष्यति।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि--पूर्वसदृशेति। ःथ्य;हैव स्यात्--पित्रा सदृशःउपितृसदृशः।।
पित्रा सदृशीउपितृसदृशीत्यत्र न स्यात्। समास।।
(व्याख्यानभाष्यम्)
तद्धितविधि, अचित्तहस्तिधेनोष्ठक् ःथ्य;हैव स्यात्-हस्तिनां समूहो हास्तिकम्।।
हस्तिनीनां समूहो हास्तिकमित्यत्र न स्यात्।।
(प्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम्। पुंवद्भावेनैतत्सिद्धम्।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि--प्रमाणे द्वयसच्। यथेह भवति--हस्तिद्वयसम्, हस्तिमात्रम्। एवं हस्तिनीद्वयसम्, हस्तिनीमात्रमित्यपि यथा स्यात्। तद्धितविधि।।

(व्याख्यानभाष्यम्)
लुक्, नेन्सिद्धबध्नातिषु च ःथ्य;हैव स्यात्--स्थण्डिलशायी।।
स्थण्डिलशायिनीत्यत्र न स्यात्। लुक्।।
(व्याख्यानभाष्यम्)
अलुक् शयवासवासिष्वकालात् ःथ्य;हैव स्यात्--ग्रामेवासी।।
ग्रामेवासिनीत्यत्र न स्यात्।।
(5099 परिभाषाप्रयोजनवार्तिकम्।। 6 ।।)
- मानिनि च विधिप्रतिषेधार्थम् -
(भाष्यम्) मानिनि च विधिप्रतिषेधार्थं प्रयोजनम्--विध्यर्थं तावत् क्यङ्मानिनोश्च ःथ्य;हैव स्यात्। दर्शनीयमानी।।
दर्शनीयमानिनीत्यत्र न स्यात्।।
प्रतिषेधार्थमपि। वक्ष्यति स्वाङ्गाच्चेतोऽमानिनि तस्मिन् क्रियमाणे ःथ्य;हैव स्यात्--दीर्घमुखमानी।।
दीर्घमुखमानिनीत्यत्र न स्यात्।।
(5100 परिभाषाप्रयोजनवार्तिकम्।। 7 ।।)
- प्रत्ययग्रहणोपचारेषु च -
(भाष्यम्) प्रत्ययग्रहणोपचारेषु च प्रयोजनम्। तृजकाभ्यां कर्तरि ःथ्य;हैव स्यात्--अपां स्रष्टा।।
अपां स्रष्ट्रीत्यत्र न स्यात्। प्रत्यय।।
उपचार--अतः कृकमिकंसकुम्भ ःथ्य;हैव स्यात्--अयस्कुम्भः।।
अयस्कुम्भीत्यत्र न स्यात्।।
(परिभाषाफलोपसंहारभाष्यम्)
एतान्येतस्याः परिभाषायाः प्रयोजनानि। यदर्थमेषा परिभाषा कर्तव्या।।

एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेन।।
(5101 परिभाषाक्षेपवार्तिकम्।। 8 ।।)
- अतिप्रसङ्ग उपपदविधौ -
(भाष्यम्) उपपदविधावतिप्रसङ्गो भवति द्विषत्परयोस्तापेः यथेह भवति-द्विषन्तप ःथ्य;ति।।
एवं द्विषतीताप ःथ्य;त्यत्रापि स्यात्।।
(5102 परिभाषाक्षेपे द्वितीयवार्तिकम्।। 9 ।।)
- यञिञोः फकि -
(भाष्यम्) यञिञोः फक्यतिप्रसङ्गो भवति। यथेह भवति--गार्ग्यायणः, दाक्षायणः।।
एवं गार्गेयो दाक्षेय ःथ्य;त्यत्रापि स्यात्।।
नैष दोषः।।
ढगत्र बाधको भविष्यति।।
(5103 परिभाषाक्षेपे तृतीयवार्तिकम्।। 10 ।।)
- समासान्तेषु च -
(भाष्यम्) समासान्तेषु चातिप्रसङ्गो भवति राजाहः सखिभ्यष्टच् यथेह भवति--मद्रराजः, कश्मीरराजः।।
एवं मद्रराज्ञी कश्मीरराज्ञीत्यत्रापि स्यात्।।
(आक्षेपभाष्यम्)
न वा भवति मद्रराजीति।।
(उपपादकभाष्यम्)
भवति, यदा समासान्तादीकारः। लिङ्गविशिष्टग्रहणे तु ःथ्य;कारान्तात्समासान्तः प्रसज्येत।।
तत्र को दोषः? पुंवद्भावष्टिलोपश्च। तत्र मद्रराजीत्येवं रूपं स्यात् मद्रराज्ञीति चेष्यते।।
(5104 परिभाषाक्षेपे चतुर्थवार्तिकम्।। 11 ।।)
- महदात्वे प्रियादिषु -
(भाष्यम्) महदात्वे प्रियादिष्वतिप्रसङ्गो भवति। आन्महतः समानाधिकरणजातीययोः ःथ्य;ति यथेह भवति महान् प्रियोऽस्य महाप्रियः।।
एवं महती प्रियाऽस्य महतीप्रिय ःथ्य;त्यत्रापि स्यात्।।
किमुच्यते प्रियादिष्विति? यत्र पुंवद्भावः प्रतिषिध्यते।।
यत्र तु न प्रतिषिध्यते भवितव्यमेव तत्रात्वेनेति।।
(5105 परिभाषाक्षेपे पञ्चमवार्तिकम्।। 12 ।।)
- ञ्नित्स्वरे -
(भाष्यम्) ञ्नित्स्वरेऽतिप्रसङ्गो भवति ञ्नित्यादिः उदात्तो भवतीति। यथेह भवति--दाक्षिः, अहिचुम्बकायनिः।।
एवं दाक्षी, अहिचुम्बकायनीत्यत्रापि स्यात्।।
(5106 परिभाषाक्षेपे षष्ठवार्तिकम्।। 13 ।।)
- राज्ञः स्वरे ब्राह्मणकुमारयोः -
(भाष्यम्) राज्ञः स्वरे ब्राह्मणकुमारयोरतिप्रसङ्गो भवति राजा च ब्राह्मणकुमारयोरिति। यथेह भवति--राजब्राह्मणः, राजकुमारः।।
एवं राजब्राह्मणी, राजकुमारीत्यत्रापि स्यात्।।
(5107 परिभाषाक्षेपे सप्तमवार्तिकम्।। 14 ।।)
- समाससंघातग्रहणेषु च -
(भाष्यम्) समाससंघातग्रहणेषु चातिप्रसङ्गो भवति बहोर्नञ्वदुत्तरपदभूम्नि यथेह भवति-- बहुगोमान्
बहुयवमान्।।
एवं बहुगोमती बहुयवमतीत्यत्रापि स्यात्।
(संघातपदाक्षेपभाष्यम्)
किमुच्यते समाससंघातग्रहणेष्विति?।।
(संघातपदप्रयोजनभाष्यम्)
यदवयवग्रहणं प्रयोजनमेवैतस्याः परिभाषायाः कुसूलकूपकुम्भशालं बिले कुसूलीबिलमिति यथा।।
(5108 परिभाषाक्षेपेऽमष्टेवार्तिकम्।। 15 ।।)
- विभक्तौ चोक्तम् -
(भाष्यम्) किमुक्तम्? न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति।।
(परिभाषोपसंहारभाष्यम्)
एतेऽस्याः परिभाषाया दोषाः, एतानि च प्रयोजनानि स्युः।।
एते दोषाः समा भूयांसो वा?

तस्मान्नार्थोऽनया परिभाषया।।
न हि दोषाः सन्तीति परिभाषा न कर्तव्या। लक्षणं वा न परिणेयम्।।
न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते।।
दोषाः खल्वपि साकल्येन परिगणिताः। प्रयोजनानामुदाहरणमात्रम्। कुत एतत्। न हि दोषाणां लक्षणमस्तीति।।
तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं च दोषेषु।।
(5109 ङ्याप्प्रयोजनवार्तिकम्।। 16 ।।)
- तद्धितविधानार्थं तु -
(भाष्यम्) तद्धितविधानार्थं तु ङ्याब्ग्रहणं कर्तव्यं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्--कालितरा, हरणितरा, खट्वातरा, मालातरा।।
(आक्षेपभाष्यम्)
किं पुनः कारणं न सिध्यति?
(5110 आक्षेपसाधकवार्तिकम्।। 17 ।।)
- विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् -
(भाष्यम्) विप्रतिषेधाद्धि तद्धितोत्पत्तिः प्राप्नोति।।
(5111 ङ्याब्ग्रहणे दोषवार्तिकम्।। 18 ।।)
- तत्र समासान्तेषु दोषः -
(भाष्यम्) तत्र समासान्तेषु दोषो भवति--बहुगोमत्का, बहुयवमत्का।।
समासान्ता अपि ङ्याबन्तात्स्युः।।
(5112 न्यूनतापूरकवार्तिकम्।। 19 ।।)
- त्यूङोश्च ग्रहणम् -
(भाष्यम्) त्यूङोश्चापि ग्रहणं कर्तव्यं भवति। युवतिका, ब्रह्मबन्धुकेति।।
(वार्तिकाक्षेपभाष्यम्)
ःढ्य;ङ्ग्रहणेन तावन्नार्थः। नास्त्यत्र विशेषः। उकारान्तादुत्पत्तौ सत्यामूङन्ताद्वा।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि--युवतितरा, ब्रह्मबन्धुतरा, ःथ्य;ति।।
(5113 दोषपरिहारवार्तिकम्।। 20 ।।)
- तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः -
(भाष्यम्) तदन्तस्य च ङ्याबन्तस्य प्रत्ययार्थेनायोगात्तद्धितोत्पत्तिर्न प्राप्नोति। कालितरा, हरिणितरा, खट्वातरा, मालातरेति।।
किं कारणम्?
ङ्याबन्तमेतत् स्त्रीप्रधानम्। न च स्त्रीत्वस्य प्रकर्षाप्रकर्षौ स्तः।
नैष दोषः।
न हि किंचिदुच्यते--एवंजातीयकादुत्पत्तव्यमेवं जातीयकान्नेति।
एतावदुच्यते--अतिशायने तमबिष्ठनौ तिङश्च ःथ्य;ति। यस्य च प्रकर्षोऽस्ति तस्य प्रकर्षे प्रत्ययो भविष्यति। अस्ति चाप्रधानस्य गुणस्य प्रकर्षः।
ःथ्य;ह खल्वपि शुक्लतरः कृष्णतर ःथ्य;ति।
द्रव्यं प्रधानम्। गुणस्य च प्रकर्षे प्रत्यय उत्पद्यते।।
(5114 सिद्धान्तवार्तिकम्।। 21 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्? सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादयः ःथ्य;ति। प्रातिपदिकविशेषणं स्त्रीग्रहम्, स्वार्थिकाष्टाबादयः।।
नैवं विज्ञायते--स्त्रियामभिधेयायामिति।।
नापि स्त्रीसमानाधिकरणात्प्रातिपदिकादिति।।
कथं तर्हि--यत्प्रातिपदिकं स्त्रियां वर्तते तस्माट्टाबादयो भवन्ति।।
कस्मिन्नर्थे?
स्वार्थे ःथ्य;ति।।
(वार्तिकोक्तदोषपरिहारभाष्यम्)
ननु चोक्तं तत्र समासान्तेषु दोष ःथ्य;ति।।
समासान्ता अपि स्वार्थिकाः।।
उभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्ति।।
(वार्तिकोक्तदोषपरिहारभाष्यम्)
कथं कालिकेति?।।

प्रत्ययस्थात्कात्पूर्वस्येतीत्वं भविष्यति।।
(वार्तिकोक्तदोषपरिहारभाष्यम्)
कथं हरिणिका ःथ्य;ति?।।
हरिणशब्दः प्रकृत्यन्तरमस्ति।
(वार्तिकोक्तदोषपरिहारभाष्यम्)
कथं लोहिनिकेति?
वक्ष्यत्येतल्लोहिताल्लिङ्गबाधनं वेति ।। 1 ।।
-4-1-3- स्त्रियाम् (1277)
(लिङ्गाधिकरणम्)
(आक्षेपभाष्यम्)
स्त्रियामित्युच्यते।
का स्त्री नाम्।।
(समाधानभाष्यम्)
लोकत एते शब्दाः प्रसिद्धाः। स्त्री पुमान्नपुंसकमिति।
यल्लोके दृष्ट्वा एतदवसीयते--
ःथ्य;यं स्त्री, अयं पुमान्, ःथ्य;दं नपुंसकमिति।
सा स्त्री, स पुमान्, तन्नपुंसकमिति।।
(स्त्रीत्वनिमित्तजिज्ञासाभाष्यम्)
किं पुनर्लोके दृष्ट्वा एतदवसीयते--
ःथ्य;यं स्त्री, अयं पुमान्, ःथ्य;दं नपुंसकमिति।।
(निमित्तकथनाभाष्यम्)
लिङ्गम्।।
(जिज्ञासाभाष्यम्)
किं पुनस्तत्?
(लिङ्गलक्षणभाष्यम्)
स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्।।
(लिङ्गलक्षणदूषणभाष्यम्)
लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप्प्रसज्यते।
लिङ्गात्स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप्प्राप्नोति। यद्धि लोके दृष्ट्वैतदवसीयते--ःथ्य;यं स्त्री।
अस्ति तद् भ्रूकुंसे।।
(द्वितीयदूषणभाष्यम्)
नत्वं खरकुटीः पश्य।।
ःथ्य;ह चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्येति तस्माच्छसो नः पुंसीति नत्वं प्राप्नोति।।
यद्धि लोके दृष्ट्वैतदवसीयते--अयं पुमानिति। अस्ति तद्वध्रिकादिषु।।
(तृतीयदूषणभाष्यम्)
खट्वावृक्षौ न सिध्यतः।।
खट्वावृक्षयोश्च लिङ्गं न सिध्यति। यद्धि लोके दृष्ट्वैतदवसीयते--ःथ्य;यं स्त्री, अयं पुमानिति। न तत्खट्वावृक्षयोरस्ति।।
किं तर्हि तयोर्लिङ्गं न्याय्यम्?
(दूषणसाधकभाष्यम्)
नापुंसकं भवेत्तस्मिन्।।
नापुंसकं खट्वावृक्षयोर्लिङ्गं न्याय्यम्। किमिदं नापुंसकमिति? न पुंसके भवं नापुंसकम्।।
(दूषणसाधकभाष्यम्)
तदभावे नपुंसकम्।।
तदभावे स्त्रीपुंसलिङ्गाभावे नपुंसकं लिङ्गं न्याय्यम्
(लिङ्गसाधकभाष्यम्)
असत्तु मृगतृष्णावत्।।
असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम्। कथं पुनरसन्नाम लिङ्गं शक्यं द्रष्टुम्? मृगतृष्णावत्। तद्यथा-मृगास्तृषिता अपां धाराः पश्यन्ति। न च ताः सन्ति।।

(लिङ्गसाधकभाष्यम्)
गन्धर्वनगरं यथा।।
यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते। तद्वत्खट्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम्।।
(लिङ्गसाधकभाष्यम्)
आदित्यगतिवत्सन्न।।
अथ वा यथा--आदित्यगतिः सती नोपलभ्यते। तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते।।
(लिङ्गसाधकभाष्यम्)
वस्त्रान्तर्हितवच्च तत्।।
यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते। तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते।।
(आक्षेपभाष्यम्)
विषम उपन्यासः। वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाय उपलभ्यन्ते। खट्वावृक्षयोः पुनर्येऽप्येते रथकारा वाशीवृक्षादनहस्ता मूलात्प्रभृति--आऽग्राद्वृक्षांस्तक्ष्णुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते।।
(आक्षेपसाधकभाष्यम्)
केनैतदवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत ाथ्य;ति?
षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति--अतसन्निकर्षात्, अतिविप्रकर्षात्, मूर्त्यन्तरव्यवधानात्, तमसावृतत्वाद्, ाथ्य;न्द्रियदौर्बल्यात्, अतिप्रमादादिति।।
अतोऽत्र कश्चिद्धेतुर्द्रष्टव्यो येन खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते।।
(लिङ्गसाधकभाष्यम्)
केनैतदवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत ाथ्य;ति?
तयोस्तु तत्कृतं दृष्ट्वा
स्त्रीकृतं शब्दं दृष्ट्वा स्त्रीत्यवसीयते। पुंस्कृतं शब्दं दृष्ट्वा पुमानिति।।
(लिङ्गसाधने दृष्टान्तभाष्यम्)
यथाऽऽकाशेन ज्योतिषः।
तद्यथा--आकाशं दृष्ट्वा ज्योतिरत्रेति गम्यते। ज्योतिर्निमित्तं ह्याकाशम्।।
(आक्षेपभाष्यम्)
अन्योन्यसंश्रयं त्वेतत्
अन्योन्यसंश्रयं त्वेतद्भवति। स्त्रीकृतः शब्दः, शब्दकृतं च स्त्रीत्वम्। एतदितरेतराश्रयं भवति। ाथ्य;तरेतराश्रयाणि च न प्रकल्पन्ते।।
(दूषणभाष्यम्)
प्रत्यक्षेण विरुध्यते।।
प्रत्यक्षेण खल्वपि स विरुध्यते--
य आह खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत ाथ्य;ति। तत्र स्वेन्द्रियविरोधः कृतो भवति।
न च नाम स्वेन्द्रियविरोधिना भवितव्यम्।।
(दूषणान्तरभाष्यम्)
तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति।।
तटे च खल्वपि सर्वाणि लिङ्गानि दृष्ट्वा--तटः, तटी, तटमिति, कस्तदध्यवसातुमर्हति--ाथ्य;यं स्त्री, अयं पुमान्, ाथ्य;दं नपुंसकमिति।।
(पूर्वपक्षोपसंहारभाष्यम्)
तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं च कश्चित्स्वकृतान्त आस्थेयः।
कोऽसौ स्वकृतान्तः?
(सिद्धान्तभाष्यम्)
संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्यानप्रसवौ लिङ्गमास्थेयौ।।
(आक्षेपभाष्यम्)
किमिदं संस्त्यानप्रसवाविति?
(व्युत्पत्तिदर्शकभाष्यम्)
संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान्।। ाथ्य;ति।
(आक्षेपभाष्यम्)
ननु च लोकेऽपि स्त्यायतेरेव स्त्री, सूतेश्च पुमानिति।।
(समाधानभाष्यम्)
अधिकरणसाधना लोके स्त्री-स्त्यायत्यस्याङ्गर्भ ाथ्य;ति। कर्तृसाधनश्च पुमान्-सूते पुमानिति।

ः थ्य;ह पुनरुभयं भावसाधनम्। संस्त्यानं स्त्री, प्रवृत्तिश्च पुमान्।।
(आक्षेपभाष्यम्)
कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमान्? गुणानाम्।
केषाम्?
(समाधानभाष्यम्)
शब्दस्पर्शरूपरसगन्धानाम्।
(सामान्यप्रतिपत्तिभाष्यम्)
सर्वाश्च पुनर्मूर्तय एवमात्मिकाः--संस्त्यानप्रसवगुणाः, शब्दस्पर्शरूपरसगन्धवत्यः।।
यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः--शब्दः, स्पर्शः, रूपमिति।।
रसगन्धौ न सर्वत्र।।
(सर्वपदार्थेषु लिङ्गबोधकभाष्यम्)
प्रवृत्तिः खल्वपि नित्या। न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्द्धते वा यावदनेन वर्द्धितव्यम्, अपायेन वा युज्यते।।
तच्चोभयं सर्वत्र।।
(आक्षेपभाष्यम्)
यद्युभयं सर्वत्र,
कुतो व्यवस्था?
(समाधनभाष्यम्)
विवक्षातः।
संस्त्यानविवक्षायां स्त्री, प्रसविवक्षायां पुमान्, उभयविवक्षायां नपुंसकम्।।
(दोषपरिहारभाष्यम्)
तस्योक्तौ लोकतो नाम
तस्योक्तौ वचने लोकतो नामैतद्भवति--स्त्री, पुमान्, नपुंसकमिति।।
(ः थ्य;ईशलिङ्गाश्रयणे लाघवबोधकभाष्यम्)
गुणो वा लुपि युक्तवत्।।
वर्धिकादिषु भूयान् परिहारः।
लुपि युक्तवद्व्यक्तिवचने (1|2|51) ः थ्य;त्येवमत्रगुणो भवति।।
(प्रमाणप्रदर्शकभाष्यम्)
न चैतन्मन्तव्यं स्वमनीषिकयोच्यत ः थ्य;ति।
पठिष्यति ह्याचार्यः--लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति।
पुन पठिष्यति--एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वम्, अवयवान्यत्वाच्च, ः थ्य;ति।।
संस्त्याने स्त्यायतेर्ड्रट् स्त्री
सूतेः सप् प्रसवे पुमान्।
तस्योक्तौ लोकतो नाम
गुणो वा लुपि युक्तवत्।।
(स्त्रियाम् पदान्वयाधिकरणम्)
(आक्षेपभाष्यम्)
कथं पुनरिदं विज्ञायते--स्त्रियामभिधेयायां टाबादयो भवन्तीति। आहोस्वित् स्त्रीसमानाधिकरणात्प्रातिपदिकादिति।।
कश्चात्र विशेषः?
(5115 आक्षेपवार्तिकम्।। 1 ।।)
- स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः -
(भाष्यम्) स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो भवन्ति, द्विवचनबहुवचनयोरनुपपत्तिः--कुमार्यौ, कुमार्यः, किशोर्यौ, किशोर्यः।।
किं कारणम्?
एकत्वात् स्त्रीत्वस्य। एकोऽयमर्थः स्त्रीत्वं नाम। तस्यैकत्वादेकवचनमेव प्राप्नोति।।
(द्वितीयदोषप्रदर्शकभाष्यम्)
अनेकप्रत्ययानुपपत्तिश्च।
अनेकश्च प्रत्ययो नोपपद्यते--गार्ग्यायणी, कारीषगन्ध्या, कालितरा, ः थ्य;ति।
किं कारणम्?
एकत्वात् स्त्रीत्वस्य। एकोऽयमर्थः स्त्रीत्वं नामतस्यैकेनोक्तत्वाद् द्वितीयस्य प्रयोगेण न भवितव्यम्।
किं कारणम्?

उक्तार्थानामप्रयोग ः॑थ्य;ति।।
(5116 आक्षेपवार्तिकम्।। 2 ।।)
- स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिः -
(भाष्यम्) स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति--ः॑थ्य;कारो न प्राप्नोति।।
(पक्षान्तरोपपादकभाष्यम्)
अस्तु तर्हि स्त्रीसमानाधिकरणात्प्रातिपदिकादिति।।
(5117 आक्षेपवार्तिकम्।। 3 ।।)
- स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः -
(भाष्यम्) स्त्रीसमानाधिवारणादिति चेद् भूतादिष्वतिप्रसङ्गो भवति--भूतमियं ब्राह्मणी, कारणमियं ब्राह्मणी, आवपनमियमुष्ट्रिकेति।।
(प्रथमपक्षसमर्थकभाष्यम्)
स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु, ः॑थ्य;ह तावद्-भूतमियं ब्राह्मणीति, नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि? पौतन्यम्।।
कारणमियं ब्राह्मणीति, नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि? प्राधान्यम्।।
आवपनमियमुष्ट्रिकेति, नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि? संभवनम्।।
(5118 आक्षेपवार्तिकम्।। 4 ।।)
- षट्संज्ञकेभ्यश्च प्रतिषेधः -
(भाष्यम्) षट्संज्ञकेभ्यश्च प्रतिषेधो वक्तव्यः। पञ्च ब्राह्मण्यः, दश ब्राह्मण्यः।।
(प्रथमपक्षसमर्थकभाष्यम्)
स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु, नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि? भेदो विवक्षितः संख्या।।
(दोषप्रतिपादकभाष्यम्)
ः॑थ्य;ह च स्त्री ः॑थ्य;कारो न प्राप्नोति। न हि तेनैव तस्य सामानाधिकरण्यमस्ति।।
(5119 सिद्धान्तवार्तिकम्।। 5 ।।)
- सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः -
(भाष्यम्) सिद्धमेतत्।
कथम्?
स्त्रियाः प्रातिपदिकविशेषणत्वात्। प्रातिपदिकविशेषणं स्त्रीग्रहणम्, स्वार्थिकाष्टाबादयः।
नैवं विज्ञायते स्त्रियामभिधेयायामिति।
नापि स्त्रीसमानाधिकरणादिति।
कथं तर्हि?
स्त्रियां यत् प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्ति। कस्मिन्नर्थे? स्वार्थ ः॑थ्य;ति।।
(पूर्वपक्षोपपादकभाष्यम्)
अथ वा पुनरस्तु स्त्रियामभिधेयायामिति।
ननु चोक्तं स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः, स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिरिति।।
(प्रथमपक्षोक्तदोषपरिहारभाष्यम्)
नैष दोषः।।
यत्तावदुच्यते द्विवचनबहुवचनयोरनुपपत्तिरिति।।
(5120 पूर्वपक्षोक्तदोषोद्धारकवार्तिकम्।। 6 ।।)
- गुणवचनस्य चाश्रयतो लिङ्गवचनभावात् -
(भाष्यम्) गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा--शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला ः॑थ्य;ति।
यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति। एवमिहापि यददो द्रव्यं श्रितं भवति स्त्रीत्वं गुणः, तस्य यल्लिङ्गं वचनं च तत् स्त्रीत्वस्यापि भविष्यति।।
(पूर्वपक्षोक्तदोषाक्षेपरभाष्यम्)
यदप्युच्यते अनेकप्रत्ययानुपपत्तिरिति।।
(5121 पूर्वपक्षोक्तदोषोद्धारकवार्तिकम्।। 7 ।।)
- भावस्य च भावयुक्तत्वात् -
(भाष्यम्) भावो भावेन युज्यते। तद्यथा--ः॑थ्य;षिरिषिणा, निमन्त्रिश्च निमन्त्रिणा।।
(दृष्टान्तविघटकभाष्यम्)
विषम उपन्यासः। युक्तं तत्रान्यत्वं साधनभेदात्, कालभेदाच्च।

युक्तं तत्रैकस्य बाह्यं साधनम्, सर्वकालश्च प्रत्ययः।
अपरस्याभ्यन्तरं साधनम्, वर्तमानकालश्च प्रत्यय ::थ्य;ति।
::थ्य;ह पुनरेकं स्त्रीत्वम्।।
(समानप्रतिपत्तिभाष्यम्)
अथैकमप्युपलभ्यते।
किं चातः?
यद्येकमुपलभ्यते द्वितीयमप्युपलभ्यताम्।
अथैकमप्यनुमानगम्यं द्वितीयमप्यनुमानाद्गम्यताम्।।
(समाधानान्तरप्रतिपादकभाष्यम्)
कस्य तावद्भवानेकं गुणं न्याय्यं मन्यते स्त्रीत्वं नाम?
द्रव्यस्य।।
द्रव्ये च भवतः कः संप्रत्ययः?
(द्रव्यलक्षणभाष्यम्)
यदि तावद् गुणसमुदायो द्रव्यम्।।
(द्रव्यलक्षणखण्डनभाष्यम्)
का गतिर्य एते भावाः कृदभिहितास्तद्धिताभिहिताश्च--चिकीर्षा, गोतेति।।
(द्रव्यलक्षणसाधकभाष्यम्)
अथ मतमेतत् कृदभिहितो भावो द्रव्यवद्भवति ::थ्य;ति स्त्रीत्वमपि स्त्रीत्वेनाभिहितं द्रव्यवद्भविष्यति।।
(आक्षेपभाष्यम्)
क्व च तावद् दोषः स्यात्?
दृष्टस्य हि दोषस्य सुसुखः परिहारः--गार्ग्यायणी, कारीषगन्ध्या, कालितरेति।।
(दोषोद्धारकभाष्यम्)
::थ्य;ह तावद्-गार्ग्यायणीति। षित्करणसार्मथ्यान्ङीष् भविष्यित।।
कारीषगन्ध्येति। वचनाच्चाब्भविष्यति।।
कालितरेति। न यावत्काली तावत्कालितरेति।
किं तर्हि?
प्रकृष्टा काली कालितरा। यत्तच्छब्दरूपं प्रकर्षे वर्तते तस्यानुक्तं स्त्रीत्वमिति कृत्वा टाब्भविष्यति।।
(आक्षेपभाष्यम्)
यदप्युच्यते--:थ्य;ह च स्त्री ::थ्य;तीकारो न प्राप्नोतीति।।
निपातनादेतत् सिद्धम्।
किं निपातनम्?
स्त्रियामवन्तिकुन्तिकुरुभ्यश्च (4।1।176) ::थ्य;ति।।
(5122 आक्षेपवार्तिकम्।। 8 ।।)
- स्त्रीविषये ङ्यापोरप्रसिद्धिरकारान्तादर्शनात् -
(भाष्यम्) स्त्रीविषये ङ्यापोरप्रसिद्धिः। खट्वा, माला।
किं कारणम्?
अकारान्तादर्शनात्। न ह्यकारान्तता दृश्यते।
ननु चेयं दृश्यते--अतिखट्वः, अतिमाल ::थ्य;ति।
नैषाऽकारान्तता। आप एवैतद् ह्रस्वत्वम्।।
(5123 समाधानवार्तिकम्।। 9 ।।)
- सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः -
(भाष्यम्) सर्वेषामेव तु प्रातिपदिकानां स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः--
शशः, षष ::थ्य;ति मा भूत्।
पलाशः, पलाष ::थ्य;ति मा भूत्।
मञ्चकः, मञ्जक ::थ्य;ति मा भूत्।।
(5124 सिद्धान्तवार्तिकम्।। 10 ।।)
- तस्मात्सिद्धम् -
(भाष्यम्) तस्मासिद्धमेतद्भवति।।
अथ वा ::थ्य;यमकारान्तता दृश्यते--पञ्चभिः खट्वाभिः क्रीतः पटः पञ्चखट्वः, दशखट्वः।।

?B-4-1-4- अजाद्यतष्टाप् (1278)
(5125 विधिवार्तिकम्।। 1 ।।)
- शूद्रा चामहत्पूर्वा -
(भाष्यम्) शूद्रा चामहत्पूर्वेति वक्तव्यम्--शूद्रा।।
अमहत्पूर्वेति किमर्थम्?
महाशूद्री।।
(5126 विध्यंशपूरकवार्तिकम्।। 2 ।।)
- जातिः -
(भाष्यम्) जातिरिति वक्तव्यम्। या हि महती शूद्रा महाशूद्रा सा भवति।।
(वार्तिकप्रत्याख्यानभाष्यम्)
शूद्रशब्दोऽजादिषु पठ्यते। तत्र कः प्रसङ्गो यन्महत्पूर्वात्स्यात्?
नैव प्राप्नोति नार्थः प्रतिषेधेन।।
तदन्तविधिना प्राप्नोति।।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।।
(समाधानभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः--भवतीह तदन्तविधिरिति।
किमेतस्य ज्ञापने प्रयोजनम्?
भवती, अतिभवती, महती, अतिमहती, अत्र तदन्तविधिः सिद्धो भवति।।
जातिरिति च वक्ष्यामीति।।
(समाधानाक्षेपभाष्यम्)
यद्येतज्ज्ञाप्यते--पञ्चाजी, दशाजी, अत्रापि प्राप्नोति।।
(आक्षेपखण्डनभाष्यम्)
नैष दोषः।।
अजादिभिरत्र स्त्रियं विशेषयिष्यामः--अजादीनां या स्त्रीति।।
-4-1-6- उगितश्च (1280)
(तदन्तविध्यभावे दोषप्रतिपादकं भाष्यम्)
कथमिदं विज्ञायते--
उगितः प्रातिपदिकादिति,
आहो स्विदुगिदन्तात्प्रातिपदिकादिति?
किं चातः?
यदि विज्ञायते उगितः प्रातिपदिकादिति,
सिद्धम्--भवती, महतीति।
अतिभवती, अतिमहतीति न सिध्यति।।
तदन्तविधिना भविष्यति।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।।
(तदन्तविधौ दोषाधायकभाष्यम्)
अथ विज्ञायते उगिदन्तात्प्रातिपदिकादिति,
सिद्धम्--अतिभवती, अतिमहतीति।।
भवती, महतीति न सिध्यति।
व्यपदेशिवद्भावेनेह भविष्यति।
व्यपदेशिवद्भावोऽप्रातिपदिकेन।।
(पक्षद्वये दोषप्रतिपादकभाष्यम्)
उभयथा चं निर्गोमती, निर्यवमतीति न सिध्यति।।
किं कारणम्?
प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति।।
(प्रथमपक्षे दोषाभावोपपादकभाष्यम्)
यथेच्छसि तथास्तु।।
अस्तु तावदुगितः प्रातिपदिकादिति।।
कथम्--अतिभवती, अतिमहतीति? तदन्तविधिना भविष्यति।।

ननु चोक्तं ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यत ःथ्य;ति।
नैतत्प्रातिपदिकग्रहणम्। प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम्।।
(द्वितीयपक्षे दोषाभावोपपादकभाष्यम्)
अथ वा पुनरस्तु--उगिदन्तात्प्रातिपदिकादिति।।
कथं--भवती, महतीति?
व्यपदेशिवद्भावेन भविष्यति।।
ननु चोक्तं व्यपदेशिवद्भावोऽप्रातिपदिकेनेति।
नैतत्प्रातिपदिकग्रहणम्। प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम्।।
(पक्षद्वये दोषाभावोपपादकभाष्यम्)
यदप्युच्यते--उभयथा निर्गोमती, निर्यवमतीति न सिध्यतीति।
किं कारणम्?
प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति।।
नैतत्प्रत्ययग्रहणम्। प्रत्ययाप्रत्यययोरेतद् ग्रहणम्।।
कथम्?
वर्णोप्युगित्, प्रत्ययोप्युगित्, प्रातिपदिकमप्युगित्।।
(5127 पूर्वपक्षवार्तिकम्।। 1 ।।)
- धातोरुगितः प्रतिषेधः -
(भाष्यम्) धातोरुगितः प्रतिषेधो वक्तव्यः। उखास्रद् ब्राह्मणी, पर्णध्वद् ब्राह्मणी।।
(5128 पूर्वपक्षवार्तिकम्।। 2 ।।)
- अञ्चतेश्चोपसंख्यानम् -
(भाष्यम्) अञ्चतेश्चोपसंख्यानं कर्तव्यम्। प्राची, प्रतीची।।
(5129 सिद्धान्तवार्तिकम्।। 3 ।।)
- उगित्यञ्चतिग्रहणात्सिद्धमधातोः -
(भाष्यम्) उगिति अञ्चतिग्रहणादधातोः सिद्धम्।।
अञ्चतिग्रहणं नियमार्थं भविष्यति। अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातोरिति।।
-4-1-7- वनो र च (1281)
(अतिव्याप्तिपरिहारभाष्यम्)
ःथ्य;ह कस्मान्न भवति--निःशुनी, अतियूनीति?
अर्थवद्ग्रहणे नानर्थकस्येति।
एवमपि मघोनी--अत्र प्राप्नोति।
मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्।।
(5130 सिद्धान्तपूरकवार्तिकम्।। 1 ।।)
- वनो न हशः -
(भाष्यम्) वनो र चेत्यत्र हशन्तान्न भवतीति वक्तव्यम्। ःथ्य;ह मा भूत्--सहयुध्वा ब्राह्मणीति।।
यदि न हश ःथ्य;त्युच्यते--शर्वरीति न सिध्यति।
विहितविशेषणं हश्ग्रहणम्--हशन्ताद्यो विहित ःथ्य;ति।
एवमपि प्रेत्वरीति न सिध्यति।
कथं चात्र तुगागमः? छान्दसत्वात्। ङीब्रावपि तर्हि छान्दसत्वादेव भविष्यतः।।
बहुलं छन्दसि ङीब्रौ वक्तव्यौ--यज्वरीरिषः। यज्वनीरिषः।।
(5131 पूर्वपक्षवार्तिकम्।। 2 ।।)
- रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् -
(भाष्यम्) रविधाने बहुव्रीहेरुपसंख्यानं कर्तव्यम्--बहुधीवरी, बहुपीवरी।।
किं पुनः कारणं न सिध्यति?
प्रतिषिद्धत्वात्। अनो बहुव्रीहेः (4।1।12) ःथ्य;ति प्रतिषेधः प्राप्नोति।।
(5232 पूर्वपक्षायसमाधानवार्तिकम्।। 3 ।।)
- अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वावचनम् -
(भाष्यम्) अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वेति वक्तव्यम्।।
(समाधानाक्षेपभाष्यम्)
अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहारः।

यथोपसंख्यानं चोदितं तथा नित्याभ्यां ङीब्राभ्यां भवितव्यम्।
यथा परिहारः, तथा विभाषया भवितव्यम्।।
(सिद्धान्तभाष्यम्)
यथोपसंख्यानं चोदितमेवमपि विभाषया भवितव्यम्, न ह्यत्र ङीब् दुर्लभः। सिद्धोऽत्र ङीप्--अन उपधालोपिनोन्यतरस्याम् (4।1।28) ःथ्य;ति।
ङीप्संनियोगेन र उच्यमानोऽन्येन सति न स्यादित्येवमर्थमुपसंख्यानं चोद्यते।।
(सिद्धान्ताक्षेपभाष्यम्)
किं पुनः कारणं ङीप्संनियोगेन र उच्यते?
ःथ्य;ह मा भूत्--सुपर्वा, चारुपर्वेति।
तत्तर्ह्युपसंख्यानं कर्तव्यम्?
न कर्तव्यम्।।
(सिद्धान्तभाष्यम्)
वक्ष्यति--डाबुभाभ्यामन्यतरस्यामित्यत्रान्यतरस्यां ग्रहणस्य प्रयोजनं डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपियथा स्यातामिति।।
-4-1-10- न षट्स्वस्रादिभ्यः(1284)
(निषेधाधिकरणम्)
(विषयोपन्यासभाष्यम्)
कस्यायं प्रतिषेधः?
ङीबनन्तरस्य प्रतिषेधः।।
(टाबांपत्तिवारकभाष्यम्)
अथेदानीं ङीपि प्रतिषिद्धे--
षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः
कस्मान्न स्यात्?
अत ःथ्य;ति प्राप्नोति।
असिद्धो नलोपस्तस्यासिद्धत्वान्न भविष्यति।
परिगणितेषु कार्येषु नलोपोऽसिद्धः। न चेदं तत्र परिगण्यते।।
ःथ्य;दमपि तत्र परिगण्यते।
कथं?
प्रत्याहाराच्चापा सिद्धम्
सुबिति नेदं प्रत्ययग्रहणम्।
किं तर्हि?
प्रत्याहारग्रहणम्।
क्व संनिविष्टानां प्रत्याहारः? प्रथमैकवचनात्प्रभृत्या चापः पकारात्।
(आपत्त्युद्भावकभाष्यम्)
यदि प्रत्याहारग्रहणम्--
दोषस्त्वित्वे
ःथ्य;त्वे दोषो भवति--बहुचर्मिका, बहुवर्मिका। प्रत्ययस्थात्कात्पूर्वस्यात (7।3।44) ःथ्य;ति--ःथ्य;त्वं न प्राप्नोति।।
(सिद्धान्तभाष्यम्)
तस्मान्नोभौ।।
तस्मात् षड्संज्ञकेभ्य उभौ न भवत ःथ्य;ति वक्तव्यम्।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।
स्त्रियाम् (4।1।3) ःथ्य;ति वर्तते, स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः।।
षट्संज्ञानामन्ते लुप्ते
टाबुत्पत्तिः कस्मान्न स्यात्।
प्रत्याहाराच्चापा सिद्धं
दोषस्त्वित्वे तस्मान्नोभौ।।
-4-1-13- बुभाभ्यामन्यतरस्याम् (1287)
(विकल्पाधिकरणम्)
(सूत्रैकदेशाक्षेपभाष्यम्)
किमर्थमुभाभ्यामित्युच्यते?

(समाधानभाष्यम्)
उभाभ्यां योगाभ्यां डाब्यथा स्यात्। मन्नन्तादन्नन्ताच्च बहुव्रीहेः।।
(सिद्धान्तभाष्यम्)
नैतदस्ति प्रयोजनम्। प्रकृतमुभयमनुवर्तते।।
(आक्षेपभाष्यम्)
अथान्यतरस्यां ग्रहणं किमर्थम्?
(समाधानभाष्यम्)
अन्यतरस्यां डाब्यथा स्यात्। डापामुक्ते प्रतिषेधोऽपि यथा स्यादिति।।
(समाधानाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्। ःथ्य;ह डाबुच्यते, प्रतिषेधोऽपि। तावुभावपि वचनाद्भविष्यतः।।
(समाधानभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--
डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यात्।।
(प्रत्याक्षेपभाष्यम्)
सिद्धोऽत्र ङीप्-अन उपधालोपिनोऽन्यतरस्याम् (4|1|28) ःथ्य;ति।।
(सूत्रान्तरैकदेशाक्षेपभाष्यम्)
अथ तदन्यतरस्यां ग्रहणं शक्यमकर्तुम्?
बाढं शक्यम्।।
कथम्?
ःथ्य;ह डाबप्युच्यते, प्रतिषेधोऽपि, ङीबपि। तत्सर्वं वचनाद्भविष्यति।।
(आक्षेपनिरासभाष्यम्)
नैवं शक्यं विज्ञातुम्। अक्रियमाणे हि तत्रान्यतरस्यां ग्रहणेऽनवकाशो ङीब् डाप्प्रतिषेधौ बाधेत।।
(प्रत्याक्षेपभाष्यम्)
डाप्प्रतिषेधावप्यनवकाशौ तौ वचनाद्भविष्यतः।।
(समाधानभाष्यम्)
सावकाशौ डाप्प्रतिषेधौ। कोऽवकाशः?
सुपर्वा, चारुपर्वेति।
तस्मादन्यतरस्यां ग्रहणं कर्तव्यम्।।
(आक्षेपभाष्यम्)
ःथ्य;दं तु खल्वन्यतरस्यां ग्रहणं शक्यमकर्तुम्।।
(समाधानभाष्यम्)
ःथ्य;दमप्यवश्यं कर्तव्यम्।।
किं प्रयोजनम्?
डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्यातामिति। रविधाने बहुव्रीहेरुपसंख्यानं चोदितं तन्न वक्तव्यं भवति।।
(जिज्ञासाभाष्यम्)
अथेह कथं भवितव्यं--
बहवः श्वानोऽस्यां रथ्यायाम्, बहवो युवानोऽस्यां शालांयामिति?
(रूपाक्षेपभाष्यम्)
बहूशूका, बहुयूका ःथ्य;ति भवितव्यम्।।
का रूपसिद्धिः--डाप्, टिलोपः, प्रसारणम्, प्रसारणपरपूर्वत्वम्, नद्यृतश्चेति कप्।।
(सिद्धान्तभाष्यम्)
कपा तावन्न भवितव्यम्।।
किं कारणम्?
नद्यन्तानां यो बहुव्रीहिरित्येवं तद्विज्ञायते, न चैष नद्यन्तानां बहुव्रीहिः।।
प्रसारणेनापि न भवितव्यम्।
वक्ष्यत्येतत्--श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति।।
परपूर्वत्वेन चापि न भवितव्यम्।
वक्ष्यत्येतत्--संप्रसारणपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थमिति।।
तस्माद्बहुश्वा, बहुयुवेति भवितव्यमिति।।

-4-1-14- अनुपसर्जनात् (1288)
(तदन्तविधिज्ञापनाधिकरणम्)
(आक्षेपभाष्यम्)
अनुपसर्जनादिति किमर्थम्?
(प्रयोजनभाष्यम्)
बहुकुरुचरा मथुरा, प्रियकुरुचरा मथुरा।
(प्रत्याक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्। कुरुचरशब्दात्प्रत्ययो विधीयते। तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्दात्स्यात्?
नैव प्राप्नोति--नार्थः प्रतिषेधेन।।
(समाधानभाष्यम्)
तदन्तविधिना प्राप्नोति।।
अत उत्तरं पठति--
(5133 पूर्वपक्षवार्तिकम्।। 1 ।।)
- अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् -
(भाष्यम्) अनुपसर्जनग्रहणमनर्थकम्।।
किं कारणम्?
प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।।
(5134 सिद्धान्तवार्तिकम्।। 2 ।।)
- ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य -
(भाष्यम्) एवं तर्हि ज्ञापयत्याचार्यः--पूर्वत्र तदन्तविधिप्रतिषेधो न भवतीति।।
(ज्ञापनप्रयोजनभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम्?
भवती, अतिभवती, महती, अतिमहतीत्यत्र तदन्तविधिः सिद्धो भवति।।
नैतदस्ति प्रयोजनम्। उक्तमेतत्--वर्णोप्युगित्, प्रत्ययोऽप्युगित्, प्रातिपदिकमप्युगिदिति।।
(ज्ञापनप्रयोजनभाष्यम्)
ः थ्य;दं तर्हि--बहुधीवरी, बहुपीवरीति।।
एतदपि नास्ति प्रयोजनम्। अत्राप्युक्तम्--रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् ःथ्य;ति।।
(ज्ञापनप्रयोजनभाष्यम्)
ःथ्य;दं तर्हि--अतिधीवरी, अति पीवरी।।
(5135 उपसर्जनपदार्थबोधकवार्तिकम्।। 3 ।।)
- पूर्वसूत्रनिर्देशो वाऽऽपिशलमधीत ःथ्य;ति -
(भाष्यम्) पूर्वसूत्रनिर्देशो वा पुनरयं द्रष्टव्यः। पूर्वसूत्रेऽप्रधानस्योपसर्जनमिति संज्ञा क्रियते। यावद् ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति, तावदनुपसर्जनादिति।।
किं प्रयोजनम्?
आपिशलमधीते ब्राह्मणी--आपिशला ब्राह्मणी। अणन्तादितीकारो मा भूदिति।।
(अन्वयबोधकभाष्यम्)
अथानुपसर्जनादित्युच्यमाने कस्मादेवात्र न भवति?
अणन्तं ह्येतदनुपसर्जनम्। नानुपसर्जग्रहणेनाणन्तं विशेष्यते--अणन्तादनुपसर्जनादिति।।
किं तर्हि? अणेव विशेष्यते। अण्योऽनुपसर्जनमिति।।
(5136 अनुपसर्जनस्य गृह्यमाणविशेषणत्वे दोषवार्तिकम्।। 4 ।।)
- जातिशब्देभ्यस्त्वतिप्रसङ्गः -
(भाष्यम्) जातिशब्देभ्यस्त्वतिप्रसङ्गो भवति--अवन्ती, कुन्ती, गान्धारी।।
(5137 दोषाभावोपपादकवार्तिकम्।। 5 ।।)
- सिद्धं तु जातेरनुपसर्जनत्वात् -
(भाष्यम्) सिद्धमेतत्।
कथम्? अनुपसर्जनादित्युच्यते। न च जातिरुपसर्जनम्।।
(वार्तिकान्यथासिद्धिभाष्यम्)
एतदपि नास्ति प्रयोजनम्। स्त्रियामिति वर्तते। तेनाणं विशेषयिष्यामः--स्त्रियां योऽण्विहित ःथ्य;ति।।
(अभ्युपेत्यवादेन दोषभाष्यम्)

एवमपि काशकृत्स्निना प्रोक्ता मीमांसा--काशकृत्स्नी, काशकृत्स्नीमधीते--काशकृत्स्ना ब्राह्मणी, अत्र प्राप्नोति।।
(दोषाभावोपपादकभाष्यम्)
नैष दोषः। अध्येत्र्यामभिधेयायामण ःथ्य;कारेण भवितव्यम्। यश्चात्राध्येत्र्यामभिधेयायामणुक्तः, लुप्तः सः।
यश्च श्रूयते, उत्पन्नस्तस्मादीकार ःथ्य;ति कृत्वा पुनर्न भविष्यति।।
(सूत्रप्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--
प्रधानेन तदन्तविधिर्यथा स्यात्--कुम्भकारी, नगरकारी।
अत्र हि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति--अवयवादुत्पत्तिः प्राप्नोति।
(प्रयोजनाक्षेपभाष्यम्)
कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति--संघातादुत्पत्तिर्भविष्यति।
(प्रत्याक्षेपभाष्यम्)
कृद्ग्रहण ःथ्य;त्युच्यते, न चैतत्कृद्ग्रहणम्।
कृदकृद्ग्रहणमेतत्--कृदप्ययमण्, तद्धितोऽपि।।
(सूत्रानुपयोगप्रदर्शकभाष्यम्)
एवं तर्हि--ःथ्य;कारान्तेन समासो भविष्यति।
(सूत्रोपयोगप्रदर्शकभाष्यम्)
यद्येवं लभ्येत, कृतं स्यात्। तत्तु न लभ्यते।
किं कारणम्? अत्र हि गतिकारकोपपदानां कृद्भिः सह समासो भवतीति समास एव तावद्भवति। समासे च कृते, अवयवादुत्पत्तिः प्राप्नोति।।
अवयवादुत्पत्तौ सत्यां को दोषः?
कौम्भकारेयो न सिद्ध्यति--अवयवस्य वृद्धिस्वरौ स्याताम्।
तस्मादनुपसर्जनाधिकारः।।
(5138 पूर्वपक्षवार्तिकम्।। 6 ।।)
- अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुर्पण्या उपसंख्यानम् -
(भाष्यम्) अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुर्पण्या उपसंख्यानं कर्तव्यम्--सुपर्णी।।
(5139 सिद्धान्तवार्तिकम्।। 7 ।।)
- न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् -
(भाष्यम्) न वा एष दोषः।
किं कारणम्? समासस्यानुपसर्जनत्वात्। समासोऽत्रानुपसर्जनम्। स च जातिवाचकः। समासस्यानुपसर्जनत्वात्तस्य च जातिवाचकत्वाच्छब्दस्य सामान्येन ङीष् भविष्यति--जातेरस्त्रीविषयादयोपधात् (4।1।63) ःथ्य;ति।।
(वार्तिकोपसंहारभाष्यम्)
कथं कृत्वा चोदितम्? कथं कृत्वा परिहारः?
बहुव्रीहिरिति कृत्वा चोदितम्।
तत्पुरुष ःथ्य;ति कृत्वा परिहारः।।
ःथ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थाध्यायस्य प्रथमे पादे प्रथममाह्निकम्।।
-4-1-15- टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (1289)
(ङीबधिकरणम्)
(5140 पूर्वपक्षवार्तिकम्।। 1 ।।)
- ढग्रहणे सानुबन्धकस्योपसंख्यानम् -
(भाष्यम्) ढग्रहणे सानुबन्धकस्योपसंख्यानं कर्तव्यम्--कारिकेयी, हारिकेयी।।
किं पुनः कारणं न सिद्ध्यति?
(5141 पूर्वपक्षसाधकवार्तिकम्।। 2 ।।)
- अननुबन्धकग्रहणे हि न सानुबन्धकस्य -
(भाष्यम्) अननुबन्धकग्रहणे हि न सानुबन्धकस्य ग्रहणं भवति ःथ्य;त्येषा परिभाषा कर्तव्या।
कान्येतस्याः परिभाषायाः प्रयोजनानि?
तव्यग्रहणे तव्यद्ग्रहणं मा भूत्।
दिव्ग्रहणे दिवुग्रहणं मा भूत्।।
(परिभाषाक्षेपभाष्यम्)
ननु चेयमपि कर्तव्या--तदनुबन्धकग्रहणेऽतदनुबन्धकग्रहणं न ःथ्य;ति।
कान्येतस्याः परिभाषायाः प्रयोजनानि?

यत् ग्रहणे ण्यत् ग्रहणं मा भूत्।
अङ् ग्रहणे चङ् ग्रहणं मा भूत्
अच् ग्रहणे णच् ग्रहणं मा भूत्।।
(परिभाषाज्ञापकभाष्यम्)
ते द्वे एते परिभाषे कर्तव्ये?
न कर्तव्ये।
आचार्यप्रवृत्तिर्ज्ञापयति भवत एते परिभाषे ◌ाथ्य;ति यदयं वामदेवाद् ड्यड्ड्यौ (4।2।9) ◌ाथ्य;ति ययतौ डितौ करोति।।
(प्रथमवार्तिकप्रत्याख्यानभाष्यम्)
तत्तर्ह्युपसंख्यानं कर्तव्यम्?
न कर्तव्यम्।
अननुबन्धको ढशब्दः स्त्रियां नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते।
ननु चायमस्ति शिलाया ढः (5।3।102) ◌ाथ्य;ति। नैष स्त्रियां वर्तते।
अयं तर्हि सभाया यः (4।4।105) ढश्छन्दसि (4।4।106) ◌ाथ्य;ति। एषोऽपि न स्त्रियां वर्तते।।
किं कारणम्? तत्र साधुरिति वर्तते। कथं च स्त्री नाम सभायां साध्वी स्यात्?
(5142 पूर्वपक्षवार्तिकम्।। 3 ।।)
- अञ्ग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् -
(भाष्यम्) अञ्ग्रहणमनर्थकम्। किं कारणम्? तदन्ताद्धि ङीन्विधानम्--तदन्ताद्ध्यञ्ञन्ताद् ङीन् विधीयते--शार्ङ्गरवाद्यञो ङीन् (4।1।73) ◌ाथ्य;ति।।
न चास्ति विशेषः--अञन्ताद् ङीपो वा ङीनो वा, तदेव रूपं स एव स्वरः।।
(5143 समाधानवार्तिकम्।। 4 ।।)
- न वा जात्यधिकारात् -
(भाष्यम्) न वाऽनर्थकम्। किं कारणम्?
जात्यधिकारात्। जातेरिति तत्रानुवर्तते। अजात्यर्थोऽयमारम्भः--औदपानी, औत्सी।।
तच्चावश्यं जातिग्रहणमनुर्वत्यम्।।
(5144 सिद्धान्तसाधकवार्तिकम्।। 5 ।।)
- अनधिकारे हि पुंयोगादाख्यायां ङीन्प्रसङ्गः -
(भाष्यम्) अननुवर्तमाने हि जातिग्रहणे पुंयोगादाख्यायां ङीन्प्रसज्येत--बैदस्य स्त्री बैदीति।।
(अञ्ग्रहणद्वयस्य साफल्यबोधकभाष्यम्)
यदि तर्ह्यस्य निबन्धनमस्ति, ◌ाथ्य;दमेव वक्तव्यम्। तन्न वक्तव्यम्।
तदप्यवश्यं वक्तव्यम्। अक्रियमाणे हि तस्मिन् बैदस्य भगिनी--बैदी, परत्वाज्जातिलक्षणो ङीष् ङीपं बाधेत। ङीनि पुनः सति परत्वाद् ङीन् ङीषं बाधते।।
(5145 सूत्रांशपूरकवार्तिकम्।। 6 ।।)
- ख्युन उपसंख्यानम् -
(भाष्यम्) ख्युन उपसंख्यानं कर्तव्यम्--आढ्यङ्करणी, सुभगङ्करणी।
(सूत्रांशपूरकभाष्यम्)
अल्पमिदमुच्यते ख्युनः ◌ाथ्य;ति--
नञ्स्नञ्ञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्।
नञ्स्नञ्ञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानं कर्तव्यम्। नञ्--स्त्रैणी। स्नञ्--पौंस्नी। ◌ाथ्य;कंक्--शाक्तीकी, याष्टीकी। ख्युन्--आढ्यङ्करणी, सुभयङ्करणी। तरुण, तलुन--तरुणी, तलुनी।।
-4-1-16- यञश्च (1290)
(ङीबधिकरणम्)
(5146 आक्षेपवार्तिकम् ।। 1 ।।)
- आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् -
(भाष्यम्) आपत्यग्रहणं कर्तव्यम्, द्वीपाद्यञः प्रतिषेधार्थम्।
◌ाथ्य;ह मा भूत्--द्वैप्येति।
तत्तर्हि वक्तव्यम्।।
(समाधानभाष्यम्)
न वक्तव्यम्। नैवं विज्ञायते--कञ्व्करपो यञश्चेति।
कथं तर्हि?

कञ्क्वरपोऽयञ्ञश्चेति।।
-4-1-17- प्राचां ष्फ तद्धितः ( 1291)
(तद्धितष्फाधिकरणम्)
(आक्षेपभाष्यम्)
तद्धितवचनं किमर्थम्?
(5146 प्रयोजनवार्तिकम्।। 1 ।।)
- तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् -
(भाष्यम्) तद्धितवचनं क्रियते, षितः प्रातिपदिकादितीकारो यथा स्यात्।।
नैतदस्ति प्रयोजनम्।
षित्करणसामर्थ्यादेवात्र--ःथ्य;कारो भविष्यति।
यथैव तर्हि षित्करणसामर्थ्यादप्रातिपदिकादीकारो भवति। एवं प्रातिपदिकादित्यस्यानुवर्तनसामर्थ्यादषितोऽपि प्रातिपदिकादीकारः स्यात्।।
अस्त्यन्यत् प्रातिपदिकादित्यनुवृत्तौ प्रयोजनम्।
किम्?
उत्तरार्थम्। अत ःथ्य;ञ्--दाक्षिः, प्लाक्षिः।।
-4-1-18-सर्वत्र लोहितादिकतन्तेभ्यः (1292)
(सर्वत्र पदकृत्यभाष्यम्)
सर्वत्रग्रहणं किमर्थम्?
प्राचामेव हि स्यात्।
नैतदस्ति प्रयोजनम्, सिद्धं प्राचां पूर्वेण।।
ःथ्य;दं तर्हि प्रयोजनम्। सर्वेषामेव यथा स्यात्--आवट्यायनी, चापं बाधित्वा ष्फो यथा स्यात्।
(5147 सूत्रांशपूरकवार्तिकम्।। 1 ।।)
- लोहितादिषु शाकल्यस्योपसंख्यानम् -
(भाष्यम्) लोहितादिषु शाकल्यस्योपसंख्यानं कर्तव्यम्--शाकल्यायनी।
यदि पुनरयं शकलशब्दो लोहितादिषु पठ्येत।
नैवं शक्यम्।
ःथ्य;ह हि शाकल्यस्य च्छात्राः शाकलाः कण्वादिभ्योगोत्रे(4।2।11) ःथ्य;त्यण्न स्यात्।
(गणपाठनिश्चायकभाष्यम्)
एवं तर्हि--
कण्वात्तु शकलः पूर्वः
कण्वशब्दात् शकलशब्दः पूर्वः पठितव्यः।।
कतादुत्तर ःथ्य;ष्यते।
कतशब्दात् शकलशब्द उत्तरः पठितव्यः।।
पूर्वोत्तरौ तदन्तादी
पूर्वोत्तरौ गणौ तदन्तादी द्रष्टव्यौ। ये कण्वादयस्ते शकलादयः। ये कतपर्यन्तास्ते शकलपर्यन्ताः।।
किं प्रयोजनम्?
ष्फाणौ तत्र प्रयोजनम्।
तत्रैवं सति ष्फाणौ सिद्धौ भवतः।।
कण्वात्तु शकलः पूर्वः
कतादुत्तर ःथ्य;ष्यते।
पूर्वोत्तरौ तदन्तादी
ष्फाणौ तत्र प्रयोजनम्।।
-4-1-19- कौरव्यमाण्डूकाभ्यां च (1293)
(5148 सूत्रांशपूरकवार्तिकम्।। 1 ।।)
- कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम् -
(भाष्यम्) कौरव्यमाण्डूकयोरासुरेरुपसंख्यानं कर्तव्यम्--आसुरायणी।
(5149 सूत्रांशपूरकवार्तिकम्।। 2 ।।)
- छश्च -
(भाष्यम्) छश्चेति वक्तव्यम्--आसुरीयः कल्पः।।
-4-1-20- वयसि प्रथमे (1294)

(5150 सूत्रार्थसाधकवार्तिकम्।। 1 ।।)
- वयस्य चरमे -
(भाष्यम्) वयस्यचरम ःथ्य;ति वक्तव्यम्। ःथ्य;हापि यथा स्यात्--वधूटी, चिरण्टीति।
(अतिव्याप्तिनिरासभाष्यम्)
ःथ्य;ह कस्मान्न भवति--उत्तानशया, लोहितपादिका, द्विवर्षा, त्रिवर्षेति।
नैतानि वयोवाचीनि।।
कथं तर्हि वयो गम्यते?
संबन्धाद्।।
(अव्याप्तिनिरासभाष्यम्)
यदि तर्हि यत्र सम्बन्धाद्वयो गम्यते तत्र न भवति-ःथ्य;ति-ःथ्य;हापि न प्राप्नोति--कुमारीति।।
अत्रापि हि सम्बन्धाद्वयो गम्यते।
कोऽसौ सम्बन्धः?
योऽसौ पुंसा सहासंप्रयोगः।।
(विवरणभाष्यम्)
सम्बन्धादेवात्र वयो गम्यते।।
ःथ्य;ह पुनः सम्बन्धसम्बन्धात्।
ःथ्य;ह तावत्--उत्तानशयेति--
यदा कर्तृत्वं विशेषितं भवति तत उत्तरकालं वयो गम्यते।।
लोहितपादिकेति--
यदा बहुव्रीह्यर्थो विशेषितः तत, उत्तरकालवयो गम्यते।।
द्विवर्षा त्रिवर्षेति--
यदा द्विग्वर्थो विशेषितः, तत उत्तरकालं वयो गम्यते।।
(अतिव्याप्तिनिरासभाष्यम्)
यदि तर्हि यत्र सम्बन्धादेव वयो गम्यते तत्र भवति-ःथ्य;ति-ःथ्य;हापि प्राप्नोति--कन्येति।
निपातनादेतत्सिद्धम्।।
किं निपातनम्?
कन्यायाः कनीन च (4।1।116) ःथ्य;ति।।
-4-1-22- अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि (1294)
(निषेधाधिकरणम्)
(योगविभागेन सूत्रांशप्रत्याख्यानभाष्यम्)
ःथ्य;मौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम्।
कथम्?
एवं वक्ष्यामि--परिमाणान्तात्तद्धितलुकि ङीब्भवतीति।
तन्नियमार्थं भविष्यति--परिमाणान्तादेव तद्धितलुकि ङीब् भवति, नान्यत ःथ्य;ति।।
ततो बिस्ताचितकम्बल्येभ्यो नेति। तद्धितलुकीत्येव।।
-4-1-25- बहुव्रीहेरूधसो ङीष् (1295)
(ङीषधिकरणम्)
(5151 पूर्वपक्षवार्तिकम्।। 1 ।।)
- ःढ्य;धसो नकारो लिङ्गाधिकारे -
(भाष्यम्) ःढ्य;धसो नकारो लिङ्गाधिकारे वक्तव्यः। ःथ्य;ह मा भूत्--महोधाः पर्जन्य ःथ्य;ति।।
(5152 सिद्धान्तवार्तिकम्।। 2 ।।)
- न वा समासान्ताधिकारे स्त्रीग्रहणात् -
(भाष्यम्) न वा लिङ्गाधिकारे नकारः कर्तव्यः। किं कारणम्?
समासान्ताधिकारे स्त्रीग्रहणात्--समासान्ताधिकार एव स्त्रीग्रहणं कर्तव्यम्।।
(5153 सिद्धान्तसाधकवार्तिकम्।। 3 ।। )
- ःथ्य;तरथा हि कब्विधिप्रसङ्गः -
(भाष्यम्) ःथ्य;तरथा हि कब्विधिः प्रसज्येत।।
कस्यां पुनरवस्थायां कप्प्राप्नोति?
प्राक् ङीषुत्पत्तेः।।

प्राक्तावन्न प्राप्नोति।
किं कारणम्?
न हि ङीष्विभाषा।।
उत्पन्ने तर्हि ङीषि प्राप्नोति।।
उत्पन्ने चापि न प्राप्नोति।
किं कारणम्?
नद्यन्तानां यो बहुव्रीहिरित्येवं तत्। न चैष नद्यन्तानां बहुव्रीहिः।।
प्रागेव तर्हि प्राप्नोति।
ननु चोक्तं न हि ङीष्विभाषेति।
यद्यपि न ङीष्विभाषा, कप् तु विभाषा।।
कपोऽवकाशः--अन्यो बहुव्रीहिः--अयवकः, अव्रीहिकः।
ङीषोऽवकाशः--विभाषा कब्, यदा न कप् सोऽवकाशः--कुण्डोध्नी, घटोध्नी।
कप्प्रसङ्ग उभयं प्राप्नोति, परत्वात्कप्स्यात्।
(सिद्धान्तभाष्यम्)
तस्मात्सुष्ठूच्यते--न वा समासान्ताधिकारे स्त्रीग्रहणादितरथा हि कब्विधिप्रसङ्ग ःथ्य;ति।।
-4-1-27- दामहायनान्ताच्च ( 1296)
(ङीबधिकरणम्)
(5154 पूर्वपक्षवार्तिकम्।। 1 ।।)
- दामहायनान्तात्संख्याऽऽदेः -
(भाष्यम्) दामहायनान्तात्सङ्ख्याऽऽदेरिति वक्तव्यम्।
ःथ्य;ह मा भूत्--उद्दामा वडवेति।।
(5155 एकदेशिसमाधानवार्तिकम्।। 2 ।।)
- तत्पुरुषविज्ञानाद्वा सिद्धम् -
(भाष्यम् बहुव्रीहेरिति वर्तते। तत्पुरुषश्चायम्--उत्क्रान्ता दाम्न उद्दामेति।।
भवेत्सिद्धम्--यदा तत्पुरुषः।।
यदा तु खलु बहुव्रीहिस्तदा न सिध्यति--उत्क्रान्तं दाम अस्या ःथ्य;ति।
(एकदेश्याक्षेपसमाधानभाष्यम्)
ननु चेतनावत एतद्भवति--उत्क्रमणं वाऽपक्रमणं वा, दाम चाचेतनम्।।
अचेतनेष्वपि चेतनवदुपचारो दृश्यते। तद्यथा--स्रस्तान्यस्या बन्धनानि, स्रस्यन्तेऽस्या बन्धनानीति।।
(सिद्धान्तभाष्यम्)
तत्तर्हि संख्यादेरिति वक्तव्यम्?
न वक्तव्यम्, प्रकृतमनुवर्तते।।
क्व प्रकृतम्?
संख्याऽव्ययादेर्ङीप् (4।1।26) ःथ्य;ति।।
यदि तदनुवर्तते, अव्ययादेरपि प्राप्नोति।
नैष दोषः।
संख्यादेरित्यनुवर्तते, अव्ययादेरितिनिवृत्तम्।।
(परिभाषामुखेन सिद्धान्तभाष्यम्)
कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते, एकदेशो न?
एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति।
तद्यथा--तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ (5।2।24) पक्षात्तिः (25) ःथ्य;त्यत्र मूल ःथ्य;त्यनुवर्तते, पाक ःथ्य;ति निवृत्तम्।।
(सिद्धान्तांशकथनभाष्यम्)
अथेह कथं भवितव्यम् द्वौ हायनावस्याः शालायाः?
द्विहायना, त्रिहायनेति?
हायनो वयसि स्मृतः।।
वयोवाचिनो हायनशब्दस्य ग्रहणम्। न चैष वयोवाची।
अथ णत्वं कस्मान्न भवति?
णत्वमपि वयोवाचिन एव।।
-4-1-30- केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च (1297)

(ङीबधिकरणम्)
(आक्षेपभाष्यम्)
मामकग्रहणं किमर्थम्, नाणन्तादित्येव सिद्धम्?
(समाधानभाष्यम्)
नियमार्थोऽयमारम्भः--मामकशब्दात्संज्ञाछन्दसोरेव।।
(प्रत्युदाहरणभाष्यम्)
क्व मा भूत्?
मामिका बुद्धिरिति।।
-4-1-31- रात्रेश्चाजसौ (1298)
(ङीबधिकरणम्)
(सिद्धान्तभाष्यम्)
अजसादिष्विति वक्तव्यम्। ःथ्य;हापि यथा स्यात्--
रात्रिं रात्रिं स्मरिष्यन्तः।
रात्रिं रात्रिमजानतः।
सर्वां रात्रिं सहोषित्वा।
वृत्यामेकान्तरात्रिम्।।
-4-1-32- अन्तर्वत्पतिवतोर्नुक् (1299)
(नुगधिकरणम्)
(5156 पूर्वपक्षवार्तिकम्।। 1 ।।)
- अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे -
(भाष्यम्) अन्तर्वत्पतिवदिति गर्भभर्तृसंयोग ःथ्य;ति वक्तव्यम्।
ःथ्य;ह मा भूत्--
प्रथते त्वया पतिमती पृथिवी ःथ्य;ति।।
(आक्षेपभाष्यम्)
अथान्तः शब्दस्यागर्भसंयोगे किं प्रत्युदाह्रियते? अन्तरस्यां शालायामस्तीति।।
किं पुनः कारणं वाक्यमेवोदाह्रियते, न पुनर्मतुप्?
अस्तिसामानाधिकरण्ये मतुब् विधीयते। न चात्रास्तिसामानाधिकरण्यम्।।
(प्रत्याक्षेपभाष्यम्)
ःथ्य;हापि तर्हि न प्राप्नोति। अन्तर्वत्नीति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि--
अन्तर्वत्पतिवतोस्तु
मतुब्वत्वे निपातनात्।
अन्तर्वदिति मतुब् निपात्यते, वत्वं सिद्धम्। पतिवदिति वत्वं निपात्यते, मतुप् सिद्धः।।
किमविशेषेण? नेत्याह--
गर्भिण्यां जीवपत्यां च
एतस्मिन् विषये।।
वा च च्छन्दसि नुग्भवेत्।।
वा च छन्दसि नुग्वक्तव्यः--
साऽन्तर्वती देवानुपैत्, साऽन्तर्वत्नी देवानुपैत्, पतिवती तरुणवत्सा, पतिवत्नी तरुणवत्सा।।
अन्तर्वत्पतिवतोस्तु
मतुब्वत्वे निपातनात्।
गर्भिण्यां जीवपत्यां च
वा च च्छन्दसि नुग्भवेत्।।
-4-1-33- पत्युर्नो यज्ञसंयोगे (1300)
(नादेशाधिकरणम्)
(आक्षेपभाष्यम्)
यज्ञसंयोग ःथ्य;त्युच्यते, तत्रेदं न सिध्यति--ःथ्य;यमस्य पत्नी।।
क्व तर्हि स्यात्?

पत्नीसंयाजाः ः्थ्य;ति यत्र यज्ञसंयोगः।।
(समाधानभाष्यम्)
नैष दोषः। पतिशब्दोऽयमैश्वर्यवाची। सर्वेण च गृहस्थेन पञ्च महायज्ञा निर्वत्याः, यच्चादः सायंप्रातर्होमचरुपुरोडाशान्निर्वपति तस्यासावीष्टे।।
(अव्याप्तिवारकभाष्यम्)
एवमपि तुषजकस्य पत्नी न सिध्यति।
उपमानात्सिद्धम्--पत्नीव पत्नीति।।
-4-1-34- विभाषा सपूर्वस्य (1301)
(विकल्पाधिकरणम्)
(5157 पूर्वपक्षवार्तिकम्।। 1 ।।)
- पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् -
(भाष्यम्) पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानं कर्तव्यम्--वृद्धपतिः,वृद्धपत्नी, स्थूलपतिः, स्थूलपत्नी।
वचनाद्भविष्यति।।
अस्ति वचने प्रयोजनम्।
किम्?
आशापतिः, आशापत्नी।।
(5158 सिद्धान्तवार्तिकम्।। 2 ।।)
- सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात् -
(भाष्यम्) सिद्धमेतत्।।
कथम्?
पत्युः प्रातिपदिकविशेषणत्वात्। नैवं विज्ञायते। अस्त्यस्मात्पतिशब्दात्पूर्वः सोऽयं सपूर्वः, सपूर्वात्पतिशब्दादनुपसर्जनादिति।।
कथं तर्हि?
अस्त्यस्मिन् प्रातिपदिके पूर्वं तदिदं सपूर्वम्, सपूर्वात्प्रातिपदिकात्पत्यन्तादनुपसर्जनादिति।।
-4-1-33- पत्युर्नो यज्ञसंयोगे (1300)
(नादेशाधिकरणम्)
(आक्षेपभाष्यम्)
यज्ञसंयोग ः्थ्य;त्युच्यते, तत्रेदं न सिध्यति--ः्थ्य;यमस्य पत्नी।।
क्व तर्हि स्यात्?
पत्नीसंयाजाः ः्थ्य;ति यत्र यज्ञसंयोगः।।
(समाधानभाष्यम्)
नैष दोषः। पतिशब्दोऽयमैश्वर्यवाची। सर्वेण च गृहस्थेन पञ्च महायज्ञा निर्वत्याः, यच्चादः सायंप्रातर्होमचरुपुरोडाशान्निर्वपति तस्यासावीष्टे।।
(अव्याप्तिवारकभाष्यम्)
एवमपि तुषजकस्य पत्नी न सिध्यति।
उपमानात्सिद्धम्--पत्नीव पत्नीति।।
-4-1-36- पूतक्रतौरै च (1302)
(ऐकारादेशाधिकरणम्)
(5159 विधिवार्तिकम्।। 1 ।।)
- पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् -
(भाष्यम्) पूतक्रत्वादयः पुंयोगप्रकरणे वक्तव्याः--पूतक्रतोः स्त्री पूतक्रतायी।।
यया हि पूताः क्रतवः पूतक्रतुः सा भवति।।
(5160 पूर्वपक्षवार्तिकम्।। 2 ।।)
- लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः -
(भाष्यम्) लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतं प्राप्नोति--पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः, पञ्चाग्निः, दशाग्निः।।
(पूर्वपक्षसाधकभाष्यम्)
किमुच्यते सर्वत्रेति? अन्यत्रापि, नावश्यमिहैव।। क्वान्यत्र?
पञ्चभिर्धीवरीभिः क्रीतः--पञ्चधीवा, दशधीवेति।।
लिङ्गग्रहणेन नार्थः, सर्वत्रागमादेशानां वचने लुकि तत्कृतप्रसङ्ग ः्थ्य;त्येव।।
ः्थ्य;दमपि सिद्धं भवति--पञ्चमेन गृह्णाति पञ्चकः। नैतदस्ति। मयडयं परादिः स डटो ग्रहणेन ग्रहीष्यते।।
ः्थ्य;दं तर्हि प्रयोजनं--षष्ठेन गृह्णाति षट्क ः्थ्य;ति।।

(5161 सिद्धान्तवार्तिकम्।। 3 ।।)
- सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् -
(भाष्यम्) सिद्धमेतत्। कथम्?
आगमादेशा य ःथ्य;ह स्त्रीप्रकरण उच्यन्ते तेऽङ्गाधिकारे वक्तव्याः।।
स्त्रीप्रकरणग्रहणेन नार्थः। सिद्धं त्वागमादेशानामङ्गतो वचनादित्येव।
ःथ्य;दमपि सिद्धं भवति--षष्ठेन गृह्णाति षट्क ःथ्य;ति।।
(5162 प्रकारान्तरेण सिद्धान्तवार्तिकम्।। 4 ।।)
- लिङ्गलुकि वा प्रकृतिप्रत्यापत्तिवचनम् -
(भाष्यम्) अथ वा लिङ्गलुक्येव प्रकृतिप्रत्यापत्तिर्वक्तव्या।।
लिङ्गग्रहणेन नार्थः। लुकि वा प्रकृतिप्रत्यापत्तिवचनमित्येव।।
ःथ्य;दमपि सिद्धं भवति--षष्ठेन गृह्णाति षट्क ःथ्य;ति।।
(सिद्धान्तभाष्यम्)
किं पुनरत्र ज्यायः?
लुकि प्रकृतिप्रत्यापत्तिवचनमित्येव ज्यायः। ःथ्य;दमपि सिद्धं भवति--पञ्चभिः पट्वीभिः क्रीतः--पञ्चपटुः, दशपटुरिति।।
(परिभाषामुखेन सिद्धान्तभाष्यम्)
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।
संनियोगशिष्टानामन्यतरापाय उभयोरप्यपायः।
तद्यथा--देवदत्तयज्ञदत्ताभ्यामिदं कर्म कर्तव्यम्। देवदत्तापाये यज्ञदत्तोऽपि न करोति।।
-4-1-39- वर्णादनुदात्तात्तोपधात्तो नः (1303)
(ङीप्सन्नियोगशिष्टनकारादेशाधिकरणम्)
(5163 अतिव्याप्तिवारकवार्तिकम्।। 1 ।।)
- असितपलितयोः प्रतिषेधः -
(भाष्यम्) असितपलितयोः प्रतिषेधो वक्तव्यः। असिता, पलिता।।
(5164 विधिवार्तिकम्।। 2 ।।)
- छन्दसि क्नमेके -
(भाष्यम्) छन्दसि क्नमेक ःथ्य;च्छन्ति। असिक्न्यस्योषधे, पलिक्नीरियुवतयो भवन्ति।
(5165 अव्याप्तिवारकवार्तिकम्।। 3 ।।)
- वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् -
(भाष्यम्) वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानं कर्तव्यम्--पिशङ्गी।।
-4-1-42- जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् (1304)
वृत्यमत्रावपनाकृत्रिमाश्राणआस्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु
(5166 नियमवार्तिकम्।। 1 ।।)
- नीलादोषधौ -
(भाष्यम्) नीलादोषधाविति वक्तव्यम्। नीली ओषधिः।।
(5137 विधिवार्तिकम्।। 2 ।।)
- प्राणिनि च -
(भाष्यम्) प्राणिनि चेति वक्तव्यम्। नीली गौः, नीली वडवा।।
(5168 विकल्पवार्तिकम्।। 3 ।।)
- वा संज्ञायाम् -
(भाष्यम्) वा संज्ञायामिति वक्तव्यम्। नीली, नीला।।
-4-1-44- वोतो गुणवचनात् (1305)
(विकल्पाधिकरणम्)
(जिज्ञासाभाष्यम्)
गुणवचनादित्युच्यते, को गुणो नाम?
(गुणलक्षणभाष्यम्)
सत्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः।।
(लक्षणान्तरभाष्यम्)

अपर आह।।
उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि।
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः।।
(5169 सिद्धान्तसाधकवार्तिकम्।। 1 ।।)
- गुणवचनान्ङीबाद्युदात्तार्थम् -
(भाष्यम्) गुणवचनाद् ङीब्वक्तव्यः।
किं प्रयोजनम्? आद्युदात्तार्थः। आद्युदात्ताः प्रयोजयन्ति--वस्वी, पट्वी।।
(5170 अतिव्याप्तिवारकवार्तिकम्।। 2 ।।)
- खरुसंयोगपधप्रतिषेधश्च -
(भाष्यम्) खरुसंयोगोपधानां च प्रतिषेधो वक्तव्यः--खरुरियं ब्राह्मणी, पाण्डुरियं ब्राह्मणी।।
-4-1-48- पुंयोगादाख्यायाम् (1306)
(ङीषधिकरणम्)
(5171 अतिव्याप्तिवारकवार्तिकम्।। 1 ।।)
- गोपालिकादीनां प्रतिषेधः -
(भाष्यम्) गोपालिकादीनां प्रतिषेधो वक्तव्यः--गोपालिका, पशुपालिका।।
किं पुनरिहोदाहरणम्?
प्रष्ठी, प्रचरी।।
(आक्षेपभाष्यम्)
कथं पुनरयं प्रष्ठशब्दोऽकारान्तः स्त्रियां वर्तते?।
(समाधानभाष्यम्)
तस्येदमित्यनेनाभिसंबन्धेन। यथैव ह्यसौ तत्कृतान् स्नानोद्वर्तनपरिषेकान् लभते, एवं प्रष्ठशब्दमपि लभते।।
(समाधानाक्षेपभाष्यम्)
यद्येवं,
(5172 आक्षेपसाधकवार्तिकम्।। 2 ।।)
- पुंयोगादाख्यायां तद्धितलुग्वचनम् -
(भाष्यम्) पुंयोगादाख्यायां तद्धितस्य लुग् वक्तव्यः। तस्येदम् (4।3।12) ःथ्य;ति प्राप्नोति।।
न तर्हीदानीमिदं भवति--प्राष्ठ्य ःथ्य;माः, प्राचर्य ःथ्य;मा ःथ्य;ति।
भवति च। विभाषा लुग् वक्तव्यः।
यदा लुक् तदा प्रष्ठी, यदा न लुक् तदा प्राष्ठी।।
(वार्तिकान्यथासिद्धिपरभाष्यम्)
यद्येवं नार्थो लुका, विभाषा तद्धितोत्पत्तिः।
यदा तद्धितोत्पत्तिः--तदा-प्राष्ठी।
यदा न तद्धितोत्पत्तिः--तदा--प्रष्ठी।।
(वार्तिकप्रयोजनबोधकभाष्यम्)
एवमपि लुग् वक्तव्यः। न ह्यन्तरेण तद्धितस्य लुकं परार्थे शब्दो वर्तते।।
(प्रत्याक्षेपभाष्यम्)
यदि पुनस्तस्यामेव प्रष्ठशब्दो वर्तेत।
कथं पुनस्तस्यामेवाप्रतिष्ठमानायां प्रष्ठशब्दो वर्तते?
यथैव ह्यसावकुर्वती किंचित्पापं भर्तृकृतान् वधबन्धनादिक्लेशान् लभते, एवं प्रष्ठशब्दमपि लभते।।
(5173 पूर्वपक्षवार्तिकम्।। 3 ।।)
- सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः -
(भाष्यम्) सुबन्तसमासवचनाच्चाकारान्तता नोपपद्यते। सुबन्तानां समासस्तत्रान्तरङ्गत्वाट्टाप्। टाप्युत्पन्ने समासः। स्थाशब्दः समस्येत। तत्र पुंयोगादाख्यायामकारान्तादितीकारो न प्राप्नोति।।
(5174 समाधानवार्तिकम्।। 4 ।।)
- सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
स्त्रियाः पुंशब्देनाभिधानात्। स्त्री पुंशब्देनाकारान्तेनाभिधीयते।।
(प्रथमवार्तिकोक्ताक्षेपनिरासभाष्यम्)

ननु चोक्तं पुंयोगादाख्यायां तद्धितलुग् वचनमिति।।
नैष दोषः।
आचार्यप्रवृत्तिर्ज्ञापयति--नातस्तद्धितोत्पत्तिर्भवतीति, यदयं पुंयोगादाख्यायामिति ःथ्य;र्कारं शास्ति।।
(ज्ञापकाक्षेपभाष्यम्)
नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। येऽनीकारास्तद्धितास्तदर्थमेतत्स्यात्।।
(ज्ञापकसाधकभाष्यम्)
यत्तर्ह्याख्याग्रहणं करोति। न हि तद्धितान्तमाख्या भवति।।
(तृतीयपक्षोपस्थापकं भाष्यम्)
अथ वा पुनरस्तु--तस्येदमित्यनेनाभिसंबन्धेन।
ननु चोक्तम्--पुंयोगादाख्यायां तद्धितलुग्वचनमिति।
नैष दोषः।
नावश्यमयमेवाभिसंबन्धो भवति--तस्येदमिति। अयमप्यभिसंबन्धो भवति--सोऽयमिति।
कथं पुनरतस्मिन् सः ःथ्य;त्येतद्भवति?
चतुर्भिः प्रकारैरतस्मिन् सः ःथ्य;त्येतद्भवति-- तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यादिति।
तात्स्थ्यात्तावत्--मञ्चा हसन्ति, गिरिर्दह्यते।।
ताद्धर्म्यात्--जटिनं यान्तं ब्रह्मदत्त ःथ्य;त्याह। ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्त ःथ्य;त्यतो जटी ब्रह्मदत्त ःथ्य;त्युच्यते।।
तत्सामीप्याद्--गङ्गायां घोषः, कूपे गर्गकुलम्।।
तत्साहचर्यात्--कुन्तान् प्रवेशय, यष्टीः प्रवेशयेति।।
(द्वितीयवार्तिकखण्डनभाष्यम्)
अथ वा पुनरस्तु तस्यामेव प्रष्ठशब्दः।
ननु चोक्तम्--सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः ःथ्य;ति।
नैष दोषः।।
(5175 परिभाषावार्तिकम्।। 5 ।।)
- गतिकारकोपपदानां कृद्धिः सह समासवचनम् -
(भाष्यम्) गतिकारकोपपदानां कृद्भिः सह समासो भवतीत्येषा परिभाषा कर्तव्या।।
(परिभाषाप्रयोजनभाष्यम्)
कानि पुनरस्याः परिभाषायाः प्रयोजनानि?
(5176 प्रयोजनवार्तिकम्।। 6 ।।)
- प्रयोजनं क्तादल्पाख्यायाम् -
(भाष्यम्) अभ्रविलिप्ती, सूपविलिप्ती।
सुबन्तानां समासः। तत्रान्तरङ्गत्वाट्टाप्। टाप्युत्पन्ने समासः। विलिप्ताशब्दः समस्येत। तत्र क्तादल्पाख्यायाम्,
(4।1।51) अकारान्तादिति ङीष् न प्राप्नोति।।
(5177 द्वितीयं प्रयोजनवार्तिकम्।। 7 ।।)
- जातेर्ङीष्विधाने -
(भाष्यम्) जातेर्ङीष्विधाने प्रयोजनम्--व्याघ्री, कच्छपी।
सुबन्तानां समासः। तत्रान्तरङ्गत्वाट्टाप्युत्पन्ने समासः। घ्राशब्दः समस्येत। तत्र जातेरस्त्रीविषयादयोपधात् (4।1।63) अकारान्तादिति ङीष् न प्राप्नोति।।
(5178 तृतीयं प्रयोजनवार्तिकम्।। 8।।)
- समासान्तस्य णत्वे -
(भाष्यम्) समासान्तस्य णत्वे प्रयोजनम्। वक्ष्यति--प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थमिति। तस्मिन् क्रियमाणे--माषवापिणी, व्रीहिवापिणी। सुबन्तानां समासः। तत्रान्तरङ्गत्वान्नकारान्तत्वान्ङीप्। ङीप्युत्पन्ने समासः।
वापिनीशब्दः समस्येत। तत्र समासान्तस्येति णत्वं न प्राप्नोति।।
(5179 चतुर्थं प्रयोजनवार्तिकम्।। 9 ।।)
- कृदन्तात्तद्धिते वृद्धिस्वरौ च -
(भाष्यम्) कृदन्तात्तद्धिते वृद्धिस्वरौ च प्रयोजनम्। सांकूटिनम्, व्यावक्रोशी। अत्रावयवादुत्पत्तिः प्रसज्येत।
गतिकारकोपपदानां कृद्भिः सह समासो भवतीति न दोषो भवति।।
(परिभाषाऽऽक्षेपभाष्यम्)
सत्यामप्येत्सयां परिभाषायामवयवादुत्पित्तिः प्राप्नोति।
किं कारणम्?

प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति।।
(परिभाषान्तरेण समाधानभाष्यम्)
कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति संघातादुत्पत्तिर्भविष्यति।।
(परिभाषान्तरेण परिभाषाखण्डनभाष्यम्)
यदि तर्ह्येषा परिभाषास्ति, नैतदस्याः परिभाषायाः प्रयोजनं भवति, एतयैव सिद्धम्।।
(परिभाषोपपादकभाष्यम्)
न सिध्यति।
किं कारणम्?
अप्रातिपदिकत्वात्।
कृत्वात् प्रातिपदिकसंज्ञा भविष्यति।।
ननु चेदानीं प्रातिपदिकसंज्ञायामप्येतया परिभाषया ःथ्य;ह शक्यमुपस्थातुम्।
नेत्याह।
ःथ्य;ह हि मूलकेनोपदंशं भुङ्क्ते ःथ्य;ति वाक्येऽपि लुक् प्रसज्येत्।।
स्वरे च दोषः स्यात्--प्रकारकः, प्रकरणम्। गतिकारकोपपदात् कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीत्येष स्वरो न स्यात्।।
नैष दोषः।
द्वे अत्र प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि। तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रयः स्वरो
भविष्यति।।
(दोषापादकभाष्यम्)
ःथ्य;हापि तर्हि--सांकूटिनं, व्यावक्रोशीति द्वे अत्रापि प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि। तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रया अवयवादुत्पत्तिः प्रसज्येत।।
(आक्षेपभाष्यम्)
अवयवादुत्पत्तौ सत्यां को दोषः?
कौम्भकारेयो न सिध्यति, अवयवस्य वृद्धिस्वरौ स्याताम्।
(सिद्धान्तभाष्यम्)
तस्मात्प्रयोजनमेवैतदस्याः परिभाषायाः, उभाभ्यां तु खलु सिध्यति।।
(5180 प्रासङ्गिकपूर्वपक्षवार्तिकम्।। 10 ।।)
अवदातायां तु ङीप्प्रसङ्गः।।
(भाष्यम्) अवदातायां ङीप् प्राप्नोति। अवदाता ब्राह्मणी। वर्णादनुदात्तात्तोपधात्तो नः (4।1।39) ःथ्य;ति।।
(समाधानभाष्यम्)
नैष वर्णवाची।
किं तर्हि?
विशुद्धवाची। आतश्च विशुद्धवाची।।
एवं ह्याह--
त्रीणि यस्यावदातानि
विद्या योनिश्च कर्म च।
एतच्छिवं विजानीहि
ब्राह्मणाग्र्यस्य लक्षणम्।। ःथ्य;ति।
(अतिव्याप्तिपरिहारभाष्यम्)
सूर्याद्देवतायां चाब् वक्तव्यः--सूर्यस्य स्त्री--सूर्या।
देवतायामिति किमर्थम्?
सूरी।।
-4-1-49- ःथ्य;न्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् (1304)
(आनुगधिकरणम्)
(5181 अर्थनियामकवार्तिकम्।। 1 ।।)
- हिमारण्ययोर्महत्त्वे -
(भाष्यम्) हिमारण्ययोर्महत्त्व ःथ्य;ति वक्तव्यम्। महद्धिमं हिमानी, महदरण्यमरण्यानी।।
(5182 अर्थनियामकवार्तिकम्।। 2 ।।)
- यवाद्दोषे -
(भाष्यम्) यवाद्दोष ःथ्य;ति वक्तव्यम्। दुष्टो यवो यवानी।।

(5183 अर्थनियामकवार्तिकम्।। 3 ।।)
- यवनाल्लिप्याम् -
(भाष्यम्) यवनाल्लिप्यामिति वक्तव्यम्। यवनानी लिपिः।।
(5174 प्राप्ताप्राप्तविकल्पवार्तिकम्।। 4 ।।)
- उपाध्यायमातुलाभ्यां वा -
(भाष्यम्) उपाध्यायमातुलाभ्यां वेति वक्तव्यम्। उपाध्यायी, उपाध्यायानी, मातुली, मातुलानी।।
(5185 विधिवार्तिकम्।। 5 ।।)
- मुद्गलाच्छन्दसि लिच्च -
(भाष्यम्) मुद्गलाच्छन्तसि लिच्चेति वक्तव्यम्। रथीरमून्मुद्गलानी।।
(5186 विधिवार्तिकम्।। 6 ।।)
- आचार्यादणत्वं च -
(भाष्यम्) आचार्यादणत्वं चेति वक्तव्यम्। आचार्यानी।।
(5187 विकल्पविधायकवार्तिकम्।। 7 ।।)
- अर्यक्षत्रियाभ्यां वा -
(भाष्यम्) अर्यक्षत्रियाभ्यां वेति वक्तव्यम्। अर्या, अर्याणी, क्षत्रिया, क्षत्रियाणी।।
-4-1-50- क्रीतात् करणपूर्वात् (1305)
(ङीषधिकरणम्)
(आक्षेपभाष्यम्)
करणपूर्वादिति किमर्थम्?
गवा क्रीता, अश्वेन क्रीता।
करणपूर्वादित्युच्यमानेऽप्यत्र प्राप्नोति। एषोऽपि क्रीतशब्दः करणपूर्वः।।
(एकदेशिसमाधानभाष्यम्)
विभक्त्या व्यवहितत्वान्न भविष्यति।।
(प्रत्याक्षेपभाष्यम्)
यदि तर्हि विभक्तिरपि व्यवधायिका भविष्यति। मनसा क्रीती ाःथ्य;ति न सिध्यति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि नैवं विज्ञायते करणं पूर्वमस्मात् क्रीतशब्दात् सोऽयं करणपूर्वस्तस्मात्करणपूर्वात् क्रीतशब्दादनुपसर्जनादिति।
कथं तर्हि?
करणमस्मिन् प्रातिपदिके पूर्वं तदिदं करणपूर्वम्, तस्मात्करणपूर्वात्प्रातिपदिकात्क्रीतान्तादनुपसर्जनादिति।।
-4-1-52- बहुव्रीहेश्चान्तोदात्तात् (1306)
(ङीषधिकरणम्)
(5188 अतिव्याप्तिवारकवार्तिकम्।। 1 ।।)
- अन्तोदात्ते जातप्रतिषेधः -
(भाष्यम्) अन्तोदात्ते जातस्य प्रतिषेधो वक्तव्यः। दन्तजाता, स्तनजाता।।
(5189 नियमवार्तिकम्।। 2 ।।)
- पाणिगृहीत्यादीनां विशेषे -
(भाष्यम्) पाणिगृहीत्यादीनां विशेष ाःथ्य;ति वक्तव्यम्। पाणिगृहीती भार्या चेत्।
यस्या हि यथाकथंचित्पाणिर्गह्यते पाणिगृहीता सा भवति।।
(5190 अनियमवार्तिकम्।। 3 ।।)
- बहुलं तणि -
(भाष्यम्) बहुलं तणीति वक्तव्यम्।
किमिदं तणीति?
संज्ञाच्छन्दसोर्ग्रहणम्।
किं प्रयोजनम्?
(5191 प्रयोजनवार्तिकम्।। 4 ।।)
- प्रबद्धविलून्याद्यर्थम् -
(भाष्यम्) प्रबद्धविलूनी, प्रबद्धविलूना।।
(5192 अतिव्याप्तिवारकवार्तिकम्।। 5 ।।)
- अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वात् -

(भाष्यम्) अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम्।।
बहु--बहुकृता।
नञ्--अकृता।
सु--सुकृता।
काल--मासजाता, संवत्सरजाता।
सुखादि--सुखजाता, दुःखजाता, क्षिप्रजाता।।
(5193 अन्तोदात्तेतिवार्तिकप्रत्याख्यानवार्तिकम्।। 6 ।।)
- जातिपूर्वाद्वा -
(भाष्यम्) अथ वा जातिपूर्वादिति वक्तव्यम्।।
-4-1-54- स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् (1307)
(स्वाङ्गलक्षणाधिकरणम्)
(जिज्ञासाभाष्यम्)
स्वाङ्गाच्चोपसर्जनादित्युच्यते,
किं स्वाङ्गं नाम?।।
(स्वाङ्गलक्षणम्)
अद्रवं मूर्तिमत्स्वाङ्गं
प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च
तस्य चेत्तत्तथायुतम्।।
अप्राणिनोऽपि स्वाङ्गम्।।
(लक्षणपदकृत्यभाष्यम्)
अद्रवमिति किमर्थम्?
बहुलोहिता।
नैतदस्ति। बह्वचो नेति प्रतिषेधो भविष्यति।
ःथ्य;दं तर्हि--बहुकफा।।
मूर्तिमदिति किमर्थम्?
बहुबुद्धिः, बहुमनाः।
नैतदस्ति। अत ःथ्य;ति वर्तते।
ःथ्य;दं तर्हि--बहुज्ञाना।।
प्राणिस्थमिति किमर्थम्?
श्लक्ष्णमुखा शाला।।
अविकारजमिति किमर्थम्?
बहुगडुः, बहुपिटका।
नैतदस्ति। ःथ्य;ह तावद्बहुगडुरिति, अत ःथ्य;त्यनुवर्तते, बहुपिटकेति, बह्वचो नेति प्रतिषेधो भविष्यति।
ःथ्य;दं तर्हि--बहुशोफा।।
(द्वितीयं स्वाङ्गलक्षणम्)
अतत्स्थं तत्र दृष्टं च
अप्राणिस्थं प्राणिनि दृष्टं च स्वाङ्गसंज्ञं भवति। दीर्घकेशी रथ्या-ःथ्य;ति।।
(तृतीयं स्वाङ्गलक्षणम्)
तस्य चेत्तत्तथायुतम्।।
अप्राणिनोऽपि स्वाङ्गसंज्ञं भवतीति। दीर्घनासिकी--अर्चा, तुङ्गनासिकी--अर्चेति।।
(उपसर्जनपदकृत्यभाष्यम्)
अथोपसर्जनग्रहणं किमर्थम्?
ःथ्य;ह मा भूत्--अशिखा।।
(5194 पूर्वपक्षवार्तिकम्।। 1 ।।)
- उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात् -
(भाष्यम्) उपसर्जनग्रहणमनर्थकम्।
किं कारणम्?
बहुव्रीह्यधिकारात्। बहुव्रीहेरिति प्रकृतमनुवर्तते।

क्व प्रकृतम्?
बहुव्रीहेश्चान्तोदात्तात् (4|1|52) ःथ्य;ति।।
(एकदेशिसमाधानभाष्यम्)
बह्वजर्थं तर्हि उपसर्जनग्रहणं कर्तव्यम्। बह्वचो नेति प्रतिषेधं वक्ष्यति तद्वह्वज्ग्रहणमुपसर्जनविशेषणं यथा विज्ञायेत--बह्वच उपसर्जनान्नेति।।
(एकदेश्याक्षेपभाष्यम्)
अथाक्रियमाणे उपसर्जनग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात्?
बहुव्रीहेरिति वर्तते। बहुव्रीहिविशेषणं विज्ञायेत। अस्ति चेदानीं कश्चिदबह्वज् बहुव्रीहिः, यदर्थो विधिः स्यात्--अस्तीत्याह--स्वडा, स्वडीति।।
(5195 एकदेशिसमाधानवार्तिकम्।। 2 ।।)
- बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम् -
(भाष्यम्) स्वाङ्गग्रहणं क्रियते, तद्वह्वज्ग्रहणेन विशेषयिष्यामः--स्वाङ्गाद् बह्वचो नेति।।
एवं तर्हि अन्तोदात्तादिति वर्तते। अनन्तोदात्तार्थोऽयमारम्भः।।
(5196 उपसर्जनग्रहणस्य निष्फलत्वबोधकं वार्तिकम्।। 3 ।।)
- अनन्तोदात्तार्थमिति चेत् सहादिकृतत्वात्सिद्धम् -
(भाष्यम्) यदयम् सहनञ्विद्यमानपूर्वाच्च (4|1|57) ःथ्य;ति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः--अनन्तोदात्तादपि भवतीति।।
(5197 पूर्वपक्षवार्तिकम्।। 4 ।।)
- स्वाङ्गसमुदायप्रतिषेधार्थं तु -
(भाष्यम्) स्वाङ्गसमुदायप्रतिषेधार्थं तर्ह्युपसर्जनग्रहणं कर्तव्यम्।
स्वाङ्गाद्यथा स्यात्,
स्वाङ्गसमुदायान्मा भूत्--कल्याणपाणिपादा।।
अथ क्रियमाणेऽप्युपसर्जनग्रहणे कस्मादेवात्र न भवति? स्वाङ्गं ह्येतदुपसर्जनम्।
न स्वाङ्गसमुदायः स्वाङ्गग्रहणेन गृह्यते। यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यते--काशिकोशलीया ःथ्य;ति, जनपदतदवध्योरिति वुञ् न भवति।।
एतदपि नास्ति प्रयोजनम्।
अस्वाङ्गपूर्वादिति वर्तते, तेन स्वाङ्गं विशेषयिष्यामः--अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद् बहुव्रीहेरिति।
यच्चात्रास्वाङ्गपूर्वपदात्परं स्वाङ्गम्, न तदन्तो बहुव्रीहिः।
यदन्तश्च बहुव्रीहिः, न तदस्वाङ्गपूर्वपदात्परं स्वाङ्गम्।।
(आक्षेपभाष्यम्)
ननु च तत् पूर्वस्मिन् योगे बहुव्रीहिविशेषणम्।
नेत्याह।
पूर्वपदविशेषणं तत्। न स्वाङ्गमस्वाङ्गम्, पूर्वं पदं पूर्वपदम्, अस्वाङ्गं पूर्वपदमस्वाङ्गपूर्वपदम्, अस्वाङ्गपूर्वपदादिति।
यद्येवं पूर्वस्मिन् योगे बहुव्रीहिरविशेषितो भवति। बहुव्रीहिश्च विशेषितः।
कथम्?
क्तादिति वर्तते तेन बहुव्रीहिं विशेषयिष्यामः।
अस्वाङ्गात् पूर्वपदात्परं यत् क्तान्तं तदन्ताद् बहुव्रीहेरिति।।
(सिद्धान्तभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--
बहुव्रीहेरिति वर्तमान उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात्--निष्केशी यूका, अतिकेशीमालेति।।
-4-1-55- नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च (1308)
(ङीष्विकल्पाधिकरणम्)
(5198 विधिवार्तिकम्।। 1 ।।)
- नासिकादीनां विभाषायां पुच्छाच्च -
(भाष्यम्) नासिकादीनां विभाषायां पुच्छाच्चेति वक्तव्यम्। कल्याणपुच्छी, कल्याणपुच्छा।
(5199 विधिवार्तिकम्।। 2 ।।)
- कबरमणिविषशरेभ्यो नित्यम् -
(भाष्यम्) कबरमणिविषशरेभ्यो नित्यमिति वक्तव्यम्। कबरपुच्छी, मणिपुच्छी, विषपुच्छी, शरपुच्छी।।
(5200 विधिवार्तिकम्।। 3 ।।)
- उपमानात्पक्षाच्च पुच्छाच्च -
(भाष्यम्) उपमानात्पक्षात्, पुच्छाच्चेति वक्तव्यम्। उलूकपक्षी शाला, उलूकपुच्छी सेनेति।
(5201 विधिनिषेधयोर्विप्रतिषेधबोधकवार्तिकम्।। 4 ।।)

- नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन -
(भाष्यम्) नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो भवति विप्रतिषेधेन।
नासिकादिभ्यो विभाषाया अवकाशः--कल्याणनासिकी, कल्याणनासिका।
सहनञ्विद्यमानपूर्वलक्षणस्य प्रतिषेधस्यावकाशः--समुखा, अमुखा, विद्यमानमुखेति।
ः थ्य;होभयं प्राप्नोति--सनासिका, अनासिका, विद्यमाननासिकेति।
सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो भवति विप्रतिषेधेन।
नैष युक्तो विप्रतिषेधः।
अयं विधिः।
स प्रतिषेधः। विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः।
अयमपि विधिः--न मृदूनामिव कार्पासानां कृतः, प्रतिषेधविषय आरभ्यते। स यथैव बह्वज्लक्षणं संयोगोपधलक्षणं च प्रतिषेधं बाधते, एवं हि सहनञ्विद्यमानलक्षणमपि बाधेत।
का तर्हि गतिः?।।
(विप्रतिषेधसमर्थकभाष्यम्)
ः थ्य;ह तावन्नासिकोदर ः थ्य;ति--
बह्वज्लक्षणश्च प्रतिषेधः प्राप्नोति, सहनञ्विद्यमानपूर्वक्षलणश्च।
पुरस्तादपवादा अन्तरान् विधीन् बाधन्ते ः थ्य;त्येवमियं विभाषा बह्वज्लक्षणं प्रतिषेधं बाधिष्यते, सहनञ्विद्यमानलक्षणं न बाधिष्यते।
ओष्ठजङ्घादन्तकर्णशृङ्गाच्चेति--
संयोगोपधलक्षणश्च प्रतिषेधः प्राप्नोति, सहनञ्विद्यमानपूर्वलक्षणश्च।
मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते ः थ्य;त्येवमियं विभाषा संयोगोपधलक्षणं प्रतिषेधं बाधिष्यते, सहनञ्विद्यमानपूर्वलक्षणं न बाधिष्यते।।
-4-1-60- दिक्पूर्वपदान्ङीप् (1313)
(ङीबादेशाधिकरणम्)
(5202 आक्षेपवार्तिकम्।। 1 ।।)
- दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम् -
(भाष्यम्) दिक्पूर्वपदान्ङीषोऽनुदात्तत्वं वक्तव्यम्। प्राङ्मुखी, प्रत्यङ्मुखी।
(5203 द्वितीयाक्षेपवार्तिकम्।। 2 ।।)
- ङीब्विधाने ह्यन्यत्रापि ङीष्विषयान्ङीप्प्रसङ्गः -
(भाष्यम्) ङीब्विधाने हि सति अन्यत्रापि ङीष्विषयान्ङीप् प्राप्नोति। प्राग्गुल्फा, प्रत्यग्ललाटा।
ननु चैते विशेषा अनुवर्तन्ते--असंयोगोपधात् बह्वचो न ः थ्य;ति। यद्यप्येते विशेषा अनुवर्तेरन्--संयोगोपधाद्बह्वचो नेति। एवमपि दिक्पूर्वपदात् ङीपा मुक्ते ङीष् प्रसज्येत।
नैष दोषः।
उक्तमेतत्--यत्रोत्सर्गापवादं विभाषा तत्रापवादेन मुक्ते उत्सर्गो न भवतीति।।
(सिद्धान्तभाष्यम्)
अथ वा ङीष आदेशो ङीप् करिष्यते।।
तत्तर्हि ङीषोऽत्र ग्रहणं कर्तव्यम्?
न कर्तव्यम्।
प्रकृतमनुवर्तते।
क्व प्रकृतम्?
अन्यतो ङीषिति।
तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः।
दिक्पूर्वपदादित्येषा पञ्चमी ङीषिति प्रथमायाः षष्ठीमिह प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1।1।67) ः थ्य;ति।।
प्रत्ययविधिरयम्, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति।
नायं प्रत्ययविधिः, विहितः प्रत्ययः प्रकृतश्चानुवर्तते।।
-4-1-63- जातेरस्त्रीविषयादयोपधात् (1314)
(जातिलक्षणाधिकरणम्)
(लक्षणभाष्यम्)
जातेरित्युच्यते, का जातिर्नाम?
आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह।।
अपर आह--

प्रादुर्भावविनाशाभ्यां
सत्त्वस्य युगपद् गुणैः।
असर्वलिङ्गां बह्वर्थां
तां जातिं कवयो विदुः।।
गोत्रं च चरणानि च।।
(जातिलक्षणविशेषदर्शकभाष्यम्)
कः पुनरेतयोर्जातिलक्षणयोर्विशेषः?
यथा पूर्वं जातिलक्षणं तथा--कुमारीभार्यः ःथ्य;ति भवितव्यम्।
यथोत्तरं तथा--कुमारभार्यः ःथ्य;ति भवितव्यम्।।
(सूत्रार्थबोधकभाष्यम्)
अथास्त्रीविषयादिति कथमिदं विज्ञायते--समानायामाकृतौ यदस्त्रीविषयमिति?
आहो स्वित् क्वचिदस्त्रीविषयमिति?
किं चातः?
यदि विज्ञायते समानायामाकृतौ यदस्त्रीविषयमिति--द्रोणी, कुटी, पात्रीति न सिध्यति।।
अथ विज्ञायते क्व चिदस्त्रीविषयमिति--माला, बलाका, अत्रापि प्राप्नोति।
अस्तु क्व चिद्यदस्त्रीविषयमिति।
कथं--माला, बलाकेति?
अजादिषु पाठः करिष्यते।।
(पदकृत्यभाष्यम्)
अयोपधादिति किमर्थम्? ःथ्य;भ्या, क्षत्रिया।
अत्यल्पमिदमुच्ये--अयोपधादिति, अकोपधादित्यपि वक्तव्यम्। ःथ्य;हापि यथा स्यात्--चटका, मूषिकेति।
यद्यकोपधादित्युच्यते--काकी, कोकी, पिकी, शुकी, उलूकीति न सिध्यति।
अस्तु तर्ह्ययोपधादित्येव।
कथं--चटका, मूषिकेति?
अजादिषु पाठः कर्तव्यः।।
(5204 विध्यंशपूरकवार्तिकम्।। 1 ।।)
- योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः -
(भाष्यम्) योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधो भवतीति वक्तव्यम्। गवय--गवयी। हय--हयी। मुकय--मुकयी। मनुष्य--मनुषी। मत्स्य--मत्सी।।
-4-1-64- पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च (1315)
(ङीषधिकरणम्)
(5205 अतिव्याप्तिवारकवार्तिकम्।। 1 ।।)
- सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः -
(भाष्यम्) सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधो वक्तव्यः--सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा, काण्डपुष्पा, प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा।।
(5206 अतिव्याप्तिवारकवार्तिकम्।। 2 ।।)
- सम्भस्त्राजिनशणपिण्डेभ्यः फलात् प्रतिषेधः -
(भाष्यम्) सम्भस्त्राजिनशणपिण्डेभ्यः फलात्प्रतिषेधो वक्तव्यः--सम्--सम्फला--सम्। भस्त्रा--भस्त्राफला-भस्त्रा। अजिन--अजिनफला--अजिन। शण--शणफला--शण। पिण्ड--पिण्डफला।।
श्वेताच्चेति वक्तव्यम्। श्वेतफला।।
(5208 अतिव्याप्तिवारकवार्तिकम्।। 3 ।।)
- त्रेश्च -
(भाष्यम्) त्रेश्च प्रतिषेधो वक्तव्यः। त्रिफला।।
(5209 अतिव्याप्तिवारकवार्तिकम्।। 4 ।।)
- मूलान्नञः -
(भाष्यम्) मूलान्नञः प्रतिषेधो वक्तव्यः। अमूला।।
-4-1-65- ःथ्य;तो मनुष्यजातेः (1315)
(ङीषोऽधिकरणम्)
(जिज्ञासाभाष्यम्)
जातेरिति वर्तमाने पुनर्जातिग्रहणं किमर्थम्?

अयोपधादिति वर्तते, योपधादपि यथा स्यात्। औदमेयी।।
(5210 विध्यंशपूरकवार्तिकम्।। 1 ।।)
- ः॒थ्य;तो मनुष्यजातेरिञ्ञ उपसंख्यानम् -
(भाष्यम्) ः॒थ्य;तो मनुष्यजातेरिञ्ञ उपसंख्यानं कर्तव्यम्। सौतङ्गमी, मौनिचिती।।
-4-1-66- ःढ्द्य;ङुतः (1316)
(ःढ्द्य;ङोऽधिकरणम्)
(पदकृत्यभाष्यम्)
किमर्थो ङकारः?
विशेषणार्थः।
क्व विशेषणार्थेनार्थः?
नोङ्धात्वोः (6।1।175) ः॒थ्य;ति। नोधात्वोरित्युच्यमाने--यवाग्वा, यवाग्वै, ः॒थ्य;त्यत्रापि प्रसज्येत।।
(पदकृत्यभाष्यम्)
अथ दीर्घोच्चारणं किमर्थम्, न उङुतः, ः॒थ्य;त्येवोच्येत?
का रूपसिद्धिः--ब्रह्मबन्धूः, वीरबन्धूरिति?
सवर्णदीर्घत्वेन सिद्धम्।
न सिध्यति। गोस्त्रियोरुपसर्जनस्य (1।2।48) ः॒थ्य;ति ह्रस्वत्वं प्रसज्येत।।
ः॒थ्य;ह च ब्रह्मबन्धूछत्रम्, ब्रह्मबन्धूच्छत्रम्, षत्वतुकोरसिद्धः (6।1।86) ः॒थ्य;त्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येत।।
ः॒थ्य;ह च ब्रह्मबन्धूः, वीरबन्धूः नद्यृतश्च (5।4।153) ः॒थ्य;ति कप् प्रसज्येत।।
नैष दोषः।
यत्तावदुच्यते--ब्रह्मबन्धूः, वीरबन्धूरिति गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं प्रसज्येतेति,
उभयत आश्रयणे नान्तादिवत्।।
यदप्युच्यते--ब्रह्मबन्धूछत्रम्, ब्रह्मबन्धूच्छत्रम्, षत्वतुकोरसिद्ध ः॒थ्य;त्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येतेति,
पदान्तपदाद्योरेकादेशोऽसिद्धः। न चैष पदान्तपदाद्योरेकादेशः।।
यदप्युच्यते--ः॒थ्य;ह च ब्रह्मबन्धूः, वीरबन्धूरिति नद्यृतश्चेति कप्प्रसज्येतेति,
नद्यन्तानां यो बहुव्रीहिरित्येवं तत्, न चैष पद्यन्तानां बहुव्रीहिः।।
शेषलक्षणस्तर्हि कप् प्राप्नोति। तस्माद्दीर्घोच्चारणं कर्तव्यम्।।
(5211 विधिवार्तिकम्।। 1 ।।)
- ःढ्द्य;ङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् -
(भाष्यम्) ःढ्द्य;ङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्। अलाबूः, कर्कन्धूः।
अप्राणिजातेरिति किमर्थम्?
कृकवाकुः।।
अरज्ज्वादीनामिति किमर्थम्?
रज्जुः, हनुः।।
-4-1-70- संहितशफलक्षणवामादेश्च (1320)
(ःढ्द्य;ङोऽधिकरणम्)
(पूरकभाष्यम्)
सहितसहाभ्यां चेति वक्तव्यम्। सहितोरूः, सहोरूः।।
-4-1-71- कद्रुकमण्डल्वोश्छन्दसि (1321)
(छन्दस्यूङोऽधिकरणम्)
(सूत्रांशपूरकभाष्यम्)
अत्यल्पमिदमुच्यते--कद्रुकमण्डल्वोरिति,
कद्रुकमण्डलुगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्। कद्रूः, कमण्डलूः, गुग्गुलूः, मधूः, जतूः, पतयालूः।।
-4-1-74- यङश्चाप् (1324)
(चापोऽधिकरणम्)
(5212 विध्यंशपूरकवार्तिकम्।। 1 ।।)
- षाच्च यञ्ञश्चाप् -
(भाष्यम्) षाच्च यञ्ञश्चाब्वक्तव्यः। शार्कराक्ष्या, पौतिमाष्या।
तत्रायमप्यर्थः--गौकक्ष्यशब्दः क्रौडयादिषु पठ्यते, स न पठितव्यो भवति।
यदि न पठ्यते, गौकक्षीपुत्रः ः॒थ्य;ति संप्रसारणं न प्राप्नोति।

ः थ्य;ष्टमेवैतत्संगृहीतम्--गौकक्ष्यापुत्रः ःथ्य;त्येव भवितव्यम्।
एवं हि सौनागाः पठन्ति--
ष्यङः संप्रसारणे
गौकक्ष्यायाः प्रतिषेधः। ःथ्य;ति।।
-4-1-75- आवट्याच्च (1325)
(चापोऽधिकरणम्)
(5213 पूर्वविप्रतिषेधवार्तिकम्।। 1 ।।)
- अन उपधालोपिन ःढ्य;धसो ङीष् पूर्वविप्रतिषिद्धम् -
(भाष्यम्) अन उपधालोपिनोऽन्यतरस्याम् (4|1|28) ःथ्य;त्येतस्मादूधसो ङीष्भवति पूर्वविप्रतिषेधेन।
अन उपधालोपिनोऽन्यतरस्यामित्यस्यावकाशः--बहुराज्ञी, बहुतक्ष्णी।
ःढ्य;धसो ङीष्भवतीत्यस्यावकाशः--विभाषा ङीप्, यदा न ङीप् सोऽवकाशः।
ङीप्प्रसङ्गे उभयं प्राप्नोति, ःढ्य;धसो ङीष्भवति पूर्वविप्रतिषेधेन।।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।
न वक्तव्यः।
अन उपधालोपिनोऽन्यतरस्यामित्यत्र ःढ्य;धसो ङीष्भवति ःथ्य;त्येतदनुवर्तिष्यते।।
(5214 पूर्वविप्रतिषेधे द्वितीयं वार्तिकम्।। 2 ।।)
- आवट्याद्यञ्ञः ष्फश्चापः -
(भाष्यम्) आवट्याद्यञ्ञः ष्फश्चापो भवति पूर्वविप्रतिषेधेन।
आवट्याद्यञ्ञश्चापोऽवकाशः--उदीचाम्--आवट्या।
ष्फस्यावकाशः--अन्यानि यञ्ञन्तानि--गार्ग्यायणी, वात्स्यायनी।
आवट्यशब्दात्प्राचामुभयं प्राप्नोति--आवट्यायनी, ष्फो भवति पूर्वविप्रतिषेधेन।।
(सूत्रन्यासेन सिद्धान्तभाष्यम्)
आवट्यग्रहणेन नार्थः। यञ्ञः ष्फश्चापः ःथ्य;त्येव। ःथ्य;दमपि सिद्धं भवति--शार्कराक्ष्यायणी, पौतिमाष्यायणी।।
यञ्ग्रहणेनापि नार्थः। ष्फश्चापः ःथ्य;त्येव। गौकक्ष्यशब्दः क्रौड्यादिषु पठ्यते, ःथ्य;दमपि सिद्धं भवति--गौकक्ष्यायणी।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्। एवं वक्ष्यामि--प्राचां ष्फ तद्धितः सर्वत्र।
क्व सर्वत्र?
यत्र ष्फश्चान्यश्च प्राप्नोति, ष्फ एव तत्र भवतीति।।
ततो लोहितादिकतन्तेभ्यः सर्वत्र।
क्व सर्वत्र?
प्राचां चोदीचां च।।
-4-1-78- अणिञ्ञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे (1328)
(तद्धितष्यङधिकरणम्)
(आक्षेपभाष्यम्)
ःथ्य;ह कस्मान्न भवति--दाक्षी, प्लाक्षीति।।
(समाधानभाष्यम्)
आतिशायिकेनायन्तमशब्देन निर्देशः क्रियते, स च त्रिप्रभृतिषु वर्तते, त्रिप्रभृतीनामभावात्।।
(प्रत्याक्षेपे श्लोकभाष्यम्)
यद्येवम्--
प्रकर्षे चेत्तमं कृत्वा
दाक्ष्या नोपोत्तमं गुरु।
आम्विधिः केन ते न
स्यात्? प्रकर्षे यद्ययं तमः।।
प्रकर्षे चेत्तम कृत्वा दाक्ष्या नोपोत्तमं गुर्वित्युच्यते, आम्विधिः केन तव न स्यात्? अव्ययघात् ःथ्य;ति प्राप्नोति। प्रकर्षे यद्ययं तमःउयद्ययं तमः प्रकर्षे वर्तते।।
(प्रत्याक्षेपनिरासे श्लोकभाष्यम्)
उद्गतस्य प्रकर्षोऽयं
गतशब्दोऽत्र लुप्यते।
उद्गतस्यायं प्रकर्षः। गतशब्दस्यात्र लोपो भवति।

नाव्ययार्थप्रकर्षोऽस्ति
धात्वर्थोऽत्र प्रकृष्यते।
नायमव्ययार्थस्य प्रकर्षः।
कस्य तर्हि?
धात्वर्थस्य।।
(व्युत्पत्त्या तमप्स्वीकारे दोषश्लोकभाष्यम्)
उद्गतोऽपेक्षते किंचित्
त्रयाणां द्वौ किलोद्गतौ।।
अनुद्गतमपेक्ष्योद्गतमित्येतद्भवति। त्रयाणां द्वौ किलोद्गतौ त्रयाणां किल द्वावुद्गतौ भवतः।
चतुष्प्रभृतिकर्तव्यो
वाराह्यायां न सिध्यति।
चतुष्प्रभृतिषु ष्यङ् वक्तव्यः। वाराह्यायां न सिध्यति वाराह्यायां न प्राप्नोति।
किं कारणम्?
चतुष्प्रभृतीनामभावात्।।
(व्युत्पत्तिपक्षे दूषणान्तरबोधकं श्लोकभाष्यम्)
भिद्यतेऽस्य स्वरस्तेन
विधिश्चामो न लक्ष्यते।
भिद्यते खल्वस्य स्वरः, तेनातिशायनिकेन तमशब्देन उत्तमस्य विधिश्चामो न लक्ष्यते विधिश्चामो न क्वचिदपि लक्ष्यते।।
(सिद्धान्ते श्लोकभाष्यम्)
शब्दान्तरमिदं विद्याद्
दृष्टमभ्यन्तरं त्रिषु।
एवं तर्हि--अन्योऽयमातिशायनिकेन समानार्थः तमः त्रिप्रभृतिषु वर्तते।।
(आक्षेपभाष्यम्)
किं पुनरयमणिञ्ञोरादेशः, आहोस्विदणिञ्भ्यां परः?
कश्चात्र विशेषः?
(5215 अनादेशे दोषवार्तिकम्।। 1 ।।)
- ष्यङ्यनादेशे यलोपवचनम् -
(भाष्यम्) ष्यङि अनादेशे यलोपो वक्तव्यः। औदमेघ्यायाश्छात्रा औदमेघाः।।
(5216 अनादेशे दोषवार्तिकम्।। 2 ।।)
- द्विरण्विधिः -
(भाष्यम्) द्विश्चाण्विधेयः। औदमेघ्यायाश्छात्रा औदमेघाः। औदमेघ्यानां संघ औदमेघः। ःथ्द्य;ञ्ञः ःथ्द्य;त्यण् न प्राप्नोति।।
(आदेशपक्षे भाष्यम्)
अस्तु तर्हि आदेशः।।
(5217 आदेशे दोषवार्तिकम्।। 3 ।।)
- आदेशेऽन्लोपवचनम् -
(भाष्यम्) यद्यादेशः, अनो लोपो वक्तव्यः। औडुलोम्या, शारलोम्येति। ये चाभावकर्मणोः (6।4।168) ःथ्द्य;ति प्रकृतिभावः प्रसज्येत।।
(5218 आदेशे दोषवारकं वार्तिकम्।। 4 ।।)
न वा ष्यङो लोपनिमित्तत्वात् ।।
(भाष्यम्) न वा एष दोषः।
किं कारणम्?
ष्यङो लोपनिमित्तत्वात्। लोपनिमित्तः ष्यङ्, न चाकृते लोपे ष्यङ् प्राप्नोति।
किं कारणम्?
गुरूपोत्तमयोरित्युच्यते, न चाकृते लोपे गुरूपोत्तमता भवति।।
(परत्वपक्षे दोषवारकं भाष्यम्)
अथ वा पुनरस्तु परः। ननु चोक्तं ष्यङ्यनादेशे यलोपवचनम्, द्विरण् विधिरिति।
नैष दोषः।
यत्तावदुच्यते--यलोपवचनमिति, अदोष एषः।
किं कारणम्?
पुंवद्भावाद्यजादौ तद्धिते। यजादौ तद्धिते पुंवद्भावो भविष्यति, भस्याढे तद्धिते पुंवद्भवतीति।।

अयं तर्हि दोषः--द्विरण्विधिरिति।
नैष दोषः।
सिद्धश्च प्रत्ययविधौ, स च सिद्धः प्रत्ययविधौ।।
(सिद्धान्तभाष्यम्)
उभयमिदमुक्तम्--आदेशः, पर ः‍थ्य;ति च।
किमत्र न्याय्यम्?
आदेश ः‍थ्य;त्येतद् न्याय्यम्।
कुत एतत्?
एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्, षष्ठ्या च निर्देशः कृतः।
अत एष पक्षो निर्दोषः।।
(प्रत्ययपक्षे दोषप्रदर्शकभाष्यम्)
ननु च परस्मिन्नपि सति ये दोषास्ते परिहृताः, पुंवद्भावेन यलोपः परिहृतः।
स च पुंवद्भावोऽढे भवति, तत्र ते औदमेघेयो न सिध्यति।।
(आदेशपक्षे दोषोद्भावकं श्लोकभाष्यम्)
अनुबन्धौ त्वया कार्यौ
यस्यादेशः, अनुबन्धौ तेन क्रतव्यौ। एकः सामान्यग्रहणार्थः, अपरः सामान्यग्रहणाविघातार्थः।।
क्व सामान्यग्रहणार्थेनार्थः?
यङश्चाप्(4।1।74) ः‍थ्य;ति।।
अथ क्व सामान्यग्रहणाविघातार्थेनार्थः?
अत्रैव।।
किं प्रयोजनम्?
चाबर्थम्
चाब्यथा स्यात्।।
(आदेशवादिन आक्षेपभाष्यम्)
तव कथं चाप्?
(प्रत्ययवादिनः समाधानश्लोकभाष्यम्)
टाब्विधिर्मम।
टापा मम सिद्धम्।।
(आदेशवादिनः प्रतिबन्दिभाष्यम्)
ननु च ममापि टापा सिद्धं स्यात्।।
(प्रत्ययवादिनः परिहारभाष्यम्)
न सिध्यति। अण ः‍थ्य;ति, ः‍थ्य;ञ ः‍थ्य;ति चेकारः प्राप्नोति।।
(आदेशवादिनः परिहारभाष्यम्)
नैष दोषः।
नैवं विज्ञायते--अणन्तादकारान्ताद्, ः‍थ्य;ञन्तादिकारान्तादिति।
कथं तर्हि?
अण्योऽकारः, ः‍थ्य;ञ्य ः‍थ्य;कार ः‍थ्य;ति।।
(प्रत्ययवादिनो दोषभाष्यम्)
स्वरार्थस्तर्हि त्वया चाब्वक्तव्यः। ञ्निनतीत्याद्युदात्तत्वं मा भूत्, चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यादिति।।
(आदेशवादिनः प्रत्याक्षेपभाष्यम्)
तवापि तर्हि ष्यङा उक्तत्वात् स्त्रीत्वस्य टाब्न प्राप्नोति।।
(प्रत्ययवादिनः श्लोकभाष्येण समाधानम्)
नैष दोषः।
उक्तेऽपि हि भवन्त्येते।
उक्तेऽपि तु स्त्रीत्वे भवन्त्येते टाबादय ः‍थ्य;ति। उक्तमेतत्--स्वार्थिकाष्टाबादय ः‍थ्य;ति।।
(आदेशवादिनो दोषवारकं भाष्यम्)
सानुबन्धकस्यादेशो मम।
ममापि तर्हि सानुबन्धकस्यादेश ः‍थ्य;त्कार्यं नेति, तेन ञ्नित्न्न भविष्यति।।
(प्रत्ययवादिनो दोषदर्शकं श्लोकभाष्यम्)

अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति।
अस्थानिवत्त्वे दोषः--वृद्धिस्ते न प्राप्नोति। औडुलोम्या, शारलोम्येति। न चेदानीमर्द्धजरतीयं लभ्यम्--वृद्धिर्मम भविष्यति, स्वरो नेति।
तद्यथा--अर्थं जरत्याः कामयन्ते, अर्धं नेति।।
(आदेशवादिनः प्रतिबन्दिश्लोकभाष्यम्)
त्वयाऽप्यत्र विशेषार्थं कर्तव्यं स्याद् विशेषणम्।
त्वयाऽप्यत्र विशेषणार्थोऽनुबन्धः कर्तव्यः।।
क्व विशेषणार्थेनार्थः?
ष्यङः सम्प्रसारणमिति।।
(प्रत्ययवादिनो दोषनिवारकं श्लोकभाष्यम्)
अक्रियैव विशेषोऽत्र सानुबन्धो विशेषवान्।
अक्रियैव मम विशेषः, सानुबन्धस्तु विशेषवान्।।
(आदेशवादिनो दोषभाष्यम्)
पाश्यायां ते कथं न स्यात्?
पाश्यापुत्र ः‌थ्य;त्यत्र कस्मान्न भवति?
(प्रत्ययवादिन उत्तरभाष्यम्)
एको मे स्याद्विशेषणम्
एको मम विशेषणार्थः। त्वया पुनर्द्वौ कर्तव्यौ।।
(आदेशवादिन आक्षेपकं श्लोकभाष्यम्)
अतैकस्मिन्नपि सति कः करिष्यते?
किं चातः?
अन्यस्मिन् सूत्रभेदः स्यात्
यद्येताभ्यामन्यः क्रियते, सूत्रभेदः कृतो भवति।
षिति लिङ्गं प्रसज्यते।
अथ षित् क्रियते,षित ः‌थ्य;तीकारः प्राप्नोति।
ङिति चेक्रीयिते दोषः।
अथ ङित् क्रियते, चेक्रीयिते दोषो भवति। लोलूयापुत्रः, लोलूयापति ः‌थ्य;ति।।
(प्रत्ययवादिन उत्तरं श्लोकभाष्यम्)
व्यवधानान्न दुष्यति।।
अकारेण व्यवहितत्वान्न दोषो भवति।।
(आदेशवादिनः श्लोकभाष्यम्)
धातोरिति वर्तते, यश्चात्रानन्तरो नासौ धातुः।
यो धातुः सोऽननन्तरः
यश्च धातुर्नासावनन्तरः।
न चेदुभयतः साम्यमुभयत्र प्रसज्यते।
न चेदुभयतः साम्यम्, उभयत्र प्राप्नोति।
(प्रत्ययवादिनः समर्थकं भाष्यम्)
यदि पुनर्यङा धातुर्विशेष्येत?
(आदेशवादिभाष्यम्)
यङा विशेष्येत यदीह धातुर्यङ् धातुना वा यदि तुल्यमेतत्।
यद्येव यङा धातुर्विशेष्यते, अथापि धातुना यङ्, तुल्यमेतद्भवति।
(प्रत्ययवादिभाष्यम्)
उभौ प्रधानं यदि नात्र दोषः।
अथोभौ प्रधानं भवतः, नात्र दोषो भवति।।
(आदेशवादिभाष्यम्)
तथा प्रसार्येत तु वाक्पतिस्ते।
तथा सति वाक्पतिः, वाक्पुत्र ः‌थ्य;त्यत्र सम्प्रसारणं प्राप्नोति।
(प्रत्ययवादिभाष्यम्)
एवं तर्हि?
धातुप्रकरणस्येह

न स्थानमिति निश्चयः।
धातुप्रकरणस्येह स्थानं नास्तीति कृत्वा एष निश्चयः क्रियते।।
(आदेशवादिभाष्यम्)
अवस्यमात्वार्थं धातुग्रहणं कर्तव्यम्। ःथ्य;ह मा भूत्--गोभ्याम्, गोभिः, नौभ्याम्, नौभिरिति।।
(प्रत्ययवादिभाष्यम्)
आत्वार्थं यदि कर्तव्यं
तत्रैवैतत्करिष्यते।।
उपदेशे यदेजन्तं
तस्य चेदात्वमिष्यते।
उद्देशो रूढिशब्दानां
तेन गोर्न भविष्यति।।
एवं तर्हि उपदेशे ःथ्य;त्युच्यते। उद्देशश्च प्रातिपदिकानां नोपदेशः।।
-4-1-79- गोत्रावयवात् (1327)
(ष्यङादेशाधिकरणम्)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते?
(एकदेशिसमाधानभाष्यम्)
गोत्रावयवादगोत्रार्थम्। गोत्रावयवादित्युच्यते, अगोत्रार्थोऽयमारम्भः।।
(5220 एकदेश्याक्षेपवार्तिकम्।। 1 ।।)
- गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् -
(भाष्यम्) गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टं प्राप्नोति।
ःथ्य;हापि प्राप्नोति--आहिच्छत्री, कान्यकुब्जीति।।
(एकदेशिसमाधानभाष्यम्)
एवं तर्हि गोत्रादेव गोत्रावयवात्।।
(5121 सूत्राक्षेपवार्तिकम्।। 2 ।।)
- गोत्रादिति चेद्वचनानर्थक्यम् -
(भाष्यम्) गोत्रादिति चेद्वचनमनर्थकं भवति। सिद्धं गोत्रे पूर्वेणैव।।
(सिद्धान्त्येकदेशिभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--गुरूपोत्तमयोरित्युच्यते, अगुरूपोत्तमार्थोऽयमारम्भः।।
(5222 सूत्रप्रत्याख्याने वार्तिकम्। 3 ।।)
- अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वप्रसङ्गः -
(भाष्यम्) अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वत्र प्राप्नोति। अष्टाशीतिसहस्राण्यूर्ध्वरेतसामृषीणां बभूवुस्तत्रागस्त्याष्टमैर्ऋषिभिः प्रजनोऽभ्युपगतः। तत्रभवतां यदपत्यं तानि गौत्राणि, अतोऽन्ये गोत्रावयवाः, तत उत्पत्तिः प्राप्नोति। तच्चानिष्टम्। तस्मान्नार्थोऽनेन योगेन।।
(प्रत्याख्यानसाधकभाष्यम्)
कथं येभ्योऽगुरूपोत्तमेभ्य ःथ्य;ष्यते?
(5223 प्रत्याख्यानसाधकवार्तिकम्।। 4 ।।)
- सिद्धं तु रौढ्यादिषूपसंख्यानात् -
(भाष्यम्) सिद्धमेतत।
कथम्?
रौढ्यादिषूपसंख्यानात्। रौढ्यादिषूपसंख्यानं कर्तव्यम्।
के पुना रौढ्यादयः?
ये क्रौड्यादयः।।
(भारद्वाजीयमतेन फलप्रदर्शकम्भाष्यम्)
भारद्वाजीयाः पठन्ति--सिद्धं तु कुलाख्याभ्यो लोके गोत्राभिमताभ्य ःथ्य;ति।
सिद्धमेतत्।
कथम्?
कुलाख्या लोके गोत्रावयवा ःथ्य;त्युच्यन्ते।।
अथ वा गोत्रावयवः को भवितुमर्हति?
यो गोत्रादवयुतः।

कश्च गोत्रादवयुतः?
योऽनन्तरः--दैवदत्त्या, याज्ञदत्त्येति।।
ः्थ्य;ति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथम पादे द्वितीयमाह्निकम्।।
-4-1-82- समर्थानां प्रथमाद्वा (1328)
(अधिकाराधिकरणम्)
(पदकृत्यभाष्यम्)
समर्थवचनं किमर्थम्?
समर्थादुत्पत्तिर्यथा स्यात्--उपगोरपत्यम्।
असमर्थान्मा भूदिति--कम्बल उपगोरपत्यं देव दत्तस्येति।।
(5224 पूर्वपक्षवार्तिकम्।। 1 ।।)
- समर्थवचनमनर्थकम्, न ह्यसमर्थेनार्थाभिधानम् -
(भाष्यम्) समर्थवचनमनर्थकम्।
किं कारणम्?
नह्यसमर्थेनार्थाभिधानम्। नह्यसमर्थादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यात्। अनभिधानात्तत उत्पत्तिर्न भविष्यति।।
(पदकृत्यभाष्यम्)
अथ प्रथमवचनं किमर्थ?
प्रथमवचनं प्रकृतिविशेषणार्थम्। प्रथमात्प्रत्ययोत्पत्तिर्यथा स्यात्, अप्रथमान्मा भूत्-उपगोरपत्यमिति अपत्यशब्दात्।।
(5225 पूर्वपक्षवार्तिकम्।। 2 ।।)
- प्रथमवचनमनर्थकं न ह्यप्रथमेनार्थाभिधानम् -
(भाष्यम्) प्रथमवचनमनर्थकम्।
किं कारणम्?
न ह्यप्रथमेनार्थाभिधानम्। न ह्यप्रथमादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात्, अनभिधानात्तत उत्पत्तिर्न भविष्यति।।
(पदकृत्यभाष्यम्)
अथ वावचनं किमर्थम्?
वाक्यमपि यथा स्यात्-उपगोरपत्यमिति।।
(5226 पूर्वपक्षवार्तिकम्।। 3 ।।)
- वावचने चोक्तम् -
(भाष्यम्) किमुक्तम्?
तत्र तावदुक्तं वावचनानर्थक्यं च, तत्र नित्यत्वात् सन ः्थ्य;ति।
ः्थ्य;हापि वावचनमनर्थकम्।
किं कारणम्?
तत्र नित्यत्वात्प्रत्ययस्य।।
(वावचनप्रत्याख्यानसमर्थकभाष्यम्)
ः्थ्य;ह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। स्वभावतश्चैतद्भवति--वाक्यं च वृत्तिश्च।
तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुमन्यदतः संज्ञायाः, न च संज्ञाया भावाभावाविष्येते।
तस्मान्नार्थो वावचनेन।।
(सिद्धान्तभाष्यम्)
अथैतत्समर्थग्रहणं नैव कर्तव्यम्।
कर्तव्यं च।
किं प्रयोजनम्?
समर्थादुत्पत्तिर्यथा स्यादसमर्थान्मा भूदिति।
किं पुनः समर्थम्?
अर्थाभिधाने यत्समर्थम्।
किं पुनस्तत्? कृतवर्णानुपूर्वीकं पदम्--सौत्थितिः, वैक्षमाणिरिति।।
(वावचने सिद्धान्तभाष्यम्)
अथ तद्वावचनं नैव कर्तव्यम्।
कर्तव्यं च।
किं प्रयोजनम्?
नित्याः शब्दाः, नित्येषु शब्देषु वाक्यस्य साधुत्वमनेनान्वाख्यायते।।

-4-1-83- प्राग्दीव्यतोऽण् (1329)
(अणधिकाराधिकरणम्)
(आक्षेपभाष्यम्)
अयुक्तोऽयं निर्देशः, न हि तत्र कश्चिद् दीव्यच्छब्दः पठ्यते।
कस्तर्हि?
दीव्यतिशब्दः।
कथं तर्हि निर्देशः कर्तव्यः?
प्राग्दीव्यतेरिति।
स तर्हि तथा निर्देशः कर्तव्यः--प्राग्दीव्यतेरिति?
(समाधानभाष्यम्)
न कर्तव्यः।
दीव्यतिशब्दे दीव्यच्छब्दोऽस्ति तस्मादेषा पञ्चमी।।
(परिभाषाज्ञापकपरभाष्यम्)
किं पुनः कारणं विकृतनिर्देशः क्रियते?
एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा--एकदेशविकृतमनन्यवद्भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?
एकदेशविकृतेषूपसंख्यानं चोदितं तन्न कर्तव्यं भवति।
अथ वा प्राक्शब्दोऽयं दिक्शब्दः, दिक्शब्दैश्च योगो पञ्चमी भवति। तत्र अप्रथमासमानाधिकरणे ःथ्य;ति शता भविष्यति।।
(पदकृत्यभाष्यम्)
अथ प्राग्वचनं किमर्थम्?
(5227 सिद्धान्तवार्तिकम्।। 1 ।।)
- प्राग्वचनं सकृद्विधानार्थम् -
(भाष्यम्) प्राग्वचनं क्रियते, सकृद्विधानार्थम्। सकृद्विहितः प्रत्ययो विहितो यथा स्यात्। योगे योगे तस्य ग्रहणं मा कार्षमिति।।
(आक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्।
अधिकारादप्येतत् सिद्धम्--अधिकारः प्रतियोगं तस्यानिर्देशार्थ ःथ्य;ति योगे योग उपतिष्ठते।।
(5228 समाधानवार्तिकम्।। 2 ।।)
- अधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्गः -
(भाष्यम्) अधिकारात् सिद्धमिति चेदपवादविषयेऽण् प्राप्नोति--अत ःथ्य;ञ् (4।1।95) अण्चेत्यणपि प्राप्नोति।।
(5229 सिद्धान्तवार्तिकम्।। 3 ।।)
- तस्मात् प्राग्वचनम् -
(भाष्यम्) तस्मात्प्राग्वचनं कर्तव्यम्।।
(सूत्रार्थविषये पक्षद्वयबोधकं भाष्यम्)
अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते--प्राग्दीव्यतो याः प्रकृतय ःथ्य;ति, आहो स्वित्प्राग्दीव्यतो येऽर्था ःथ्य;ति।
किं चातः?
यदि विज्ञायते प्राग्दीव्यतो याः प्रकृतय ःथ्य;ति,
स एव दोषः, अपवादविषयेऽण्प्रसङ्ग ःथ्य;ति।।
अथ विज्ञायते प्राग्दीव्यतो येऽर्था ःथ्य;ति,
न दोषो भवति। समानेऽर्थे प्रकृतिविशेषादुत्पद्यमान ःथ्य;ञणं बाधते।
यथा न दोषस्तथाऽस्तु।।
(अन्यतरपक्षेऽभिनिवेशभाष्यम्)
प्राग्दीव्यतो येऽर्था ःथ्य;ति विज्ञायते।
कुत एतत्--
तथा ह्ययं प्राधान्येनार्थं प्रतिनिर्दिशति। ःथ्य;तरथा हि बह्व्यस्तत्र प्रकृतयः पठ्यन्ते, ततो यां कां चिदेव
निमित्तत्वेनोपाददीत।।
अथ वा पुनरस्तु प्राग्दीव्यतो याः प्रकृतय ःथ्य;ति।
ननु चोक्तमपवादविषयेऽण्प्रसङ्ग ःथ्य;ति।।
(5230 एकदेशिसमाधानवार्तिकम्।। 4 ।।)
- न वा क्व चिद्वावचनात् -

(भाष्यम्) न वा एष दोषः।
किं कारणम्?
क्व चिद्वावचनात्। यदयं क्व चिद्वावचनं करोति--पीलाया वा (4|1|118), उदश्वितोऽन्यतरस्याम् (4|2|19) ःथ्य;ति, तज्ज्ञापयत्याचार्यो नापवादविषयेऽण्भवतीति।।
(एकदेशिसिद्धान्तभाष्यम्
यद्येतज्ज्ञाप्यते नार्थः प्राग्वचनेन। अधिकारात्सिद्धम्।
ननु चोक्तमधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्ग ःथ्य;ति।
नैष दोषः।
परिहृतमेतत्--न वा क्व चिद्वावचनादिति।।
किं पुनः कारणमियानवधिर्गृह्यते, न प्राक् ठकः ःथ्य;त्येवोच्येत?
एतज्ज्ञापयत्यर्थेष्वयम्भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?
प्रकृतिविशेषादुत्पद्यमान ःथ्य;ञ्ञ्-अणं बाधते।।
-4-1-85- दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः (1330)
(ण्यप्रत्ययाधिकरणम्)
(5231 विधिवार्तिकम्।। 1 ।।)
- (ण्यप्रकरणे) वाङ्यतिपितृमतां छन्दस्युपसंख्यानम् -
(भाष्यम्) (ण्यप्रकरणे) वाङ्यतिपितृमतां छन्दस्युपसंख्यानं कर्तव्यम्। वाक्--वाच्यः। वाक्।। मति--मात्यः। मति।। पितृमत्--पैतृमत्यः।।
(5232 विधिवार्तिकम्।। 2 ।।)
- पृथिव्या ञ्ञाञ्ञौ -
(भाष्यम् पृथिव्या ञ्ञाञ्ञौ वक्तव्यौ। पार्थिवा, पार्थिवी।।
(5233 विधिवार्तिकम्।। 3 ।।)
- देवस्य यञ्ञञ्ञौ -
(भाष्यम्) देवस्य यञ्ञञ्ञौ वक्तव्यौ। दैव्यम्, दैवम्।
(5234 विधिवार्तिकम्।। 4 ।।)
- बहिषष्टिलोपश्च यञ्ञ् च -
(भाष्यम्) बहिषष्टिलोपश्च यञ्ञ् च वक्तव्यः। बहिर्भवो बाह्यः।।
(5235 विधिवार्तिकम्।। 5 ।।)
- ःथ्य;कक्च -
(भाष्यम् ःथ्य;कक्च वक्तव्यः। बाहीकः।।
(5236 विधिवार्तिकम् ।। 6 ।।)
- ःथ्य;कञ्ञ् छन्दसि -
(भाष्यम्) ःथ्य;कञ्ञ् छन्दसि वक्तव्यः। बाहीकमस्तु भद्रं वः।।
(5237 विधिवार्तिकम्।। 7 ।।)
- स्थाम्नोऽकारः -
(भाष्यम्) स्थाम्नोऽकारो वक्तव्यः। अश्वत्थामः।।
(5238 विधिवार्तिकम्।। 8 ।।)
- लोसोऽपत्येषु बहुषु -
(भाष्यम्) लोम्नोऽपत्येषु बहुषु अकारो वक्तव्यः। उडुलोमाः, शारलोमाः।
बहुष्विति किमर्थम्?
औडुलोमिः, शारलोमिः।।
(5239 विधिवार्तिकम्।। 9 ।।)
- सर्वत्र गोरजादिप्रसङ्गे यत् -
(भाष्यम्) सर्वत्र गोरजादिप्रसङ्गे यद्वक्तव्यः। गवि भवं गव्यम्। गोः स्वं गव्यम्। गौर्देवताऽस्य स्थालीपाकस्य गव्यः स्थालीपाकः।।
(5240 सिद्धान्तवार्तिकम्।। 10 ।।)
- ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम् -
(भाष्यम्) ण्यादयोऽर्थविशेषलक्षणादणपवादाद्भवन्ति पूर्वविप्रतिषेधेन।
ण्यादीनामवकाशः--दितिर्देवताऽस्य दैत्यः, अदितिर्देवताऽस्य आदित्यः।
अर्थविशेषलक्षणस्याणपवादस्यावकाशः--दुलेरपत्यं दौलेयः, बालेयः।

ः थ्य;होभयं प्राप्नोति--दितेरपत्यं दैत्यः, अदितेरादित्यः।।
अपरस्यार्थविशेषलक्षणस्याणपवादस्यावकाशः--अचित्तहस्तिधेनोष्ठक् (4।2।47) आपूपिकम्, शाष्कुलिकम्।
ण्यादीनामवकाशः--बार्हस्पत्यम्, प्राजापत्यम्।
ः थ्य;होभयं प्राप्नोति--वनस्पतीनां समूहो वानस्पत्यम्।
ण्यादयो भवन्ति पूर्वविप्रतिषेधेन।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।
न वक्तव्यः।
ः थ्य;ष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवतीति।
दितिवनस्पतिभ्यामपत्यसमूहयोः।।
-4-1-86- उत्सादिभ्योऽञ् (1331)
(अञ्प्रत्ययाधिकरणम्)
(5241 सिद्धान्तवार्तिकम्।। 1 ।।)
- अञ्प्रकरणे ग्रीष्मादच्छन्दसि -
(भाष्यम्) अञ्प्रकरणे ग्रीष्मादच्छन्दसीति वक्तव्यम्। ग्रैष्मम्।
अच्छन्दसीति किम्?
त्रिष्टुब् ग्रैष्मी।।
(छन्दःपदार्थविवरणभाष्यम्)
यद्यच्छन्दसीत्युच्यते, ग्रैष्मावेतौ मासौ--अत्र न प्राप्नोति।
अच्छन्दसीत्युच्यते, नेदं छन्दो विवक्षितम्--काठकं कालापकं मौदकं पैप्पलादकमिति।
किं तर्हि?
प्रत्ययार्थविशेषणमेतद्। न चेच्छन्दः प्रत्ययार्थो भवतीति।।
-4-1-87- स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् (1332)
(नञ्स्नञाधिकरणम्)
(प्रत्ययभेदाक्षेपभाष्यम्)
किमर्थं नञ्स्नञावुच्येते, न नञेवोच्येत?
का रूपसिद्धिः?
पौंस्नम्। पुंस् ः थ्य;ति सकारान्तः, नञ्शब्दश्च प्रत्ययः।
न सिध्यति। संयोगान्तस्य लोपः(8।2।23) ः थ्य;ति लोपः प्राप्नोति।
एवं तर्हि नैवार्थो नञा, नापि स्नञा। अञ् प्रकृतः सोऽनुवर्तिष्यते, नकारश्चागमो वक्तव्यः।
अथ नकारागमे सति किं पूर्वान्तः करिष्यते, आहोस्वित्परादिः?
किं चातः?
यदि पूर्वान्तः--
स्त्रैणाः, बहुषु लोपः प्राप्नोति।
स्त्रैणानां सङ्घः, सङ्घाङ्कलक्षणेष्वञ्यञिञामण् (4।3।127) ः थ्य;त्यण् प्राप्नोति।।
अथ परादिः--पौंस्नम्। स एव दोषः--संयोगान्तलोपः प्राप्नोति।।
अस्तु पूर्वान्तः।
कथं स्त्रैणाः, स्त्रैणानां सङ्घ ः थ्य;ति?
उभयत्र लौकिकस्य गोत्रस्य ग्रहणम्। न चेदं लौकिकं गोत्रम्।।
ः थ्य;र्कारस्तर्हि प्राप्नोति।
ः थ्य;ष्टमेवैतत्संगृहीतम्--स्त्रैणी, पौंस्नीत्येव भवितव्यम्।
एवं हि सौनागाः पठन्ति--नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ः थ्य;ति।।
(प्रयोजनमुखेन समाधानभाष्यम्)
टिलोपस्तर्हि प्राप्नोति।
नुग्वचनान्न भविष्यति।
भवेदिह नुग्वचनान्न स्यात्स्त्रैणमिति।
ः थ्य;ह तु खलु पौंस्नमिति, नुग्वचनादेव प्राप्नोति।
तस्मान्नञ्स्नञौ वक्तव्यौ।।
(जिज्ञासाभाष्यम्)
अथेमौ नञ्स्नञौ प्राग्भवनादिति, आहो स्वित्प्राग्वतेः?

कश्चात्र विशेषः?
(5242 पूर्वपक्षवार्तिकम्।। 1 ।।)
- नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधः -
(भाष्यम्) नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधो वक्तव्यः--स्त्रीवत्, पुंवदिति।
किं पुनः कारणं न सिद्ध्यति?
ः थ्य;मौ नञ्स्नञौ प्राग्भवनादित्युच्येते, तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम्।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्।
वतेः प्रागिति वक्ष्यामि।।
(5243 पूर्वपक्षवार्तिकम्।। 2 ।।)
- वतेः प्रागिति चेद् भाव उपसंख्यानम् -
(भाष्यम्) वतेः प्रागिति चेद् भाव उपसंख्यानं कर्तव्यम्--स्त्रीभावः स्त्रैणम्, पुंभावःपौंस्नमिति। सूत्रं च भिद्यते।।
(समाधानभाष्यम्)
यथान्यासमेवास्तु।।
ननु चोक्तं नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेध ः थ्य;ति।
नैष दोषः।
आचार्यप्रवृत्तिर्ज्ञापयति--न वत्यर्थे नञ्स्नञौ भवत ः थ्य;ति, यदयं स्त्रियाः पुंवदिति निर्देशं करोति।
एवमपि स्त्रीवदिति न सिध्यति।
योगापेक्षं ज्ञापकम्।।
-4-1-88- द्विगोर्लुगनपत्ये (1333)
(लुगधिकरणम्)
(सूत्रार्थोपपादकभाष्यम्)
ः थ्य;ह कस्मान्न भवति--त्रैविद्यः, पाञ्चनदः, षाट्कुल ः थ्य;ति?
ः थ्य;ह तावत्--त्रैविद्य ः थ्य;ति--
नैवं विज्ञायते--तिस्रो विद्या अधीते त्रैविद्य ः थ्य;ति।
कथं तर्हि?
त्र्यवयवा विद्या त्रिविद्या, त्रिविद्यामधीते त्रैविद्य ः थ्य;ति।
ः थ्य;हापि पाञ्चनद ः थ्य;ति--
नैवं विज्ञायते--पञ्चसु नदीषु भवः पाञ्चनद ः थ्य;ति।
कथं तर्हि?
पञ्चानां नदीनां समाहारः पञ्चनदम्, पञ्चनदे भवः पाञ्चनद ः थ्य;ति।
षाट्कुल ः थ्य;ति--
नैवं विज्ञायते--षट्सु कुलेषु भवः षाट्कुल ः थ्य;ति,
कथं तर्हि?
षण्णां कुलं षट्कुलम्, षट्कुले भवः षाट्कुल ः थ्य;ति।।
(सूत्रार्थसंग्राहकभाष्यम्)
अजादिग्रहणं च कर्तव्यम्। ः थ्य;ह मा भूत्--पञ्चगर्गरूप्यम्, पञ्चगर्गमयम्।।
(5244 पूरकवार्तिकम् ।। 1 ।।)
- द्विगोर्लुकि तन्निमित्तग्रहणम् -
(भाष्यम्) द्विगोर्लुकि तन्निमित्तग्रहणं कर्तव्यम्, द्विगुनिमित्तं यस्तद्धितः--तस्य लुग्भवतीति वक्तव्यम्।
ः थ्य;ह मा भूत्--पञ्चकपालस्येदं खण्डं पाञ्चकपालमिति।।
(5245 पूरकवार्तिकम्।। 2 ।।)
- अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि -
(भाष्यम्) अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति वक्तव्यम्।
किं प्रयोजनम्?
पञ्चषु कपालेषु संस्कृतः पञ्चकपालः, पञ्चकपाल्यां संस्कृत ः थ्य;त्यपि विगृह्य पञ्चकपाल ः थ्य;त्येव यथा स्यात्।।
(जिज्ञासाभाष्यम्)
अथ क्रियमाणेऽपि तन्निमितग्रहणे कथमिदं विज्ञायते--
तस्य निमित्तं तन्निमित्तं तन्निमित्तादिति,

आहो स्वित् स निमित्तमस्य सोऽयं तन्निमित्तस्तन्निमित्तादिति।
किं चातः?
यदि विज्ञायते--तस्य निमित्तं तन्निमित्तं तन्निमित्तादिति,
क्रियमाणेऽपि तन्निमित्तग्रहणेऽत्र प्राप्नोति-- पञ्चकपालस्येदं खण्डमिति।।
अथ विज्ञायते स निमित्तमस्यसोऽयं तन्निमित्तस्तन्निमित्तादिति,
न दोषो भवति।
यथा न दोषस्तथाऽस्तु।।
स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति विज्ञायते।
कुत एतत्।
यदयमाह--अर्थविशेषाऽसंप्रत्ययेऽतन्निमित्तादपीति।।
(प्रथमवार्तिकान्यथासिद्धिकरणभाष्यम्)
तत्तर्हि निमित्तग्रहणं कर्तव्यम्?
न कर्तव्यम्।
द्विगोरिति नैषा पञ्चमी,
का तर्हि?
संबन्धे षष्ठी--द्विगोस्तद्धितस्य लुग्भवति।
किञ्च द्विगोस्तद्धितः?
निमित्तम्। यस्मिन् द्विगुरित्येतद्भवति।
कस्मिंश्चैतद्भवति?
प्रत्यये।।
(द्वितीयवार्तिकान्यथासिद्धिभाष्यम्)
ःथ्य;दं तर्हि वक्तव्यम्--अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति।
एतच्च न वक्तव्यम्।
ःथ्य;हास्माभिस्त्रैशब्द्यं साध्यं--पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः, पञ्चकपालः। दशकपाल ःथ्य;ति।
तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यत्यव्यविकन्यायेन।
तद्यथा--अवेर्मासमिति विगृह्याविकशब्दादुत्पत्तिर्भवति--आविकमिति।
एवं पञ्चसु कपालेषु संस्कृत ःथ्य;ति विगृह्य पञ्चकपाल ःथ्य;ति भविष्यति।
पञ्चकपाल्यां संस्कृत ःथ्य;ति विगृह्य वाक्यमेव भविष्यति।
त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवति।।
-4-1-89- गोत्रेऽलुगचि (1334)
(अलुगधिकरणम्)
(5246 पूर्वपक्षवार्तिकम्।। 1 ।।)
- गोत्रेऽलुगचीति चेदितरेतरा श्रयत्वादप्रसिद्धिः -
(भाष्यम्) गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः।
का ःथ्य;तरेतराश्रयता?
अलुङ्गिमित्तोऽजादिः, अजादिनिमित्तश्चालुक्;
तदेतदितरेतराश्रयं भवति।
ःथ्य;तरेतराश्रयाणि च न प्रकल्पन्ते।।
(5247 पूर्वपक्षवार्तिकम्।। 2 ।।)
- विप्रतिषेधात्तु लुकश्छविधानम् -
(भाष्यम्) विप्रतिषेधात्तु लुकः छो भविष्यति। लुकोऽवकाशः--गर्गाः, वत्साः, बिदाः, उर्वाः।
छस्यावकाशः--शालीयः, मालीयः, गार्गीयः, वात्सीयः।
ःथ्य;होभयं प्राप्नोति--गर्गाणां छात्राः गार्गीयाः, वात्सीयाः।
छो भवति विप्रतिषेधेन।
नैष युक्तो विप्रतिषेधः।।
(समाधानश्लोकभाष्यम्)
भूम्नीति च लुक् प्राप्तो
बाह्ये चार्थे विधीयतेऽजादिः।
बहिरङ्गमन्तरङ्गाद्

विप्रतिषेधादयुक्तं स्यात्।।
भूम्नि प्राप्तस्य लुको
यदजादौ तद्धितेऽलुकं शास्ति।
एतद् ब्रवीति कुर्वन्
समानकालावलुग्लुक् च।।
यदयं भूम्नि प्राप्तस्य लुकोऽजादौ तद्धितेऽलुकं शास्ति, तज्ज्ञापयत्याचार्यः समानकालावेतावलुग्लुकाविति।।
(अजादिप्रत्ययस्य बलवत्त्वोपपादकभाष्यम्)
यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोऽस्य।
यदि वा लुकः प्रसङ्गेऽलुग्भवति तथाऽस्य च्छः प्रसिद्धो भवति।
पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः।।
(प्रकारान्तरोपपादकभाष्यम्)
लुग्वाऽलुकः प्रसङ्गं
प्रतीक्षते छेऽलुगस्य तथा।।
लुग्वा पुनरलुकः प्रसङ्गं यदि प्रतीक्षते, तथाऽस्य छेऽलुक् सिद्धो भवति।
प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते।।
(5248 पूर्वपक्षवार्तिकम्।। 2 ।।)
- गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्वयेकयोरलुक् -
(भाष्यम्) गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः। बिदानामपत्यं माणवको बैदः, बैदौ।
किमर्थमिदम्, नाचीत्येवालुक् सिद्धः?
अचीत्युच्यते, न चात्राजादिम्पश्यामः।
प्रत्ययलक्षणेन।
वर्णाश्रये नास्ति प्रत्ययलक्षणम्।।
(5249 पूर्वपक्षवार्तिकम्।। 3 ।।)
- एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि -
(भाष्यम्) एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः। बैदस्यापत्यं बहवो माणवका बिदाः, बैदयोर्बिदाः।
अञ्ञ्यो बहुषु यञ्ञ्यो बहुष्वित्युच्यमानो लुग्न प्राप्नोति।
मा भूदेवम्--अञ्ञ्यो बहुषु यञ्ञ्यो बहुष्विति।
अञ्ञन्तं यद्बहुषु यञ्ञन्तं यद्बहुष्वित्येवं भविष्यति।।
नैवं शक्यम्।
ाः थ्द्य;ह हि दोषः स्यात्--काश्यपप्रतिकृतयः काश्यपा ाः थ्द्य;ति।।
(सिद्धान्तभाष्यम्)
नैष दोषः।
यत्तावदुच्यते--गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः ाः थ्द्य;ति।
न वक्तव्यः।
अचीत्येवालुक् सिद्धः।
अचीत्युच्यते, न चात्राजादिं पश्यामः।
प्रत्ययलक्षणेन।।
ननु चोक्तं वर्णाश्रये नास्ति प्रत्ययलक्षणमिति।
यदि वा. कानिचिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति, तथा चेदमपि भविष्यति।।
अथ वाऽविशेषेणालुकमुक्त्वा हलि नेति वक्ष्यामि।
यद्यविशेषेणालुकमुक्त्वा हलि नेत्युच्यते, बिदानामपत्यं बहवो माणवका बिदाः--अत्राप्यलुक् प्राप्नोति।
अस्तु।
पुनरस्य युवबहुत्वे वर्तमानस्य लुग्भविष्यति।
पुनरलुक्कस्मान्न भवति?
समर्थानां प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते, न चैतत्समर्थानां प्रथमं गोत्रप्रत्ययान्तम्।
किं तर्हि?
द्वितीयमर्थमुपसंक्रान्तम्।
अवश्यं चैतदेवं विज्ञेयम्--अत्रिभरद्वाजिका, वसिष्ठकश्यपिका, भृग्वङ्गिरसिका, कुत्सकुशिकिका--ाः थ्द्य;त्येवमर्थम्।।
(5250 सिद्धान्तवार्तिकम् ।। 4 ।।)

- गर्गभार्गविकाग्रहणं वा नियमार्थम् -
(भाष्यम्) अथ वा गर्गभार्गविकाग्रहणं नियमार्थं भविष्यति।
एतस्यैव गोत्रप्रत्ययान्तस्य द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति, नान्यस्येति।।
(सिद्धान्तभाष्यम्)
यदप्युच्यते--एकवचनद्विवचनान्तस्य च प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः, अञ्यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुङ् न प्राप्नोतीति।
मा भूदेवम्--अञ्यो बहुषु यञ्यो बहुष्विति, अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति।
ननु चोक्तं नैवं शक्यमिह हि दोषः स्यात्-- काश्यपप्रतिकृतयः काश्यपा ःथ्य;ति।
नैष दोषः।
लौकिकस्य तत्र गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम्।।
यद्यञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवमुच्यते, बिदानामपत्यं माणवको बैदः, बैदौ--अत्रापि प्राप्नोति।।
अलुगत्र लुकं बाधिष्यते। अलुकि च कृते पुनर्लुको निमित्तं नास्तीति कृत्वा पुनर्लुग्न भविष्यति।।
(5251 सिद्धान्तवार्तिकम्।। 5 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
आपत्यं वा गोत्रम्, परमप्रकृतेश्चापत्यः, आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः स चास्त्रियाम् एको गोत्रग्रहणानर्थक्यं च, बहुवचनलोपिषु च सिद्धम् ःथ्य;ति।
तत्र बिदानामपत्यं माणवक ःथ्य;ति विगृह्य बिदशब्दाद्व्येकयोरुत्पत्तिर्भविष्यति--बैदः, बैदौ।
बैदस्यापत्यं बहवो माणवक ःथ्य;ति विगृह्य बिदशब्दाद्बहुषूत्पत्तिर्भविष्यति--बिदा ःथ्य;ति, अविरविकन्यायेन।।
-4-1-90- यूनि लुक् (1336)
(लुगधिकरणम्)
(5252 आक्षेपवार्तिकम्।। 1 ।।)
- यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्गः -
(भाष्यम्) यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टं प्राप्नोति। अनिष्टे प्रत्ययेऽवस्थिते लुक्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत।।
(5253 समाधानवार्तिकम्।। 2 ।।)
- सिद्धं त्वविशेषेण लुग्वचनं हलि च प्रतिषेधः -
(भाष्यम्) सिद्धमेतत्।
कथम्?
अविशेषेण लुकमुक्त्वा हलि नेति वक्ष्यामि।
सिध्यति।
सूत्रं तर्हि भिद्यते।।
(वार्तिकान्यथासिद्धिकरणभाष्यम्)
यथान्यासमेवास्तु।
ननु चोक्तम्--यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्गः ःथ्य;ति।
नैष दोषः।
अचीति नैषा परसप्तमी।
का तर्हि?
विषयसप्तमी--अजादौ विषय ःथ्य;ति। तत्राचि विषये लुकि कृते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति।।
(प्रयोजनावतरणभाष्यम्)
कानि पुनरस्य योगस्य प्रयोजनानि?
(5254 प्रयोजनवार्तिकम्।। 3 ।।)
- प्रयोजनं सौवीरगोत्रेभ्यो णाठक्छाः -
(भाष्यम्) ण, फाण्टाहृतेरपत्यं माणवकः--फाण्टाहृतः, फाण्टाहृतस्य यूनश्छात्राः--फाण्टाहृताः। ण।।
ठक्, भागवित्तेरपत्यं माणवको भागवित्तिकः। भागवित्तिकस्य यूनश्छात्राः--भागवित्ताः। ठक्।।
छ, तैकायनेरपत्यं माणवकस्तैकायनीयः। तैकायनीयस्य यूनश्छात्राः--तैकायनीयाः।।
(5255 प्रयोजनवार्तिकम्।। 4 ।।)
- ःथ्य;ञ्ण्यौ सर्वत्र -
(भाष्यम्) ःथ्य;ञ्ण्यौ सर्वत्र प्रयोजनम्। औपगवे र्यूनश्छात्राः--औपगवीयाः। वृद्धवदतिदेशे सति ःथ्य;ञो गोत्र ःथ्य;त्यण् प्राप्नोति।।
नैष दोषः।
प्रत्याख्यायतेऽसावतिदेशः।

कथं यानि प्रयोजनानि?
तानि ज्ञापकेन सिद्धानि।।
(प्रयोजनान्तरभाष्यम्)
यत्खच्छान्तात्तर्हि--ःथ्य;ञ्ञः प्रयोजनम्।
यत्--श्वशुरस्यापत्यं श्वशुर्यः, श्वशुर्यस्यापत्यं श्वाशुरिः। श्वाशुरेर्यूनश्छात्राः श्वाशुराः--यत्।।
ख--कुलस्यापत्यं कुलीनः, कुलीनस्यापत्यं कौलीनिः, कौलीनेर्यूनश्छात्राः कौलीनाः--ख।।
छ--श्वसुरपत्यं स्वस्रीयः, स्वस्रीयस्यापत्यं स्वास्रीयिः, स्वास्रीयेर्यूनः छात्राः स्वास्रीयाः।।
(प्रयोजनाक्षेपभाष्यम्)
एतान्यपि हि न सन्ति प्रयोजनानि। अत्रापि यूनि--श्वशुर्यः, कुलीनः, स्वस्रीय ःथ्य;त्येव भवितव्यम्। उक्तमेतत्--अणिञ्ञोर्लुकि--अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ःथ्य;ति।
अब्राह्मणगोत्रमात्रादित्युच्यते, न चैतदब्राह्मणगोत्रमात्रम्।
अब्राह्मणगोत्रमात्रादिति नायं पर्युदासः--यदन्यद् ब्राह्मणगोत्रमाणादिति।
किं तर्हि--
प्रसज्य प्रतिषेधोऽयम्--ब्राह्मणगोत्रमात्रान्नेति।।
अवश्यं चैतदेवं विज्ञेयम्। मायूरिः, कापोतिः, कापिञ्ञ्जलिरित्येवमर्थम्।।
(प्रयोजनभाष्यम्)
एवं तर्हि--अण्ण्यौ सर्वत्र प्रयोजनम्।।
अण्--ग्लुचुकायनेरपत्यं माणवको ग्लौचुकायनः, ग्लौचुकायनस्य यूनश्छात्रा ग्लौचुकायनाः।
ण्यश्च कापिञ्ञ्जलाद्यर्थम्। कापिञ्ञ्जलादेरपत्यं माणवकः कापिञ्ञ्जलाद्यः, कापिञ्ञ्जलाद्यस्य यूनश्छात्राः कापिञ्ञ्जलादाः।।
(5256 पूर्वपक्षवार्तिकम्।। 5 ।।)
- प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः -
(भाष्यम्) प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः कर्तव्यः। युवा वृद्धवद्भवतीति वक्तव्यम्।
किं प्रयोजनम्?
गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः। गोत्राश्रयो वुञ्ञ् यथा स्यात्।
यदि वृद्धवदतिदेशः क्रियते--औपगवेर्यूनश्छात्रा औपगवीया ःथ्य;तीञ्ञो गोत्र ःथ्य;त्यण् प्राप्नोति।।
(एकदेशिसमाधानभाष्यम्)
यदि पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिरतिदिश्येत।
कथं पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिः शक्या निर्देष्टुम्?
वतिनिर्देशोऽयम्, कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा--उशीनरवन्मद्रेषु यवाः, सन्ति--न सन्तीति,
मातृवदस्याः कलाः,
सन्ति--न सन्तीति।
एवमिहापि युवा वृद्धवद्भवति, वृद्धवन्न भवतीति--एवं वाक्यशेषं समर्थयिष्यामहे। यथा--गोत्रे युवप्रत्ययो न भवति, एवं प्राग्दीव्यतोऽधिकारे यून्यपि न भवतीति।।
(समाधानाक्षेपभाष्यम्)
तद्वक्तव्यम्? यद्यप्येतदुच्यते।।
(एकदेशिसमाधानान्तरभाष्यम्)
अथ वैतर्हि यूनि लुक् ःथ्य;त्येतन्न क्रियते।
कथं तर्हि---फक्फिञ्ञोरन्यतरस्याम्(4।1।91) ःथ्य;ति?
फक्फिञ्ञ्वर्ती युवा वा वृद्धवद्भवतीति वक्ष्यामि।।
(समाधानाक्षेपभाष्यम्)
यदा तर्हि न वृद्धवत्, तदा--
गार्ग्यायणानां समूहो गार्ग्यायणकम्,
गार्ग्यायणानां किंचिद् गार्ग्यायणकम्,
गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः,
गोत्राश्रयो वुञ्ञ् न प्राप्नोति।।
(प्रकारान्तरेणैकदेशिसमाधानभाष्यम्)
यदि पुनर्युवा वृद्धवदित्यनेनार्थोऽतिदिश्येत। प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदर्थो भवतीति।।
(समाधानाक्षेपभाष्यम्)
तद्वक्तव्यम्। यद्यप्येतदुच्यते।।

(एकदेशिसमाधानभाष्यम्)
अथ वैतर्हि यूनि लुक् ः्थ्य;त्येतन्न करिष्यते।
कथं फक्फिञोरन्यतरस्यामिति?
फक्फिञ्वर्ती युवार्थो वा वृद्धवद्भवतीति वक्ष्यामि। यदा तर्हि न वृद्धवत्, तदा--
गार्ग्यायणानां समूहो गार्ग्यायणकम्,
गार्ग्यायणानां किंचिद् गार्ग्यायणकम्,
गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः,
गोत्राश्रयो वुञ् न प्राप्नोति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि--
राजन्याद् वुञ् मनुष्याच्च
ज्ञापकं लौकिकं परम्।।
यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः--लौकिकं परं गोत्रग्रहणमिति। युवा च लोके गोत्रमित्युपचर्यते।
किं गोत्रोऽसि माणवक?
गार्ग्यायणः।
किं गोत्रोऽसि माणवक?
वात्स्यायनः।।
(आक्षेपवारकभाष्यम्)
यद्येतज् ज्ञाप्यते--
औपगवेर्यूनश्छात्रा औपगवीयाः, गोत्राश्रय ः्थ्य;ञो गोत्र ः्थ्य;त्यण्प्राप्नोति।
सामूहिकेषु ज्ञापकम्।
यदि सामूहिकेषु ज्ञापकम्, गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः, गोत्राश्रयो वुञ्न प्राप्नोति।
वुञ्विधौ ज्ञापकम्।
यदि वुञ्विधौ ज्ञापकम्, शालङ्केर्यूनश्छात्राः शालङ्गाः। ः्थ्य;ञो गोत्र ः्थ्य;त्यण्न प्राप्नोति।
अस्तु तर्ह्यविशेषेण।
कथमौपगवेर्यूनश्छात्रा औपगवीयाः?
गोत्रेणेञ्ञं विशेषयिष्यामः--गोत्रे य ः्थ्य;ञ् विहितः ः्थ्य;ति।।
-4-1-92- तस्यापत्यम् (1338)
(अपत्यार्थाधिकरणम्)
(आक्षेपकं श्लोकवार्तिकम्)
तस्येदमित्यपत्येऽपि
(भाष्यम्) तस्येदम् (4|3|120) ः्थ्य;त्यपत्येऽपि--अण् सिद्धः। तस्येदं विशेषा ह्येते--अपत्यम्, समूहः, विकारः, निवास ः्थ्य;ति।
किमर्थं तर्हीदमुच्यते?
(समाधाने श्लोकवार्तिकम्)
बाधनार्थं कृतं भवेत्।
ये तस्य बाधकस्तद्बाधनार्थम् ।।
(प्रत्याक्षेपभाष्यम्)
कथं पुनरशैषिकः शैषिकं बाधेत?
(प्रत्याक्षेपसमाधाने श्लोकवार्तिकम्)
उत्सर्गः शेष एवासौ
(भाष्यम्) यो ह्युत्सर्गः सोऽपि शेष एव।।
(सूत्रफलजिज्ञासाभाष्यम्)
अथैतस्मिन्बाधकबाधनार्थे सति किं प्रयोजनम्?
(प्रयोजने श्लोकवार्तिकम्)
वृद्धान्यस्य प्रयोजनम्।।
(भाष्यम्) वृद्धानि प्रयोजयन्ति--भानोरपत्यं भानवः, श्यामगोरपत्यं श्यामगव ः्थ्य;ति।।
(आक्षेपभाष्यम्)
कथं पुनरिच्छताऽपि--अपवादः प्राप्नुवन् शक्यो बाधितुम्?
(समाधानभाष्यम्)

तस्य ग्रहणसार्मथ्यात्।।
(प्रत्याक्षेपभाष्यम्)
किमिदं भवानध्यारुह्य तस्य ग्रहणस्य प्रयोजनमाह, न पुनः सर्वस्यैव योगस्य।
अवश्यमुत्तरार्थमर्थनिर्देशः कर्तव्यः।
समर्थविभक्तिरपि तर्हि अवश्यमुत्तरार्था प्रतिनिर्देष्टव्या।।
(समाधानभाष्यम्)
एवं तर्हि योगविभागकरणसार्मथ्यात्।
ः्थ्य;तरथा हि तस्यापत्यमत ः्थ्य;ञ्त्र् भवतीत्येव ब्रूयात्।।
(आक्षेपभाष्यम्)
पुल्लिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च। तेन पुँल्लिङ्गादेवोत्पत्तिः स्यात्, एकवचनान्ताच्च।
स्त्रीनपुंसकलिङ्गाद्, द्विवचनबहुवचनान्ताच्चेदं न स्यात्।।
(5257 समाधानवार्तिकम्।। 1 ।।)
- तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात् -
(भाष्यम्) तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणम्।
किं कारणम्?
तस्याविवक्षितत्वाद्। नात्र निर्देशस्तन्त्रम्।
कथं पुनस्तेनैव च नामनिर्देशः क्रियते, तच्चातन्त्रं स्यात्। तत्कारी च भवांस्तद्द्वेषी च।
नान्तरीयकत्वादत्र पुँल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च। अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः।
तद्यथा--कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति, नान्तरीयकत्वात्। स यावदादेयं तावदादाय तुषपलालान्युत्सृजति।
तथा--कश्चिन्मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति, नान्तरीयकत्वात्। स यावदादेयं तावदादाय शकलकण्ठकान्युत्सृजति।
एवमिहापि नान्तरीयकत्वात्पुँल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च। न ह्यत्र निर्देशस्तन्त्रम्।।
(5258 आक्षेपवार्तिकम्।। 2 ।।)
- सर्वनामनिर्देशे विशेषाऽसंप्रत्ययः सामान्यनिर्देशात् -
(भाष्यम्) सर्वनामनिर्देशे विशेषासंप्रत्ययः। किं कारणम्?
सामान्यनिर्देशात्। सर्वनाम्नाऽयं निर्देशः क्रियते। सर्वनाम च सामान्यवाचि। तेन सामान्यवाचिन एवोत्पत्तिः स्याद्, विशेषवाचिनो न स्यात्।।
(5259 समाधानवार्तिकम्।। 3 ।।)
- सामान्यचोदनास्तु विशेषेषु -
(भाष्यम्) सामान्यचोदनास्तु विशेषेष्ववतिष्ठन्ते।
तद्यथा--गौरनुबन्ध्योऽजोऽग्नीषोमीय ः्थ्य;ति। आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते।
विषम उपन्यासः।
अस्ति कारणं येनैतदेवं भवति।
किं कारणम्?
असंभवात्। आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा--आकृतिसहचरिते द्रव्ये आरम्भणालम्भनविशसनादीनि क्रियन्ते।
ः्थ्य;दमप्येवंजातीयकमेव।
असंभवात् सामान्यवाचिन उत्पत्तौ विशेषवाचिन उत्पत्तिर्भविष्यति।।
(5260 आक्षेपवार्तिकम् ।। 4 ।।)
- अपत्याभिधाने स्त्रीपुँल्लिङ्गस्याप्रसिद्धिर्नपुंसकत्वात् -
(भाष्यम्) अपत्याभिधाने स्त्रीपुँल्लिङ्गस्याप्रसिद्धिः।
किं कारणम्?
नपुंसकलिङ्गत्वात्। अपत्यं नपुंसकलिङ्गम्। तेन नपुंसकलिङ्गस्यैवाभिधानं स्यात्, स्त्रीपुँल्लिङ्गस्य न स्यात्।
ननु चेदं पुरस्तादेव चोदितं परिहृतं च।
उत्पत्तिस्तत्र चाद्यते।
ः्थ्य;ह पुनरुत्पन्नेनाभिधानं चोद्यते।।
(5261 समाधानवार्तिकम्।। 5 ।।)
- सिद्धं तु प्रजनस्य विवक्षितत्वात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
प्रजनस्य विवक्षितत्वात्। प्रजनोऽत्र विवक्षितः। स च सर्वलिङ्गः।
(प्रजनशब्दस्य सर्वलिङ्गकाक्षेपेभाष्यम्)

किं पुनः कारणं समानायाम्प्रवृत्तौ--अपत्यं नपुंसकलिङ्गम्, प्रजनः सर्वलिङ्गः।।
(5262 समाधानसाधकवार्तिकम्।। 6 ।।)
- एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम् -
(भाष्यम्) एकार्थे शब्दान्यत्वाल्लिङ्गान्यत्वं दृश्यते।
तद्यथा--पुष्यः, तारका, नक्षत्रम्; गेहम्, कुटी, मठ ःथ्य;ति।
(5263 समाधानसाधकद्वितीयवार्तिकम्।। 7 ।।)
- अवयवान्यत्वाच्च -
(भाष्यम्) अवयवान्यत्वाच्च लिङ्गान्यत्वं दृश्यते।
तद्यथा--कुटी--कुटीरः, शमी--शमीरः, शुण्डा--शुण्डारः।
अवयवान्यत्वात्किल लिङ्गानय्त्वं स्यात्, किं पुनर्यत्र शब्दान्यत्वमपि?
-4-1-93- एको गोत्रे (1339)
(प्रत्ययनियमाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते?
(5264 प्रयोजनवार्तिकम्।। 1 ।।)
- उत्पादयितारं प्रत्यपत्ययोगात् तस्य च विवक्षितत्वादेकवचनं गोत्रे -
(भाष्यम्) उत्पादयितोत्पादयिताऽपत्येन युज्यते। तस्य च विवक्षितत्वात्। उत्पादयितुः स चाभिसम्बन्धो विवक्षितः।
उत्पादयितारं प्रत्यपत्ययोगात्तस्य चाभिसम्बन्धस्य विवक्षितत्वात् उत्पादयितुरुत्पादयितुरपत्याभिधानेऽनेकः प्रत्ययः प्राप्नोति। ःथ्य;ष्यते चैक एव स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येकवचनं गोत्रे।
एवमर्थमिदमुच्यते।।
(वार्तिकार्थसमर्थकभाष्यम्)
कथं पुनर्ज्ञायते--उत्पादयितोत्पादयिताऽपत्येन युज्यते ःथ्य;ति।
एवं हि दृश्यते लोके--पितामहस्योत्सङ्गे दारकमासीनं कश्चित्पृच्छति कस्यायं दारक ःथ्य;ति। स आह--देवदत्तस्य यज्ञदत्तस्य वेति।
उत्पादयितारं व्यपदिशति नात्मानम्।।
(प्रयोजनान्तरप्रस्तावकभाष्यम्)
अस्ति प्रयोजनमेतत्।
किं तर्हीति?
(5265 सूत्राक्षेवार्तिकम्।। 2 ।।)
- तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् -
(भाष्यम्) तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो वक्तव्यः। औपगवस्यापत्यमिति।
किं कारणम्?
गोत्रे नियतत्वात्। गोत्रे ह्ययं नियमः क्रियते। तेन यश्चासौ यथाजातीयकश्च गोत्रे प्रत्ययः प्राप्नोति स एकः स्यात्।
कश्च प्राप्नोति?
यः प्रत्ययान्तात्।।
(5266 सूत्राक्षेपवार्तिकम्।। 3 ।।)
- परमप्रकृतेश्चोत्पत्तिः -
(भाष्यम्) परमप्रकृतेश्चोत्पत्तिर्वक्तव्या। अयोगाद्धि न प्राप्नोति।।
(द्वितीयतृतीयपञ्चमवार्तिकाक्षेपभाष्यम्)
एतयोश्चैव परिहारः, पठिष्यति ह्याचार्यः-- यूनि चान्तर्हितेऽप्राप्तिरिति तस्य च--
यथा तत्प्रत्ययान्तम्। यथा तदेव विकारावयवप्रत्ययान्तं द्वितीयं च तृतीयं च विकारं संक्रामति, एवमिहापि तदेवापत्यप्रत्ययान्तं द्वितीयं च तृतीयं चापत्यं संक्रमिष्यति।।
(प्रत्याक्षेपभाष्यम्)
भवेत्सिद्धम्--औपगवस्यापत्यमौपगवः, यत्र स एवानन्तर ःथ्य;ष्यते स एव गोत्रे।।
ःथ्य;दं तु खलु न सिध्यति--गर्गस्यापत्यं गार्ग्य ःथ्य;ति। अत्र ह्यन्योऽनन्तर ःथ्य;ष्यते, अन्यो गोत्रे।।
(5267 सूत्राक्षेपवार्तिकम्।। 4 ।।)
- स्त्रियां चानियमः -
(भाष्यम्) स्त्रियां च युवत्यां नियमो न प्राप्नोति--औपगवी माणविका।
नियमाद्धि स्त्री पर्युदस्यते, एको गोत्रे गोत्राद्यून्यस्त्रियाम् ःथ्य;ति।।
(पक्षविशेषेण दोषोपपादकं भाष्यम्)

कतरस्मिन् पक्षेऽयं दोषः?
उत्पादयितर्यपत्ययुक्ते।।
उत्पादयितरि तावत् अपत्ययुक्ते न दोषः। उत्पादयितरि ह्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम्। तत्र नियमो नोपपद्यते। असति नियमे नैष दोषः।।
सर्वेषु तर्ह्युपत्ययुक्तेष्वयं दोषः।
सर्वेषु तर्ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्। तत्र नियम उपपन्नो भवति। सति च नियम एष दोषः।।
(उत्पादयितर्यपत्ययुक्ते दोषान्तरबोधकम्भाष्यम्)
उत्पादयितरि चापत्ययुक्ते स्त्रिया युवत्या अभिधानं न प्राप्नोति।
किं कारणम्?
गोत्रसंज्ञां युवसंज्ञा बाधते। गोत्राद् यूनि चास्त्रियां प्रत्ययो विधीयते।।
(5268 सूत्राक्षेपवार्तिकम्।। 5 ।।)
- यूनि चान्तर्हितेऽप्राप्तिः -
(भाष्यम्) यूनि चान्तर्हिते नियमस्याप्राप्तिः। गार्ग्यायणस्यापत्यमिति।।
(पक्षविशेषाश्रयेण दोषोपपादकं भाष्यम्)
कतरस्मिन् पक्षेऽयं दोषः?
सर्वेष्वपत्ययुक्तेषु।
सर्वेषु अपत्ययुक्तेषु तावन्न दोषः। सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्। तत्र नियम उपपन्नो भवति। सति नियमे नैष दोषः।।
उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः। उत्पादयितरि तर्ह्यपत्ययुक्ते परमप्रकृतेरनन्तराद् गोत्राच्चायोगान्न प्राप्नोति।।
(दोषसमुच्चायकम्भाष्यम्)
यूनश्च न प्राप्नोति।
किं कारणम्?
गोत्रादिति नियमात्।।
(द्वितीयपक्षोपपादकभाष्यम्)
सन्तु तर्हि सर्वेऽपत्ययुक्ता ःथ्य;ति।
कथं पुनर्ज्ञायते सर्वेऽपत्ययुक्ता ःथ्य;ति?
एवं हि याज्ञिकाः पठन्ति--दशपुरुषानूकं यस्य गृहे शूद्रा न विद्येरन् स सोमं पिबेदिति।
यदि च सर्वेऽपत्ययुक्ता भवन्ति, तत एतदुपपन्नं भवति।।
(पूर्वपक्षोक्तदोषनिरासभाष्यम्)
कथम्--यदुक्तम्--पितामहस्योत्सङ्गे दारकमासीनं कश्चित्पृच्छति कस्यायमिति, स आह देवदत्तस्य यज्ञदत्तस्य वेति, उत्पादयितारं व्यपदिशति नात्मानम् ःथ्य;ति।
उत्पत्तिस्तस्य विवक्षिता।
सर्वेषां न ःथ्य;दमपत्यम्, देवदत्तस्त्वस्योत्पादयितेति।।
(द्वितीयपक्षे सूत्रप्रयोजनावतरणभाष्यम्)
अथ सर्वेष्वपत्ययुक्तेषु किमनेन क्रियते एको गोत्र ःथ्य;ति?
(5239 प्रयोजनवार्तिकम्।। 6 ।।)
- सर्वेषामपत्ययोगात् प्रत्ययान्ताद् गोत्रे प्रतिषेधार्थमेको गोत्रे -
(भाष्यम्) सर्वेषामप्यपत्ययोगात् प्रत्ययान्ताद्गोत्रे प्रतिषेधार्थमेको गोत्र ःथ्य;त्युच्यते।।
(सूत्रप्रयोजनाभावोपपादकभाष्यम्)
अस्ति प्रयोजनमेतत्।
किं तर्हीति?
तत्र न ज्ञायते क एको भवति, यो वा परमप्रकृतेर्यो वाऽनन्तरादिति।।
(5270 नियामकत्वाभावबोधकवार्तिकम्।। 7 ।।)
- नियमानुपपत्तिश्च -
(भाष्यम्) नियमश्च नोपपद्यते।
किं कारणम्?
(5271 नियामकत्वाभावसाधकवार्तिकम्।। 8 ।।)
- न ह्येकस्मिन्नपत्येऽनेकप्रत्ययप्राप्तिः -
(भाष्यम्) न ह्येकस्मिन्नपत्येऽनेकः प्रत्ययः प्राप्नोति।
किं तर्हि?

(5272 नियामकत्वाभावे दोषसाधकवार्तिकम्।। 9 ।।)
- अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तरप्राप्तिः -
(भाष्यम्) अपत्यान्तरेऽपत्यान्तरे शब्दान्तराच्छब्दान्तरात् प्रत्ययान्तरम्प्रत्ययान्तरं प्राप्नोति। फगन्तादिञ्, ःथ्य;ञन्तात्फगिति फगिञोर्दाशतयी प्रत्ययमाला प्राप्नोति।।
(पक्षविशेषाश्रयेण दोषोपपादकभाष्यम्)
कतरस्मिन् पक्षेऽयं दोषः?
सर्वेष्वपत्ययुक्तेषु।
सर्वेष्वपत्ययुक्तेषु तावन्न दोषः। सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्। तत्र नियम उपपन्नो भवति। सति नियमे नैष दोषः।।
उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः। उत्पादयितरि तर्ह्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम्। तत्र नियमो नोपपद्यते। असति नियमे एष दोषः।।
(दोषनिरासभाष्यम्)
उत्पादयितरि चापत्ययुक्ते नायं दोषः।
कथम्?
(दोषनिरासे श्लोकभाष्यम्)
अपत्यं समुदायश्चे-
न्नियमोऽत्र समीक्षितः।
तस्मिन्सुबहवः प्राप्ता
नियमोऽस्य भविष्यति।।
अपत्यमित्यनेन सर्वमुपग्वादिपितृकमपत्यं समीक्षितम्। तस्मिंस्तु बहवः प्रत्ययाः प्राप्ताः। नियमोऽस्य भविष्यति--एको गोत्र ःथ्य;ति।
(चतुर्थवार्तिकोक्तदोषनिरासभाष्यम्)
यदप्युच्यते स्त्रियां चानियमः ःथ्य;ति।
एवं वक्ष्यामि--गौत्राद्यूनि प्रत्ययो भवति, स्त्रियां नेति।।
(प्रत्याक्षेपभाष्यम्)
एवमपि स्त्रिया युवत्या अभिधानं न प्राप्नोति।।
(प्रत्याक्षेपसमाधानभाष्यम्)
एवं तर्हि--एवं वक्ष्यामि--गौत्राद्यूनि प्रत्ययो भवति, ततः--स्त्रियां लुक्।।
(पक्षद्वयदोषसंकलनभाष्यम्)
ःथ्य;होत्पादयितर्यपत्ययुक्ते प्रत्ययान्तात्प्रतिषेधो वक्तव्यः, परमप्रकृतेश्चोत्पत्तिर्वक्तव्या।
सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्यः।।
(5273 दोषवारणवार्तिकम्।। 10 ।।)
(भाष्यम्) तस्मात्प्रतिषेधो वक्तव्यः।।
(5274 प्रकारान्तरेण दोषवारणे द्वितीयवार्तिकम्।। 11 ।।)
- संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः -
(भाष्यम्) अथवा संज्ञाकारिभ्यः प्रत्ययोत्पत्तिर्वक्तव्या।।
(प्रत्याक्षेपसमाधाने दोषभाष्यम्)
एवमप्यौपगवी माणविका, अनुपसर्जनादितीकारो न प्राप्नोति। मा भूदेवम्--अण्योऽनुपसर्जनमिति।
अणन्तादनुपसर्जनादित्येवं भविष्यति।
नैवं शक्यम्।
ःथ्य;ह हि दोषः स्यात्--काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणी। अणन्तादितीकारः प्रसज्येत।
नैष दोषः।
अध्येत्र्यामभिधेयायामण ःथ्य;कारेण भवितव्यम्।
यश्चात्राध्येत्र्यामभिधेयायामण्, लुप्तः सः। यश्च श्रूयते, उत्पन्नस्तस्मादीकार ःथ्य;ति कृत्वा पुनर्न भविष्यति।।
ःथ्य;ह तर्हि--औपगवी माणविका भार्याऽस्य औपगवीभार्यः, जातिलक्षणः पुंवद्भावप्रतिषेधो न प्राप्नोति।
मा भूदेवम्, वृद्धिनिमित्तस्य ःथ्य;त्येवं भविष्यति। यस्तर्हि न वृद्धिनिमित्तम्--ग्लुचुकायनी माणविका भार्याऽस्य ग्लुचुकायनीभार्यः।।
(सिद्धान्तभाष्यम्)
तस्मात्स्त्रिया युवत्या युवसंज्ञैव पर्युदसितव्या। तस्याञ्च पर्युदस्तायां गोत्रप्रत्ययान्तमेतद्यूनि वर्तते।।
(आक्षेपभाष्यम्)
यदि संज्ञाकारिभ्यः प्रत्ययोत्पत्तिरुच्यते, कथं गार्ग्यायणः, वात्स्यायन ःथ्य;ति?
(5275 समाधानवार्तिकम्।। 12 ।।)

- गोत्राद्यूनीति च -
(भाष्यम्) गोत्राद्यूनीत्येतद्वक्तव्यम्।।
(5276 दोषवारणद्वितीयवार्तिकोपष्टम्भकवार्तिकम्।। 13 ।।)
- तच्च जात्यादिनिवृत्त्यर्थम् -
(भाष्यम्) तच्चावश्यं संज्ञाकारिग्रहणं कर्तव्यम्।
किं प्रयोजनम्?
जात्यादिनिवृत्त्यर्थम्। जात्यादिभ्य उत्पत्तिर्मा भूदिति।।
(उपष्टम्भसाधकभाष्यम्)
जातिर्न वर्तते, संख्या न वर्तते, सर्वनाम न वर्तते।
जातिर्न वर्तते--काकस्यापत्यम्, कुररस्यापत्यमिति।
संख्या न वर्तते--नवानामपत्यम्, दशानामपत्यमिति।
सर्वनाम न वर्तते--सर्वेषामपत्यम्, विश्वेषामपत्यमिति।।
(संज्ञाकारिग्रहणप्रत्याख्यानभाष्यम्)
यत्तावदुच्यते--
जातिर्न वर्तते--काकस्यापत्यम्, कुररस्यापत्यमिति।
येनैव हेतुना एकः काकस्तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यति।।
यदप्युच्यते--
संख्या न वर्तते--नवानामपत्यम्, दशानामपत्यमिति।
संख्येयमपेक्ष्य संख्या प्रवर्तते। तत् सापेक्षम्। सापेक्षं चासमर्थं भवतीति--असामर्थ्यान्न भविष्यति।।
यदप्युच्यते--
सर्वनाम न वर्तते--सर्वेषामपत्यम्, विश्वेषामपत्यमिति।
निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते। तत्सापेक्षम्। सापेक्षमसमर्थं भवतीति--असमर्थत्वान्न भविष्यति।।
(निराकरणप्रतीकारभाष्यम्)
यत्तावदुच्यते--
येनैव हेतुना एकः काकस्तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यतीति।
नैतद्विवदामहे--काको न काक ःथ्य;ति।
किं तर्हि?
येनैव हेतुना एतद्वाक्यं भवति काकस्यापत्यम्, कुररस्यापत्यमिति, तेनैव हेतुना वृत्तिरपि प्राप्नोति।।
यदप्युच्यते--
संख्येयमपेक्ष्य संख्या प्रवर्तते तत्सापेक्षम्, सापेक्षं चासमर्थं भवतीति।
भवति वै कस्य चिदर्थात् प्रकरणाद्वा अपेक्ष्यं निर्ज्ञातम्, यदा निर्ज्ञातम्, तदा वृत्तिः प्राप्नोति।
यदप्युच्यते--
सर्वेषामपत्यम्, विश्वेषामपत्यमिति निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते, तत्सापेक्षम्, सापेक्षं चासमर्थं भवतीति।
भवति वै कस्य चिदर्थात् प्रकरणाद्वा अपेक्ष्यं निर्ज्ञातम्, यदा निर्ज्ञातम्, तदा वृत्तिः प्राप्नोति।।
(प्रतीकारपरिहारभाष्यम्)
एवं तर्हि--अनभिधानाज्जात्यादिभ्य उत्पत्तिर्न भविष्यति।
तच्चावश्यमनभिधानमाश्रयितव्यम्।
क्रियमाणेऽपि हि संज्ञाकारिग्रहणे यत्र जात्यादिभ्य उत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं भवति, भवति तत्र उत्पत्तिः। तद्यथा--
कुतश्चरति मायूरिः
केन कापिञ्जलिः कृशः।
आहेयेन च दष्टस्य
पाङ्चिः सुतसमो मतः।।
तादायनिः, यादायनिः, कैमायनिरिति।।
(सिद्धान्तभाष्यम्)
तदेतदनन्यार्थं संज्ञाकारिग्रहणं कर्तव्यम्, प्रत्ययान्ताद्वा प्रतिषेधो वक्तव्यः।
उभयं न कर्तव्यम्।
गोत्रग्रहणं न करिष्यते। एकोऽपत्ये प्रत्ययो भवतीत्येव।।
यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्यान्नैकोऽपत्ये प्रत्ययः कृतः स्यात्।।
यदि गोत्रग्रहणं न क्रियते, कथं गार्ग्यायणः, वात्स्यायन ःथ्य;ति?

वक्तव्यमेवैतत्--गोत्राद्यून्यस्त्रियामिति।।
अथापि गोत्रग्रहणं क्रियते।
एवमपि न दोषः। नैकग्रहणेन प्रत्ययोऽभिसम्बध्यते--एको गोत्रे प्रत्ययो भवतीति।
किं तर्हि?
प्रकृतिरभिसम्बध्यते। एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयतीति।
यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्याद्, नैका प्रकृतिर्गौत्रे प्रत्ययमुत्पादयेत्।
अथ वा अस्थानेऽयं यत्नः क्रियते। न हीदं लोकाद्भिद्यते। लोके हि संख्यां प्रवर्तमानामुपाचरन्ति एक ःथ्य;ति वा प्रथम ःथ्य;ति वा।
यावद् ब्रूयात् प्रथमो गोत्रे प्रत्ययमुत्पादयतीति तावदेको गोत्रे ःथ्य;ति।।
ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।।
-4-1-95- अत ःथ्य;ञ् (1341)
(ःथ्य;ञ्प्रत्ययाधिकरणम्)
(5277 सिद्धान्तसाधकवार्तिकम्।। 1 ।।)
- ःथ्य;ञौ वृद्धावृद्धाभ्यां फिञ्फिनौ विप्रतिषेधेन -
(भाष्यम्) ःथ्य;ञो वृद्धावृद्धाभ्यां फिञ्फिनौ भवतो विप्रतिषेधेन।
ःथ्य;ञोऽवकाशः--दाक्षिः, प्लाक्षिः।
फिञोऽवकाशः--तादायनिः, यादायनिः।
ःथ्य;होभयं प्राप्नोति--तापसायनिः, सांमितिकायनिः।
फिनोऽवकाशः--त्वचायनिः, स्रुचायनिः।
ःथ्य;ञः स एव।
ःथ्य;होभयं प्राप्नोति--ग्लुचुकायनिः, म्लुचुकायनिः।
फिञ्फिनौ भवतो विप्रतिषेधेन।।
(आक्षेपभाष्यम्)
ःथ्य;ह कस्मान्न भवति--दाक्षिः, प्लाक्षिः।।
(समाधानभाष्यम्)
बहुलवचनात्।।
(5278 द्वितीयं सिद्धान्तसाधकवार्तिकम्।। 2 ।।)
- तद्राजश्च -
(भाष्यम्) तद्राजश्चोञो भवति विप्रतिषेधेन। तद्राजस्यावकाशः--ऐक्ष्वाकः।
ःथ्य;ञः स एव।
ःथ्य;होभयं प्राप्नोति---पाञ्चालः, वैदेहः, वैदर्भः,
तद्राजो भवति विप्रतिषेधेन।।
-4-1-96- बाह्वादिभ्यश्च (1342)
(ःथ्य;ञ्प्रत्ययाधिकरणम्)
(5279 सिद्धान्तबोधकवार्तिकम्।। 1 ।।)
- बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः -
(भाष्यम्) बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधो वक्तव्यः।
बाहोरपत्यं बाहविः। यो हि बाहुर्नाम बाहवस्तस्य भवति।।
नडस्यापत्यं नाडायनः यो हि नडो नाम नाडिस्तस्य भवति।।
(5280 सिद्धान्तबोधकवार्तिकम्।। 2 ।।)
- सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधः -
(भाष्यम्) सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधो वक्तव्यः। श्वशुरस्यापत्यं श्वशुर्यः। यो हि श्वशुरो नाम श्वाशुरिस्तस्य भवति।।
(वार्तिकांशप्रत्याख्यानसाधकभाष्यम्)
प्रत्ययग्रहणेन नार्थः। सम्बन्धिशब्दानां तत्सदृशात्प्रतिषेध ःथ्य;त्येव।
ःथ्य;दमपि सिद्धं भवति--मातृपितृभ्यां स्वसा (8।3।84) मातृष्वसा, पितृष्वसा। अन्या मातृस्वसेति।।
-4-1-97- सुधातुरकङ्च (1343)
(5281 एकदेशिवार्तिकम्।। 1 ।।)
- सुधातृव्यासयोः -
(भाष्यम्) सुधातृव्यासयोरिति वक्तव्यम्। सौधातकिः, वैयासकिः शुकः।

अत्यल्पमिदमुच्यते।
सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्। सौधातकिः, वैयासकिः शुकः, वारुडकिः, नैषादकिः, चाण्डालकिः, बैम्बकिः।।
(सिद्धान्तभाष्यम्)
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।
प्रकृत्यन्तराण्येवैतानि।।
-4-1-98- गोत्रे कुञ्जादिभ्यश्च्फञ् (1344)
(च्फञोऽधिकरणम्)
(प्रत्ययानुबन्धानाम्फलदर्शकम्भाष्यम्)
किमर्थश्चकारः?
स्वरार्थः। चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।।
अथ ञकारः किमर्थः?
ञकारो वृद्ध्यर्थः। ञ्णितीति वृद्धिर्यथा स्यात्।।
एकेन ककारेणोभयं सिद्धम्।
अवश्यमत्र विशेषणार्थोऽन्योऽनुबन्धः कर्तव्यः।
क्व विशेषणार्थेनार्थः? व्रातच्फञोरस्त्रियाम् (1|3|113) ःथ्य;ति। फक ःथ्य;ति ह्युच्यमान् नाडायनः, अत्रापि प्रसज्येत।
अथापि फञ ःथ्य;त्युच्यते। एवमप्याश्वायनः, अत्रापि प्रसज्येत।
तस्माच्चकार एव कर्तव्यः, अन्तोदात्तत्वमपि यथा स्यात्। चकारे चेदानीं विशेषणार्थे क्रियमाणेऽवश्यं वृद्ध्यर्थोऽन्योऽनुबन्धः कर्तव्यः। स च ञकार एव कर्तव्यः, सूत्रभेदो मा भूदिति।।
(स्वरार्थानुबन्धाक्षेपभाष्यम्)
अथ क्रियमाणेऽपि वै चकारे--अन्तोदात्तत्वं न प्राप्नोति।
किं कारणम्?
परत्वात् ञ्निति ःथ्य;त्याद्युदात्तत्वं प्राप्नोति।
चित्करणसामर्थ्यादन्तोदात्तत्वम्भविष्यति।
ञित्करणसामर्थ्यादाद्युदात्तत्वम्प्राप्नोति।
अस्त्यन्यञ्ञित्करणे प्रयोजनम्।
किम्?
वृद्ध्यर्थो ञकारः।
चित्करणेऽपि तर्हि अन्यत्प्रयोजनम्।
किम्?
विशेषणार्थश्चकारः।
शक्योऽत्र विशेषणार्थोऽन्योऽनुबन्ध आसङ्क्तुम्, तत्र चकारानुरोधादन्तोदात्तत्वम्भवति।
वृद्ध्यर्थोऽपि तर्हि अन्यः शक्योऽनुबन्ध आसङ्क्तुम्। तत्र ञकारानुरोधादाद्युदात्तत्वम्प्राप्नोति।।
(समाधानभाष्यम्)
एवं तर्हि स्वरे योगविभागः करिष्यते। ःथ्य;दमस्ति--चितः (6|1|163)--चितोऽन्त उदात्तो भवतीति। ततः--तद्धितस्य--तद्धितस्य च चितोऽन्तउदात्तो भवतीति।
किमर्थमिदम्?
परत्वात् ञ्निति ःथ्य;त्याद्युदात्तत्वं प्राप्नोति, तद्बाधनार्थम्।
ततः--कितः--कितस्तद्धितस्यान्त उदात्तो भवतीति।।
(प्रत्याक्षेपभाष्यम्)
किं पुनरत्र स्वरार्थेन चकारेणानुबन्धेन? यावताच्फञन्ताञ्ञ्यो विधीयते, तत्र ञ्नितीत्याद्युदात्तत्वेन भवितव्यम्।।
(समाधानभाष्यम्)
नैतदस्ति।
बहुषु लोपे कृते अन्तोदात्तत्वं यथा स्यात्--कौञ्जायना ःथ्य;ति।
(प्राचीनवैय्याकरणमतखण्डनभाष्यम्)
ःथ्य;ह केचित्--द्व्येकयोः फ्यञं विदधति, बहुषु च फकम्, केचित्--च्फञन्ताञ्ञ्यम्।
किमत्र न्याय्यम्?
ञ्यवचनमेव न्याय्यम्। द्व्येकयोर्हि फ्यञि सति बहुषु च फकि कौञ्जायनानामपत्यं माणवकः--कौञ्जायन्यः, कौञ्जायन्तौ, केन यशब्दः श्रूयेत? द्व्येकयोरित्युच्यमानो न प्राप्नोति।

ः थ्य;ह कौञ्ञ्जायन्यस्यापत्यं बहवो माणवकाः कौञ्ञ्जायनाः। केन यशब्दो न श्रूयेत। द्व्येकयोरित्युच्यमानः प्राप्नोति।।
(पाणिनिमतपुरस्करणभाष्यम्)
तदेतत्कथं कृत्वा ञ्ञ्यवचनं ज्यायो भवति?
यदि तन्नास्ति--आपत्यं वा गोत्रम्, परमप्रकृतेश्चापत्यः, आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः, स चास्त्रियाम्, एको गोत्रग्रहणानर्थक्यं च, बहुवचनलोपिषु च सिद्धमिति।।
(प्राचीनवैय्याकरणमतखण्डननिराकरणभाष्यम्)
सति हि तस्मिन्--द्व्येकयोरपि फ्यञ्ञि सति बहुषु च फकि सति न दोषो भवति।।
तत्र कौञ्ञ्जायनानामपत्यं माणवक ःथ्य;ति विगृह्य कुञ्ञ्जशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति--कौञ्ञ्जायन्यः, कौञ्ञ्जायन्यौ।
कौञ्ञ्जायन्यस्यापत्यं माणवका ःथ्य;ति विगृह्य कुञ्ञ्जशब्दाद्बहुषूत्पत्तिर्भविष्यति--कौञ्ञ्जायना ःथ्य;ति।।
-4-1-104- अनृष्यानन्तर्ये बिदादिभ्योऽञ्ञ् (1350)
(अञ्ञोऽधिकरणम्)
(आक्षेपभाष्यम्)
अनृष्यानन्तर्य ःथ्य;त्युच्यते तत्रेदं न सिध्यति-- कौशिको विश्वामित्र ःथ्य;ति।
किं कारणम्?
विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति।
तत्रभवानृषिः संपन्नः।
स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति।
तत्रभवान् गाधिरपि ऋषिः संपन्नः।
स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति।
तत्रभवान् कुशिकोऽपि ऋषिः संपन्नः।
तदेतदृष्यानन्तर्यं भवति। तत्रानृष्यानन्तर्य ःथ्य;ति प्रतिषेधः प्राप्नोति।।
(एकदेशिसमाधानभाष्यम्)
नैष दोषः।
नैवं विज्ञायते--ऋष्यानन्तर्ये न भवतीति।
कथं तर्हि?
ऋषावनन्तरे नेति।।
(प्रत्याक्षेपभाष्यम्)
यद्येवम्--
(5282 प्रत्याक्षेपवार्तिकम्।। 1 ।।)
- अनृष्यानन्तर्यवचनमनर्थकं संज्ञागोत्राधिकारात् -
(भाष्यम्) अनृष्यानन्तर्यवचनमनर्थम्।
किं कारणम्?
संज्ञागोत्राधिकारात्। संज्ञागोत्र ःथ्य;ति वर्तते, कः प्रसङ्गो यदनन्तरे स्यात्।
नैव प्राप्नोति, नार्थः प्रतिषेधेन।।
(सिद्धान्तभाष्यम्)
एवं तर्हि सिद्धे सति यदनृष्टानन्तर्य ःथ्य;ति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो बिदादिषु येऽनृषयः पठ्यन्ते तेषामनन्तरेऽपि वृत्तिर्भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्।
नानान्द्रः, पौत्रः, दौहित्र ःथ्य;त्येतत् सिद्धम्भवति।।
-4-1-108- वतण्डाच्च (1354)
(यञ्ञोऽधिकरणम्)
(सूत्रफलप्रदर्शकभाष्यम्)
किमर्थमिदमुच्यते?
न गर्गादिभ्यो यञ्ञ् (4।1।105) ःथ्य;त्येव सिद्धम्।
लुक् स्त्रियाम् (109) ःथ्य;ति वक्ष्यामीति।।
(आक्षेपभाष्यम्)
यदि पुनस्तत्रैवोच्येत।।
(समाधानभाष्यम्)
नैवं शक्यम्, आङ्गिरसग्रहणं हि विच्छिद्येत।।
-4-1-112- शिवादिभ्योऽण् (1358)

(अणोऽधिकरणम्)
(अण्प्रयोजनभाष्यम्)
किमर्थं शिवादिभ्योऽण् विधीयते, न यथाविहितमित्येवोच्येत?
शिवादिभ्यो यथा विहितमितीयत्युच्यमाने--ःथ्य;ञ्ञ् प्रसज्येत। ःथ्य;ञ्ञ्--अतो यथाविहितः।
पुनर्वचनमिदानीं किमर्थं स्यात्?
ये तस्य बाधकास्तद्बाधनार्थम्।।
(अण्प्रयोजनखण्डनभाष्यम्)
स वै नास्ति यस्तं बाधेत, तत्रारम्भसार्मथ्यात्--यो विहितः, न च प्राप्नोति, स भविष्यति।
कश्चासौ?
अणेव।।
(अण्प्रयोजनभाष्यम्)
उत्तरार्थमेव तर्हि। अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः (4।1।113) ःथ्य;ति। अत्र यथाविहितमितीयत्युच्यमाने--ढक् प्रसज्येत, ढक्--अतो यथाविहितः।
पुनर्वचनमिदानीं किमर्थं स्यात्?
ये तस्य बाधकास्तद्बाधनार्थम्।।
(अण्प्रयोजनखण्डनभाष्यम्)
स वै नास्ति यस्तं बाधेत, तत्रारम्भसार्मथ्याद्यो विहितः, न च प्राप्नोति, स भविष्यति।
कः पुनरसौ?
अणेव।।
(अण्प्रयोजनभाष्यम्)
उत्तरार्थमेव हि तर्हि। ऋष्यन्धकवृष्णिकुरुभ्यश्च (114) ःथ्य;ति। अत्र यथाविहितमितीयत्युच्यमाने-- ःथ्य;ञ्ञ्प्रसज्येत।
ःथ्य;ञ्ञ्-अतो यथाविहितः।
पुनर्वचनमिदानीं किमर्थं स्यात्?
ये तस्य बाधकास्तद्बाधनार्थम्।।
(खण्डनभाष्यम्)
स वै नास्ति यस्तं बाधेत, तत्रारम्भसार्मथ्याद्यो विहितः, न प्राप्नोति, स भविष्यति।
कश्चासौ?
अणेव।।
(अण्प्रयोजनभाष्यम्)
उत्तरार्थमेव तर्हि। मातुरुत्संख्यासंभद्रपूर्वायाः, कन्यायाः कनीन च (115,116) ःथ्य;ति। अत्र यथाविहितमितीयत्युच्यमाने-ढक् प्रसज्येत। ढक्--अतो यथाविहितः।
पुनर्वचनमिदानीं किमर्थं स्यात्?
मातुरुकारं वक्ष्यामि, कन्यायाः कनीनभावमिति।।
(आक्षेपभाष्यम्)
यद्येतावत्प्रयोजनं स्यात्--तत्रैवायम्ब्रूयात्--स्त्रीभयो ढक् (120) मातुरुकारः, कन्यायाश्च कनीन ःथ्य;ति।।
(सिद्धान्तभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--अयमृष्टिषेणशब्दः शिवादिषु पठ्यते। अत्र यथाविहितमितीयत्युच्यमाने--ःथ्य;ञ्ञ्प्रसज्येत। तं परत्वात्सेनान्ताण्ण्यो बाधेत। तत्रारम्भसार्मथ्यात्--ःथ्य;ञ्ञ् प्रसज्येत। पुनरण्ग्रहणादणेव भवति।।
-4-1-114- ऋष्यन्धकवृष्णिकुरुभ्यश्च (1360)
(अणोऽधिकरणम्)
(5283 पूर्वपक्षवार्तिकम्।। 1 ।।)
- ऋषिस्त्र्यणो ढग्ढ्रकौ विप्रतिषेधेन -
(भाष्यम्) ऋष्यणस्त्र्यणश्च ढग्ढ्रकौ भवतो विप्रतिषेधेन।
ऋष्यणोऽवकाशः--वासिष्ठः, वैश्वामित्रः। ढकोऽवकाशः--दुलि--दौलेयः बलि--बालेयः।
ःथ्य;होभयं प्राप्नोति--अत्रि--आत्रेयः।
स्त्र्यणोऽवकाशः--मकन्दिका--माकन्दिकः। ढ्रकोऽवकाशः--काणिकेरः।
ःथ्य;होभयं प्राप्नोति--पौणिकेरः, मौद्गलिकेरः।
ढग्ढ्रकौ भवतो विप्रतिषेधेन।।
(5284 पूर्वपक्षवार्तिकम्।। 2 ।।)

- द्वयचो ढको ढ्रग्ढञ्ञौ -
(भाष्यम्) द्व्यचो ढग्भवतीत्येतस्माड्ढग्ढञ्ञौ भवतो विप्रतिषेधेन। द्व्यचो ढग्भवतीत्यस्यावकाशः--दात्तेयः, गौप्तेयः। ढ्रकः स एव। ः्थ्य;होभयं प्राप्नोति--नटी--नाटेरः, दासी--दासेरः।
ढञ्ञोऽवकाशः--कामण्डलेयः, हैरण्यबाहेयः । माद्रवाहेययः । ढकः स एव। ः्थ्य;होभयं प्राप्नोति--जम्बू--जाम्बेयः। ढ्रग्ढञ्ञौ भवतो विप्रतिषेधेन।।
(5285 पूर्वपक्षाक्षेपवार्तिकम्।। 3 ।।)
- न र्वष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् -
(भाष्यम्) न वा एष युक्तो विप्रतिषेधः, योऽयमृष्यणो ढकश्च।
किं कारणम्?
ऋष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम्। सिद्धोऽत्राणुत्सर्गेणैव, तस्य पुनर्वचने एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्। स यथैव तदपवादमिञ्ञं बाधते, एवं ढकमपि बाधेत।।
(5286 एकदेशिसमाधानवार्तिकम्।। 4 ।।)
- तस्मादृषिभ्योऽण्विधानेऽञ्यादिप्रतिषेधः -
(भाष्यम्) तस्मादृषिभ्योऽण्विधानेऽञ्यादिभ्यः प्रतिषेधो वक्तव्यः।।
(समाधानान्यथासिद्धिभाष्यम्)
न वक्तव्यः।
मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते ः्थ्य;त्येवमृष्यण्--ः्थ्य;ञ्ञं तदपवादं बाधिष्यते, ढकं न बाधिष्यते।।
(पूर्वपक्षाक्षेपभाष्यम्)
अयं चाप्ययुक्तो विप्रतिषेधो योऽयं ढकः--ढ्रग्ढञ्ञोश्च।
किं कारणम्?।।
(5287 आक्षेपवार्तिकम्।। 5 ।।)
- ढकः पुनर्वचनमन्यनिवृत्त्यर्थम् -
(भाष्यम्) सिद्धोऽत्र ढक् स्त्रीभ्यो ढक् (4।1।120) ः्थ्य;त्येव। तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्। स यथैव तदवादन्तन्नामिकाणं बाधते, एवं ढ्रग्ढञ्ञावपि बाधेत।।
(5288 एकदेशिसमाधानवार्तिकम्।। 6 ।।)
- तस्मात्तन्नामिकाण्यद्व्यचः -
(भाष्यम्) तस्मात्तन्नामिकाणि--अद्व्यच ः्थ्य;ति वक्तव्यम्।
(समाधानान्यथासिद्धिभाष्यम्)
न वक्तव्यम्।
मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते ः्थ्य;त्येवमयं ढक् तन्नामिकाणं तदपवादं बाधिष्यते, ढ्रग्ढञ्ञौ न बाधिष्यते।।
(5289 सिद्धान्तसामान्यवार्तिकम् ।। 8 ।।)
- ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यः -
(भाष्यम्) ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यो भवति विप्रतिषेधेन।
ऋष्यणोऽवकाशः--वासिष्ठः, वैश्वामित्रः।
ण्यस्यावकाशः--पारिषेण्यः, वारिषेण्यः।
जातसेनो नाम ऋषिस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन। जातसेन्यः।।
अन्धकाणोऽवकाशः--श्वाफल्कः, चैत्रकः, रान्धसः।
ण्यस्य स एव।
उग्रसेनो नामान्धकस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन। औग्रसेन्यः।।
वृष्ण्यणोऽवकाशः--वासुदेवः, बालदेवः।
ण्यस्य स एव।
विश्वक्सेनो नाम वृष्णिस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन। वैष्वक्सेन्यः।।
कुर्वणोऽवकाशः--नाकुलः, साहदेवः।
ण्यस्य स एव।
भीमसेनो नाम कुरुस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन। भैमसेन्यः।।
(सामान्यवार्तिकस्य विशेषे संकोचकभाष्यम्)
सेनान्ताण्ण्यो भवति विप्रतिषेधेन जातोग्रविष्वग्भीमेभ्य ः्थ्य;ति वक्तव्यम्।।
-4-1-115- मातुरुत्संख्यासम्भद्रपूर्वायाः (1361)
(स्त्रीलिंगनिर्देशसमर्थकभाष्यम्)

किमर्थं स्त्रीलिङ्गेन निर्देशः क्रियते, न संख्यासंभद्रपूर्वस्येत्येवमुच्यते?
स्त्रीलिङ्गो यो मातृशब्दस्तस्माद्यथा स्यात्।
ाःथ्य;ह मा भूत्--संमिमीते संमाता--संमातुरपत्यं सांमात्र ाःथ्य;ति।।
-4-1-116- कन्यायाः कनीन च (1362)
(आक्षेपभाष्यम्)
ाःथ्य;दं विप्रतिषिद्धम्।
को विप्रतिषेधः?
अपत्यमिति वर्तते। यदि च कन्या, नापत्यम्।
अथापत्यम्, न कन्या।
कन्या चापत्यं चेति विप्रतिषिद्धम्।।
(समाधानभाष्यम्)
नैतद्विप्रतिषिद्धम्।
कथम्?
कन्याशब्दोऽयं पुंसाऽभिसम्बन्धपूर्वके संप्रयोगे निवर्तते।
या चेदानीं प्रागभिसम्बन्धात् पुंसा सह संप्रयोगं गच्छति तस्यां कन्याशब्दो वर्तत एव।
कन्यायाः कन्योक्तायाः कन्याभिमतायाः सुदर्शनाया यदपत्यं स कानीन ाःथ्य;ति।।
-4-1-120- स्त्रीभ्यो ढक् (1366)
(ढगधिकरणम्)
(स्त्रीशब्दार्थप्रत्यायकभाष्यम्)
ाःथ्य;दं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते--स्त्रीग्रहणे स्त्रीप्रत्ययग्रहणं वा स्यात्, स्त्रीशब्दग्रहणं वा, स्त्र्यर्थग्रहणं वा।।
किं चातः?
यदि स्त्रीशब्दग्रहणमर्थग्रहणं वा--ाःथ्य;डबिड्--ऐडबिडः। पृथ्--पार्थः। उशिक्--औशिज। दरद्--दारदः।
अत्रापि प्राप्नोति।
अथ प्रत्ययग्रहणम्--लैखाभ्रेयः, वैमात्रेयः, ाःथ्य;ति न सिध्यति।।
अस्तु प्रत्ययग्रहणम्।
कथं लैखाभ्रेयः, वैमात्रेय ाःथ्य;ति?
शुभ्रादिषु पाठः करिष्यते।।
(अर्थविशेषे प्रत्ययबोधकभाष्यवार्तिकम्)
वडवाया वृषे वाच्ये।
वडवाया वृषे वाच्ये ढग् वक्तव्यः--वडवाया वृषो वाडवेयः।।
(ढक्बाधकप्रत्ययबोधकभाष्यवार्तिकम्)
अण् क्रुञ्चाकोकिलात्स्मृतः।
क्रौञ्चः, कौकिल ाःथ्य;ति।।
(ढक्बाधकप्रत्ययबोधकभाष्यवार्तिकम्)
आरक् पुंसि ततोऽन्यत्र।
ततोऽन्यत्र आरक्पुंसि वक्तव्यः। मूषिकाया अपत्यं पुमान् मौषिकारः, मृग्याः पुमान्मार्गारः।।
(ढ्रकि पुमर्थविधायकभाष्यवार्तिकम्)
गोधाया ढ्रक्विधौ स्मृतः।।
गोधायाः पुमान् गौधेरः।।
-4-1-128- चटकाया ऐरक् (1374)
(ऐरगधिकरणम्)
(5290 सूत्रे स्त्रीलिंगनिर्देशस्याविवक्षितत्वबोधकवार्तिकम्।। 1 ।।)
- चटकायाः पुँल्लिङ्गनिर्देशः -
(भाष्यम्) चटकायाः पुँल्लिङ्गेन निर्देशः कर्तव्यः। ाःथ्य;हापि यथा स्यात्-चटकस्यापत्यं चाटकैरः।
यदि पुँल्लिङ्गेन निर्देशः क्रियते, चटकाया अपत्यं चाटकैर ाःथ्य;ति न सिध्यति।
प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवं भविष्यति।।
(5291 वार्तिकम्।। 2 ।।)
- स्त्रियामपत्ये लुग्वक्तव्यः -
(भाष्यम्) चटकाया आपत्यं चटका।।

-4-1-130- आरगुदीचाम् (1376)
(5292 आक्षेपवार्तिकम्।। 1 ।।)
- आरग्वचनमनर्थकं रका सिद्धत्वात् -
(भाष्यम्) आरग्वचनमनर्थकम्।
किं कारणम्?
रका सिद्धत्वात्। गोधा--आकारान्ता रक् च प्रत्ययः।।
(समाधानभाष्यम्)
एवं तर्हि सिद्धे सति यदारकं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?
मौण्डारः, जाण्डारः, पाण्डार--ः्थ्य;त्येतत्सिद्धं भवति।।
-4-1-131- क्षुद्राभ्यो वा (1377)
(क्षुद्राशब्दार्थबोधकभाष्यम्)
क्षुद्राभ्य ः्थ्य;त्युच्यते,
का क्षुद्रा नाम्?
अनियतपुंस्का, अङ्गहीना वा।।
-4-1-133- ढकि लोपः (1379)
(ढक्समर्थकभाष्यम्)
केन विहिते पितृष्वसुः-ढकि लोप ः्थ्य;त्युच्यते? एतदेव ज्ञापयति पितृष्वसुर्ढगिति, यदयं ढकि लोपं शास्ति।।
-4-1-134- मातृष्वसुश्च (1380)
(छण्साधकभाष्यम्)
ढकि लोप ः्थ्य;त्युच्यते तत्रेदं न सिध्यति--मातृष्वस्रीयः।
नैष दोषः।
एवं वक्ष्यामि--पितृष्वसुश्छण्, ढकि लोपः। ततो मातृष्वसुश्च।
पितृष्वसुर्यदुक्तं तन्मातृष्वसुर्भवतीति।
किं पुनस्तत्?
छण् ढकि लोपश्च।।
-4-1-137- राजश्वशुराद्यत् (1383)
(यतोऽधिकरणम्)
(5293 अर्थविशेषे प्रत्ययनियामकवार्तिकम्।। 1 ।।)
- राज्ञोऽपत्ये जातिग्रहणम् -
(भाष्यम्) राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम्। राजन्यो नाम जातिः।
क्व मा भूत्?
राजनः ः्थ्य;ति।।
-4-1-145- व्यन्सपत्ने (1384)
(व्यन्प्रत्ययाधिकरणम्)
(5294 आक्षेपवार्तिकम्।। 1 ।।)
- व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् -
(भाष्यम्) व्यन्वचनमनर्थकम्।
किं कारणम्?
प्रत्ययार्थाभावात्।
किमिदं प्रत्ययार्थाभावादिति?
अपत्यार्थाभावात्। अपत्यमिति वर्तते, अनपत्ये चापि सपत्ने भ्रातृव्यशब्दो वर्तते--पाप्मना भ्रातव्येणेति।।
(समाधानभाष्यम्)
अस्तु तावद्यदपत्यं सपत्नश्च तत्र--भ्रातृव्य ः्थ्य;ति।
कथं पाप्मना भ्रातृव्येणेति?
उपमानात्सिद्धम्, भ्रातृव्य ः्थ्य;व भ्रातृव्य ः्थ्य;ति।।
-4-1-147- गोत्रस्त्रियाः कुत्सने ण च (1393)
(ण ठक् प्रत्ययाधिकरणम्)
(णित्वाक्षेपे भाष्यम्)

किमर्थो णकारः?
वृद्ध्यर्थः, ञ्णितीति वृद्धिर्यथा स्यात्, गार्गो जाल्मः।।
(5295 णित्वाक्षेपवार्तिकम्।। 1 ।।)
- गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य -
(भाष्यम्) गोत्रस्त्रियाः प्रत्ययस्य णित्करणमनर्थकम्।
किं कारणम्?
वृद्धत्वात्प्रातिपदिकस्य। वृद्धमेवेदं प्रातिपदिकम्।।
(णित्वफलप्रदर्शकभाष्यम्)
लुगर्थं तर्हि णकारः कर्तव्यः। यल्लुगन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्--वातण्डो जाल्मः।।
(5296 फले आक्षेपवार्तिकम्।। 2 ।।)
- लुगर्थमिति चेन्न लुक्प्रतिषेधात् -
(भाष्यम्) लुगर्थमिति चेत्तन्न।
किं कारणम्?
लुक्प्रतिषेधात्, प्रतिषिध्यते तत्र लुक्--गोत्रेऽलुगचि(ग।1।89) ः४्य;ति।।
(प्रत्याक्षेपे भाष्यम्)
व्यवहितत्वादप्रतिषेधः। ः४्य;कारेण व्यवहितत्वात्प्रतिषेधो न प्राप्नोति।।
(5297 प्रत्याक्षेपनिरासवार्तिकम्।। 3 ।।)
- व्यवहितत्वादप्रतिषेध ः४्य;ति चेन्न पुंवद्भावात् -
(भाष्यम्) व्यवहितत्वादप्रतिषेध ः४्य;ति चेत्तन्न।
किं कारणम्?
पुंवद्भावात्, पुंवद्भावोऽत्र भवति--भस्याढे तद्धिते पुंवद्भावो भवतीति।।
(5298 णित्वफलप्रदर्शकवार्तिकम्।। 4 ।।)
- फिनर्थं तु -
(भाष्यम्) फिनर्थं तु णकारः कर्तव्यः। यत्फिनन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्--ग्लौचुकायनो जाल्म ः४्य;ति।।
(5299 णित्वफलसंग्राहकवार्तिकम्।। 5 ।।)
- पुंवद्भावप्रतिषेधार्थं च -
(भाष्यम्) पुंवद्भावप्रतिषेधार्थं च णकारः कर्तव्यः। गार्गा भार्या अस्य गार्गाभार्यः। वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो यथा स्यात्।।
(5300 पुंवद्भावप्रतिषेधार्थरूपफलखण्डनवार्तिकम्।। 6 ।।)
- गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम् -
(भाष्यम्) गोत्राद्यून्यस्त्रियाम् (4।1।94) ः४्य;ति वचनादप्रयोजनमेतद्भवति। नास्ति गार्गा।।
(5301 मतान्तरप्रदर्शकवार्तिकम्।। 7 ।।)
- अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् -
(भाष्यम्) अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमेतद्भवति। न च स्त्री वंश्या। अस्ति गार्गा स्त्री।।
(मतान्तरप्रदर्शकभाष्यम्)
अपर आह--
द्वावेवं वंशौ। मातृवंशः, पितृवंशश्च। यावता मातृवंशोऽप्यस्ति, नास्ति गार्गा।।
-4-1-148- द्वड्क् सौवीरेषु बहुलम् (1394)
(विषयविभागप्रदर्शकभाष्यम्)
गोत्रस्त्रियाः, वृद्धाड्क्, फेश्छश्च, फाण्टाहृति (147-150) ः४्य;मे चत्वारो योगाः।
तत्र त्रयः कुत्सने, त्रयः सौवीरगोत्रे।
आद्यो योगः कुत्सन एव, अन्त्यः सौवीरगोत्र एव।।
-4-1-150- फाण्टाहृतिमिमताभ्यां णफिञ्ञौ (1396)
(णित्वाक्षेपे भाष्यम्)
किमर्थो णकारः?
वृद्ध्यर्थः। ञ्णितीति वृद्धिर्यथा स्यात्--फाण्टाहृतः।।
(5302 आक्षेपवार्तिकम्।। 1 ।।)
- फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य -
(भाष्यम्) फाण्टाहृतेः प्रत्ययस्य णित्करणमनर्थकम्।
किं कारणम्?

वृद्धत्वात् प्रातिपदिकस्य। वृद्धमेवैतत्प्रातिपदिकम्।।
(5303 णित्वफलवार्तिकम्।। 2 ।।)
- पुंवद्भावप्रतिषेधार्थं तु -
(भाष्यम्) पुंवद्भावस्य प्रतिषेधार्थो णकारः कर्तव्यः। फाण्टाहृता भार्या अस्य फाण्टाहृतभार्यः। वृद्धिनिमित्तस्य ःथ्य;ति पुंवद्भावप्रतिषेधो यथा स्यात्--ःथ्य;ति।।
(5304 णित्वप्रयोजनाप्रयोजनवार्तिकम्।। 3 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम्,
अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमिति।।
-4-1-151- कुर्वादिभ्यो ण्यः (1397)
(ण्यप्रत्ययाधिकरणम्)
(5305 अतिदेशविधिवार्तिकम्।। 1 ।।)
- वामरथस्य कण्वादिवत्स्वरवर्जम् -
(भाष्यम्) वामरथस्य कण्वादिवद्भावो वक्तव्यः।
किमविशेषेण?
नेत्याह--
स्वरवर्जम्, स्वरं वर्जयित्वा।
किं प्रयोजनम्?
वामरथ्यस्य च्छात्रा वामरथाः। कण्वादिभ्यो गोत्रे (4।2।111) ःथ्य;त्यण्यथा स्यात्।।
(पक्षद्वयेऽप्याक्षेपकभाष्यम्)
यदि कण्वादिवदित्युच्यते, प्रत्ययाश्रयमनतिदिष्टं भवति।
तत्र को दोषः?
वामरथाः, बहुषु लोपो न प्राप्नोति। वामरथानां संघः--वामरथः--संघाङ्कलक्षणेष्वञ्यञिञामण् (4।3।127) ःथ्य;त्यण् न प्राप्नोति।
यदि पुनर्यञ्वदित्युच्यते। एवमपि प्रकृत्याश्रितमनतिदिष्टं भवति।
तत्र को दोषः?
वामरथ्यस्य च्छात्रा वामरथाः। कण्वादिभ्योगोत्रे ःथ्य;त्यण् न प्राप्नोति।।
(समाधानभाष्यम्)
अस्तु तर्हि कण्वादिवदित्येव।
कथं वामरथाः, वामरथानां संघ ःथ्य;ति च?
यदयं स्वरवर्जमित्याह तज्ज्ञापयत्याचार्यः प्रत्ययाश्रयमप्यतिदिष्टं भवतीति।।
-4-1-153- उदीचामिञ् (1399)
(ःथ्य;ञोऽधिकरणम्)
(5306 वार्तिकम्।। 1 ।।)
- उदीचामिञ्विधौ तक्ष्णोऽण्वचनम् -
(भाष्यम्) उदीचामिञ्विधौ तक्ष्णोऽण् वक्तव्यः--ताक्ष्णः।।
(लाघवप्रदर्शकभाष्यम्)
यदि पुनरयं तक्षन्शब्दः शिवादिषु पठ्येत।।
(5307 लाघवाभावबोधकवार्तिकम्।। 2 ।।)
- शिवादिरिति चेण्ण्यविधिः -
(भाष्यम्) शिवादिरिति चेद् ण्यो विधेयः। ताक्षण्य ःथ्य;ति।।
(5308 सिद्धान्तवार्तिकम्।। 3 ।।)
- सिद्धं तूदीचां वा ण्यवचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
उदीचां वा ण्यवचनात्। उदीचां वा ण्यो भवतीति वक्तव्यम्। ण्येन मुक्ते यो यतः प्राप्नोति स ततो भविष्यति।।
-4-1-155- कौसल्यकार्मार्याभ्यां च (1401)
(फिञोऽधिकरणम्)
(विकृतनिर्देशस्य विवक्षितत्वबोधकभाष्यम्)

किमिदं कौसल्यकार्मार्ययोर्विकृतयोर्ग्रहणं क्रियते?
एवं विकृताभ्यां यथा स्यात्।
अत्यल्पमिदमुच्यते--कौसल्यकार्मार्याभ्यां चेति।।
(5309 सूत्रांशपूरकवार्तिकम्।। 1 ।।)
- फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् च -
(भाष्यम्) फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् चेति वक्तव्यम्। दगु--दागव्यायनिः। कोसल--कौसल्यायनिः। कर्मार--कार्मार्यायणिः। छाग--छाग्यायनिः। वृष--वार्ष्यायणिः।
(आक्षेपभाष्यम्)
यदि युट् क्रियते युटि कृतेऽनादित्वादादेशो न प्राप्नोति।
ःथ्य;दमिह संप्रधार्यम्--आदेशः क्रियतां युडिति किमत्र कर्तव्यम्?
परत्वादादेशः।
नित्यो युट्--कृतेऽप्यादेशे प्राप्नोति, अकृतेऽपि।
युडप्यनित्यः--अन्यस्य कृत आदेशे प्राप्नोति, अन्यस्याकृते। शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति।
अन्तरङ्गस्तर्हि युट्।
काऽन्तरङ्गता?
उत्पत्तिसंनियोगेन युडुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्यादेश उच्यते।
आदेशोऽप्यन्तरङ्गः।
कथम्?
वक्ष्यत्येतत्--आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति।
अनवकाशस्तर्हि युट्।।
एवं तर्हि पूर्वान्तः करिष्यते।
यदि पूर्वान्तः क्रियते--दागव्यायनिः, ओर्गुणो न प्राप्नोति।।
(समाधानभाष्यम्)
अस्तु तर्हि परादिरेव।
ननु चोक्तम्--युटि कृतेऽनादित्वादादेशो न प्राप्नोतीति।
नैष दोषः।
सिद्धं त्वादिष्टस्य युड्वचनात्, सिद्धमेतत्।
कथम्?
आदिष्टस्य युड्वचनात्। युट्चादिष्टस्येति वक्तव्यम्।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्। चेन संनियोगः करिष्यते--युट् च। किं च?
यच्चान्यत्प्राप्नोति।
किं चान्यत् प्राप्नोति?
आदेश ःथ्य;ति।।
-4-1-158- वाकिनादीनां कुक् च (1404)
(लाघवमूलं भाष्यम्)
यदि पुनरयं कुट् परादिः क्रियते।।
(5310 कुडागमाक्षेपवार्तिकम्।। 1 ।।)
- कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् -
(भाष्यम्) कुटि सति प्रत्ययादेरादेशो नोपपद्यते।
किं कारणम्?
अनादित्वात्, कुटि कृतेऽनादित्वादादेशो न प्राप्नोति।।
एवं तर्हि पूर्वान्तः करिष्यते।।
(5311 कुगागमेऽप्याक्षेपवार्तिकम्।। 2 ।।)
- पूर्वान्ते नलोपवचनम् -
(भाष्यम्) यदि पूर्वान्तः क्रियते, नलोपो वक्तव्यः--चार्मिकायणिः, वार्मिकायणिः। नलोपः प्रातिपदिकान्तस्य ःथ्य;ति नलोपो न प्राप्नोति। परादौ तु पुनः सति नलोपः प्रातिपदिकान्तस्य ःथ्य;ति नलोपः सिध्यति।।
अस्तु तर्हि परादिरेव।
ननु चोक्तम्--कुटि कृतेऽनादित्वादादेशो न प्राप्नोतीति।।

(5312 कुडागमसमर्थकवार्तिकम्।। 3 ।।)
- सिद्धं त्वादिष्टस्य कुड्वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
कुट्चादिष्टस्येति वक्तव्यम्।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्, चेन संनियोगः करिष्यते--कुट्च, किं च? यच्चान्यत् प्राप्नोति।
किं चान्यत्प्राप्नोति?
आदेशः।
सिध्यति, सूत्रं तर्हि भिद्यते।।
(कुगागमसमर्थकभाष्यम्)
यथान्यासमेवास्तु।
ननु चोक्तं पूर्वान्ते नलोपवचनमिति।
नैष दोषः।
क्रियते एतन्न्यास एव चर्मिवर्मिणोर्नलोपश्च ःथ्य;ति।।
(5313 विप्रतिषेधबोधकवार्तिकम्।। 4 ।।)
- कारिभ्य ःथ्य;ञ्ञोऽगोत्रात्फिञ्ञ् विप्रतिषेधेन -
(भाष्यम्) कारिभ्य ःथ्य;ञ्ञ् भवतीत्येतस्मादगोत्रात् फिञ्ञ् भवति विप्रतिषेधेन। कारिभ्य ःथ्य;ञ्ञ् भवतीत्यस्यावकाशः--अयस्कारिः, लौहकारिः। फिञ्ञोऽवकाशः--तापसायनिः, साम्मितिकायनिः।
ःथ्य;होभयं प्राप्नोति--नापितायनिः। फिञ्ञ्भवति विप्रतिषेधेन।।
-4-1-161- मनोर्जातावञ्ञ्यतौ षुक् च (1407)
(अञ्ञ्यतोरधिकरणम्)
(माणवशब्दसिध्यर्थं भाष्यवार्तिकम्)
अपत्ये कुत्सिते मूढे
मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्धन्य--
स्तेन सिध्यति माणवः।।
(षुकः पूर्वान्तत्वे आक्षेपभाष्यम्)
यदि षुक् पूर्वान्तः क्रियते--मानुषाः, बहुषु लोपः प्राप्नोति। मानुषाणां संघः संघाङ्कलक्षणेष्वञ्ञ्यञ्ञिञ्ञामण् (4|2|127) ःथ्य;त्यण् प्राप्नोति।।
(परादित्वे आक्षेपभाष्यम्)
अस्तु तर्हि परादिः।
यदि परादिः क्रियते--मानुषी, अञ्ञन्तादितीकारो न प्राप्नोति।।
(पूर्वान्तत्वस्थापकभाष्यम्)
अस्तु तर्हि पूर्वान्त एव।
कथं मानुषाः, मानुषाणां संघ ःथ्य;ति?
उभयत्र लौकिकस्य गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम्।
किं तर्हि?
जातिः।।
ःथ्य;ह तर्हि मानुष्यकमिति हलस्तद्धितस्य ःथ्य;ति यलोपः प्राप्नोति।
परादावप्येष दोषः।
यद्वि तद्धलस्तद्धितस्येति हल्ग्रहणं न तदङ्गविशेषणं शक्यं विज्ञातुम्।
ःथ्य;ह हि दोषः स्यात्--वृकाट्टेण्यण् (5|3|115) वार्केणीति । तस्मादुभाभ्यामेव तद्वक्तव्यम् --प्रकृत्याऽकेराजन्यमनुष्ययुवान ःथ्य;ति।
-4-1-162- अपत्यं पौत्रप्रभृति गोत्रम् (1408)
(गोत्रसंज्ञाधिकरणम्)
(5314 सूत्रस्य न्यूनताक्षेपे वार्तिकम्।। 1 ।।)
- पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृतिसंज्ञाकरणम् -
(भाष्यम्) पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यविवक्षा तस्य पौत्रप्रभृतेर्गोत्रसंज्ञा भवतीति वक्तव्यम्। गर्गोऽपि हि कंचित्प्रति पौत्रः, कुशिकोऽपि, तत्र मा भूदिति।।

(वार्तिकान्यथासिद्धिपरं भाष्यम्)
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्। समर्थानां प्रथमाद्वा (4।1।82) ःथ्य;ति वर्तते। समर्थानां प्रथमस्य यदपत्यं पौत्रप्रभृतीति विज्ञायते।।
(5315 सिद्धान्तवार्तिकम्।। 2 ।।)
- जीवद्वंश्यञ्च कुत्सितम् -
(भाष्यम्) जीवद्वंश्यं च कुत्सितं गोत्रसंज्ञं भवतीति वक्तव्यम्। गार्ग्यस्त्वमसि जाल्म, वात्स्यस्त्वमसि जाल्म ःथ्य;ति।
का पुनरिह कुत्सा?
पितृतो लोके व्यपदेशवताऽस्वतन्त्रेण भवितव्यम्।
य ःथ्य;दानीं पितृमान स्वतन्त्रो भवति स उच्यते गार्ग्यस्त्वमसि जाल्म, वात्स्यस्त्वमसि जाल्म। न त्वं पितृतो व्यपदेशमर्हसीति।।
-4-1-163- जीवति तु वंश्ये युवा (1409)
(युवसंज्ञाधिकरणम्)
(5316 अनुवृत्तिसूचकवार्तिकम्।। 1 ।।)
- जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं च -
(भाष्यम्) जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं चेति वक्तव्यम्।।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्, पौत्रप्रभृतीति वर्तते।
एवं तर्हि अन्वाचष्टे पौत्रप्रभृतीति वर्तत ःथ्य;ति।
किमेतस्यान्वाख्याने प्रयोजनम्?
(5317 अनुवृत्तिफलप्रदर्शकवार्तिकम्।। 2 ।।)
- तच्च दैवदत्त्यर्थम् -
(भाष्यम्) देवदत्तस्यापत्यं दैवदत्तिरिति, अनन्तरं यदपत्यं तत्र युवसंज्ञा मा भूदिति।
(अनुवृत्तौ दोषनिरासभाष्यम्)
देवदत्तस्य तर्हि पौत्रे युवसंज्ञा प्राप्नोति, एतदपि पौत्रप्रभृति भवति।
न पौत्रप्रभृतीत्यनेनापत्यमभिसंबध्यते--पौत्रप्रभृति यदपत्यमिति।
किं तर्हि?
वंश्योऽभिसंबध्यते--पौत्रप्रभृति वंश्ये जीवति यदपत्यमिति।
एवमपि देवदत्तस्य द्वौ पुत्रौ, तयोः कनीयसि युवसंज्ञा प्राप्नोति--भ्रातरि च ज्यायसि (4।1।164) ःथ्य;ति।
एवं तर्ह्यपत्यमेवाभिसंबध्यते न तु पौत्रप्रभृतिसमानाधिकरणमपत्यम्।
नैवं विज्ञायते--पौत्रप्रभृति यदपत्यमिति।
कथं तर्हि?
पौत्रप्रभृतेर्यदपत्यमिति।।
(5318 युवसंज्ञाविधिवार्तिकम्।। 3 ।।)
- वृद्धस्य च पूजायाम् -
(भाष्यम्) वृद्धस्य च पूजायां युवसंज्ञा वक्तव्या। तत्र भवन्तो गार्ग्यायणाः, तत्रभवन्तो वात्स्यायनाः।
का पुनरिह पूजा?
युवत्वं लोके ःथ्य;प्सितं पूजेत्युपचर्यते। तत्रभवन्तश्च युवत्वेनोपचर्यमाणाः पूजिता भवन्ति।।
(5319 पूर्ववार्तिकप्रत्याख्याने वार्तिकम्।। 4 ।।)
- आपत्यो वा गोत्रम् -
(भाष्यम्) अथवा--आपत्यो गोत्रसंज्ञो भवतीति वक्तव्यम्।।
(5320 प्रत्याख्यानोपयोगिवार्तिकम्।। 5 ।।)
- परमप्रकृतेश्चापत्यः -
(भाष्यम्) परमप्रकृतेश्चापत्यो भवतीति वक्तव्यम्।
(5321 प्रत्याख्यानोपयोगिवार्तिकम्।। 6 ।।)
- आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः -
(भाष्यम्) आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयः प्रत्ययः स च युवसंज्ञो भवतीति वक्तव्यम्।।
(5322 प्रत्याख्यानोपयोगिवार्तिकम्।। 6 ।।)
- स चास्त्रियाम् -
(भाष्यम्) स चास्त्रियां भवतीति वक्तव्यम्।।

(5323 लाघवबोधकवार्तिकम्।। 7 ।।)
- एको गोत्रग्रहणानर्थक्यं च -
(भाष्यम्) एवं च कृत्वा एको गोत्रग्रहणमनर्थकं भवति।।
(5324 प्रत्याख्यानेनेष्टसाधकं वार्तिकम्।। 8 ।।)
- बहुवचनलोपिषु च सिद्धम् -
(भाष्यम्) बहुवचनलोपिषु च सिद्धं भवति। तत्र बिदानामपत्यं माणवक ःथ्य;ति विगृह्य बिदशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति--बैदः, बैदौ।। बैदस्यापत्यानि बहवो माणवका ःथ्य;ति विगृह्य बिदशब्दाद्बहुषूत्पत्तिर्भविष्यति--बिदा ःथ्य;ति।।
-4-1-165- वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति (1411)
(पदकृत्यभाष्यम्)
अन्यग्रहणं किमर्थम्?
भ्रातरीति वर्तते, सपिण्डमात्रे यथा स्यात्।
अथ स्थविरतरग्रहणं किमर्थम्?
उभयतो विशिष्टे यथा स्यात्, स्थानतो वयस्तश्च।
अथ जीवतीति वर्तमाने पुनर्जीवतिग्रहणं किमर्थम्?
जीवतो जीवति यथा स्यात्, मृते मा भूत्। मृते हि गार्ग्यो मृतः ःथ्य;त्येव भवितव्यम्।।
(गोत्रयुवसंज्ञयोः समावेशे दोषापादकभाष्यम्)
अथ गोत्रयूनोः समावेशो भवति, उताहो न।
किं च प्राप्नोति?
बाढं प्राप्नोति, न ह्ययमेकसंज्ञाधिकारः।
किं चातः?
(दोषे श्लोकवार्तिकम्)
गोत्रयूनोः समावेशे
को दोषस्तत्कृतं भवेत्।।
(भाष्यम्) गोत्रयूनोः समावेशे को दोषः?
तत्कृतं प्राप्नोति, गोत्राश्रया विधयो यून्यपि प्राप्नुवन्ति--यास्कायनयः, लाह्यायनयः। यस्कादिभ्योगोत्रे (2।4।63) ःथ्य;ति लुक् प्राप्नोति।।
(एकेदेशे दोषवारकं श्लोकवार्तिकम्)
यस्कादिषु न दोषोऽस्ति
न यूनीत्यनुवर्तनात्।
(भाष्यम्) यस्कादिषु न दोषः।
किं कारणम्?
न यूनीत्यनुवर्तनात्, न यूनीति तत्रानुवर्तते।
क्व प्रकृतम्? न तौल्वलिभ्यः (2।4।61) ःथ्य;ति।।
(दोषापादकं श्लोकवार्तिकम्)
दोषोऽत्रिबिदपञ्चाला
न यूनीत्यनुवर्तनात्।।
(भाष्यम्) यदि न यूनीत्यनुवर्तते--अत्रयः, बिदाः, पञ्चाला, माणवका ःथ्य;ति न सिध्यति।
नैष दोषः।
संबन्धमनुवर्तिष्यते। न तौल्वलिभ्यः तद्राजस्य बहुषु तेनैवास्त्रियां लुग् भवति, तौल्वलिभ्यो यूनि न। यस्कादिभ्यो गोत्रे लुग् भवति, यूनि न। तौल्वलिभ्य ःथ्य;ति निवृत्तम्।
यञञोश्च अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च लुग् भवति। यूनि नेत्यपि निवृत्तम्।
ःथ्य;ह तर्हि--काण्व्यायनस्य छात्राः काण्व्यायनीयाः। कण्वादिभ्यो गोत्रे (4।2।111) ःथ्य;त्यण् प्राप्नोति।।
(दोषोद्धारकं श्लोकवार्तिकम्)
कण्वादिषु न दोषोऽस्ति
न यून्यस्ति ततः परम्।।
(भाष्यम्) कण्वादिषु दोषो नास्ति
किं कारणम्?
न यून्यस्ति ततः परम्। कण्वादिभ्यो यो विहितस्तदन्तात्प्रातिपदिकादित्युच्यते। यश्चात्र कण्वादिभ्यो विहितः, न तदन्तं प्रातिपदिकम्। यदन्तं च प्रातिपदिकम्, नासौ कण्वादिभ्यः।।
(दोषापादकभाष्यम्)

ः थ्य;ह तर्ह्यौपगवस्यापत्यमौपगविरिति एको गोत्रे (4।1।93) ः थ्य;त्येतस्मान्नियमात्प्रत्ययो न प्राप्नोति।।
(दोषोद्धारकं श्लोकवार्तिकम्)
एको गोत्रे प्रातिपदम्।
(भाष्यम्) प्रतिपदमत्र प्रत्यया विधीयन्ते। गोत्राद्यून्यस्त्रियाम् (4।1।94) ः थ्य;ति।।
(दोषापादकं भाष्यम्)
तदन्तात्तर्ह्यनेकः प्रत्ययः प्राप्नोति।।
(दोषोद्धारकं श्लोकवार्तिकम्)
गोत्राद्यूनि च तत्स्मरेत्।
(भाष्यम्) गोत्राद्यून्यस्त्रियाम् ः थ्य;ति तत् स्मरेत्।।
किम्?
एक ः थ्य;त्येव।।
(संज्ञयोः समावेशे दोषापादनभाष्यम्)
गोत्रे तर्ह्यलुगुक्तः स यून्यपि प्राप्नोति।
अस्तु।
पुनर्यूनि लुग् भविष्यति।
नैवं शक्यम्।
फक्फिञ्त्रोर्दोषः स्यात्-शालङ्केर्यूनश्छात्राः शालङ्काः, पैलश्य पैलीयाः। फक्फिञोरन्यतरस्याम्(4।1।91) ः थ्य;त्यन्यतरस्यां श्रवणं प्रसज्येत।।
(प्रकारान्तरेण दोषनिवारकभाष्यम्)
तस्माद्युवसंज्ञायां गोत्रसंज्ञायाः प्रतिषेधो वक्तव्यः।।
न वक्तव्यः।
तुर्नियामकः, तुः क्रियते स नियामको भविष्यति--जीवति वंश्ये अपत्यं युवसंज्ञमेव भवतीति।।
(पूर्वोक्तदोषनिवारणेऽप्यन्यदोषापादकं भाष्यम्)
यदि तर्हि युवसंज्ञायां गोत्रसंज्ञा न भवति, य ः थ्य;ष्यन्ते यूनि गोत्राश्रया विधयस्ते न सिध्यन्ति--गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः। गोत्राश्रयो वुञ्न प्राप्नोति।।
एवं तर्हि--
(दोषोद्धारकं श्लोकवार्तिकम्)
राजन्याद्वुञ् मनुष्याच्च
ज्ञापकं लौकिकं परम्।
(भाष्यम्) यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणं करोति, तज् ज्ञापयत्याचार्यः--लौकिकं परं गोत्रग्रहणमिति।
युवा च लोके गोत्रमित्युपचर्यते--किं गोत्रोऽसि माणवक? गार्ग्यायणः। किं गोत्रोऽसि माणवक? वात्स्यायनः।।
(सूत्रार्थोपसंहारभाष्यम्)
यद्येतज्ज्ञाप्यते--औपगवेर्यूनश्छात्रा औपगवीयाः। ः थ्य;ञो गोत्र ः थ्य;त्यण् प्राप्नोति।
सामूहिकेषु ज्ञापकम्।
यदि सामूहिकेषु ज्ञापकम्--गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः, गोत्राश्रयो वुञ्न प्राप्नोति।
वुञ्विधौ ज्ञापकम्।
वुञ्विधावेतज्ज्ञापकम्।
यदि वुञ्विधौ ज्ञापकम्--शालङ्केर्यूनश्छात्राः शालङ्काः।
ः थ्य;ञो गोत्र ः थ्य;त्यण्न प्राप्नोति।
अस्तु तर्ह्यविशेषेण।
कथमौपगवेर्यूनश्छात्रा औपगवीयाः, ः थ्य;ञो गोत्र ः थ्य;त्यण् प्राप्नोति?
नैष दोषः। गोत्रेणात्रेञ्ञं विशेषयिष्यामः--गोत्रे य ः थ्य;ञ्विहित ः थ्य;ति।।
-4-1-168- जनपदशब्दात् क्षत्रियादञ् (1414)
(अञोऽधिकरणम्)
(5325 पूर्वपक्षवार्तिकम्।। 1 ।।)
- क्षत्रियादेकराजात्सङ्घप्रतिषेधार्थम् -
(भाष्यम्) क्षत्रियादेकराजादिति वक्तव्यम्।
किं प्रयोजनम्?
सङ्घप्रतिषेधार्थम्। सङ्घान्मा भूत्--पञ्चालानामपत्यम्, विदेहानामपत्यमिति।

तत्तर्हि वक्तव्यम्।।
(समाधानभाष्यम्)
न वक्तव्यम्। न ह्यन्तरेण बहुषु लुकं पञ्चाला ःथ्य;त्येतद्भवति।
यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात्। युवप्रत्ययश्चेत्तस्य लुक्, तस्मिंश्चालुग् भविष्यति।।
ःथ्य;दं तर्हि--क्षौद्रकाणामपत्यम्, मालवानामपत्यमिति।
अत्रापि क्षौद्रक्यो मालव्य ःथ्य;ति नैतत्तेषां दासे वा भवति कर्मकरे वा।
किं तर्हि?
तेषामेव कस्मिंश्चित्। यावता तेषामेव कस्मिंश्चित्, यस्तस्मादुत्पद्यते स युवप्रत्ययः स्यात्। युवप्रत्ययश्चेत्तस्य लुक्, तस्मिंश्चालुग्भविष्यति।।
(क्षत्रियपदाक्षेपभाष्यम्)
अथ क्षत्रियग्रहणं किमर्थम्?
ःथ्य;ह मा भूत्--विदेहो नाम ब्राह्मणस्तस्यापत्यं वैदेहिः।।
(5326 क्षत्रियपदप्रयोजनवार्तिकम्।। 2 ।।)
- क्षत्रियग्रहणानर्थक्ये चोक्तम् -
(भाष्यम्) किमुक्तम्?
एकं तावदुक्तम्--बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेध ःथ्य;ति।
अपरमुक्तम्--अनभिधानादिति।।
(5327 अतिदेशवार्तिकम्।। 3 ।।)
- क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् -
(भाष्यम्) क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्प्रत्यया भवन्तीति वक्तव्यम्। पञ्चालानां राजा पाञ्चालः।।
पूरोरण् वक्तव्यः--पौरवः।।
पाण्डोडर्यण् वक्तव्यः--पाण्डयः।।
-4-1-170- द्व्यञ्मगधकलिङ्गसूरमसादण् (1416)
(अणोऽधिकरणम्)
(5328 विप्रतिषेधवार्तिकम्।। 1 ।।)
- अणो ञ्यङ्ण्येञ्ञो विप्रतिषेधेन -
(भाष्यम्) अणो ञ्यङ्-ण्य--ःथ्य;ञ्--ःथ्य;त्येते भवन्ति विप्रतिषेधेन।
अणोऽवकाशः--आङ्गः, वाङ्गः।
ञ्यङोऽवकाशः--आम्बष्ठ्यः, सौवीर्यः।
ःथ्य;होभयं प्राप्नोति--दार्व्यः।।
ण्यस्यावकाशः--निचक--नैचक्यः।
अणः स एव।
ःथ्य;होभयं प्राप्नोति--नीप--नैप्यः।।
ःथ्य;ञ्ञोऽवकाशः--आजमीढिः, आजक्रन्दिः।
अणः स एव।
ःथ्य;होभयं प्राप्नोति--बुध--बौधिः।
ञ्यङ्ण्येञ्ञो भवन्ति विप्रतिषेधेन।।
(5329 विप्रतिषेधे द्वितीयवार्तिकम्।। 2 ।।)
- ञ्यङः कुरुनादिभ्यो ण्यः -
(भाष्यम्) ञ्यङः कुरुनादिभ्यो ण्यो भवति विप्रतिषेधेन। ञ्यङोऽवकाशः--आवन्त्यः, कौन्त्यः।
ण्यस्य स एव।
नैशो नाम जनपदस्तस्मादुभयं प्राप्नोति।
ण्यो भवति विप्रतिषेधेन--नैश्यः।।
-4-1-175- कम्बोजाल्लुक् (1421)
(लुगधिकरणम्)
(5330 सूत्रपूरकवार्तिकम्।। 1 ।)
- कम्बोजादिभ्यो लुग्वचनं चोडाद्यर्थम् -
(भाष्यम्) कम्बोजादिभ्यो लुग्वक्तव्यः।
किं प्रयोजनम्?
चोडाद्यर्थभ्--चोडः, कडेरः, केरलः।।

4-1-4- आ. 115 (719 लुग्विधिसूत्रम्
-4-1-177- 1423 अतश्च
(अलक्ष्यवारणपरभाष्यम्)
ः्थ्य;ह कस्मान्न भवति--आम्बष्ठ्या, सौवीर्या? अत ः्थ्य;त्युच्यते, नैषोऽकारः।
तदन्तविधिना प्राप्नोति।
अत उत्तरं पठति--
(5331 तदन्ताग्रहणवार्तिकम्।। 1 ।।)
- अत ः्थ्य;ति तदन्ताग्रहणमवन्त्यादिभ्यो लुग्वचनात् -
(भाष्यम्) अत ः्थ्य;ति तदन्तस्याग्रहणम्।
किं कारणम्?
अवन्त्यादिभ्यो लुग्वचनात्। यदयमवन्त्यादिभ्यो लुकं शास्ति, तज्ज्ञापयत्याचार्यः--नात्र तदन्तविधिर्भवतीति।।
(सूत्रांशपूरकभाष्यम्)
पर्श्वादिभ्यो लुग्वक्तव्यः। पर्शूः,रक्षाः, असुरी।।
(5332 अन्यथासिद्धिसाधकवार्तिकम्।। 2 ।।)
- यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः -
(भाष्यम्) यदयं न प्राच्यभर्गादियौधेयादिभ्यः (4।1।178) ः्थ्य;ति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः--भवति पर्श्वादिभ्यो लुगिति।।
ः्थ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्।। पादश्च समाप्तः।।
-9-9-999-

# महाभाष्यम्/चतुर्थोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nmp
< महाभाष्यम् | चतुर्थोऽध्यायः
-4-2-1- तेन रक्तं रागात् (1424)
(रक्तार्थाधिकरणम्)
(पदकृत्यभाष्यम्)
रागादिति किमर्थम्?
देवदत्तेन रक्तं वस्त्रम्।।
(5328 रागात् पदानर्थक्यबोधकं वार्तिकम्।। 1 ।।)
- रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् -
(भाष्यम्) रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाधिग्रहणमनर्थकम्। न ह्यरागादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यात्।
अनभिधानात्तत उत्पत्तिर्न भविष्यति।।
-4-2-2- लाक्षारोचनाट्ठक् (1425)
(ठगधिकरणम्)
(5329 सूत्रांशपूरकवार्तिकम्।। 1 ।।)
- ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् -
(भाष्यम्) ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानं कर्तव्यम्। शाकलिकम्, कार्दमिकम्।।
(5330 बाधकप्रत्ययोपपादकवार्तिकम्।। 2 ।।)
- नील्या अन् -
(भाष्यम्) नील्या अन् वक्तव्यः। नील्या रक्तं नीलम्।।
(5331 बाधकप्रत्ययोपपादकवार्तिकम्।। 3 ।।)
- पीतात्कन् -
(भाष्यम्) पीतात्कन्वक्तव्यः। पीतेन रक्तं पीतकम्।
पीतकशब्दो वा प्रकृत्यन्तरम्, तस्माल्लुग्वक्तव्यः।।
(5332 बाधकप्रत्ययोपपादकवार्तिकम्।। 4 ।।)
- हरिद्रामहारजनाभ्यामञ् -
(भाष्यम्) हरिद्रामहारजनाभ्यामञ् वक्तव्यः। हारिद्रम्, माहारजनम्।
(प्रयोगसाधकभाष्यम्)
रागादित्युच्यते, तत्रेदं न सिध्यति--हारिद्रौ कुक्कुटस्य पादौ, काषायौ गर्दभस्य कर्णाविति।
उपमानात्सिद्धम्। हारिद्राविव हारिद्रौ, काषायाविव काषायौ।।
-4-2-3- नक्षत्रेण युक्तः कालः (1426)
(युक्ताथाधिकरणम्)
(आक्षेपभाष्यम्)
अयुक्तोऽयं निर्देशः। योगो हि नाम स भवति ययोः संनिकर्षविप्रकर्षौ स्तः। न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः, नित्ये हि कालनक्षत्रे।
कथं तर्हि निर्देशः कर्तव्यः?
(5333 आक्षेपवार्तिकम्।। 1 ।।)
- नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानम् -
(भाष्यम्) नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानं भवतीति वक्तव्यम्। पुष्येण युक्तः पुष्ययुक्तः, पुष्ययुक्तश्चन्द्रमा अस्मिन् काले पौषमहः, पौषी रात्रिः।।
(5334 आक्षेपसाधकवार्तिकम्।। 2 ।।)
- तत्रोत्तरपदलोपः -
(भाष्यम्) तत्रैवं सति उत्तरपदलोपो वक्तव्यः। पुष्ययुक्तशब्दाद्धि प्रत्ययो विधीयते।।
(5335 आक्षेपसाधकवार्तिकम्।। 3 ।।)
- लिङ्गवचनानुपपत्तिश्च -
(भाष्यम्) लिङ्गवचनयोश्चानुपपत्तिः। चन्द्र मसो यल्लिङ्गं वचनं च तद्युक्तवद्भावेन प्राप्नोति।।
(5336 समाधानवार्तिकम्।। 4 ।।)
- कालयोगात्सिद्धम् -

(भाष्यम्) कालयोगात्सिद्धमेतत्।।
अस्तु नक्षत्रेण युक्तः काल इत्येव।।
(समाधानाक्षेपभाष्यम्)
ननु चोक्तम्--अयुक्तोऽयं निर्देशः, योगो हि नाम स भवति ययोः संनिकर्षविप्रकर्षौ स्तः, न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः, नित्ये हि कालनक्षत्रे इति।
नैष दोषः।
पुष्यसमीपगते चन्द्रमसि पुष्यशब्दो वर्तते, तेन तत्संज्ञकेन कालो विशेष्यते।।
(5337 सिद्धान्तवार्तिकम्।। 5 ।।)
- तथा च संप्रत्ययः -
(भाष्यम्) एवं च कृत्वा लोके संप्रत्ययो भवति। पुष्यसमीपगते चन्द्रमसि वक्तारो भवन्ति--पुष्येणाद्य, मघाभिरद्येति।।
-4-2-4- लुबविशेषे (1427)
(लुबधिकरणम्)
(पूर्वसूत्राननुवृत्तौ दोषदर्शकभाष्यम्)
इह कस्मान्न भवति--पौषी रात्रिः, पौषमहः?
अविशेष इत्युच्यते, विशेषश्चात्र गम्यते--रात्रिरित्युक्तेऽहर्नेति गम्यते, अहरित्युके रात्रिर्नेति गम्यते।
इहापि तर्हि न प्राप्नोति--अद्य पुष्य इति। अत्रापि हि विशेषो गम्यते--अद्येत्युक्ते न ह्यो न श्व इति गम्यते।
यद्यप्यत्र विशेषो गम्यते, अविशेषोऽपि तु गम्यते।। अद्येत्युक्ते न ज्ञायते रात्रौ दिवा वेति। यतोऽविशेषस्तदाश्रयो लुब्भविष्यति।।
इहापि तर्हि--यद्यपि विशेषो गम्यते, अविशेषोऽपि तु गम्यते। रात्रिरित्युक्ते न ज्ञायते कदेति। दिवेत्युक्ते न ज्ञायते कदेति। यतोऽविशेषस्तदाश्रयो लुप्प्राप्नोति।
(सिद्धान्तभाष्यम्)
एवं तर्हि--नक्षत्रेण युक्तः कालः इत्यनुवर्तते, नक्षत्रेण युक्तस्य कालस्याविशेषे।
कः पुनः कालो नक्षत्रेण युज्यते?
-4-2-5- संज्ञायां श्रवणाश्वत्थाभ्याम्( 1428)
(श्रवणाशब्दसाधकं भाष्यम्)
इह कस्मान्न युक्तवद्भावो भवति--श्रवणा रात्रिः?
निपातनादेतत्सिद्धम्।
किं निपातनम्?
विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः (4|2|23) इति।।
-4-2-7- दृष्टं साम (1430)
(अर्थाधिकरणम्)
(5338 कलिशब्दविषयं वार्तिकम्।। 1 ।।)
- दृष्टं साम कलेर्ढक् -
(भाष्यम्) दृष्टं सामेत्यत्र कलेर्ढग्वक्तव्यः। कलिना दृष्टं साम कालेयं साम गीयते।।
अपर आह--
(5339 व्यापकवार्तिकम्।। 2 ।।)
- सर्वत्राग्निकलिभ्यां ढक् -
(भाष्यम्) सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः। अग्निना दृष्टं सामाग्नेयम्, अग्नौ भवमाग्नेयम्, अग्नेरागतमाग्नेयम्, अग्नेः स्वमाग्नेयम्, अग्निर्देवताऽस्याग्नेयः। कलिना दृष्टं कालेयम्, कलौ भवं कालेयम्, कलेरागतं कालेयम्, कलेः स्वं कालेयम्, कलिर्देवताऽस्य कालेयश्चरुः।।
(विधायकं श्लोकवार्तिकम्।।)
दृष्टेसामनि जाते
चाप्यण् डिदि्द्वर्वा विधीयते।।
(भाष्यम्) दृष्टे सामनि जाते चाप्यण् डिदि्द्वर्वा वक्तव्यः। उशनसा दृष्टं साम औशनम्, औशनसम्। सतभिषजः जातः शातभिषजः, शातभिषः।।
(विधायकं श्लोकवार्तिकम्।।)
तीयादीकक्।।
(भाष्यम्) तीयादीकक् वक्तव्यः। द्वैतीयीकः, तार्तीयीकः।।
(निषेधे श्लोकवार्तिकम्।।)
न विद्यायाः।।
(भाष्यम्) विद्याया न भवतीति वक्तव्यम्। द्वितीया विद्या, तृतीया विद्येत्येव।।
(अतिदेशे श्लोकवार्तिकम्।।)

गोत्रादङ्कवदिष्यते।।
(भाष्यम्) औपगवकम्, कापटवकम्।।
दृष्टे सामनि जाते
चाप्यण् डिद्द्विर्वा विधीयते।
तीयादीकग्न विद्याया
गोत्रादङ्कवदिष्यते।।
-4-2-9- वामदेवाड्ड्यड्ड्यौ (1432)
(ड्यड्ड्ययोरधिकरणम्)
(डित्वफलबोधकभाष्यम्)
किमर्थो डकारः?
डितीति लोपो यथा स्यात्।
नैतदस्ति प्रयोजनम्। यस्येति लोपेनाप्येतत्सिद्धम्।
एवं तर्हि सिद्धे सति यद्ययतौ डितौ करोति तज् ज्ञापयत्याचार्यः--भवत एते परिभाषे--अननुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्, तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणमिति।।
(ज्ञापनफलबोधकभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम्?
अवामदेव्यमित्येतत्सिद्धं भवति।
सिद्धे यस्येति लोपेन
किमर्थं ययतौ डितौ।
ग्रहणं माऽतदर्थे भू-
द्वामदेव्यस्य नञ्स्वरे।।
-4-2-10- परिवृतो रथः (1433)
(अर्थाधिकरणम्)
(5340 परिवृतपदार्थबोधकवार्तिकम्।। 1 ।।)
- परिवृतो रथ इति तदेकान्तग्रहणम् -
(भाष्यम्) परिवृतो रथ इत्यत्र तदेकान्तग्रहणं कर्तव्यम्। येन परिवृतो रथो रथैकान्तश्चेत् स भवतीति वक्तव्यम्।
इह मा भूत्-पुत्रैः परिवृतो रथः, छात्रैः परिवृतो रथ इति।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।
कस्मान्न भवति--पुत्रैः परिवृतो रथः, छात्रैः परिवृतो रथ इति।
अनभिधानात्।।
-4-2-11- पाण्डुकलादिनिः (1434)
(इनिप्रत्ययाधिकरणम्)
(फलाभावबोधकभाष्यम्)
अयं योगः शक्योऽवक्तुम्।
कथम्--पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिन इति।
इनिनैतन्मत्वर्थीयेन सिद्धम्। पाण्डुकम्बलोऽस्यास्तीति--पाण्डुकम्बली।।
-4-2-13- कौमारापूर्ववचने (1436)
(निपातनाधिकरणम्)
(5341 अपूर्ववचनार्थबोधकवार्तिकम्।। 1 ।।)
- कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे -
(भाष्यम्) कौमारापूर्ववचन इत्यत्रोभयतः स्त्रिया अपूर्वत्व इति वक्तव्यम्। अपूर्वपतिं कुमारीमुपपन्नः कौमारो भर्ता। कुमारी--अपूर्वपतिः--पतिमुपपन्ना कौमारी भार्या।।
(भाष्यवार्तिकम्)
कौमारापूर्ववचने
कुमार्या अण्विधीयते।
अपूर्वत्वं यदा तस्याः
कुमार्यां भवतीति वा।।
(भाष्यम्) अथ वा कुमार्यां भवः कौमारः।। यद्येवं कौमारीभार्येति न सिध्यति।।

(5342 अन्यथासिद्धिसाधकवार्तिकम्।। 2 ।।)
- पुंयोगात् स्त्र्यभिधानम् -
(भाष्यम्) पुंयोगात् स्त्र्यभिधानं भविष्यति। कौमारस्य भार्या कौमारीति।।
-4-2-21- सास्मिन् पौर्णमासीति (1444)
(अर्थबोधनाधिकरणम्)
(5342 उपसङ्ख्यानवार्तिकम्।। 1 ।।)
- सास्मिन् पौर्णमासीति संज्ञाग्रहणम् -
(भाष्यम्) सास्मिन् पौर्णमासीत्यत्र संज्ञाग्रहणं कर्तव्यम्।।
(5344 उपसङ्ख्यानाभावे गौरवबोधकवार्तिकम्।। 2 ।।)
- असंज्ञायां हि गरीयानुपसंयोगः -
(भाष्यम्) अक्रियमाणे हि संज्ञाग्रहणे गरीयानुपसंयोगः कर्तव्यः स्यात्--मासार्धमासयोरिति वक्तव्यं स्यात्।
इह मा भूत्-पौषी पौर्णमास्यस्मिन्--पञ्चदशरात्रे, दशरात्र इति।
संवत्सरपर्वणीति च वक्तव्यं स्यात्। भृतकमासे मा भूदिति।।
(उपसङ्ख्यानान्यथासिद्धिभाष्यम्)
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्। इतिकरणः क्रियते, ततश्चेद्विवक्षा।।
-4-2-25- कस्येत् (1448)
(आदेशाधिकरणम्)
(भाष्यम्)
यस्येति लोपः कस्मान्न भवति?
इकारोच्चारणसार्मथ्यात्।
अथ यत्कायं हविः, कथं तस्य संप्रैषः कर्तव्यः?
यदि तावत्किमः कादेशः, कस्मा अनुब्रूहीति भवितव्यम्।
अथ न किमः, कायानुब्रूहीति भवितव्यम्।
यद्यपि किमः, अथापि न किमः, उभयथा कस्माननुब्रूहीति भवितव्यम्। सर्वस्य हि सर्वनामसंज्ञा क्रियते, सर्वश्च प्रजापतिः, प्रजापतिश्च कः।।
अपर आह--
यद्येव किमः,
अथापि न किमः,
उभयथा कायानुब्रूहीति भवितव्यम्। संज्ञोपसर्जनयोर्हि सर्वनामसंज्ञा प्रतिषिध्यते, संज्ञा चैषा तत्र भवतः।।
-4-2-27- अपोनप्त्रपांनप्तृभ्यां घः (1450)
(घप्रत्ययाधिकरणम्)
(प्रैषविचारकभाष्यम्)
अथ यदपोनप्त्रियम्, अपांनप्त्रियं हविः, कथं तस्य संप्रैषः कर्तव्यः?
अपोनपातेऽनुब्रूहि, अपांनपातेऽनुब्रूहि।
अपोनप्त्रपांनप्तृभावः कस्मान्न भवति?
प्रत्ययसन्नियोगेन ऋकारान्तत्वमुच्यते, तेनासति प्रत्यये न भवितव्यम्।।
-4-2-28- छ च ( 1451)
(छाधिकरणम्)
(5345 सिद्धान्तवार्तिकम्।। 1 ।।)
- छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् -
(भाष्यम्) छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानं कर्तव्यम्। पैङ्गाक्षीपुत्रीयम्, तार्णबिन्दवीयम्।।
(5346 सिद्धान्तवार्तिकम्।। 2 ।।)
- शतरुद्राद् घ च -
(भाष्यम्) शतरुद्राद् घप्रत्ययो वक्तव्यः, छश्च वक्तव्यः। शतरुद्रियम्, शतरुद्रीयम्।।
-4-2-35- महाराजप्रोष्ठपदाट्ठञ् (1458)
(ठञोऽधिकरणम्)
(5350 सिद्धान्तवार्तिकम्।। 1 ।।)
- ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् -
(भाष्यम्) ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानं कर्तव्यम्। नवयज्ञो वर्ततेऽस्मिन् काले--नावयज्ञिकः, पाकयज्ञिकः।।

(5351 सिद्धान्तवार्तिकम्।। 2 ।।)
- पूर्णमासादण् -
(भाष्यम्) पूर्णमासादण्वक्तव्यः। पूर्णमासो वर्ततेऽस्मिन् काले--पौर्णमासी तिथिः।।
-4-2-36- पितृव्यमातुलमातामहपितामहाः (1459)
(निपातनाधिकरणम्)
(निपातनव्युत्पादकं भाष्यम्)
पितृव्यमातुलेति किं निपात्यते?
(5352 व्युत्पादकवार्तिकम्।। 1 ।।)
- पितृमातृभ्यां भ्रातरि व्यड्डुलचौ -
(भाष्यम्) पितृमातृभ्यां भ्रातरि व्यड्डुलचौ प्रत्ययौ निपात्येते। पितुर्भ्राता--पितृव्यः, मातुर्भ्राता--मातुलः।
मातामहपितामहेति किं निपात्यते?
(5353 व्युत्पादकवार्तिकम्।। 2 ।।)
- मातृपितृभ्यां पितरि डामहच् -
(भाष्यम्) मातृपितृभ्यां पितरि डामहच्प्रत्ययो निपात्यते। मातुः पिता--मातामहः, पितुः पिता--पितामहः।।
(5354 सिद्धान्तवार्तिकम्।। 3 ।।)
- मातरि षिच्च -
(भाष्यम्) षिच्च वक्तव्यः। पितामही, मातामही।।
(5355 अवग्रहे रूपसाधकं वार्तिकम्।। 4 ।।)
- महो वा छन्दस्यानङोऽवग्रहदर्शनात् -
(भाष्यम्) महो वा पुनरेष भविष्यति, छन्दस्यानङोऽवग्रहदर्शनात्। छन्दस्यानङोऽवग्रहो दृश्यते--पिता--मह इति।।
(5356 सिद्धान्तवार्तिकम्।। 5 ।।)
- अवेर्दुग्धे सोढदूसमरीसचः -
(भाष्यम्) अवेर्दुग्धे सोढदूसमरीसच इत्येते प्रत्यया वक्तव्याः। अविसोढम्, अविदूसम्, अविमरीसम्।।
(5357 सिद्धान्तवार्तिकम्।। 6 ।।)
- तिलान्निष्फलात्पिञ्जपेजौ -
(भाष्यम्) तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ। तिलपिञ्जः, तिलपेजः।।
(5358 सिद्धान्तवार्तिकम्।। 7 ।।)
- पिञ्जश्छन्दसि डिच्च -
(भाष्यम्) पिञ्जश्छन्दसि डिच्च वक्तव्यः। तिल्पिञ्जं दण्डानतम्।।
-4-2-38- भिक्षादिभ्योऽण् (1461)
(अणोऽधिकरणम्)
(युवतिशब्दपाठफलबोधकं भाष्यम्)
किमर्थं भिक्षादिषु युवतिशब्दः पठ्यते,न तस्य समूहः (4-2-37) इत्येव सिद्धम्। न सिद्धयति. अनुदात्तादिलक्षणोऽञ्प्राप्तः, तद्बाधनार्थम्। अत उत्तरं पठति--
(5359 युवतिपाठानर्थक्यबोधकं वार्तिकम्।।1।।)
भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्।।
भिक्षादिषु युवतिग्रहणानर्थकम्। किं कारणम्? पुंवद्भावस्य सिद्धत्वात्। प्रत्ययविधौ पुंवद्भावोऽत्र भविष्यति। भस्याढे तद्धिते पुंवद्भवतीति। सिद्धश्च प्रत्ययविधौ । स च सिद्धः प्रत्ययविधौ ।।
-4-2-39- गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् (1462)
(वुञोऽधिकरणम्)
(5360 पूरकवार्तिकम्।। 1 ।।)
- वृद्धाच्च -
(भाष्यम्) वृद्धाच्चेति वक्तव्यम्। वृद्धानां समूहो वार्द्धकम्।।
(5361 एकदेशिवार्तिकम्।। 2 ।।)
- अञो वुञ्पूर्वविप्रतिषिद्धम् -
(भाष्यम्) अञो वुञ्भवति पूर्वविप्रतिषेधेन। अञोऽवकाशः--कपोत--कापोतम्। वुञोऽवकाशः--ग्लुचकायनि--ग्लौचुकायनकम्।
इहोभयं प्राप्नोति--औपगवकम्, कापटवकम्।
वुञ्भवति पूर्वविप्रतिषेधेन।।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।

न वक्तव्यः।
वक्ष्यत्येतत्--पूर्वोऽपि वुञ् परमञ्ञं बाधत इति।।
अथ वा--इष्टवाची परशब्दः, विप्रतिषेधे परं यदिष्टं तद्भवतीति।।
(5362 विप्रतिषेधबोधकवार्तिकम्।। 3 ।।)
- ठक्तु विप्रतिषेधात् -
(भाष्यम्) ठक्तु भवति विप्रतिषेधेन।
ठकोऽवकाशः--सक्तु--साक्तुकम्।
अञ्ञः स एव।
इहोभयं प्राप्नोति--आपूपिकम्, शाष्कुलिकम्, मौदकिकम्। ठग्भवति विप्रतिषेधेन।।
-4-2-40- केदाराद्यञ्च (1463)
(5363 पूरकवार्तिकम्।। 1 ।।)
- गणिकायाश्च -
(भाष्यम्) गणिकायाश्चेति वक्तव्यम्। गणिकानां समूहो गाणिक्यम्।।
-4-2-42- ब्राह्मणमाणववाडवाद्यन् (1465)
(यन्प्रत्ययाधिकरणम्)
(नित्वफलबोधकं भाष्यम्)
किमर्थं ब्राह्मणादिभ्यो यन्विधीयते, न यञ्प्रकृतस्सोनुवर्तिष्यते?
न ह्यस्ति विशेषो ब्राह्मणादिभ्यो यनो वा यञो वा, तदेव रूपं स एव स्वरः।
एवं तर्हि सिद्धे सति यद् ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्यः--अन्येभ्योऽप्ययं भवतीति।।
किमेतस्य ज्ञापने प्रयोजनम्?
यन्प्रकरणे पृष्ठादुपसंख्यानमिति चोदयिष्यति तन्न कर्तव्यं भवति।।
(5364 सिद्धार्थकथनपरं वार्तिकम्।। 1 ।।)
- यन्प्रकरणे पृष्ठादुपसंख्यानम् -
(भाष्यम्) यन्प्रकरणे पृष्ठादुपसंख्यानं कर्तव्यम्। पृष्ठानां समूहः--पृष्ठ्यः--षडहः।।
-4-2-43- ग्रामजनबन्धुभ्यस्तल् (1466)
(तल्प्रत्ययाधिकरणम्)
(5365 सिद्धान्तवार्तिकम्।। 1 ।।)
- गजसहायाभ्यां च -
(भाष्यम्) गजसहायाभ्यां चेति वक्तव्यम्। गजता, सहायता।।
(5366 सिद्धान्तवार्तिकम्।। 2 ।।)
- अह्नः खः -
(भाष्यम्) खो वक्तव्यः। अह्नां समूहोऽहीनः।।
(5367 सिद्धान्तवार्तिकम्।। 3 ।।)
- क्रतौ -
(भाष्यम्) क्रताविति वक्तव्यम्।
इह मा भूत्--
आह्नाय धूतपाप्मानो भास्कराजितमृत्यवः।।
(5368 सिद्धान्तवार्तिकम्।। 4 ।।)
- पर्श्वाः सण् -
(भाष्यम्) पर्श्वाः सण् वक्तव्यः पर्शूनां समूहः पार्श्वम्।
यदि सण् क्रियते, इत्संज्ञा न प्राप्नोति।।
एवं तर्हि णस्वक्तव्यः।
-4-2-45- खण्डिकादिभ्यश्च (1468)
(अञोऽधिकरणम्)
(गणे उलूकशब्दपाठप्रयोजनभाष्यम्)
खण्डिकशुकोलूक। किमर्थं खण्डिकादिषूलूकशब्दः पठ्यते, न अनुदात्तादेः इत्येव सिद्धम्?
न सिध्यति।
चाषोलूकयोश्छन्दस्याद्युदात्तः प्रयोगो दृश्यते--चाषेण किकिदीविना, यदुलूको वदति।
नैतयोश्छन्दसि सामूहिको दृश्यते। यत्र च दृश्यते, तत्रैतावनुदात्तादी।।

इदं तर्हि प्रयोजनम्--अयमौलूक्यो गोत्रम्, तत्र गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम्।
एतदपि नास्ति प्रयोजनम्।
बहुवचनान्तानां हि सामूहिकः, बहुषु च लुक्। तत्र लुकि कृते अनुदात्तादेः इत्येव सिद्धम्।
न सिध्यति।
गोत्रेऽलुगचि (4।1।89) इत्यलुक् प्राप्नोति।।
(क्षुद्रकमालवपाठप्रयोजने भाष्यवार्तिकम्)
अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात्।
(भाष्यम्) अनुदात्तादेः इत्येवाञ्सिद्धः, किमर्थं क्षुद्रकमालवशब्दः खण्डिकादिषु पठ्यते।
गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम्।।
(पाठप्रयोजनखण्डने भाष्यवार्तिकम्)
गोत्राद्वुञ् न च तद्गोत्रम्।।
(भाष्यम्) गोत्राद् वुञ् भवतीत्युच्यते, न च क्षुद्रकमालवशब्दो गोत्रम्--न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते। तद्यथा--जनपदसमुदायो जनपदशब्देन न गृह्यते, काशिकोसलीया इति वुञ्न भवति।।
(प्रयोजनसमर्थकं भाष्यम्)
तदन्तविधिना प्राप्नोति।।
(तदन्तविधिखण्डने भाष्यवार्तिकम्)
तदन्तान्न स सर्वतः।।
(भाष्यम्) परिगणितेषु कार्येषु तदन्तविधिः। न चेदं तत्र परिगण्यते।।
(तदन्तविधिसाधनेन फलसमर्थने भाष्यवार्तिकम्)
ज्ञापकं स्यात्तदन्तत्वे
(भाष्यम्) एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति।।
(तदन्तविधिज्ञापनेन इष्टबोधकभाष्यवार्तिकम्)
तथा चापिशलेर्विधिः।
(भाष्यम्) एवञ्च कृत्वाऽऽपिशलेराचार्यस्य विधिरुपपन्नो भवति--धेनुरनञि कमुत्पादयति--धेनूनां समूहो धैनुकम्।।
ञीति किमर्थम्?
अधेनूनां समूहः--आधेनवम्।।
(सिद्धान्तख्यापकं भाष्यवार्तिकम्)
सेनायां नियमार्थं वा
(भाष्यम्) अथवा नियमार्थोऽयमारम्भः--क्षुद्रकमालवशब्दात्सेनायामेव।
क्व मा भूत्?
क्षौद्रकमालवकमन्यदिति।।
(मतान्तरेण सिद्धान्तभाष्यवार्तिकम्)
यथा बाध्येत वाऽञ् वुञा।।
(भाष्यम्) अथवा ज्ञापयत्याचार्यः पूर्वोऽपि वुञ् परमञं बाधत इति।।
(अनुपपत्तिपरिहारभाष्यम्)
ननु चोक्तं गोत्राद् वुञ् न च तद्गोत्रमिति।
तदन्तविधिना प्राप्नोति।
ननु चोक्तम्--
तदन्तान्न स सर्वतः इति।
ज्ञापकं स्यात्तदन्तत्वे।
एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति।।
कथं पुनरेतदुभयं शक्यं ज्ञापयितुम्--भवति च तदन्तविधिः, पूर्वश्च वुञ् परमञं बाधत इति।
उभयं ज्ञाप्यते।।
(5369 सिद्धार्थकं वार्तिकम्।। 1 ।।)
- अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् -
(भाष्यम्) अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायामिति वक्तव्यम्। क्षौद्रकमालवी सेना चेत्।
क्व मा भूत्?
क्षौद्रकमालवकमन्यदिति।।
-4-2-49- पाशादिभ्यो यः( 1472)

(यप्रत्ययाधिकरणम्)
(गणपठितशब्देभ्यः समूहार्थे प्रत्ययोपपादकभाष्यम्)
पाशतृणधूमवात्।
(5370 गणे वातशब्दपाठक्षेपे वार्तिकम्।। 1 ।।)
- पृथग्वातादर्शनादसमूहः -
(भाष्यम्) पृथग्वातादर्शनादयुक्तोऽयं वातशब्दस्य सामूहिके पाठः। न हि पृथग्वाता दृश्यन्ते।
न तर्हीदानीमिदं भवति--वात्येति?
भवति।।
(5371 गणे वातशब्दपाठोपपादकं वार्तिकम् ।। 2 ।।)
- शीघ्रत्वे तु -
(भाष्यम्) शीघ्रो वातो वात्या।
अथ वा पृथग्वाता अपि दृश्यन्ते।
तद्यथा--पूर्वो वातः, उत्तरो वातः, सर्वतो वातः, वाता वान्तु दिशो दश।।
-4-2-50- खलगोरथात् (1473)
-4-2-51- इनित्रकट्यचश्च (1474)
(5372 यथासङ्ख्यबोधकं वार्तिकम्।। 1 ।।)
- खलादिभ्य इनिः -
(भाष्यम्) खलादिभ्य इनिर्वक्तव्यः। खलिनी, डाकिनी, कुन्दुमिनी, कुटुम्बिनीति।।
-4-2-52- विषयो देशे (1475)
(अर्थाधिकरणम्)
(5373 एकदेशिवार्तिकम्।। 1 ।।)
- विषयाभिधाने जनपदे लुब् बहुवचनविषयात् -
(भाष्यम्) विषयाभिधाने जनपदे लुब् बहुवचनविषयाद्वक्तव्यः। अङ्गानां विषयो देशः--अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्राः।।
(5374 एकदेशिवार्तिकम् ।। 2 ।।)
- गान्धार्यादिभ्यो वा -
(भाष्यम्) गान्धार्यादिभ्यो वेति वक्तव्यम्। गान्धारः, गान्धारयः। वासातः, वसातयः। शैबः, शिबयः।।
(5275 एकदेशिवार्तिकम्।। 3 ।।)
- राजन्यादिभ्यो वा वुञ् -
(भाष्यम्) राजन्यादिभ्यो वा वुञ् वक्तव्यः। राजन्यकः, राजन्याः दैवयातवकः, दैवयातवाः।।
(5376 एकदेशिवार्तिकम् ।। 4 ।।)
- बैल्ववनादिभ्यो नित्यम् -
(भाष्यम्) बैल्ववनादिभ्यो वुञ् नित्यमिति वक्तव्यम्। बैल्ववनकः, आम्बरीषपुत्रकः, आत्मकामेयकः।
तत्तर्हीदं बहु वक्तव्यम्।।
(5377 सिद्धान्तवार्तिकम्।। 5 ।।)
- न वाऽभिधेयस्य निवासविषयत्वाद्निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः -
(भाष्यम्) न वा वक्तव्यम्।
किं कारणम्? अभिधेयस्य निवासविषयत्वात्। यदभिधेयं स निवासश्च विषयश्च। अभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुप्, विषयविवक्षायां प्रत्ययो भविष्यति।।
इदं तर्हि प्रयोजनम्--एतज्ज्ञास्यामि--इह नित्यो विधिः, इह विभाषेति।
एतदपि नास्ति प्रयोजनम्।
यावता यदभिधेयं स निवासश्च विषयश्च। अभिधेयस्य निवासविषयत्वात्--निवासविवक्षायां लुप्, विषयविवक्षायां प्रत्यय इत्येव।।
-4-2-55- सोऽस्यादिरिति च्छन्दसः प्रगाथेषु (1478)
(अर्थाधिकरणम्)
(5378 सिद्धान्तसाधकवार्तिकम्।। 1 ।।)
- छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानम् -
(भाष्यम्) छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानं कर्तव्यम्। त्रिष्टुबेव त्रैष्टुभम्, अनुष्टुबेवानुष्टुभम्, जगत्येव जागतम्।।
-4-2-59- तदधीते तद्वेद (1482)
(अर्थाधिकरणम्)
(अर्थद्वयकथनप्रयोजनभाष्यम्)

किमर्थमिमावुभावप्यर्थौ निर्दिश्येते, न योऽधीते वेत्त्यप्यसौ, यस्तु वेत्त्यधीतेऽप्यसौ।
नैतयोरावश्यकः समावेशः।
भवति हि कश्चित्संपाठं पठति, न च वेत्ति; कश्चिच्च वेत्ति, न च संपाठं पठति।।
-4-2-60- क्रतूक्थादिसूत्रान्ताट्ठक् (1483)
(ठकोऽधिकरणम्)
(सूत्रार्थबोधकभाष्यम्)
उक्थादीत्युच्यते, कानि पुनरुक्थानि?
सामानि। यद्येवं सामगमात्रे औक्थिक इति प्राप्नोति।
नैष दोषः।
तार्दर्थ्यात्ताच्छब्द्यं भविष्यति। उक्थार्थमुक्थम्।
इह--उक्थान्यधीते--औक्थिकः, यज्ञमधीते--याज्ञिकः।
य इदानीमौक्थिक्यं याज्ञिक्यं चाधीते, कथं तत्र भवितव्यम्?
औक्थिकः, याज्ञिक इत्येव भवितव्यम्।
कथम्?
(5379 एकदेशिवार्तिकम्।। 1 ।।)
- तस्येदम्प्रत्ययाल्लुक् -
(भाष्यम्) तस्येदम्प्रत्ययाल्लुग्वक्तव्यः, तस्येदं प्रत्ययस्य च।।
स तर्हि वक्तव्यः।
न वक्तव्यः।
इहास्माभिस्त्रैशब्द्यं साध्यम्--उक्थान्यधीते, औक्थिक्यमधीते, औक्थिक इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति--अविरविकन्यायेन।
तद्यथा--अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति आविकमिति। एवमुक्थान्यधीत इति विगृह्य औक्थिक इति भविष्यति, औक्थिक्यमिति विगृह्य वाक्यमेव।।
(इकग्विधायकं भाष्यम्)
विद्यालक्षणकल्पसूत्रा-
न्तादकल्पादेरिकक् स्मृतः।।
विद्या--वायसविद्यिकः, सार्पविद्यिकः। विद्या।
लक्षणः--गौलक्षणिकः, आश्वलक्षणिकः। लक्षण।
कल्पः--पाराशरकल्पिकः। पारकल्पिकः। कल्प।
सूत्रः--वार्तिकसूत्रिकः, सांग्रहसूत्रिकः।।
(पदकृत्यभाष्यम्)
अकल्पादेरिति किमर्थम्?
काल्पसूत्रः।
(इर्कक्संकोचकभाष्यम्)
विद्याचानङ्गक्षत्रधर्मत्रिपूर्वा।
विद्याचानङ्गक्षत्रधर्मत्रिपूर्वेति वक्तव्यम्। आङ्गविद्यः, क्षात्रविद्यः, धार्मविद्यः, त्रैविद्यः।
(ठग्विधायकं भाष्यम्)
आख्यानाख्यायिकेति-
हासपुराणेभ्यश्च ठग्वक्तव्यः।
यावक्रीतिकः, प्रैयङ्गविकः, यायातिकः, आख्यान।।
आख्यायिका--वासवदत्तिकः, सौमनोत्तरिकः।।
ऐतिहासिकः।। पौराणिकः।।
(लुग्विधिभाष्यम्)
सर्वसादेर्द्विगोश्च लः।
सर्वसादेर्द्विगोश्च लो वक्तव्यः। सर्ववेदः, सर्वतन्त्रः। सवार्त्तिकः, ससंग्रहः। पञ्चकल्पः, द्वितन्त्रः, द्विवेदः।।
(संग्रहभाष्यम्)
अनुसूर्लक्ष्यलक्षणे
सर्वसादेर्द्विगोश्च लः।
इकन्पदोत्तरपदात्

शतषष्टेः षिकन्पथः।।
-4-2-62- अनुब्राह्मणादिनिः (1485)
(इनिप्रत्ययाधिकरणम्)
(प्रत्याख्यानभाष्यम्)
अयं योगः शक्योऽवक्तुम्।
कथमनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिन इति?
इनिनैतन्मत्वर्थीयेन सिद्धम्।।
-4-2-63- वसन्तादिभ्यष्ठक् (486)
(सूत्राक्षेपभाष्यम्)
अयुक्तोऽयं निर्देशः। अधीते--वेदेति वर्तते, न च वसन्तो नामाध्ययनमस्ति।।
(समाधानभाष्यम्)
नैष दोषः।
साहचर्यात्ताच्छब्द्यं भविष्यति। वसन्तसहचरितमध्ययनम्--वसन्तोऽध्ययनमिति।।
-4-2-64- प्रोक्ताल्लुक् (1485)
(लुकोऽधिकरणम्)
(सूत्रस्वरूपसाधकं भाष्यम्)
अयुक्तोऽयं निर्देशः। प्रौक्तादिति भवितव्यम्।
सौत्रो निर्देशः।।
-4-2-65- सूत्राच्च कोपधात् (1486)
(सूत्रपूरकभाष्यम्)
संख्याप्रकृतेरिति वक्तव्यम्। इह मा भूत्--माहावार्तिकः, चान्दनगन्धिकः, कालापकः।।
-4-2-66- छन्दोब्राह्मणानि च तद्विषयाणि (1487)
(छन्दोब्राह्मणानां तद्विषयाधिकरणम्)
(इष्टसिद्धिविषयकजिज्ञासाभाष्यम्)
किमर्थमिदमुच्यते?
(5380 सूत्रविषयप्रदर्शकं वार्तिकम्।। 1 ।।)
- अन्यत्राभिधेयस्यानित्यत्वात् छन्दोब्राह्मणानां तद्विषयवचनम् -
(भाष्यम्) अन्यत्राभिधेयमनित्यं भवति।
पाणिनीयमिति वा भवति, पाणिनीया इति वा।
अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानामप्यनित्यता प्राप्नोति। इष्यते च तद्विषयतैव स्यादिति।
तच्चान्तरेण यत्नं न सिध्यतीति च्छन्दोब्राह्मणानां तद्विषयवचनम्।।
(प्रयोजनान्तरावतारकं भाष्यम्)
एवमर्थमिदमुच्यते?
अस्ति प्रयोजनमेतत्।
किं तर्हीति?
(5381 पूर्वोक्तविषयसंग्रहाभावप्रदर्शकं वार्तिकम्।। 2 ।।)
- तत्र यथाधिकारं तद्विषयप्रसङ्गः -
(भाष्यम्) तत्र यथाऽधिकारं तद्विषयता प्राप्नोति।
अधीते--वेदेति वर्तते, तेनाध्येतृवेदित्रोरेव तद्विषयता स्यात्; येऽन्य उपचारास्तत्र न स्यात्।
यथेह भवति--पाणिनीयं महत्सुविहितमिति,
एवमिहापि स्यात्--कठं महत्सुविहितमिति।।
(5382 सिद्धान्तवार्तिकम्।। 3 ।।)
- सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
प्रोक्ताधिकार एव तद्विषयता वक्तव्या। तेन प्रोक्तम् (4।3।101) छन्दोब्राह्मणान्यध्येतृवेदित्रोः इति।।
तत्तर्ह्यध्येतृवेदितृग्रहणं कर्तव्यम्।
ननु चेहापि क्रियते।
परार्थमेतद्भवति--तदधीते--तद्वेदेति।

एवं तर्हि--यावदिह--च्छन्दोब्राह्मणग्रहणम्, तावत्तत्राध्येतृवेदितृग्रहणम्।
ननु च तत्रापि क्रियते।
परार्थं तद्भविष्यति--पुराणप्रोक्तेषु ब्राह्मणकल्पेषु (4।3।105) शौनकादिभ्यश्छन्दसि (106) इति।
इह वा छन्दोब्राह्मणग्रहणं क्रियते, तत्र वाऽध्येतृवेदितृग्रहणम्, कोन्वत्र विशेषः।।
(5383 अनिष्टनिरासे वार्तिकम्।। 4 ।।)
- याज्ञवल्क्यादिभ्यः प्रतिषेधः -
(भाष्यम्) याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः। याज्ञवल्कानि ब्राह्मणानि, सौलभानि।
किं प्रोक्ताधिकारे तद्विषयता क्रियत इत्यतो याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः?
नेत्याह।
सर्वथा याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः।।
(5384 पूर्ववार्तिकप्रत्याख्याने वार्तिकम्।। 5 ।।)
- इनिर्वा प्रोक्ते तद्विषयः -
(भाष्यम्) अथवा इनिः प्रोक्ते तद्विषयो भवतीति वक्तव्यम्।।
(वार्तिकाक्षेपभाष्यम्)
यदि--इनिः प्रोक्ते तद्विषयो भवतीत्युच्यते, एवमपि पैङ्गी कल्पः, अत्रापि प्राप्नोति।।
(5385 समाधानवार्तिकम्।। 6 ।।)
- काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् -
(भाष्यम्) काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम्।
काश्यपकौशिकाभ्यामेवेनिः कल्पे तद्विषयो भवति, नान्येभ्य इति।।
(आक्षेपभाष्यम्)
एवमपि छणादीनां तद्विषयता न प्राप्नोति--तैत्तिरीयाः, वारतन्तवीयाः।।
(समाधानभाष्यम्)
यदि पुनश्छणादयः प्रोक्ते तद्विषया भवन्तीत्युच्येत।।
(प्रत्याक्षेपभाष्यम्)
एवमपि पैङ्गीकल्पः, अत्रापि प्राप्नोति।।
(प्रत्याक्षेपे समाधानभाष्यम्)
काश्यपकौशिकग्रहणं च कल्पे नियमार्थमित्येव।।
(पुनः प्रत्याक्षेपभाष्यम्)
एवमप्यौत्सर्गिकाणां तद्विषयता न प्राप्नोति--क्रौडाः, काङ्कताः, मौदाः, पैप्पलादाः।।
(दोषान्तरदर्शनेन प्रत्याक्षेपनिरासभाष्यम्)
छणादयश्चाप्यौत्सर्गिकानध्येतृवेदित्रोरेव बाधेरन्, येऽन्ये उपचारास्तत्र न बाधेरन्--तित्तिरिणा प्रोक्ताः श्लोका इति।।
(वार्तिकान्यथासिद्धिकरणेनोपसंहारभाष्यम्)
अस्तु तर्ह्यविशेषेण।
ननु चोक्तं याज्ञवल्क्यादिभ्यः प्रतिषेध इति।
वक्ष्यत्येतत्--याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वादिति, तत्रैव वक्तव्यम्--तद्विषयता च न भवतीति।।
कथं काश्यपिनः, कौशिकिन इति?
इनिः प्रोक्ते तद्विषयौ भवतीत्युच्यमाने--अवश्यमत्र काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम्।
तदेवेदानीं विध्यर्थं भविष्यति।।
कथं पाराशरिणो भिक्षवः, शैलालिनो नटाः?
अत्रापि तद्विषयता चेत्यनुवर्तिष्यते।।
-4-2-67- तदस्मिन्नस्तीति देशे तन्नाम्नि (1488)
-4-2-68- तेन निर्वृत्तम् (9489)
-4-2-69- तस्य निवासः (1490)
-4-2-70- अदूरभवश्च (1491)
(चातुरर्थिकाधिकरणम्)
(एकानेकवाक्यतोपक्षेपे भाष्यम्)
किं पुनरयमेको योग आहोस्विन्नाना योगाः।
किं चातः?
(एकवाक्यतायां दोषदर्शकं भाष्यम्)

यद्येको योगः,
उत्तरेष्वर्थादेशनेषु देशे तन्नाम्नि देशे तन्नाम्नि इत्यनुवृत्तिः कर्तव्या, न ह्येकयोगेऽनुवृत्तिर्भवति।
कथं ज्ञायते?
यदयं तदधीते तद्वेद (4।2।59) इति द्विस्तद्ग्रहणं करोति।।
(भिन्नवाक्यतायां दोषदर्शकं भाष्यम्)
अथ नाना योगाः,
ओरञ् (4।2।71) इत्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यात्।
यथेच्छसि तथास्तु।।
(एकवाक्यतायां दोषाभावबोधकं भाष्यम्)
अस्तु तावदेको योगः।
ननु चोक्तमुत्तरेष्वर्थादेशनेषु देशे तन्नाम्नि देशे तन्नाम्नि इत्यस्यानुवृत्तिः कर्तव्या, न ह्येकयोगेऽनुवृत्तिर्भवतीति।
एकयोगेऽप्यनुवृत्तिर्भवति।
कथं ज्ञायते?
यदयं तदस्यास्त्यस्मिन्निति मतुप् (5।2।94) इति द्विस्तद्ग्रहणं न करोति।।
कथं तदधीते तद्वेद इति?
प्रमादकृतमाचार्यस्य, शक्यमकर्तुम्।
(भिन्नवाक्यतायां दोषाभावबोधकं भाष्यम्)
अथ वा सन्तु पुनर्नाना योगाः।
ननु चोक्तम्--ओरञित्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यादिति।
नैष दोषः।
गोयूथवदधिकाराः।
तद्यथा--गोयूथमेकदण्डप्रघट्टितं सर्वं समं घोषं गच्छति, तद्वदधिकाराः।।
-4-2-71- ओरञ् (1492)
(अञोऽधिकरणम्)
(5386 विप्रतिषेधवार्तिकम्।। 1 ।।)
- ओरञ्विधेर्नद्यां मतुब्विप्रतिषिद्धम् -
(भाष्यम्) ओरञ्विधेर्नद्यां मतुब्भवति विप्रतिषेधेन।
ओरञ्विधेरवकाशः--कक्षतु--काक्षतवम्, काकपेलवम्।
मतुपोऽवकाशः--उदुम्बरावती, मशकावती।
इहोभयं प्राप्नोति--इक्षुमती, द्रुमती।
मतुब्भवति विप्रतिषेधेन।।
-4-2-72- मतोश्च बह्वजङ्गात् (1493)
(पदकृत्यभाष्यम्)
अङ्गग्रहणं किमर्थम्?
यथा बह्वज्ग्रहणमङ्गविशेषणं विज्ञायेत। बह्वचोऽङ्गादिति।।
(अङ्गग्रहणस्य फलबोधकं भाष्यम्)
अथाक्रियमाणेऽङ्गग्रहणे बह्वज्ग्रहणं कस्य विशेषणं स्यात्?
मत्वन्तविशेषणम्।
तत्र को दोषः?
इहापि प्रसज्येत--मालावतामयं निवासो मालावतम्।
अस्ति चेदानीं कश्चिदबह्वज्मत्वन्तो यदर्थो विधिः स्यात्।
अस्तीत्याह--श्ववान्, स्ववान्।।
-4-2-85- नद्यां मतुप् (1506)
(मतुबधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं नद्यां मतुब्विधीयते, न तदस्यास्त्यस्मिन्निति मतुप् (5।2।94) इत्येव सिद्धम्।।
(5387 समाधाने वार्तिकम्।। 1 ।।)
- नद्यां मतुब्वचनं मत्वर्थेऽण्विधानात् -
(भाष्यम्) नद्यां मतुब्वचनं क्रियते मत्वर्थेऽण्विधानात्।

अयं मत्वर्थेऽण्विधीयते, स विशेषविहितः सामान्यविहितं मतुपं बाधेत।।
(5388 समाधानान्तरबोधकं वार्तिकम्।। 2 ।।)
- निर्वृत्ताद्यर्थं च -
(भाष्यम्) निर्वृत्ताद्यर्थं च नद्यां मतुब्वचनं क्रियते।
निर्वृत्ताद्यर्थेषु मतुब्यथा स्यात्।।
-4-2-87- कुमुदनडवेतसेभ्यो ड्मतुप् (1508)
(विधायकं भाष्यम्)
महिषाच्चेति वक्तव्यम्। महिष्मान्।।
-4-2-91- नडादीनां कुक्च (1412)
(छाधिकरणम्)
(कुगाक्षेपभाष्यम्)
यदि पुनरयं कुट् परादिः क्रियेत।।
(5389 कुडागमे दोषवार्तिकम्।। 1 ।।)
- कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् -
(भाष्यम्) कुटि सति प्रत्ययादेरित्यादेशस्यानुपपत्तिः।
कुटि कृते अनादित्वादादेशो न प्राप्नोति।।
एवं तर्हि पूर्वान्तः करिष्यते।।
(5390 कुगागमे दोषवार्तिकम्।। 2 ।।)
- पूर्वान्ते ह्रस्वत्वम् -
(भाष्यम्) यदि पूर्वान्तः, ह्रस्वत्वं वक्तव्यम्--क्रुञ्चकीयाः।
परादौ पुनः सति केऽणः (7।4।13) इति ह्रस्वत्वं सिद्धं भवति।
अस्तु तर्हि परादिः। ननु चोक्तं कुटि कृतेऽनादित्वादादेशो न प्राप्नोतीति।।
(5391 कुडागमे दोषाभाववार्तिकम्।। 3 ।।)
- सिद्धं त्वादिष्टस्य कुड्वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
आदिष्टस्य कुड्वचनात्, कुट्चादिष्टस्येति वक्तव्यम्।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।।
(5392 आदिष्टस्येति न्यासाभावेऽपि दोषाभावबोधकं वार्तिकम्।। 4 ।।)
- संनियोगात्सिद्धम् -
(भाष्यम्) संनियोगः करिष्यते।
क एष यत्नश्चोद्यते--संनियोगो नाम?
चकारः कर्तव्यः, कुट्च।
किं च ?
यच्चान्यत्प्राप्नोति।
किं चान्यत् प्राप्नोति?
आदेशः।
सिध्यति।
सूत्रं तर्हि भिद्यते।।
(सिद्धान्तभाष्यम्)
यथान्यासमेवास्तु।
ननु योक्तं पूर्वान्ते ह्रस्वत्वमिति।
निपातनादेतत्सिद्धम्।
किं निपातनम्?
क्रुञ्चा ह्रस्वत्वं चेति।
तत्तर्हि पूर्वान्ते सति निपातनं कर्तव्यम्।
परादावप्येष दोषः--यद्धि तत्केऽण इति ह्रस्वत्वम्, न तत्कादिमात्रे शक्यं विज्ञातुम्।
इहापि प्रसज्येत--नदीकल्पः परीवाहः, कुमारीकाम्यतीति।

तस्मादुभाभ्यामेतद्वक्तव्यम्--क्ङ्ञ्चा ह्रस्वत्वञ्चेति।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्।।
-4-2-92-शेषे (1513)
(शेषार्थाधिकरणम्)
(शेषार्थविवक्षाभाष्यम्)
शेष इत्युच्यते, कः शेषो नाम?
अपत्यादिभ्यश्चातुरर्थपर्यन्तेभ्यो येऽन्येऽर्थाः स शेषः।।
(शेषपदाक्षेपभाष्यम्)
किमर्थं पुनः शेषग्रहणं क्रियते?
शेषे घादयो यथा स्युः स्वार्थे मा भूवन्निति।
नैतदस्ति प्रयोजनम्।
इदं तावदयं प्रष्टव्यः--अणादयः स्वार्थे कस्मान्न भवन्तीति?
अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, तेन स्वार्थे न भविष्यन्ति।
इमेऽपि तर्हि जातादिष्वर्थेषु विधीयन्ते, तेन स्वार्थे न भविष्यन्ति।।
(प्रत्याक्षेपभाष्यम्)
कथं पुनरिहोच्यमाना घादयो जातादिषु शक्या विज्ञातुम्?
(प्रत्याक्षेपसमाधानभाष्यम्)
अनुवर्तिष्यन्ते तत्र घादयः।
यद्यनुवर्तन्ते घादयः, या या परा प्रकृतिस्तस्यास्तस्याः पूर्वे पूर्वे प्रत्ययाः प्राप्नुवन्ति।
एवं तर्हि जातादिष्वर्थेषु घादीनपेक्षिष्यामहे।
अयुक्तैवं बहुनोऽपेक्षा। अपेक्षमाणोऽयमनन्तरं योगमपेक्षेत।
बहुनोऽप्यपेक्षा भवति।
तद्यथा--कषादिषु यथाविध्यनुप्रयोगः (3।4।46) इति ससामान्यकं सविशेषकं सर्वमपेक्ष्यते।
अथ वा पुनरस्त्वनुवृत्तिः।
ननु चोक्तं या या परा प्रकृतिस्तस्यास्तस्याः पूर्वे पूर्वे प्रत्ययाः प्राप्नुवन्तीति।
नैष दोषः।
संबन्धमनुवर्तिष्यते। राष्ट्रावारपाराद्घखौ(4।2।93)। ग्रामाद्यखञ्ञौ (94)
राष्ट्रावारपाराद्घखौ। कत्र्यादिभ्यो ढकञ्ञ्(95)
राष्ट्रावारपाराद्घखौ ग्रामाद्यखञ्ञाविति।
(शेषपदाक्षेपसमाधानभाष्यम्)
अत उत्तरं पठति।
(5393 शेषपदाक्षेपसमाधाने वार्तिकम्।। 1 ।।)
- शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् -
(भाष्यम्) शेषवचनं क्रियते शेषे घादयो यथा स्युः, अपत्यादिषु मा भूवन्निति।
कथं च प्राप्नुवन्ति?
(5394 समाधानसमर्थकं वार्तिकम्।। 2 ।।)
- तस्येदंवचनात्प्रसङ्गः -
(भाष्यम्) तस्येदंविशेषा ह्येते--अपत्यम्, समूहः, निवासः, विकार इति।।
(5395 समाधानाक्षेपवार्तिकम्।। 3 ।।)
- विप्रतिषेधात्सिद्धम् -
(भाष्यम्) अणादयः क्रियन्तां घादय इति, किमत्र कर्तव्यम्?
अणादयो भवन्ति विप्रतिषेधेन।।
(5396 आक्षेपनिरासवार्तिकम्।। 4 ।।)
- न वा परत्वाद्घादीनाम् -
(भाष्यम्) न वा एष युक्तो विप्रतिषेधः।
किं कारणम्?
परत्वाद् घादीनाम्। विप्रतिषेधे परमित्युच्यते, पूर्वे चाणादयः परे घादयः।।
परेऽणादयः करिष्यन्ते।
सूत्रविपर्यासश्चैवं कृतो भवति।।

(5397 शेषपदप्रयोजने वार्तिकम्।। 5 ।।)
- अणपवादत्वाच्चाण्विषये घादिप्रसङ्गः -
(भाष्यम्) अणपवादत्वाच्च घादीनामण्विषये घादयः प्राप्नुवन्ति।।
(सूत्रप्रत्याख्यानभाष्यम्)
नैष दोषः।
आचार्यप्रवृत्तिर्ज्ञापयति--नाण्विषये घादयो भवन्तीति, यदयं फेश्छ च (4।1।149) इति फिञन्ताच्छं शास्ति।
नैतदस्ति ज्ञापकम्।
फिनर्थमेतत् स्यात्।
सौवीरगोत्रेष्विति वर्तते, न च फिनन्तं सौवीरगोत्रमस्ति।।
गोत्रग्रहणं सामूहिकेषु ज्ञापकम्, दैवयातवग्रहणं वैषयिकेषु, भास्त्रायणग्रहणं नैवासिकेषु।।
-4-2-93- राष्ट्रावारपाराद्घखौ (1514)
(घखाधिकरणम्)
(5398 सिद्धान्तवार्तिकम्।। 1 ।।)
- अवारपाराद्विगृहीतादपि -
(भाष्यम्) अवारपाराद्विगृहीतादपीति वक्तव्यम्। अवारीणः, पारीणः, अवारपारीणः।।
(5399 सिद्धान्तवार्तिकम्।। 2 ।।)
- विपरीताच्च -
(भाष्यम्) विपरीताच्चेति वक्तव्यम्। पारावारीणः।।
-4-2-93- राष्ट्रावारपाराद्घखौ (1514)
(घखाधिकरणम्)
(5398 सिद्धान्तवार्तिकम्।। 1 ।।)
- अवारपाराद्विगृहीतादपि -
(भाष्यम्) अवारपाराद्विगृहीतादपीति वक्तव्यम्। अवारीणः, पारीणः, अवारपारीणः।।
(5399 सिद्धान्तवार्तिकम्।। 2 ।।)
- विपरीताच्च -
(भाष्यम्) विपरीताच्चेति वक्तव्यम्। पारावारीणः।।
-4-2-95- कत्र्यादिभ्यो ढकञ् (1516)
(ढकञ्प्रत्ययाधिकरणम्)
(ग्रामपदविषयकशङ्कासमाधानभाष्यम्)
ग्रामाच्चेति वक्तव्यम्। ग्रामेयकः।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्। कत्र्यादीभ्यो ढकञित्यत्र ग्रामादित्येतदनुवर्तिष्यते।।
-4-2-96- कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु (1417)
(सूत्रप्रत्याख्याने भाष्यम्)
अयं योगः शक्योऽवक्तुम्।
कथं कौलेयकः?
कुलस्यापत्यम्।
कुक्षिग्रीवात्तु कन् ढञः।
कुलस्यापत्यं कौलेयक इति भविष्यति।
कुक्षिग्रीवादपि ढञन्तात्कन्भविष्यति।।
-4-2-99- कापिश्याः ष्फक् (1520)
(ष्फक्प्रत्ययाधिकरणम्)
बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् । बाह्लायनी, और्दायनी, पार्दायनी।
-4-2-100- रङ्कोरमनुष्येऽण्च (1521)
(अमनुष्यग्रहणाक्षेपभाष्यम्)
अमनुष्य इति किमर्थम्?
राङ्कवकः मनुष्यः।।
(5400 प्रत्याख्यानवार्तिकम्।। 1 ।।)
- रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् -

(भाष्यम्) रङ्कोरमनुष्यग्रहणमनर्थकम्।
किं कारणम्?
मनुष्यतत्स्थयोर्वुञ्विधानात्। अयं मनुष्ये मनुष्यस्थे च वुञ्विधीयते स बाधको भविष्यति।।
(एकदेशिभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः--अमनुष्ये मनुष्यस्थे ष्फगणौ भवत इति।।
(5401 प्रत्याख्यानसमर्थकं वार्तिकम्।। 2 ।।)
- अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् -
(भाष्यम्) अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेत्तन्न।
किं कारणम्?
अनिष्टत्वात्। न ह्यमनुष्ये मनुष्यस्थे ष्फगणाविष्येते।
किं तर्हि?
वुञ्ञेवेष्यते।।
(5402 अण्ग्रहणप्रत्याख्यानवार्तिकम्।। 3 ।।)
- अण्ग्रहणं च कच्छादिभ्योऽण्वचनात् -
(भाष्यम्) अण्ग्रहणं चानर्थकम्।
किं कारणम्?
कच्छादिभ्योऽण्वचनात्। कच्छादिपाठादत्राण्भविष्यति।।
-4-2-104- अव्ययात्त्यप् (1525)
(त्यप्प्रत्ययाधिकरणम्)
(अव्ययपरिगणनभाष्यम्)
परिगणनं कर्तव्यम्।
अमेह क्वतसित्रेभ्यस्त्य-
ब्विधिर्योऽव्ययात्स्मृतः।।
अमा--अमात्यः। अमा।
इह--इहत्यः। इह।
क्व--क्वत्यः। क्व।
तसि--ततस्त्यः, यतस्त्यः। तसि।
त्र। तत्रत्यः, यत्रत्यः।
इतरथा ह्यौत्तराहौपरिष्टपारतानां प्रतिषेधो वक्तव्यः स्यात्। औत्तराहः, औपरिष्टः, पारतः।।
त्यब्नेर्ध्रुवे। त्यब्नेर्ध्रुवे वक्तव्यः। नित्यः।।
निसो गते। त्यब्वक्तव्य इति। निष्ट्यः।।
अरण्याण्णः। अरण्याण्णो वक्तव्यः। आरण्याः सुमनसः।।
दूरादेत्यः। दूरादेत्यो वक्तव्यः। दूरेत्यः।।
उत्तरादाहञ्। उत्तरादाहञ् वक्तव्यः। औत्तराहः।।
(5403 संग्रहवार्तिकम्।। 1 ।।)
- अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि -
(भाष्यम्) अव्ययात्त्यबित्यत्राविष्ट्यस्य छन्दस्युपसंख्यानं कर्तव्यम्। आविष्ट्यो वर्द्धते चारुरासु।।
(5404 विप्रतिषेधेन छविधिबोधकवार्तिकम्।। 2 ।।)
- अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन -
(भाष्यम्) अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधिविधेर्वृद्धाच्छो भवति विप्रतिषेधेन।
अव्ययात्त्यब्भवतीत्यस्यावकाशः--अमात्यः।
वृद्धाच्छस्यावकाशः--शालीयः, मालीयः।
आरादुभयं प्राप्नोति, आरातीयः।
तीरोत्तरपदादञ् भवतीत्यस्यावकाशः--कखतीर--काखतीरी।
छस्य स एव।
वायसतीरादुभयं प्राप्नोति, वायसतीरीयः।।
रूप्योत्तरपदाञ्ञ्ञो भवतीत्यस्यावकाशः--चणाररूप्य--चाणाररूप्या।
छस्य स एव।
माणिरूप्यादुभयं प्राप्नोति। तं चापि छं परत्वाद्योपधलक्षणो वुञ्बाधते। माणिरूप्यकः।।

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः--शिवपुर--शैवपुरः।
छस्य स एव।
वाडवकर्षादुभयं प्राप्नोति, वाडवकर्षीयः।
कोपधादण् भवतीत्यस्यावकाशः--निलीनक--नैलीनकः।
छस्य स एव।
औलूकादुभयं प्राप्नोति, औलूकीयः।।
(5405 ठञ्ञिठोर्विप्रतिषेधबोधकवार्तिकम् ।। 3 ।।)
- तेभ्यष्ठञ्ञिठौ -
(भाष्यम्) तेभ्यस्त्यबादिभ्यष्ठञ्ञिठौ भवतो विप्रतिषेधेन।
अव्ययात्त्यब्भवतीत्यस्यावकाशः--अमात्यः।
ठञ्ञिठयोरवकाशः--कारतन्तविकी, कारतन्तविका।
आरान्नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति--आरात्की, आरात्का।।
तीरोत्तरपदादञ्भवतीत्यस्यावकाशः--करवतीर कारवतीरी।
ठञ्ञिठयोः स एव।
कास्तीरो नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोतिकास्तीरिकी, कास्तीरिका।।
रूप्योत्तरपदाञ्ञो भवतीत्यस्यावकाशः--चणाररूप्य--चाणाररूप्या।
ठञ्ञिठयोः स एव।
दासरूप्यं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। तौ चापि ठञ्ञिठौ परत्वाद्योपधलक्षणो वुञ् बाधते। दासरूप्यकः।।
उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः--शिवपुर--शैवपुरः।
ठञ्ञिठयोः स एव।
शाकलं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। शाकलिकी, शाकलिका।
कोपधादण्भवतीत्यस्यावकाशः--निलीनक--नैलीनकः।
ठञ्ञिठयोः स एव।
सौसुकं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। तौ चापि ठञ्ञिठौ परत्वात्कोपधलक्षणश्छो बाधते। सौसुकीयः।।
(5406 विप्रतिषेधवैफल्यबोधकवार्तिकम् ।। 4 ।।)
- न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादितरेषाम् -
(भाष्यम्) न वाऽर्थो विप्रतिषेधेन।
किं कारणम्?
ठञादीनां छापवादत्वात्। ठञादयश्छापवादाः, तद्विषये चाभावादितरेषाम्। तद्विषये--छविषये त्यबादीनामभावः।।
(5407 विप्रतिषेधवैफल्यबोधकवार्तिकम्।। 5 ।।)
- कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् -
(भाष्यम्) अयं चाप्ययुक्तो विप्रतिषेधः--योऽयं कोपधादणः, छस्य च।।
किं कारणम्?
कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम्। सिद्धोऽत्राण् उत्सर्गेणैव, तस्य पुनर्वचन एतत्प्रयोजनं योऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्। स यथैव तदपवादमञ्ञं बाधते, एवं छमपि बाधेत।।
(5408 विप्रतिषेधाभावसमर्थकं वार्तिकम्।। 6 ।।)
- तस्मादन्तोदात्ते कोपधप्रतिषेधः -
(भाष्यम्) तस्मादन्तोदात्ते कोपधादञः प्रतिषेधो वक्तव्यः।।
(विप्रतिषेधसमर्थकं भाष्यम्)
न वक्तव्यः।
मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवं कोपधादण अञ्ञं बाधिष्यते, छं न बाधिष्यते।।
(5409 विप्रतिषेधबोधकवार्तिकम्।। 7 ।।)
- छादोर्देशे कालाट्ठञ् -
(भाष्यम्) छात् ओर्देशे ठञ् (4।2।119) कालाट्ठञ् (4।3।11) इत्येतद्भवति विप्रतिषेधेन।
छस्यावकाशः--शालीयः, मालीयः।
ओर्देशे ठञ्भवतीत्यस्यावकाशः--निषाहकर्षूर्नामदेशः--नैषाड्कर्षुकः।
इहोभयं प्राप्नोति--दाक्षिकर्षुकः।।
कालाट्ठञ्भवतीत्यस्यावकाशः--आर्द्धमासिकम्, सांवत्सरिकम्।
छस्य स एव।

मासादुभयं प्राप्नोति, मासिकम्।।
(5410 विप्रतिषेधबोधकवार्तिकम्।। 8 ।।)
- नक्षत्रादण् -
(भाष्यम्) नत्रक्षादण् छाद्भवति विप्रतिषेधेन।
अणोऽवकाशः--तैषः, पौषः।
छस्य स एव।
स्वातेरुभयं प्राप्नोति, सौवातः।।
(5411 विप्रतिषेधबोधकवार्तिकम्।। 9 ।।)
- अव्ययाट्ट्युट्युलौ -
(भाष्यम्) अव्ययाट्ट्युट्युलौ छाद्भवतो विप्रतिषेधेन।
ट्युट्युलोरवकाशः--दोषातनम्, दिवातनम्।
छस्य स एव।
प्रातःशब्दादुभयं प्राप्नोति, प्रातस्तनम्।।
(5412 विप्रतिषेधबोधकवार्तिकम्।। 10 ।।)
- शरीरावयवाद्यत् -
(भाष्यम्) शरीरावयवाद्यच्छाद्भवति विप्रतिषेधेन।
यतोऽवकाशः--दन्त्यम्, ओष्ठ्यम्।
छस्य स एव।
पादशब्दादुभयं प्राप्नोति, पद्यम्।।
(5513 विप्रतिषेधबोधकवार्तिकम्।। 11 ।।)
- वर्गान्ताच्चाशब्दे यत्खौ -
(भाष्यम्) वर्गान्ताच्चाशब्दे यत्खौ छाद्भवतो विप्रतिषेधेन।
यत्खयोरवकाशः--अक्रूरवर्ग्यः, अक्रूरवर्गीणः।
छस्य स एव।
वासुदेववर्गादुभयं प्राप्नोति, वासुदेववर्ग्यः, वासुदेववर्गीणः।।
(5414 विप्रतिषेधबोधकवार्तिकम्।। 12 ।।)
- बह्वचोऽन्तोदात्ताट्ठञ् -
(भाष्यम्) बह्वचोऽन्तोदात्ताट्ठञ् (4।3।67) छाद्भवति विप्रतिषेधेन। ठञोऽवकाशः--नतानत--नातानतिकः।
छस्य स एव।
सामस्तशब्दादुभयं प्राप्नोति, सामस्तिकः।।
(5415 विप्रतिषेधबोधकवार्तिकम्।। 13 ।।)
- आयस्थानेभ्यष्ठक् -
(भाष्यम्) आयस्थानेभ्यष्ठक् छाद्भवति विप्रतिषेधेन।
ठकोऽवकाशः--शौल्किकम्, गौल्मिकम्।
छस्य स एव।
आपणादुभयं प्राप्नोति, आपणिकम्।।
(5416 विप्रतिषेधबोधकवार्तिकम्।। 14 ।।)
- विद्यायोनिसंबन्धेभ्यो वुञ् -
(भाष्यम्) विद्यायोनिसम्बन्धेभ्यो वुञ्(4।3।77) छाद्भवति विप्रतिषेधेन।
वुञोऽवकाशः--औपाध्यायकम्, पैतामहकम्।
छस्य स एव।
इहोभयं प्राप्नोति, आचार्यकम्, मातुलकम्।।
(5417 विप्रतिषेधोपपादकवार्तिकम्।। 15 ।।)
- ऋतष्ठञ् -
(भाष्यम्) ऋतष्ठञ् (4।3।78) छाद्भवति विप्रतिषेधेन।
ठञोऽवकाशः--हौतृकम्, स्वासृकम्।
छस्य स एव।
इहोभयं प्राप्नोति, शास्तृकम्, भ्रातृकम्।।
(5418 विप्रतिषेधवार्तिकम्।। 16 ।।)

- रूप्यमयटौ -
(भाष्यम्) रूप्यमयटौ छाद्भवति विप्रतिषेधेन।
रूप्यमयटोरवकाशः--देवदत्तरूप्यम्, देवदत्तमयम्।
छस्य स एव।
वायुदत्तादुभयं प्राप्नोति, वायुदत्तरूप्यम्, वायुदत्तमयम्।।
(5419 विप्रतिषेधवार्तिकम्।। 17 ।।)
- अचित्ताट्ठक् -
(भाष्यम्) अचित्ताट्ठक् छाद्भवति विप्रतिषेधेन।
ठकोऽवकाशः--आपूपिकः, शाष्कुलिकः, मौदकिकः।
छस्य स एव।
पायसादुभयं प्राप्नोति, पायसिकः।।
(5420 विप्रतिषेधवार्तिकम्।। 18 ।।)
- गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् -
(भाष्यम्) गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् (4।3।99) छाद् भवति विप्रतिषेधेन।
वुञोऽवकाशः--ग्लौचुकायनकः, त्रैगर्तकः।
छस्य स एव।
इहोभयं प्राप्नोति, गार्गकः, वात्सकः, मालवकः।।
(5421 विप्रतिषेधवार्तिकम्।। 19 ।।)
- णिनिरन्तेवासिब्राह्मणेभ्यः -
(भाष्यम्) णिनिरन्तेवासिब्राह्मणेभ्यश्छाद्भवति विप्रतिषेधेन।
णिनेरवकाशः--हारिद्रविणः, तौम्बुरविणः, भाल्लविनः।
छस्य स एव।
इहोभयं प्राप्नोति, आरुणिनः, शाट्यायनिनः।।
(5422 विप्रतिषेधवार्तिकम्।। 20 ।।)
- पत्रपूर्वादञ् -
(भाष्यम्) पत्रपूर्वादञ् (4।3।122) छाद्भवति विप्रतिषेधेन।
अञोऽवकाशः--उष्ट्र-औष्ट्रम्, औष्ट्ररथम्।
छस्य स एव।
इहोभयं प्राप्नोति, वामी--वामम्, वामीरथम्।।
(5423 विप्रतिषेधवार्तिकम्।। 21 ।।)
- द्वन्द्वाद् वुन् वैरमैथुनिकयोः -
(भाष्यम्) द्वन्द्वाद्वुन्वैरमैथुनिकयोः (4।3।125) छाद्भवति विप्रतिषेधेन।
वुनोऽवकाशः--अहिनकुलिका।
छस्य स एव।
इहोभयं प्राप्नोति, काकोलूकिका, श्वावराहिका।।
(5424 विप्रतिषेधवार्तिकम्।। 22 ।।)
- गोत्रचरणाद् वुञ् -
(भाष्यम्) गोत्रचरणाद्वुञ् (4।3।126) छाद्भवति विप्रतिषेधेन।
वुञोऽवकाशः--ग्लौचुकायनकम्, म्लौचुकायनकम्। काठकम्, कालापकम्।
छस्य स एव।
इहोभयं प्राप्नोति, गार्गकम्, वात्सकम्। मौदकम्, पैप्पलादकम्।।
(5425 विप्रतिषेधवार्तिकम्।। 23 ।।)
- कण्वादीञोऽण्विधेः -
(भाष्यम्) कण्वादिभ्योऽण् भवति इञोऽण् भवति इत्येतस्माद् वुञ् भवति विप्रतिषेधेन। कण्वादिभ्योऽण् भवति इञोऽण् भवतीत्यस्यावकाशः--काण्वाः--दण्डमाणवाः, दाक्षाः--दण्डमाणवाः।
वुञः स एव।
इहोभयं प्राप्नोति, काण्वकम्, दाक्षकम्।।
(5426 विप्रतिषेधवार्तिकम्।। 24 ।।)
- ठञ्ञ्ञ्ठाभ्यामोर्देशे ठञ् -

(भाष्यम्) ठञ्ञ्ञठाभ्याम् ओर्देशे ठञ् (4|2|119) इत्येतद्भवति विप्रतिषेधेन।
ठञ्ञ्ञठयोरवकाशः--कारतन्तविकी, कारतन्तविका।
ओर्देशे ठञ् भवतीत्यस्यावकाशः--निषादकर्षूः--नैषादकर्षुकः।
इहोभयं प्राप्नोति, नापितवास्तुकः। ठञ् भवति विप्रतिषेधेन।।
(5427 विप्रतिषेधाभावोपपादकं वार्तिकम्।। 25 ।।)
- न वा ठञोऽनवकाशत्वात् -
(भाष्यम्) न वाऽर्थो विप्रतिषेधेन।
किं कारणम्?
ठञोऽनवकाशत्वात्। अनवकाशष्ठञ् ठञ्ञ्ञठौ बाधिष्यते।
ननु चेदानीमवकाशः प्रक्लृप्तः--यद्वृद्धमनुवर्णान्तं वाहीकग्रामः स ठञ्ञ्ञठयोरवकाशः।
यदवृद्धमुवर्णान्तमवाहीकग्रामः स ठञोऽवकाशः।
यद्वृद्धमुवर्णान्तं वाहीकग्रामश्च तस्मादुभयं प्राप्नोति।।
एवं तर्हि नायमस्य विप्रतिषेधस्योपालम्भः।
कस्य तर्हि?
छादोर्देशे कालाट्ठञ् इत्येतस्य।
ननु च तत्राप्यवकाशः प्रक्लृप्तः।
यद्वृद्धमनुवर्णान्तं स छस्यावकाशः।
यदवृद्धमुवर्णान्तं स ठञोऽवकाशः।
यद्वृद्धमुवर्णान्तं देशश्च तस्मादुभयं प्राप्नोति।।
एवं तर्हि वृद्धात् प्राचाम् (4|2|120) इत्यनेन वृद्धग्रहणेन किं क्रियते?
यावद् ब्रूयात्पूर्वस्मिन् योगे वृद्धाच्चावृद्धाच्चेति।
यदेतस्मिन् योगे वृद्धग्रहणं तदनवकाशं तस्यानवकाशत्वादयुक्तो विप्रतिषेधः।।
(5428 विप्रतिषेधवार्तिकम्।। 26 ।।)
- योपधप्रस्थादीनां वुञ् -
(भाष्यम्) योपधप्रस्थादीनां वुञ् ठञ्ञ्ञठाभ्यां भवति विप्रतिषेधेन।
योपधाद्वुञ् भवतीत्यस्यावकाशः--साङ्काश्यः--साङ्गाश्यकः, कापिल्यकः।
ठञ्ञ्ञठयोः स एव।
दासरूप्यं नाम वाहीकग्रामः, तस्मादुभयं प्राप्नोति, दासरूप्यकः।।
प्रस्थान्ताद्वुञ् भवतीत्यस्यावकाशः--मालाप्रस्थकः।
ठञ्ञ्ञठयोः स एव।
पातानप्रस्थं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति, पातानप्रस्थकः।।
पुरान्ताद् वुञ् भवतीत्यस्यावकाशः--काञ्चीपुर--काञ्चीपुरकः।
ठञ्ञ्ञठयोः स एव
नान्दीपुरं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति, नान्दीपुरकः।।
वहान्ताद्वुञ्भवतीत्यस्यावकाशः--वातवह--वातवहकः।
ठञ्ञ्ञठयोः स एव।
कौक्कुडीवहं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति, कौक्कुडीवहकः।।
(5429 विप्रतिषेधवार्तिकम्।। 27 ।।)
- ओश्च ठञः -
(भाष्यम्) ओश्च ठञो वुञ् भवति विप्रतिषेधेन।
ओष्ठञोऽवकाशः--नैषादकर्षुकः।
वुञः स एव।
आप्रीतमायोरुभयं प्राप्नोति, आप्रीतमायवकः।।
(5430 विप्रतिषेधवार्तिकम्।। 28 ।।)
- जनपदानामकाणौ -
(भाष्यम्) जनपदानामकाणावोष्ठञो भवतो विप्रतिषेधेन।
अकस्यावकाशः--अङ्गाः--आङ्गकः।
ओष्ठञः स एव।
जिह्वो नाम जनपदस्तस्मादुभयं प्राप्नोति, जैह्वकः।

अणोऽवकाशः--ऋषिक--आर्षिकः।
ओष्ठञ्ञः स एव।
इक्ष्वाकवो नाम जनपदस्तस्मादुभयं प्राप्नोति, ऐक्ष्वाकः।।
(5431 विप्रतिषेधाभाववार्तिकम्।। 29 ।।)
- न वा वुञ्ञपवादत्वादणः -
(भाष्यम्) न वाऽर्थो विप्रतिषेधेन।
किं कारणम्?
वुञ्ञपवादत्वादणः। वुञ्ञपवादोऽण्, वुञ्च--ओष्ठञ्ञं बाधिष्यते।।
(5432 विप्रतिषेधवार्तिकम्।। 30 ।।)
- कोपधादणोऽकेकान्ताच्छः -
(भाष्यम्) कोपधादण् भवतीत्येतस्मादकान्ताच्छो भवति विप्रतिषेधेन।
कोपधादणभवतीत्यस्यावकाशः--निलीनक-नैलीनकः।
अकेकान्ताच्छो भवतीत्यस्यावकाशः--आरीहणकम्--आरीहणकीयः।
ब्राह्मणको नाम जनपदस्तस्मादुभयं प्राप्नोति, ब्राह्मणकीयः।।
(5433 विप्रतिषेधवार्तिकम् ।। 31 ।।)
- धन्ववुञ्ञश्च -
(भाष्यम्) धन्ववुञ्ञश्च छो भवति विप्रतिषेधेन।
धन्वनो वुञ्ञ् भवतीत्यस्यावकाशः--पारेधन्व पारेधन्वकः।
छस्य स एव।
आष्टकं नाम धन्व तस्मादुभयं प्राप्नोति, आष्टकीयः।।
(5434 विप्रतिषेधाभावोपपादकवार्तिकम्।। 32 ।।)
- न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् -
(भाष्यम्) न वाऽर्थो विप्रतिषेधेन।
किं कारणम्?
छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम्। सिद्धोऽत्र छः वृद्धाच्छः (4।2।114) इत्येव।
तस्य पुनर्वचन एतत्प्रयोजनम्--येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्।
स यथैवान्यांस्तदपवादान् बाधत एवमिमममपि बाधिष्यते।।
-4-2-124- जनपदतदवध्योश्च (1545)
(वुञ्ञोऽधिकरणम्)
(5435 सूत्रातिव्याप्तिप्रदर्शकवार्तिकम्।। 1 ।।)
- जनपदतदवध्योर्वुञ्विधानेऽवयवमात्रात्प्रसङ्गः -
(भाष्यम्) जनपदतदवध्योर्वुञ्ञो विधानेऽवयवमात्रात्प्राप्नोति। मौञ्जो नाम वाहीकेषु ग्रामस्तस्मिन् भवो मौञ्जीयः।।
एवं तर्हि जनपदादेव जनपदावधेः।।
(5436 सूत्रांशवैयर्थ्यप्रदर्शकवार्तिकम्।। 2 ।।)
- जनपदादिति चेद्वचनानर्थक्यम् -
(भाष्यम्) जनपदादिति चेदवधिग्रहणमनर्थकम्। सिद्धं जनपदादित्येव।
(सिद्धान्तभाष्यम्)
इदं तर्हि प्रयोजनम्--जनपदावधेर्वुञ्ञेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति।
किं चान्यत्प्राप्नोति?
छः।
गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ्ञ् पूर्वविप्रतिषिद्धमिति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति।।
-4-2-129- अरण्यान्मनुष्ये (1550)
(संग्राहकभाष्यम्)
अत्यल्पमिदमुच्यते--मनुष्य इति, पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्। आरण्यकः पन्थाः, आरण्यकोऽध्यायः, आरण्यको न्यायः, आरण्यको विहारः, आरण्यको मनुष्यः, आरण्यको हस्ती।
वा गोमयेष्विति वक्तव्यम्। आरण्यका गोमयाः। आरण्या गोमयाः।।
-4-2-130- विभाषा कुरुयुगन्धराभ्याम् (1551)
(5437 विप्रतिषेधवार्तिकम्।। 1 ।।)
- कुरुयुगन्धरेभ्यो वावचनान्मनुष्यतत्स्थयोर्वुञ्विधानम् -

(भाष्यम्) कुरुयुगन्धरेभ्यो वावचनात् मनुष्यतत्स्थयोर्वुञ् (4।2।134) इत्येतद्भवति विप्रतिषेधेन।
कुरुयुगन्धरेभ्यो वा वचनस्यावकाशः--कौरवः, कौरवकः; यौगन्धरः, योगन्धरकः।
मनुष्यतत्स्थयोर्वुञ् भवतीत्यस्यावकाशः--अन्ये कच्छादयः--काच्छको मनुष्यः, काच्छकमस्येक्षितम्, हसितम्, जल्पितम्, स्मितम्।
इहोभयं प्राप्नोति, कौरवको मनुष्यः, कौरवकमस्येक्षितम्, हसितम्, जल्पितम्, स्मितम्। वुञ् भवति विप्रतिषेधेन।।
(कुरुशब्दस्य विप्रतिषेधानर्थक्ये भाष्यम्)
नैष युक्तो विप्रतिषेधः।
न हि कुरुशब्दस्यान्ये कच्छादयोऽवकाशः। कुरुशब्दस्य यः कच्छादिषु पाठः सोऽनवकाशः।।
न खल्वपि कुरुशब्दो विभाषां प्रयोजयति। अनेन वुञ्, कच्छादिपाठादण्भविष्यति।
सैषा युगन्धरार्था विभाषा।।
-4-2-133- कच्छादिभ्यश्च (1554)
(अणोऽधिकरणम्)
(जिज्ञासाभाष्यम्)
किमर्थं साल्वानां कच्छादिषु पाठः क्रियते?
(5438 पाठप्रयोजनवार्तिकम्।। 1 ।।)
- साल्वानां कच्छादिषु पाठोऽण्विधानार्थः -
(भाष्यम्) साल्वानां कच्छादिषु पाठोऽण्विधानार्थः क्रियते। अण्यथा स्याद्, वुञ् मा भूदिति।।
(5439 पाठप्रयोजनाभावबोधकं वार्तिकम्।। 2 ।।)
- न वाऽपदातिगोयवागूग्रहणमवधारणार्थम् -
(भाष्यम्) न वैतत्प्रयोजनमस्ति।
किं कारणम्?
अपदातिगोयवागूग्रहणमवधारणार्थं भविष्यति। अपदातावेव साल्वात्। गोयवाग्वोरेव च साल्वादिति।।
-4-2-137- गर्तोत्तरपदाच्छः (1558)
(छाधिकरणम्)
(5440 पूर्वविप्रतिषेधे वार्तिकम्।। 1 ।।)
- गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् विप्रतिषिद्धम् -
(भाष्यम्) गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् भवति पूर्वविप्रतिषेधेन।
गर्तोत्तरपदाच्छो भवतीत्यस्यावकाशः--श्वाविद्गर्त--श्वाविद्गर्तीयः।
वुञोऽवकाशः--अङ्गाः--आङ्गकः।
इहोभयं प्राप्नोति, त्रैगर्तकः।
वुञ् भवति पूर्वविप्रतिषेधेन।।
(वार्तिकप्रत्याख्याने भाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः?
न वक्तव्यः।
उक्तमेवावधिग्रहणस्य प्रयोजनम्--जनपदाज्जनपदावधेर्वुञ्ञेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति।।
-4-2-138- गहादिभ्यश्च (1559)
(5441 मध्यमशब्दस्य आदेशिनिश्चायकं वार्तिकम्।। 1 ।।)
- गहादिषु पृथिवीमध्यस्य मध्यमभावः -
(भाष्यम्) गहादिषु पृथिवीमध्यस्य मध्यमभावो वक्तव्यः। पृथिवीमध्ये भवो मध्यमीयः।।
(5442 अर्थनिर्णयविषये वार्तिकम्।। 2 ।।)
- चरणसम्बन्धेन निवासलक्षणोऽण् -
(भाष्यम्) चरणसम्बन्धेन निवासलक्षणोऽण्वक्तव्यः। त्रयः प्राच्याः। त्रय उदीच्याः। त्रयो माध्यमाः। सर्वे निवासलक्षणाः।।
-4-2-141- वृद्धादकेकान्तखोपधात् (1562)
(सूत्रोपसंख्याने भाष्यम्)
इर्कान्तादपीति वक्तव्यम्।
इहापि यथा स्यात्--ऐणीकीयः।।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।।
(5443 लघूपसङ्ख्यानबोधकं वार्तिकम्।। 1 ।।)
- अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् -

(भाष्यम्) अकेकान्तग्रहणे कोपधग्रहणं कर्तव्यम्।
किं प्रयोजनम्?
सौसुकाद्यर्थम्, सौसुकीयः।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्।।
पादश्च समाप्तः।।
-9-9-999-

# महाभाष्यम्/चतुर्थोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nmq
< महाभाष्यम् | चतुर्थोऽध्यायः
-4-3-1- युष्मदस्मदोरन्यतरस्यां खञ्च (1571)
(खञोऽधिकरणम्)
(5444 योगविभागबोधकवार्तिकम्।। 1 ।।)
- युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः -
(भाष्यम्) युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः कर्तव्यः।
युष्मदस्मदोरन्यतरस्याम्। छो भवति। युष्मदीयः, अस्मदीयः।
ततः--खञ्च।
खञ्च भवति युष्मदस्मदोरन्यतरस्याम्। यौष्माकीणः, आस्माकीनः।।
किमर्थो योगविभागः?
(5445 योगविभागफलबोधकवार्तिकम्।। 2 ।।)
- समसंख्याप्रतिषेधार्थः -
(भाष्यम्) संख्यातानुदेशो मा भूदिति।।
-4-3-2- तस्मिन्नणि च युष्माकास्माकौ (1572)
(आदेशाधिकरणम्)
(5446 योगविभागे वार्तिकम्।। 1 ।।)
- आदेशवचने च -
(भाष्यम्) किम्?
योगविभागः कर्तव्यः। तस्मिन्नणि युष्माकास्माकौ भवतः। यौष्माकः, आस्माकः।
ततः--खञि। खञि च युष्माकास्माकौ भवतः। यौष्माकीणः, आस्माकीनः।
किमर्थो योगविभागः?
समसंख्याप्रतिषेधार्थ ः१्य;त्येव।।
(5447 योगविभागसाधने वार्तिकम्।। 2 ।।)
- तत्र पुनः खञ्ग्रहणम् -
(भाष्यम्) तत्र पुनः खञ्ग्रहणं कर्तव्यम्। न ह्यन्तरेण खञ्ग्रहणं योगाङ्गमुपजायते।।
(योगविभागवाधनप्रत्याख्याने भाष्यम्)
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्।
एवं वक्ष्यामि--तस्मिन् खञि युष्माकास्माकौ भवतः।
ततः--अणि च युष्माकास्माकौ भवत ः१्य;ति।।
4-3-1- आ. 3 (763 विधिसूत्रम्
-4-3-3- 1573 तवकममकावेकवचने
(5448 उपसंख्यानवार्तिकम्।। 1 ।।)
- एकार्थग्रहणं च -
(भाष्यम्) एकार्थग्रहणं च कर्तव्यम्। एकार्थयोर्युष्मदस्मदोरिति वक्तव्यम्।
किमर्थम्?
न एकवचन ः१्य;त्येव सिद्धम्?
न सिध्यति।
किं कारणम्?
एकवचनाभावात्। एकवचन ः१्य;त्युच्यते, न चात्रैकवचनं पश्यामः।।
(वार्तिकान्यथासिद्धिबोधकं भाष्यम्)
यदि पुनरेकवचनपरत्वेनाण्खञौ विशेष्येयाताम्।
नैवं शक्यम्, ः१्य;ह हि प्रसज्येयाताम्--युष्माकं छात्रो यौष्माकीणः। आस्माकीनः।
ः१्य;ह च न स्याताम्। तव छात्रास्तावकीनाः। मामकीनाः।
तस्मान्नैवं शक्यम्।

न चेदेवमेकार्थग्रहणं कर्तव्यम्।।
न कर्तव्यम्।
नेदं पारिभाषिकस्यैकवचनस्य ग्रहणम्।
किं तर्हि?
अन्वर्थग्रहणम्। उच्यते वचनम्, एकस्यार्थस्य वचनमेकवचनमिति।।
4-3-1- आ. 4 (764 विधिसूत्रम्
-4-3-4- 1574 अर्धाद्यत्
(यतोऽधिकरणम्)
(5449 विधिवार्तिकम्।। 1 ।।)
- अर्धाद्यद्विधाने सपूर्वाट्ठञ् -
(भाष्यम्) अर्धाद्यद्विधाने सपूर्वाट्ठञ् वक्तव्यः। बालेयार्धिकः। गौतमार्धिकः।।
(5450 विधिवार्तिकम्।। 2 ।।)
- दिक्पूर्वपदाद्यच्च -
(भाष्यम्) दिक्पूर्वपदाद्यच्च ठञ्च वक्तव्यः। पूर्वार्ध्यः, पौर्वार्धिकः; दक्षिणार्ध्यः, दाक्षिणार्धिकः, उत्तरार्ध्यः, औत्तरार्धिकः।।
(वार्तिकाक्षेपभाष्यम्)
किमर्थमिदमुच्यते, यथान्यास एव दिक्पूर्वपदादर्धादुभयमुच्यते।
ःथ्य;दमद्यापूर्वं क्रियते--अर्धाद्यद्विधाने सपूर्वाट्ठञिति।।
(समाधानभाष्यम्)
तद् द्वेष्यं विजानीयात्--सर्वमेव विकल्पत ःथ्य;ति।
तदाचार्यः सुहृदभूत्वाऽन्वाचष्टे दिक्पूर्वपदादर्धाद्यथान्यासमेव भवतीति।।
-4-3-15- श्वसस्तुट् च (1585)
(ठञोऽधिकरणम्)
(5451 आगमस्य टित्वकरणे आक्षेपवार्तिकम्।। 1 ।।)
- श्वसस्तुठ्यादेशानुपपत्तिरनादित्वात् -
(भाष्यम्) श्वसस्तुटि कृते आदेशानुपपत्तिः।
किं कारणम्?
अनादित्वात्। तुटि कृतेऽनादित्वादादेशो न प्राप्नोति।।
(तुडागमस्य पूर्वान्तत्वबोधकं भाष्यम्)
एवं तर्हि पूर्वान्तः करिष्यते।।
(5452 पूर्वान्तत्वे दोषवार्तिकम्।। 2 ।।)
- पूर्वान्ते कप्रतिषेधः -
(भाष्यम्) यदि पूर्वान्तः, कादेशस्य प्रतिषेधो वक्तव्यः। शौवस्तिकम्।
तान्तादिति कादेशः प्राप्नोति।
(परादित्वाभ्युपगभाष्यम्)
अस्तु तर्हि परादिः।
ननु चोक्तं श्वसस्तुठ्यादेशानुपपत्तिरनादित्वादिति।।
(5453 परादित्वाभ्युपगतदोषनिराकरणवार्तिकम्।। 3 ।।)
- सिद्धं त्वादिष्टस्य तुड्वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
तुडादिष्टस्येति वक्तव्यम्।।
(5454 सिद्धान्तवार्तिकम्।। 4 ।।)
- संनियोगाद्वा -
(भाष्यम्) अथ वा चेन संनियोगः करिष्यते। तुट् च।
किं च?
यच्चान्यत्प्राप्नोति।
किं चान्यत्प्राप्नोति?
आदेशः।।
-4-3-22- सर्वत्राण्च तलोपश्च (1592)

(अणोऽधिकरणम्)
(5455 सूत्रैकदेशप्रत्याख्यानवार्तिकम्।। 1 ।।)
- हेमन्तस्याणि तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् -
(भाष्यम्) हेमन्तस्याणि तलोपवचनमनर्थकम्।
किं कारणम्?
हेम्नः प्रकृत्यन्तरत्वात्। प्रकृत्यन्तरं हेमन्शब्दः। आतश्च प्रकृत्यन्तरम्, एवं ह्याह--हेमन् हेमन्नागनीगन्ति कर्णौ तस्मादैतौ हेमन्नशुष्यत ाःथ्य;ति।।
(5456 प्रत्याख्यानोपष्टम्भकवार्तिकम्।। 1 ।।)
- अलोपदर्शनाच्च -
(भाष्यम्) अलोपः खल्वपि दृश्यते-- पङ्क्तिः हैमन्तीति।
(सूत्रप्रत्याख्यानभाष्यम्)
अपर आह--हेमन्तस्याण्वचनम्, अणि च तलोपवचनमनर्थम्।
किं कारणम्?
हेम्नः प्रकृत्यन्तरत्वात् अलोपदर्शनाच्चेत्येव।
तत्र ऋतुभ्य ाःथ्य;त्येव सिद्धम्।।
-4-3-23- सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च (1593)
(ट्युट्युलोरधिकरणम्)
(विद्ध्युपष्टम्भकभाष्यम्)
चिरपरुत्परारिभ्यस्त्नो वक्तव्यः।
चिरत्नम्, परुत्नम्, परारित्नम्।
प्रगस्यच्छन्दसि गलो--
पश्च त्नश्च वक्तव्यः।
प्रत्नमात्मानम्।
अग्रादिपश्चाड्डिमच् स्मृतः।
अग्रिमम्, आदिमम्, पश्चिमम्।
अन्ताच्चेति वक्तव्यम्।
अन्तिमम्।।
(वार्तिकावतरणभाष्यम्)
अथ सायचिरयोः किं निपात्यते?
(5457 निपातनबोधकं वार्तिकम्।। 1 ।।)
- सायचिरयोर्मकारान्तत्वं प्रत्ययसांनयुक्तम् -
(भाष्यम्) सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियोगेन निपात्यते। सायन्तनम्, चिरन्तनम्।।
(वार्तिकाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्, मकारान्तः सायंशब्दः।
(प्रत्याक्षेपभाष्यम्)
यदि मकारान्तः,
कथं सायाह्नः?
(प्रत्याक्षेपसमाधानभाष्यम्)
सायमोऽह्ने मलोपः।
सायमोऽह्ने मलोपो वक्तव्यः।
कथं सायतरे?
तरे चेति वक्तव्यम्।
कथं सायम् साये?
वा सप्तम्यामिति वक्तव्यम्।।
(वार्तिकावतरणभाष्यम्)
अथ प्राह्णप्रगयोः किं निपात्यते?
(5458 निपातनबोधकं वार्तिकम्।। 2 ।।)
- प्राह्णप्रगयोरेदन्तत्वम् -
(भाष्यम्) प्राह्णप्रगयोरेकारान्तत्वं निपात्यते। प्राह्णेतनम्, प्रगेतनम्।।

(वार्तिकाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्, सप्तम्या अलुकाऽपि सिद्धम्।।
(आक्षेपसमाधानभाष्यम्)
भवेत्सिद्धम्, यदा सप्तमी। यदा त्वन्या विभक्तयः, तदा न सिध्यति।।
(5459 टित्त्वकरणाक्षेपवार्तिकम्।। 3 ।।)
- तुट्युक्तम् -
(भाष्यम्) किमुक्तम्?
तुट्यादेशानुपपत्तिरनादित्वादिति। तुटि कृतेऽनादित्वादादेशो न प्राप्नोति।।
(पूर्वान्तत्वबोधकं भाष्यम्)
एवं तर्हि पूर्वान्तः करिष्यते।।
(5460 पूर्वान्तत्वे दोषवार्तिकम्।। 4 ।।)
- पूर्वान्ते विसर्जनीयः -
(भाष्यम्) यदि पूर्वान्तः, विसर्जनीयो वक्तव्यः। प्रातस्तनम्, पुनस्तनम्।
परादौ पुनः सति खरवसानयोर्विसर्जनीयः (8।3।15) ःथ्य;ति विसर्जनीयः सिद्धो भवति।।
(सिद्धान्तोपक्रमभाष्यम्)
अस्तु तर्हि परादिः।
ननु चोक्तं तुटि कृतेऽनादित्वादादेशो न प्राप्नोतीति।
(5461 एकदेशिवार्तिकम्।। 5 ।।)
- सिद्धं त्वादिष्टस्य तुड्वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
आदिष्टस्य तुड्वचनात्। तुडादिष्टस्येति वक्तव्यम्।
तत्तर्हि वक्तव्यम्?
(सिद्धान्तभाष्यम्)
न वक्तव्यम्।।
(5462 सिद्धान्तवार्तिकम्।। 6 ।।)
- संनियोगाद्वा -
(भाष्यम्) अथ वा चेन संनियोगः करिष्यते। तुट् च।
किं च?
यच्चान्यत्प्राप्नोति।
किं चान्यत् प्राप्नोति?
आदेशः।।
-4-3-24- विभाषा पूर्वाह्णापराह्णाभ्याम् (1594)
(5463 एदन्तत्वसाधकवार्तिकम्।। 1 ।।)
- पूर्वाह्णापराह्णाभ्यां सुबन्तवचनं सप्तमीश्रवणार्थम् -
(भाष्यम्) पूर्वाह्णापराह्णाभ्यां सुबन्तत्वं वक्तव्यम्।
किं प्रयोजनम्?
सप्तमीश्रवणार्थम्। सप्तम्याः श्रवणं यथा स्यात्। पूर्वाह्णेतनम्, अपराह्णेतनम्।
तत्तर्हि वक्तव्यम्?
(पूर्ववार्तिकस्यान्यथासिद्धत्वबोधकं भाष्यम्)
न वक्तव्यम्।
आचार्यप्रवृत्तिर्ज्ञापयति--भवत्यत्र सप्तमीति, यदयं घकालतनेषु कालनाम्नः (6।3।17) ःथ्य;ति सप्तम्या अलुकं शास्ति।।
(5464 आक्षेपवार्तिकम्।। 2 ।।)
- अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमीप्रसङ्गः -
(भाष्यम्) अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमी प्राप्नोति। दोषातनम्, दिवातनम्।।
(प्रत्याक्षेपपरं भाष्यम्)
अस्तु। अव्ययात् ःथ्य;ति लुग्भविष्यति।
ःथ्य;हापि लुक्प्राप्नोति--पूर्वाह्णेतनम्, अपराह्णेतनम्।
अलुगत्र लुकं बाधिष्यते।

ःथ्य;हापि तर्हि बाधेत--दोषातनम्, दिवातनम्।
समानाश्रयो लुगलुका बाध्यते।
कश्च समानाश्रयः?
यः प्रत्ययाश्रयः, अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति।।
न सिध्यति। ःथ्य;ह हि सति प्रत्यये लुका भवितव्यम्, सति लुक्यलुका भवितव्यम्। तत्र च प्रत्यय एव नास्ति कुतो लुग्भविष्यति।।
सैषा ज्ञापकेनासती विभक्तिराकृष्यते। सा यथैवेह बाधिका भवति--पूर्वाह्णेतनम्, अपराह्णेतनमिति, एवमिहापि
स्यात्--दोषातनम्, दिवातनम्।।
(एदन्तत्वे साधकान्तरबोधकं भाष्यम्)
एवं तर्हि न ब्रूमः--अलुग्वचनं ज्ञापकम्--भवत्यत्र सप्तमी ःथ्य;ति।
किं तर्हि?
भवति सुबन्तादुत्पत्तिरिति।
किं पुनर्ज्ञाप्यमेतद्, यावता समर्थानां प्रथमादिति वर्तते सामर्थं च सुबन्तेन?
ज्ञाप्यमित्याह।
कथम्?
ङ्याप्प्रातिपदिकादित्यपि वर्तते, तत्र कुत एवत्--सुबन्तादुत्पत्तिर्भविष्यति, न पुनर्ङ्याप्प्रातिपदिकादिति।।
(साधकान्तराक्षेपभाष्यम्)
कथं यत्तदुक्तम्--वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थम् ःथ्य;ति?
(आक्षेपनिरासभाष्यम्)
समर्थस्य यद् वृद्धं ङ्याप्प्रातिपदिकमित्येवमेतद्विज्ञायते।।
(प्रत्याक्षेपभाष्यम्)
यद्येतज्ज्ञाप्यते, कथं द्विपद आगतं द्विपाद्रूप्यम्, प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्, कीलालप आगतं कीलालपारूप्यम्, पपुष आगतं पपिवद्रूप्यम्?
पद्भावः, ःढ्य;ठ, आकारलोपः, प्रसारणमित्येते विधेयः प्राप्नुवन्ति।।
(प्रत्याक्षेपनिरासभाष्यम्)
लुकि कृते न भविष्यन्ति।।
(पुनः प्रत्याक्षेपभाष्यम्)
ःथ्य;ह तर्हि सामसु साधु सामन्यः, वेमन्यः। न लोपः प्रातिपदिकान्तस्य (8|2|7) ःथ्य;ति नलोपः प्राप्नोति।।
(प्रत्याक्षेपनिरासभाष्यम्)
लुकि कृते भत्वान्न भविष्यति।
ःथ्य;दमिह संप्रधार्यम्--लुक् क्रियतां नलोप ःथ्य;ति, किमत्र कर्तव्यम्?
परत्वान्नलोपः।
एवं तर्हीदमिह संप्रधार्यम्--नलोपः क्रियतां तद्धितोत्पत्तिरिति, किमत्र कर्तव्यम्?
परत्वान्नलोपः।
असिद्धो नलोपः, तस्यासिद्धत्वात्तद्धितोत्पत्तिर्भविष्यति।
परिगणितेषु कार्येषु नलोपोऽसिद्धः, न चेदं तत्र परिगण्यते।
ःथ्य;दमपि तत्र परिगण्यते।
कथम्?
सुब्विधिरिति सर्वविभक्त्यन्तः समासः--सुपो विधिः सुब्विधिः, सुबन्ताद्विधिः सुब्विधिरिति।।
-4-3-25- तत्र जातः (1595)
(जातार्थाधिकरणम्)
(सूत्राक्षेपभाष्यम्)
किमर्थं जातादयोऽर्था निर्दिश्यन्ते?
(सूत्रप्रयोजनभाष्यम्)
जातादिष्वर्थेषु घादयो यथा स्युः, स्वार्थे मा भूवन्निति।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्।
शेषे (4|2|92) ःथ्य;त्यनुवर्तते, तेन स्वार्थे न भविष्यन्ति।।
(वार्तिकावतरणभाष्यम्)
अत उत्तरं पठति--
(5465 सूत्रप्रयोजनवार्तिकम्।। 1 ।।)

- तत्र जातादिषु वचनं नियमार्थम् -
(भाष्यम्) नियमार्थोऽयमारम्भः। जातादिष्वेव घादयो यथा स्युरिह मा भूवन्--तत्रास्ते, तत्र शेत ःथ्य;ति।।
(नियमानर्थक्यबोधकभाष्यम्)
यदि नियमः क्रियते, दार्षदाः सक्तवः, औलूखलो यावक ःथ्य;ति न सिध्यति।
संस्कृतमित्येवं भविष्यति।
भवेत् सिद्धम्--दार्षदाः सक्तव ःथ्य;ति।
ःथ्य;दं तु न सिध्यति--औलूखलो यावक ःथ्य;ति। संस्कृतं नाम तद्भवति यत्तत एवापकृष्याभ्यवह्रियते, न च यावक उलूखलादेवापकृष्याभ्यवह्रियते। अवश्यं रन्धनादीनि प्रतीक्ष्याणि।
तस्मान्नार्थोऽनेन नियमेन।।
(नियमफलसाधकभाष्यम्)
कस्मान्न भवति--तत्रास्ते, तत्र शेत ःथ्य;ति।
अनभिधानात्।।
तच्चावश्यमनभिधानमाश्रयितव्यम्। क्रियमाणेष्वपि ह्यर्थनिर्देशेषु यत्र जातादिषूत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं न भवति, न भवति तत्र प्रत्ययोत्पत्तिः। तद्यथा--अङ्गुल्या खनति, वृक्षमूलादागत ःथ्य;ति।।
(सूत्रफलबोधकभाष्यम्)
न तर्हीदानीं जातादयोऽर्था निर्देष्टव्याः।
निर्देष्टव्याश्च।
किं प्रयोजनम्?
अपवादविधानार्थम्। प्रावृषष्ठप् (4।3।26) प्रावृषि जातः प्रावृषिकः।
क्व मा भूत्?
प्रावृषि भवाः प्रावृषेण्या बलाहकाः।
यानि त्वेतानि निरपवादान्यर्थादेशनानि तानि शक्यान्यकर्तुम्। कृतलब्धक्रीतकुशलाः (4।3।38) स्रौघ्नो देवदत्त ःथ्य;ति।।
-4-3-34- श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् (1604)
(लुकोऽधिकरणम्)
(5466 उपसंख्यानवार्तिकम् ।। 1 ।।)
- लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् -
(भाष्यम्) लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानं कर्तव्यम्। चित्रायां जाता--चित्रा स्त्री। चित्रा।।
रेवती। रेवती स्त्री। रेवती।।
रोहिणी। रोहिणी स्त्री।।
(5467 विधिवार्तिकम्।। 2 ।।)
- फल्गुन्यषाढाभ्यां टानौ -
(भाष्यम्) फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ। फल्गुनी, अषाढा उपदधाति।।
(5468 विधिवार्तिकम्।। 3 ।।)
- श्रविष्ठाषाढाभ्यां छण् -
(भाष्यम्) श्रविष्ठाषाढाभ्यां छण्वक्तव्यः। श्राविष्ठीयाः, आषाढीयाः।
स तर्हि वक्तव्यः?
(5369 प्रथमवार्तिकखण्डनवार्तिकम्।। 4 ।।)
- न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् -
(भाष्यम्) न वा वक्तव्यः।
किं कारणम्?
नक्षत्रेभ्यो बहुलं लुग्वचनात्। नक्षत्रेभ्यो बहुलं लुगित्येवमत्र लुग्भविष्यति।।
-4-3-39- प्रायभवः (1609)
(प्रायभवार्थाधिकरणम्)
(5470 सूत्रप्रत्याख्याने वार्तिकम्।। 1 ।।)
- प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात् -
(भाष्यम्) प्रायभवग्रहणमनर्थकम्।
किं कारणम्?
तत्र भवेन कृतत्वात्। यो हि राष्ट्रे प्रायेण भवति तत्र भवोऽसौ भवति। तत्र तत्र भवः (4।3।53) ःथ्य;त्येव सिद्धम्।
न सिध्यति।

अनित्यभवः प्रायभवः। नित्यभवस्तत्र भवः।।
(5471 प्रत्याख्यानोपष्टम्भकं वार्तिकम्।। 2 ।।)
- अनित्य भवः प्रायभव ाःथ्य;ति चेन्मुक्तसंशयेन तुल्यम् -
(भाष्यम्) यद्भवान् मुक्तसंशयं तत्र भव उदाहरणं न्याय्यं मन्यते--स्रौघ्नौ देवदत्त ाःथ्य;ति, तेनैतत्तुल्यम्। सोऽपि ह्यवश्यमुदकदेशादीन्यभिनिष्क्रामति।
अथैतद्भवान् प्रायभवे उदाहरणं न्याय्यं मन्यते, तत्र भवे किमुदाहरणम्?
यत्तत्र नित्यं भवति-स्रौघ्नाः प्रासादाः, स्रौघ्नाः प्राकारा ाःथ्य;ति।
एवं तर्हि तत्र भव ाःथ्य;ति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते। स यथा तस्मिन् दृष्टापचारे--अङ्गुलीयम्। ाःथ्य;ति भवति, एवं प्रायभवेऽपि भविष्यति।।
(सूत्रप्रयोजनभाष्यम्)
ाःथ्य;दं तर्हि प्रयोजनम्--प्रायभव ाःथ्य;ति प्रकृत्य उपजानूपकर्णोपनीवेष्ठकं वक्ष्यति स प्रायभव एव यथा स्यात्, तत्र भवे मा भूत्। उपजानुभवं गड्विति।।
(सूत्रप्रयोजननान्यथासिद्धिप्रदर्शकं भाष्यम्)
अथेदानीं तत्र भव ाःथ्य;ति प्रकृत्य शरीरावयवाद्यद्विधीयते सोऽत्र कस्मान्न भवति?
अनभिधानात्।
यथैव तर्ह्यनभिधानाद्यन्न भवति, एवं ठगपि न भविष्यति।।
-4-3-42- कोशाड्ढञ् (1612)
(सम्भूताधिकरणे ढञ्प्रत्ययः)
(5472 प्रत्ययस्यार्थबोधकवार्तिकम्।। 1 ।।)
- विकारे कोशाड्ढञ् -
(भाष्यम्) विकारे कोशाड्ढञ्वक्तव्यः। कोशस्य विकारः कौशेयम्।।
(5473 उत्तरसूत्रानुपपत्तिदर्शकवार्तिकम्।। 2 ।।)
- संभूते ह्यर्थानुपपत्तिः -
(भाष्यम्) संभूत ाःथ्य;ति ह्युच्यमानेऽर्थस्यानुपपत्तिः स्यात्। न ह्यदः कोशे संभवति।
किं तर्हि?
कोशस्यादो विकारः।।
(प्रथमवार्तिकातिव्याप्तिदर्शकं भाष्यम्)
यदि विकार ाःथ्य;त्युच्यते, भस्मन्यपि प्राप्नोति। भस्मापि कोशस्य विकारः।।
(अतिव्याप्तिनिवारकभाष्यम्)
अथ सम्भूत ाःथ्य;त्युच्यमाने क्रिमौ कस्मान्न भवति? क्रिमिरपि कोशे सम्भवति।
अनभिधानात्।
यथैव तर्ह्यनभिधानात्क्रिमौ न भवत्येवं भस्मन्यपि न भविष्यति। अर्थश्चोपपन्नो भवति।।
-4-3-48- कलाप्यश्वत्थयवबुसाद्वुन् (1618)
(देयमृणाधिकरणे वुन्प्रत्ययः)
(सूत्रार्थोपपादकभाष्यम्)
अयुक्तोऽयं निर्देशः। कालादिति वर्तते, न च कलापी नाम कालोऽस्ति।।
नैष दोषः।
साहचर्यात्ताच्छब्द्यं भविष्यति। कलापिसहचरितः कालः कलापी काल ाःथ्य;ति।।
-4-3-53- तत्र भवः (1623)
(तत्र भवार्थाधिकरणम्)
(पदकृत्यभाष्यम्)
तत्रेति वर्तमाने पुनस्तत्रग्रहणं किमर्थम्?
(5474 तत्रग्रहणप्रयोजनवार्तिकम्।। 1 ।।)
- तत्रप्रकरणे पुनस्तत्रवचनं कालनिवृत्त्यर्थम् -
(भाष्यम्) तत्रप्रकरणे तत्रेति पुनर्वचनं क्रियते कालनिवृत्त्यर्थम्। कालाधिकारो निर्वत्यते।।
(वार्तिकार्थोपष्टम्भकभाष्यम्)
न हि काको वाश्यत ाःथ्य;त्येवाधिकारा निवर्तन्ते, को वाऽभिसम्बन्धो यत्तत्रग्रहणं कालाधिकारं निवर्तयेत्।
एषोऽभिसम्बन्धः--
कालाभिसम्बद्धं तत्रग्रहणमनुवर्तते, तत्रग्रहणं च तत्रग्रहणस्य निवर्तकं भवति, तस्मिन्निवृत्ते

कालाधिकारोऽपि निवर्तते।।
-4-3-58- गम्भीराञ्ञ्ञ्यः (1628)
(तत्रभवाधिकरणे ञ्ञ्यप्रत्ययः)
-4-3-59- अव्ययीभावाच्च (1629)
(5475 उपसङ्ख्यानवार्तिकम्।। 1 ।।)
- ञ्ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् -
(भाष्यम्) ञ्ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानं कर्तव्यम्। पारिमुख्यम्, पार्योष्ठ्यम्, पारिहनव्यम्।।
(5476 उत्तरसूत्रातिव्याप्तिनिवारकं वार्तिकम्।। 2 ।।)
- अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः -
(भाष्यम्) अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधो वक्तव्यः। औपकूलः, औपमूलः, औपशालः।।
-4-3-60- अन्तः पूर्वपदाट्ठञ्ञ् (1630)
(तत्रभवाधिकरणे ठञ्ञ्)
(वार्तिकावतरणभाष्यम्)
अत्यल्पमिदमुच्यते।
(5477 संग्राहकवार्तिकम्।। 1 ।।)
- समानस्य तदादेश्च अध्यात्मादिषु चेष्यते -
(भाष्यम्) समानस्य--सामानिकः।
तदादेः--सामानग्रामिकः, सामानदेशिकः।
अध्यात्मादिषु चेष्यते--आध्यात्मिकः, आधिदैविकः, आधिभौतिकः।।
(5478 वार्तिकम्।। 2 ।।)
- ःढ्द्य;र्ध्वंदमाच्च देहाच्च -
(भाष्यम्) ठञ्ञ्वक्तव्यः--और्ध्वन्दमिकम्, और्ध्वदेहिकम्।।
(5479 वार्तिकम्।। 3 ।।)
- लोकोत्तरपदस्य च -
(भाष्यम्) ठञ्ञ् वक्तव्यः। ऐहलौकिकम्, पारलौकिकम्।।
(5480 वार्तिकम्।। 4 ।।)
- मुखपार्श्वतसोरीयः -
(भाष्यम्) मुख पार्श्व ःथ्द्य;त्येताभ्यां तसन्ताभ्यामीयप्रत्ययो वक्तव्यः। मुखतीयम्, पार्श्वतीयम्।।
(5481 वार्तिकम्।। 5 ।।)
- कुग्जनस्य परस्य च -
(भाष्यम्) ःथ्द्य;र्यो वक्तव्यः, कुक्चागमः। जनकीयम्, परकीयम्।।
(5482 वार्तिकम्।। 6 ।।)
- ःथ्द्य;र्यः कार्योऽथ मध्यस्य -
(भाष्यम्) मध्यीयः।।
(5483 वार्तिकम् 7 )
- मण्मीयौ चापि प्रत्ययौ -
(भाष्यम्) मण्मीयौ चापि प्रत्ययौ वक्तव्यौ। माध्यमः, मध्यमीयः।।
(5484 वार्तिकम्।। 8 ।।)
- मध्यो मध्यं दिनण् चास्मात् -
(भाष्यम्) मध्यशब्दो मध्यंशब्दमापद्यते, दिनण् चास्मात्प्रत्ययो वक्तव्यः। माध्यन्दिन उद्गायति।।
(5485 वार्तिकम्।। 9 ।।)
- स्थाम्नो लुगजिनात्तथा -
(भाष्यम्) स्थाम्नो लुग्वक्तव्यः। अश्वत्थामा। अजिनात्तथा। अजिनान्ताच्च लुग्वक्तव्यः। कृष्णाजिनः, उलाजिनः, सिंहाजिनः, व्याघ्राजिनः।।
(5486 वार्तिकम् ।। 10 ।।)
- बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य ःथ्द्य;ष्यते -
-4-3-66- तस्य व्याख्यान ःथ्द्य;ति च व्याख्यातव्यनाम्नः (1636)
(व्याख्यानार्थाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियते?

(5487 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः -
(भाष्यम्) भवव्याख्यानयोर्युगपदधिकारः क्रियते, अपवादविधानार्थः। युगपदपवादान् वक्ष्यामीति।
(वार्तिकाक्षेपभाष्यम्)
किमुच्यतेऽपवादविधानार्थ ःथ्य;ति, न पुनर्निर्देशार्थोऽपि स्यात्?
(5488 आक्षेपनिरासवार्तिकम्।। 2 ।।)
- कृतनिर्देशौ हि तौ -
(भाष्यम्) कृतनिर्देशौ ह्येतावर्थौ। एकः तत्र भवः (4|3|53) ःथ्य;ति, अपरः तस्येदम् (120) ःथ्य;ति।।
(पदकृत्यभाष्यम्)
अथ व्याख्यातव्यनाम्नो ग्रहणं किमर्थम्?
(5489 पदप्रयोजनवार्तिकम्।। 3 ।।)
- तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम् -
(भाष्यम्) तत्र व्याख्यातव्यनाम्नो ग्रहणं क्रियते भवार्थम्।
किमुच्यते भवार्थमिति न पुर्नव्याख्यानार्थमपि स्यात्?
(5490 पदप्रयोजनसमर्थकवार्तिकम्।। 4 ।।)
- व्याख्याने ह्यवचनात्सिद्धम् -
(भाष्यम्) व्याख्याने हि सति अन्तरेण वचनं सिद्धम्। यत्प्रति व्याख्यानमित्येतद्भवति, तस्मादुत्पत्तिर्भविष्यति।
किं प्रत्येतद्भवति?
व्याख्यातव्य नाम।।
(अन्यदपि प्रयोजनप्रदर्शनपरं भाष्यम्)
यदुच्यते भवार्थमिति, तन्न। व्याख्यानार्थमपि व्याख्यातव्यनाम्नो ग्रहणं क्रियते। ःथ्य;ह मा भूत्--पाटलिपुत्रस्य व्याख्यानी सुकोसलेति।
अथ क्रियमाणेऽपि व्याख्यातव्यनाम्नो ग्रहणे कस्मादेवात्र न भवति? अवयवशो ह्याख्यानं व्याख्यानम्, पाटलिपुत्रं चाप्यवयवश आचष्टे--ःथ्य;ईशा अस्य प्राकाराः, ःथ्य;ईशा अस्य प्रासादा ःथ्य;ति।
सत्यमेवमेतत्।
क्वचित्तु काचित्प्रसृततरा गतिर्भवति। शब्दग्रन्थेषु चैषा प्रसृततरा गतिर्भवति--निरुक्तं व्याख्यायते, व्याकरणं व्याख्यायत ःथ्य;त्युच्यते, न कश्चिदाह--पाटलिपुत्रं व्याख्यायत ःथ्य;ति।।
(5491 पूर्वपक्षवार्तिकम्।। 5 ।।)
- भवे मन्त्रेषु लुग्वचनम् -
(भाष्यम्) भवे मन्त्रेषु लुग्वक्तव्यः। अग्निष्टोमे भवो मन्त्रः--अग्निष्टोमः, राजसूयः, वाजपेयः।।
(5492 पूर्वपक्षवार्तिकम्।। 6 ।।)
- कल्पे च व्याख्याने -
(भाष्यम्) कल्पे च व्याख्याने लुग्वक्तव्यः। अग्निष्टोमस्य व्याख्यानः कल्पः--अग्निष्टोमः, राजसूयः, वाजपेयः।
स तर्हि वक्तव्यः।।
(5493 वार्तिकप्रत्याख्याने वार्तिकम्।। 7 ।।)
- न वा तादर्थ्यात्ताच्छब्द्यम् -
(भाष्यम्) न वा वक्तव्यः।
किं कारणम्?
तादर्थ्यात्ताच्छब्द्यम्।
तादर्थ्यात्ताच्छब्द्यं भविष्यति। अग्निष्टोमार्थः--अग्निष्टोमः, राजसूयः वाजपेयः।।
-4-3-68- क्रतुयज्ञेभ्यश्च (1638)
(ठञोऽधिकरणम्)
(पदकृत्यभाष्यम्)
क्रतुग्रहणं किमर्थम्?
यज्ञेभ्य ःथ्य;तीयत्युच्यमाने य एव संज्ञीभूतका यज्ञास्तत एवोत्पत्तिः स्याद्। आग्निष्टोमिकः, राजसूयिकः, वाजपेयिकः।
यत्र वा यज्ञशब्दोऽस्ति--नावयज्ञिकः, पाकयज्ञिकः।
ःथ्य;ह न स्यात्--पाञ्चौदनिकः, दाशौदनिकः, शातौदनिकः, साप्तौदनिकः। क्रतुग्रहणे पुनः क्रियमाणे न दोषो भवति।।
अथ यज्ञग्रहणं किमर्थम्?
क्रतुभ्य ःथ्य;तीयत्युच्यमाने य एव संज्ञीभूतकाः क्रतवस्तत उत्पत्तिः स्यात्। अग्निष्टोमिकः, राजसूयिकः, वाजपेयिकः।
ःथ्य;ह न स्यात्--पाञ्चौदनिकः, शातौदनिकः, साप्तौदनिक ःथ्य;ति।

यज्ञग्रहणे पुनः क्रियमाणे न दोषो भवति।।
-4-3-72- द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् (1642)
(ठकोऽधिकरणम्)
(5494 नामग्रहणवैयर्थ्यनिवारकवार्तिकम्।। 1 ।।)
- नामाख्यातग्रहणं संघातविगृहीतार्थम् -
(भाष्यम्) नामाख्यातग्रहणं संघातविगृहीतार्थं द्रष्टव्यम्। नामिकः, आख्यातिकः, नामाख्यातिकः।।
-4-3-84- विदूराञ्ञ्यः (1654)
(ञ्यप्रत्ययाधिकरणम्)
(सूत्रानुपपत्तिदर्शकभाष्यम्)
अयुक्तोऽयं निर्देशः, न ह्यसौ विदूरात्प्रभवति।
किं तर्हि?
वालवायात्प्रभवति, विदूरे संस्क्रियते।
एवं तर्हि--
(सूत्रोपपत्तिप्रदर्शकं श्लोकभाष्यम्)
वालवायो विदूरं च प्रकृत्यन्तरमेव वा।
वालवायशब्दो विदूरशब्दमापद्यते ञ्यश्चास्मात्प्रत्ययो वक्तव्यः।।
अथवा प्रकृत्यन्तरं विदूरशब्दोऽस्ति वालवायस्य। न वै तत्र वालवायं विदूर ःथ्य;त्युपाचरन्ति।।
न वै तत्रेति चेद्ब्रूया-
ज्जित्वरीवदुपाचरेत्।
तद्यथा--वणिजो वाराणसीं जित्वरीत्युपाचरन्ति।
एवं वैयाकरणा वालवायं विदूर ःथ्य;त्युपाचरन्ति।।
वालवायो विदूरं च
प्रकृत्यन्तरमेव वा।
न वै तत्रेति चेयाद्ब्रू-
ज्जित्वरीवदुपाचरेत्।।
-4-3-86- अभिनिष्क्रामति द्वारम् (1656)
(अभिनिष्क्रामतिद्वारमित्यर्थाधिकरणम्)
(सूत्रानुपपत्तिदर्शकं भाष्यम्)
अयुक्तोऽयं निर्देशः, चेतनावत एतद्भवति--निष्क्रमणमपक्रमणं वा, द्वारं चाचेतनम्।
कथं तर्हि निर्देशः कर्तव्यः?
अभिनिष्क्रमणं द्वारमिति। स तर्हि तथा निर्देशः न कर्तव्यः।
(सूत्रोपपत्तिप्रदर्शकं भाष्यम्)
अचेतनेष्वपि चेतनवदुपचारो दृश्यते।
तद्यथा--अयमस्य कोणोऽभिनिसृतः, अयमभिप्रविष्ट ःथ्य;ति।।
-4-3-87- अधिकृत्य कृते ग्रन्थे (1657)
(अर्थाधिकरणम्)
(5495 लक्ष्यविशेषसाधकवार्तिकम्।। 1 ।।)
- अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् -
(भाष्यम्) अधिकृत्य कृते ग्रन्थ ःथ्य;त्यत्राख्यायिकाभ्यो बहुलं लुब्वक्तव्यः। वासवदत्ता, सुमनोत्तरा।।
(बहुलफलबोधकं भाष्यम्)
न च भवति--भैमरथी।।
-4-3-88- शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः (1658)
(5496 द्वन्द्वे विशेषबोधकवार्तिकम्।। 1 ।।)
- द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः -
(भाष्यम्) द्वन्द्वे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः। दैवासुरम्, राक्षोऽसुरम्। दैवासुरी, राक्षोऽसुरी।।
-4-3-89- सोऽस्य निवासः (1659)
-4-3-90- अभिजनश्च (1660)
(अर्थाधिकरणम्)
(निवासाभिजनविशेषे भाष्यम्)

निवासाभिजनयोः को विशेषः?
निवासो नाम यत्र संप्रत्युष्यते।
अभिजनो नाम यत्र पूर्वैरुषितम्।।
-4-3-98- वासुदेवार्जुनाभ्यां वुन् (1668)
(वुनोऽधिकरणम्)
(वुनि--आक्षेपभाष्यम्)
किमर्थं वासुदेवशब्दाद्वुन् विधीयते, न गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् (4|3|99) ःथ्य;त्येव सिद्धम्? न ह्यस्ति विशेषो वासुदेवशब्दाद् वुनो वा वुञो वा। तदेव रूपं स एव स्वरः।।
(आक्षेपनिराकरणभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--वासुदेवशब्दस्य पूर्वनिपातं वक्ष्यामीति।
अथ वा नैषा क्षत्रियाख्या। संज्ञैषा तत्र भवतः।।
-4-3-100- जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने (1670)
(प्रत्ययातिदेशाधिकरणम्)
(सर्वशब्दाक्षेपे भाष्यम्)
सर्ववचनं किमर्थम्?
(5497 आक्षेपनिराकरणवार्तिकम्।। 1 ।।)
- सर्ववचनं प्रकृतिनिर्ह्रासार्थम् -
(भाष्यम्) सर्ववचनं क्रियते प्रकृतिनिर्ह्रासार्थम्। प्रकृतिनिर्ह्रासो यथा स्यात्।।
(5498 प्रयोजनवार्तिकम् ।। 2 ।।)
(भाष्यम्) तच्च मद्रवृज्यर्थं द्रष्टव्यम्। माद्रो भक्तिरस्य माद्रौ वा भक्तिरस्य--मद्रक ःथ्य;त्येव यथा
स्यात्। वार्ज्यो भक्तिरस्य वार्ज्यौ वा भक्तिरस्य--वृजिक ःथ्य;त्येव यथा स्यात्।।
-4-3-101- तेन प्रोक्तम् (1671)
(प्रोक्तार्थाधिकरणम्)
(5499 प्रोक्तग्रहणाक्षेपे वार्तिकम्।। 1 ।।)
- प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् -
(भाष्यम्) प्रोक्तग्रहणमनर्थकम्।
किं कारणम्?
तत्रादर्शनात्। ग्रामे ग्रामे कालापकं काठकं च प्रोच्यते। तत्रादर्शनात्, न च तत्र प्रत्ययो दृश्यते।।
(5500 आक्षेपसाधकवार्तिकम्।। 2 ।।)
ग्रन्थे च दर्शनात्।।
(भाष्यम्) यत्र च दृश्यते ग्रन्थः सः, तत्र कृते ग्रन्थे (4|3|116) ःथ्य;त्येव सिद्धम्।।
(आक्षेपनिवारकभाष्यम्)
छन्दोऽर्थं तर्हीदं वक्तव्यम्। न हि छन्दांसि क्रियन्ते, नित्यानि च्छन्दांसि।।
(5501 प्रत्याक्षेपे वार्तिकम्।। 3 ।।)
- छन्दोऽर्थमिति चेत्तुल्यम् -
(भाष्यम्) छन्दोऽर्थमिति चेत्तुल्यमेतद्भवति। ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते तत्रादर्शनात्। न च तत्र प्रत्ययो दृश्यते। ग्रन्थे च दर्शनात्। यत्र दृश्यते ग्रन्थः सः, तत्र कृते ग्रन्थ ःथ्य;त्येव सिद्धम्।
ननु चोक्तम्--न हि च्छन्दांसि क्रियन्ते नित्यानि च्छन्दांसीति।
यद्यप्यर्थो नित्यः, या त्वसौ वर्णानुपूर्वी साऽनित्या। तद्भेदाच्चैतद्भवति--काठकम्, कालापकम्, मौदकम्, पैप्पलादकमिति।।
(सिद्धान्तभाष्यम्)
न तर्हीदानीमिदं वक्तव्यम्।
वक्तव्यं च।
किं प्रयोजनम्?
यत्तेन प्रोक्तं न च तेन कृतम्। माधुरी वृत्तिः।
यदि तर्हि अस्य निबन्धनमस्ति, ःथ्य;दमेव वक्तव्यम्,
तन्न वक्तव्यम्।
तदप्यवश्यं वक्तव्यम्। यत्तेन कृतं न च तेन प्रोक्तम्--वाररुचं काव्यम्, जालूकाः श्लोकाः।।
-4-3-104- कलापिवैशम्पायनान्तेवासिभ्यश्च (1674)
(णिनिप्रत्ययाधिकरणम्)

(5502 पूर्वपक्षवार्तिकम्।। 1 ।।)
- प्रत्यक्षकारिग्रहणम् -
(भाष्यम्) प्रत्यक्षकारिग्रहणं कर्तव्यम्, अन्तेवास्यन्तेवासिभ्यो मा भूदिति।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।।
(5503 पूर्वपक्षनिराकरणे वार्तिकम्।। 2 ।।)
- कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य -
(भाष्यम्) यदयं कलापिखाडायनग्रहणं करोति तज्ज्ञापयत्याचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति।
कथं कृत्वा ज्ञापकम्? वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाडायनः। वैशम्पायनान्तेवासी कलापी।
यदि चान्तेवास्यन्तेवासिभ्योऽपि स्यात्कलापिखाडायनग्रहणमनर्थकं स्यात्। पश्यति त्वाचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति, ततः कलापिखाडायनग्रहणं करोति।।
(5504 सिद्धान्तवार्तिकम्।। 3 ।।)
- छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः -
(भाष्यम्) छन्दोग्रहणं च कर्तव्यम्। ःथ्य;तरथा ह्यतिप्रसङ्गः। ःथ्य;तरथा ह्यतिप्रसङ्गः स्यात्।
ःथ्य;हापि प्रसज्येत--तित्तिरिणा प्रोक्ताः श्लोका ःथ्य;ति।।
-4-3-105- पुराणप्रोक्तेषु ब्राह्मणकल्पेषु (1675)
(5505 प्रतिषेधवार्तिकम् ।। 1 ।।)
- पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात् -
(भाष्यम्) पुराणप्रोक्तेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः। याज्ञवल्कानि ब्राह्मणानि, सौलभानि ःथ्य;ति।
किं कारणम्?
तुल्यकालत्वात्। एतान्यपि तुल्यकालानीति।।
-4-3-116- कृते ग्रन्थे (1686)
(अर्थाधिकरणम्)
(5506 ग्रन्थाभावेऽपि प्रत्ययविधिवार्तिकम्।। 1 ।।)
- कृते ग्रन्थे मक्षिकादिभ्योऽण् -
(भाष्यम्) कृते ग्रन्थ ःथ्य;त्यत्र मक्षिकादिभ्योऽण्वक्तव्यः। मक्षिकाभिः कृतं माक्षिकम्।।
(5507 प्रत्ययविधिवार्तिकम्।। 2 ।।)
- तद्विशेषेभ्यश्च -
(भाष्यम्) तद्विशेषेभ्यश्चाण्वक्तव्यः। सरघाभिः कृतं सारघम्, गार्मुतम्, पौत्तिकम्।
स तर्हि वक्तव्यः।
न वक्तव्यः।।
(5508 वार्तिकद्वयान्यथासिद्धिवार्तिकम्।। 3 ।।)
- योगविभागात्सिद्धम् -
(भाष्यम्) योगविभागः करिष्यते। कृते ग्रन्थे। ततः--संज्ञायाम्, संज्ञायां च तेन कृत ःथ्य;त्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सरघाभिः कृतं सारघम्, गार्मुतम्, पौत्तिकम्।
ततः कुलालादिभ्यो वुञ्। संज्ञायामित्येव।।
ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य तृतीये पादे
प्रथममाह्निकम्।।
-4-3-120- तस्येदम् (1690)
(ःथ्य;दमर्थाधिकरणम्)
(5509 पूर्वपक्षवार्तिकम्।। 1 ।।)
- तस्येदमित्यसंनिहितेऽप्राप्तिरिदमः प्रत्यक्षवाचित्वात् -
(भाष्यम्) तस्येदमित्यसंनिहितेऽप्राप्तिः।
किं कारणम्?
ःथ्य;दमः प्रत्यक्षवाचित्वात्। ःथ्य;दमित्येतत्प्रत्यक्षे वर्तते, तेनेहैव स्यात्--तस्येदमिति, तस्याद ःथ्य;ति। तस्य तदित्यत्र न स्यात्।।
(5510 न्यासान्तरेण समाधानवार्तिकम्।। 2 ।।)
- सिद्धं तु यद्योगा षष्ठी तत्र -
(भाष्यम्) सिद्धमेतत्।
कथम्?

यद्योगा षष्ठी प्रवर्तते तत्रेति वक्तव्यम्।।
(5511 पूर्वपक्षवार्तिकम्।। 3 ।।)
- अनन्तरादिषु च प्रतिषेधः -
(भाष्यम्) अनन्तरादिषु च प्रतिषेधो वक्तव्यः। तस्यानन्तरः, तस्य समीप ःथ्य;ति।
किं यद्योगा षष्ठी प्रवर्तत ःथ्य;त्यतोऽनन्तरादिषु प्रतिषेधो वक्तव्यः?
नेत्याह।
सर्वथाऽनन्तरादिषु प्रतिषेधो वक्तव्यः।।
(5512 एकदेशिसमाधानवार्तिकम्।। 4 ।।)
- सिद्धं तु परिगणनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
परिगणनं कर्तव्यम्।।
(5513 परिगणनवार्तिकम्।। 5 ।।)
- स्वे ग्रामजनपदमनुष्येभ्यः -
(भाष्यम्) स्वे ग्रामजनपदमनुष्येभ्य ःथ्य;ति वक्तव्यम्। स्रौघ्नः, माथुरः। ग्राम।।
जनपद। आङ्गकः, वाङ्गकः। जनपद।।
मनुष्य। दैवदत्तः, याज्ञदत्तः।।
(5514 परिगणनवार्तिकम्।। 6 ।।)
- पत्राद्वाह्ये -
(भाष्यम्) पत्राद्वाह्य ःथ्य;ति वक्तव्यम्। आश्वम्, औष्ट्रम्, गार्दभम्।।
(5515 परिगणनवार्तिकम्।। 7 ।।)
- रथाद्रथाङ्गे -
(भाष्यम्) रथाद्रथाङ्ग ःथ्य;ति वक्तव्यम्। आश्वरथम्, औष्ट्ररथम्, गार्दभरथम्।।
(5516 परिगणनवार्तिकम्।। 8 ।।)
- वहेस्तुरणिट् च -
(भाष्यम्) वहेस्त्रन्तादण्वक्तव्य ःथ्य;ट्च वक्तव्यः। संवोढुः स्वं सांवहित्रम्।।
(5517 परिगणनवार्तिकम्।। 9 ।।)
- अग्नीधः शरणे रञ्भं च -
(भाष्यम्) अग्नीधः शरणे रञ्वक्तव्यो भसंज्ञा च वक्तव्या। अग्नीधः शरणमाग्नीध्रम्।।
(5598 परिगणनवार्तिकम् ।। 10 ।।)
- समिधामाधाने षेण्यण् -
(भाष्यम्) समिधामाधाने षेण्यण् वक्तव्यः। समिधामाधानो मन्त्रः सामिधेन्यो मन्त्रः। सामि धेनी ऋक्।।
(5519 परिगणनवार्तिकम्।। 11 ।।)
- चरणाद्धर्माम्नाययोः -
(भाष्यम्) चरणाद्धर्माम्नाययोरिति वक्तव्यम्। कठानां धर्म आम्नायो वा--काठकम्। कालापकम्। मौदकम्। पैप्पलादकम्--ःथ्य;ति।।
(सिद्धान्तभाष्यम्)
तत्तर्हीदं बहु वक्तव्यम्, सूत्रं च भिद्यते।
यथान्यासमेवास्तु। ननु चोक्तं तस्येदमित्यसंनिहितेऽप्राप्तिरिति। किमिदं भवान् प्रत्ययार्थमेवोपालभते, न पुनः प्रकृत्यर्थमपि। यथैव हि--ःथ्य;दमित्येतत् प्रत्यक्षे वर्तते, एवं तदित्येतत्परोक्षे वर्तते। तेनेहैव स्यात्तस्येदमिति, अस्यामुष्य ःथ्य;त्यत्र न स्यात्।
अस्त्यत्र विशेषः, एकशेषनिर्देशोऽत्र भविष्यति--तस्य चास्य च अमुष्य च तस्येति भवति।
ःथ्य;हापि तर्ह्येकशेषनिर्देशो भविष्यति--तच्चादश्चेदं च--ःथ्य;दमित्येव।
यदप्युच्यते--अनन्तरादिषु च प्रतिषेधो वक्तव्य ःथ्य;ति।
न वक्तव्यः। अनभिधानादनन्तरादिषूत्पत्तिर्न भविष्यति।।
-4-3-125- द्वन्द्वाद्वुन् वैरमैथुनिकयोः (1695)
(वुनोऽधिकरणम्)
(5520 सूत्रार्थपर्युदासे वार्तिकम्।। 1 ।।)
- वैरे देवासुरादिभ्यः प्रतिषेधः -
(भाष्यम्) वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः। दैवासुरम्, राक्षोऽसुरम्।।
-4-3-127- सङ्घाङ्कलक्षणेष्वञ्यञिञामण् (1697)

(अण्प्रत्ययाधिकरणम्)
(5521 सिद्धान्तवार्तिकम्।। 1 ।।)
- सङ्घादिषु घोषग्रहणम् -
(भाष्यम्) सङ्घादिषु घोषग्रहणं कर्तव्यम्। गार्गो घोषः, वात्सो घोषः।
(एकदेशिनो णकारप्रयोजनभाष्यम्)
किमर्थो णकारः?
वृद्ध्यर्थः, ञ्णिति ःथ्य;ति वृद्धिर्यथा स्यात्।।
(5522 पूर्वपक्षवार्तिकम्।। 2 ।।)
- सङ्घादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य -
(भाष्यम्) सङ्घादिषु प्रत्ययस्य णित्करणमनर्थकम्।
किं कारणम्?
वृद्धत्वात् प्रातिपदिकस्य। वृद्धमेवैतत् प्रातिपदिकम्।।
(5526 समाधानवार्तिकम्।। 3 ।।)
- लिङ्गपुंवद्भावप्रतिषेधार्थं तु -
(भाष्यम्) लिङ्गपुंवद्भावप्रतिषेधार्थं तु णकारः कर्तव्यः।
लिङ्गार्थम्--वैदी। पुंवद्भावप्रतिषेधार्थम्--वैदी स्थूणाऽस्य वैदीस्थूणः। वृद्धिनिमित्तस्य ःथ्य;ति पुंवद्भावप्रतिषेधो यथा स्यात्।।
-4-3-131- रैवतिकादिभ्यश्छः (1701)
(छप्रत्ययाधिकरणम्)
(5524 अण्विधिवार्तिकम्।। 1 ।।)
- कौपिञ्जलहास्तिपदादण् -
(भाष्यम्) कौपिञ्जलहास्तिपदादण् वक्तव्यः। कौपिञ्जलाः, हास्तिपदाः।।
-4-3-133- आथर्वणिकस्येकलोपश्च (1702)
(अणोऽधिकरणम्)
(चकारार्थबोधकभाष्यम्)
आथर्वणिकस्येकलोपश्चाण्च वक्तव्यः। आथर्वणः--धर्मः, आथर्वणः--आम्नायः।
(अथर्वणशब्दव्यवस्थाभाष्यम्)
ःथ्य;दमाथर्वणार्थमाथर्वणिकार्थं च चतुर्ग्रहणं क्रियते। वसन्तादिषु--अर्थवन्शब्द आथर्वणशब्दश्च पठ्यते। षष्ठेऽध्याये प्रकृतिभावार्थं ग्रहणं क्रियते। ःथ्य;दं चतुर्थमिकलोपार्थम्।
द्विर्ग्रहणं शक्यमकर्तुम्।
कथम्?
तेन प्रोक्तम् (4।3।101) ःथ्य;ति प्रकृत्य ऋषिभ्यो लुग्वक्तव्यः--वसिष्ठोऽनुवाकः, विश्वामित्रोऽनुवाक ःथ्य;त्येवमर्थम्।
ततो वक्तव्यम्--अथर्वणो वेति। तेन सिद्धमथर्वा--ःथ्य;ति आथर्वण, ःथ्य;ति च।
अथ वसन्तादिष्वाथर्वणशब्दः पठितव्यः, तत्र नैवार्थः प्रकृतिभावार्थेन, नापि--ःथ्य;कलोपार्थेन।।
(अव्यविकन्यायेन प्रयोगव्यवस्थाभाष्यम्)
यदि वसन्तादिष्वाथर्वणशब्दः पठ्यते--अथर्वाणमधीते आथर्वणिक ःथ्य;ति न सिध्यति।
नैष दोषः। ःथ्य;हास्माभिस्त्रैशब्द्यं साध्यम्--अथर्वाणमधीते, आथर्वणमधीते, आथर्वणिक ःथ्य;ति।
तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यति--अविरविकन्यायेन।
तद्यथा--अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति--आविकमिति। एवमाथर्वणमधीत ःथ्य;ति
विगृह्य--आथर्वणिक ःथ्य;ति भविष्यति। अथर्वाणमधीत ःथ्य;ति विगृह्य--वाक्यमेव भविष्यति। तत्राभिसंबन्धमात्रं कर्तव्यम्--आथर्वणिकानामिदमिति।
न चेदानीमन्यदाथर्वणिकानां स्वं भवितुमर्हति, अन्यदतो धर्मादाम्नायाद्वा।।
-4-3-134- तस्य विकारः (1703)
(विकारार्थप्रत्ययाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
तस्येति वर्तमाने पुनस्तस्यग्रहणं किमर्थम्?
(5525 तस्यपदप्रयोजनवार्तिकम्।। 1 .।)
- तस्यप्रकरणे तस्यपुनर्वचनं शैषिकनिवृत्त्यर्थम् -
(भाष्यम्) तस्यप्रकरणे तस्यपुनर्वचनं क्रियते शैषिकनिवृत्त्यर्थम्। शैषिका निर्वन्त्यन्ते।।
(वार्तिकावतरणभाष्यम्)

कथं च प्राप्नुवन्ति?
(5526 प्रयोजनसाधकवार्तिकम्।। 2 ।।)
- तस्येदंवचनात् प्रसङ्गः -
(भाष्यम्) तस्येदंविशेषा ह्येते--अपत्यम्, समूहः, निवासः, विकार ः थ्य;ति।।
(सूत्राक्षेपसमाधानभाष्यवार्तिकम्)
किमर्थमिदमुच्यते?
बाधनार्थं कृतं भवेत्।
ये तस् बाधकास्तद्बाधनार्थम्।
कथं पुनरशैषिकः शैषिकं बाधते?
उत्सर्गः शेष एवासौ।।
योह्युत्सर्गः सोऽपि शेष एव।।
(आक्षेपभाष्यम्)
के पुनः शैषिकाणां विकारावयवयोः प्राप्नुवन्ति, यावता सर्वमद्यापवादैर्व्याप्तम्।।
(समाधानभाष्यम्)
ः थ्य;ह न किंचिदुच्यते--हलसीराट्ठक् (4।3।124) ः थ्य;ति।।
कथं पुनरिच्छताऽप्यपवादः प्राप्नुवन् शक्यो बाधितुम्।
तस्यग्रहणसार्मथ्यात्। किमिदं भवानध्यारुह्य तस्यग्रहणस्यैव प्रयोजनमाह, न पुनः सर्वस्यैव योगस्य।
अवश्यमुत्तरार्थोऽर्थनिर्देशः कर्तव्यः। समर्थविभक्तिरपि तर्ह्यवश्यमुत्तरार्था निर्देष्टव्या। प्रकृता समर्था विभक्तिरनुवर्तते--तस्येदम् ः थ्य;ति।।
(5527 सूत्रेणेष्टसाधनत्वाभावबोधकं वार्तिकम्।। 3 ।।)
- न वा संप्रत्ययः -
(भाष्यम्) न वा संप्रत्यय ः थ्य;यता सूत्रेण, शैषिकाणां निवृत्तेः।
न हि काको वाश्यत ः थ्य;त्येवाधिकारा निवर्तन्ते।
यदि खल्वपि विकारावयवयोः शैषिका नेष्यन्ते, महता सूत्रेण निवृत्तिर्वक्तव्या।।
(5528 सूत्राक्षेपे वार्तिकम्।। 4 ।।)
- अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिः -
(भाष्यम्) अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिरिष्टा, तत्र च निवृत्तिः प्राप्नोति। पाटलिपुत्रकाः प्राकाराः, पाटलिपुत्रकाः प्रासादा ः थ्य;ति।।
(5529 सूत्राक्षेपे वार्तिकम्।। 5 ।।)
- अण्मयटोश्च विप्रतिषेधानुपपत्तिर्मयड्डत्सर्गात् -
(भाष्यम्) अण्मयटोश्च विप्रतिषेधो नोपपद्यते। पठिष्यति हि विप्रतिषेधम्--अणो वृद्धान्मयट् ः थ्य;ति स विप्रतिषेधो नोपपद्यते।
किं कारणम्?
मयड्डत्सर्गात्। निवर्तमानेषु शैषिकेषु वृद्धान्मयड्डत्सर्गस्तस्याणपवादः, उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः।।
(5530 तस्यग्रहणाभावे ः थ्य;ष्टसिद्धिबोधकमेकदेशिवार्तिकम्।। 6 ।।)
- अनुवृत्तौ हि छोत्सर्गापवादविप्रतिषेधान्मयट् -
(भाष्यम्) अनुवर्तमानेषु शैषिकेषु वृद्धाच्छ उत्सर्गः। तस्याण्मयटावपवादौ। अपवादविप्रतिषेधान्मयड् भविष्यति।।
(तृतीयवार्तिकोक्ताक्षेपपरिहारभाष्यम्)
यत्तावदुच्यते--न वा संप्रत्यय ः थ्य;यता सूत्रेण शैषिकाणां निवृत्तेः ः थ्य;ति,
संप्रत्यय एव। न ह्यत्राण् दुर्लभः। सिद्धोऽत्राण् तस्येदमित्येव। सोऽयं पुनस्तस्यग्रहणेन--तस्य सापवादस्याणः प्रसङ्गे ः थ्य;मं निरपवादकमणं प्रतिपादयति। तत्र ये तावत् द्वितीयास्तानयमपवादत्वाद्बाधिष्यते।
ये तृतीयास्तान् परत्वात्। ये चतुर्थास्तत्र केचित्पुरस्तादपवादा अनन्तरान्विधीन् बाधान्ते ः थ्य;त्येवमिमं न बाधिष्यन्ते। केचिन्मध्येऽपवादाः पूर्वान् विधीन् बाधन्त ः थ्य;ति। एतावन्तश्चैते स्युर्यदुत द्वितीयास्तृतीयाश्चतुर्था वा। न पञ्चमाः सन्ति न षष्ठाः।।
(चतुर्थवार्तिकोक्ताक्षेपपरिहारभाष्यम्)
यदप्युच्यते--अवयवे च प्राण्योषधिवृक्षेभ्यो निवृत्तिः ः थ्य;ति, प्राण्योषधिवृक्षेभ्यो निवृत्तिरुच्यते। तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्यो निवृत्तिः स्यात्।।
(पञ्चमवार्तिकोक्ताक्षेपपरिहारभाष्यम्)
यदप्युच्यते--अण्मयटोश्च विप्रतिषेधानुपपत्तिर्मयड्डत्सर्गात् ः थ्य;ति, मा भूद्विप्रतिषेधः। पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते ः थ्य;त्येवमणञ्त्रं बाधिष्यते, मयटं न बाधिष्यते।।
-4-3-135- अवयवे च प्राण्योषधिवृक्षेभ्यः (1704)
(अवयवार्थाधिकरणम्)
(आक्षेपभाष्यम्)

किमर्थं विकारावयवयोर्युगपदधिकारः?
(5531 समाधानवार्तिकम्।। 1 ।।)
- विकारावयवयोरुक्तम् -
(भाष्यम्) किमुक्तम्?
तत्र तावदुक्तम्--भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ताविति।
ाःथ्य;हापि--विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ ह्येतावर्थौ--तस्येदम् (4।3।120) ाःथ्य;ति।।
-4-3-136- बिल्वादिभ्योऽण् (1705)
(अण्प्रत्ययाधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं बिल्वादिषु गवीधुकाशब्दः पठ्यते, न कोपधादणित्येव सिद्धम्?
(5532 समाधानवार्तिकम्।। 1 ।।)
- बिल्वादिषु गवीधुकाग्रहणं मयट्प्रतिषेधार्थम् -
(भाष्यम्) बिल्वादिषु गवीधुकाग्रहणं क्रियते मयट्प्रतिषेधार्थम्। मयडतो मा भूदिति।।
-4-3-140- अनुदात्तादेश्च (1709)
(अञोऽधिकरणम्)
(5533 पूर्वपक्षवार्तिकम्।। 1 ।।)
- अनुदात्तादेरञो विधाने आद्युदात्तान्ङीष उपसंख्यानम् -
(भाष्यम्) अनुदात्तादेरञो विधाने आद्युदात्तान्ङीष उपसंख्यानं कर्तव्यम्। कुवली-कौवलम्,बदरी--बादरम्।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्। निघाते कृतेऽनुदात्तादेरित्येव सिद्धम्।
न सिध्यति।
किं कारणम्?
(5534 एकदेशिसमाधानवार्तिकम्।। 2 ।।)
- पदस्य ह्यनुदात्तादित्वम् -
(भाष्यम्) पदस्य हि निघातः, सुबन्तं च पदम्, ङ्याप्प्रातिपदिकाच्च प्रत्ययो विधीयते।।
(5535 समाधानवार्तिकम्।। 3 ।।)
- न वा समर्थस्यानुदात्तादित्वात् -
(भाष्यम्) न वा वक्तव्यम्।
किं कारणम्?
समर्थस्यानुदात्तादित्वात्। समर्थमनुदात्तादित्वेन विशेषयिष्यामः।।
नैवं शक्यम्। ाःथ्य;ह च प्रसज्येत--वाचो विकारः, त्वचो विकार ाःथ्य;ति। एतद्धि समर्थमनुदात्तादि।
ाःथ्य;ह च न स्यात्--सर्वेषां विकारः सर्व ाःथ्य;ति। तस्मान्नैवं शक्यम्।।
न चेदेवमुपसंख्यानं कर्तव्यम्।
न कर्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति--यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात ाःथ्य;ति, यदयं भिक्षादिषु गर्भिणीशब्दस्य पाठं करोति।
कथं कृत्वा ज्ञापकम्?
भिक्षादिषु गर्भिणीशब्दस्य पाठे एतत्प्रयोजनम्अनुदात्तादिलक्षणोऽञ् मा भूदिति।
यदि च पदस्य निघातः, गर्भशब्दोऽयमाद्युदात्तस्तस्मादिनिः। ाःथ्य;न्नन्ताद्यः प्रत्ययः प्राप्नोति स तावत्स्यात्। तस्मिन्नवस्थिते निघातः। तत्र कोऽनुदात्तादिलक्षणस्याञः प्रसङ्गः?
पश्यति त्वाचार्यः--यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात ाःथ्य;ति। अतो भिक्षादिषु गर्भिणीशब्दं पठति।।
(पदकृत्यभाष्यम्)
पदग्रहणं किमर्थम्?
(5536 समाधानवार्तिकम्।। 4 ।।)
- पदग्रहणं परिमाणार्थम् -
(भाष्यम्) पदग्रहणं क्रियते, परिमाणार्थम्। पदावधेर्यथा स्यात्, वाक्यस्य मा भूत्--अनुदात्तं पदमेकवर्जम् (6।1।154) ाःथ्य;ति।।
-4-3-143- मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः (1712)
(मयटोऽधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं मयड्वैतयोरित्युच्यते?

(5537 समाधानवार्तिकम्।। 1 ।।)
- मयड्वैतयोर्वचनमपवादविषयेऽनिवृत्त्यर्थम् -
(भाष्यम्) मयड्वैतयोरित्युच्यते, अपवादविषयेऽनिवृत्तिर्यथा स्यादिति। बिल्वमयम्, बैल्वम्।।
(5538 सिद्धान्तवार्तिकम्।। 2 ।।)
- एतयोरित्यर्थनिर्देशः -
(भाष्यम्) एतयोरित्यर्थनिर्देशो द्रष्टव्यः। द्वेष्यं विजानीयात्--योगयोर्वा प्रत्यययोर्वेति।
तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे--एतयोरित्यर्थनिर्देश ाथ्य;ति।।
-4-3-155- ञितश्च तत्प्रत्ययात् (1724)
(अञोऽधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते?
(5539 समाधानवार्तिकम्।। 1 ।।)
- विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् -
(भाष्यम्) विकारो विकारेण युज्यते, अवयवेनावयवः। विकारावयवयोर्विकारावयवयुक्तत्वान्मयट् प्राप्नोति। ाथ्य;ष्यते चाञेव स्यादिति। तच्चान्तरेण यत्नं न सिद्ध्यतीति मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम्। एवमर्थमिदमुच्यते।।
(5540 समाधानाक्षेपवार्तिकम्।। 2 ।।)
- न वा दृष्टो ह्यवयवे समुदायशब्दो विकारे च प्रकृतिशब्दस्तस्मान्मयडभावः -
(भाष्यम्) न वैतत्प्रयोजनमस्ति।
किं कारणम्?
दृष्टो ह्यवयवे समुदायशब्दः, तद्यथा--पूर्वे पञ्चालाः। उत्तरे पञ्चालाः। तैलं भुक्तम्। घृतं भुक्तम्। शुक्लः, नीलः, कृष्ण ाथ्य;ति।
विकारे च प्रकृतिशब्दः। विकारे च प्रकृतिशब्दो दृश्यते। तद्यथा--शालीन् भुङ्क्ते मुद्गैः, शालिविकारं मुद्गविकारेणेति।
(प्रत्याक्षेपभाष्यम्)
नैतद्विवदामहे--अवयवे समुदायशब्दोऽस्ति नास्तीति, विकारे वा प्रकृतिशब्द ाथ्य;ति।
किं तर्हि?
विकारावयवशब्दोऽपि त्वस्ति, तत उत्पत्तिः प्राप्नोति।।
(5541 प्रत्याक्षेपनिराकरणवार्तिकम्।। 3 ।।)
- विकारावयवशब्दात्प्रसङ्ग ाथ्य;ति चेन्न तेनानभिधानात् -
(भाष्यम्) विकारावयवशब्दात् प्रसङ्ग ाथ्य;ति चेत्तन्न।
किं कारणम्?
तेनानभिधानात्। न हि विकारावयवशब्दादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात्। अनभिधानात्तत उत्पत्तिर्न भविष्यति।।
तच्चावश्यमनभिधानमाश्रयितव्यम्।।
(5542 आक्षेपवार्तिकम्।। 4 ।।)
- अभिधाने ह्यन्यतोऽपि मयट्प्रसङ्गः -
(भाष्यम्) अभिधाने सत्यन्यतोऽपि मयट् प्रसज्येत। बैल्वस्य विकार ाथ्य;ति।।
(5543 सिद्धान्त्येकदेशिवार्तिकम्।। 5 ।।)
- तस्मात्तत्प्रत्ययान्ताल्लुग्वचनम् -
(भाष्यम्) तस्मात्तत्प्रत्ययान्ताल्लुग्वक्तव्यः।।
(सिद्धान्तभाष्यम्)
यदि लुगुच्यते, कथं गौमयं भस्म, द्रौवयं मानम्, कापित्थो रसः? ाथ्य;ति।
अन्यत्र गोमयाद् द्रुवयात् फलाच्च लुग्वक्तव्यः।।
ाथ्य;ह तर्हि--औष्ट्रकी, अञन्तादितीकारो न प्राप्नोति।
ाथ्य;ष्टमेवैतत्संगृहीतम्, औष्ट्रिकेत्येव भवितव्यम्। ाथ्य;ह हि सौनागाः पठन्ति--वुञश्चाञ्कृतप्रसङ्ग ाथ्य;ति।।
ाथ्य;ह तर्हि--पालाशी समिदित्यनुपसर्जनलक्षण ाथ्य;कारो न प्राप्नोति।
मा भूदेवम्--अञ् योऽनुपसर्जनमिति, अञन्तादनुपसर्जनादित्येवं भविष्यति।
नैवं शक्यम्। ाथ्य;ह हि दोषः स्यात्--काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणीति, अणन्तादितीकारः प्रसज्येत।
तस्मादस्तु न तेनानभिधानादित्येव।।
ाथ्य;ह तर्हि कापोतो रस ाथ्य;ति--प्राणिशब्दो नोपपद्यते।
नैष दोषः। ाथ्य;दं तावदयं प्रष्टव्यः--योऽसावाद्यः कपोतः सलोमकः सपक्षः, न संप्रति प्राणिति, कथं

तत्र प्राणिशब्दो वर्तते? ःथ्य;ति।
अथ मतमेतत्--प्रकृत्यन्वया विकारा भवन्तीति।
ःथ्य;हापि न दोषो भवति।।
-4-3-156- क्रीतवत्परिमाणात् (1725)
(प्रत्ययातिदेशाधिकरणम्)
(जिज्ञासाभाष्यम्)
कथमिदं विज्ञायते--क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयोरिति,
आहोस्वित्परिमाणात् क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयोरिति?
किं चातः?
यदि विज्ञायते--क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयोरिति,
प्रत्ययमात्रं प्राप्नोति।
अथ विज्ञायते--परिमाणात् क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयोरिति, प्रकृतिमात्रात् प्राप्नुवन्ति।
तस्मात्--
(5544 सूत्रार्थसम्पादने एकदेशिवार्तिकम्।। 1 ।।)
- क्रीतवत्परिमाणादङ्गं च -
(भाष्यम्) अङ्गं च क्रीतवदिति वक्तव्यम्। तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।।
(वार्तिकोक्तार्थसाधने भाष्यम्)
क्रीतवदिति वतिनिर्देशोऽयम्। यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन क्रीते प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन परिमाणादिद्विकारावयवयोर्भवन्ति, ततोऽमी क्रीतवत् कृताः स्युः।
अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यात्, नामी क्रीतवत् कृताः स्युः।।
(5545 विप्रतिषेधवार्तिकम्।। 2 ।।)
- अणो वृद्धान्मयट् -
(भाष्यम्) अणो वृद्धान्मयडित्येतद्भवति विप्रतिषेधेन।
अणोऽवकाशः--तित्तिडीक--तैत्तिडीकम्।
मयटोऽवकाशः--काष्ठमयम्।
ःथ्य;होभयं प्राप्नोति--शाकमयम्।।
(5546 विप्रतिषेधवार्तिकम्।। 3 ।।)
- ओरञोऽनुदात्तादेरञश्च -
(भाष्यम्) ओरञोऽनुदात्तादेरञश्च मयड् भवति विप्रतिषेधेन।
ओरञोऽवकाशः--अरडु--आरडवम्।
मयटः स एव।
ःथ्य;होभयं प्राप्नोति--दारु--दारुमयम्। अनुदात्तादेरञ्भवतीत्यस्यावकाशः--कौवलम्। जरद्वृक्ष--जारद्वृक्षम्।
मयटः स एव।
ःथ्य;होभयं प्राप्नोति--आम्रमयम्।।
(5547 विप्रतिषेधवार्तिकम्।। 4 ।।)
- मयटः प्राण्यञ्विप्रतिषेधेन -
(भाष्यम्) मयटः प्राण्यञ्भवति विप्रतिषेधेन। प्राण्यञोऽवकाशः--गार्ध्रम्।
मयटः स एव।
ःथ्य;होभयं प्राप्नोति--चाषम्। भासम्।
प्राण्यञ्भवति विप्रतिषेधेन।।
(5547 विप्रतिषेधखण्डनवार्तिकम् ।।5।।)
- न वाऽनवकाशत्वादपवादो मयट् -
(भाष्यम्) न वैष युक्तो विप्रतिषेधः, योऽयमञो मयटश्च।
किं कारणम्?
अनवकाशत्वादपवादो मयट्।
अनवकाशो मयट् सावकाशमञं बाधिष्यते।
स कथमनवकाशः?
यद्यनुवर्तन्ते शैषिकाः।

अथ निवृत्ताः शैषिकाः,
वृद्धमाद्युदात्तं मयटोऽवकाशः।।
(5549 विप्रतिषेधखण्डनवार्तिकम्।। 6 ।।)
- प्राण्यञ्ञश्च -
(भाष्यम्) अयं चाप्ययुक्तो विप्रतिषेधः--योऽयं मयटः प्राण्यञ्ञश्च।
किं कारणम्?
अनवकाशत्वादपवादो मयडित्येव।
अनवकाशो मयट्, स यथैव ओरञ्ञमनुदात्तादेरञ्ञं च बाधते, एवं प्राण्यञ्ञमपि बाधेत।।
(5550 एकदेशिवार्तिकम्।। 7 ।।)
- तस्मान्मयड्विधाने प्राणिप्रतिषेधः -
(भाष्यम्) तस्मान्मयड्विधाने प्राणिभ्यः प्रतिषेधो वक्तव्यः।
स तर्हि वक्तव्यः।
न वक्तव्यः।।
(सिद्धान्तभाष्यम्)
मध्येऽपवादाः पूर्वान् विधीन् बाधन्त ाःथ्य;त्येवमयं मयट् ओरञ्ञमनुदात्तादेरञ्ञं च बाधिष्यते, प्राण्यञ्ञं न बाधिष्यते।।
यद्येतदस्ति--मध्येऽपवादाः पुरस्तादपवादाः ाःथ्य;ति, माऽनुवृतञ्ञ्शैषिकाः।
पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त ाःथ्य;त्येवमयमण् अञ्ञं बाधिष्यते, मयटं न बाधिष्यते।।
(5551 विप्रतिषेधवार्तिकम्।। 8 ।।)
- अनुदात्तादेरञ्ञः प्राण्यञ्ञ्विप्रतिषेधेन -
(भाष्यम्) अनुदात्तादेरञ्ञः प्राण्यञ्ञ्भवति विप्रतिषेधेन।
अनुदात्तादेरञ्ञ्भवतीत्यस्यावकाशः--जरद्वृक्षः--जारद्वृक्षम्।
प्राण्यञ्ञः स एव।
ाःथ्य;होभयं प्राप्नोति--कपोत--कापोतम्।
प्राण्यञ्ञ्भवति विप्रतिषेधेन।।
(विप्रतिषेधोपपादकं भाष्यम्)
कः पुनरत्र विशेषः, तेन वा सति, अनेन वा?
सापवादः स विधिः, अयं पुनर्निरपवादः।
यदि तेन स्याद्, ाःथ्य;ह न स्यात्--श्वाविधो विकारः शौवाविधम्।।
-4-3-163- फले लुक् (1733)
(लुगधिकरणम्)
(5552 सूत्राक्षेपे वार्तिकम्।। 1 ।।)
- फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् -
(भाष्यम्) फले लुग्वचनमनर्थकम्।
किं कारणम्?
प्रकृत्यन्तरत्वात्, प्रकृत्यन्तरमामलकशब्दः फले वर्तते।
एकान्तदर्शनात् प्राप्नोति।।
(5553 सूत्राक्षेपे वार्तिकम्।। 2 ।।)
- एकान्तदर्शनात्प्रसङ्ग ाःथ्य;ति चेद्वृक्षे लुग्वचनम् -
(भाष्यम्) एकान्तदर्शनात्प्रसङ्ग ाःथ्य;ति चेत्, वृक्षे लुग्वक्तव्यः।
वृक्षोऽपि हि फलैकान्तः।।
4-3-2- आ. 14 (806 विधिसूत्रम्
-4-3-166- लुप् च (1736)
(लुपोऽधिकरणम्)
(5554 संग्रहवार्तिकम्।। 1 ।।)
- लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् -
(भाष्यम्) लुप्प्रकरणे फलपाकशुषामुपसंख्यानं कर्तव्यम्। व्रीहयः, यवाः, माषाः, मुद्गाः, तिलाः।।
(5555 संग्रहवार्तिकम्।। 2 ।।)
- पुष्पमूलेषु च बहुलम् -
(भाष्यम्) पुष्पमूलेषु बहुलं लुब्वक्तव्यः। मल्लिका, करवीरम्, बिसम्, मृणालम्।

न च भवति--पाटलानि मूलानि।।
ः्थ्य्;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्।।
पादश्च समाप्तः।।
-9-9-999-

# महाभाष्यम्/चतुर्थोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/nmr
< महाभाष्यम् | चतुर्थोऽध्यायः
-4-4-1- प्राग्वहतेष्ठक् (1739)
(ठकोऽधिकरणम्)
(5556 संग्रहवार्तिकम्।। 1 ।।)
- ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् -
(भाष्यम्) ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानं कर्तव्यम्। माशब्दिकः, नैत्यशब्दिकः, कार्यशब्दिकः।।
(5557 संग्रहवार्तिकम्।। 2 ।।)
- आहौ प्रभूतादिभ्यः -
(भाष्यम्) आहौ प्रभूतादिभ्यष्ठग्वक्तव्यः। प्रभूतमाह--प्राभूतिकः, पार्यासिकः।।
(5558 संग्रहवार्तिकम्।। 3 ।।)
- पृच्छतौ सुस्नातादिभ्यः -
(भाष्यम्) पृच्छतौ सुस्नातादिभ्यष्ठग्वक्तव्यः। सौस्नातिकः, सौखरात्रिकः, सौखशायनिकः।।
(5559 संग्रहवार्तिकम्।। 4 ।।)
- गच्छतौ परदारादिभ्यः -
(भाष्यम्) गच्छतौ परदारादिभ्यष्ठग्वक्तव्यः। पारदारिकः, गौरुतल्पिकः।।
-4-4-9 आकर्षात् ष्ठल् (1747)
(ष्ठल्प्रत्ययाधिकरणम्)
(प्रत्ययानां षित्त्वनिर्द्धारणे भाष्यम्)
ः२थ्य;ह केषांचित्सांहितिकं षत्वम्, केषांचित्षिदर्थम्।
तत्र न ज्ञायते केषां सांहितिकं षत्वम्, केषां षिदर्थमिति?
तत्र किं न्याय्यम्?
परिगणनं कर्तव्यम्।।
(5560 परिगणनवार्तिकम्।। 1 ।।)
- आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च। आवसथात्किसरादेः षितः षडेते ठगधिकारे -
-4-4-17- विभाषा विवधात् (1755)
(ष्ठनो विभाषाधिकरणम्)
(5561 पूरकवार्तिकम्।। 1 ।।)
- वीवधाच्चेति वक्तव्यम् -
वैवधिकः।।
-4-4-23- चूर्णादिनिः (1761)
(ः२थ्य;निप्रत्ययाधिकरणम्)
(सूत्रप्रत्याख्यायकभाष्यम्)
अयं योगः शक्योऽवक्तुम्।
कथं चूर्णी, चूर्णिनौ, चूर्णिन ः२थ्य;ति?
ः२थ्य;निनैतन्मत्वर्थीयेन सिद्धम्।।
-4-4-24- लवणाल्लुक् (1762)
(लुकोऽधिकरणम्)
(5564 सूत्रप्रत्याख्याने वार्तिकम्।। 1 ।।)
- लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात् -
(भाष्यम्) लवणाल्लुग्वचनमनर्थकम्।
किं कारणम्?
रसवाचित्वात्। रसवाच्येष लवणशब्दः, नैष संसृष्टिनिमित्तः।
आतश्च रसवाची।।
(5565 लवणशब्दस्य रसवाचकत्वबोधकवार्तिकम्।। 2 ।।)
- असंसृष्टे च दर्शनात् -

(भाष्यम्) असंसृष्टेऽपि हि लवणशब्दो वर्तते।
तद्यथा--लवणं क्षीरम्, लवणं पानीयमिति।।
(5566 रसवाचकत्वबोधकवार्तिकम्।। 3 ।।)
- संसृष्टे चादर्शनात् -
(भाष्यम्) संसृष्टेऽपि च यदा नोपलभ्यते, तदाह--अलवणः सूपः, अलवणा यवागूः, अलवणं शाकमिति।।
-4-4-30- प्रयच्छति गर्ह्यम् (1768)
(ठकोऽधिकरणम्)
(सूत्रनिर्देशाक्षेपभाष्यम्)
अयुक्तोऽयं निर्देशः, यदसावल्पं दत्वा बहु गृह्णाति तद्गर्ह्यम्।
कथं तर्हि निर्देशः कर्तव्यः?
(5567 निर्देशसाधकवार्तिकम्।। 1 ।।)
- प्रयच्छति गर्ह्याय -
(भाष्यम्) ःथ्य;ति। स तर्हि तथा निर्देशः कर्तव्यः।
न कर्तव्यः।
तादर्थ्यात्ताच्छब्द्यं भविष्यति--गर्ह्यार्थं गर्ह्यम्।।
(5568 निर्देशोपपादकवार्तिकम्।। 2 ।।)
- मेस्याल्लोपो वा -
(भाष्यम्) मेस्याच्छब्दलोपो वा द्रष्टव्यः। द्विगुणं मे स्यादिति प्रयच्छति--द्वैगुणिकः, त्रैगुणिकः।।
(5569 लक्ष्यसाधकवार्तिकम्।। 3 ।।)
- वृद्धेर्वृधुषिभावः -
(भाष्यम्) वृद्धेर्वृधुषिभावो वक्तव्यः। वार्धुषिकः।।
-4-4-41- धर्मं चरति (1789)
(ठकोऽधिकरणम्)
(5570 पूरकवार्तिकम्।। 1 ।।)
- अधर्माच्च -
(भाष्यम्) अधर्माच्चेति वक्तव्यम्। आधर्मिकः।।
-4-4-49- ऋतोऽञ् (1787)
(अञोऽधिकरणम्)
(5571 पूरकवार्तिकम्।। 1 ।।)
- नृनराभ्यामञ्वचनम् -
(भाष्यम्) नृनराभ्यामञ्चेति वक्तव्यम्। नुर्धम्या-नारी। नरस्यापि--नारी।।
(5572 पूरकवार्तिकम्।। 2 ।।)
- विशसितुरिड्लोपश्च -
(भाष्यम्) विशसितुरिड्लोपश्चाञ्च वक्तव्यः। विशसितुर्धम्यं वैशस्त्रम्।।
(5573 पूरकवार्तिकम्।। 3 ।।)
- विभाजयितुर्णिलोपश्च -
(भाष्यम्) विभाजयितुर्णिलोपश्चाञ्च वक्तव्यः। विभाजयितुर्धम्यं--वैभाजित्रम्।।
-4-4-55- शिल्पम् (1793)
(ठञोऽधिकरणम्)
(अनिष्टनिवारकं भाष्यम्)
किं यस्य मृदङ्गः शिल्पं स मार्दङ्गिकः?
किं चातः?
कुम्भकारे प्राप्नोति।
एवं तर्ह्युत्तरपदलोपो द्रष्टव्यः। शिल्पमिव--शिल्पम्। मृदङ्गवादनं शिल्पमस्य--मार्दङ्गिकः, मौरजिकः, पाणविकः, पैठरिकः।।
-4-4-59- शक्तियष्ट्योरीकक् (1797)
(ःथ्य;कोऽधिकरणम्)
(सूत्रन्यासासमर्थकं भाष्यम्)
किमर्थमीकगुच्यते, न कगेवोच्येत?
कारूपसिद्धिः--शाक्तीकः, याष्टीक ःथ्य;ति?

शक्तियष्ट्योरीकारोऽन्ते, कशब्दश्च प्रत्ययः।।
न सिध्यति।
विभाषा चैव हि शक्तियष्ट्योरीकारः, अपि च केऽणः (7।4।13) ःथ्य;ति ह्रस्वत्वम् प्रसज्ज्येत।
एवं तर्हि--ःथ्य;कगुच्यते।
का रूपसिद्धिः--शाक्तीको याष्टीक ःथ्य;ति।
सवर्णदीर्घत्वेन सिद्धम्।
न सिध्यति, यस्येति लोपः प्राप्नोति।।
ःथ्य;कारोच्चारणसामर्थ्यान्न भविष्यति।।
यदि तर्हि प्राप्नुवन् विधिरिकारोच्चारणसामर्थ्याद्बाध्यते, सवर्णदीर्घत्वमपि न प्राप्नोति।
यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते। यस्य तु विधेर्निमित्तमेव, नासौ बाध्यते।
यस्येति लोपं च प्रतीकारोच्चारणमनर्थकम्, सवर्णदीर्घस्य तु निमित्तमेव।।
4-4-1- आ. 12 (818 विधिसूत्रम्
-4-4-60- 1798 अस्तिनास्तिदिष्टं मतिः
(ठकोऽधिकरणम्)
(सूत्रार्थोपपादकभाष्यम्)
किं यस्यास्ति मतिः स आस्तिकः?
किं चातः?
चौरऽपि प्राप्नोति।।
एवं तर्हि--ःथ्य;तिलोपोऽत्र द्रष्टव्यः। अस्तीत्यस्य मतिः--आस्तिकः। नास्तीत्यस्य मतिः--नास्तिकः। दिष्टमित्यस्य मतिः--दैष्टिकः।।
-4-4-62- छत्रादिभ्यो णः (1800)
(णप्रत्ययाधिकरणम्)
(सूत्रार्थबोधकभाष्यम्)
किं यस्य च्छत्रधारणं शीलं स च्छात्रः?
किं चातः?
राजपुरुषे प्राप्नोति।
एवं तर्हि--उत्तरपदलोपोऽत्र द्रष्टव्यः--छत्रमिवच्छत्रम्। गुरुश्छत्रम्। गुरुणा शिष्यश्छत्रवत् छाद्यः। शिष्येण गुरुश्छत्रमिव परिपाल्यः।।
-4-4-65- हितं भक्षाः (1803)
(5574 आक्षेपवार्तिकम्।। 1 ।।)
- हितं भक्षा ःथ्य;ति चतुर्थीनिर्देशः -
(भाष्यम्) हितं भक्षा ःथ्य;ति चतुर्थीनिर्देशः कर्तव्यः।।
(5575 आक्षेपसमर्थकवार्तिकम्।। 2 ।।)
- ःथ्य;तरथा ह्यनिर्देशः -
(भाष्यम्) ःथ्य;तरथा हि निर्देशो न भवति। हितशब्देन च योगे चतुर्थी विधीयते, सा प्राप्नोति।
स तर्हि चतुर्थीनिर्देशः कर्तव्यः?
न कर्तव्यः।
एवं वक्ष्यामि--हितं भक्षास्तदस्मै। ततः--दीयते नियुक्तम्। तदस्मा ःथ्य;ति।।
-4-4-76- तद्वहति रथयुगप्रासङ्गम् (1814)
(यतोऽधिकरणम्)
(5576 सूत्राक्षेपवार्तिकम्।। 1 ।।)
- वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानानर्थक्यं विहितत्वात् -
(भाष्यम्) वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानमनर्थकम्।।
किं कारणम्?
विहितत्वात्। विहितोऽत्र प्रत्ययः तस्येदम् (4।3।120) ःथ्य;ति।।
शब्दभेदादविधानम्। शब्दभेदादविधिः स भवति--अन्यो हि शब्दो रथं वहति, अन्यो हि रथस्य वोढेति।।
(5577 आक्षेपसमर्थकं वार्तिकम्।। 2 ।।)
- शब्दभेदादविधानमिति चेदर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् -
(भाष्यम्) शब्दभेदादविधानमिति चेदर्थाश्रयः प्रत्ययविधिः। य एवार्थो रथं वहति, स एव रथस्य वोढेति।
तत्रार्थसामान्यात्सिद्धम्।।
(सिद्धान्तभाष्यम्)

ः थ्य;दं तर्हि प्रयोजनम्--यो द्वौ रथौ वहति स द्विरथ्यः। यो द्वयो रथयोर्वोढा स द्विरथः। तेन सति लुग्भवति।।
अनेन सति कस्मान्न भवति?
प्राग्दीव्यत ःथ्य;त्युच्यते।।
-4-4-82- संज्ञायां जन्याः(1820)
(सूत्रार्थोपपादकभाष्यम्)
किं निपात्यते?
जनन्या जनीभावो निपात्यते यच्च प्रत्ययः।।
(5578 सूत्राक्षेपवार्तिकम्।। 1 ।।)
- जन्या ःथ्य;ति निपातनानर्थक्यं पञ्चमीनिर्देशात् -
(भाष्यम्) जन्या ःथ्य;ति निपातनमनर्थकम्।
किं कारणम्?
पञ्चमीनिर्देशात्। जनीशब्दादेषा पञ्चमी।।
(सूत्रफलबोधकं भाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--सर्वकालः प्रत्ययविधिर्यथा विज्ञायेत।
जनीं वहन्ति जन्याः। जनीं वोढारो जन्याः। जनीमवाक्षुर्जन्या ःथ्य;ति।।
-4-4-83- विध्यत्यधनुषा (1821)
(5579 आक्षेपवार्तिकम्।। 1 ।।)
- विध्यत्यकरणेन -
(भाष्यम्) विध्यत्यकरणेनेति वक्तव्यम्।।
(5580 आक्षेपसमर्थकं वार्तिकम्।। 2 ।।)
- ःथ्य;तरथा ह्यनिष्टप्रसङ्गः -
(भाष्यम्) अधनुषेति ह्युच्यमानेऽतिप्रसङ्गो भवति।
ःथ्य;हापि प्रसज्येत--शर्कराभिर्विध्यति, कण्टकैर्विध्यतीति।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्।।
(सिद्धान्तभाष्यम्)
कस्मान्न भवति--कण्टकैर्विध्यति, शर्कराभिर्विध्यतीति।
अनभिधानात्।।
-4-4-90- गृहपतिना संयुक्ते ञ्यः (1828)
(ञ्यप्रत्ययाधिकरणम्)
(आक्षेपभाष्यम्)
गृहपतिना संयुक्त ःथ्य;त्युच्यते, तत्रदक्षिणाग्नावपि प्राप्नोति। दक्षिणाग्निरपि गृहपतिना संयुज्यते।।
(सिद्धान्तभाष्यम्)
एवं तर्हि--गृहपतिना संयुक्त ःथ्य;त्युच्यते, सर्वश्च गृहपतिना संयुक्तः।
तत्र प्रकर्षगतिर्विज्ञास्यते--साधीयो यो गृहपतिना संयुक्त ःथ्य;ति।
कश्च साधीयः?
यस्मिन् पत्नीसंयाजाः क्रियन्ते।।
अथ वा गृहपतिर्नाम मन्त्रः स यस्मिन्नुच्यते।।
अथ वा संज्ञायामिति वर्तते।।
-4-4-128- मत्वर्थे मासतन्वोः (1866)
(5581 पूरकवार्तिकम्।। 1 ।।)
- मासतन्वोरनन्तरार्थे वा -
(भाष्यम्) मासतन्वोरनन्तरार्थे वेति वक्तव्यम्। मध्वस्मिन्नस्ति मध्वनन्तरमिति वा मधव्यः। माधवः।।
(5582 पूरकवार्तिकम्।। 2 ।।)
- लुगकारेकाररेफाश्च -
(भाष्यम्) लुगकारेकाररेफाश्च प्रत्यया वक्तव्याः। लुक्--मधुः, नभः, तपः।
अकारः--ःथ्य;षः, ःढ़्य;र्जः।
ःथ्य;कारः--शुचिः।
रेफश्च--शुक्रः।।

4-4-1- आ. 20 (826 विधिसूत्रम्
-4-4-140- 1878 वसोः समूहे च
(5583 पूरकवार्तिकम्।। 1 ।।)
- अक्षरसमूहे छन्दस उपसंख्यानम् -
(भाष्यम्) अक्षरसमूहे छन्दस उपसंख्यानं कर्तव्यम्। ओ श्रावयेति चतुरक्षरम्। अस्तु श्रौषडिति चतुरक्षरम्, ये यजामह ाथ्य;ति पञ्ञ्चाक्षरम्, यजेति द्व्यक्षरम्, द्व्यक्षरो वषट्कारः। एष वै सप्तदशाक्षरः--छन्दस्यः
प्रजापतिर्यज्ञमनुविहितः।।
(5584 एकदेशिवार्तिकम्।। 2 ।।)
- छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् -
(भाष्यम्) छन्दसि बहुभिर्वसव्यैरुपसंख्यानं कर्तव्यम्। हस्तौ पृणस्व बहुभिर्वसव्यैः।।
(5585 एकदेशिवार्तिकम्।। 3 ।।)
- अग्निरीशे वसव्यस्य -
(भाष्यम्) अग्निरीशे वसव्यस्येत्युपसंख्यानं कर्तव्यम्।
तत्तर्हि उपसंख्यानं कर्तव्यम्?
न कर्तव्यम्।।
(5586 सिद्धान्तवार्तिकम्।। 4 ।।)
- स्वार्थविज्ञानात्सिद्धम् -
(भाष्यम्) स्वार्थविज्ञानात् सिद्धमेतत्। वसव एव वसव्याः पान्तु।।
ाथ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।।
पादोऽध्यायश्च चतुर्थः समाप्तः।।
-9-9-999-

# महाभाष्यम्/पञ्चमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/nms
< महाभाष्यम् | पञ्चमोऽध्यायः
-5-1-1- प्राक् क्रीताच्छः (1883)
(छप्रत्ययाधिकरणम्)
(पदकृत्यभाष्यम्)
प्राग्वचनं किमर्थम्?
(5587 प्राक्पदप्रयोजनवार्तिकम्।। 1 ।।)
- प्राग्वचन उक्तम् -
(भाष्यम्) किमुक्तम्?
तत्र तावदुक्तम्-- प्राग्वचनं सकृद्विधानार्थम्, अधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्गः ःथ्द्य;ति।
ःथ्द्य;हापि प्राग्वचनं क्रियते सकृद्विधानार्थम्। सकृद्विहितः प्रत्ययो विहितो यथा स्यात्, योगे योगे तस्य ग्रहणं मा कार्षमिति।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्, अधिकारादप्येतत्सिद्धम्। अधिकारः प्रतियोगं तस्यानिर्देशार्थ ःथ्द्य;ति योगे योग उपतिष्ठते।।
(समाधानवार्तिकस्मारकभाष्यम्)
अधिकारात्सिद्धमिति चेदपवादविषये छप्रसङ्गः
अधिकारात् सिद्धमिति चेदपवादविषये छः प्राप्नोति। उगवादिभ्यो यत् (5।1।2) छश्च, ःथ्द्य;ति छोऽपि प्राप्नोति।
तस्मात् प्राग्वचनं कर्तव्यम्।।
(प्राक्पदार्थनिरूपकभाष्यम्)
अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते--प्राक् क्रीताद्याः प्रकृतयः, आहोस्वित्प्राक्क्रीताद्येऽर्था ःथ्द्य;ति।
किं चातः?
यदि विज्ञायते--प्राक्क्रीताद्याः प्रकृतय ःथ्द्य;ति,
स एव दोषः--अपवादविषये छप्रसङ्ग ःथ्द्य;ति।
अथ विज्ञायते प्राक् क्रीताद्येऽर्था ःथ्द्य;ति
न दोषो भवति। समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यत् छं बाधिष्यते।।
यथा न दोषस्तथाऽस्तु।
प्राक् क्रीताद्येऽर्था ःथ्द्य;ति विज्ञायते।
कुत एतत्?
तथा ह्ययं प्राधान्येनार्थं प्रतिनिर्दिशति। ःथ्द्य;तरथा हि बह्व्यस्तत्र प्रकृतयः पठ्यन्ते, ततो यां कांचिदेव प्रकृतिमवधित्वेनोपाददीत।
अथ वा पुनरस्तु--प्राक् क्रीताद्याः प्रकृतय ःथ्द्य;ति। ननु चोक्तमपवादविषयेऽपि छप्रसङ्ग ःथ्द्य;ति।।
(आक्षेपनिवारकवार्तिकस्मारकभाष्यम्)
न वा क्वचिद्वावचनात्
न वा एष दोषः।
किं कारणम्?
क्वचिद्वावचनात्। यदयं क्वचिद्वावचनं करोति--विभाषा हविरपूपादिभ्यः (5।1।4) ःथ्द्य;ति, तज्ज्ञापयति--नापवादविषये छो भवतीति।।
(आक्षेपभाष्यम्)
यद्येवम्, नार्थः प्राग्वचनेन, अधिकारात्सिद्धम्।
ननु चोक्तमधिकारात्सिद्धमिति चेदपवादविषये छप्रसङ्ग ःथ्द्य;ति।
परिहृतमेतत्--न वा क्वचिद्वावचनात् ःथ्द्य;ति।
(सिद्धान्तभाष्यम्)
अथ किमर्थमियानवधिर्गृह्यते, न प्राक् ठञ्ञ ःथ्द्य;त्येवोच्येत। एतज्ज्ञापयत्याचार्यः--अर्थेष्वयं भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?
समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यत् छं बाधते।।
-5-1-2- उगवादिभ्यो यत् (1884)
(यतोऽधिकरणम्)
(5588 पूर्वविप्रतिषेधबोधकमेकदेशिवार्तिकम्।। 1 ।।)
- यञ्ञ्ञ्यावञ्त्रः पूर्वविप्रतिषिद्धं सनङ्गूपानहौ प्रयोजनम् -

(भाष्यम्) यञ्ञ्ञ्यौ भवतोऽञ्ञः पूर्वविप्रतिषेधेन।
किं प्रयोजनम्?
सनङ्गूपानहौ प्रयोजनम्।
यतोऽवकाशः -- शङ्कव्यं दारु, पिचव्यः कार्पासः।
अञ्ञोऽवकाशः--वार्ध्रम्, वारत्रम्।
सनङ्गुर्नाम चर्मविकारः, तस्मादुभयं प्राप्नोति -- सनङ्गव्यं चर्म।।
ञ्ञ्यस्यावकाशः--औपानह्यं दारु।
अञ्ञः स एव।
उपानन्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति--औपानह्यं चर्म।।
(5589 विप्रतिषेधबोधकवार्तिकम्।। 2 ।।)
- ढञ्च -
(भाष्यम्) ढञ्च भवत्यञ्ञः पूर्वविप्रतिषेधेन।
ढञोऽवकाशः--छादिषेयं तृणम्।
अञ्ञः स एव।
छदिर्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति--छादिषेयं चर्म।
ढञ् भवति पूर्वविप्रतिषेधेन।।
(5590 विप्रतिषेधबोधकवार्तिकम्।। 3 ।।)
- हविरपूपादिभ्यो विभाषाया यत् -
(भाष्यम्) हविरपूपादिभ्यो विभाषाया यद्भवति पूर्वविप्रतिषेधेन।
हविरपूपादिभ्यो विभाषाया अवकाशः--आमिक्ष्यम्--आमिक्षीयम्। पुरोडाश्यम्--पुरोडाशीयम्।
यतः स एव।
ःथ्य;होभयं प्राप्नोति--चरव्यास्तण्डुलाः।
यद्भवति पूर्वविप्रतिषेधेन।।
(5591 विप्रतिषेधबोधकवार्तिकम्।। 4 ।।)
- अन्नविकारेभ्यश्च -
(भाष्यम्) अन्नविकारेभ्यश्च विभाषाया यद्भवति पूर्वविप्रतिषेधेन।
अन्नविकारेभ्यश्च विभाषाया अवकाशः--सुर्याः, सुरीयाः।
यतः स एव।
ःथ्य;होभयं प्राप्नोति--सक्तव्या धाना ःथ्य;ति।
यद्भवति पूर्वविप्रतिषेधेन।।
(विप्रतिषेधानर्थक्यबोधकमेकदेशिभाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।
न वक्तव्यः। ःथ्य;ष्टवाची परशब्दः--विप्रतिषेधे परं यदिष्टं तद्भवतीति।
(वार्तिकावतरणभाष्यम्)
अयं नाभिशब्दो गवादिषु पठ्यते। तत्रैवोच्यते--नाभि नभं चेति। तत्र चोद्यते--
(5592 नाभेः प्रत्ययानुपपादकवार्तिकम्।। 5 ।।)
- नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् -
(भाष्यम्) नाभेर्नभभावे प्रत्ययस्यानुपपत्तिः।
किं कारणम्?
प्रकृत्यभावात्।
विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्, न च नाभिसंज्ञिकाया विकृतेः प्रकृतिरस्ति। यदेव हि तन्मण्डलचक्राणां मण्डलचक्रं तन्नभ्यमित्युच्यते।।
(5593 रूपसाधकं वार्तिकम्।। 6 ।।)
- सिद्धं तु शाखादिषु वचनात् ह्रस्वत्वं च -
(भाष्यम्) सिद्धमेतत्।
कथम्?
शाखादिषु नाभिशब्दः पठितव्यः, ह्रस्वत्वं च वक्तव्यम्। नाभिरिव--नभ्यमिति।
कः पुनरिहोपमार्थः?
यत्तदक्षधारणं परिवर्तनं वा।।

अपर आह--यत्तदञ्जनोपाञ्जनमिति।
(गवादिगणपाठप्रयोजनभाष्यम्)
न तर्हीदानीमिदं वक्तव्यम्--नाभि नभं चेति।
वक्तव्यं च।
किं प्रयोजनम्?
यान्येतान्यरवन्ति चक्राणि तदर्थम्। तत्र नाभिसंज्ञिकाया विकृतेः प्रकृतिरस्ति।
यानि चाप्यनरवन्ति चक्राणि तदर्थमपीदं वक्तव्यम्। दृश्यते हि समुदायादवयवस्य पृथक्त्वम्।
तद्यथा--वार्क्षी शाखेति।।
गुणान्तरयोगाच्च विकारशब्दो दृश्यते।
तद्यथा--बौभीतको यूपः, खादिरं चषालमिति।
तत्रावयवात्समुदाये वृत्तिर्भविष्यति।।
(वृक्षे नभ्यशब्दोपपादकवार्तिकावतरणभाष्यम्)
अथ यो नभ्यार्थो वृक्षः कथं तत्र भवितव्यम्--नभ्यो वृक्षः, नभ्या शिंशपेति?
(5594 एकदेशिसमाधानवार्तिकम्।। 7 ।।)
- नभ्यात्तु लुग्वचनम् -
(भाष्यम्) नभ्यात्तु लुग्वक्तव्यः।
स तर्हि लुग्वक्तव्यः।
(सिद्धान्तभाष्यम्)
न वक्तव्यः। तादर्थ्यात्ताच्छब्द्यं भविष्यति। नभ्यार्थो नभ्य ाःथ्य;ति।।
-5-1-3- कम्बलाच्च संज्ञायाम् (1885)
(सूत्रप्रत्याख्यानपरं भाष्यम्)
अयं योगः शक्योऽवक्तुम्।
कथमशीतिशतं कम्बल्यमिति?
निपातनादेतत्सिद्धम्।
किं निपातनम्?
अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि (4।1।22) ाःथ्य;ति।
ाःथ्य;दं तर्हि प्रयोजनम्--संज्ञायामिति वक्ष्यामीति।
ाःथ्य;ह मा भूत्--कम्बलीया ाःढ्य;र्णाः।
एतदपि नास्ति प्रयोजनम्। परिमाणपर्युदासेन पर्युदासे प्राप्ते तत्र कम्बल्यग्रहणं क्रियते--परिमाणार्थम्, परिमाणं च संज्ञैव।।
-5-1-4- विभाषा हविरपूपादिभ्यः (1886)
(अप्राप्तविभाषानिश्चायकं भाष्यम्)
किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते।
अथं च प्राप्ते? कथं वाऽप्राप्ते?
ाःढ्य;र्णान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते।।
(5595 सिद्धान्तवार्तिकम्।। 1 ।।)
- हविरपूपादिभ्योऽप्राप्ते -
(भाष्यम्) हविरपूपादिभ्योऽप्राप्ते विभाषा, प्राप्ते नित्यो विधिः। चरव्यास्तण्डुलाः।।
-5-1-6- शरीरावयवाद्यत् (1888)
(5596 संग्राहकवार्तिकम्।। 1 ।।)
- यत्प्रकरणे रथाच्च -
(भाष्यम्) यत्प्रकरणे रथाच्चोपसंख्यानं कर्तव्यम्। रथाय हिता-रथ्या।।
-5-1-7- खलयवमाषतिलवृषब्रह्मणश्च (1889)
(अनिष्टरूपनिवारकं भाष्यम्)
वृषशब्दोऽयमकारान्तो गृह्यते।
वृषन्शब्दोऽपि नकारान्तोऽस्ति तस्योपसंख्यानं कर्तव्यम्, वृषशब्दश्चादेशो वक्तव्यः। वृष्णे हितमिति विगृह्य--वृष्यमित्येव यथा स्यात्।
तथा ब्रह्मन्शब्दो नकारान्तो गृह्यते।
ब्राह्मणशब्दश्चाकारान्तोऽप्यस्ति तस्योपसंख्यानं कर्तव्यम्, ब्रह्मन्शब्दश्चादेशो वक्तव्यः। ब्राह्मणेभ्यो हितमिति विगृह्य--ब्रह्मण्यमित्येव यथा स्यात्।
तत्तर्हि वक्तव्यम्।

न वक्तव्यम्। समानार्थावेतौ--वृषशब्दो वृषन्शब्दश्च, ब्रह्मन्शब्दो ब्राह्मणशब्दश्च। आतश्च समानार्थौ, एवं ह्याह--कुतो नु चरसि ब्रह्मन् कुतो नुचरसिब्राह्मण--ःथ्य;ति।
तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्माद्‌दुत्पत्तिर्भविष्यति--अविरविकन्यायेन।
तद्यथा--अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति--आविकमिति।
एवमिहापि वृषाय हितमिति विगृह्य--वृष्यमिति भविष्यति। वृष्णे हितमिति विगृह्य वाक्यमेव।
तथा ब्रह्मणे हितमिति विगृह्य ब्रह्मण्यमिति भविष्यति, ब्राह्मणेभ्यो हितमिति--विगृह्य वाक्यमेव भविष्यति।
त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवति।।
5-1-1- आ. 7 (833 विधिसूत्रम्)
-5-1-9- आत्मन्विश्वजनभोगोत्तरपदात्खः 1891
(खाधिकरणम्)
(5597 भोगोत्तरपदात्खविधाने पूर्वपक्षे आक्षेपवार्तिकम्।। 1 ।।)
- भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् -
(भाष्यम्) भोगोत्तरपदात्खविधानेऽनिर्देशः। अगमको निर्देशोऽनिर्देशः।
किं कारणम्?
पूर्वपदार्थहितत्वात्। उत्तरपदार्थप्रधानस्तत्पुरुषः पूर्वपदार्थप्रधाने च प्रत्यय ःथ्य;ष्यते। पितृभोगाय हिते प्राप्नोति, पित्रे चैव हित ःथ्य;ष्यते।
एवं तर्हि भोगीनर्प्रत्ययो विधास्यते।।
(5598 न्यासान्तरविधाने दोषवार्तिकम्।। 2 ।।)
भोगीनरिति चेद्वावचनम्।।
(भाष्यम्) भोगीनरिति यदि प्रत्ययो विधीयते वावचनं कर्तव्यम्, मात्रीयः पित्रीय ःथ्य;त्यपि यथा स्यादिति।।
(5599 एकदेशिवार्तिकम्।। 3 ।।)
- राजाचार्याभ्यां नित्यम् -
(भाष्यम्) राजाचार्याभ्यां नित्यमिति वक्तव्यम्। राजभोगीनः।
आचार्यादणत्वं च। आचार्यभोगीनः।।
किं भोगीनर्प्रत्ययो विधीयत ःथ्य;त्यतः राजाचार्याभ्यां नित्यमिति वक्तव्यम्?
नेत्याह--सर्वथा राजाचार्याभ्यां नित्यमिति वक्तव्यम्।।
ःथ्य;ह च ग्रामणिभोगीनः, सेनानिभोगीन ःथ्य;ति उत्तरपदे ःथ्य;ति ह्रस्वत्वं न प्राप्नोति।
ःथ्य;ह चाब्भोगीन ःथ्य;ति अपोभि (7।4।48) ःथ्य;ति तत्वं प्राप्नोति। सूत्रं च भिद्यते।।
(सिद्धान्तभाष्यम्)
यथान्यासमेवास्तु।
ननु चोक्तम्--भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात्--ःथ्य;ति।
नैष दोषः। अयं भोगशब्दोऽस्त्येव द्रव्यपदार्थकः। तद्यथा--भोगवानयं देश ःथ्य;त्युच्यते यस्मिन्गावः सस्यानि च वर्तन्ते।
अस्ति क्रियापदार्थकः। तद्यथा--भोगवानयं ब्राह्मण ःथ्य;त्युच्यते। यः सम्यक् स्नानादीः क्रिया अनुभवति।
तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम्।
यश्च पितृस्थाभ्यः क्रियाभ्यो हितः, संबन्धादसौ पित्रेऽपि हितो भवति।।
यदि संबन्धात्, अस्तु द्रव्यपदार्थकस्यापि ग्रहणम्। योऽपि हि पितृद्रव्याय हितः, संबन्धादसौ पित्रे हितो भवति।।
अथ वा भोगशब्दः शरीरवाच्यपि दृश्यते। तद्यथा--अहिरिव भोगैः पर्येति बाहुम्। अहिरिव शरीरैरिति गम्यते।
एवं पितृशरीराय हितः-पितृभोगीण ःथ्य;ति।।
(5600 उपसङ्खयानवार्तिकम्।। 4 ।।)
- खविधाने पञ्चजनादुपसंख्यानम् -
(भाष्यम्) खविधाने पञ्चजनादुपसंख्यानं कर्तव्यम्। पञ्चजनाय हितः--पञ्चजनीनः।
समानाधिकरण ःथ्य;ति वक्तव्यम्। यो हि पञ्चानां जनाय हितः--पञ्चजनीयः स भवति।।
(5601 विधिवार्तिकम्।। 5 ।।)
- सर्वजनाट्ठञ्च -
(भाष्यम्) सर्वजनाट्ठञ्च वक्तव्यः, खश्च। सर्वजनाय--हितः सार्वजनिकः, सर्वजनीनः।
समानाधिकरण ःथ्य;ति च वक्तव्यम्। यो हि सर्वेषां जनाय हितः--सर्वजनीयः स भवति।।
(5602 नित्यत्वबोधकवार्तिकम्।। 6 ।।)
- महाजनान्नित्यम् -
(भाष्यम्) महाजनान्नित्यं ठञ्वक्तव्यः। महाजनाय हितो माहाजनिकः।
तत्पुरुष ःथ्य;ति वक्तव्यम्, बहुव्रीहौ मा भूदिति। महान् जनोऽस्य--महाजनः, महाजनाय हितः--महाजनीयः।

(समानाधिकरणाद्युपाधिप्रत्याख्याने भाष्यम्)
यदि तर्ह्यतिप्रसङ्गाः सन्तीत्युपाधिः क्रियते, आद्यन्यासेऽप्युपाधिः कर्तव्यः--आत्मन्विश्वजन समानाधिकरण ाःथ्य;ति वक्तव्यम्। यो हि विश्वेषां जनाय हितः--विश्वजनीयः स भवति।
अथ मतमेतत्--अनभिधानादाद्यन्यासे न भविष्यतीति, ाःथ्य;हापि नार्थ उपाधिग्रहणेन।
ाःथ्य;हाप्यनभिधानान्न भविष्यति।।
-5-1-10- सर्वपुरुषाभ्यां णढञौ (1892)
(छप्रत्ययापवादणढञोरधिकरणम्)
(5603 विकल्पवार्तिकम्।।1।।)
सर्वाण्णस्य वेति वक्तव्यम्। सार्वः, सर्वीयः।
(5604 अर्थविधायकवार्तिकम्।।2।।)
पुरुषाद्वधे।।
पुरुषाद्वध ाःथ्य;ति वक्तव्यम्। पौरुषेयो वधः। अत्यल्पमिदमुच्यते--पुरुषाद्वध ाःथ्य;ति । पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्। पौरुषेयो वधः। पौरुषेयो विकारः। पौरुषेयस्समूहः। तेन कृतं पौरुषेयम्।
-5-1-12- तदर्थं विकृतेः प्रकृतौ (1894)
(तदर्थे प्रत्ययविध्यधिकरणम्)
(5605 संग्रहवार्तिकम्।। 1 ।।)
- तदर्थमिति कृत्यनामभ्यष्ठञ् -
(भाष्यम्) तदर्थमिति कृत्यनामभ्यष्ठञ्वक्तव्यः। ाःथ्य;न्द्रमहार्थमैन्द्रमहिकम्। गाङ्गामहिकम्। काशेरुयज्ञिकम्।।
(5606 प्रत्याख्यानवार्तिकम्।। 2 ।।)
- न वा प्रयोजनेन कृतत्वात् -
(भाष्यम्) न वा वक्तव्यम्।
किं कारणम्?
प्रयोजनेन कृतत्वात्। यद्धीन्द्रमहार्थम्, ाःथ्य;न्द्रमहस्तस्य प्रयोजनं भवति; तत्र प्रयोजनम् (5।1।109) ाःथ्य;त्येव सिद्धम्।।
-5-1-13- छदिरुपधिबलेर्ढञ् (1895)
(ढञोऽधिकरणम्)
(5607 आक्षेपवार्तिकम्।। 1 ।।)
- उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्य भावात् -
(भाष्यम्) उपध्यर्थमिति प्रत्ययस्यानुपपत्तिः।
किं कारणम्?
उपध्यभावाद्। विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्, न चोपधिसंज्ञिकाया विकृतेः प्रकृतिरस्ति।
यद्धि तद्रथाङ्गं तदौपधेयमित्युच्यते।।
(5608 एकदेशिसमाधानवार्तिकम्।। 2 ।।)
- सिद्धं तु कृदन्तस्य स्वार्थेऽञ्वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
कृदन्तस्य स्वार्थे अञ्वक्तव्यः। उपधीयते--उपधेयम्, उपधेयमेवौपधेयम्।
सिद्ध्यति।
सूत्रं तर्हि भिद्यते।।
(सिद्धान्तभाष्यम्)
यथान्यासमेवास्तु।
ननु चोक्तम्--उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् ाःथ्य;ति।
नैतदस्ति। अयमुपधिशब्दोऽस्त्येव कर्मसाधनः--उपधीयते--उपधिरिति। अस्ति भावसाधनः--उपधानमुपधिरिति। तद्यो भावसाधनस्तस्येदं ग्रहणम्।
एवमपि न सिध्यति।
किं कारणम्?
विकृतेः प्रकृताविति वर्तते।
प्रकृतिविकृतिग्रहणं निवर्तिष्यते। तच्चावश्यं निर्वत्यम्, ाःथ्य;हार्थमुत्तरार्थं च। ाःथ्य;हार्थं तावत्--बालेयास्तण्डुलाः। उत्तरार्थम्--ऋषभोपानहोञ्यः (5।1।14) आर्षभ्यो वत्स ाःथ्य;ति।।
(अनुवृत्तिनिश्चायकभाष्यम्)

अथ तदर्थमित्यनुवर्तते, उताहो न।
किं चार्थोऽनुवृत्त्या?
बाढमर्थः--तदस्य तदस्मिन् स्यादिति (5।1।16) तदर्थे यथा स्यात्, ःथ्य;ह मा भूत्--प्रासादो देवदत्तस्य स्यादिति, प्राकारो नगरस्य स्यादिति।
यदि तदर्थमित्यनुवर्तते ऋषभोपानहोर्ञ्यः ऋषभार्थः घासः, उपानदर्थस्तिलकल्क ःथ्य;त्यत्रापि प्राप्नोति।
एवं तर्हि--अनुवर्तते प्रकृतिविकृतिग्रहणम्।
ननु चोक्तं बल्यृषभयोर्न सिध्यतीति।
कं पुनर्भवान् विकारं मत्वाऽऽह--वल्यृषभयोर्न सिध्यतीति?
(विकारपदार्थबोधकं भाष्यम्)
यदि तावद्यः प्रकृत्युपमर्देन भवति स विकारः,
वैभीतिको यूपः, खादिरं चषालमिति न सिध्यति।
अथ मतमेतत्तदेव गुणान्तरयुक्तं विकार ःथ्य;ति,
बल्यृषभयोरपि सिद्धं भवति। गुणान्तरयुक्ता हि तण्डुला बालेयाः, गुणान्तरयुक्तश्च वत्स आर्षभ्यः।
औपधेयं तु न सिध्यति।
वचनात्स्वार्थिको भविष्यति।।
-5-1-16- तदस्य तदस्मिन्त्स्यादिति (1898)
(पदकृत्यभाष्यम्)
(षष्ठी सप्तम्यर्थे प्रत्ययाधिकरणम्)
स्याद्ग्रहणं किमर्थम्?
ःथ्य;ह मा भूत्--प्रासादो देवदत्तस्य, प्राकारो नगरस्येति।
(स्याद्ग्रहणाक्षेपभाष्यम्)
अथ क्रियमाणेऽपि स्याद्ग्रहण ःथ्य;ह कस्मान्न भवति--प्रासादो देवदत्तस्य स्यात्, प्राकारो नगरस्य स्यादिति।
शक्यार्थे लिङिति वक्तव्यम्।
नैवं शक्यम्, ःथ्य;दानीमेव ह्युक्तम्--न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति।
एवं तर्हि--ःथ्य;तिकरणः क्रियते। ततश्चेद्विवक्षा भवति। विवक्षा च द्वयी। अस्त्येव प्रायोक्त्री विवक्षा, अस्ति लौकिकी।
प्रायोक्त्री विवक्षा--प्रयोक्ता हि मृद्व्या स्निग्धया श्लक्ष्णया जिह्वया मृदून् स्निग्धान् श्लक्ष्णान् शब्दान् प्रयुङ्क्ते।
लौकिकी विवक्षा--यत्र प्रायस्य संप्रत्ययः, प्राय ःथ्य;ति लोको व्यपदिश्यते। न च प्रासादो देवदत्तस्य स्यात्
प्राकारो नगरस्य स्यादित्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात्।।
(सिद्धान्तभाष्यम्)
यद्येवम्, नार्थः स्याद्ग्रहणेन। न हि प्रासादो देवदत्तस्य प्राकारो नगरस्येत्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात्।।
-5-1-19- आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् (1901)
(ठगधिकरणम्)
(परिमाणतः संख्यायाः पृथग्ग्रहणप्रयोजनभाष्यम्)
किमर्थं संख्यायाः पृथग्ग्रहणं क्रियते? न संख्याऽपि परिमाणमेव, तत्र परिमाणपर्युदासेन पर्युदासो भविष्यति।
एवं तर्हि सिद्धे सति यत्संख्यायाः पृथग्ग्रहणं करोति तज्ज्ञापयत्याचार्य्यः--अन्या संख्या, अन्यत्परिमाणमिति।।
किमेतस्य ज्ञापने प्रयोजनम्?
अपरिमाणबिस्ताचितकम्बलेभ्यो न तद्धितलुकि (4।1।22) ःथ्य;ति--द्वाभ्यां शताभ्यां क्रीता द्विशता, त्रिशता। परिमाणपर्युदासेन पर्युदासो न भवतीति।।
(परिमाणतः संख्याभेदे दोषभाष्यम्)
यद्येतज्ज्ञाप्यते, तदस्य परिमाणम् संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु (5।1।57-58) ःथ्य;ति विशेषणं न प्रकल्पते--परिमाणं या संख्येति। ःथ्य;ह च क्रीतवत्परिमाणात् (4।3।196) ःथ्य;ति संख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पते। शतस्य विकारः--शत्यः, शतिकः, साहस्र ःथ्य;ति।।
(ज्ञापकासम्भवप्रदर्शनभाष्यम्)
यत्तावदुच्यते--एतज्ज्ञापयत्याचार्यः--अन्या संख्या, अन्यत्परिमाणमिति।
नैतज्ज्ञापकसाध्यम्--अन्या संख्या, अन्यत्परिमाणमिति।
न्यायसिद्धमेवैतत्।
भेदमात्रं संख्याऽऽह। यच्चेषीकान्तं यच्चापरिमाणं तस्य सर्वस्य संख्या भेदमात्रं ब्रवीति।
परिमाणं तु सर्वतः। सर्वतो मानमिति चातः परिमाणमिति। प्रस्थस्य च समानाकृतेर्न कुतश्चिद्विशेषो गम्यते--न चोन्मानतः, न परिमाणतः, न प्रमाणतः।।
(उन्मानादिलक्षणैः संख्यायाः परिमाणतो भेदबोधकं भाष्यम्)

किं पुनरुन्मानम्? किं परिमाणम्? किं प्रमाणम्?
ः्ढ़द्य;ध्र्वमानं किलोन्मानम्
ः्ढ़द्य;ध्र्वं यन्मीयते तदुन्मानम्।।
परिमाणं तु सर्वतः।
सर्वतो मानमिति चातः परिमाणम्।
कुत एतत्?
परिः सर्वतोभावे वर्तते।
आयामस्तु प्रमाणं स्यात्
आयामविवक्षायां प्रमाणमित्येतद्भवति।।
संख्या बाह्या तु सर्वतः।।
आतश्च सर्वतः संख्या बाह्या--
भेदमात्रं ब्रवीत्येषा
नैषा मानं कुतश्च न।।
एवं च कृत्वा संख्यायाः पृथग्ग्रहणं क्रियते।।
(संख्याया भेदे पूर्वोक्तदोषनिरासभाष्यम्)
यदप्युच्यते--तदस्य परिमाणं संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति विशेषणं न प्रकल्पत ः्थ्य;ति
आहायम्--परिमाणं या संख्येति, न चास्ति संख्या परिमाणम्, तत्र वचनादियती विवक्षा भविष्यति।
यदप्युच्यते--क्रीतवत्परिमाणादिति च संख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पते ः्थ्य;ति
संख्याया ः्थ्य;ति च तत्र वक्तव्यम्।।
(ठगाद्यधिकारमर्यादासम्भवभाष्यम्)
किं पुनरिमे ठगादयः प्रागर्हाद्भवन्ति, आहो स्वित्सहार्हेण।
कश्चात्र विशेषः?
(5609 प्रथममर्यादाऽऽक्षेपवार्तिकम्।। 1 ।।)
- ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः -
(भाष्यम्) ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः। अर्हे ठगादयो विधेयाः। शतमर्हति--शत्यः--शतिकः, साहस्र ः्थ्य;ति।
वस्ने वचनात्सिद्धम्।
ः्थ्य;ह यः शतमर्हति शतं तस्य वस्नो भवति। तत्र सोऽस्यांशवस्नभृतयः (5।1।56) ः्थ्य;त्येव सिद्धम्।।
(5610 आक्षेपवार्तिकम्।। 2 ।।)
- वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः -
(भाष्यम्) वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः। मांसौदनिकोऽतिथिः, श्वैतच्छत्रिकः, कालायसूपिकः।।
तथा गुणानां परिप्रश्नो भवति--किमयं ब्राह्मणोऽर्हति।
शतमर्हति--शत्यः, शतिकः, साहस्रः, नैष्किक ः्थ्य;सि न सिध्यति।।
(द्वितीयमर्यादाक्षेपवार्तिकावतरणभाष्यम्)
सन्तु तर्हि सहार्हेण।।
(5611 द्वितीयमर्यादाक्षेपवार्तिकम्।। 3 ।। )
- आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः -
(भाष्यम्) आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गो भवति--भोजनमर्हति, पानमर्हतीति।
किमुच्यते भोजनादिष्वतिप्रसङ्ग ः्थ्य;ति, यदा छेदादिभ्य ः्थ्य;त्युच्यते। अवश्यं मांसौदनिकाद्यर्थं योगविभागः कर्तव्यः--तदर्हति, ततः--छेदादिभ्यो नित्यमिति। तस्मिन् क्रियमाणे भोजनादिष्वतिप्रसङ्गो भवति।।
(5612 समाधानवार्तिकम्।। 4 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
अनभिधानादिति।
अनभिधानाद्भोजनादिष्वतिप्रसङ्गो न भवति।
अथ वा योगविभागो न करिष्यते।
कथं मांसौदनिकोऽतिथिः, श्वैतच्छत्रिकः, कालायसूपिकः?
अस्मिन् दीयते, अस्मा ः्थ्य;ति च, एवमेतत्सिद्धम्।
अथ वा पुनः सन्तु प्रागर्हात्।
ननु चोक्तं ठगादयः प्रागर्हाच्चेदर्हे तद्विधिरिति। परिहृतमेतद्--वस्ने वचनात्सिद्धमिति।

ननु चोक्तं वस्ने वचनात्सिद्धमिति चेन्मांसोदनिकादिष्वप्राप्तिरिति, तथा गुणानां परिप्रश्नो भवति--किमयं ब्राह्मणोऽर्हति, शतमर्हति शत्यः, शतिकः, साहस्रः, नैष्किक ःथ्य;ति न सिध्यतीति।
अस्मिन् दीयते, अस्मा ःथ्य;ति च--एवमेतत् सिद्धम्।।
-5-1-20- असमासे निष्कादिभ्यः (1902)
(पदकृत्यभाष्यम्)
असमास ःथ्य;ति किमर्थम्?
परमनिष्केण क्रीतम्-परमनैष्किकम्।
नैतदस्ति। निष्कशब्दात्प्रत्ययो विधीयते, तत्र कः प्रसङ्गो यत्परमनिष्कशब्दात्स्यात्। नैव प्राप्नोति, नार्थः प्रतिषेधेन।
तदन्तविधिना प्राप्नोति।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।।
अत उत्तरं पठति--
(5613 असमासपदप्रयोजनवार्तिकम्।। 1 ।।)
- निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य -
(भाष्यम्) निष्कादिष्वसमासग्रहणं क्रियते ज्ञापकार्थम्।
किं ज्ञाप्यम्?
एतज्ज्ञापयत्याचार्य्यः--पूर्वत्र तदन्तविधेः प्रतिषेधो न भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?
प्राग्वतेष्ठञ् (5।1।18) ःथ्य;त्यत्र तदन्तविधिः सिद्धो भवति।।
नैतदस्ति प्रयोजनम्।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न च ठञ्विधौ काचित्प्रकृतिर्गृह्यते।
ःथ्य;दं तर्हि प्रयोजनम्--आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् (5।1।19)--परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम्। अत्र तदन्तविधिः सिद्धो भवति।।
एतदपि नास्ति प्रयोजनम्।
विधौ प्रतिषेधः, प्रतिषेधश्चायम्।
एवं तर्हि ज्ञापयत्याचार्यः--ःथ्य;त उत्तरं तदन्तविधेः प्रतिषेधो न भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्?
पारायणतुरायणचान्द्रायणं वर्तयति (5।1।72) द्वैपारायणिकः, त्रैपारायणिकः। अत्र तदन्तविधिः सिद्धो भवति।।
एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्--प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति।
पूर्वत्रैव तर्हि प्रयोजनम्। खलयवमाषतिलवृषब्रह्मणश्च (5।1।7) ःथ्य;ति। कृष्णतिलेभ्यो हितः- कृष्णतिल्यः, राजमाषेभ्यो हितं--राजमाष्यम्।।
(5614 उपसङ्ख्यानवार्तिकम्।। 2 ।।)
- प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि -
(भाष्यम्) प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि कर्तव्यम्। पारायणतुरायणचान्द्रायणं वर्तयति। द्वैपारायणिकः। त्रैपारायणिकः।
अलुकीति किमर्थम्?
द्वाभ्यां शूर्पाभ्यां क्रीतम्--द्विशूर्पम्, त्रिशूर्पम्। द्विशूर्पेण क्रीतम्--द्विशौर्पिकम्, त्रिशौर्पिकम्।।
-5-1-21- शताच्च ठन्यतावशते (1903)
(ठन्यतोरधिकरणम्)
(5615 अर्थविशेषबोधकवार्तिकम्।। 1 ।।)
- शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः -
(भाष्यम्) शतप्रतिषेधेऽन्यशतत्वे प्रतिषेधो न भवतीति वक्तव्यम्।
ःथ्य;ह मा भूत्--शतेन क्रीतं शत्यं शाकटशतमिति।
अन्यशतत्व ःथ्य;ति किम्? शतकं निदानमिति।।
-5-1-22- संख्याया अतिशदन्तायाः कन् (1904)
(कनोऽधिकरणम्)
(उपसंख्यानभाष्यम्)
डतेश्चेति वक्तव्यम्।
ःथ्य;हापि यथा स्यात्--कतिभिः क्रीतं कतिकम्।
किं पुनः कारणं न सिध्यति?
त्यन्ताया नेति प्रतिषेधः प्राप्नोति।।
(5616 उपसंख्यानानर्थक्यबोधकं वार्तिकम्।। 1 ।।)

- तिप्रतिषेधाड्डुतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् -
(भाष्यम्) अर्थवतस्तिशब्दस्य ग्रहणम्, न च डतेस्तिशब्दोऽर्थवान्।।
(सिद्धान्तभाष्यम्)
नैषा परिभाषा ः्थ्य;ह शक्या विज्ञातुम्, न हि केवलेन प्रत्ययेनार्थो गम्यते।
किं तर्हि?
सप्रकृतिकेन।
क्व तर्ह्येषा परिभाषा कर्तव्या भवति?
यान्येतानि शब्दसंघातग्रहणानि।।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्, अर्थवद्ग्रहणात्सिद्धम्।
ननु चोक्तम्--नैषा परिभाषेह शक्या विज्ञातुं न हि केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेन--ः्थ्य;ति।
केवलेनापि प्रत्ययेनार्थो गम्यते।
कथम्।
उक्तम्--अन्वयव्यतिरेकाभ्याम्।।
-5-1-23- वतोरिड्वा (1905)
(ः्थ्य;डागमाधिकरणम्)
(एकदेश्याक्षेपभाष्यम्)
कस्यायमिड्विधीयते?
कन ः्थ्य;त्याह।
तत्कनो ग्रहणं कर्तव्यम्, अक्रियमाणे हि प्रत्ययाधिकारात् प्रत्ययोऽयं विज्ञार्यते।
टित्करणसामर्थ्यादादिर्भविष्यति।
अस्त्यन्यट्टित्करणस्य प्रयोजनम्--टित ः्थ्य;ति ः्थ्य;र्कारो यथा स्यात्।
अकारान्तप्रकरणे ः्थ्य;र्कारः, न चैषोऽकारान्तः।
एवमपि कुत एतत्--टित्करणसामर्थ्यादादिर्भविष्यति, न पुनरकारान्तप्रकरणे अनकारान्तादपि ः्थ्य;र्कारः स्यात्?
तत्स्माकनो ग्रहणं कर्तव्यम्।।
(समाधानभाष्यम्)
न कर्तव्यम्। प्रकृतमनुवर्तते।
क्व प्रकृतम्?
संख्याया अतिशदन्तायाः कन्(5।1।22) ः्थ्य;ति।
तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः।
वतोरित्येषा पञ्चमी कन्निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति--तस्मादित्युत्तरस्य ः्थ्य;ति।
प्रत्ययविधिरयम्, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति।
नायं प्रत्ययविधिः, विहितः प्रत्ययः प्रकृतश्चानुवर्तते।।
-5-1-24- विंशतित्रिशद्भ्यां ड्वुनसंज्ञायाम् (1906)
(कन्ड्वुनोरधिकरणम्)
(पदकृत्यभाष्यम्)
असंज्ञायामिति किमर्थम्? त्रिंशत्कः, विंशतिकः।
कथं चात्र कन् भवति?
संख्यायाः कन् भवतीति।
अतिशदन्ताया ः्थ्य;ति प्रतिषेधः प्राप्नोति।
एवं तर्ह्याचार्य्यप्रवृत्तिर्ज्ञापयति--भवत्यत्र कन्निति, यदयं विंशतिकात्खः (5।1।32) ः्थ्य;ति प्रत्ययान्तनिपातनं करोति।
विंशतेरेतज्ज्ञापकं स्यात्।
नेत्याह, योगापेक्षं ज्ञापकम्।
अथ वा योगविभागः करिष्यते--विंशतित्रिंशद्भ्यां कन् भवतीति।
ततः ड्वुनसंज्ञायामिति।।
-5-1-25- कंसाट्टिठन् (1907)
(टिठन्प्रत्ययाधिकरणम्)
(5617 उपसंख्यानवार्तिकम्।। 1 ।।)
- टिठन्नर्धाच्च -

(भाष्यम्) टिठन्नर्धाच्चेति वक्तव्यम्। अर्धिकः, अर्धिकी।।
(8618 उपसंख्यानवार्तिकम्।। 2 ।।)
- कार्षापणाद्वा प्रतिश्च -
(भाष्यम्) कार्षापणाद्वा टिठन्वक्तव्यः, वा च प्रतिरादेशो वक्तव्यः। कार्षापणिकः, कार्षापणिकी। प्रतिकः, प्रतिकी।।
-5-1-28- अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् (1910)
(5619 निमित्तग्रहणावश्यकत्वबोधकवार्तिकम्।। 1 ।।)
- द्विगोर्लुक्युक्तम् -
(लुकोऽधिकरणम्)
(भाष्यम्) किमुक्तम्?
तत्र तावदुक्तम्-- द्विगोर्लुकि तन्निमित्तग्रहणम् अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि ःथ्य;ति।
ःथ्य;हापि द्विगोर्लुकि तन्निमित्तग्रहणं कर्तव्यम्। द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग्भवतीति वक्तव्यम्।
ःथ्य;ह मा भूत्-- द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्। त्रिशौर्पिकम्।
अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि ।
अर्थविशेषस्यासंप्रत्ययेऽतन्निमित्तादपीति वक्तव्यम्।
किं प्रयोजनम्? द्वयोः शूर्पयोः समाहारः--द्विशूर्पी। द्विशूर्प्या क्रीतमिति विगृह्य द्विशूर्पमित्येव यथा स्यात्।।
(तन्निमित्तपदार्थबोधकभाष्यम्)
अथ क्रियमाणेऽपि तन्निमित्तग्रहणे कथमिदं विज्ञायते--तस्य निमित्तं-तन्निमित्तम्, तन्निमित्तादिति, आहोस्वित्स निमित्तं यस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति।
किं चातः?
यदि विज्ञायते--तस्य निमित्तं तन्निमित्तम्, तन्निमित्तादिति।
क्रियमाणेऽपि हि तन्निमित्तग्रहणेऽत्र प्राप्नोति--द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्, द्विशूर्पेण क्रीतं द्विशौर्पिकम्। त्रिशौर्पिकम्।
अथ विज्ञायते--स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति।
न दोषो भवति।
यथा न दोषस्तथाऽस्तु।
स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति विज्ञायते।
कुत एतत्?
यदयमाह--अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति।
(निमित्तग्रहणानावश्यकत्वबोधकभाष्यम्)
तत्तर्हि तन्निमित्तग्रहणं कर्तव्यम्।
न कर्तव्यम्।
द्विगोरिति नैषा पञ्चमी।
का तर्हि?
संबन्धषष्ठी। द्विगोस्तद्धितस्य लुग्भवति। द्विगोर्यस्तद्धितः।
किं च द्विगोस्तद्धितः?
निमित्तम्। यस्मिन् द्विगुरित्येतद्भवति।
कस्मिंश्चैतद्भवति?
प्रत्यये।
ःथ्य;दं तर्हि वक्तव्यम्--अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति।
एतच्च न वक्तव्यम्। ःथ्य;हास्माभिस्त्रैशब्द्यं साध्यम्--द्वाभ्यां शूर्पाभ्यां क्रीतम्, द्विशूर्प्या क्रीतम्, द्विशूर्पम्। त्रिशूर्पमिति।
तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः करिष्यते, अपरस्मादुत्पत्तिर्भविष्यति--अविरविकन्यायेन।
तद्यथा--अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति--आविकमिति।
एवमिहापि--द्वाभ्यां शूर्पाभ्यां क्रीतमिति विगृह्य--द्विशूर्पमिति भविष्यति।
द्विशूर्प्या क्रीतमिति विगृह्य--वाक्यमेव भविष्यति।।
(पदकृत्यभाष्यम्)
असंज्ञायामिति किमर्थम्?
पाञ्चलोहितिकम्, पाञ्चकलापिकम्।।
(5620 असंज्ञाग्रहणानर्थक्यबोधकवार्तिकम्।। 2 ।।)
- संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्य -
(भाष्यम्) संज्ञाप्रतिषेधश्चानर्थकः

किं कारणम्?
तन्निमित्तत्वाल्लोपस्य। नान्तरेण तद्धितं तद्धितस्य च लुकं द्विगुः संज्ञाऽस्ति, यस्तस्मादुत्पद्यते नासौ तन्निमित्तं स्यात्। एवं तर्हि ःथ्य;दं स्यात्--पञ्चानां लोहितानां समाहारः पञ्चलोहिती, पञ्चलोहित्या क्रीतमिति।
अत्रापि पञ्चलोहितमित्येव भवितव्यम्। कथम्?
उक्तं ह्येतत्--अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति।।
(5621 अद्ध्यर्धग्रहणानर्थक्यबोधकवार्तिकम्।। 3 ।।)
- उक्तं संख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम् -
(भाष्यम्) उक्तं संख्यात्वेऽध्यर्धग्रहणस्य प्रयोजनम्।
किमुक्तम्?
अध्यर्धग्रहणं च समासकन्विध्यर्थं लुकि चाग्रहणमिति।
तस्मादिहाध्यर्धग्रहणानर्थक्यम्।
तस्मादिहाध्यर्धग्रहणमनर्थकम्, द्विगोरित्येव लुक् सिद्धः।।
-5-1-29- विभाषा कार्षापणसहस्राभ्याम् (1911)
(746 विधिसूत्रम् ।। 5 । 1 । 1 आ. 20)
(5622 उपसंख्यानवार्तिकम्।। 1 ।।)
- कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् -
(भाष्यम्) कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानं कर्तव्यम्। अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम्। अध्यर्धशतमानम्, अध्यर्धशातमानम्। द्विशतमानम्, द्विशातमानम्।।
-5-1-30- द्वित्रिपूर्वान्निष्कात् (1912)
(5623 सूत्रविषयनिर्धारकवार्तिकम्।। 1 ।।)
- द्वित्रिभ्यां द्वैयोग्यम् -
(भाष्यम्) द्वित्रिभ्यामिति यदुच्यते द्वैयोग्यमेतदद्रष्टव्यम्।
किमिदं द्वैयोग्यमिति?
द्वयोर्योगयोर्भवं--द्वियोगम्, द्वियोगस्य भावो द्वैयोग्यमिति।।
(वार्तिकप्रत्याख्याने भाष्यम्)
द्वेष्यं विजानीयादविशेषेणेत उत्तरं द्वित्रिभ्यामिति।
तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे द्वित्रिभ्यां द्वैयोग्यमिति।।
(5624 संग्रहवार्तिकम्।। 2 ।।)
- तत्र च बहुग्रहणम् -
(भाष्यम्) तत्र च बहुग्रहणं कर्तव्यम्। बहुनिष्कम्, बहुनैष्किकम्। बहुबिस्तम्, बहुबैस्तिकम्।।
-5-1-31- बिस्ताच्च (1913)
(5623 सूत्रविषयनिर्धारकवार्तिकम्।। 1 ।।)
- द्वित्रिभ्यां द्वैयोग्यम् -
(भाष्यम्) द्वित्रिभ्यामिति यदुच्यते द्वैयोग्यमेतदद्रष्टव्यम्।
किमिदं द्वैयोग्यमिति?
द्वयोर्योगयोर्भवं--द्वियोगम्, द्वियोगस्य भावो द्वैयोग्यमिति।।
(वार्तिकप्रत्याख्याने भाष्यम्)
द्वेष्यं विजानीयादविशेषेणेत उत्तरं द्वित्रिभ्यामिति।
तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे द्वित्रिभ्यां द्वैयोग्यमिति।।
(5624 संग्रहवार्तिकम्।। 2 ।।)
- तत्र च बहुग्रहणम् -
(भाष्यम्) तत्र च बहुग्रहणं कर्तव्यम्। बहुनिष्कम्, बहुनैष्किकम्। बहुबिस्तम्, बहुबैस्तिकम्।।
-5-1-33- खार्या ःथ्य;कन् (1915)
(ःथ्य;कन्प्रत्ययाधिकरणम्)
(5625 ःथ्य;ष्टाख्याने वार्तिकम्।। 1 ।।)
- खार्या ःथ्य;कन् केवलायाश्च -
(भाष्यम्) खार्या ःथ्य;कन् केवलायाश्चेति वक्तव्यम्। खारीकम्।।
(5626 उपसंख्यानवार्तिकम्।। 2 ।।)
- काकिण्याश्चोपसंख्यानम् -

(भाष्यम्) काकिण्याश्चोपसंख्यानं कर्तव्यम्। अध्यर्धकाकिणीकम्, द्विकाकिणीकम्।।
(5627 ःथ्य;ष्टाख्याने वार्तिकम्।। 3 ।।)
- केवलायाश्च -
(भाष्यम्) केवलायाश्चेति वक्तव्यम्। काकिणीकम्।।
-5-1-35- शाणाद्वा (1917)
(यतोऽधिकरणम्)
(5628 उपसंख्यानवार्तिकम्।। 1 ।।)
- शतशाणाभ्यां वा -
(भाष्यम्) शतशाणाभ्यां वेति वक्तव्यम्। अध्यर्धशतम्, अध्यर्धशत्यम्। पञ्चशतम्, पञ्चशत्यम्। अध्यर्धशाणम्, अध्यर्धशाण्यम्। पञ्चशाणम्, पञ्चशाण्यम्।।
(5629 उपसंख्यानवार्तिकम्।। 2 ।।)
- द्वित्रिपूर्वादण्च -
(भाष्यम्) द्वित्रिपूर्वादण्चेति वक्तव्यम्। द्विशाणम्, त्रिशाणम्। द्वैशाणम्, त्रैशाणम्। द्विशाण्यम्, त्रिशाण्यम्।।
-5-1-37- तेन क्रीतम् (1919)
(क्रीतार्थाधिकरणम्)
(5630 एकदेश्युपसंख्यानवार्तिकम्।। 7 ।।)
- तेन क्रीतमिति करणात् -
(भाष्यम्) तेन क्रीतमित्यत्र करणादिति वक्तव्यम्। ःथ्य;ह मा भूद्--देवदत्तेन क्रीतम्, यज्ञदत्तेन क्रीतमिति।।
(5631 एकदेश्युपसंख्यानवार्तिकम्।। 2 ।।)
- अकर्त्रेकान्तात् -
(भाष्यम्) अकर्त्रेकान्तादिति वक्तव्यम्। ःथ्य;ह मा भूत्--देवदत्तेन पाणिना क्रीतमिति।।
(5632 एकदेश्युपसंख्यानवार्तिकम्।। 3 ।।)
- संख्यैकवचनाद् द्विगोश्चोपसंख्यानम् -
(भाष्यम्) संख्याया ःथ्य;ति वक्तव्यम्। ःथ्य;हापि यथा स्यात्- पञ्चभिः क्रीतं पञ्चकम्।
किं पुनः कारणं न सिध्यति?
एकवचनान्तादिति वक्ष्यति, तस्यायं परस्तादपकर्षः।
एकवचनात्।
एकवचनान्तादिति वक्तव्यम्। ःथ्य;ह मा भूत्--शूर्पाभ्यां क्रीतम्, शूर्पैः क्रीतमिति।
द्विगोश्चेति वक्तव्यम्। ःथ्य;हापि यथा स्यात्--द्वाभ्यां शूर्पाभ्यां क्रीतं--द्विशूर्पम्, त्रिशूर्पमिति।
(आक्षेपभाष्यम्)
यद्येकवचनान्तादित्युच्यते, मुद्गैः क्रीतं मौद्गिकम्, माषैः क्रीतं माषिकमिति न सिध्यति।
परिमाणस्य संख्याया यदेकवचनं तदन्तादिति वक्तव्यम्।
तत्तर्ह्येकवचनान्तादिति वक्तव्यम्। तस्मिंश्च क्रियमाणे बहु वक्तव्यं भवति।
न वक्तव्यम्।
कस्मान्न भवति शूर्पाभ्यां क्रीतं शूर्पैः क्रीतमिति?
(5633 सिद्धान्तवार्तिकम्।। 4 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
अनभिधानादिति।।
यद्येवम्, करणात् अकर्त्रेकान्तात् ःथ्य;त्यपि न वक्तव्यम्।।
कर्तुः कर्त्रेकान्ताद्वा कस्मान्न भवति?
अनभिधानात्।।
-5-1-38- तस्य निमित्तं संयोगोत्पातौ (1920)
(संयोगोत्पातयोरर्थनिश्चायकभाष्यम्)
संयोगोत्पातयोः को विशेषः?
संयोगो नाम स भवति--ःथ्य;दं कृत्वेदमवाप्यत ःथ्य;ति।
उत्पातो नाम स भवति--यादृच्छिको भेदो वा छेदो वा पद्म वा पर्णं वा।।
(5634 उपसंख्यानवार्तिकम्।। 1 ।।)
- तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् -

(भाष्यम्) तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानं कर्तव्यम्। वातस्य शमनं कोपनं वा--वातिकम्, पैत्तिकम्, श्लैष्मिकम्।।
(5635 उपसंख्यानवार्तिकम्।। 2 ।।)
- संनिपाताच्च -
(भाष्यम्) सन्निपाताच्चेति वक्तव्यम्। सान्निपातिकम्।।
-5-1-47- तदस्मिन् वृद्ध्यायलाभशुल्कोपादा दीयते (1929)
(अर्थाधिकरणम्)
(5637 एकदेश्युपसंख्यानवार्तिकम्।। 1 ।।)
- तदस्मिन् दीयतेऽस्मा ःथ्य;ति च -
(भाष्यम्) तदस्मिन् दीयतेऽस्मा ःथ्य;ति चेति वक्तव्यम्। पञ्च वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते अस्मै--पञ्चकः, सप्तकः, अष्टकः, नवकः, दशकः।।
(सिद्धान्तभाष्यम्)
तत्तर्हि उपसंख्यानं कर्तव्यम्।
न कर्तव्यम्।
यद्धि यस्मै दीयते तस्मिन्नपि तद्दीयते, तत्र तदस्मिन् दीयते ःथ्य;त्येव सिद्धम्।।
-5-1-48- पूरणार्धाट्ठन् (1930)
(ठनोऽधिकरणम्)
(5638 एकदेशिवार्तिकम्।। 1 ।।)
- ठन्प्रकरणेऽनन्तादुपसंख्यानम् -
(भाष्यम्) ठन्प्रकरणेऽनन्तादुपसंख्यानं कर्तव्यम्। द्वितीयिकः। तृतीयिकः।
किं पुनः कारणं न सिध्यति?
पूरणादित्युच्यते। न चैतत्पूरणान्तम्। अनैतत्पर्यवपन्नम्।।
(सिद्धान्तभाष्यम्)
पूरणं नामार्थः, तमर्थमाह तीयशब्दः, पूरणं सोऽसौ भवति।
पूरणान्तात्स्वार्थे भागे अन्, सोऽपि पूरणं भवत्येव।।
-5-1-52- सम्भवत्यवहरति पचति (1934)
(अर्थाधिकरणम्)
(5639 उपसंख्यानवार्तिकम्।। 1 ।।)
- तत्पचतीति द्रोणादण्च -
(भाष्यम्) तत्पचतीति द्रोणादण् चेति वक्तव्यम्। द्रोणं पचति द्रौणी, द्रौणिकी।।
-5-1-55- कुलिजाल्लुक्खौ च (1937)
(लुक्खाधिकरणम्)
(5640 लुक्खग्रहणानर्थक्यबोधकवार्तिकम्।। 1 ।।)
- कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावात् -
(भाष्यम्) कुलिजाच्चेत्येव सिद्धं नार्थो लुक्खग्रहणेन।
किं कारणम्?
पूर्वस्मिंस्त्रिकभावात्। पूर्वस्मिन् योगे सर्व एष त्रिको निर्दिश्यते--द्व्याढकी, द्व्याढकिकी, द्व्याढकीना।।
-5-1-57- तदस्य परिमाणम् (1939)
-5-1-58- संख्यायाः संज्ञासंघसूत्राध्ययनेषु (1940)
(अर्थाधिकरणम्)
(5641 संख्येयमात्रार्थकत्वेनाऽप्राप्तौ प्रत्ययबोधकवार्तिकम्।। 1 ।।)
- संज्ञायां स्वार्थे -
(भाष्यम्) संज्ञायां स्वार्थे प्रत्यय उत्पाद्यः। पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः। सप्तका ब्रह्मवृक्षाः।।
(5642 संघादिषु प्रत्ययबोधकवार्तिकम्।। 2 ।।)
- ततः परिमाणिनि -
(भाष्यम्) ततः परः प्रत्ययः परिमाणिनीति वक्तव्यम्। पञ्चकः संघः। दशकः संघः।।
(5643 प्रथमवार्तिकाक्षेपयैकदेशिवार्तिकम्।। 3 ।।)
- जीवितपरिमाणे चोपसंख्यानम् -
(भाष्यम्) जीवितपरिमाणे चोपसंख्यानं कर्तव्यम्। षष्टिर्जीवितपरिमाणमस्य--षाष्टिकः, साप्ततिकः।।

(5644 एकदेशिनिरासवार्तिकम्।। 4 ।।)
- जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् -
(भाष्यम्) जीवितपरिमाणे चेत्यनर्थकं वचनम्।।
किं कारणम्?
कालादिति सिद्धत्वात्। कालात् (5।1।78) ः।थ्य;त्येव सिद्धम्। ः।थ्य;ह यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भवति। तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम्।।
अवश्यं चैतदेवं विज्ञेयम्।।
(5645 एकदेशिवार्तिके दोषप्रदर्शकं वार्तिकम्।। 5 ।।)
- ः।थ्य;ह वचने हि लुक्प्रसङ्गः -
(भाष्यम्) ः।थ्य;ह हि क्रियमाणे लुक् प्रसज्येत--द्विषाष्टिकः, त्रिषाष्टिकः।
अनेन सति लुग्भवति।
तेन सति कस्मान्न भवति?
आर्हादित्युच्यते।
न सिध्यति।
किं कारणम्?
न हीमे कालशब्दाः।
किं तर्हि?
संख्याशब्दा ः।थ्य;मे।
ः।थ्य;मेऽपि कालशब्दाः।
कथम्?
संख्या संख्येये वर्तते।
यदि तर्हि यो यः काले वर्तते स स कालशब्दः, रमणीयादिष्वतिप्रसङ्गो भवति। रमणीयं कालं भूतः, शोभनं कालं भूतः। अथ मतमेतत्--काले दृष्टः शब्दः कालशब्दः, कालं यो न व्यभिचरति--ः।थ्य;ति। न रमणीयादिष्वतिप्रसङ्गो भवति, जीवितपरिमाणे तूपसंख्यानं कर्तव्यम्।
ः।थ्य;ह चोपसंख्यानं कर्तव्यम्--वार्षशतिकः, वार्षसहस्रिक ः।थ्य;ति।
किं पुनः कारणं न सिध्यति?
न हि वर्षशतशब्दः संख्या।
किं तर्हि?
संख्येये वर्तते वर्षशतशब्दः।
एवं तर्हि--
(5646 योगविभागबोधकवार्तिकम्।। 6 ।।)
- अन्येभ्योऽपि दृश्यते खारशताद्यर्थम् -
(भाष्यम्) अन्येभ्योऽपि दृश्यत ः।थ्य;ति वक्तव्यम्।
किं प्रयोजनम्?
खारशताद्यर्थम्। खारशतिको राशिः। खारसहस्रिको राशिः।।
(सिद्धान्ताभिप्रायकं भाष्यम्)
अयं तर्हि दोषः--ः।थ्य;ह वचने हि लुक्प्रसङ्ग ः।थ्य;ति।
न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति।
किं तर्हि?
यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम्।
क्व च क्रियमाणे न दोषः? परमार्हात्।
तत्तर्हि उपसंख्यानं कर्तव्यम्।
न कर्तव्यम्।
कालादित्येव सिद्धम्।
ननु चोक्तं नेमे कालशब्दाः, किं तर्हि, संख्याशब्दा ः।थ्य;ति।
ननु चोक्तमिमेऽपि कालशब्दाः। कथं? संख्या संख्येये वर्तते।
ननु चोक्तं यदि तर्हि यो यः शब्दः काले वर्तते स स कालशब्दः, रमणीयादिष्वतिप्रसङ्गो भवतीति।।
(5647 सिद्धान्तवार्तिकम्।। 7 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?

अनभिधानादिति। अनभिधानाद्रमणीयादिषूत्पत्तिर्न भविष्यति।।
(5648 उपसङ्ख्यानवार्तिकम्।। 8 ।।)
- स्तोमे डविधिः पञ्चदशाद्यर्थः -
(भाष्यम्) स्तोमे डो विधेयः।
किं प्रयोजनम्?
पञ्चदशाद्यर्थः। पञ्चदशः स्तोमः। सप्तदशः स्तोम ःथ्य;ति।।
ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्।।
-5-1-59- पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (1941)
(निपातनाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
ःथ्य;मे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते, तत्र न ज्ञायते--का प्रकृतिः, कः प्रत्ययः, कः प्रत्ययार्थ ःथ्य;ति। तत्र वक्तव्यम्--ःथ्य;यं प्रकृतिः, अयं प्रत्ययः, अयं प्रत्ययार्थ ःथ्य;ति।
ःथ्य;मे ब्रूमः--द्विशब्दादयं दशदर्थाभिधायिनः स्वार्थे शतिच् प्रत्ययो निपात्यते, विन्भावश्च। द्वौ दशतौ विंशतिः।।
(5649 विंशत्यादीनां दशदाद्यर्थे समासवचनानुपपत्तिरूपाक्षेपवार्तिकम्।। 1 ।।)
- विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः -
(भाष्यम्) विंशत्यादयो दशदर्थे चेत्समासो नोपपद्यते--विंशतिगवमिति।
किं कारणम्? द्रव्यमनभिहितम्, तस्यानभिहितत्वात् षष्ठी प्राप्नोति, षष्ठ्यन्तं च समासे पूर्वं निपतति। तत्र गोविंशतिरिति प्राप्नोति।।
न चैवं भवितव्यम्--गोविंशतिरिति?
भवितव्यम् च, विंशतिगवं तु न सिध्यति।।
ःथ्य;ह च त्रिंशत्पूली चत्वारिंशत्पूली समानाधिकरणलक्षणः समासो न प्राप्नोति।।
वचनं च विधेयम्।। विंशतिः।
द्वित्वाद्दशतोर्दवयोर्द्विवचनमिति द्विवचनं प्राप्नोति।।
(वार्तिकावतरणभाष्यम्)
एवं तर्हि--परिमाणिनि विंशत्यादयो भविष्यन्ति।।
(5650 परिमाण्यर्थस्वीकारे दोषोद्भावकवार्तिकम्।। 2 ।।)
- परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम् -
(भाष्यम्) परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययो विधेयः। विंशकः संघः।।
(5651 परिमाण्यर्थे द्वितीयदोषोद्भावकवार्तिकम्।। 3 ।।)
- षष्ठीवचनविधिश्च -
(भाष्यम्) षष्ठी च विधेया। गवां विंशतिः। द्रव्यमभिहितं तस्याभिहितत्वात् षष्ठी न प्राप्नोति।।
एकवचनं च विधेयम्। विंशतिर्गावः।
गोभिः सामानाधिकरण्यात् बहुषु बहुवचनम्(1|4|21) ःथ्य;ति बहुवचनं प्राप्नोति।।
(5652 दृष्टान्तनिदर्शनेनाक्षेपवारकवार्तिकम् ।। 4 ।।)
- अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु -
(भाष्यम्) अनारम्भो वा पुनर्विंशत्यादीनां न्याय्यः।
कथं सिध्यति?
प्रातिपदिकविज्ञानात्।
कथं प्रातिपदिकविज्ञानम्?
विंशत्यादयोऽव्युत्पन्नानि प्रातिपदिकानि। यथा सहस्रादिषु।
तद्यथा--सहस्रम्---अयुतम्--अर्बुदम्--ःथ्य;ति, न चानुगमः क्रियते, भवति चाभिधानम्।।
(सहस्रादिष्वाक्षेपसमाधानभाष्यम्)
यथा सहस्रादिष्वित्युच्यते,
अथ सहस्रादिष्वपि कथं भवितव्यम्--सहस्रं गवाम्। सहस्रं गावः। सहस्रगवम्। गोसहस्रमिति।
यावताऽत्रापि संहेहः, नासूया कर्तव्या यत्रानुगमः क्रियते।।
(विंशत्यादीनां समुदायबोधकत्वस्वीकारेण वार्तिकाक्षिप्तदोषवारणभाष्यम्)
ननु चोक्तम्--विंशत्यादयो दशदर्थे चेत्--समासवचनानुपपत्तिः, परिमाणिनि चेत्--पुनः स्वार्थे प्रत्ययविधानम्,
षष्ठीवचनविधिश्चेति।।
नैष दोषः।
समुदाये विंशत्यादयो भविष्यन्ति।

किं वक्तव्यमेतत्?
न हि।
कथमनुच्यमानं गंस्यते?
सङ्घ ःथ्य;ति वर्तते, सङ्घः समूहः समुदाय ःथ्य;त्यनर्थान्तरम्।।
(विंशत्यादीनां गुणवचनत्वबोधकभाष्यम्)
त एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति, भाववचनाः सन्तो गुणवचना भवन्ति, गुणवचनाः सन्तोऽविशिष्टा भवन्त्यन्यैर्गुणवचनैः।।
(गुणानां गुणिविशेषकत्वबोधकभाष्यम्)
अन्येषु च गुणवचनेषु कदाचिद्गुणो गुणिविशेषको भवति, तद्यथा--शुक्लः पट ःथ्य;ति।।
(गुणिनां गुणव्यपदेशदर्शकभाष्यम्)
कदाचिद्गुणिना गुणो व्यपदिश्यते, तद्यथा--पटस्य शुक्ल ःथ्य;ति।।
(आक्षेपपरिहारदर्शकभाष्यम्)
तद्यदा तावदुच्यते--विंशत्यादयो दशदर्थे चेत्-- समासवचनानुपपत्तिरिति, सामानाधिकरण्यं तदा गुणगुणिनोः।
वचनपरिहारस्तिष्ठतु तावत्।
परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानमिति, संहनने वृत्तः संहनने वर्तिष्यते, संख्यासंहनने वृत्तो द्रव्यसंहनने वर्तिष्यते।।
अथ षष्ठी तदा गुणिना गुणो विशेष्यते।।
(वचनदोषपरिहारभाष्यम्)
वचनपरिहार उभयोरेवम्।
उभयोरपि पक्षयोरेवं कृत्वा वचनपरिहारः--
(विंशत्यादीनां गुणवचनत्वसाधने आक्षेपभाष्यम्)
यदि तर्हि--ःथ्य;मे विंशत्यादयो गुणवचनाः स्युः, सधर्मभिरन्यैर्गुणवचनैर्भवितव्यम्।
अन्ये च गुणवचना द्रव्यस्य लिङ्गसङ्ख्ये अनुवर्तन्ते, तद्यथा--शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला ःथ्य;ति। यदसौ द्रव्यं श्रितो गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति।।
(विंशत्यादीनां गुणवचनानां लिङ्गसंख्याऽननुवर्तनेन दोषाभावबोधकभाष्यम्)
विंशत्यादयः पुनर्नानुवर्तन्ते।
अन्येऽपि वै गुणवचना नावश्यं द्रव्यस्य लिङ्गसंख्ये अनुवर्तन्ते, तद्यथा--गावो धनम्। पुत्रा अपत्यम्। ःथ्य;न्द्राग्नी देवता। विश्वेदेवा देवता। यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणा समृद्ध्या ःथ्य;ति।।
(लिङ्गसंख्याननुवर्तनहेतुबोधकभाष्यम्)
अथात्राननुवृत्तौ हेतुः शक्यो वक्तुम्?
बाढं शक्यो वक्तुम्।
कामं तर्ह्युच्यताम्। ःथ्य;ह--कदाचिद्गुणः प्राधान्येन विवक्षितो भवति, तद्यथा--पञ्चोडुपशतानि तीर्णानि। पञ्चवध्रीशतानि तीर्णानि। अश्वैर्युद्धम्। असिभिर्युद्धमिति। न चासयो युध्यन्ते, असिगुणाः पुरुषा युध्यन्ते, गुणस्तु खलु प्राधान्येन विवक्षितो भवति।।
ःथ्य;ह तावद्गावो धनमिति, धिनोतेर्धनम्, एको गुणः स च प्राधान्येन विवक्षितः।।
पुत्रा अपत्यमिति, अपतनादपत्यम्, एको गुणस्स प्राधान्येन विवक्षितः।।
ःथ्य;न्द्राग्नी देवता--विश्वेदेवा देवता ःथ्य;ति, दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तल्, एको गुणः स प्राधान्येन विवक्षितः।
यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणा समृद्ध्या ःथ्य;ति, दक्षतेर्वृद्धिकर्मणो दक्षिणा एको गुणः स प्राधान्येन विवक्षितः, तस्यैकत्वादेकवचनं भविष्यति।।
विंशत्यादिषु चाप्येको गुणः स प्राधान्येन विवक्षितः, तस्यैकत्वादेकवचनं भविष्यति।।
(विंशत्यादीनां गुणवचनत्वे आक्षेपभाष्यम्)
अयं तर्हि विंशत्यादिषु भाववचनेषु दोषः--गोविंशतिरानीयतामिति, भावानयने चोदिते द्रव्यानयनं न प्राप्नोति।।
(दृष्टान्तप्रदर्शनपूर्वकं समाधानभाष्यम्)
नैष दोषः।
ःथ्य;दं तावदयं प्रष्टव्यः--अथेह--गौरनुबन्ध्योऽजोऽग्नीषोमीय ःथ्य;ति कथमाकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते ःथ्य;ति।
असंभवात्।
आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि क्रियन्ते।
ःथ्य;दमप्येवंजातीयकमेव। असंभवाद्भावानयनस्य द्रव्यानयनं भविष्यति।।
(प्रकारान्तरेण समाधानभाष्यम्)
अथ वा अव्यतिरेकात्।।

-5-1-64- छेदादिभ्यो नित्यम् (1946)
-5-1-76- पन्थो ण नित्यम् (1958)
(णप्रत्ययाधिकरणम्)
(5653 सूत्रद्वयेऽपि नित्यग्रहणाक्षेपवार्तिकम्।। 1 ।।)
- छेदादिपथिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् -
(भाष्यम्) छेदादिपथिभ्यो नित्यग्रहणमनर्थकम्।
किं कारणम्?
विग्रहदर्शनात्। विग्रहो दृश्यते--छेदमर्हति, पन्थानं गच्छतीति।।
(नित्यग्रहणप्रयोजनभाष्यम्)
विकारार्थं तर्हीदं नित्यग्रहणं क्रियते, विकारेण विग्रहो मा भूदिति।
विराग विरङ्गं च। पन्थो ण नित्यमिति।।
(5654 नित्यग्रहणवैफल्यबोधकवार्तिकम्।। 2 ।।)
- विकारार्थमिति चेदकङादिभिस्तुल्यम् -
(भाष्यम्) विकारार्थमिति चेदकङादिभिस्तुल्यमेतत्। यथाऽकङादिभिर्विकारैर्विग्रहो न भवति, एवमाभ्यामपि न भविष्यति।
(सन्नियोगशिष्टन्यायेन नित्यग्रहणवैफल्यबोधकभाष्यम्)
किं पुनरिहाकर्तव्यं नित्यग्रहणं क्रियते, आहोस्विदन्यत्र कर्तव्यं न क्रियते?
ः्थ्य;हाकर्तव्यं क्रियते। एष एव न्यायो यदुत-संनियोगशिष्टानामन्यतरापाये उभयोरप्यभावः। तद्यथा--देवदत्तयज्ञदत्ताभ्यामिदं कर्तव्यमिति देवदत्तापाये यज्ञदत्तोऽपि न करोति।।
-5-1-71- यज्ञर्त्विग्भ्यां घखञ्ञौ (1953 )
(घखञ्प्रत्ययाधिकरणम्)
(5655 उपसङ्ख्यानवार्तिकम्।। 1 ।।)
- यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् -
(भाष्यम्) यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानं कर्तव्यम्।
यज्ञकर्मार्हतीति यज्ञियो देशः।
ऋत्विक्कर्मार्हतीत्यार्त्विजीनं ब्राह्मणकुलमिति।।
-5-1-72- पारायणतुरायणचान्द्रायणं वर्तयति (1954)
(ठञ्ञोऽधिकरणम्)
(5656 वर्तयति निर्द्देशस्यानुपपत्तिबोधकवार्तिकम्।। 1 ।।)
- तद्वर्तयतीत्यनिर्देशस्तत्रादर्शनात् -
(भाष्यम्) तद्वर्तयतीत्यनिर्देशः। अगमको निर्देशोऽनिर्देशः।
पारायणं को वर्तयति?
यः परस्य करोति।
तुरायणं को वर्तयति?
यश्चरुपुरोडाशान्निर्वर्तयति।
तत्रादर्शनात्। न च तत्र प्रत्ययो दृश्यते।।
(5657 अन्यत्रप्रत्ययोत्पत्तिरूपदोषबोधकवार्तिकम्।। 2 ।।)
- ः्थ्य;ङ्यज्योश्च दर्शनात् -
(भाष्यम्) ः्थ्य;ङ्यज्योश्च प्रत्ययो दृश्यते।
यः पारायणमधीते स पारायणिक ः्थ्य;त्युच्यते।
यस्तुरायणेन यजते स तौरायणिक ः्थ्य;त्युच्यते।।
(वार्तिकाक्षिप्तदोषनिवारकं सिद्धान्तभाष्यम्)
यश्चैवाधीते यश्च परस्य करोति, उभौ तौ वर्तयतः।
यश्च यजते यश्च पुरोडाशान्निर्वर्तयति, उभौ तौ वर्तयतः।।
उभयत्र कस्मान्न भवति?
अनभिधानात्।।
-5-1-74- योजनं गच्छति (1956)
(5658 उपसंख्यानवार्तिकम्।। 1 ।।)
- योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम् -
(भाष्यम्) योजनं गच्छतीत्यत्र क्रोशशतयोजनशतयोरुपसंख्यानं कर्तव्यम्।

क्रोशशतं गच्छति--ःथ्य;ति--क्रौशशतिकः।
योजनशतं गच्छति--ःथ्य;ति--यौजनशतिक ःथ्य;ति।।
(5659 अर्थोपसंख्यानवार्तिकम्।। 2 ।।)
- ततोऽभिगमनमर्हतीति च -
(भाष्यम्) ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसंख्यानं कर्तव्यम्।
क्रोशशतादभिगमनमर्हति--क्रौशशतिको भिक्षुः। योजनशतादभिगमनमर्हति--यौजनशतिको गुरुः।।
-5-1-77- उत्तरपथेनाहृतं च (1959)
(5660 उपसंख्यानवार्तिकम्।। 1 ।।)
- आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् -
(भाष्यम्) आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानं कर्तव्यम्।
वारिपथेन गच्छति--वारिपथिकः। वारिपथेनाहृतम्--वारिपथिकम्--वारि।।
जङ्गल--जङ्गलपथेन गच्छति--जाङ्गलपथिकः। जङ्गलपथेनाहृतं--जाङ्गलपथिकम्--जङ्गल।।
स्थल--स्थलपथेन गच्छति--स्थालपथिकः। स्थलपथेनाहृतं--स्थालपथिकम्--स्थल।
कान्तार--कान्तारपथेन गच्छति--कान्तारपथिकः। कान्तरापथेनाहृतं--कान्तारपथिकम्।।
(5661 उपसंख्यानवार्तिकम्।। 2 ।।)
- अजपथशङ्कुपथाभ्यां च -
(भाष्यम्) अजपथशङ्कुपथाभ्यां चेति वक्तव्यम्।
अजपथेन गच्छति--आजपथिकः। अजपथेनाहृतम्--आजपथिकम्। शङ्कुपथेन गच्छति--शाङ्कुपथिकः। शङ्कुपथेनाहृतं--शाङ्कुपथिकम्।।
(5662 उपसंख्यानवार्तिकम्।। 3 ।।)
- मधुकमरिचयोरण् स्थलात् -
(भाष्यम्) मधुकमरिचयोरण् स्थलाद्वक्तव्यः। स्थालपथं मधुकम्। स्थालपथं मरिचम्।।
-5-1-80- तमधीष्टो भृतो भूतो भावी (1962)
(5663 तम् ःथ्य;ति द्वितीयान्तनिर्देशाक्षेपवार्तिकम्।। 1 ।।)
- अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् -
(भाष्यम्) अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकः।
किं कारणम्?
तत्रादर्शनात्। न ह्यसौ मासमधीष्यते।
किं तर्हि?
मुहूर्तमसावधीष्टो मासं तत्कर्म करोति।
(5664 चतुर्थीनिर्देशेनाक्षेपनिरासवार्तिकम्।। 2 ।।)
- सिद्धं तु चतुर्थीनिर्देशात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
चतुर्थीनिर्देशः कर्तव्यः। तस्मा अधीष्ट ःथ्य;ति।
(वार्तिकानुपयोगप्रदर्शनपूर्वकं सिद्धान्तभाष्यम्)
स तर्हि चतुर्थीनिर्देशः कर्तव्यः?
न कर्तव्यः। तादर्थ्यात्ताच्छब्द्यं भविष्यति। मासार्थो मुहूर्तः--मासः।।
-5-1-84- अवयसि ठंश्च (1966)
(ठनोऽधिकरणम्)
(5665 अनुकर्षणनिर्धारकवार्तिकम्।। 1 ।।)
- अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः -
(भाष्यम्) अवयसि ठंश्चेत्यनन्तरस्यानुकर्षो द्रष्टव्यः। द्वेष्यं विजानीयात् यबप्यनुवर्तत ःथ्य;ति।
तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे--अवयसि ठंश्चेत्यनन्तरस्यानुकर्ष ःथ्य;ति।।
-5-1-90- षष्टिकाः षष्टिरात्रेण पच्यन्ते (1972)
(निपातनाधिकरणम्)
(5666 षष्टिकशब्दमर्यादाकरणवार्तिकम्।। 1 ।।)
- षष्टिके संज्ञाग्रहणम् -
(भाष्यम्) षष्टिके संज्ञाग्रहणं कर्तव्यम्। मुद्गा अपि हि षष्टिरात्रेण पच्यन्ते तत्र मा भूदिति।।
(5667 सिद्धान्तवार्तिकम्।। 2 ।।)

- उक्तं वा -
(भाष्यम्) किमुक्तम्?
अनभिधानादिति।।
-5-1-94- तदस्य ब्रह्मचर्यम् (1976)
(ब्रह्मचर्यार्थाधिकरणम्)
(5668 उपसंख्यानवार्तिकम्।। 1 ।।)
- तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् -
(भाष्यम्) तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानं कर्तव्यम्। महानाम्नीनां ब्रह्मचर्यं माहानाम्निकम्। आदित्यव्रतिकम्।।
(5669 उपसंख्यानवार्तिकम्।। 2 ।।)
- तच्चरतीति च -
(भाष्यम्) तच्चरतीति च महानाम्न्यादिभ्य उपसंख्यानं कर्तव्यम्। महानाम्नीश्चरति माहानाम्निकः।
आदित्यव्रतिकः।।
(आक्षेपभाष्यम्)
नैष युक्तो निर्देशस्तच्चरतीति। महानाम्न्यो नार्मच्चः, न च ताश्चर्यन्ते, व्रतं तासां चर्यते।।
(समाधानभाष्यम्)
नैष दोषः।
साहचर्यात्ताच्छब्द्यं भविष्यति। महानाम्नीसहचरितं व्रतं महानाम्न्यो व्रतमिति।।
(5670 उपसंख्यानवार्तिकम्।। 3 ।।)
- अवान्तरदीक्षाभ्यो डिनिः -
(भाष्यम्) अवान्तरदीक्षाभ्यो डिनिर्वक्तव्यः। अवान्तरदीक्षी, तिलव्रती।।
(5671 उरसंख्यानवार्तिकम्।। 4 ।।)
- अष्टाचत्वारिंशतो ड्वुंश्च -
(भाष्यम्) अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्चवक्तव्यः। अष्टाचत्वारिंशकः, अष्टाचत्वारिंशी।।
(5672 उपसंख्यानवार्तिकम्।। 5 ।।)
- चातुर्मास्यानां यलोपश्च -
(भाष्यम्) चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः। चातुर्मासकः। चातुर्मासी।
अथ किमिदं चातुर्मास्यानामिति?
(5673 चातुर्मास्यसिद्धिसाधकं वार्तिकम्।। 6 ।।)
- चतुर्मासाण्ण्यो यज्ञे तत्र भवे -
(भाष्यम्) चतुर्मासाण्ण्यो वक्तव्यः, यज्ञे तत्र भव ः थ्य;त्येतस्मिन्नर्थे। चतुर्षु मासेषु भवानि चातुर्मास्यानि यज्ञाः।।
(5674 विधिवार्तिकम्।। 7 ।।)
- संज्ञायामण् -
(भाष्यम्) संज्ञायामण् वक्तव्यः। चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी।।
-5-1-95- तस्य दक्षिणा यज्ञाख्येभ्यः (1977)
(आख्यापदाक्षेपभाष्यम्)
आख्याग्रहणं किमर्थम्?
आख्यापदप्रयोजनभाष्यम्
तस्य दक्षिणा यज्ञेभ्यः ः थ्य;तीत्युच्यमाने य एव संज्ञीभूतका यज्ञास्तत उत्पत्तिः स्यात्---आग्निष्टोमिक्यः,राजसूयिक्यः,वाजपेयिक्यः। यत्र वा यज्ञशब्दोऽस्ति---नावयज्ञिक्यः,
पाकयज्ञिक्यः। ः थ्य;ह न स्यात्--पाञ्चौदनिक्यः,दाशौदनिक्यः। आख्याग्रहणे पुनः क्रियमाणे न दोषो भवति। ये च संज्ञीभूतका यज्ञाः, ये च न संज्ञीभूतकाः,यत्र च यज्ञशब्दोऽस्ति, यत्र च नास्ति, तदाख्यामात्रात्सिद्धं भवति।।
-5-1-96- तत्र च दीयते कार्यं भववत् (1978)
(अतिदेशाधिकरणम्)
(5675 कार्यग्रहणाक्षेपवार्तिकम्।। 1 ।।)
?B- कार्यग्रहणमनर्थकं तत्रभवेन कृतत्वात् -
(भाष्यम्) कार्यग्रहणमनर्थकम्।
किं कारणम्?
तत्रभवेन कृतत्वात्। यद्धि मासे कार्यं मासे भवं तद्भवति, तत्र तत्र भवः (4।3।53) ः थ्य;त्येव सिद्धम्।
(दीयते ग्रहणाक्षेपभाष्यम्)

किमिदं भवान् कार्यग्रहणमेव प्रत्याचष्टे, न पुनर्दीयतेग्रहणमपि।
यथैव हि यन्मासे कार्यं तन्मासे भवं भवति, एवं यदपि मासे दीयते तदपि मासे भवं भवति। तत्र तत्र भवः
ाथ्य;त्येव सिद्धम्।
न सिध्यति। न तन्मासे दीयते।
किं तर्हि?
मासे गते।
एवं तर्हि--औपश्लेषिकमधिकरणं विज्ञास्यते।।
(समाधानभाष्यम्)
एवं तर्हि योगविभागोत्तरकालमिदं पठितव्यम्--
तस्य दक्षिणा यज्ञाख्येभ्यः।
तत्र च दीयते।
ततः--कार्यं भववत् कालात् ाथ्य;ति।।
-5-1-97- व्युष्टादिभ्योऽण् (1979)
(अण्प्रत्ययाधिकरणम्)
(5676 उपसंख्यानवार्तिकम्।। 1 ।।)
- अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम् -
(भाष्यम्) अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानं कर्तव्यम्।।
(अग्निपदादिभ्य उपसंख्यानस्य स्थलसम्भवबोधकं भाष्यम्)
त्रीणीमान्यण्ग्रहणानि--व्युष्टादिभ्योऽण्, समयस्तदस्य प्राप्तम् ऋतोरण् (5।1।104,105)। प्रयोजनम् विशाखाषाढादण् मन्थदण्डयोः (109,110) ाथ्य;ति।
तत्र न ज्ञायते कतरस्मिन्नण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्।।
(उपसंख्यानस्थलनिश्चायकभाष्यम्)
अविशेषात्सर्वत्र।
व्युष्टादिभ्योऽण् भवतीत्युक्त्वाऽग्निपदादिभ्यश्चेति वक्तव्यम्। अग्निपदे दीयते कार्यं वा--आग्निपदम्, पैलुमूलम्।
समयस्तदस्य प्राप्तमृतोरण्, अग्निपदादिभ्यश्चेति वक्तव्यम्। उपबस्ता प्राप्तोऽस्यौपवस्त्रम्, प्राशिता प्राप्तोऽस्य प्राशित्रम्।
प्रयोजनं विशाखाषाढादण् मन्थदण्डयोः, अग्निपदादिभ्यश्चेति वक्तव्यम्। चूडा प्रयोजनमस्य--चौडम्, श्रद्धा प्रयोजनमस्य--श्राद्धम्।।
-5-1-111- अनुप्रवचनादिभ्यश्छः (1993)
(छप्रत्ययाधिकरणम्)
(5677 उपसंख्यानवार्तिकम्।। 1 ।।)
- छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् -
(भाष्यम्) छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानं कर्तव्यम्। विशि--गेहानुप्रवेशनीयम्। पूरि--प्रपापूरणीयम्। पदि--गोप्रपदनीयम्, अश्वप्रपदनीयम्। रुहि--प्रासादारोहणीयम्।।
(5678 विधिवार्तिकम्।। 2 ।।)
- स्वर्गादिभ्यो यत् -
(भाष्यम्) स्वर्गादिभ्यो यत्प्रत्ययो भवति। स्वर्ग्यम्। धन्यम्। यशस्यम्। आयुष्यम्।
(5678 लुग्विधिवार्तिकम्।। 1 ।।)
- पुण्याहवाचनादिभ्यो लुक् -
(भाष्यम्) पुण्याहवाचनादिभ्यो लुग्वक्तव्यः। पुण्याहवाचनम्। शान्तिवाचनम्। स्वस्तिवाचनम्।।
-5-1-113- ऐकागारिकट् चौरे (1995)
(5679 सूत्रप्रत्याख्यानवार्तिकम्।। 1 ।।)
- एकागारान्निपातनानर्थक्यं ठञ्प्रकरणात् -
(भाष्यम्) एकागारान्निपातनमनर्थकम्।
किं कारणम्?
ठञ्प्रकरणात्। ठञ् प्रकृतः सोऽनुवर्तिष्यते।
ाथ्य;दं तर्हि प्रयोजनम्--चोर ाथ्य;ति वक्ष्यामीति।
ाथ्य;ह मा भूत्--एकागारं प्रयोजनमस्य भिक्षोरिति।
यद्येतावत्प्रयोजनं स्यात् एकागाराच्चोरे ाथ्य;त्येव ब्रूयात्।।
-5-1-114- आकालिकडाद्यन्तवचने (1996)
(निपातनाधिकरणम्)

(5680 निपातनानर्थक्यबोधकवार्तिकम्।। 1 ।।)
- आकालान्निपातनानर्थक्यं ठञ्ञ् प्रकरणात् -
(भाष्यम्) आकालान्निपातनमनर्थकम्।
किं कारणम्?
ठञ्ञ्प्रकरणात्। ठञ्ञ् प्रकृतः सोऽनुवर्तिष्यते।।
(निपातनस्य फलान्तरबोधकं भाष्यम्)
ाःथ्य;दं तर्हि प्रयोजनम्--एतस्मिन् विशेषे निपातनं करिष्यामि समानकालस्याद्यन्तविवक्षायामिति।।
(5689 विधिवार्तिकम्।। 2 ।।)
- आकालाट्ठंश्च -
(भाष्यम्) आकालाट्ठंश्च वक्तव्यः। आकालिकी। आकालिका।।
-5-1-115- तेन तुल्यं क्रिया चेद्वतिः (1997)
(वतिप्रत्ययाधिकरणम्)
(निर्देशाक्षेपभाष्यम्)
ाःथ्य;दमयुक्तं वर्तते।
किमत्रायुक्तम्?
यत्ततृतीयासमर्थं क्रिया चेत्सा भवति-ाःथ्य;त्युच्यते,
कथं च तृतीयासमर्थं नाम क्रिया स्यात्।।
(समाधानभाष्यम्)
नैष दोषः। सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते--ब्राह्मणः क्षत्रियो वैश्यः शूद्र ाःथ्य;ति।
आतश्च गुणसमुदाये,
एवं ह्याह--
तपः श्रुतं च योनिश्च एतद् ब्राह्मणकारकम्।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ।। 1 ।।
तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश ाःथ्य;त्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति। समुदायेषु च शब्दा वृत्ता अवयवेष्वपि वर्तन्ते।
तद्यथा--पूर्वे पञ्चालाः, उत्तरे पञ्चालाः। तैलं भुक्तम्, घृतं भुक्तम्। शुक्लः, नीलः, कृष्ण ाःथ्य;ति।
एवमयं ब्राह्मणशब्दः समुदाये वृत्तोऽवयवेष्वपि वर्तते।।
(तृतीयासमर्थविशेषणे दोषदर्शकभाष्यम्)
यदि तर्हि तृतीयासमर्थं विशेष्यते, प्रत्ययार्थोऽविशेषितो भवति।
तत्र को दोषः? तृतीयासमर्थात् क्रियावाचिनो गुणतुल्येऽपि प्रत्ययः स्यात्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यः पिङ्गल ाःथ्य;ति।।
(प्रत्ययार्थविशेषणे दोषभाष्यम्)
अस्तु तर्हि प्रत्ययार्थविशेषणम्--यत्ततुल्यं क्रिया चेत्सा भवतीति।
एवमपि तृतीयासमर्थमविशेषितं भवति।
तत्र को दोषः?
तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येऽपि प्रत्ययः प्राप्नोति।।
(प्रत्ययार्थविशेषणे दोषाभावबोधकभाष्यम्)
नैष दोषः। यत्ततुल्यं क्रिया चेत्सा भवतीत्युच्यते। तुलया च संमितं तुल्यम्, यदि च तृतीयासमर्थमपि क्रिया, प्रत्ययार्थोऽपि क्रिया, ततस्तुल्यं भवति।।
(तृतीयासमर्थस्य विशेषणे दोषाभावबोधकभाष्यम्)
अथ वा पुनरस्तु--यत्ततृतीयासमर्थं क्रिया चेत्सा भवति--ाःथ्य;त्येव।
ननु चोक्तं प्रत्ययार्थोऽविशेषित ाःथ्य;ति।
तत्र को दोषः?
तृतीयासमर्थात् क्रियावाचिनो गुणतुल्येऽपि प्रत्ययः प्राप्नोति--पुत्रेण तुल्यः स्थूलः, पुत्रेण तुल्यः पिङ्गल ाःथ्य;ति।
नैष दोषः। यत्ततृतीयासमर्थं क्रिया चेत्सा भवतीत्युच्यते, तुलया च संमितं तुल्यम्। यदि च तृतीयासमर्थमपि क्रिया, प्रत्ययार्थोऽपि क्रिया, ततस्तुल्यं भवति।।
(सिद्धान्तभाष्यम्)
किं पुनरत्र ज्यायः?
प्रत्ययार्थविशेषणमेव ज्यायः।
कुत एतत्?
एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्। वतिना सामानाधिकरण्यं कृतम्।।

(प्रत्ययार्थविशेषणे फलान्तरकथनभाष्यम्)
अपि च वतेरव्ययेषु पाठो न कर्तव्यो भवति। क्रियायामयं भवन् लिङ्गसंख्याभ्यां न योक्ष्यते।।
-5-1-116- तत्र तस्येव (1998)
(प्रयोजनाक्षेपभाष्यम्)
किमर्थमिदमुच्यते? न तेन तुल्यं क्रिया चेद्वतिः (115) ःथ्य;त्येव सिद्धम्?
(सूत्रप्रयोजनबोधकभाष्यम्)
न सिध्यति।
तृतीयासमर्थात्तत्र प्रत्ययः--यदाऽन्येन कर्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते।
न च काचिदिवशब्देन योगे तृतीया विधीयते।
ननु च सप्तम्यपि न विधीयते। एवं तर्हि सिद्धे सति यदिवशब्देन योगे सप्तमीसमर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यः--भवति--ःथ्य;वशब्देन योगे सप्तमीति।
किमेतस्य ज्ञापने प्रयोजनम्?
देवेष्विव नाम, ब्राह्मणेष्विव नाम एष प्रयोग उपपन्नो भवति।।
-5-1-117- तदर्हम् (1999)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते न तेन तुल्यं क्रिया चेद्वतिः (115) ःथ्य;त्येव सिद्धम्?
(फलसमर्थकभाष्यम्)
न सिध्यति।
तृतीयासमर्थात्तत्र यदाऽन्येन कर्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते।
ःथ्य;ह पुनर्द्वितीयासमर्थादात्मार्हायां क्रियायामर्हतिकर्तरि निश्चितबलाधाने प्रत्यय उत्पाद्यते--ब्राह्मणवद्धवान्
वर्तते। एतद्वृत्तं ब्राह्मणमर्हतीति।।
-5-1-118- उपसर्गाच्छन्दसि धात्वर्थे (2000)
(अर्थग्रहणाक्षेपभाष्यम्)
अर्थग्रहणं किमर्थम्?
न उपसर्गाच्छन्दसि धातौ ःथ्य;त्येवोच्येत।।
धातुर्वै शब्दः, शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञास्यते।
कः पुनर्धात्वर्थः?
क्रिया।।
(समाधानभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--उत्तरपदलोपो यया विज्ञायेत्, धातुकृतोऽर्थो धात्वर्थ ःथ्य;ति।
कः पुनर्धातुकृतोऽर्थः?
साधनम्।
किं प्रयोजनम्?
साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते। उद्गतानि उद्वतः, निगतानि निवत ःथ्य;ति।।
(5682 एकदेशिवार्तिकम्।। 1 ।।)
- स्त्रीपुंसाभ्यां वत्युपसंख्यानम् -
(भाष्यम्) स्त्रीपुंसाभ्यां वत्युपसंख्यानं कर्तव्यम्। स्त्रीवत्, पुंवदिति।
किं पुनः कारणं न सिध्यति?
ःथ्य;मौ नञ्स्नञौ प्राग्भवनादित्युच्येते तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम्।।
(सिद्धान्तभाष्यम्)
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति--न वत्यर्थे नञ्स्नञौ भवत ःथ्य;ति, यदयं स्त्रियाः पुंवत् ःथ्य;ति निर्देशं करोति।। एवमपि स्त्रीवत् ःथ्य;ति न सिध्यति। योगापेक्षं ज्ञापकम्।।
-5-1-119- तस्य भावस्त्वतलौ (2001)
(त्वतल्प्रत्ययाधिकरणम्)
(5683 एकदेशिपूर्वपक्षवार्तिकम्।। 1 ।।)
- स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम् -
(भाष्यम्) स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं कर्तव्यम्। स्त्रीभावः--स्त्रीत्वम्, स्त्रीता। पुंभावः--पुंस्त्वम्, पुंस्तेति।
किं पुनः कारणं न सिध्यति?
ःथ्य;मौ नञ्स्नञौ प्राग्भवनादित्युच्येते, तौ विशेषविहितौ सामान्यविहितौ त्वतलौ बाधेयाताम्।।

(5684 एकदेशिपूर्वपक्षवार्तिकम्।। 2 ।।)
- वावचनं च -
(भाष्यम्) वावचनं च कर्तव्यम्।
किं प्रयोजनम्?
नञ्स्नञ्त्रावपि यथा स्याताम्। स्त्रीभावः--स्त्रैणम्, पुंभावः--पौंस्नमिति।।
(5684 एकदेशिसमाधानवार्तिकम्।। 3 ।।)
- अपवादसमावेशाद्वा सिद्धम् -
(भाष्यम्) अपवादसमावेशाद्वा सिद्धमेतत्।
तद्यथा--ःथ्य;मनिच्प्रभृतिभिरपवादैः समावेशो भवति, एवमाभ्यामपि भविष्यति।।
(वार्तिकोक्तार्थसाधकसिद्धान्तभाष्यम्)
नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति--ःथ्य;मनिच्प्रभृतिभिरपवादैः समावेशो भवतीति।
किं तर्हि? आ च त्वात् ःथ्य;त्यस्माद्यत्नादिमनिच्प्रभृतिभिरपवादैः समावेशो भवति, न चैतावत्राभ्यन्तरौ।
एतावप्यत्राभ्यन्तरौ।
कथम्?
अपवादसदेशा अपवादा भवन्तीति।
एतच्चैव न जानीमोऽपवादसदेशा अपवादा भवन्तीति।
अपि च कुत एतद्--एतावप्यत्राभ्यन्तराविति, न पुनः पूर्वौ वा स्यातां परौ वा।
एवं तर्हि वक्ष्यति--आ चत्वात् ःथ्य;त्यत्र चकारकरणस्य प्रयोजनं नञ्स्नञ्भ्यामपि समावेशो भवतीति।।
(5686 अतिव्याप्त्याशङ्ककवार्तिकम्।। 4 ।।)
- तस्य भाव ःथ्य;त्यभिप्रायादिष्वतिप्रसङ्गः -
(भाष्यम्) तस्य भाव ःथ्य;त्यभिप्रायादिष्वतिप्रसङ्गो भवति। ःथ्य;हापि प्राप्नोति--अभिप्रायो देवदत्तस्य मोदकेषु भोजने। ये नो भावास्ते नो भावाः पुत्राः पुत्रैश्चेष्टन्त ःथ्य;ति।।
(5687 अतिव्याप्तिनिवारकवार्तिकम्।। 5 ।।)
- सिद्धं तु यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ -
(भाष्यम्) सिद्धमेतत्।
कथम्?
यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने--तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्, न चाभिप्रायादीनां भावाद् द्रव्ये देवदत्तशब्दो वर्तते।।
(द्रव्यगुणनिर्वचनभाष्यम्)
किं पुनर्द्रव्यं? के पुनर्गुणाः?
शब्दस्पर्शरूपरसगन्धा गुणाः, ततोऽन्यद् द्रव्यम्।।
(द्रव्यनिर्वचनोपक्रमभाष्यम्)
किं पुनरन्यच्छब्दादिभ्यो द्रव्यम्, आहोस्विदनन्यत्?
गुणस्यायं भावाद् द्रव्ये शब्दनिवेशं कुर्वन् ख्यापयति--अन्यच्छब्दादिभ्यो द्रव्यमिति।
अनन्यच्छब्दादिभ्यो द्रव्यम्, न ह्यन्यदुपलभ्यते। पशोः खल्वपि विशसितस्य पर्णशते व्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते।।
(द्रव्यनिर्वचनभाष्यम्)
अन्यच्छब्दादिभ्यो द्रव्यम्, तत्त्वनुमानगम्यम्। तद्यथा--ओषधिवनस्पतीनां वृद्धिह्रासौ, ज्योतिषां गतिरिति।
कोऽसावनुमानः?
ःथ्य;ह समाने वर्ष्मणि परिणाहे च अन्यत्तुलाग्रं भवति लोहस्य, अन्यत्कार्पासानाम्। यत्कृतो विशेषस्तद् द्रव्यम्।।
तथा कश्चित्स्पृशन्नेव च्छिनत्ति, कश्चिल्लम्बमानोऽपि न च्छिनत्ति, यत्कृतो विशेषस्तद् द्रव्यम्।।
तथा कश्चिदेकेनैव प्रहारेण व्यपवर्गं करोति, कश्चिद् द्वाभ्यामपि न करोति, यत्कृतो विशेषस्तद् द्रव्यम्।।
(द्रव्यपरिचायकलक्षणभाष्यम्)
अथ वा यस्य गुणान्तरेष्वपि प्रादुर्भवत्सु तत्वं न विहन्यते तद् द्रव्यम्।
किं पुनस्तत्वम्?
तद्भावस्तत्वम्। तद्यथा--आमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति, आमलकं बदरमित्येव भवति।।
(द्रव्यस्यान्वर्थलक्षणभाष्यम्)
अन्वर्थं खल्वपि निर्वचनं--गुणसंद्रावो द्रव्यमिति।।
(सिद्धं तु यस्येत्यादिन्यासाक्षेपभाष्यम्)
यदि तर्हि षष्ठीसमर्थाद् गुणे प्रत्यया उत्पद्यन्ते, किमियता सूत्रेण?

एतावद्वक्तव्यम्--षष्ठीसमर्थाद् गुण ःथ्य;ति।।
(एतादृशन्यासे दोषभाष्यम्)
षष्ठीसमर्थाद् गुण ःथ्य;तीयत्युच्यमाने द्विगुणा रज्जुस्त्रिगुणा रज्जुः, अत्रापि प्राप्नोति।।
(अवयवानामपि गुणत्वबोधकभाष्यम्)
नैष दोषः। गुणशब्दोऽयं बह्वर्थः। अस्त्येव समेष्ववयवेषु वर्तते। तद्यथा--द्विगुणा रज्जुः, त्रिगुणा रज्जुरिति।
अस्ति द्रव्यपदार्थकः। तद्यथा--गुणवानयं देश ःथ्य;त्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते।
अस्त्यप्राधान्ये वर्तते। तद्यथा--यो यत्राप्रधानं भवति स आह--गुणभूता वयमत्रेति।
अस्त्याचारे वर्तते। तद्यथा--गुणवानयं ब्राह्मण ःथ्य;त्युच्यते, यः सम्यगाचारं करोति।
अस्ति संस्कारे वर्तते। तद्यथा--संस्कृतमन्नं गुणवदित्युच्यते।।
(षष्ठीसमर्थाद्गुण ःथ्य;ति न्यासे अतिव्याप्तिदर्शकभाष्यम्)
अथवा सर्वत्रैवायं गुणशब्दः समेषु अवयवेषु वर्तते। तद्यथा--द्विगुणमध्ययनं त्रिगुणमध्ययनमित्युच्यते।
चर्चागुणान् क्रमगुणांश्चापेक्ष्य भवति, न संहितागुणांश्चर्चागुणांश्च।
यद्येवं गुणवदन्नमिति गुणशब्दो नोपपद्यते। नह्यन्नस्य सूपादयो गुणाः समा भवन्ति।
नावश्यं वैष्मतः परिमाणत एव वा साम्यं भवति।
किं तर्हि?
युक्तितोऽपि। आतश्च युक्तितः, यो हि मुद्गप्रस्थे लवणप्रस्थं प्रक्षिपेन्नादो युक्तं स्यात्।
यदि तावददेरन्नं नादोऽत्तव्यं स्यात्।
अथानितेरन्नं नादो जग्ध्वा प्राण्यात्।।
(यस्य गुणस्येति न्यासस्याव्याप्तिप्रदर्शकं भाष्यम्)
शुक्लादिषु तर्हि वेत्यभावाद् वृत्तिर्न प्राप्नोति। शुक्लत्वम्, शुक्लतेति।
किं पुनः कारणं शुक्लादय एवोदाह्रियन्ते, न पुनर्वृक्षादयोऽपि--वृक्षत्वम्, वृक्षतेति।
अस्त्यत्र विशेषः,
उभयवचना ह्येते द्रव्यं चाहुर्गुणं च, यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति।।
(अव्याप्त्यभावोपपादकभाष्यम्)
ःथ्य;मेऽपि तर्हि--उभयवचनाः।
कथम्?
आरभ्यते मतुब्लोपः--गुणवचनेभ्यो मतुपो लुग्भवतीति।
यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति।।
(अव्याप्तिदर्शकं भाष्यम्)
डित्थादिषु तर्हि वेत्यभावाद वृत्तिर्न प्राप्नोति। डित्थत्वम्, डित्थता, डाम्भिट्टता, डाम्भिट्टत्वमिति।
अत्रापि--कश्चित् प्राथमकल्पिको डित्थो डाम्भिट्टश्चेति। तेन कृतां क्रियां गुणं वा यः कश्चित्करोति स उच्यते--डित्थत्वं त एतत्, डाम्भिट्टत्वं त एतत्। एवं डित्थाः कुर्वन्ति, एव डाम्भिट्टाः कुर्वन्ति।
यस्तर्हि प्राथमकल्पिको डित्थो डाम्भिट्टश्च, तस्य वेत्यभावाद् वृत्तिर्न प्राप्नोति।
नैष दोषः।
यथैव तस्य काथंचित्कः प्रयोगः, एवं वृत्तिरपि भविष्यति।।
(5688 सिद्धं तु यस्येति न्यासं परित्यज्य अन्यन्यासे वार्तिकम्।। 6 ।।)
- यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने -
(वार्तिकव्याख्याभाष्यम्)
किमेभिस्त्रिभिर्भावग्रहणैः क्रियते?
एकेन शब्दः प्रतिनिर्दिश्यते द्वाभ्यामर्थः। यद्वा--सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थ ःथ्य;ति, तदभिधाने वा
त्वतलौ भवत ःथ्य;ति वक्तव्यम्।।
नैवमन्यत्र भवति। न हि तेन रक्तं रागात्(4।2।1) ःथ्य;त्यत्र शब्देन रक्ते प्रत्यया उत्पद्यन्ते।
शब्देऽसंभवादर्थेन रक्ते प्रत्यया भविष्यन्ति।।
(न्यासप्रत्याख्यानकवार्तिकावतरणभाष्यम्)
तत्तर्ह्यन्यतरत्कर्तव्यम्। सूत्रं च भिद्यते।।
यथान्यासमेवास्तु।
ननु चोक्तं--तस्य भाव ःथ्य;त्यभिप्रायादिष्वतिप्रसङ्गः ःथ्य;ति।।
(5689 न्यासप्रत्याख्यानकसिद्धान्तवार्तिकम्।। 7 ।।)
- उक्तं वा -

(भाष्यम्) किमुक्तम्?
अनभिधानादिति। अनभिधानादभिप्रायादिषूत्पत्तिर्न भविष्यति।।
(5690 पूर्वविप्रतिषेधवार्तिकम्।। 8 ।।)
- त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् -
(भाष्यम्) त्वतल्भ्यां नञ्समासो भवति पूर्वविप्रतिषेधेन।
किं प्रयोजनम्?
त्वतलोः स्वरसिद्ध्यर्थम्। त्वतलोः स्वरसिद्धिर्यथा स्यात्।
त्वतलोरवकाशः--भावस्य वचनं प्रतिषेधस्यावचनम्--ब्राह्मणत्वम्, ब्राह्मणता।
नञ्समासस्यावकाशः--प्रतिषेधस्य वचनं भावस्यावचनम्--अब्राह्मणः, अवृषलः।
उभयवचने उभयं प्राप्नोति--अब्राह्मणत्वम्, अब्राह्मणता।
नञ्समासो भवति पूर्वविप्रतिषेधेन।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।।
(पूर्वविप्रतिषेधाभावोपपादकं भाष्यम्)
न वक्तव्यः। नात्र त्वतलौ प्राप्नुतः।
किं कारणम्?
असामर्थ्यात्।
कथमसामर्थ्यम्?
सापेक्षमसमर्थं भवतीति। यावता ब्राह्मणशब्दः प्रतिषेधमपेक्षते।।
नञ्समासोऽपि तर्हि न प्राप्नोति।
किं कारणम्?
असामर्थ्यादेव।
कथमसामर्थ्यम्?
सापेक्षमसमर्थं भवतीति। यावता ब्राह्मणशब्दो भावमपेक्षते।।
प्रधानमत्र तदा ब्राह्मणशब्दः, भवति च प्रधानस्य सापेक्षस्यापि समासः।।
(पूर्वविप्रतिषेधप्रयोजनभाष्यम्)
ः‍थ्य;दं तर्हि प्रयोजनम्--नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थमिति वक्ष्यति, तत्र व्यवस्थार्थमिदं वक्तव्यम्।।
(5691 नञ्समासविकल्पबोधकवार्तिकम्।। 9 ।।)
- वा छन्दसि -
(भाष्यम्) वा छन्दसि नञ्समासो वक्तव्यः। निर्वीर्यतां वै यजमान आशास्ते अपशुतां। अयोनित्वाय। अशिथिलत्वाय। अगोतामनपत्यताम्।
भवेदिदं युक्तमुदाहरणम्--अयोनित्वाय, अशिथिलत्वायेति।
ः‍थ्य;दं त्वयुक्तम्--अपशुतामिति। नह्यसौ समासभावमाशास्ते।
किं तर्हि?
उत्तरपदाभावमाशास्ते--न पशोर्भाव ः‍थ्य;ति।।
(5692 प्रत्ययसमावेशे वार्तिकम्।। 10 ।।)
- नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् -
(भाष्यम्) नञ्समासादन्यो भाववचनो भवति विप्रतिषेधेन।
किं प्रयोजनम्?
स्वरोत्तरपदवृद्ध्यर्थम्।
स्वरार्थमुत्तरपदवृद्ध्यर्थं च।
स्वरार्थं तावत्--अप्रथिमा, --अम्रदिमा।
उत्तरपदवृद्ध्यर्थम्--अशौक्ल्यम्, अकार्ष्ण्यम्।।
-5-1-118- उपसर्गाच्छन्दसि धात्वर्थे (2000)
(अर्थग्रहणाक्षेपभाष्यम्)
अर्थग्रहणं किमर्थम्?
न उपसर्गाच्छन्दसि धातौ ः‍थ्य;त्येवोच्येत।।
धातुर्वै शब्दः, शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञास्यते।
कः पुनर्धात्वर्थः?
क्रिया।।
(समाधानभाष्यम्)

ः थ्य;दं तर्हि प्रयोजनम्--उत्तरपदलोपो यया विज्ञायेत्, धातुकृतोऽर्थो धात्वर्थ ःथ्य;ति।
कः पुनर्धातुकृतोऽर्थः?
साधनम्।
किं प्रयोजनम्?
साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते। उद्गतानि उद्वतः, निगतानि निवत ःथ्य;ति।।
(5682 एकदेशिवार्तिकम्।। 1 ।।)
- स्त्रीपुंसाभ्यां वत्युपसंख्यानम् -
(भाष्यम्) स्त्रीपुंसाभ्यां वत्युपसंख्यानं कर्तव्यम्। स्त्रीवत्, पुंवदिति।
किं पुनः कारणं न सिध्यति?
ःथ्य;मौ नञ्स्नञौ प्राग्भवनादित्युच्येते तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम्।।
(सिद्धान्तभाष्यम्)
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति--न वत्यर्थे नञ्स्नञौ भवत ःथ्य;ति, यदयं स्त्रियाः पुंवत् ःथ्य;ति निर्देशं करोति।। एवमपि स्त्रीवत् ःथ्य;ति न सिध्यति। योगापेक्षं ज्ञापकम्।।
-5-1-119- तस्य भावस्त्वतलौ (2001)
(त्वतल्प्रत्ययाधिकरणम्)
(5683 एकदेशिपूर्वपक्षवार्तिकम्।। 1 ।।)
- स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम् -
(भाष्यम्) स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं कर्तव्यम्। स्त्रीभावः--स्त्रीत्वम्, स्त्रीता। पुंभावः--पुंस्त्वम्, पुंस्तेति।
किं पुनः कारणं न सिध्यति?
ःथ्य;मौ नञ्स्नञौ प्राग्भवनादित्युच्येते, तौ विशेषविहितौ सामान्यविहितौ त्वतलौ बाधेयाताम्।।
(5684 एकदेशिपूर्वपक्षवार्तिकम्।। 2 ।।)
- वावचनं च -
(भाष्यम्) वावचनं च कर्तव्यम्।
किं प्रयोजनम्?
नञ्स्नञावपि यथा स्याताम्। स्त्रीभावः--स्त्रैणम्, पुंभावः--पौंस्नमिति।।
(5684 एकदेशिसमाधानवार्तिकम्।। 3 ।।)
- अपवादसमावेशाद्वा सिद्धम् -
(भाष्यम्) अपवादसमावेशाद्वा सिद्धमेतत्।
तद्यथा--ःथ्य;मनिच्प्रभृतिभिरपवादैः समावेशो भवति, एवमाभ्यामपि भविष्यति।।
(वार्तिकोक्तार्थसाधकसिद्धान्तभाष्यम्)
नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति--ःथ्य;मनिच्प्रभृतिभिरपवादैः समावेशो भवतीति।
किं तर्हि? आ च त्वात् ःथ्य;त्यस्माद्यत्नादिमनिच्प्रभृतिभिरपवादैः समावेशो भवति, न चैतावत्राभ्यन्तरौ।
एतावप्यत्राभ्यन्तरौ।
कथम्?
अपवादसदेशा अपवादा भवन्तीति।
एतच्चैव न जानीमोऽपवादसदेशा अपवादा भवन्तीति।
अपि च कुत एतद्--एतावप्यत्राभ्यन्तराविति, न पुनः पूर्वौ वा स्यातां परौ वा।
एवं तर्हि वक्ष्यति--आ चत्वात् ःथ्य;त्यत्र चकारकरणस्य प्रयोजनं नञ्स्नञ्भ्यामपि समावेशो भवतीति।।
(5686 अतिव्याप्त्याशङ्ककवार्तिकम्।। 4 ।।)
- तस्य भाव ःथ्य;त्यभिप्रायादिष्वतिप्रसङ्गः -
(भाष्यम्) तस्य भाव ःथ्य;त्यभिप्रायादिष्वतिप्रसङ्गो भवति। ःथ्य;हापि प्राप्नोति--अभिप्रायो देवदत्तस्य मोदकेषु भोजने। ये नो भावास्ते नो भावाः पुत्राः पुत्रैश्चेष्टन्त ःथ्य;ति।।
(5687 अतिव्याप्तिनिवारकवार्तिकम्।। 5 ।।)
- सिद्धं तु यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ -
(भाष्यम्) सिद्धमेतत्।
कथम्?
यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने--तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्, न चाभिप्रायादीनां भावाद् द्रव्ये देवदत्तशब्दो वर्तते।।
(द्रव्यगुणनिर्वचनभाष्यम्)

किं पुनर्द्रव्यं? के पुनर्गुणाः?
शब्दस्पर्शरूपरसगन्धा गुणाः, ततोऽन्यद् द्रव्यम्।।
(द्रव्यनिर्वचनोपक्रमभाष्यम्)
किं पुनरन्यच्छब्दादिभ्यो द्रव्यम्, आहोस्विदनन्यत्?
गुणस्यायं भावाद् द्रव्ये शब्दनिवेशं कुर्वन् ख्यापयति--अन्यच्छब्दादिभ्यो द्रव्यमिति।
अनन्यच्छब्दादिभ्यो द्रव्यम्, न ह्यन्यदुपलभ्यते। पशोः खल्वपि विशसितस्य पर्णशते व्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते।।
(द्रव्यनिर्वचनभाष्यम्)
अन्यच्छब्दादिभ्यो द्रव्यम्, तत्त्वनुमानगम्यम्। तद्यथा--ओषधिवनस्पतीनां वृद्धिह्रासौ, ज्योतिषां गतिरिति।
कोऽसावनुमानः?
ःथ्य;ह समाने वर्ष्मणि परिणाहे च अन्यत्तुलाग्रं भवति लोहस्य, अन्यत्कार्पासानाम्। यत्कृतो विशेषस्तद् द्रव्यम्।।
तथा कश्चित्स्पृशन्नेव च्छिनत्ति, कश्चिल्लम्बमानोऽपि न च्छिनत्ति, यत्कृतो विशेषस्तद् द्रव्यम्।।
तथा कश्चिदेकेनैव प्रहारेण व्यपवर्गं करोति, कश्चिद् द्वाभ्यामपि न करोति, यत्कृतो विशेषस्तद् द्रव्यम्।।
(द्रव्यपरिचायकलक्षणभाष्यम्)
अथ वा यस्य गुणान्तरेष्वपि प्रादुर्भवत्सु तत्वं न विहन्यते तद् द्रव्यम्।
किं पुनस्तत्वम्?
तद्भावस्तत्वम्। तद्यथा--आमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति, आमलकं बदरमित्येव भवति।।
(द्रव्यस्यान्वर्थलक्षणभाष्यम्)
अन्वर्थं खल्वपि निर्वचनं--गुणसंद्रावो द्रव्यमिति।।
(सिद्धं तु यस्येत्यादिन्यासाक्षेपभाष्यम्)
यदि तर्हि षष्ठीसमर्थाद् गुणे प्रत्यया उत्पद्यन्ते, किमियता सूत्रेण?
एतावद्वक्तव्यम्--षष्ठीसमर्थाद् गुण ःथ्य;ति।।
(एतादृशन्यासे दोषभाष्यम्)
षष्ठीसमर्थाद् गुण ःथ्य;तीयत्युच्यमाने द्विगुणा रज्जुस्त्रिगुणा रज्जुः, अत्रापि प्राप्नोति।।
(अवयवानामपि गुणत्वबोधकभाष्यम्)
नैष दोषः। गुणशब्दोऽयं बह्वर्थः। अस्त्येव समेष्ववयवेषु वर्तते। तद्यथा--द्विगुणा रज्जुः, त्रिगुणा रज्जुरिति।
अस्ति द्रव्यपदार्थकः। तद्यथा--गुणवानयं देश ःथ्य;त्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते।
अस्त्यप्राधान्ये वर्तते। तद्यथा--यो यत्राप्रधानं भवति स आह--गुणभूता वयमत्रेति।
अस्त्याचारे वर्तते। तद्यथा--गुणवानयं ब्राह्मण ःथ्य;त्युच्यते, यः सम्यगाचारं करोति।
अस्ति संस्कारे वर्तते। तद्यथा--संस्कृतमन्नं गुणवदित्युच्यते।।
(षष्ठीसमर्थाद्गुण ःथ्य;ति न्यासे अतिव्याप्तिदर्शकभाष्यम्)
अथवा सर्वत्रैवायं गुणशब्दः समेषु अवयवेषु वर्तते। तद्यथा--द्विगुणमध्ययनं त्रिगुणमध्ययनमित्युच्यते। चर्चागुणान् क्रमगुणांश्चापेक्ष्य भवति, न संहितागुणांश्चर्चागुणांश्च।
यद्येवं गुणवदन्नमिति गुणशब्दो नोपपद्यते। नह्यन्नस्य सूपादयो गुणाः समा भवन्ति।
नावश्यं वर्ष्मतः परिमाणत एव वा साम्यं भवति।
किं तर्हि?
युक्तितोऽपि। आतश्च युक्तितः, यो हि मुद्गप्रस्थे लवणप्रस्थं प्रक्षिपेन्नादो युक्तं स्यात्।
यदि तावददेरन्नं नादोऽत्तव्यं स्यात्।
अथानितेरन्नं नादो जग्ध्वा प्राण्यात्।।
(यस्य गुणस्येति न्यासस्याव्याप्तिप्रदर्शकं भाष्यम्)
शुक्लादिषु तर्हि वर्त्यभावाद् वृत्तिर्न प्राप्नोति। शुक्लत्वम्, शुक्लतेति।
किं पुनः कारणं शुक्लादय एवोदाह्रियन्ते, न पुनर्वृक्षादयोऽपि--वृक्षत्वम्, वृक्षतेति।
अस्त्यत्र विशेषः,
उभयवचना ह्येते द्रव्यं चाहुर्गुणं च, यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति।।
(अव्याप्त्यभावोपपादकभाष्यम्)
ःथ्य;मेऽपि तर्हि--उभयवचनाः।
कथम्?
आरभ्यते मतुब्लोपः--गुणवचनेभ्यो मतुपो लुग्भवतीति।
यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति।।
(अव्याप्तिदर्शकं भाष्यम्)

डित्थादिषु तर्हि वेत्यभावाद वृत्तिर्न प्राप्नोति। डित्थत्वम्, डित्थता, डाम्भिट्टता, डाम्भिट्टत्वमिति।
अत्रापि--कश्चित् प्राथमकल्पिको डित्थो डाम्भिट्टश्चेति। तेन कृतां क्रियां गुणं वा यः कश्चित्करोति स उच्यते--डित्थत्वं त एतत्, डाम्भिट्टत्वं त एतत्। एवं डित्थाः कुर्वन्ति, एव डाम्भिट्टाः कुर्वन्ति।
यस्तर्हि प्राथमकल्पिको डित्थो डाम्भिट्टश्च, तस्य वेत्यभावाद् वृत्तिर्न प्राप्नोति।
नैष दोषः।
यथैव तस्य काथंचित्कः प्रयोगः, एवं वृत्तिरपि भविष्यति।।
(5688 सिद्धं तु यस्येति न्यासं परित्यज्य अन्यन्यासे वार्तिकम्।। 6 ।।)
- यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने -
(वार्तिकव्याख्याभाष्यम्)
किमेभिस्त्रिभिर्भावग्रहणैः क्रियते?
एकेन शब्दः प्रतिनिर्दिश्यते द्वाभ्यामर्थः। यद्वा--सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थ ःथ्य;ति, तदभिधाने वा
त्वतलौ भवत ःथ्य;ति वक्तव्यम्।।
नैवमन्यत्र भवति। न हि तेन रक्तं रागात्(4।2।1) ःथ्य;त्यत्र शब्देन रक्ते प्रत्यया उत्पद्यन्ते।
शब्देऽसंभवादर्थेन रक्ते प्रत्यया भविष्यन्ति।।
(न्यासप्रत्याख्यानकवार्तिकावतरणभाष्यम्)
तत्तर्ह्यन्यतरत्कर्तव्यम्। सूत्रं च भिद्यते।।
यथान्यासमेवास्तु।
ननु चोक्तं--तस्य भाव ःथ्य;त्यभिप्रायादिष्वतिप्रसङ्गः ःथ्य;ति।।
(5689 न्यासप्रत्याख्यानकसिद्धान्तवार्तिकम्।। 7 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
अनभिधानादिति। अनभिधानादभिप्रायादिषूत्पत्तिर्न भविष्यति।।
(5690 पूर्वविप्रतिषेधवार्तिकम्।। 8 ।।)
- त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् -
(भाष्यम्) त्वतल्भ्यां नञ्समासो भवति पूर्वविप्रतिषेधेन।
किं प्रयोजनम्?
त्वतलोः स्वरसिद्ध्यर्थम्। त्वतलोः स्वरसिद्धिर्यथा स्यात्।
त्वतलोरवकाशः--भावस्य वचनं प्रतिषेधस्यावचनम्--ब्राह्मणत्वम्, ब्राह्मणता।
नञ्समासस्यावकाशः--प्रतिषेधस्य वचनं भावस्यावचनम्--अब्राह्मणः, अवृषलः।
उभयवचने उभयं प्राप्नोति--अब्राह्मणत्वम्, अब्राह्मणता।
नञ्समासो भवति पूर्वविप्रतिषेधेन।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।।
(पूर्वविप्रतिषेधाभावोपपादकं भाष्यम्)
न वक्तव्यः। नात्र त्वतलौ प्राप्नुतः।
किं कारणम्?
असामर्थ्यात्।
कथमसामर्थ्यम्?
सापेक्षमसमर्थं भवतीति। यावता ब्राह्मणशब्दः प्रतिषेधमपेक्षते।।
नञ्समासोऽपि तर्हि न प्राप्नोति।
किं कारणम्?
असामर्थ्यादेव।
कथमसामर्थ्यम्?
सापेक्षमसमर्थं भवतीति। यावता ब्राह्मणशब्दो भावमपेक्षते।।
प्रधानमत्र तदा ब्राह्मणशब्दः, भवति च प्रधानस्य सापेक्षस्यापि समासः।।
(पूर्वविप्रतिषेधप्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थमिति वक्ष्यति, तत्र व्यवस्थार्थमिदं वक्तव्यम्।।
(5691 नञ्समासविकल्पबोधकवार्तिकम्।। 9 ।।)
- वा छन्दसि -
(भाष्यम्) वा छन्दसि नञ्समासो वक्तव्यः। निर्वीर्यतां वै यजमान आशास्ते अपशुतां। अयोनित्वाय। अशिथिलत्वाय। अगोतामनपत्यताम्।

भवेदिदं युक्तमुदाहरणम्--अयोनित्वाय, अशिथिलत्वायेति।
ःथ्य;दं त्वयुक्तम्--अपशुतामिति। नह्यसौ समासभावमाशास्ते।
किं तर्हि?
उत्तरपदाभावमाशास्ते--न पशोर्भाव ःथ्य;ति।।
(5692 प्रत्ययसमावेशे वार्तिकम्।। 10 ।।)
- नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् -
(भाष्यम्) नञ्समासादन्यो भाववचनो भवति विप्रतिषेधेन।
किं प्रयोजनम्?
स्वरोत्तरपदवृद्ध्यर्थम्।
स्वरार्थमुत्तरपदवृद्ध्यर्थं च।
स्वरार्थं तावत्--अप्रथिमा, --अम्रदिमा।
उत्तरपदवृद्ध्यर्थम्--अशौक्ल्यम्, अकार्ष्ण्यम्।।
-5-1-120- आ च त्वात् (2002)
(चकाराक्षेपप्रयोजनभाष्यम्)
किमर्थश्चकारः?
अनुकर्षणार्थः, त्वतलावनुकृष्येते।
नैतदस्ति प्रयोजनम्, प्रकृतौ त्वतालवनुवर्तिष्येते।।
अत उत्तरं पठति--
(5693 चकारप्रयोजनवार्तिकम्।। 1 ।।)
- आ च त्वादिति चकारकरणमपवादसमावेशार्थम् -
(भाष्यम्) आ च त्वादिति चकारकारणं क्रियते, अपवादसमावेशार्थम्। ःथ्य;मनिच्प्रभृतिभिरपवादैः समावेशो यथा स्यात्।।
(वार्तिकोक्तप्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्। आ त्वात् ःथ्य;त्येवेमनिच्प्रभृतिभिरपबादैः समावेशो भविष्यति।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--आ त्वाद्याः प्रकृतयः--ताभ्यश्च त्वतलौ यथा स्यातां यतश्चोच्येते।।
(प्रयोजनाक्षेपभाष्यम्)
एतदपि नास्ति प्रयोजनम्। आ त्वात् ःथ्य;त्येव आत्वाद्याः प्रकृतयः ताभ्यस्त्वतलौ भविष्यतः, यतश्चोच्येते।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--आ त्वाद्येऽर्थास्तत्र त्वतलौ यथा स्यातां, यत्र चोच्येते।।
(प्रयोजनाक्षेपभाष्यम्)
एतदपि नास्ति प्रयोजनम्। आ त्वात् ःथ्य;त्येव आ त्वाद्येऽर्थास्तत्र त्वतलौ भविष्यतः, यत्र चोच्येते।।
(सिद्धान्तप्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--आ त्वाद्याः प्रकृतयस्ताभ्यश्च त्वतलौ यथा स्याताम्, यस्याश्च प्रकृतेरेतस्मिन् विशेषेऽन्यः प्रत्यय उत्पद्यते।
किं कृतं भवति?
स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं चोदितं तन्न वक्तव्यं भवति।।
-5-1-121- न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः (2003)
(निषेधाधिकरणम्)
(निषेधप्रयोजनाक्षेपभाष्यम्)
कस्यायं प्रतिषेधः?
त्वतलोरित्याह।
नैतदस्ति प्रयोजनम्।
ःथ्य;ष्येते नञ्पूर्वात्तत्पुरुषात्वतलौ--अब्राह्मणत्वम्, अब्राह्मणतेति।
अत उत्तरं पठति--
(5694 निषेध्यकथनवार्तिकम्।। 1 ।।)
- न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः -
(भाष्यम्) न नञ्पूर्वात् ःथ्य;त्युत्तरस्य भावप्रत्ययस्य प्रतिषेधः क्रियते।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्।
परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते, न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते।

तदन्तविधिना प्राप्नोति।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।
यत्र तर्हि तदन्तविधिरस्ति--पत्यन्तपुरोहितादिभ्यो यक्(5।1।128) ःथ्य;ति।
यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्--पत्यन्ताद्यग्भवति, नञ्पूर्वात्तत्पुरुषान्नेति।।
(प्रयोजनभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः--उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्भवतीति।।
(आक्षेपभाष्यम्)
नेष्यते। त्वतलावेवेष्येते। अविद्यमानाः पृथवोऽस्यापृथुः, अपृथोर्भावः--अपृथुत्वम्, अपृथुतेति।
(प्रयोजनभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः--उत्तरो भावप्रत्ययोऽन्यपूर्वात्तत्पुरुषाद्भवतीति।
(आक्षेपभाष्यम्)
नैवेष्यते। त्वतलावेवेष्येते। परमः पृथुः--परमपृथुः, परमपृथोर्भावः--परमपृथुत्वम्, परमपृथुता।
(प्रयोजनभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः--उत्तरो भावप्रत्ययः सापेक्षाद्भवतीति।
किमेतस्य ज्ञापने प्रयोजनम्? नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् ःथ्य;त्युक्तं तदुपपन्नं भवति।।
(प्रयोजनाक्षेपभाष्यम्)
एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति--सर्व एते तद्धिताः सापेक्षाद्भवन्तीति यदयं नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः (6।2।155) ःथ्य;त्याह।।
-5-1-122- पृथ्वादिभ्य ःथ्य;मनिज्वा (2004)
(विकल्पाधिकरणम्)
(वाप्रयोजनजिज्ञासाभाष्यम्)
वावचनं किमर्थम्?
वाक्यमपि यथा स्यात्।
नैतदस्ति प्रयोजनम्। प्रकृता महाविभाषा (4।1।82) तया वाक्यमपि भविष्यति।
ःथ्य;दं तर्हि प्रयोजनम्--त्वतलावपि यथा स्याताम्।
एतदपि नास्ति प्रयोजनम्। आ च त्वात् ःथ्य;त्येतस्माद्यत्नात् त्वतलावपि भविष्यतः।।
अत उत्तरं पठति--
(5695 वाप्रयोजनवार्तिकम्।। 1 ।।)
- पृथ्वादिभ्यो वावचनमण्समावेशार्थम् -
(भाष्यम्) पृथ्वादिभ्यो वावचनं क्रियते, अण्समावेशो यथा स्यात्। पार्थवम्, प्रथिमा।।
-5-1-124- गुणवचनब्राह्मणादिभ्यः कर्मणि च (2006)
(ष्यञ्प्रत्ययाधिकरणम्)
(5696 उपसंख्यानवार्तिकम्।। 1 ।।)
- ब्राह्मणादिषु चातुर्वण्यादीनामुपसंख्यानम् -
(भाष्यम्) ब्राह्मणादिषु चातुर्वण्यादीनामुपसंख्यानं कर्तव्यम्। चातुर्वण्यम्। चातुर्वैद्यम्। चातुराश्रम्यम्।।
(5697 उपसंख्यानवार्तिकम्।। 2 ।।)
- अर्हतो नुम्च -
(भाष्यम्) अर्हतो नुम्च ष्यञ्च वक्तव्यः। अर्हतो भावः--आर्हन्त्यम्। आर्हन्ती।।
-5-1-125- स्तेनाद्यन्नलोपश्च (2007)
(यत्प्रत्ययाधिकरणम्)
(नेति संघातग्रहणसमर्थकं भाष्यम्)
किमिदं नलोपे वर्णग्रहणम्, आहोस्वित् संघातग्रहणम्।
किं चातः?
यदि वर्णग्रहणम्, स्तेयम्, नलोपे कृते अयादेशः प्राप्नोति।
अथ संघातग्रहणम्, अन्त्यस्य लोपः कस्मान्न भवति।
सिद्धोऽन्त्यलोपः यस्य 6।4।148 ःथ्य;त्येव। तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति।।
-5-1-130- हायनान्तयुवादिभ्योऽण् (2012)
(अणोऽधिकरणम्)
(5698 उपसंख्यानवार्तिकम्।। 1 ।।)

- अण्प्रकरणे श्रोत्रियस्य घलोपश्च -

(भाष्यम्) अण्प्रकरणे श्रोत्रियस्योपसंख्यानं कर्तव्यम्, घलोपश्च वक्तव्यः। श्रोत्रियस्य भावः श्रौत्रम्।।

ः थ्य्;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्ञ्चमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्।।

।। पादश्च समाप्तः ।।

-9-9-999-

# महाभाष्यम्/पञ्चमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nmt
< महाभाष्यम् | पञ्चमोऽध्यायः
-5-2-4- विभाषा तिलमाषोमाभङ्गाणुभ्यः (2022)
(यतोऽधिकरणम्)
(5699 पूर्वपक्षिविधिवार्तिकम्।। 1 ।।)
- तिलादिभ्यः खञ्च -
(भाष्यम्) तिलादिभ्यः खञ्चेति वक्तव्यम्। तिल्यम्। तैलीनम्।
किमर्थमिदमुच्यते, न यता मुक्ते धान्यानां भवने क्षेत्रे खञ् (5।2।1) ःथ्य;त्येव सिद्धम्।
न सिध्यति।
किं कारणम्?
(5701 समर्थकवार्तिकम्।। 2 ।।)
- उमाभङ्गयोरधान्यत्वात् -
(भाष्यम्) धान्यानां भवने क्षेत्रे खञ् ःथ्य;त्युच्यते, न चोमाभङ्गे धान्ये।
चमेषु यत्पठ्यते तद्धान्यम्, न चैते तत्र पठ्येते।।
(खञ्ग्रहणाक्षेपभाष्यम्)
तत्तर्हि कञ्ग्रहणं कर्तव्यम्?
न कर्तव्यम्।
प्रकृतमनुवर्तते।
क्व प्रकृतम्?
धान्यायां भवने क्षेत्रे खञ्िति।।
(अनुवर्तनाक्षेपभाष्यम्)
यदि तदनुवर्तते, व्रीहिशाल्योर्ढक् (2) यवयवकषष्टिकाद्यत् (3) ःथ्य;ति खञ्चेति खञपि प्राप्नोति।।
(आक्षेपपरिहारभाष्यम्)
सम्बन्धमनुवर्तिष्यते--धान्यानां भवने क्षेत्रे खञ्।
व्रीहिशाल्योर्ढग्भवति, धान्यानां भवने क्षेत्रे खञ्।
यवयवकषष्टिकाद्यद्भवति, धान्यानां भवने क्षेत्रे खञ्भवति।
विभाषातिलमाषोमाभङ्गाणुभ्यः, भवने क्षेत्रे खञ्ग्रहणमनुवर्तते। धान्यानामिति निवृत्तम्।।
(परिहारान्तरभाष्यम्)
अथ वा मण्डूकप्लुतयोऽधिकाराः।
यथा--मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वदधिकाराः।।
(परिहारान्तरभाष्यम्)
अथ वा अन्यवचनाच्चकाराकरणात् प्रकृतस्यापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादः। अन्यस्य प्रत्ययस्य वचनाच्चकारस्य चानुकषणार्थस्याकरणात्प्रकृतस्य खञो ठग्यतौ बाधकौ भविष्यतः, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति।।
(परिहारान्तरभाष्यम्)
अथ वा एतज्ज्ञापयति--अनुवर्तन्ते नाम विधयो न चानुवर्तनादेव भवन्ति।
किं तर्हि?
यत्नाद्भवन्ति।।
(सिद्धान्तभाष्यम्)
अथ वा यता मुक्ते धान्यानां भवने क्षेत्रे खञ् ःथ्य;त्येव सिद्धम्।
ननु चोक्तं न सिध्यति।
किं कारणम्?
उमाभङ्गयोरधान्यत्वादिति।
नैष दोषः।
धिनोतेर्धान्यम्, एते चापि धिनुतः।
अथ वा शणसप्तदशानि धान्यानि।।
-5-2-6- यथामुखसंमुखस्य दर्शनः खः (2024)

(खप्रत्ययाधिकरणम्)
(निपातनाभिप्रायशङ्काभाष्यम्)
सममुखेति किं निपात्यते?
(5702 निपातनार्थबोधकवार्तिकम्।। 1 ।।)
- संमुखेति समस्यान्तलोपः -
(भाष्यम्) संमुखेति समस्यान्तलोपो निपात्यते। सममुखस्य दर्शनः--संमुखीनः।।
-5-2-9- अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु (2027)
(अयानयपदार्थबोधकं भाष्यम्)
अयानयं नेय ाःथ्य;त्युच्यते, तत्र न ज्ञायते कः--अयः, कः--अनय ाःथ्य;ति।।
अयः प्रदक्षिणम्। अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगमिनां शाराणां यस्मिन् परैः पदानामसमावेशः सः--अयानयः। अयानयं नेयः--अयानयीनः, शारः।।
-5-2-10- परोवरपरम्परपुत्रपौत्रमनुभवति (2028)
(निपातनजिज्ञासाभाष्यम्)
परोवरेति किं निपात्यते?
(5503 निपातनार्थबोधकवार्तिकम्।। 1 ।।)
- परोवरे परस्योत्ववचनम् -
(भाष्यम्) परोवरेति परस्यौत्वं निपात्यते।।
(सूत्रनिर्देशोपपादकं भाष्यम्)
यद्येवं परस्यौत्ववचनमिति प्राप्नोति।
शकन्धुन्यायेन निर्देशः।
अथ वा नैवं विज्ञायते परस्यौत्वं निपात्यत ाःथ्य;ति।
कथं तर्हि?
परस्य शब्दरूपस्यादेरुत्वं निपात्यत ाःथ्य;ति। परांश्चावरांश्चानुभवति--परोवरीणः।
(निपातनजिज्ञासाभाष्यम्)
अथ परम्परेति किं निपात्यते?
(5704 निपातनार्थबोधकवार्तिकम्।। 2 ।।)
- परपरतराणां परम्परभावः -
(भाष्यम्) परपरतराणां परम्परभावो निपात्यते। परांश्च परतरांश्चानुभवति--परम्परीणः।।
-5-2-12- समां समां विजायते (2030)
(आक्षेपभाष्यम्)
ाःथ्य;ह --समांसमीना गौः सुपो धातुप्रातिपदिकयोः(2-4-71) ाःथ्य;ति सुब्लुक् प्राप्नोति।
।। समां समां विजायते ाःथ्य;ति यलोपवचनादलुग्विज्ञानम्।।
समां समां विजायते ाःथ्य;ति यलोपवचनादलुग्विज्ञानं भविष्यति। यदयं यलोपं शास्ति तज्ज्ञापयत्याचार्यः ---नात्र लुग्भवतीति।
(5706 प्रत्याक्षेपवार्तिकम्।।2।।)
- समां समां विजायत ाःथ्य;ति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वचनम्।।
समां समां विजायत ाःथ्य;ति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वक्तव्यः।
(5707 समाधानवार्तिकम्।।3।।)
सिद्धं तु पूर्वपदस्य यलोपवचनात् ।।
सिद्धमेतत् ।
कथम्? पूर्वपदस्य यलोपो वक्तव्यः।
(5708) पक्षान्तरेण समाधानवार्तिकम्।।4।।)
अनुत्पत्तावुत्तरपदस्य वाचनम्।।
अनुत्पत्तौ पूर्वपदस्य उत्तरपदस्य च यलोपो वा वक्तव्यः।
समां समां विजायते, समायां समायां विजायत ाःथ्य;ति।
-5-2-14- आगवीनः (2032)
(निपातनजिज्ञासाभाष्यम्)
आगवीन ाःथ्य;ति किं निपात्यते?
(5709 निपातनार्थबोधकवार्तिकम्।। 1 ।।)
- गोराङ्पूर्वादा तस्य गोः प्रतिदानात्कारिणि खः -

(भाष्यम्) गोराङ्पूर्वात् आ तस्य गोः प्रतिदानात् कारिणि खो निपात्यते। आ तस्य गोः प्रतिदानात्कर्मकारी--आगवीनः कर्मकरः।।
-5-2-20- शालीनकौपीने अधृष्टाकार्ययोः (2038)
(शालीनकौपीनार्थबोधकभाष्यम्)
किं यः शालायामधृष्टः स शालीनः, कूपे वा यदकार्यं तत्कौपीनम्।
नेत्याह। उत्तरपदलोपोऽत्र द्रष्टव्यः। शालाप्रवेशनमर्हत्यधृष्टः सः--शालीनः। कूपावतरणमर्हत्यकार्यं तत्कौपीनम्।।
-5-2-21- व्रातेन जीवति (2039)
(व्रातपदार्थबोधकभाष्यम्)
व्रातेन जीवतीत्युच्यते,किं व्रातं नाम? नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः,तेषां कर्म-व्रातम्। व्रातकर्मणा जीवतीति--व्रातीनः।
-5-2-23- हैयङ्गवीनं संज्ञायाम् (2040)
(निपातनार्थजिज्ञासाभाष्यम्)
हैयङ्गवीनम् ःथ्य;ति किं निपात्यते?
(5910 निपातनार्थबोधकवार्तिकम्।। 1 ।।)
- ह्योगोदोहस्य हियङ्ग्वादेशः संज्ञायां तस्य विकारे -
(भाष्यम्) ह्योगोदोहस्य हियङ्ग्वादेशो निपात्यते संज्ञायां विषये तस्य विकारः ःथ्य;त्येतस्मिन्नर्थे। ह्योगोदोहस्य विकारः -- हैयङ्गवीनं घृतम्।
संज्ञायामिति किमर्थम्?
ह्योगोदोहस्य विकार--उदश्वित्--अत्र मा भूदिति।।
-5-2-25- पक्षात्तिः (2043)
(तिप्रत्ययाधिकरणम्)
(एकदेशिन उपसंख्यानभाष्यम्)
मूले ःथ्य;ति वक्तव्यम्। पक्षस्य मूलं पक्षतिः। तत्तर्हि वक्तव्यम्।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
न वक्तव्यम्। मूले ःथ्य;ति वर्तते।
क्व प्रकृतम्?
तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ (5।2।24) ःथ्य;ति।
यदि तदनुवर्तते, पाकेऽपि प्राप्नोति।
मूल ःथ्य;त्यनुवर्तते, पाक ःथ्य;ति निवृत्तम्।
कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तेत, एकदेशो वा निवर्तेत।
एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति।
तद्यथा--संखायव्ययादेर्ङीप् (4।1।26) दामहायनान्ताच्च (27) संख्यादेरित्यनुवर्तते, अव्ययादेरिति निवृत्तम्।।
-5-2-27- विनञ्भ्यां नानाञ्नौ न सह (2045)
(नानाञ्प्रत्ययाधिकरणम्)
(प्रत्ययार्थनिर्णायकभाष्यम्)
ःथ्य;ह नानेति सहार्थो गम्येत, द्वौ हि प्रतिषेधौ प्रकृतमर्थं गमयतः। न न सह--सहैवेति।
नैष दोषः।
नायं प्रत्ययार्थः।
किं तर्हि?
प्रकृतिविशेषणमेतत्। वि--नञ् ःथ्य;त्येताभ्यामसहवाचिभ्यां नानाञ्नौ भवतः।
कस्मिन्नर्थे?
स्वार्थे।।
-5-2-28- वेः शालच्छङ्कटचौ (2046)
(शालच्शङ्कटच्प्रत्ययाधिकरणम्)
(प्रत्ययार्थनिर्णयभाष्यम्)
कस्मिन्नर्थे शालजादयो भवन्ति?
न सह ःथ्य;त्यनुवर्तते।
भवेत्सिद्धम्--विशाले शृङ्गे, विशङ्कटे श्रृङ्गे ःथ्य;ति।।
(आक्षेपभाष्यम्)
ःथ्य;ह खलु संकटम् ःथ्य;ति संगतार्थो गम्यते, प्रकटमिति प्रगतार्थो गम्यते, उत्कटमिति उद्गतार्थो गम्यते।।
(समाधानभाष्यम्)
एवं तर्हि साधने शालजादयो भवन्ति।

किं वक्तव्यमेतत्?
न हि।
कथमनुच्यमानं गंस्यते?
उपसर्गेभ्य ःथ्य;मे विधीयन्ते, उपसर्गाश्च पुनरेवमात्मकाः--यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः, यत्र हि न प्रयुज्यते ससाधनां तत्र क्रियामाहुः। त एते उपसर्गेभ्यो विधीयमानाः ससाधनायां क्रियायां भविष्यन्ति।।
(आक्षेपभाष्यम्)
एवमपि भवेत्सिद्धं--विशाले श्रृङ्गे ःथ्य;ति।
ःथ्य;दं तु न सिध्यति--विशालः, विशङ्कटः--ःथ्य;ति।।
(समाधानभाष्यम्)
एतदपि सिद्धम्।
कथम्?
अकारो मत्वर्थीयः। विशाले अस्य स्तो विशालः। विशङ्कटे अस्य स्तो विशङ्कट ःथ्य;ति।।
-5-2-29- संप्रोदश्च कटच् (2042)
(कटच्प्रत्ययाधिकरणम्)
(5711 उपसंख्यानवार्तिकम्।। 1 ।।)
- कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानम् -
(भाष्यम्) कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्यभिधेये उपसंख्यानं कर्तव्यम्। अलाबूकटः, तिलकटः, उमाकटः।।
(5712 उपसंख्यानवार्तिकम्।। 2 ।।)
- भङ्गायाश्च -
(भाष्यम्) भङ्गायाश्चेति वक्तव्यम्। भङ्गाकटः।।
(5713 उपसंख्यानवार्तिकम्।। 3 ।।)
- गोष्ठादयः स्थानादिषु पशुनामादिभ्यः -
(भाष्यम्) गोष्ठादयः प्रत्ययाः स्थानादिष्वर्थेषु पशुनामादिभ्यो वक्तव्याः। गवां स्थानं--गोगोष्ठम्। अविगोष्ठम्।
संघाते कटच्च वक्तव्यः।
अविकटः उष्ट्रकटः।
विस्तारे पटच्च वक्तव्यः।
अविपटः। उष्ट्रपटः।
गोयुगशब्दश्च प्रत्ययो वक्तव्यः।
उष्ट्रगोयुगम्। खरगोयुगम्।
तैलशब्दश्च प्रत्ययो वक्तव्यः।
ःथ्य;ङ्गुदतैलम्। सर्षपतैलम्।
शाकटशब्दश्च प्रत्ययो वक्तव्यः।
ःथ्य;क्षुशाकटम्। मूलशाकटम्।
शाकिनशब्दश्च प्रत्ययो वक्तव्यः।
ःथ्य;क्षुशाकिनम्। मूलशाकिनम्।।
(5714 गोष्ठादयः स्थानादिष्वित्यादेः प्रत्याख्यानवार्तिकम्।। 4 ।।)
- उपमानाद्वा सिद्धम् -
(भाष्यम्) उपमानाद्वा सिद्धमेतत्। गवां स्थानं--गोष्ठम्। यथा गवां तद्वदुष्ट्राणाम्।
कटज् वक्तव्य ःथ्य;ति। यथा नानाद्रव्याणां संघातः कटः, एवमवयः संहताः--अविकटः।
पटच्च वक्तव्य ःथ्य;ति। प्रस्तीर्णः पटो यथा, एवमवयः प्रस्तीर्णाः--अविपटः।
गोयुगशब्दश्च प्रत्ययो वक्तव्य ःथ्य;ति। गोर्युगंगोयुगम्। यथा गोस्तद्वदुष्ट्रस्य--उष्ट्रगोयुगम्।
तैलशब्दश्च प्रत्ययो वक्त्वय ःथ्य;ति। प्रकृत्यन्तरं तैलशब्दो विकारे वर्तते, एवं च कृत्वा तिलतैलमित्यपि सिद्धं भवति।
शाकटशब्दश्च प्रत्ययो वक्तव्य एव।
शाकिनशब्दश्च प्रत्ययो वक्तव्य एव।।
-5-2-33- ःथ्य;नच्पिटच्चिकचिच (2046)
(ःथ्य;नच्पिटजधिकरणम्)
(5715 उपसंख्यानवार्तिकम्।। 1 ।।)
- ःथ्य;नच्पिटच्काः चिकचिचिकादेशाश्च -
(भाष्यम्) ःथ्य;नच्पिटच्काः प्रत्ययाः वक्तव्याः, चिक चि चिक्-ःथ्य;त्येते च प्रकृत्यादेशा वक्तव्याः। चिकिनः। चिपिटः। चिक्कः।।

(5716 उपसंख्यानवार्तिकम्।। 2 ।।)
- क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी -
(भाष्यम्) क्लिन्नस्य चिल्पिल् ःथ्य;त्येतौ प्रकृत्यादेशौ वक्तव्यौ लश्च प्रत्ययः, अस्य चक्षुषी ःथ्य;त्यस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी--चिल्लः, पिल्लः।
चुल् च वक्तव्यः। चुल्लः।
यद्यस्येत्युच्यते, चिल्ले चक्षुषी पिल्ले चक्षुषी--ःथ्य;ति न सिध्यति तस्मान्नार्थोऽस्य ग्रहणेन।
कथं चिल्लः पिल्ल ःथ्य;ति?
अकारो मत्वर्थीयः। चिल्ले अस्य स्तः--चिल्लः। पिल्ले अस्य स्तः--पिल्ल ःथ्य;ति।।
-5-2-35- पुष्करादिभ्यो देशे (2153)
(5792 उपसंख्यानवार्तिकम्।। 1 ।।)
- ःथ्य;नि प्रकारणे बलाद्बाहूरूपूर्वपदादुपसंख्यानम् -
(भाष्यम्) ःथ्य;नि प्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानं कर्तव्यम्। बाहुबली। ःढ़्य;रुबली।।
(5793 उपसंख्यानवार्तिकम्।। 2 ।।)
- सर्वादेश्च -
(भाष्यम्) सर्वादेश्चेनिर्वक्तव्यः। सर्वधनी। सर्वबीजी। सर्वकेशी।।
(5794 उपसंख्यानवार्तिकम्।। 3 ।।)
- अर्थाच्चासंनिहिते -
(भाष्यम्) अर्थाच्चासन्निहिते ःथ्य;निर्वक्तव्यः। अर्थी।।
असंनिहित ःथ्य;ति किमर्थम्?
अर्थवान्।।
(5795 उपसंख्यानवार्तिकम्।। 4 ।।)
- तदन्ताच्च -
(भाष्यम्) तदन्ताच्चेति वक्तव्यम्। धान्यार्थी। हिरण्यार्थी।।
(एकदेशिनः तदन्ताच्च ःथ्य;ति वार्तिकाक्षेपसमाधानभाष्यम्)
किमर्थं तदन्तादित्युच्यते न तदन्तविधिना सिद्धम्?।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।
एवं तर्हि--ःथ्य;नन्तेन सह समासो भविष्यति। धान्येनार्थी--धान्यार्थी।
स हि समासो न प्राप्नोति।।
यदि पुनरयमर्थयतेर्णिनिः स्यात्, एवमपि क्रियामेव कुर्वाणे स्यात्। तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽभिप्रायेण गम्यते--अर्थी--अयमनेनेति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि अयमर्थशब्दोऽस्त्येव द्रव्यपदार्थकः।
तद्यथा--अर्थवानयं देश ःथ्य;त्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते।
अस्ति क्रियापदार्थको भावसाधनः--अर्थनमर्थ ःथ्य;ति।
तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम्। एवं च कृत्वाऽर्थिकप्रत्यर्थिकावपि सिद्धौ भवतः।।
ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्।।
।। पादश्च समाप्तः।।
-5-2-37- प्रमाणे द्वयसज्दघ्नञ्मात्रचः (2055)
(द्वजसजादिप्रत्ययाधिकरणम्)
(प्रमाणे ःथ्य;ति प्रकृत्यर्थविशेषणं प्रत्ययार्थविशेषणं वेति निर्धारणे श्लोकवार्तिकम्)
प्रमाण ःथ्य;ति किमयं प्रत्ययार्थः?
प्रमाणं प्रत्ययार्थो न ।
प्रमाणे ःथ्य;ति नायं प्रत्ययार्थः।
क्व तर्हि प्रत्यया भवन्ति?
तद्वति।
कुत एतत्?
अस्येत्यनुवर्तनात्।
क्व प्रकृतम्?
तदस्य संजातं, तारकादिभ्य ःथ्य;तज् (5।2।36) ःथ्य;ति।।

(प्रत्ययार्थनिर्धारकं श्लोकवार्तिकम्)
प्रथमश्च द्वितीयश्च ऽ:ढ्ढ्य;ध्र्वमाने मतौ मम।।
ऽ:ढ्ढ्य;रुद्वयसम्। ऽ:ढ्ढ्य;रुदघ्नम्।
प्रमाणे लः।
प्रमाणे लो वक्तव्यः। शमः, दिष्टिः, वितस्तिः।
द्विगोर्नित्यम्।
द्विगोर्नित्यं लो वक्तव्यः। द्विशमम्, त्रिशमम्। द्विदिष्टिः, त्रिदिष्टिः। द्विवितस्तिः, त्रिवितस्तिः।
किमर्थमिदमुच्यते?
संशये श्राविणं वक्ष्यति तस्यायं पुरस्तादपकर्षः।
डट् स्तोमे।
डट् स्तोमे वक्तव्यः। पञ्चदशः स्तोमः।
शच्शनोर्डिनिः।
शच्शनोर्डिनिर्वक्तव्यः। त्रिंशिनो मासाः। पञ्चदशिनोऽर्धमासाः।
विंशतेश्चेति वक्तव्यम्। विंशिनोऽङ्गिरसः।।
(संशये मात्रच्प्रत्ययविधायकं श्लोकवार्तिकम्)
प्रमाणपरिमाणाभ्यां
संख्यायाश्चापि संशये।।
मात्रज्वक्तव्यः। शममात्रम्। दिष्टिमात्रम्। कुडवमात्रम्। पञ्चमात्राः। दशमात्राः।।
(5717 स्वार्थे प्रत्ययविधिवार्तिकम्।। 1 ।।)
- वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् -
(भाष्यम्) वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलं वक्तव्यौ। तावदेव--तावद्द्वयसम्, तावन्मात्रम्। यावदेव--यावद्द्वयसम्, यावन्मात्रम्।।
प्रमाणं प्रत्ययार्थो न
तद्वत्यस्येति वर्तनात्।
प्रथमश्च द्वितीयश्च
ऽ:ढ्ढ्य;ध्र्वमाने मतौ मम।।
प्रमाणे लो द्विगोर्नित्यं
डट्स्तोमे शच्शनोर्डिनिः।
प्रमाणपरिमाणाभ्यां
संख्यायाश्चापि संशये।।
-5-2-39- यत्तदेतेभ्यः परिमाणे वतुप् (2057)
(वतुप्प्रत्ययाधिकरणम्)
(परिमाणग्रहणाक्षेपभाष्यम्)
किमर्थं परिमाण ऽ:थ्द्य;त्युच्यते, न प्रमाण ऽ:थ्द्य;ति वर्तते?
(एकदेशिनः प्रयोजनभाष्यम्)
एवं तर्हि सिद्धे सति यत्परिमाणग्रहणं करोति तज्ज्ञापयत्याचार्यः--अन्यत् प्रमाणम्, अन्यत्परिमाणमिति।।
(ज्ञापकासंभवप्रदर्शकं श्लोकभाष्यम्)
डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते।
नैतज् ज्ञापकसाध्यमन्यत्प्रमाणमन्यत्परिमाणमिति। उक्तोऽत्र विशेषः।।
मात्राद्यप्रतिघाताय।
एवं च कृत्वा मात्रादीनां प्रतिघातो न भवति।।
भावः सिद्धश्च डावतोः।
डावत्वन्ताच्च मात्रजादीनां भावः सिद्धो भवति।।
(5718 सादृश्ये वतुब्विधिवार्तिकम्।। 1 ।।)
- वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् -
(भाष्यम्) वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानं कर्तव्यम्। न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। त्वावतः पुरुवसो। यज्ञं विप्रस्य मावतः। त्वत्सदृशस्य मत्सदृशस्येति।।
डावतावर्थवैशेष्या-
न्निर्देशः पृथगुच्यते।
मात्राद्यप्रतिघाताय

भावः सिद्धश्च डावतोः।।
--5-2-40- किमिदंभ्यां वो घः (2058)
(किमिदंभ्यां वतुप्ज्ञापकभाष्यम्)
केन विहितस्य किमिदंभ्यां वतुपो वो घत्वमुच्यते?
एतदेव ज्ञापयत्याचार्यः--भवति किमिदंभ्यां वतुप् ःथ्य;ति, यदयं किमिदंभ्यामुत्तरस्य वतुपो वो घत्वं शास्ति।।
(योगविभागेन वतुप्साधकभाष्यम्)
अथवा योगविभागः करिष्यते--
किमिदंभ्याम्।
वतुब् भवति। ततः--
वो घः। ःथ्य;ति।
वश्चास्य घो भवतीति।।
-5-2-41- किमः संख्यापरिमाणे डति च (2059)
(पूर्वपक्षिण उपसंख्यानभाष्यम्)
बहुष्विति वक्तव्यम्। ःथ्य;ह मा भूत्--कियान्, कियन्तौ।
तत्तर्हि वक्तव्यम्।।
(सिद्धान्तभाष्यम्)
न वक्तव्यम्। किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नश्चानिर्ज्ञाते, अनिर्ज्ञातं च बहुषु। द्व्येकयोः पुनर्निर्ज्ञातम्। निर्ज्ञातत्वाद् द्वयेकयोः परिप्रश्नो न भवति। परिप्रश्नाभावात् किमेव तावन्नास्ति कुतः प्रत्ययः।।
-5-2-42- संख्याया अवयवे तयप् (2060)
(तयप्प्रत्ययाधिकरणम्)
(संख्याशब्देन कस्याग्रहणमितिनिर्णयभाष्यम्)
ःथ्य;ह कस्मान्न भवति--बहवोऽवयवा अस्याः संख्याया ःथ्य;ति?
अवयवे या संख्या ःथ्य;त्युच्यते, न च काचित्संख्याऽस्ति यस्या बहुशब्दोऽवयवः स्यात्।
ननु चेयमस्ति--संख्येत्येव।
नैषा संख्या, संज्ञैषा।।
(5719 अवयविनि तयब्विधिवार्तिकम्।। 1 ।।)
- अवयवविधानेऽवयविनि प्रत्ययः -
(भाष्यम्) अवयवविधानेऽवयविनि प्रत्ययो भवतीति वक्तव्यम्।
ःथ्य;ह मा भूत्--पञ्चावयवाः, दशावयवाः--ःथ्य;ति।।
(आक्षेपपूर्वकं वार्तिकान्यथासिद्धिसाधकं भाष्यम्)
अथ अवयविनीत्युच्यमानेऽवयवस्वामिनि कस्मान्न भवति--पञ्च पश्चवयवा देवदत्तस्येति?
अवयवशब्दोऽयं गुणशब्दः, अस्येति च वर्तते। तेन यं प्रत्यवयवो गुणस्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम्।
कं च प्रत्यवयवो गुणः?
समुदायम्।।
यद्येवमवयविनीत्यपि न वक्तव्यम्।
अवयवेषु कस्मान्न भवति?
अस्येति वर्तते।।
-5-2-44- उभादुदात्तो नित्यम् (1062)
(उदात्तपदाक्षेपप्रयोजनभाष्यम्)
किमर्थमुदात्त ःथ्य;त्युच्यते?
उदात्तो यथा स्यात्।
नैतदस्ति प्रयोजनम्, प्रत्ययस्वरेणाप्येष स्वरः सिद्धः।
न सिध्यति। चितोऽन्त उदात्तो भवतीति अन्तोदात्तत्वं प्रसज्येत।
(उदात्तपदसार्मथ्यादिष्टार्थबोधकभाष्यम्)
अथ उदात्त ःथ्य;त्युच्यमाने कुत एतत्--आदेरुदात्तत्वं भविष्यति न पुनरन्तस्येति।
उदात्तवचनसार्मथ्यात् यस्याप्राप्तः स्वरस्तस्य भविष्यति।
कस्य चाप्राप्तः?
आदेः।
अन्तस्य पुनश्चित्स्वरेणैव सिद्धम्।।

-5-2-45- तदस्मिन्नधिकमिति दशान्ताड्डः (2063)
(डप्रत्ययाधिकरणम्)
(अधिकपदाक्षेपसमाधानभाष्यम्)
ः॑थ्य;ह कस्मान्न भवति--एकादश माषा अधिका अस्मिन् कार्षापणशत ः॑थ्य;ति?
अधिके समानजातौ
समानजातावधिक ः॑थ्य;ष्यते।
अथेह कस्मान्न भवति--एकादश कार्षापणा अधिका अस्यां कार्षापणत्रिंशति--ः॑थ्य;ति?
ः॑थ्य;ष्टं शतसहस्रयोः।
शतसहस्रयोरधिक ः॑थ्य;ष्यते।
अथेहैकादशं शतसहस्रमिति कस्याधिक्ये भवितव्यम्?
यस्य संख्या तदाधिक्ये
डः कर्तव्यो मतो मम ।।
यदि तावच्छतानि संख्यायन्ते शताधिक्ये भवितव्यम्, अथ सहस्राणि संख्यायन्ते सहस्राधिक्ये भवितव्यम्।।
(5720 ः॑थ्य;ष्टसिद्धौ सूत्रस्यासामर्थ्यबोधकवार्तिकम्।। 1 ।।)
- डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः -
(भाष्यम्) डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः। अगमको निर्देशोऽनिर्देशः। नह्येकादशानां शतमधिकरणम्।।
(5721 अन्यथानिर्देशेन समाधानवार्तिकम्।। 2 ।।)
- सिद्धं तु पञ्चमीनिर्देशात् -
(भाष्यम्) सिद्धमेतत्।
कथम्? पञ्चमीनिर्देशः कर्तव्यः--तदस्मादधिकमिति।।
(वार्तिकद्वयान्यथासिद्धिसाधकभाष्यम्)
स तर्हि पञ्चमीनिर्देशः कर्तव्यः।
न कर्तव्यः। यद्यपि तावद्वैषयिके व्यापके वाऽधिकरणत्वे संभवो नास्ति, औपश्लेषिकमधिकरणं विज्ञास्यते--एकादश कार्षापणा उपश्लिष्टा अस्मिञ्छते--एकादशं शतम्।।
अधिके समानजाताविष्टं शतसहस्रयोः.
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ।। 1 ।।
-5-2-46- शदन्तविंशतेश्च (2064)
(908 विधिसूत्रम् ।। 5 । 2 । 1 आ. 22)
(अन्तग्रहणाक्षेपभाष्यम्)
किमर्थं शद्ग्रहणेऽन्तग्रहणम्?
(5722 अन्तग्रहणप्रयोजनवार्तिकम्।। 1 ।।)
- शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् -
(भाष्यम्) शद्ग्रहणेऽन्तग्रहणं क्रियते प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति ः॑थ्य;ह न प्राप्नोति--एकत्रिंशं शतम्। ः॑थ्य;ष्यते चात्रापि स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति-अन्तग्रहणमेवमर्थमिदमुच्यते।
अस्ति प्रयोजनमेतम्।
किं तर्हीति?
(5723 उपसंख्यानवार्तिकम्।। 2 ।।)
- संख्याग्रहणं च -
(भाष्यम्) संख्याग्रहणं च कर्तव्यम्। ः॑थ्य;ह मा भूत्--गौत्रिंशदधिका अस्मिञ् शत ः॑थ्य;ति।।
(5724 उपसंख्यानवार्तिकम्।। 3 ।।)
- विंशतेश्च -
(भाष्यम्) विंशतेश्चान्तग्रहणं कर्तव्यम्। ः॑थ्य;हापि यथा स्यात्--एकविंशं शतम्।
चकारात्संख्याग्रहणं च कर्तव्यम्। ः॑थ्य;ह मा भूत्-गोविंशतिरधिका अस्मिञ्शत ः॑थ्य;ति।।
-5-2-47- संख्याया गुणस्य निमाने मयट् (2065)
(मयट्प्रत्ययाधिकरणम्)
(5725 उपसंख्यानवार्तिकम्।। 1 ।।)
- निमाने गुणिनि -
(भाष्यम्) निमाने गुणिनीति वक्तव्यम्।
किं प्रयोजनम्?

गुणेषु मा भूत्।।
(5726 उपसंख्यानवार्तिकम्।। 2 ।।)
- भूयसः -
(भाष्यम्) भूयस ःथ्य;ति च वक्तव्यम्।
किं प्रयोजनम्?
भूयसो वाचिकायाः संख्याया उत्पत्तिर्यथा स्यात्, अल्पीयसो वाचिकायाः संख्याया उत्पत्तिर्मा भूदिति।।
(5727 उपसंख्यानवार्तिकम्।। 3 ।।)
- एकोऽन्यतरः -
(भाष्यम्) एकश्चेदन्यतरो भवतीति वक्तव्यम्। ःथ्य;ह मा भूत्-द्वौ यवानां त्रय उदश्वित ःथ्य;ति।।
(5728 उपसंख्यानवार्तिकम्।। 4 ।।)
- समानानाम् -
(भाष्यम्) समानानां चेति वक्तव्यम्। ःथ्य;ह मा भूत्--एको यवानामध्यर्धमुदश्वित ःथ्य;ति।
तत्तर्हीदं बहु वक्तव्यम्।
न वक्तव्यम्।
(प्रथमवार्तिकप्रत्याख्यानभाष्यम्)
यत्तावदुच्यते--गुणिनीति वक्तव्यमिति,
न वक्तव्यम्।
गुणेषु कस्मान्न भवति?
अस्येति वर्तते।।
(द्वितीयवार्तिकप्रत्याख्यानभाष्यम्)
यदुक्तं--भूयस ःथ्य;ति वक्तव्यम् ःथ्य;ति,
न वक्तव्यम्।
अल्पीयसो वाचिकायाः संख्याया उत्पत्तिः कस्मान्न भवति?
अनभिधानात्।।
(तृतीयवार्तिकप्रत्याख्यानभाष्यम्)
यदुक्तम्--कश्चेदन्यतरो भवतीति वक्तव्यम् ःथ्य;ति,
न वक्तव्यम्।
कस्मान्न भवति--द्वौ यवानां त्रय उदश्वित ःथ्य;ति?
तन्त्रं विभक्तिनिर्देशः।।
(चतुर्थवार्तिकप्रत्याख्यानभाष्यम्)
यदप्युच्यते--समानानामिति वक्तव्यमिति,
न वक्तव्यम्।
कस्मान्न भवति--एको यवानामध्यर्द्धमुदश्वित ःथ्य;ति?
अनभिधानात्।।
(5729 अतिव्याप्तिदर्शकं वार्तिकम्।। 5 ।।)
- निमेये चापि दृश्यते -
(भाष्यम्) निमेये चापि प्रत्ययो दृश्यते--द्विमया यवाः। त्रिमयाः।
(निमाननिमेयपदार्थबोधकं भाष्यम्)
किं पुनरिह निमानम्, किं निमेयम्?
यावता उभयं त्यज्यते।
सत्यमेवमेतत्। क्वचित्तुकाचित्प्रसृततरा गतिर्भवति। तद्यथा--समाने त्यागे धान्यं विक्रीणीते यवान् विक्रीणीते ःथ्य;त्युच्यते, न कश्चिदाह कार्षापणं विक्रीणीत ःथ्य;ति।
अथवा येनाधिगम्यते तन्निमानम्, यदधिगम्यते तन्निमेयम्।।
-5-2-48- तस्य पूरणे डट् (2066)
(डटोऽधिकरणम्)
(5730 अतिप्रसङ्गापादकवार्तिकम्।। 1 ।।)
- तस्य पूरण ःथ्य;त्यतिप्रसङ्गः -
(भाष्यम्) तस्य पूरण ःथ्य;त्यतिप्रसङ्गो भवति। ःथ्य;हापि प्राप्नोति--पञ्चानामुष्ट्रिकाणां पूरणो घट ःथ्य;ति।।
(5731 अतिप्रसङ्गनिरासवार्तिकम्।। 2 ।।)

- सिद्धं तु संख्यापूरण ःथ्य;ति वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
संख्यापूरण ःथ्य;ति वक्तव्यम्।
एवमपि घटे प्राप्नोति, संख्येयं ह्यसावद्भिः पूरयति।
संख्यापूरण ःथ्य;ति ब्रूमः, न ब्रूमः संख्येयपूरण ःथ्य;ति।।
(5732 प्रकारान्तरेणातिप्रसङ्गनिरासवार्तिकम्।। 3 ।।)
- यस्य वा भावादन्यसंख्यत्वं तत्र -
(भाष्यम्) अथ वा यस्य भावादन्या संख्या प्रवर्तते तत्रेति वक्तव्यम्। एवमपि द्वितीयेऽध्याये अष्टम ःथ्य;ति प्राप्नोति, सर्वेषां हि तेषां भावात्संख्या प्रवर्तते।
चरमोपजाते पूर्वस्मिंश्चानपगते ःथ्य;ति वक्तव्यम्।
एवमपि एकादशीद्वादश्यौ सौविष्टकृती, ःथ्य;दं द्वितीयमिदं तृतीयं, दश दशमानि--ःथ्य;ति न सिध्यति, सूत्रं च भिद्यते।।
(वार्तिकप्रत्याख्यानभाष्यम्)
यथान्यासमेवास्तु। ननु चोक्तं तस्य पूरण ःथ्य;त्यतिप्रसङ्गः ःथ्य;ति।
परिहृतमेतत्--सिद्धं तु संख्यापूरण ःथ्य;ति वचनादिति।
तत्तर्हि संख्याग्रहणं कर्तव्यम्?
न कर्तव्यम्। प्रकृतमनुवर्तते।
क्व प्रकृतम्?
संख्याया गुणस्य निमाने मयट् (47) ःथ्य;ति।
एवं तर्हि नेयं वृत्तिरुपालभ्यते।
किं तर्हि?
वृत्तिस्थानमुपालभ्यते।।
वृत्तिरेवात्र न प्राप्नोति।
किं कारणम्?
प्रत्ययार्थाभावात्।
नैष दोषः।
वचनात्स्वार्थिको भविष्यति।
अथवा पूर्वस्याः संख्यायाः परापेक्षयोत्पत्तिर्वक्तव्या। उत्तरा च संख्या आदेशो वक्तव्यः।।
अथवा न्यूनेऽयं कृत्स्नशब्दो द्रष्टव्यः। चतुर्षु पञ्चशब्दः।।
अथवा सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्ते।
यद्येवं द्वितीयेऽध्याये अष्टम ःथ्य;ति प्राप्नोति।
भवत्येव।।
(वृत्त्युंपालम्भमारभ्यार्थस्य संग्रहश्लोकाः)
प्रकृत्यर्थाद्बहिः सर्वा वृत्तिः प्रायेण लक्ष्यते।
पूरणे स्यात्कथं वृत्तिर्वचनादिति लक्ष्यताम्।। 1 ।।
तस्याः पूर्वा तु या संख्या तस्यां भवतु तद्धितः।
आदेशश्चोत्तरा संख्या तथा न्याय्या भविष्यति।। 2 ।।
न्यूने वा कृत्स्नशब्दोऽयम्पूर्वस्यामुत्तरा यदि।
सामर्थ्यं च तया तस्यास्तथा न्याय्यं भविष्यति।। 3 ।।
अन्योन्यं वा व्यपाश्रित्य सर्वस्मिन् द्व्यादयो यदि।
प्रवर्तन्ते तथा न्याय्या वृत्तिर्भवति पूरणे।। 4 ।।
बहूनां वाचिका संख्या पूरणश्चैक ःथ्य;ष्यते।
अन्यत्वादुभयोर्न्याय्या वार्क्षी शाखा निदर्शनम्।। 5 ।।
-5-2-49- नान्तादसंख्यादेर्मट् (2067)
(5736 निर्देशानुपपत्तिबोधकवार्तिकम्।। 1 ।।)
- मडादिषु यस्यादिस्तन्निर्देशः -
(भाष्यम्) मडादिषु यस्यादिः क्रियते तन्निर्देशः कर्तव्यः। अस्यादिर्भवतीति वक्तव्यम्।
अक्रियमाणे प्रत्ययाधिकारात्प्रत्ययोऽयं विज्ञायते।
तत्र को दोषः?

(5734 तादृशे निर्देशे दोषवार्तिकम्।। 2 ।।)
- प्रत्ययान्तरे हि सति स्वरे दोषः -
(भाष्यम्) प्रत्ययान्तरे हि सति स्वरे दोषः स्यात्। विंशतितमः--एष स्वरः प्रसज्येत। विंशतितम ाःथ्य;ति चेष्यते।
स तर्हि तथा निर्देशः कर्तव्यः।।
(वार्तिकद्वयप्रत्याख्यानभाष्यम्)
न कर्तव्यः। प्रकृतं डड्ग्रहणमनुवर्तते।
क्व प्रकृतम्?
तस्य पूरणे डट् (48) ाःथ्य;ति।।
तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः।।
नान्तादित्येषा पञ्चमी डडितिप्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1।1।67) ाःथ्य;ति।।
प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति।
नायं प्रत्ययविधिः विहितः प्रत्ययः प्रकृतश्चानुवर्तते।।
-5-2-51- षट्कतिकतिपयचतुरां थुक् (2069)
(5735 उपसंख्यानवार्तिकम्।। 1 ।।)
- चतुरश्छयतावाद्यक्षरलोपश्च -
(भाष्यम्) चतुरश्छयतौ वक्तव्यौ, आद्यक्षरलोपश्च वक्तव्यः। तुरीयम्। तुर्यम्।।
(वार्तिकावतरणभाष्यम्)
अथ किमर्थं थट्थुकौ पृथक् क्रियेते। न सर्वं थडेव वा स्यात् थुगेव वा।।
(5736 पृथगनुबन्धप्रयोजनवार्तिकम्।। 2 ।।)
- थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् -
(भाष्यम्) थट्थुकोः पृथग्ग्रहणं क्रियते पदान्तविधिप्रतिषेधार्थम्। पदान्तविध्यर्थम्, पदान्तप्रतिषेधार्थं च।
पदान्तविध्यर्थं तावत्--पर्णमयानि पञ्चथानि भवन्ति, रथः सप्तथः। पदान्तस्येति नलोपो यथा स्यात्।
पदान्तप्रतिषेधार्थम्--षष्ठः। पदान्तस्येति जश्त्वं मा भूत्।
ाःथ्य;ह--चतुर्थ ाःथ्य;ति, पदान्तस्येति विसर्जनीयो मा भूदिति।।
-5-2-52- बहुपूगगणसङ्घस्य तिथुक् (2070)
(5737 उपसंख्यानवार्तिकम्।। 1 ।।)
- बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः -
(भाष्यम्) बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिर्वक्तव्या। ाःथ्य;हापि यथा स्यात्--बह्वीनां पूरणी बहुतिथी। कतिपयानां पूरणी कतिपयतिथी।
तावतीनां पूरणी तावतिथी।।
(वार्तिकान्यथासिद्धिसाधकभाष्यम्)
बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः सिद्धा।
कथम्?
प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति।।
(5738 उपसंख्यानवार्तिकम्।। 2 ।।)
- पुंवद्वचनं च -
(भाष्यम्) पुंवद्भावश्च वक्तव्यः। बह्वीनां पूरणी बहुतिथी।
किमर्थम्? न भस्याढे तद्धिते पुंवद्भवतीति सिद्धम्।
भस्येत्युच्यते, यजादौ च भं भवति। न चात्र यजादिं पश्यामः।
किं कारणम्? तिथुका व्यवहितत्वान्न प्राप्नोति।।
(वार्तिकान्यथासिद्धौ सिद्धान्तभाष्यम्)
ाःथ्य;दमिह संप्रधार्यम्--तिथुक् क्रियतां पुंवद्भाव ाःथ्य;ति।
किमत्र कर्तव्यम्?
परत्वात्पुंवद्भावः।
नित्यस्तिथुक्, कृतेऽपि पुंवद्भावे प्राप्नोति, अकृतेऽपि प्राप्नोति।
तिथुगप्यनित्यः। अन्यस्य कृते पुंवद्भावे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति।
अन्तरङ्गस्तर्हि तिथुक्।
काऽन्तरङ्गता?
उत्पत्तिसंनियोगेन तिथुगुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्य पुंवद्भावः।
पुंवद्भावोऽप्यन्तरङ्गः।

कथम्?
उक्तमेतत् सिद्धश्च प्रत्ययविधौ ःथ्य;ति।
उभयोरन्तरङ्गयोः परत्वात्पुंवद्भावः, पुंवद्भावे कृते पुनः प्रसङ्गविज्ञानात् तिथुक् सिद्धः। बहुतिथी।।
-5-2-58- षष्टदेश्चासंख्यादेः (2076)
(पदकृत्यभाष्यम्)
असंख्यादेरिति किमर्थम्?
ःथ्य;ह मा भूत्--एकषष्टः, द्विषष्टः।।
(असङ्ख्यादिपदस्य वैर्यथ्यबोधकभाष्यम्)
असंख्यादेरिति शक्यमवक्तुम्।
कस्मान्न भवति--एकषष्टः, द्विषष्ट ःथ्य;ति?
षष्टिशब्दात्प्रत्ययो विधीयते, कः प्रसङ्गो यदेकषष्टिशब्दात्स्यात्। नैव प्राप्नोति नार्थः प्रतिषेधेन।
तदन्तविधिना प्राप्नोति।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।।
(असङ्ख्यादिपदस्य ज्ञापकत्वबोधकभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः--भवतीह तदन्तविधिरिति।
किमेतस्य ज्ञापने प्रयोजनम्?
एकविंशतितमः-एतत्सिद्धं भवति।।
-5-2-59- मतौ छः सूक्तसाम्नोः (2077)
(छप्रत्ययाधिकरणम्)
(5739 एकदेशिवार्तिकम्।। 1 ।।)
- छप्रकरणे अनेकपदादपि -
(भाष्यम्) छप्रकरणेऽनेकपदादपीति वक्तव्यम्। ःथ्य;हापि यथा स्यात्--अस्यवामीयम्। कयाशुभीयम्।
किं पुनः कारणं न सिध्यति?
अप्रातिपदिकत्वात्।।
(5740 सिद्धान्तवार्तिकम्।। 2 ।।)
- सिद्धं तु प्रातिपदिकविज्ञानात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
प्रातिपदिकविज्ञानात्।
कथं प्रातिपदिकविज्ञानम्?
(5741 सिद्धान्तोपपादकवार्तिकम्।। 3 ।।)
- स्वं रूपं शब्दस्याशब्दसंज्ञेति वचनात् -
(भाष्यम्) स्वं रूपं शब्दस्याशब्दसंज्ञा भवतीति। एवं योऽसावाम्नाये अस्यवामशब्दः पठ्यते सोऽस्य पदार्थः।।
(आम्नायशब्दानां आन्यभाव्यावतरणभाष्यम्)
किं पुनरन्ये आम्नायशब्दाः, अन्य ःथ्य;मे।
ओमित्याह।
कुत एतत्?
(5742 आम्नायशब्दानां भेदोपपादकवार्तिकम्।। 4 ।।)
- आम्नायशब्दानामान्यभाव्यं स्वरवर्णानुपूर्वीदेशकालनियतत्वात्-
(भाष्यम्) आम्नायशब्दानामान्यभाव्यम्--अन्यभावः सिद्धः।
कथम्?
स्वरवर्णानुपूर्वीदेशकालनियतत्वात्।
स्वर--स्वरो नियत आम्नाये--अस्यवामशब्दस्य।
वर्णानुपूर्वी--वर्णानुपूर्वी खल्वप्याम्नाये नियता--अस्यवामशब्दस्य।
देशः--देशः खल्वप्याम्नाये नियतः, श्मशाने नाध्येयम्, चतुष्पथे नाध्येयमिति।
कालः--कालः खल्वप्याम्नाये नियतः, नामावास्यायामधीयीत, न चतुर्दश्यामिति।।
(5643 आम्नाये भेदोपपादकवार्तिकम्।। 5 ।।)
- पदैकदेशसुबलोपदर्शनाच्च -
(भाष्यम्) पदैकदेशः खल्वप्याम्नाये दृश्यते--अस्यवामीयम्।

ननु चैष सुब्लोपः स्यात्।
सुबलोपदर्शनाच्च। सुबलोपः खल्वपि दृश्यते--अस्यवामीयमिति।
(तस्मादन्ये आम्नायशब्दा अन्य ःथ्य;मे।)
यदि तर्हि अन्य आम्नायशब्दा अन्य ःथ्य;मे, मत्वर्थो नोपपद्यते--अस्यवामशब्दोऽस्मिन्नस्तीति।
न संज्ञा संज्ञिनं व्यभिचरति।।
-5-2-60- अध्यायानुवाकयोर्लुक् (2078)
(लुगधिकरणम्)
(5644 विकल्पोपसंख्यानवार्तिकम्।। 1 ।।)
- अध्यायानुवाकाभ्यां वा लुक् -
(भाष्यम्) अध्यायानुवाकाभ्यां वा लुग्वक्तव्यः। स्तम्भः, स्तम्भीयः। गर्दभाण्डः, गर्दभाण्डीयः। अनुकः, अनुकीयः।।
-5-2-65- धनहिरण्यात्कामे (2083)
(कन्प्रत्ययाधिकरणम्)
(5645 एकदेश्युपसंख्यानवार्तिकम्।। 1 ।।)
- धनहिरण्यात्कामाभिधाने -
(भाष्यम्) धनहिरण्यात्कामाभिधान ःथ्य;ति वक्तव्यम्।।
(5646 अनिष्टोपत्तिप्रदर्शकवार्तिकम्।। 2 ।।)
- षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः -
(भाष्यम्) षष्ठ्यर्थे हि सति अनिष्टं प्राप्नोति। धने कामोऽस्येति।
तत्तर्हि वक्तव्यम्?
(सिद्धान्तभाष्यम्)
न वक्तव्यम्।
कस्मान्न भवति--धने कामोऽस्येति।
अनभिधानात्।।
-5-2-72- शीतोष्णाभ्यां कारिणि (2090)
(शीतोष्णशब्दयोर्मुख्यार्थेऽनिष्टापत्तिदर्शकभाष्यम्)
किं यः शीतं करोति स शीतकः, यो वा उष्णं करोति स उष्णकः?
किं चातः?
तुषारे आदित्ये च प्राप्नोति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि--उत्तरपदालोपोऽत्र द्रष्टव्यः। शीतमिव शीतम्। उष्णमिवोष्णम्। य आशु कर्तव्यानर्थांश्चिरेण करोति स उच्यते--शीतक ःथ्य;ति। यः पुनरांशु कर्तव्यानर्थानाश्चेव करोति स उच्यते--उष्णक ःथ्य;ति।।
-5-2-73- अधिकम् (2091)
(एकदेशिन आक्षेपभाष्यम्)
अधिकमिति किं निपात्यते?
(समाधानभाष्यम्)
अध्यारूढस्योत्तरपदलोपः कंश्च प्रत्ययः। अध्यारूढम्--अधिकम्--ःथ्य;ति।
भवेत्सिद्धम्--अध्यारूढो द्रोणः खार्याम्, अधिको द्रोणः खार्यामिति।
ःथ्य;दं तु न सिध्यति--अध्यारूढा द्रोणेन खारी, अधिका द्रोणेन खारीति। गत्यर्थानां हि क्तः कर्तरि विधीयते।
गत्यर्थानां वै क्तः कर्मण्यपि विधीयते।।
-5-2-75- पार्श्वेनान्विच्छति (2093)
(एकदेशिभाष्यम्)
किं यः पार्श्वेनान्विच्छति स पार्श्वकः?
कि चातः?
राजपुरुषे प्राप्नोति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि उत्तरपदलोपोऽत्र द्रष्टव्यः। पार्श्वमिव पार्श्वम्। य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स उच्यते--पार्श्वक ःथ्य;ति।।
-5-2-76- अयःशूलदण्डाजिनाभ्यां ठक्ठञ्जौ (2094)
(ठक्ठञ्जोरधिकरणम्)
(आक्षेपभाष्यम्)

किं योऽयःशूलेनान्विच्छति स आयःशूलिकः?
किं चातः?
शिवभागवते प्राप्नोति।।
(समाधानभाष्यम्)
एवं तर्हि उत्तरपदलोपोऽत्र द्रष्टव्यः। अयः शूलमिव--अयःशूलं। यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते--आयःशूलिकः।।
-5-2-77- तावतिथं ग्रहणमिति लुग्वा (2095)
(कनोऽधिकरणम्)
(5747 लुग्ग्रहणाक्षेपवार्तिकम्।। 1 ।।)
- तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाप्रकरणात् -
(भाष्यम्) तावतिथं ग्रहणमिति लुग्वावचनमनर्थकम्।
किं कारणम्?
विभाषाप्रकरणात्। प्रकृता महाविभाषा, तयैतत्सिद्धम्।।
(5748 उपसंख्यानवार्तिकम्।। 2 ।।)
- तावतिथेन गृह्णातीति लुक् च -
(भाष्यम्) तावतिथेन गृह्णातीत्युपसंख्यानं कर्तव्यं लुक् च वक्तव्यः। षष्ठेन गृह्णाति षट्कः।।
-5-2-79- श्रृङ्खलमस्य बन्धनं करभे (2095)
(5749 निर्देशाक्षेपवार्तिकम्।।1।।)
शृङ्खलमस्य बन्धनं करभ ः्थ्य;त्यनिर्देशः।।
शृङ्खलमस्य बन्धनं करभे ः्थ्य;त्यनिर्देशः। अगमको निर्देशोऽनिर्देशः । न हि तस्य शृङ्खलं बन्धनम्, शृङ्खवत्याऽसौ रज्ज्वा बध्यते।।
(5750 समाधानवार्तिकम्।।2।।)
सिद्धं तु तद्विन्निर्देशाल्लुक् च ।।
सिद्धमेतत्। कथम् ? तद्वन्निर्देशः कर्तव्यः, लुक् च वक्तव्यः--शृङ्खलवद्वन्धनमिति। तद्वन्निर्देशः कर्तव्यः, लुक् च वक्तव्यः--शृङ्खलवद्वन्धनमिति। स तर्हि तद्वन्निर्देशः कर्तव्यः।
न कर्तव्यः । ः्थ्य;ह यन्नान्तरेण यस्य प्रवृत्तिर्भवति तत्तस्य निमित्तत्वाय कल्पते। न चान्तरेण शृङ्खलं बन्धनं प्रवर्तते। अथवा साहचर्यात्ताच्छब्यं भविष्यति--शृङ्खलसहचरितं बन्धनं शृङ्खलं बन्धनमिति।।
-5-2-82- तदस्मिन्नन्नं प्राये संज्ञायाम् (2100)
(5751 उपसंख्यानवार्तिकम्।। 1 ।।)
- प्राये संज्ञायां वटकेभ्य ः्थ्य;निः -
(भाष्यम्) प्राये संज्ञायां वटकेभ्य ः्थ्य;निर्वक्तव्यः। वटकिनी पौर्णमासी।।
-5-2-84- श्रोत्रियंश्छन्दोऽधीते (2102)
(घप्रत्ययनिपातनाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
किं निपात्यते?
(5752 सूत्रार्थोपोद्बलकवार्तिकम्।। 1 ।।)
- श्रोत्रियंश्छन्दोऽधीत ः्थ्य;ति वाक्यार्थे पदवचनम् -
(भाष्यम्) छन्दोऽधीत ः्थ्य;त्यस्य वाक्यस्यार्थे श्रोत्रियन् ः्थ्य;त्येतत्पदं निपात्यते।।
(5753 प्रकारान्तरवर्णनवार्तिकम्।। 2 ।।।)
- छन्दसो वा श्रोत्रभावः, तदधीत ः्थ्य;ति घंश्च -
(भाष्यम्) छन्दसो वा श्रोत्रभावो निपात्यते, तदधीते ः्थ्य;त्यस्मिन्नर्थे घंश्च प्रत्ययः। छन्दोऽधीते--श्रोत्रियः।।
-5-2-85- श्राद्धमनेन भुक्तमिनिठनौ (2103)
(ः्थ्य;निठनोरधिकरणम्)
(5754 एकदेशिन उपसंख्यानवार्तिकम्।। 1 ।।)
- ः्थ्य;निठनोः समानकालग्रहणम् -
(भाष्यम्) ः्थ्य;निठनोः समानकालग्रहणं कर्तव्यम्। अद्य भुक्ते श्वः श्राद्धिक ः्थ्य;ति मा भूत्।।
(5755 सिद्धान्तवार्तिकम्।। 2 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
अनभिधानादिति।।
-5-2-91- साक्षाद् द्रष्टरि संज्ञायाम् (2109)

(सूत्रार्थनिश्चायकभाष्यम्)
संज्ञायामिति किमर्थम्?
त्रिभिः साक्षाद् द्रष्टव्यं भवति--यश्च ददाति, यस्मै च दीयते, यश्चोपद्रष्टा, तत्र सर्वत्र प्रत्ययः प्राप्नोति।
संज्ञाग्रहणसार्मथ्याद्धनिकान्तेवासिनोर्न भवति।।
-5-2-92- क्षेत्रियच्परक्षेत्रे चिकित्स्यः(2110)
(निपातनाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
किं निपात्यते?
(5756 सूत्रार्थज्ञापकवार्तिकम्।। 1 ।।)
- क्षेत्रियः श्रोत्रियवत् -
(भाष्यम्) क्षेत्रियः श्रोत्रियवन्निपात्यते। परक्षेत्रे चिकित्स्य ःथ्य;त्येतस्य वाक्यस्यार्थे क्षेत्रियच् ःथ्य;त्येतत्पदं निपात्यते।।
(5757 प्रकारान्तरेण सूत्रार्थज्ञापकवार्तिकम्।। 2 ।।)
- परक्षेत्राद्वा तत्र चिकित्स्य ःथ्य;ति परलोपो घच्च -
(भाष्यम्) परक्षेत्राद्वा तत्र चिकित्स्य ःथ्य;त्येतस्मिन्नर्थे परलोपो निपात्यते घच्च प्रत्ययः। परक्षेत्रे चिकित्स्यः--क्षेत्रियः।।
ःथ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्ञ्चमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्।।
-5-2-94- तदस्यास्त्यस्मिन्निति मतुप् (2112)
(मतुप्प्रत्ययाधिकरणम्)
(पदकृत्यभाष्यम्)
किमर्थमिमावर्थावुभौ निर्दिश्येते--अस्य अस्मिन्निति, न यद्यस्य भवति तस्मिन्नपि तद् भवति, यच्च यस्मिन् भवति तत्तस्यापि भवति?
नैतयोरावश्यकः समावेशः। भवन्ति हि देवदत्तस्य गावः, न च तास्तस्मिन्नाधृता भवन्ति। भवन्ति च पर्वते वृक्षा न
च ते तस्य भवन्ति। तस्मात् अस्यास्मिन् ग्रहणम्।।
(अस्तिग्रहणाक्षेपभाष्यम्)
अथास्तिग्रहणं किमर्थम्?
(अस्तिग्रहणप्रयोजनभाष्यम्)
सत्तायामर्थे प्रत्ययो यथा स्यात्।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्। न सत्तां पदार्थो व्यभिचरति।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--संप्रति सत्तायां यथा स्यात्, भूतभविष्यत्सत्तायां मा भूत्। गावोऽस्यासन् गावोऽस्य भवितारः ःथ्य;ति।।
(अनिष्टनिवारकभाष्यम्)
न तर्हीदानीमिदं भवति--गोमानासीत्, गोमान् भवितेति।।
भवति, न त्वेतस्मिन् वाक्ये।
यद्येतस्मिन् वाक्ये स्यात्--यथेहास्तेः प्रयोगो न भवति गोमान् यवमान् ःथ्य;ति, एवमिहापि न स्यात्--गोमानासीत्, गोमान् भवितेति।
सति चाप्यस्तेः प्रयोगे यथेह बहुवचनं श्रूयते--गावोऽस्यासन्, गावोस्य भवितार ःथ्य;ति, एवमिहापि स्यात्--गोमानासीत्, गोमान् भवितेति।
का तर्हीयं वाचोयुक्तिः--गोमानासीत् गोमान् भवितेति।
एषैषा वाचो युक्तिः--नैषा गवां सत्ता कथ्यते।
किं तर्हि?
गोमत्सत्तैषा कथ्यते। अस्त्यत्र वर्तमानकालोऽस्तिः।
कथं तर्हि भूतभविष्यत्सत्ता गम्यते?
धातुसम्बन्धे प्रत्ययाः ःथ्य;ति।।
(प्रयोजनभाष्यम्)
ःथ्य;दं तर्हि प्रयोजनम्--अस्तियुक्ताद्यथा स्यात्, अनन्तरादियुक्तान्मा भूदिति। गावोऽस्यानन्तराः, गावोऽस्य समीप ःथ्य;ति।।
(आक्षेपभाष्यम्)
अथ क्रियमाणेऽप्यस्तिग्रहणं ःथ्य;ह कस्मान्न भवति--गावोऽस्य सन्त्यनन्तराः, गावोऽस्य सन्ति समीप ःथ्य;ति?
(समाधानभाष्यम्)
असामर्थ्यात्।
कथमसामर्थ्यम्?
सापेक्षमसमर्थं भवतीति।।
(प्रत्याक्षेपभाष्यम्)

यथैव तर्हि क्रियमाणेऽस्तिग्रहणेऽसार्मथ्यादनन्तरादिषु न भवति, एवमक्रियमाणेऽपि न भविष्यति।।
(प्रत्याक्षेपनिरासभाष्यम्)
अस्त्यत्र विशेषः। क्रियमाणेऽस्तिग्रहणे नान्तरेण तृतीयस्य पदस्य प्रयोगमनन्तरादयोऽर्था गम्यन्ते। अक्रियमाणे पुनरस्तिग्रहणे अन्तरेणापि तृतीयस्य पदस्य प्रयोगमनन्तरादयोऽर्था गम्यन्ते।।
(मतुप्प्रत्ययातिव्याप्तिनिवारकभाष्यम्)
अथेह कस्मान्न भवति--चित्रगुः शबलगुरिति?
बहुव्रीहिणोक्तत्वान्मत्वर्थस्य।।
(प्रत्ययातिव्याप्तिनिवारकभाष्यम्)
अथेह कस्मान्न भवति--चित्रा गावो यस्य सन्तीति?
कुतः कस्मान्न भवति? किमवयवात्, आहोस्वित्यसमुदायात्?
अवयवात्कस्मान्न भवति?
असामर्थ्यात्।
कथमसामर्थ्यम्?
सापेक्षमसमर्थं भवतीति।।
समुदायात्तर्हि कस्मान्न भवति?
अप्रातिपदिकत्वात्।
ननु च भो आकृतौ शास्त्राणि प्रवर्तन्ते। तद्यथा--सुप्सुपेति वर्तमाने अन्यस्य चान्यस्य च समासो भवति।
सत्यमेवमेतत्। आकृतिस्तु प्रत्येकं परिसमाप्यते। यावत्येतत्परिसमाप्यते ङ्याप्प्रातिपदिकादिति तावत उत्पत्त्या भवितव्यम्। अवयवे चैतत्परिसमाप्यते न समुदाये।।
(प्रत्ययातिव्याप्तिनिवारकभाष्यम्)
अथेह कस्मान्न भवति--पञ्च गावः सन्त्यस्प--पञ्चगुर्दशगुरिति?
प्रत्येकमसामर्थ्यात्, समुदायात्--अप्रातिपदिकत्वात्, समासात्--समासेनोक्तत्वात्।।
(आक्षेपभाष्यम्)
नैतत्सारम्। उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितः। तद्यथा--द्वैमातुरः पाञ्चनापितिरिति।।
(समाधानभाष्यम्)
नैष द्विगुः।
कस्तर्हि?
बहुव्रीहिः।
अपवादत्वाद् द्विगुः प्राप्नोति।
अन्तरङ्गत्वाद्बहुव्रीहिर्भविष्यति।
काऽन्तरङ्गता?
अन्यपदार्थे बहुव्रीहिर्वर्तते, विशिष्टेऽन्यपदार्थे तद्धितार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते।।
(प्रत्याक्षेपभाष्यम्)
यदि तर्हि अतिप्रसङ्गाः सन्तीति तद्धितविधावस्तिग्रहणं क्रियते, बहुव्रीहावप्यस्तिग्रहणं कर्तव्यमस्तियुक्ताद्यथा स्यादनन्तरादियुक्तान्मा भूदिति।
अथ न सन्ति, तद्धितविधावपि नार्थोऽस्ति ग्रहणेन।।
(प्रत्याक्षेपसमाधानभाष्यम्)
सत्यमेवमेतत्। क्रियते त्विदानीं तद्धितविधावस्तिग्रहणम्। तद्वै क्रियमाणमपि प्रत्ययविध्यर्थं, नोपाध्यर्थम्। अस्तिमानिति मुतब् यथा स्यात्।
किं च कारणं न स्यात्?
अप्रातिपदिकत्वात्।
नैष दोषः। अव्ययमेषोऽस्तिशब्दः, नैषोऽस्तेर्लट्।
कथमव्ययत्वम्?
विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा।
एवमपि न सिध्यति।
किं कारणम्?
अस्तिना सामानाधिकरण्ये मतुब् विधीयते, न चास्तेरस्तिना सामानाधिकरणम्यम्।।
तदेतत् क्रियमाणमपि प्रत्ययविध्यर्थं नोपाध्यर्थम्। तस्माद् द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यः, यदि तन्नास्ति सर्वत्र मत्वर्थे प्रतिषेधः ःथ्य;ति। सति हि तस्मिंस्तेनैतत्सिद्धम्।।
(मतुबन्तान्मतुप्प्रत्ययाभावोपपादकभाष्यम्)

अथ मत्वर्थीयान्मत्वर्थीयेन भवितव्यम्?
न भवितव्यम्।
किं कारणम्?
अर्थगत्यर्थः शब्दप्रयोगः। अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्।।
किं कारणम्?
उक्तार्थानामप्रयोग ाःथ्य;ति।।
(आक्षेपभाष्यम्)
न तर्हीदानीमिदं भवति--दण्डिमती शाला, हस्तिमती उपत्यका ाःथ्य;ति।।
(समाधानभाष्यम्)
भवति, अर्थान्तरे वृत्तादर्थान्तरे वृत्तिः। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते, सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते।।
(प्रत्याक्षेपभाष्यम्)
अथ मत्वन्तान्मतुपा भवितव्यम्--गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति?
(प्रत्याक्षेपसमाधाने भाष्यम्)
न भवितव्यम्।
किं कारणम्?
यस्य गोमन्तः सन्ति, गावोऽपि तस्य सन्ति, तत्रोक्तो गोभिरभिसम्बन्धे प्रत्यय ाःथ्य;ति कृत्वा तद्धितो न भविष्यति।
न तर्हीदानीमिदं भवति--दण्डिमती शाला, हस्तिमत्युपत्यकेति।
भवति, अर्थान्तरे वृत्ताद् अर्थान्तरे वृत्तिर्भविष्यति। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते, सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते।।
(समानन्यायेनाक्षेपभाष्यम्)
ाःथ्य;हापि--सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते, षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते। अन्यथाजातीयकः खल्वपि गोभिरभिसम्बन्धे प्रत्ययः, अन्यथाजातीयकस्तद्वता। येनैव खल्वपि हेतुना एतद्वाक्यं भवतिगोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति तेनैव हेतुना वृत्तिरपि प्राप्नोति।।
(प्रतिषेधेन समाधानभाष्यम्)
तस्मान्मत्वर्थीयान्मतुबादेः प्रतिषेधो वक्त्वयः।
तं चापि ब्रुवता समानवृत्तौ सरूप ाःथ्य;ति वक्तव्यम्। भवति हि--दण्डिमती शाला, हस्तिमत्युपत्यकेति।
शैषिकान्मतुबर्षीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते।।
(प्रत्ययोद्देश्यतावच्छेदकनिर्धारणोपक्रमभाष्यम्)
किं पुनरिमे मतुप्प्रभृतयः सन्मात्रे भवन्ति?
एवं भवितुमर्हति।।
(5758 अतिप्रसंगापादकवार्तिकम्।। 1 ।।)
- मतुप्प्रभृतयः सन्मात्रे ाःथ्य;ति चेदतिप्रसङ्गः -
(भाष्यम्) मतुप्प्रभृतयः सन्मात्र ाःथ्य;ति चेदतिप्रसङ्गो भवति।
ाःथ्य;हापि प्राप्नोति--व्रीहिरस्य, यवोऽस्येति।।
(एकदेशिसमाधानभाष्यम्)
तस्माद् भूमादिग्रहणं कर्तव्यम्।।
(भूमादिनिर्वचनभाष्यम्)
के पुनर्भूमादयः?
भूमनिन्दाप्रशंसासु
नित्ययोगेऽतिशायने।
संबन्धेऽस्तिविवक्षायां
भवन्ति मतुबादयः।।
भूम्नि--गोमान् यवमान्।
निन्दायाम्--ककुदावर्ती। संखादकी।
प्रशंसायाम्--रूपवान्। वर्णवान्।
नित्ययोगे--क्षीरिणो वृक्षाः। कण्टकिनो वृक्षा ाःथ्य;ति।
अतिशायने--उदरिणी कन्या।
संसर्गे--दण्डी। छत्री।
तत्तर्हि भूमादिग्रहणं कर्तव्यम्?
न कर्तव्यम्।

कस्मान्न भवति--व्रीहिरस्य, यवोऽस्येति।।
(5759 सिद्धान्तवार्तिकम्।। 2 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
अनभिधानादिति।
ःथ्य;तिकरणः खल्वपि क्रियते ततश्चेद्विवक्षा, भूमादियुक्तस्यैव च विवक्षा।
गोमान्--यवमान्--भूमादियुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्यवो नास्ति।
संखादकी--ककुदावर्ती--निन्दायुक्तस्यैव सत्ता कथ्यते, न हि कश्चिन्न संखादकी।
रूपवान्--वर्णवान्--प्रशंसायुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्रूपं नास्ति।
क्षीरिणो वृक्षाः--कण्टकिनो वृक्षा ःथ्य;ति--नित्ययुक्तस्यैव सत्ता कथ्यते, न हि कस्यचित् क्षीरं नास्ति।
उदरिणी कन्येति--अतिशायनयुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिदुदरं नास्ति।
दण्डी--छत्री--संसर्गयुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्दण्डो नास्ति।
यावतीभिः खल्वपि गोभिर्वाहदोहप्रसवाः कल्पन्ते तावतीषु सत्ता कथ्यते। कस्यचिच्चतसृभिः कल्पन्ते। कस्यचिच्छतेनापि न प्रकल्पन्ते।।
सन्मात्रे चर्षिदर्शनात्।
सन्मात्रे च पुनः ऋषिर्दर्शयति मतुपम्--यवमतीभिरद्भिर्यूपं प्रोक्षतीति।।
(5760 उपसंख्यानवार्तिकम्।। 3 ।।)
- गुणवचनेभ्यो मतुपो लुक् -
(भाष्यम्) गुणवचनेभ्यो मतुपो लुग्वक्तव्यः। शुक्लः। कृष्ण ःथ्य;ति।।
(उपसंख्यानाक्षेपभाष्यम्)
अव्यतिरेकात्सिद्धम्। न गुणो गुणिनं व्यभिचरतीति।।
(5761 समाधानवार्तिकम्।। 4 ।।)
- अव्यतिरेकात्सिद्धमिति चेद् दृष्टो व्यतिरेकः -
(भाष्यम्) अव्यतिरेकात्सिद्धमिति चेत् दृश्यते व्यतिरेकः। तद्यथा--पटस्य शुक्ल ःथ्य;ति।।
(5762 सिद्धान्तसाधकवार्तिकम्।। 5 ।।)
- तथा च लिङ्गवचनसिद्धिः -
(भाष्यम्) एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति--शुक्लं वस्त्रम्। शुक्ला शाटी। शुक्लः कम्बलः। शुक्लौ कम्बलौ। शुक्लाः कम्बला ःथ्य;ति।
यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति।।
-5-2-95- रसादिभ्यश्च (2113)
(आक्षेपभाष्यम्)
किमर्थमिदमुच्यते न तदस्यास्त्यस्मिन्- ःथ्य;त्येव मतुप्सिद्धः?
(5763 एकदेशिवार्तिकम्।। 1 ।।)
- रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् -
(भाष्यम्) रसादिभ्यः पुनर्वचनं क्रियते--अन्येषां मत्वर्थीयानां प्रतिषेधार्थम्। मतुबेव यथा स्यात्, येऽन्ये मत्वर्थीयाः प्राप्नुवन्ति ते मा भूवन्निति।
(सिद्धान्तप्रत्यायकभाष्यम्)
नैतदस्ति प्रयोजनम्। दृश्यन्ते ह्यन्ये रसादिभ्यो मत्वर्थीयाः -- रसिको नटः। उर्वशी वै रूपिणी अप्सरसाम्। स्पर्शिको वायुरिति।।
-5-2-96- प्राणिस्थादातो लजन्यतरस्याम् (2114)
(अतिव्याप्त्याशंकाभाष्यम्)
ःथ्य;ह कस्मान्न भवति--चिकीर्षाऽस्यास्ति, जिहीर्षाऽस्यास्तीति?
(एकदेशिसमाधानभाष्यम्)
प्राण्यङ्गादिति वक्तव्यम्।
तत्तर्हि वक्तव्यम्।
न वक्तव्यम्।।
(सिद्धान्तभाष्यम्)
कस्मान्न भवति--जिहीर्षाऽस्यास्ति, चिकीर्षाऽस्यास्तीति?
अनभिधानात्।।
-5-2-97- सिध्मादिभ्यश्च (2115)
(विकल्पेन लज्विधायकत्वे शंकाभाष्यम्)

सिध्मादिषु यान्यकारान्तानि तेभ्यो लचा मुक्ते ॒ःथ्य;निठनौ प्राप्नुतः। ॒ःथ्य;निठनौ च नेष्येते। कथं तौ न भविष्यतः?
(5764 समुच्चयबोधकत्वेनोत्तरवार्तिकम्।। 1 ।।)
- लजन्यतरस्यामिति समुच्चयः -
(भाष्यम्) लजन्यतरस्यामिति समुच्चयोऽयं, न विभाषा। लच्च मतुप् च।
कथं पुनरेतज्ज्ञायते--लजन्यतरस्यामिति समुच्चयो न विभाषेति?।
(5765 समुच्चयसमर्थकवार्तिकम्।। 2 ।।)
- पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकमसमावेशस्य -
(भाष्यम्) यदयं पिच्छादिभ्यस्तुन्दादीनां नानायोगं करोति तज् ज्ञापयत्याचार्यः--समुच्चयोऽयं न विभाषेति।
यदि विभाषा स्यात् नानायोगकरणमनर्थकं स्यात्, तुन्दादीन्यपि पिच्छादिष्वेव पठेत्।
नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम्।
किम्?
तुन्दादिषु यानि अनकारान्तानि तेभ्य ॒ःथ्य;निठनौ यथा स्याताम्।।
यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः?
ज्ञापकार्थ एव।।
(प्रकारान्तरेण ज्ञापकसाधकभाष्यम्)
अपर आह--तुन्दादिभ्यः पिच्छादीनां नानायोगकरणं ज्ञापकम्--असमावेशस्य।
यदयं तुन्दादिभ्यः पिच्छादीनां नानायोगं करोति तज्ज्ञापयत्याचार्यः--समुच्चयः, न विभाषेति।
यदि विभाषा स्यान्नानायोगकरणमनर्थके स्यात्। पिच्छादीन्यपि तुन्दादिष्वेव पठेत्।।
नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम्।
किम्?
पिच्छादिषु यान्यनकारान्तानि तेभ्य ॒ःथ्य;निठनौ मा भूतामिति।
यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः।
ज्ञापकार्थ एव।।
(5766 समुच्चयबोधकवार्तिकम्।। 3 ।।)
- वस्य च पुनर्वचनं सर्वविभाषार्थम् -
(भाष्यम्) वस्य खल्वपि पुनर्वचनं क्रियते सर्वविभाषार्थम्--केशाद्वोऽन्यतरस्याम् (5।2।109) ॒ःथ्य;ति। एतदेव ज्ञापयत्याचार्यः--समुच्चयोऽयं, न विभाषेति।।
(अन्यतरस्यांग्रहणस्य ज्ञापकाभावबोधकं भाष्यम्)
द्युद्रुभ्यां नित्यार्थमेकेऽन्यतरस्यांग्रहणमिच्छन्ति।
कथम्?
विभाषामध्येऽयं योगः क्रियते। विभाषामध्ये ये विधयो नित्यास्ते भवन्तीति।।
-5-2-100- लोमादिपामादिपिच्छादिभ्यः शनेलचः (2118)
(5767 उपसंख्यानवार्तिकम्।। 1 ।।)
- नप्रकरणे दद्रवा ह्रस्वत्वं च -
(भाष्यम्) नप्रकरणे दद्रवा उपसंख्यानं कर्तव्यम्, ह्रस्वत्वं च वक्तव्यम्। दद्रुणः।
अत्यल्पमिदमुच्यते।
शाकीपलालीदद्रूणां ह्रस्वत्वं चेति वक्तव्यम्। शाकिनम्। पलालिनम्। दद्रुणम्।।
(5768 उपसंख्यानवार्तिकम्।। 2 ।।)
- विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः -
(भाष्यम्) विष्वगित्युपसंख्यानं कर्तव्यम्, उत्तरपदलोपश्चाकृतसन्धेर्वक्तव्यः। विष्वग्गतान्यस्य विषुणः।।
-5-2-101- प्रज्ञाश्रद्धार्चाभ्यो णः (2119)
(णप्रत्ययाधिकरणम्)
(5769 उपसंख्यानवार्तिकम्।। 1 ।।)
- वृत्तेश्च -
(भाष्यम्) वृत्तेश्चेति वक्तव्यम्। वार्तम्।।
-5-2-102- तपः सहस्राभ्यां विनीनी (2120)
-5-2-103- अण्च (2121)
(अणप्रत्ययाधिकरणम्
(तपःशब्दाक्षेपे भाष्यम्)

किमर्थं तपः श्बदाद्विन् विधीयते। नासन्तादित्येव सिद्धम्?
(5770 समाधानवार्तिकम्।। 1 ।।)
- तपसो विन्वचनमण्विधानात् -
(भाष्यम्) तपसो विन्वचनं क्रियते।
किं प्रयोजनम्?
अण्विधानात्। तपःशब्दादण् विधीयते, स विशेषविहितः सामान्यविहितं विनं बाधेत।।
(5771 उपसंख्यानवार्तिकम्।। 2 ।।)
- अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् -
(भाष्यम्) अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानं कर्तव्यम्। ज्यौत्स्नः। तामिस्नम्। कौण्डलः। कौतपः। वैपादिकः।।
-5-2-107- ःढ़्य;षसुषिमुष्कमधो रः (2125)
(रप्रत्ययाधिकरणम्)
(मधुशब्दप्रत्यायकभाष्यम्)
अयं मधुशब्दोऽस्त्येव द्रव्यपदार्थकः, अस्ति रसवाची। आतश्च रसवाची अपि, मधुन्येव हि मधु--ःथ्य;दम्--मधुरम् ःथ्य;ति प्रयुज्यते। तद्यो रसवाची तस्येदं ग्रहणम्।।
यदि हि द्रव्यपदार्थकस्य ग्रहणं स्यादिहापि प्रसज्येत--मधु अस्मिन् घटेऽस्ति।।
(5772 उपसंख्यानवार्तिकम्।। 1 ।।)
- रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् -
(भाष्यम्) रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानं कर्तव्यम्। खरः। मुखरः। कुञ्जरः।।
(5773 उपसंख्यानवार्तिकम्।। 2 ।।)
- नगाच्च -
(भाष्यम्) नगाच्चेति वक्तव्यम्। नगरम्।।
-5-2-109- केशाद्वोऽन्यतरस्याम् (2127)
(वप्रत्ययाधिकरणम्)
(5774 उपसंख्यानवार्तिकम्।। 1 ।।)
- वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् -
(भाष्यम्) वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानं कर्तव्यम्। मणिवः। हिरण्यवः।।
(5775 उपसंख्यानवार्तिकम्।। 2 ।।)
- छन्दसीवनिपौ च -
(भाष्यम्) छन्दसि ःथ्य;र्वनिपौ च वक्तव्यौ वश्चमतुप् च। रथीः अभून्मुद्गलानी गविष्टौ। सुमङ्गलीरियं वधूः। ऋतावानम्। मघवानमीमहे। उद्वा च उद्वती च।।
(5776 उपसंख्यानवार्तिकम्।। 3 ।।)
- मेधारथाभ्यामिरनिरचौ -
(भाष्यम्) मेधारथाभ्यामिरनिरचौ वक्तव्यौ। मेधिरः। रथिरः।
(प्रकारान्तरबोधकभाष्यम्)
अपर आह--वप्रकरणे अन्येभ्योऽपि दृश्यते ःथ्य;ति वक्तव्यम्। बिम्बावम्। कुररावम्। ःथ्य;ष्टकावम्।।
-5-2-112- रजःकृष्यासुतिपरिषदो वलच् (2130)
(वलच्प्रत्ययाधिकरणम्)
(5777 उपसंख्यानवार्तिकम्।। 1 ।।)
- वलच्प्रकरणेऽन्येभ्योऽपि दृश्यते -
(भाष्यम्) वलच्प्रकरणे अन्येभ्योऽपि दृश्यत ःथ्य;ति वक्तव्यम्। भ्रातृवलः। पुत्रवलः। उत्सङ्गवलः।।
-5-2-115- अत ःथ्य;निठनौ (2132)
(ःथ्य;निठनोरधिकरणम्)
(5778 उपसंख्यानवार्तिकम्।। 1 ।।)
- ःथ्य;निठनोरेकाक्षरात्प्रतिषेधः -
(भाष्यम्) ःथ्य;निठनोरेकाक्षरात्प्रतिषेधो वक्तव्यः।। स्ववान्, खवान्।
अत्यल्पमिदमुच्यते।।
(उपसंख्याने श्लोकभाष्यम्)
एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ।।
एकाक्षरात्--स्ववान्। खवान्।

कृतः--कारकवान्। हारकवान्।
जातेः--वृक्षवान्। प्लक्षवान्। व्याघ्रवान्। सिंहवान्।
सप्तम्यां च न तौ--दण्डा अस्यां शालायां सन्तीति।।
(एकाक्षरादित्यादेः प्रत्याख्यानभाष्यम्)
यदि कृतो नेत्युच्यते, कार्यी--कार्यिक ःथ्य;ति न सिध्यति।
तथा जातेर्नेत्युच्यते, तण्डुली--तण्डुलिक ःथ्य;ति न सिध्यति।।
एवं तर्हि नायं समुच्चयः--कृतश्च जातेश्चेति।
किं तर्हि?
जातिविशेषणं कृद्ग्रहणम्--कृद्या जातिरिति।
कथं कारकवान्, हारकवान्?
अनभिधानान्न भविष्यति।।
यद्येवं, नार्थोऽनेन
कथं--स्ववान्, खवान्, वृक्षवान्, सिंहवान्, व्याघ्रवान्, प्लक्षवान्, दण्डा अस्यां शालायां सन्तीति?
अनभिधानान्न भविष्यति।।
5-2-116- व्रीह्यादिभ्यश्च (2134)
(उपसंख्यानभाष्यम्)
शिखादिभ्य ःथ्य;निर्वाच्य
ःथ्य;कन् यवखदादिषु।।
किं प्रयोजनम्?
नियमार्थम्। ःथ्य;निरेव शिखादिभ्यः, ःथ्य;कन्नेव यवखदादिभ्यः।।
(5779 प्रत्याख्यानवार्तिकम्।। 1 ।।)
- शिखायवखदादिभ्यो नियमस्यावचनं निवर्तकत्वात् -
(भाष्यम्) शिखायवखदादिभ्यो नियमस्यावचनम्।
किं कारणम्?
निवर्तकत्वात्।
किं निवर्तकम्?
अनभिधानम्।।
-5-2-118- एकगोपूर्वाट्ठञ् नित्यम् (2136)
(ठञ्प्रत्ययाधिकरणम्)
(नित्यपदप्रयोजनभाष्यम्)
नित्यग्रहणं किमर्थम्?
विभाषा मा भूत्।
नैतदस्ति प्रयोजनम्।
पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम्।
एवं तर्हि सिद्धे सति यन्नित्यग्रहणं करोति तज्ज्ञापयत्याचार्यः--प्रागेतस्माद्योगात् विभाषा ःथ्य;त्यनुवर्तत ःथ्य;ति।।
(अनुवृत्तिनिश्चायकभाष्यम्)
अथ अतः ःथ्य;त्यनुवर्तते, उताहो न।
किं चातः?
यद्यनुवर्तते, ऐकगविको न सिध्यति।
समासान्ते कृते भविष्यति।
एवमपि गौशकटिको न सिध्यति।।
अथ निवृत्तम्।
ःथ्य;हापि प्राप्नोति--गोविंशतिरस्यास्तीति।
निवृत्तम्।।
ःथ्य;ह कस्मान्न भवति--गोविंशतिरस्यास्तीति?
अनभिधानान्न भविष्यति।।
-5-2-120- रूपादाहतप्रशंसयोर्यप् (2138)
(यप्प्रत्ययाधिकरणम्)
(5780 उपसंख्यानवार्तिकम्।। 1 ।।)

- यप्प्रकरणेऽन्येभ्योऽपि दृश्यते -
(भाष्यम्) यप्प्रकरणेऽन्येभ्योऽपि दृश्यते ःथ्य;ति वक्तव्यम्। हिम्याः पर्वताः। गुण्या ब्राह्मणाः।।
-5-2-122- बहुलं छन्दसि (2140)
(विनिप्रत्ययाधिकरणम्)
(5781 उपसंख्यानवार्तिकम्।। 1 ।।)
- छन्दोविन्प्रकरणेऽष्टामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च -
(भाष्यम्) छन्दोविन्प्रकरणेऽष्टामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्। अष्टावी। मेखलावी। द्वयावी। उभयावी। रुजावी। हृदयावी।।
मर्मणश्चेति वक्तव्यम्।
मर्मावी।।
(5782 उपसंख्यानवार्तिकम्।। 2 ।।)
- सर्वत्रामयस्य -
(भाष्यम्) सर्वत्रामयस्योपसंख्यानं कर्तव्यम्। आमयावी।।
(5783 उपसंख्यानवार्तिकम्।। 3 ।।)
- श्रृङ्गवृन्दाभ्यामारकन् -
(भाष्यम्) श्रृङ्गवृन्दाभ्यामारकन् वक्तव्यः। श्रृङ्गारकः। वृन्दारकः।।
(5784 उपसंख्यानवार्तिकम्।। 4 ।।)
- फलबर्हाभ्यामिनच् -
(भाष्यम्) फलबर्हाभ्यामिनच् वक्तव्यः। फलिनः। बर्हिणः।।
(5785 उपसंख्यानवार्तिकम्।। 5 ।।)
- हृदयाच्चालुरन्यतरस्याम् -
(भाष्यम्) हृदयाच्चालुर्वक्तव्योऽन्यतरस्याम्। हृदयालुः। हृदयी। हृदयिकः। हृदयवान्।।
(5786 उपसंख्यानवार्तिकम्।। 6 ।।)
- शीतोष्णतृप्रेभ्यस्तन्न सहते -
(भाष्यम्) शीतोष्णतृप्रेभ्यस्तन्न सहत ःथ्य;ति चालुर्वक्तव्यः। शीतालुः। उष्णालुः। तृप्रालुः।।
(5787 उपसंख्यानवार्तिकम्।। 7 ।।)
- हिमाच्चेलुः -
(भाष्यम्) हिमाच्चेलुर्वक्तव्यः, तन्न सहत ःथ्य;त्येतस्मिन्नर्थे। हिमेलुः।।
(5588 उपसंख्यानवार्तिकम्।। 8 ।।)
- बलाच्चोलः -
(भाष्यम्) बलाच्च ःढ्य;लो वक्तव्यस्तन्न सहत ःथ्य;त्येतस्मिन्नर्थे। बलूलः।।
(5789 उपसंख्यानवार्तिकम्।। 9 ।।)
- वातात्समूहे च -
(भाष्यम्) वातात्समूहे च तन्न सहते ःथ्य;त्येतस्मिन्नर्थे च ःढ्य;लो वक्तव्यः। वातूलः।।
(5790 उपसंख्यानवार्तिकम्।। 10 ।।)
- पर्वमरूद्भ्यां तप् -
(भाष्यम्) पर्वमरूद्भ्यां तप् वक्तव्यः। पर्वतः मरुत्तः।।
(5791 तप्प्रत्याख्यानवार्तिकम्।। 11 ।।)
- ददातिवृत्तं वा -
(भाष्यम्) ददातिवृत्तं वा पुनरेतद्भविष्यति। मरुद्भिर्दत्तो मरुत्तः।।
-5-2-125- आलजाटचौ बहुभाषिणि(2143)
(आलजाटच्प्रत्ययाधिकरणम्)
(एकदेशिभाष्यम्)
कुत्सित ःथ्य;ति वक्तव्यम्।
यो हि सम्यग्बहु भाषते वाग्मीत्येव स भवति।
तत्तर्हि वक्तव्यम्।।
(समाधानभाष्यम्)
न वक्तव्यम्।
नानायोगकरणसामर्थ्यान्न भविष्यति।।
-5-2-126- स्वामिन्नैश्वर्ये (2144)

(निपातनाधिकरणम्)
(अतिव्याप्त्याक्षेपनिरासभाष्यम्)
 ःथ्द्य;ह कस्मान्न भवति -- स्वम् अस्य अस्ति इति ?
नैष दोषः।
नायं प्रत्ययार्थः।
किं तर्हि?।
प्रकृतिविशेषणमेतत्--स्वामिन्नैश्वर्ये निपात्यते ःथ्द्य;ति।।
-5-2-129- वातातीसाराभ्यां कुक्च (2147)
(ःथ्द्य;निप्रत्ययाधिकरणम्)
(उपसंख्यानभाष्यम्)
पिशाचाच्चेति वक्तव्यम्। पिशाचकी वैश्रवणः।।
-5-2-135- पुष्करादिभ्यो देशे (2153)
(948 विधिसूत्रम् ।। 5 । 2 । 2 आ. 62)
(5792 उपसंख्यानवार्तिकम्।। 1 ।।)
- ःथ्द्य;नि प्रकारणे बलाद्बाहूरूपूर्वपदादुपसंख्यानम् -
(भाष्यम्) ःथ्द्य;नि प्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानं कर्तव्यम्। बाहुबली। ःढ्द्य;रुबली।।
(5793 उपसंख्यानवार्तिकम्।। 2 ।।)
- सर्वादेश्च -
(भाष्यम्) सर्वादेश्चेनिर्वक्तव्यः। सर्वधनी। सर्वबीजी। सर्वकेशी।।
(5794 उपसंख्यानवार्तिकम्।। 3 ।।)
- अर्थाच्चासन्निहिते -
(भाष्यम्) अर्थाच्चासन्निहिते ःथ्द्य;निर्वक्तव्यः। अर्थी।।
असंनिहित ःथ्द्य;ति किमर्थम्?
अर्थवान्।।
(5795 उपसंख्यानवार्तिकम्।। 4 ।।)
- तदन्ताच्च -
(भाष्यम्) तदन्ताच्चेति वक्तव्यम्। धान्यार्थी। हिरण्यार्थी।।
(एकदेशिनः तदन्ताच्च ःथ्द्य;ति वार्तिकाक्षेपसमाधानभाष्यम्)
किमर्थं तदन्तादित्युच्यते न तदन्तविधिना सिद्धम्?।
ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।
एवं तर्हि--ःथ्द्य;नन्तेन सह समासो भविष्यति। धान्येनार्थी--धान्यार्थी।
स हि समासो न प्राप्नोति।।
यदि पुनरयमर्थयतेर्णिनिः स्यात्, एवमपि क्रियामेव कुर्वाणे स्यात्। तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽभिप्रायेण गम्यते--अर्थी--अयमनेनेति।।
(सिद्धान्तभाष्यम्)
एवं तर्हि अयमर्थशब्दोऽस्त्येव द्रव्यपदार्थकः।
तद्यथा--अर्थवानयं देश ःथ्द्य;त्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते।
अस्ति क्रियापदार्थको भावसाधनः--अर्थनमर्थ ःथ्द्य;ति।
तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम्। एवं च कृत्वाऽर्थिकप्रत्यर्थिकावपि सिद्धौ भवतः।।
ःथ्द्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्ञ्चमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्।।
।। पादश्च समाप्तः।।
-9-9-999-

# महाभाष्यम्/पञ्चमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nmu
< महाभाष्यम् | पञ्चमोऽध्यायः
-5-3-1- प्राग्दिशो विभक्तिः (2159)
(विभक्तिसंज्ञाऽधिकरणम्)
(वार्तिकावतरणभाष्यम्)
विभक्तित्वे किं प्रयोजनम्?
(5796 विभक्तिसंज्ञाप्रयोजनबोधकवार्तिकम्।। 1 ।।)
- विभक्तित्वे प्रयोजनमित्प्रतिषेधः -
(भाष्यम्) ाःथ्य;दानीम्, न विभक्तौ तुस्माः 1।3।4 ाःथ्य;तीत्वप्रतिषेधः सिद्धो भवति।
यद्येवं किमोत् 5।3।12 क्व प्रेप्सन् दीव्यसे, क्वर्द्धमासाः अत्रापि प्राप्नोति।।
(5797 प्रयोजनवार्तिकम्।। 2 ।।)
- तौ चोक्तम् -
(भाष्यम्) किमुक्तम्?
विभक्तौ तवर्गप्रतिषेधः अतद्धिते ाःथ्य;ति।।
(5798 सूत्रप्रयोजनवार्तिकम्।। 3 ।।)
- ाःथ्य;दमो विभक्तिस्वरश्च -
(भाष्यम्) ाःथ्य;दमो विभक्तिस्वरश्च प्रयोजनम्। ाःथ्य;दः। ाःथ्य;ह। ाःथ्य;दमस्तृतीयादिर्विभक्तिरुदात्ता भवति ाःथ्य;त्येष स्वरः सिद्धो भवति।।
(5799 सूत्रप्रयोजनवार्तिकम्।। 4 ।।)
- त्यदादिविधयश्च -
(भाष्यम्) त्यदादिविधयश्च प्रयोजनम्। यतः, यत्र। कुतः, कुत्र। विभक्तौ ाःथ्य;ति त्यदादिविधयः सिद्धा भवन्ति।।
-5-3-2- किंसर्वनामबहुभ्योऽद्व्यादिभ्यः (2160)
(5800 उपसंख्यानवार्तिकम्।। 1 ।।)
- बहुग्रहणे संख्याग्रहणम् -
(भाष्यम्) बहुग्रहणे संख्याग्रहणं कर्तव्यम्। ाःथ्य;ह मा भूत्--बहौ, बहोः--ाःथ्य;ति।।
(आक्षेपभाष्यम्)
अथ किमर्थं किम उपसंख्यानं क्रियते न सर्वनाम्न ाःथ्य;त्येव सिद्धम्?
(5801 समाधानवार्तिकम्।। 2 ।।)
- द्व्यादिप्रतिषेधात्किम उपसंख्यानम् -
(भाष्यम्) द्व्यादिप्रतिषेधात्किम उपसंख्यानं क्रियते। अद्व्यादिभ्यः ाःथ्य;ति प्रतिषेधे प्राप्ते किम उपसंख्यानं क्रियते।।
-5-3-5- एतदोऽन् (2163)
(आदेशाधिकरणम्)
(नकारप्रयोजनभाष्यम्)
क्वायं नकारः श्रूयते?
न क्वचित् श्रूयते, लोपोऽस्य भवति नलोपः प्रातिपदिकान्तस्य 8।2।7 ाःथ्य;ति।
यदि न क्वचित् श्रूयते, किमर्थमुच्चार्यते?
अनेकाल्शित्सर्वस्य 1।1।55 ाःथ्य;ति सर्वादेशो यथा स्यात्।।
(प्रयोजनाक्षेपभाष्यम्)
क्रियमाणेऽपि वै नकारे सर्वादेशो न प्राप्नोति।
किं कारणम्?
नलोपे कृते एकाल्त्वात्।
ाःथ्य;दमिह संप्रधार्यम्--नलोपः क्रियताम्, सर्वादेश ाःथ्य;ति।
किमत्र कर्तव्यम्?
परत्वान्नलोपः।
असिद्धो नलोपः, तस्यासिद्धत्वात्सर्वादेशो भवति।।
(समाधानभाष्यम्)

परिगणितेषु कार्येषु नलोपोऽसिद्धः, न चेदं तत्र परिगण्यते।
एवं तर्ह्यानुपूर्व्या सिद्धमेतत्। नात्राकृते सर्वादेशे प्रातिपदिकसंज्ञा प्राप्नोति, न चाकृतायां प्रातिपदिकसंज्ञायां नलोपः प्राप्नोति।
तदानुपूर्व्या सिद्धमेतत्।।
(एकदेशिनो नकाराक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्। अलोऽन्त्यस्य विधयो भवन्तीति--अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेण नकारं सर्वादेशो भविष्यति।।
(समाधानभाष्यम्)
अस्त्यन्यदकारस्याकारवचने प्रयोजनम्।
किम्?
येऽन्येऽकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम्।
तद्यथा--मो राजि समः क्वौ 8।3।25 ःथ्य;ति मकारस्य मकारवचनसामर्थ्यादनुस्वारादयो न भवन्ति।
तस्मान्नकारः कर्तव्यः।।
(सिद्धान्तिनो नकारप्रत्याख्यानभाष्यम्)
न कर्तव्यः।
क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्--अ--अ--अ ःथ्य;ति। सः अनेकाल्शित्सर्वस्य ःथ्य;ति सर्वादेशो भविष्यति।।
(5802 योगविभागे वार्तिकम्।। 1 ।।)
- एतद ःथ्य;ति योगविभागः -
(भाष्यम्) एतद ःथ्य;ति योगविभागः कर्तव्यः। एतदः एत ःथ्य;त् ःथ्य;त्येतावादेशौ भवतो रथोः।
ततः--अन्। अंश्च भवति एतद ःथ्य;ति।।
(वार्तिकावतरणभाष्यम्)
केन विहिते थकारे एतद आदेश उच्यते।।
(5803 उपसंख्यानवार्तिकम्।। 2 ।।)
- एतदश्च थम उपसंख्यानम् -
(भाष्यम्) एतदश्च थम उपसंख्यानं कर्तव्यम्। एतत्प्रकारमित्थम्।।
तत्तर्हि उपसंख्यानं कर्तव्यम्?
(उपसंख्यानानुपयोगे भाष्यम्)
न कर्तव्यम्। एतज्ज्ञापयति--भवत्यत्र थमुरिति यदयं थकारादावादेशं शास्ति।
कुतो नु खल्वेतत्--ज्ञापकादत्र थमुर्भविष्यति, न पुनर्य एवासावविशेषविहितस्थकारादिस्तस्मिन्नादेशः स्यात्। ःथ्य;दमा थकारादिं विशेषयिष्यामः। ःथ्य;दमो यस्थकारादिरिति।।
-5-3-7- पञ्चम्यास्तसिल् (2165)
-5-3-8- तसेश्च (2166)
(तसिलादेशाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
किमर्थं तसेस्तसिलुच्यते?
(5807 प्रयोजनवार्तिकम्।। 1 ।।)
- तसेस्तसिल्वचनं स्वरार्थम् -
(भाष्यम्) तसेस्तसिल्वचनं क्रियते।
किं प्रयोजनम्?
स्वरार्थम्। लिति 6।1।193 प्रत्ययात्पूर्वमुदात्तं भवतीत्येष स्वरो यथा स्यात्।।
(सूत्राक्षेपे समाधानभाष्यम्)
ननु चायं तसिल् तसिं बाधिष्यते।
न सिद्ध्यति।
परत्वात्तसिः प्राप्नोति।
तसिलोऽवकाशः--ततो हीयते, ततोऽवरोहति।
तसेरवकाशः--ग्रामत आगच्छति, नगरत आगच्छति।
ःथ्य;होभयं प्राप्नोति--तत आगच्छति, यत आगच्छतीति। परत्वात्तसिः प्राप्नोति।
तस्मात्सुष्ठूच्यते तसेस्तसिल्वचनं स्वरार्थमिति।।
-5-3-9- पर्यभिभ्यां च (2167)
(तसिलोऽधिकरणम्)
(5808 उपसंख्यानवार्तिकम्।। 1 ।।)

- पर्यभिभ्यां च सर्वोभयार्थे -
(भाष्यम्) पर्यभिभ्यां चेति यदुच्यते तत्सर्वोभयार्थे द्रष्टव्यम्। यावत्सर्वतस्तावत्परितः। यावदुभयतस्तावदभितः।।
-5-3-10- सप्तम्यास्त्रल् (2168)
(त्रल्त्रसिलोरधिकरणम्)
(त्रल्तसिलोः प्रत्ययत्वादेशत्वविचारकभाष्यम्)
ाःथ्य;दं विचार्यते--ाःथ्य;मे तसिलादयो विभक्त्यादेशा वा स्युः परे वेति।
कथं च आदेशाः स्युः, कथं वा परे?
यदि पञ्चम्याः सप्तम्याः ाःथ्य;ति षष्ठी, तदा--आदेशाः।
अथ पञ्चमी, ततः--परे।
कुतः संदेहः?
समानो निर्देशः।
कश्चात्र विशेषः?
(5804 आदेशपक्षे दोषवार्तिकम्।। 1 ।।)
- तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वरगुणदीर्घैत्वौत्वस्मायादिविधिप्रतिषेधः -
(भाष्यम्) तसिलादयो विभक्त्यादेशाश्चेत् सुव्लुक्स्वरगुणदीर्घैत्वौत्वस्मायादिविधीनां प्रतिषेधो वक्तव्यः।
सुब्लुक्-ततस्त्यः, यतस्त्यः। तत्रत्यः, यत्रत्यः। सुपो धातुप्रातिपदिकयोः 2।4।71 ाःथ्य;ति सुब्लुक् प्राप्नोति। सुब्लुक्।।
स्वर--यदा। तदा। अनुदात्तौ सुप्पितौ 3।1।4 ाःथ्य;त्येष स्वरः प्राप्नोति। स्वर।।
गुण--कस्मात्, कुतः। घेर्ङिति 7।3।111 ाःथ्य;ति गुणः प्राप्नोति। गुण।।
दीर्घ--तस्मिन्, तर्हि। अतो दीर्घो यञि सुपि च 7।3।101,102 ाःथ्य;ति दीर्घत्वं प्राप्नोति। दीर्घ।।
एत्व--तेषु, तत्र। बहुवचने झल्येत् 7।3।103 ाःथ्य;त्येवं प्राप्नोति। एत्व।।
औत्व--कस्मिन्, कुत्र। ाःथ्य;दुद्भ्यामौत् अच्चघेः 7।3।117,119 ाःथ्य;त्यौत्वं प्राप्नोति। औत्व।
स्मायादिविधिः--तस्मात्--ततः, तस्मिन्--तत्र। ङसिङ्योः स्मात्स्मिनौ 7।1।15 ाःथ्य;ति स्मायादयः प्राप्नुवन्ति।।
(5805 प्रत्ययत्वपक्षोपपादकवार्तिकम्।। 2 ।।)
- पञ्चमीनिर्देशात्सिद्धम् -
(भाष्यम्) सन्तु परे।।
(प्रत्ययत्वाक्षेपे भाष्यम्)
यदि परे समानशब्दानां प्रतिषेधो वक्तव्यः। तस्मात्तस्यति। यस्मात्तस्यति। पञ्चम्यन्तात्परस्य तसेस्तसिल्भवतीति तसिल् प्राप्नोति।।
(5806 समाधानवार्तिकम्।। 3 ।।)
- अनादेशे स्वार्थविज्ञानात्समानशब्दाप्रतिषेधः -
(भाष्यम्) अनादेशे स्वार्थविज्ञानात्समानशब्दानामप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः।
तसिल्कस्मान्न भवति?
स्वार्थविज्ञानात्। पञ्चम्यन्तात्परस्य तसेः स्वार्थे वर्तमानस्य तसिला भवितव्यम्। न चात्र पञ्चम्यन्तात्परस्तसिः स्वार्थे वर्तते।।
-5-3-14- ाःथ्य;तराभ्योऽपि दृश्यन्ते (2172)
(अतिव्याप्त्याशंकाभाष्यम्)
ाःथ्य;ह कस्मान्न भवति--सः, तौ, ते।।
(उपसंख्यानभाष्यम्)
भवदादिभिर्योगे ाःथ्य;ति वक्तव्यम्।
के पुनर्भवदादयः?
भवान्, दीर्घायुः, देवानांप्रियः, आयुष्मानिति।
स भवान्, तत्र भवान्, ततो भवान्।
तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम्।
तेन भवता, तत्र भवता, ततो भवता।
तस्मै भवते, तत्र भवते, ततो भवते।
तस्माद्भवतः, तत्र भवतः, ततो भवतः।
तस्य भवतः, तत्र भवतः ततो भवतः।
तस्मिन् भवति, तत्र भवति, ततो भवति।।
स दीर्घायुः, तत्र दीर्घायुः, ततो दीर्घायुः।
तं दीर्घायुषम्, तत्र दीर्घायुषम्, ततो दीर्घायुषम्।।
स देवानांप्रियः, तत्र देवानांप्रियः, ततो देवानांप्रियः।

तं देवानांप्रियम्, तत्र देवानांप्रियम्, ततो देवानांप्रियम्।।
स आयुष्मान्, तत्रायुष्मान्, तत आयुष्मान्।
तमायुष्मन्तम्, तत्रायुष्मन्तम्, तत आयुष्मन्तम्।।
-5-3-17- अधुना (2175)
(अधुनाऽधिकरणम्)
(व्युत्पादकभाष्यम्)
अधुनेति किं निपात्यते?
ाःथ्य;दमोऽश्भावो धुना च प्रत्ययः,
ाःथ्य;दमो वा लोपः, अधुना च प्रत्ययः। अस्मिन् काले--अधुना।।
-5-3-18- दानीं च (2176)
(दानींप्रत्ययाधिकरणम्)
(अतिव्याप्त्याशङ्काभाष्यम्)
ाःथ्य;दानीम्। ाःथ्य;दमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः प्राप्नोति।।
(5809 अतिव्याप्तिनिरासवार्तिकम्।। 1 ।।)
- दानीमिति निपातनात्स्वरसिद्धिः -
(भाष्यम्) दानीमिति निपातनात्स्वरसिद्धिर्भविष्यति। आद्युदात्तनिपातनं करिष्यते स निपातनस्वरो विभक्तिस्वरस्य बाधको भविष्यति।।
(5810 प्रकारान्तरेण सिद्धिसाधकवार्तिकम्।। 2 ।।)
- उक्तं वा -
किमुक्तम्?
आदौ सिद्धमिति।।
-5-3-19- तदो दा च (2177)
(दाप्रत्ययाधिकरणम्)
(5811 सूत्रप्रत्याख्यानवार्तिकम्।। 1 ।।)
- तदो दावचनमनर्थकं विहितत्वात् -
(भाष्यम्) तदो दावचनमनर्थकम्।
किं कारणम्?
विहितत्वात्।
विहितोऽत्र दाप्रत्ययः--सर्वैकान्यकिंयत्तदः काले दा 5।3।15 ाःथ्य;ति।।
-5-3-20- तयोर्दार्हिलौ च च्छन्दसि (2178)
(5812 तयोः ाःथ्य;त्यस्यार्थनिर्देशवार्तिकम्।। 1 ।।)
- तयोरिति प्रातिपदिकनिर्देशः -
(भाष्यम्) तयोरिति प्रातिपदिकनिर्देशो द्रष्टव्यः।।
द्वेष्यं विजानीयात्--तयोः--योगयोर्वा प्रत्यययोर्वेति।
तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे--तयोरिति प्रातिपदिकनिर्देश ाःथ्य;ति।।
-5-3-22- सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः (2180)
(निपातनाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
सद्य ाःथ्य;ति किं निपात्यते?
(5813 निपातने प्रकृतिप्रत्ययबोधकवार्तिकम्।। 1 ।।)
- समानस्य सभावो द्यश्चाहनि -
(भाष्यम्) समानस्य सभावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये। समानेऽहनि सद्यः।।
(वार्तिकावतरणभाष्यम्)
परुत्परारीति किं निपात्यते?
(5814 निपातने प्रकृतिप्रत्ययबोधकवार्तिकम्।। 2 ।।)
- पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे -
(भाष्यम्) पूर्वपूर्वतरयोः परभावो निपात्यते, उदारी च प्रत्ययौ संवत्सरेऽभिधेये। पूर्वस्मिन् संवत्सरे परुत्। पूर्वतरे संवत्सरे परारि।।
(वार्तिकावतरणभाष्यम्)
ऐषम ाःथ्य;ति किं निपात्यते?
(5815 निपातने प्रकृतिप्रत्ययबोधकवार्तिकम्।। 3 ।।)

- ः थ्य;दमः समसण् -
(भाष्यम्) ः थ्य;दमः समसण्प्रत्ययो निपात्यते संवत्सरेऽभिधेये। अस्मिन् संवत्सरे--ऐषमः।।
(वार्तिकावतरणभाष्यम्)
परेद्यवीति किं निपात्यते?
(5816 निपातने प्रकृतिप्रत्ययबोधकवार्तिकम्।। 4 ।।)
- परस्मादेद्यव्यहनि -
(भाष्यम्) परस्मादेद्यविप्रत्ययो निपात्यतेऽहन्यभिधये। परस्मिन्नहनि--परद्येवि।।
(वार्तिकावतरणभाष्यम्)
अद्येति किं निपात्यते?
(5817 निपातने प्रकृतिप्रत्ययबोधकवार्तिकम्।। 5 ।।)
- ः थ्य;दमोऽश्भावो द्यश्च -
(भाष्यम्) ः थ्य;दमोऽश्भावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये। अस्मिन्नहनि--अद्य।।
(वार्तिकावतरणभाष्यम्)
पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरिति किं निपात्यते?
(5818 निपातने प्रकृतिप्रत्ययबोधकवार्तिकम्।। 6 ।।)
- पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच् -
(भाष्यम्) पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्प्रत्ययो निपात्यतेऽहन्यभिधेये। पूर्वस्मिन्नहनि--पूर्वेद्युः। अन्यस्मिन्नहनि--अन्येद्युः। अन्यतरस्मिन्नहनि--अन्यतरेद्युः। ः थ्य;तरस्मिन्नहनि--ः थ्य;तरेद्युः। अपरस्मिन्नहनि--अपरेद्युः। अधरस्मिन्नहनि--अधरेद्युः। उभयोरह्नोः--उभयेद्युः। उत्तरस्मिन्नहनि--उत्तरेद्युः।।
(8819 उपसंख्यानवार्तिकम्।। 7 ।।)
- द्युश्चोभयात् -
(भाष्यम्) उभयशब्दाद् द्युश्च वक्तव्यः। तस्मान्मनुष्येभ्य उभयद्युः।।
-5-3-27- दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः (2185)
(अस्तातिप्रत्ययाधिकरणम्)
(अतिव्याप्त्याशङ्काभाष्यम्)
ः थ्य;ह कस्मान्न भवति--पूर्वस्मिन् देशे वसतीति?
(अतिव्याप्तिनिरासभाष्यम्)
नैष देशः, देशविशेषणमेतत्।।
-5-3-28- दक्षिणोत्तराभ्यामतसुच् (2186)
(अतसुच्प्रत्ययाधिकरणम्)
(न्यासाक्षेपभाष्यम्)
किमर्थमतसुच् क्रियते, न तसुजेव क्रियेत?
तत्रायमप्यर्थः--स्वरार्थश्चकारो न कर्तव्यो भवति, प्रत्ययस्वरेणैव सिद्धम्।
का रूपसिद्धिः--दक्षिणतो ग्रामस्य, उत्तरतो ग्रामस्य?
दक्षिणोत्तरशब्दावकारान्तौ तसुशब्दः प्रत्ययः।।
(एकदेशिनः प्रयोजनभाष्यम्)
भवेत्सिद्धम्--यदा अकारान्तौ।।
यदा तु खलु आकारान्तौ तदा न सिद्ध्यति।।
(प्रत्याक्षेपभाष्यम्)
तदाऽपि सिद्धम्।
कथम्?
पुंवद्भावेन।
कथं पुंवद्भावः?
तसिलादिष्वाकृत्वसुचः 6।3।35 ः थ्य;ति।।
(प्रत्याक्षेपसमाधानभाष्यम्)
न सिध्यति। भाषितपुंस्कस्य पुंवद्भावः, न चैतौ भाषितपुंस्कौ।।
(दक्षिणोत्तराशब्दयोर्भाषितपुंस्कत्वाभावबोधकभाष्यम्)
ननु च भोः दक्षिणशब्द उत्तरशब्दश्च पुंसि भाष्येते।
समानायामाकृतौ यद्भाषितपुंस्कमित्युच्यते, आकृत्यन्तरे चैतौ भाषितपुंस्कौ--

दक्षिणोत्तरेति दिक्शब्दौ,
दक्षिण उत्तर ःथ्य;ति व्यवस्थाशब्दौ।।
(व्यवस्थावाचित्वेऽपि दिग्वाचकत्वव्यवस्थाभाष्यम्)
यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्युः, कथं यानि दिगपदिष्टानि कार्याणि?
दिशो यदा व्यवस्थां वक्ष्यन्ति।।
(व्यवस्थावाचित्वेऽतिप्रसङ्गापादकभाष्यम्)
यदि तर्हि यो यो दिशि वर्तते स स दिक्शब्दः। रमणीयादिष्वतिप्रसङ्गो भवति--रमणीया दिक्, शोभना दिगिति।।
(अतिप्रसङ्गनिरासभाष्यम्)
अथ मतमेतत्--दिशि दृष्टो दिग्दृष्टः, दिग्दृष्टः शब्दो दिक्शब्द ःथ्य;ति दिशं यो न व्यभिचरति न रमणीयादिष्वतिप्रसङ्गो भवति।
पुंवद्भावस्तु न प्राप्नोति।
एवं तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः--दक्षिणोतरपूर्वाणामित्येवमर्थम्।।
(न्यासप्रयोजनभाष्यम्)
विशेषणार्थं तर्हि।
क्व विशेषणार्थेनार्थः?
षष्ठ्यतसर्थप्रत्ययेन 2|3|30 ःथ्य;ति। षष्ठी तसर्थप्रत्ययेनेत्युच्यमाने ःथ्य;हापि स्यात्--ततो ग्रामात्, यतो ग्रामादिति।।
-5-3-31- उपर्युपरिष्टात् (2189)
(निपातनाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
उपर्युपरिष्टादिति किं निपात्यते?
(5820 सूत्रार्थनिर्देशवार्तिकम्।। 1 ।।)
- ःढ्य;र्ध्वस्योपभावो रिल्रिष्टातिलौ च -
(भाष्यम्) ःढ्य;र्ध्वस्योपभावो रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते। उपरि, उपरिष्टात्।।
-5-3-32- पश्चात् (2190)
(वार्तिकावतरणभाष्यम्)
पश्चादिति किं निपात्यते?
(5821 सूत्रार्थप्रत्यायकवार्तिकम्।। 1 ।।)
- अपरस्य पश्चभाव आतिश्च प्रत्ययः -
(भाष्यम्) अपरस्य पश्चभावो निपात्यते, आतिश्च प्रत्ययः। पश्चात्।।
(5822 उपसंख्यानवार्तिकम्।। 2 ।।)
- दिक्पूर्वपदस्य च -
(भाष्यम्) दिक्पूर्वपदस्य चापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः। दक्षिणपश्चात्, उत्तरपश्चात्।।
(5823 उपसंख्यानवार्तिकम्।। 3 ।।)
- अर्धोत्तरपदस्य च समासे -
(भाष्यम्) अर्धोत्तरपदस्य च समासे अपरस्य पश्चभावो वक्तव्यः। दक्षिणपश्चार्धः, उत्तरपश्चार्धः।।
(5824 उपसंख्यानवार्तिकम्।। 4 ।।)
- अर्धे च -
(भाष्यम्) अर्धे च परतोऽपरस्य पश्चभावो वक्तव्यः। पश्चार्धः।।
-5-3-35- एनबन्यतरस्यामदूरेऽपञ्चम्याः (2193)
(एनप्प्रत्ययाधिकरणम्)
(5825 अनुवृत्तिनिर्द्धारकवार्तिकम्।। 1 ।।)
- अपञ्चम्या ःथ्य;ति प्रागसः -
(भाष्यम्) अपञ्चम्या ःथ्य;ति यदुच्यते प्रागसस्तद् द्रष्टव्यम्।
द्वेष्यं विजानीयात् अविशेषेण ःथ्य;त उत्तरमपञ्चम्या ःथ्य;ति। तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे--अपञ्चम्या ःथ्य;ति प्रागसः ःथ्य;ति।।
-5-3-36- दक्षिणादाच् (2194)
(आच्प्रत्ययाधिकरणम्)
(चकारप्रयोजनभाष्यम्)
किमर्थश्चकारः?
स्वरार्थः,
चितोऽन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात्।।

(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम्। एकाजयं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन। प्रत्ययस्वरेणैव सिद्धम्।।
(सिद्धान्तिनः समाधानभाष्यम्)
विशेषणार्थस्तर्हि।
क्व विशेषणार्थेनार्थः?
अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते 2।3।39।।
-5-3-42- संख्याया विधार्थे धा (2200)
(धाप्रत्ययाधिकरणम्)
(विधार्थजिज्ञासाभाष्यम्)
विधार्थ ःथ्य;त्युच्यते, को विधार्थो नाम?
विधाया अर्थो विधार्थः।।
यद्येवम्--एका गोविधा, एका हस्तिविधा--अत्रापि प्राप्नोति।
एवं तर्हि--
(5826 विधार्थनिर्धारकवार्तिकम्।। 1 ।।)
- धाविधानं धात्वर्थपृथग्भावे -
(भाष्यम्) धाविधानं धात्वर्थपृथग्भाव ःथ्य;ति वक्तव्यम्।
(धात्वर्थपृथग्भावजिज्ञासाभाष्यम्)
कः पुनर्धात्वर्थपृथग्भावः?
किं यत्तद्देवदत्तः कंसपात्र्यां पाणिना ओदनं भुङ्क्त ःथ्य;ति।
नेत्याह।
कारकपृथक्त्वमेतत्।।
यत्तर्हि तत्--कल्ये भुङ्क्ते, सायं भुङ्क्त ःथ्य;ति।
नेत्याह।
कालपृथक्त्वमेतत्।।
यत्तर्हि शीतं भुङ्क्ते, उष्णं भुङ्क्ते ःथ्य;ति।
नेत्याह।
गुणपृथक्त्वमेतत्।।
(धात्वर्थपृथग्भावनिर्द्धारकभाष्यम्)
कस्तर्हि धात्वर्थपृथग्भावः?
कारकाणां प्रवृत्तिविशेषः--क्रिया।।
यद्येवं क्रियाप्रकारेऽयं भवति। विधयुक्तगताश्च प्रकारे भवन्ति। एवंविधम्, एवंयुक्तम्, एवंगतम्--एवंप्रकारमिति।।
-5-3-44- एकाद्धो ध्यमुञन्यतरस्याम् (2202)
(ध्यमुञोऽधिकरणम्)
(5827 पूर्वपक्षिवार्तिकम्।। 1 ।।)
- सहभावे ध्यमुञ् -
(भाष्यम्) सहभावे ध्यमुञ् वक्तव्यः। ऐकध्यं राशिं कुरु।
स तर्हि वक्तव्यः?
(समाधानभाष्यम्)
न वक्तव्यः। अधिकरणविचाले ःथ्य;त्युच्यते, न चावश्यं स एवाधिकरणविचालः--यदेकमनेकं क्रियते, यदप्यनेकमेकं क्रियते सोऽप्यधिकरणविचालः।।
-5-3-45- द्वित्र्योश्च धमुञ् (2203)
(धमुञोऽधिकरणम्)
(5828 उपसंख्यानवार्तिकम्।। 1 ।।)
- धमुञन्तात् स्वार्थे डदर्शनम् -
(भाष्यम्) धमुञन्तात्स्वार्थे डो दृश्यते, स च विधेयः। पथि द्वैधानि। संशये द्वैधानि।।
-5-3-47- याप्ये पाशप् (2205)
(पाशपोऽधिकरणम्)
(5829 याप्यार्थबोधकवार्तिकम् ।। 1 ।।)
- पाशपि कुत्सितग्रहणम् -

(भाष्यम्) पाशपि कुत्सितग्रहणं कर्तव्यम्। वैयाकरणपाशः। याज्ञिकपाशः।
यो हि यापयितव्यो याप्यः तत्र मा भूदिति।।
(अतिप्रसक्तिनिवारकभाष्यम्)
अथ वैयाकरणः शरीरेण कृशो व्याकरणेन च शोभनः, कर्तव्यो वैयाकरणपाश ः१थ्य;ति।
न कर्तव्यः।
कथम्?
यस्य भावाद् द्रव्ये शब्दनिवेशस्तदबिधाने--तद्गुणे वक्तव्ये प्रत्ययेन भवितव्यम्। न च कार्श्यस्य भावात् द्रव्ये वैयाकरणशब्दः।।
-5-3-48- पूरणाद्भागे तीयादन् (2206)
(अन्प्रत्ययाधिकरणम्)
(पूरणग्रहणप्रयोजनभाष्यम्)
पूरणग्रहणं शक्यमकर्तुम्, न ह्यपूरणस्तीयशब्दोऽस्ति यत्र दोषः स्यात्।
ननु चायमस्ति--मुखतीयः, पार्श्वतीय ः१थ्य;ति।
अर्थवद्ग्रहणे नानर्थकस्य--ः१थ्य;त्येवमस्य न भविष्यति।
उत्तरार्थं तर्हि पूरणग्रहणं कर्तव्यम्--प्रागेकादशभ्योऽच्छन्दसि(49) ः१थ्य;ति पूरणाद्यथा स्यात्।।
-5-3-52- एकादाकिनिच्चासहाये (2210)
(आकिनिचोऽधिकरणम्)
(5830 पूर्वपक्षिण उपसंख्यानवार्तिकम्।। 1 ।।)
- एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम् -
(भाष्यम्) एकादाकिनिचि द्विबह्वर्थे प्रत्ययो विधेयः। एकाकिनौ। एकाकिन ः१थ्य;ति।
किं पुनः कारणं न सिध्यति?
एकशब्दोऽयं संख्यापदम्, संख्यायाश्च संख्येयमर्थः।।
(5831 समाधानवार्तिकम्।। 2 ।।)
- सिद्धं तु संख्यादेशवचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
द्विबह्वर्थायाः संख्याया एकशब्द आदेशो वक्तव्यः।।
(5832 प्रकारान्तरेण समाधानवार्तिकम्।। 3 ।।)
- असहायस्य वा -
(भाष्यम्) असहायस्य वा एकशब्द आदेशो वक्तव्यः। असहायः-एकाकी। असहायौ-एकाकिनौ। असहायाः-एकाकिनः।
सिद्ध्यति।
सूत्रं तर्हि भिद्यते।।
(सिद्धान्तभाष्यम्)
यथान्यासमेवास्तु।
ननु चोक्तमेकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानमिति।
नैष दोषः।
अयमेकशब्दोऽस्त्येव संख्यापदम्। तद्यथा--एकः, द्वौ, बहव ः१थ्य;ति।
अस्त्यन्यार्थे वर्तते। तद्यथा--सधमादो द्युम्न एकास्ताः। अन्या ः१थ्य;त्यर्थः।
अस्त्यसहायवाची। तद्यथा--एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रैर्जितमिति।
तद्योऽसहायवाची तस्यैष प्रयोगः।।
ः१थ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्ञ्चमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।।
-5-3-55- अतिशायने तमबिष्ठनौ (2213)
(तमपोऽधिकरणम्)
(अतिशयनार्थबोधकभाष्यम्)
अतिशायन ः१थ्य;त्युच्यते--किमिदमतिशायन ः१थ्य;ति?
देश्याः सूत्रनिबन्धाः क्रियन्ते। यावद् ब्रूयात्प्रकर्षे अतिशय ः१थ्य;ति तावदतिशायन ः१थ्य;ति।।
(प्रकर्षान्वयबोधकभाष्यम्)
कस्य पुनः प्रकर्षे प्रत्यय उत्पद्यते?
ङ्याप्प्रातिपदिकात्(4।1।1) ः१थ्य;ति वर्तते, ङ्याप्प्रातिपदिकस्य प्रकर्षे।
ङ्याप्प्रातिपदिकं वै शब्दः, न च शब्दस्य प्रकर्षापकर्षौ स्तः।

शब्देऽसंभवादर्थे कार्यं विज्ञास्यते।।
(प्रातिपदिकार्थप्रदर्शकभाष्यम्)
कः पुनर्ङ्याप्प्रातिपदिकार्थः?
द्रव्यम्। न वै द्रव्यस्य प्रकर्ष िःथ्य;ष्यते।
एवं तर्हि--गुणः।।
(एकदेशिन गुणोपसंख्यानभाष्यम्)
एवमपि गुणग्रहणं कर्तव्यम्। द्रव्यमपि ङ्याप्प्रातिपदिकार्थो गुणोऽपि। तत्र कुत एतत्--गुणस्य प्रकर्षे भविष्यति, न पुनर्द्रव्यस्य प्रकर्ष िःथ्य;ति।।
(एकदेशिनः समानोपसंख्यानभाष्यम्)
क्रियमाणे चापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम्, शुक्लात्कृष्णे मा भूदिति।।
(प्रत्याक्षेपभाष्यम्)
न तर्हीदानीमिदं भवति--अध्वर्युर्वै श्रेयान्, पापीयान्प्रतिप्रस्थाता, अन्धानां काणतम िःथ्य;ति?
(प्रत्याक्षेपपरिहारभाष्यम्)
समानगुणे एषा स्पर्धा भवति--अध्वर्युर्वै श्रेयान् अन्येभ्यः प्रशस्येभ्यः। पापीयान् प्रतिप्रस्थाता अन्येभ्यः पापेभ्यः। अन्धानां काणतम िःथ्य;ति कणिरयं सौक्ष्म्ये वर्तते। सर्व िःथ्य;मे किंचित्पश्यन्ति, अयमेषां काणतम िःथ्य;ति।।
(एकदेशिन उपसंख्यानभाष्यम्)
अदूरविप्रकर्ष िःथ्य;ति वक्तव्यम्।
िःथ्य;ह मा भूत्--महान् सर्षपः, महान् हिमवानिनिति।।
(एकदेशिन उपसंख्यानभाष्यम्)
जातेर्नेति वक्तव्यम्।
िःथ्य;ह मा भूत्--वृक्षोऽयम्, प्लक्षोऽयमिति।।
(प्रत्याक्षेपभाष्यम्)
न तर्हीदानीमिदं भवति--गोतरः, गोतरा, अश्वतरः, अश्वतरा--ःथ्य;ति।
(प्रत्याक्षेपसमाधानभाष्यम्)
नैष जातेः प्रकर्षः।
कस्य तर्हि?
गुणस्य।
गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च।
गौरियं या समां समां विजायते, गोतरेयं या समां समां विजायते स्त्रीवत्सा च।
अश्वोऽयं यश्चात्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ योजनानि गच्छति।।
(एकदेशिन उपसंख्यानभाष्यम्)
तथा तिङश्च 5|3|56 िःथ्य;त्यत्र क्रियाग्रहणं कर्तव्यम्, साधनप्रकर्षे मा भूत्।।
(एकदेशिमतानां समाधानभाष्यम्)
नैष दोषः।
यत्तावदुच्यते--गुणग्रहणं कर्तव्यम् िःथ्य;ति।
न कर्तव्यम्। यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति। गुणस्य चैव प्रकर्षो न द्रव्यस्य।
कथं ज्ञायते?
एवं हि दृश्यते लोके--ःथ्य;ह समाने आयामे विस्तारे पटस्यान्योऽर्घो भवति काशिकस्य, अन्यो माथुरस्य।
गुणान्तरं च खल्वपि शिल्पिन उत्पादयमाना द्रव्यान्तरेण प्रक्षालयन्ति। अन्येन शुद्धं धौतकं कुर्वन्ति, अन्येन शैफालिकम्, अन्येन माध्यमिकम्।।
(एकदेश्याक्षेपस्य समाधानभाष्यम्)
यदप्युच्यते--क्रियमाणे चापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम्, शुक्लात्कृष्णे मा भूत् िःथ्य;ति।
न कर्तव्यम्।
समानगुण एव स्पर्धा भवति, न ह्याढ्याभिरूपौ स्पर्धेते।
वाचकेन खल्वप्युत्पत्तव्यम्, न च शुक्लात्कृष्णे प्रत्यय उत्पद्यमानो वाचकः स्यात्।।
(एकदेश्याक्षेपस्य समाधानभाष्यम्)
यदप्युच्यते--अदूरविप्रकर्ष िःथ्य;ति वक्तव्यम् िःथ्य;ति।
न वक्तव्यम्।
अदूरविप्रकर्षे एव स्पर्धा भवति, न हि निष्कधनः शतनिष्कधनेन स्पर्धते।।

(एकदेश्याक्षेपस्य समाधानभाष्यम्)
यदप्युच्यते--जातेर्नेति वक्तव्यम् ःथ्य;ति।
न वक्तव्यम्।
जननेन या प्राप्यते सा जातिः, न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः।।
(एकदेश्याक्षेपस्य समाधानभाष्यम्)
यदप्युच्यते--तिङश्च ःथ्य;त्यत्र क्रियाग्रहणं कर्तव्यम्, साधनप्रकर्षे मा भूत्--ःथ्य;ति।
न कर्तव्यम्।
साधनं वै द्रव्यं, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः।।
(शौक्ल्यगुणस्यैकत्वप्रस्थापकभाष्यम्)
किं पुनरेकं शौक्ल्यमाहोस्विन्नाना?
किं चातः?
यद्येकं, प्रकर्षो नोपपद्यते। न हि तेनैव तस्य प्रकर्षो भवति।
अथ नाना, समानगुणग्रहणं कर्तव्यम्--शुक्लात् कृष्णे मा भूदिति।
अस्त्वेकं शौक्लयं, तत्तु विशेषवत्।।
(गुणे विशेषप्रतिपादकभाष्यम्)
किं कृतो विशेषः?
अल्पत्वमहत्त्वकृतः।
अथवा पुनरस्त्वेकं निर्विशेषं च।
ननु चोक्तं प्रकर्षो नोपपद्यते न हि तेनैव तस्य प्रकर्षो भवति ःथ्य;ति।
गुणान्तरेण प्रच्छादनात् प्रकर्षो भविष्यति।।
(नानात्वेऽपि दोषाभावप्रतिपादकभाष्यम्)
अथवा पुनरस्तु नाना। ननु चोक्तं--समानगुणग्रहणं कर्तव्यम्, शुक्लात् कृष्णे मा भूत् ःथ्य;ति।
न कर्तव्यम्। समानगुण एव स्पर्धा भवति। न ह्याढ्याभिरूपौ स्पर्धेते।।
वाचकेन खल्वप्युत्पत्तव्यम्, न च शुक्लात्कृष्णे उत्पद्यमानो वाचकः स्यात्।।
(अतिशायनार्थस्य प्रत्ययार्थत्वं प्रकृतिविशेषणत्वं वेतिविचारभाष्यम्)
किमन्तात्पुनरुत्पत्त्या भवितव्यम्?
(अतिशायनार्थस्यप्रत्ययार्थत्वप्रस्थापकभाष्यम्)
द्वितीयाऽन्तात् अतिशय्यमानात्। शुक्लमतिशेते--शुक्लतरः। कृष्णमतिशेते--कृष्णतरः।।
(प्रत्ययार्थत्वे दोषदर्शकभाष्यम्)
यदि द्वितीयान्तादतिशय्यमानात्--
कालोऽतिशेते कालीम्--कालितर ःथ्य;ति प्राप्नोति, कालतर ःथ्य;ति चेष्यते।
तथा काली अतिशेते कालम्--
कालतरा ःथ्य;ति प्राप्नोति, कालितरेति चेष्यते।
तथा गार्ग्योऽतिशेते गर्गान्--
गर्गतर ःथ्य;ति प्राप्नोति, गार्ग्यतर ःथ्य;ति चेष्यते।
तथा गर्गा अतिशेरते गार्ग्यं--गार्ग्यतरा ःथ्य;ति प्राप्नोति, गर्गतरा ःथ्य;ति चेष्यते।।
(अतिशायनार्थस्य प्रकृत्यविशेषणत्वाभिप्रायकभाष्यम्)
एवं तर्हि प्रथमान्तात्स्वार्थिको भविष्यति--कालोऽतिशेते--कालतरः। काली अतिशेते--कालितरा। गार्ग्योऽतिशेते--गार्ग्यतरः। गर्गा अतिशेरते--गर्गतराः।।
(प्रकृत्यर्थविशेषणत्वे दोषदर्शकभाष्यम्)
यदि प्रथमान्तात्स्वार्थिकः--कुमारितरा, किशोरितरा--अव्यतिरिक्तं वय ःथ्य;ति कृत्वा वयसि प्रथमे 4।1।20 ःथ्य;ति ङीप् प्राप्नोति।
तरपोक्तत्वात् स्त्रीत्वस्य प्रत्ययो न भविष्यति।
टाबपि तर्हि न प्राप्नोति।
उक्तेऽपि हि भवन्त्येते टाबादयः। उक्तमेतत्--स्वार्थिकाष्टाबादय ःथ्य;ति।
ङीबपि तर्हि प्राप्नोति।।
(अतिशायनशब्देन प्रकृत्यर्थगतगुणाभिधानप्रस्तावभाष्यम्)
एवं तर्हि गुणोऽभिधीयते।।
(गुणाभिधाने दोषदर्शनपूर्वकं तन्निराकरणभाष्यम्)
एवमपि लिङ्गवचनानि न सिध्यन्ति--शुक्लतरम्। शुक्लतरा। शुक्लतरः। शुक्लतरौ। शुक्लतरा ःथ्य;ति।

आश्रयतो लिङ्गवचनानि भवन्ति। गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा--शुक्लं वस्रं, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला ः१थ्य;ति।
यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भविष्यति।।
(अतिशायनशब्देन प्रकृत्यर्थगतक्रियाऽभिधानप्रस्तावभाष्यम्)
अथवा क्रियाऽभिधीयते।।
(क्रियाऽभिधाने दोषदर्शनपूर्वकं तन्निराकरणभाष्यम्)
एवमपि लिङ्गवचनानि न सिध्यन्ति।
आश्रयतो लिङ्गवचनानि भविष्यन्ति।
एवमपि द्विवचनं प्राप्नोति--यश्च हि अतिशेते यश्चातिशय्यते उभौ तौ तस्याश्रयौ भवतः।
नैष दोषः।
कथम्?
शेतिरकर्मकः।
अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति।
कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति, कर्तृस्थभावकश्च शेतिः।।
(एकेनैव न्यासेन पक्षद्वयस्याप्युपपादनपरं भाष्यम्)
अथ यद्येव द्वितीयान्तादुत्पत्तिः, प्रथमान्ताद्वा स्वार्थिकः, अथापि गुणोऽभिधीयते, अथापि क्रिया, किं गतमेतदियता सूत्रेण आहो स्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्तव्यम्?
गतमिंत्याह।
कथम्? यदा तावद् द्वितीयान्तादुत्पत्तिः प्रथमान्ताद्वा स्वार्थिकः, तदा कृत्यल्युटो बहुलम् 3।3।113
ः१थ्य;त्येवमत्र ल्युट् भविष्यति।।
यद गुणोऽभिधीयते तदा न्यायसिद्धमेव।।
यदाऽपि क्रिया तदाऽपि न्यायसिद्धमेव।।
अथवाऽतिशाययतीत्यतिशायनम्।
कः प्रयोज्यार्थः?
गुणा गुणिनं प्रयोजयन्ति,गुणी वा गुणान्परयोजयति।
कः पुनरिह शेत्यर्थः?
ः१थ्य;ह यो यत्र भवति शेतेऽसौ तत्र गुणाश्च गुणिनि शेरते।।
शेत्यर्थः कारितार्थो वा निर्देशोऽयं समीक्षितः।
शेत्यर्थे नास्ति वक्तव्यं कारितार्थं ब्रवीमि ते।।
गुणी वा गुणसंयोगाद् गुणो वा गुणिना यदि।
अभिव्यज्येत संयोगात्कारितार्थो भविष्यति।।
(वार्तिकावतरणभाष्यम्)
ः१थ्य;हास्यापि सूक्ष्माणि वस्त्राणि, अस्यापि सूक्ष्माणि वस्त्राणीति परत्वादातिशायिकः प्राप्नोति।।
(5833 अतिव्याप्तिप्रत्याक्षेपे वार्तिकम्।। 1 ।।)
- अतिशायने बहुव्रीहावुक्तम् -
(भाष्यम्) किमुक्तम्?
ठ पूर्वपदातिशये आतिशायिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः उत्तरपदातिशये आतिशायिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थः ः१थ्य;ति।।
(वार्तिकावतरणभाष्यम्)
ः१थ्य;ह त्रीणि शुक्लानि वस्त्राणि प्रकर्षापकर्षयुक्तानि। तत्र पूर्वमपेक्ष्य उत्तरे द्वे तरबन्ते। तत्र द्वयोस्तरबन्तयोरेकस्मात्प्रकर्षयुक्ताच्छुक्लतरशब्दादुत्पत्तिः प्राप्नोति, शुक्लशब्दादेवेष्यते।।
(5834 अतिव्याप्तिनिरासवार्तिकम्।। 2 ।।)
- शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् -
(भाष्यम्) शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययो विज्ञायते। शुक्लतरशब्दे शुक्लशब्दोऽस्ति तस्मादुत्पत्तिर्भविष्यति।
नैतद्विवदामहे शुक्लतरशब्दे शुक्लशब्दोऽस्ति नास्तीति।
किं तर्हि?
शुक्लतरशब्दोऽप्यस्ति तत उत्पत्तिः प्राप्नोति।।
(5835 अतिव्याप्तिनिरासवार्तिकम्।। 3 ।।)
- तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति -
(भाष्यम्) तदन्तादातिशायिकान्तात्स्वार्थे छन्दसि आतिशायिको दृश्यते--देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे।।

(अतिव्याप्तिनिरासभाष्यम्)
एवं तर्हि--मध्यमात् शुक्लशब्दात्पूर्वपरापेक्षादुत्पत्तिर्वक्तव्या। मध्यमश्च शुक्लशब्दः पूर्वमपेक्ष्य प्रकृष्टः, परमपेक्ष्य न्यूनः। न च न्यूनः प्रवर्तते।।
अथ वा उत्पद्यताम्, लुग्भविष्यति।।
वाचकेन खल्वप्युत्पत्तव्यम्,
न च शुक्लतरशब्दादुत्पद्यमानो वाचकः स्यात्।।
न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम्।
केन तर्हि?
तमपा।
पूर्वेण स्पर्धनामोऽयं मध्यमो लभते सितः।
परस्मिन् न्यूनतामेति न च न्यूनः प्रवर्तते।।
अपेक्ष्य मध्यमःपूर्वमाधिक्यं लभते सितः।
परस्मिन्न्यूनतामेति यथाऽमात्यः स्थिते नृपे।।
अस्तु वाऽपि तरस्तास्मान्नापशब्दो भविष्यति।
वाचकश्चेत्प्रयोक्तव्यो वाचकश्चेत्प्रयुज्यताम्।।
-5-3-57- द्विवचनविभज्योपपदे तरबीयसुनौ (2215)
(तरप्प्रत्ययाधिकरणम्)
(न्यासाक्षेपभाष्यम्)
द्विवचन ः्थ्य;त्युच्यते, तत्रेदं न सिध्यति--दन्तोष्ठस्य दन्ताः स्निग्धतराः पाणिपादस्य पादौ सुकुमारतरौ अस्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतरः ः्थ्य;ति।।
(न्यासान्तरोपपादकभाष्यम्)
यदि पुनर् द्व्यर्थोपपदे ः्थ्य;त्युच्येत, तत्रायमप्यर्थः--विभज्योपपदग्रहणं न कर्तव्यं भवति। ः्थ्य;हापि--सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतराः ः्थ्य;ति द्व्यर्थोपपदे ः्थ्य;त्येव सिद्धम्।।
(न्यासान्तराक्षेपभाष्यम्)
नैवंजातीयिका द्व्यर्थता शक्या विज्ञातुम्।
ः्थ्य;हापि प्रसज्येत--सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमाः ः्थ्य;ति।।
अवश्यं खल्वपि विभज्योपपदग्रहणं कर्तव्यम्। यो हि बहूनां विभागस्तदर्थम्--सांकाश्यकेभ्यश्च पाटलिपुत्रकेभ्यश्च माथुरा अभिरूपतराः ः्थ्य;ति।
तत्तर्हि द्व्यर्थोपपद ः्थ्य;ति वक्तव्यम्।।
(न्यासान्तरनिराकरणभाष्यम्)
न वक्तव्यम्। नेदं पारिभाषिकस्य द्विवचनस्य ग्रहणम्।
किं तर्हि?
अन्वर्थग्रहणम्--उच्यते ः्थ्य;ति वचनम्, द्वयोरर्थयोर्वचनं द्विवचनमिति।
एवमपि--
(5836 एकदेशिन उपसंख्यानवार्तिकम्।। 4 ।।)
- तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानम् -
(भाष्यम्) तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानं कर्तव्यम्। परुद्भवान् पटुरासीत्, पटुतरश्चैषमः ः्थ्य;ति।।
(5837 सिद्धान्तवार्तिकम्।। 5 ।।)
- सिद्धं तु गुणप्रधानत्वात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
गुणप्रधानत्वात्। गुणप्रधानोऽयं निर्देशः क्रियते, गुणान्तरयोगाच्चान्यत्वं भवति। तद्यथा--तमेव गुणान्तरयुक्तं वक्तारो भवन्ति--अन्यो भवान् संवृत्त ः्थ्य;ति।।
-5-3-58- अजादी गुणवचनादेव (2216)
(नियमाधिकरणम्)
(एवकारप्रयोजनभाष्यम्)
एवकारः किमर्थः?
नियमार्थः।
नेतदस्ति प्रयोजनम्,

सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति।।
ः्थ्य;ष्टतोऽवधारणार्थस्तर्हि। यथैवं विज्ञायेत--अजादी गुणवचनादेवेति।
मैवं विज्ञायि--अजादी एव गुणवचनादिति।
किं च स्यात्?
न व्यञ्ञ्जनादी गुणवचनात्स्याताम्।।
-5-3-60- प्रशस्यस्य श्रः(2218)
(श्रादेशाधिकरणम्)
(सूत्रार्थोपपादकभाष्यम्)
ः्थ्य;दमयुक्तं वर्तते।
किमत्रायुक्तम्?
अजादी गुणवचनादेव 58 ः्थ्य;त्युक्त्वा अगुणवचनानामपि अजाद्योरादेशा उच्यन्ते।
नैष दोषः। एतदेव ज्ञापयति--भवत एतेभ्यो।?गुणवचनेभ्योऽपि अजादी ः्थ्य;ति, यदयमजाद्योः परत आदेशान् शास्ति।
एवमपि तयोः ः्थ्य;ति वक्तव्यं स्यात्, तयोः परत ः्थ्य;ति।।
यदि पुनरयं विधिर्ज्ञायेत।
नैवं शक्यम्, व्यञ्ञ्जनादी हि न स्याताम्, उपाधीनां च संकरः स्यात् पुनर्विधानादजाद्योः।
ननु चैते विशेषा अनुवर्तेरन्।
यद्यप्येते अनुवर्तेरन् व्यञ्ञ्जनादी तर्हि न स्याताम्।
एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति--भवत एतेभ्योऽगुणवचनेभ्योऽप्यजादी ः्थ्य;ति--यदयमजाद्योरादेशं शास्ति।
ननु चोक्तं तयोरिति वक्तव्यमिति।
न वक्तव्यम्। प्रकृतमजादिग्रहणमनुवर्तते।
क्व प्रकृतम्?
अजादी गुणवचनादेवेति।
तद्वै प्रथमानिर्दिष्टम्, सप्तमीनिर्दिष्टेन चेहार्थः।
अर्थाद्विभक्तिविपरिणामो भविष्यति। तद्यथा--उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम्; देवदत्तमिति गम्यते।
देवदत्तस्य गावोऽश्वा हिरण्यम्, आढ्यो वैधवेयः; देवदत्त ः्थ्य;ति गम्यते।
पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति।
एवमिहापि--पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्सप्तमीनिर्दिष्टं भविष्यति।।
-5-3-66- प्रशंसायां रूपप् (2224)
(रूपप्प्रत्ययाधिकरणम्)
(प्रशंसायामित्यस्य प्रकृत्यर्थविशेषणबोधकं भाष्यम्)
स्त्रीलिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च। तेन स्त्रीलिङ्गादेवोत्पत्तिः स्यादेकवचनान्ताच्च। पुंनपुंसकलिङ्गात् द्विवचनबहुवचनान्ताच्च न स्यात्।
नैष दोषः। नायं प्रत्ययार्थः।
किं तर्हि?
प्रकृत्यर्थविशेषणमेतत्--प्रशंसायां यत्प्रातिपदिकं वर्तते तस्माद्रूपब्भवति।
कस्मिन्नर्थे?
स्वार्थ ः्थ्य;ति। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।।
(5838 पूर्वपक्षिण उपसंख्यानवार्तिकम्।। 1 ।।)
- प्रकृतेर्लिङ्गवचनाभावात् तिङ्प्रकृतेरम्भाववचनम् -
(भाष्यम्) प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृते रूपपोऽम्भावो वक्तव्यः। पचतिरूपम्, पचतोरूपम्, पचन्तिरूपमिति।।
(5839 सिद्धान्तवार्तिकम्।। 2 ।।)
- सिद्धं तु क्रियाप्रधानत्वात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
क्रियाप्रधानत्वात्।
क्रियाप्रधानमाख्यातं भवति, एका च क्रिया। द्रव्यप्रधानं नाम।।
(आख्यातस्य क्रियाप्राधान्यसाधकं भाष्यम्)
कथं पुनर्ज्ञायते क्रियाप्रधानमाख्यातं भवति, द्रव्यप्रधानं नामेति?
यत्क्रियां पृष्टस्तिङाऽऽचष्टे--किं देवदत्तः करोति? पचतीति।

द्रव्यं पृष्टः कृताऽऽचष्टे--कतरो देवदत्तः? यः कारको हारक ःथ्य;ति।।
(क्रियाप्राधान्येऽपि द्विवचनबहुवचनसाधकभाष्यम्)
यदि तर्ह्येका क्रिया द्विवचनबहुवचनानि न सिद्ध्यन्ति--पचतः, पचन्तीति।
नैतानि क्रियाऽपेक्षाणि,
किं तर्हि?
साधनापेक्षाणि।
ःथ्य;हापि तर्हि प्राप्नुवन्ति--पचतिरूपम्, पचतोरूपम्, पचन्तिरूपमिति।
तिङोक्तत्वात्तस्याभिसंबन्धस्य न भविष्यति।
एकवचनामपि तर्हि न प्राप्नोति?
समयात् भविष्यति।
द्विवचनबहुवचनान्यपि तर्हि समयात्प्राप्नुवन्ति।
एवं तर्हि--एकवचनमुत्सर्गतः करिष्यते, तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने अपवादौ भविष्यतः।
एवमपि नपुंसकत्वं वक्तव्यम्।
न वक्तव्यम्।
लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।।
(5849 पूर्वपक्षिण उपसंख्यानवार्तिकम्।। 3 ।।)
- वृषलादिभ्य उपसंख्यानम् -
(भाष्यम्) वृषलादिभ्य उपसंख्यानं कर्तव्यम्। वृषलरूपः, दस्युरूपः, चोररूप ःथ्य;ति।।
(5841 समाधानवार्तिकम्।। 4 ।।)
- सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
प्रकृत्यर्थस्य वैस्पष्ट्य ःथ्य;ति वक्तव्यम्। वृषलरूपोऽयम्, अप्ययं पलाण्डुना सुरां पिबेत्। चोररूपोऽयम्, अप्ययमक्षणोरञ्जनं हरेत्। दस्युरूपोऽयम्, अप्ययं धावतो लोहितं पिबेत्।।
-5-3-67- ःथ्य;षदसमाप्तौ कल्पब्देश्यदेशीयरः (2225)
(कल्पप्प्रत्ययाधिकरणम्)
(5842 एकदेशिवार्तिकम्।। 1 ।।)
- ःथ्य;षदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः -
(भाष्यम्) ःथ्य;षदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनयोरनुपपत्तिः। पटुकल्पः, पटुकल्पौ, पटुकल्पा ःथ्य;ति।
एकोऽयमर्थ ःथ्य;षदसमाप्तिर्नाम, तस्यैकत्वादेकवचनं प्राप्नोति।।
(5843 सिद्धान्तवार्तिकम्।। 2 ।।)
- प्रकृत्यर्थविशेषणत्वात्सिद्धम् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
नायं प्रत्ययार्थः।
किं तर्हि?
प्रकृत्यर्थविशेषणमेतत्--ःथ्य;षदसमाप्तौ यत्प्रातिपदिकं वर्तते तस्मात्कल्पबादयो भवन्ति।
कस्मिन्नर्थे?
स्वार्थ ःथ्य;ति। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।।
(5844 प्रकृत्यर्थाक्षेपवार्तिकम्।। 3 ।।)
- प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः -
(भाष्यम्) प्रकृत्यर्थे चेल्लिङ्गवचनयोरनुपपत्तिः। गुडकल्पा द्राक्षा। तैलकल्पा प्रसन्ना। पयस्कल्पा यवागूरिति।।
(5845 समाधानवार्तिकम्।। 4 ।।)
- सिद्धं तु तत्संबन्ध उत्तरपदार्थे प्रत्ययवचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
तत्संबन्धेउःथ्य;षदसमाप्तिसंबन्धे उत्तरपदार्थे प्रत्ययो भवतीति वक्तव्यम्।
सिध्यति। सूत्रं तर्हि भिद्यते।
यथान्यासमेवास्तु।।

(यथान्यासे समीहितार्थसाधकभाष्यम्)
ननु चोक्तम् ःथ्य;षदसमासौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः ःथ्य;ति। परिहृतमेतत्-- प्रकृत्यर्थविशेषणत्वात्सिद्धम् ःथ्य;ति।
ननु चोक्तं-- प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः ःथ्य;ति।
नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति--स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति यदयं णचः स्त्रियामञ् (5।4।14) ःथ्य;ति स्त्रीग्रहणं करोति।
यद्येतज्ज्ञाप्यते--बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूरिति, अत्रापि प्राप्नोति।
नाप्यतिवर्तन्ते।।
(सूत्रोदाहरणसंपादकभाष्यम्)
किं पुनरिहोदाहरणम्?
पटुकल्पो मृदुकल्प ःथ्य;ति।
नैतदस्ति। निर्ज्ञातस्यार्थस्य समाप्तिर्वा भवति, विसमाप्तिर्वा, गुणश्चानिर्ज्ञातः।
ःथ्य;दं तर्हि--गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरिति।
द्रव्यमप्यनिर्ज्ञातम्।
ःथ्य;दं तर्हि--कृतकल्पम्, भुक्तकल्पम्, पीतकल्पम्--ःथ्य;ति।।
(5846 कृतकल्पस्योदाहरणत्वाभावबोधकं वार्तिकम्।।5।।)
- क्तान्तात्प्रत्ययविधानानुपपत्तिः, क्तस्य भूतकाललक्षणत्वात्कल्पादीनां चासमाप्तिवचनात् -
(भाष्यम्) क्तान्तात्प्रत्ययविधेरनुपपत्तिः।
किं कारणम्?
क्तस्य भूतकाललक्षणत्वात् भूतकाललक्षणः क्तः। कल्पादीनां चासमाप्तिवचनात् विसमाप्तिवचनाश्च कल्पादयः। न चास्तिसंभवो यद्भूतकालश्च स्यादसमाप्तिश्चेति।।
(5847 कृतकल्पस्योदाहरणत्वसंपादकवार्तिकम्।। 6 ।।)
- सिद्धं तु आशंसायां भूतवद्वचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
आशंसायां भूतवच्च (3।3।132) ःथ्य;त्येवमत्र क्तो भविष्यति।।
(उदाहरणसंपादकं भाष्यम्)
ःथ्य;दं चाप्युदाहरणं--पटुकल्पः, मृदुकल्प ःथ्य;ति।
ननु चोक्तं निर्ज्ञातस्यार्थस्य समाप्तिर्वा भवति विसमाप्तिर्वा गुणश्चानिर्ज्ञातः ःथ्य;ति।
लोकतो व्यवहारं दृष्ट्वा गुणस्य निर्ज्ञानम्। तद्यथा-पटुरयं ब्राह्मण ःथ्य;त्युच्यते--यो लघुनोपायेनार्थान् साधयति। पटुकल्पोऽयमित्युच्यते--यो न तथा साधयति।
ःथ्य;दं चाप्युदाहरणम्--गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरिति।
ननु चोक्तं द्रव्यमप्यनिर्ज्ञातम् ःथ्य;ति।
लोकतो द्रव्यमपि निर्ज्ञातम्।।
-5-3-68- विभाषा सुपो बहुच्पुरस्तात्तु (2226)
(बहुजधिकरणम्)
(विभाषापदप्रयोजनभाष्यम्)
विभाषाग्रहणं किमर्थम्?
विभाषा बहुज्यथा स्याद्, बहुचा मुक्ते वाक्यमपि यथा स्यात्।
नैतदस्ति प्रयोजनम्। प्रकृता महाविभाषा, तया वाक्यमपि भविष्यति।।
ःथ्य;दं तर्हि प्रयोजनम्--कल्पादयोऽपि यथा स्युः ःथ्य;ति।
एतदपि नास्ति प्रयोजनम्, बहुजप्युच्यते कल्पादयोऽपि, तदुभ्यं वचनाद्भविष्यति।
नैवं शक्यम्। अक्रियमाणे हि विभाषाग्रहणेऽनवकाशो बहुच् कल्पादीन् बाधेत।
कल्पादयोऽप्यनवकाशाः, ते वचनाद्भविष्यन्ति।
सावकाशाः कल्पादयः।
कोऽवकाशः?
तिङन्तान्यवकाशः।।
(सुप्पदप्रयोजनखण्डनभाष्यम्)
अथ सुब्ग्रहणं किमर्थम्?
सुबन्तादुत्पत्तिर्यथा स्यात्, प्रातिपादिकान्मा भूदिति।
नैतदस्ति प्रयोजनम्। नास्त्यत्र विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा।।

यद्येवम्--ाथ्य;हापि नार्तः सुब्ग्रहणेन--सुप आत्मनः क्यज् 3।1।8 ाथ्य;ति। ाथ्य;हापि नास्ति विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा। अयमस्ति विशेषः--सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति। प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति। ननु च प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा।
कथम्?
आरभ्यते नः क्ये 1।4।15 ाथ्य;ति।
तच्चावश्यं वक्तव्यम्--सुबन्तादुत्पत्तौ सत्यां नियमार्थम्, तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति।।
ाथ्य;दं तर्हि प्रयोजनम्--सुबन्तादुत्पत्तिर्यथा स्यात्, तिङन्तान्मा भूदिति।
एतदपि नास्ति प्रयोजनम्। ङ्याप्प्रातिपदिकात्(4।1।1) ाथ्य;ति वर्तते।
अत उत्तरं पठति--
(5848 सुप्प्रयोजनवार्तिकम्।। 1 ।।)
- बहुचि सुब्ग्रहणात्पूर्वत्र तिङो विधानम् -
(भाष्यम्) बहुचि सुब्ग्रहणं क्रियते, पूर्वत्र तिङो विधिर्यथा विज्ञायेत।
नैतदस्ति प्रयोजनम्। प्रकृतं तिङ्ग्रहणमनुवर्तते।
क्व प्रकृतम्?
अतिशायने तमबिष्ठनौ 5।3।55 तिङश्च 56 ाथ्य;ति।।
(वार्तिके न्यासान्तरबोधकभाष्यम्)
एवं तर्हि--बहुचि सुब्ग्रहणं पूर्वत्र तिङो विधानात् बहुचि सुब्ग्रहणं क्रियते।
किं कारणम्?
पूर्वत्र तिङो विधानात्। पूर्वत्र तिङश्चेत्यनुवर्तते, तदिहापि प्राप्नोति।
ननु च तिङ्ग्रहणं निवर्तते। अवश्यमुत्तरार्थमनुर्वत्यन्ते--अव्ययसर्वनाम्नामकच्प्राक् टेः 5।3।71 ाथ्य;ति। पचतकि, जल्पतकीत्येवमर्थम्।।
यदि सुब्ग्रहणं क्रियते, स्वरो न सिध्यति। बहुपटवः एवं स्वरः प्रसज्येत, बहुप्टव ाथ्य;ति चेष्यते।
पठिष्यति ह्याचार्य्यः-- चितः सप्रकृतेर्बह्वकजर्थम् ाथ्य;ति स्वरः कथम्?
(5849 स्वरसाधकवार्तिकम्।। 2 ।।)
- स्वरः प्रातिपदिकत्वात् -
(भाष्यम्) सुब्लुकि कृते प्रातिपदिकत्वात्स्वरो भविष्यति।।
(तुपदाक्षेपभाष्यम्)
अथ तुग्रहणं किमर्थम्।।
(5650 तुपदप्रयोजनवार्तिकम्।। 3 ।।)
- तुग्रहणं नित्यपूर्वार्थम् -
(भाष्यम्) तुग्रहणं क्रियते--नित्यं पूर्वो यथा स्यात्, विभाषा मा भूदिति।
नैतदस्ति प्रयोजनम्। न विभाषाग्रहणेन पूर्वमभिसंबध्यते।
किं तर्हि?
बहुजभिसंबध्यते--विभाषा बहुज्भवतीति। यदा च भवति तदा नित्यं पूर्वो भवतीति।।
ाथ्य;दं तर्हि प्रयोजनम्--प्रागुत्पत्तेर्यल्लिङ्गं वचनं च तदुत्पन्नेऽपि प्रत्यये यथा स्यात्। बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूरिति।
एतदपि नास्ति प्रयोजनम्।
स्वार्थिकोऽयम्, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।।
एवं तर्हि सिद्धे सति यत्तुग्रहणं करोति तज्ज्ञापयत्याचार्यः--स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति।
किमेतस्य ज्ञापने प्रयोजनम्?
गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत्सिद्धं भवति।।
(5851 विप्रतिषेधोपसंख्यानवार्तिकम्।। 4 ।।)
- तमादिभ्यः कल्पादयो विप्रतिषेधेन -
(भाष्यम्) तमादिभ्यः कल्पादयो भवन्ति विप्रतिषेधेन।
तमादीनामवकाशः--प्रकर्षस्य वचनम्, ाथ्य;षदसमाप्तेरवचनम्। पटुतरः, पटुतमः।
कल्पादीनामवकाशः--ाथ्य;षदसमाप्तेर्वचनं, प्रकर्षस्यावचनम्। पटुकल्पः, मृदुकल्पः।
उभयवचने उभयं प्राप्नोति--पटुकल्पतरः, मृदुकल्पतरः। कल्पादयो भवन्ति विप्रतिषेधेन।।
(वार्तिकोक्तविप्रतिषेधाक्षेपभाष्यम्)
यद्येवमीषदसमाप्तेः प्रकर्षे तमादिः प्रत्ययः प्राप्नोति, प्रकृतेरेव च प्रकर्ष ाथ्य;ष्यते।।
(5852 समाधानवार्तिकम्।। 5 ।।)
- तमादिरीषत्प्रधानत्वात् -

(भाष्यम्) तमादिरीषत्प्रधानादपि भवन् यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति।
कस्य च प्रकर्षोऽस्ति?
प्रकृतेरेव।।
-5-3-71- अव्ययसर्वनाम्नामकच्प्राक् टेः (2229)
-5-3-72- कस्य च दः (2230)
(अकजधिकरणम्)
(अकच्प्रकृतिनिर्धारकभाष्यम्)
किमयं सुबन्तस्य प्राक् टेर्भवति, आहोस्वित् ङ्याप्प्रातिपदिकस्य?
कुतः संदेहः?
उभयं प्रकृतम्, अन्यतरच्छक्यं विशेषयितुम्।
किं चातः?
यदि सुबन्तस्य--युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोरिति न सिध्यति।
अथ प्रातिपदिकस्य--त्वयका, मयका, त्वयकि, मयकि--ःथ्य;त्यत्रापि प्राप्नोति।
अस्तु सुबन्तस्य।
कथं--युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोरिति?
अनोकारसकारभकारादाविति वक्तव्यम्।।
(5853 उपसंख्यानवार्तिकम्।। 1 ।।)
- अकच्प्रकरणे तूष्णीमः काम् -
(भाष्यम् अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः।
आसितव्यं किल तूष्णीकामेतत्पश्यत चिन्तितम्।।
(5854 उपसंख्यानवार्तिकम्।। 2 ।।)
- शीले को मलोपश्च -
(भाष्यम्) शीले को मलोपश्च वक्तव्यः। तूष्णीं शीलः--तूष्णीकः।।
(नानादेशप्रत्ययानां बाध्यबाधकभावबोधकभाष्यम्
ःथ्य;ह--भिनत्ति, च्छिनत्तीति श्नमि कृते शप् प्राप्नोति।
बहुकृतम्, बहुभुक्तं, बहुपीतं--बहुचि कृते कल्पादयः प्राप्नुवन्ति।
उच्चकैः, नीचकैः--अकचिकृते कादयः प्राप्नुवन्ति।
ननु च श्नम्बहुजकचोऽपवादास्ते बाधका भविष्यन्ति।।
(5855 नानादेशानां बाधकत्वबोधकवार्तिकम्।। 3 ।।)
- श्नमब्हुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेधः -
(भाष्यम्0 श्नम्बहुजकक्षु नानादेशत्वादुत्सर्गस्य प्रतिषेधो वक्तव्यः। समानदेशैरपवादैरुत्सर्गाणां बाधनं भवति, नानादेशत्वान्न प्राप्नोति।।
(5856 पूर्वविप्रतिषेधबोधकवार्तिकम्।। 4 ।।)
- कविधेस्तमादयः पूर्वविप्रतिषिद्धम् -
(भाष्यम्) कविधेस्तमादयो भवन्ति पूर्वविप्रतिषेधेन।
कविधेरवकाशः--कुत्सादीनां वचनं प्रकर्षस्यावचनम्--पटुकः, मृदुकः।
तमादीनामवकाशः--प्रकर्षस्य वचनं कुत्सादीनामवचनम्--पटुतरः, पटुतमः। उभयवचने उभयं प्राप्नोति--पटुतरकः, पटुतमकः।
तमादयो भवन्ति पूर्वविप्रतिषेधेन।।
(5857 विप्रतिषेध बोधकवार्तिकम्।। 5 ।।)
- कदाचित् छिन्नकतरादयः -
(भाष्यम्) कदाचित् छिन्नकतरादयो भवन्ति विप्रतिषेधेन। छिन्नकतरं, छिन्नकतमम्।।
(5858 पूर्वविप्रतिषेधबोधकवार्तिकम्।। 6 ।।)
- एकदेशिप्रधानश्च समासः -
(भाष्यम्) एकदेशिप्रधानश्च समासः कविधेर्भवति पूर्वविप्रतिषेधेन। अर्धपिप्पलिका, अर्धकोशातकिका।।
(5879 पूर्वविप्रतिषेधबोधकवार्तिकम्।। 7 ।।)
- उत्तरपदार्थप्रधानश्च संज्ञायां कन्विध्यर्थम् -
(भाष्यम्) उत्तरपदार्थप्रधानश्च समासो भवति पूर्वविप्रतिषेधेन।
किं प्रयोजनम्?
संज्ञायां कन्विध्यर्थम्। संज्ञायां कन् यथा स्यात्। नवग्रामकम्, नवराष्ट्रकं, नवनगरकम्।।
(5880 पूर्वविप्रतिषेधबोधकवार्तिकम्।। 8 ।।)

- कदाचिद्द्वन्द्वः -
(भाष्यम्) कदाचिद्द्वन्द्वः कविधेर्भवति पूर्वविप्रतिषेधेन। प्लक्षकन्यग्रोधकौ, प्लक्षन्यग्रोधकाविति वा।।
-5-3-74- कुत्सिते (2232)
(प्रत्ययानुपपत्तिप्रतिपादकभाष्यम्)
ःथ्य;ह--कुत्सितकः, अनुकम्पितक ःथ्य;ति स्वशब्देनोक्तत्वात्तस्यार्थस्य प्रत्ययो न प्राप्नोति।।
(प्रत्ययोपपादकं भाष्यम्)
नैष दोषः।
कुत्सितस्यानुकम्पायां भविष्यत्यनुकम्पितस्य कुत्सायाम्।।
(प्रकारान्तरेणापि प्रत्ययोपपादकं भाष्यम्)
अथ वा--
स्वार्थमभिधाय शब्दो निर-
पेक्षो द्रव्यमाह समवेतम्।
समवेतस्य च वचने
लिङ्गं वचनं विभक्तिं च ।।
अभिधाय तान् विशेषान्-
पेक्षमाणश्च कृत्स्नमात्मानम्।
प्रियकुत्सनादिषु पुनः
प्रवर्ततेऽसौ विभक्त्यन्तः।।
(कुत्सितस्य प्रकृतिप्रत्ययविशेषणत्वाक्षेपभाष्यम्)
कथं पुनरिदं विज्ञायते--कुत्सितादीनामर्थ ःथ्य;ति, आहोस्वित् कुत्सितादिसमानाधिकरणात्प्रातिपदिकादिति।
कश्चात्र विशेषः?
(5881 प्रत्ययाविशेषणत्वाक्षेपवार्तिकम्।। 1 ।।)
- कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः -
(भाष्यम्) कुत्सितादीनामर्थे चेल्लिङ्गवचनयोरनुपपत्तिः। पटुकम्, पटुका, पटुकः, पटुकौ, पटुकाः--ःथ्य;ति। एकोऽयमर्थः कुत्सितं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति।
(वार्तिकावतरणभाष्यम्)
अस्तु तर्हि कुत्सितादिसमानाधिकरणात् प्रातिपदिकादिति।।
(5882 प्रकृतिविशेषणत्वाक्षेपवार्तिकम्।। 2 ।।)
- कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा टाबादिषु -
(भाष्यम्) कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो भवति, यथा--टाबादिषु।
कथं च टाबादिषु?
उक्तं तत्र-- स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः ःथ्य;ति। एवमिहापि कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो भवति--ःथ्य;दं घृतकम्, ःथ्य;दं तैलकम्--ःथ्य;दं शब्दादपि प्राप्नोति।।
(5883 सिद्धान्तवार्तिकम्।। 3 ।।)
- सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
येन कुत्सितादयोऽर्था गम्यन्ते तद्युक्तात्स्वार्थे प्रत्ययो भवतीति वक्तव्यम्।
सिद्ध्यति। सूत्रं तर्हि भिद्यते।।
यथान्यासमेवास्तु।
ननु चोक्तं--कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिरिति।
नैष दोषः। नायं प्रत्ययार्थः।
किं तर्हि?
प्रकृत्यर्थविशेषणमेतत्। कुत्सितादिषु यत्प्रातिपदिकं वर्तते तस्मात्कादयो भवन्ति।
कस्मिन्नर्थे?
स्वार्थ ःथ्य;ति। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।।
-5-3-83- ठाजादावूर्ध्वं द्वितीयादचः (2241)
(प्रकृतिविकाराधिकरणम्)
(पूर्वाचार्याणां कारिकाव्याख्यानभाष्यम्)

चतुर्थात्--
चतुर्थाल्लोपो वक्तव्यः बृहस्पतिदत्तकः, बृहस्पतिकः। प्रजापतिदत्तकः, प्रजापतिकः।
अनजादौ च
अनजादौ च लोपो वक्तव्यः। देवदत्तकः, देवकः। यज्ञदत्तकः, यज्ञकः।
लोपः पूर्वपदस्य च।
पूर्वपदस्य च लोपो वक्तव्यः। देवदत्तकः, दत्तकः। यज्ञदत्तकः, दत्तकः।
अप्रत्यये तथैवेष्टः
देवदत्तः, दत्तः। यज्ञदत्तः, दत्तः।
उवर्णाल्ल ःथ्य;लस्य च।।
उवर्णादिलस्य च लोपो वक्तव्यः। भानुदत्तकः, भानुलः। वसुदत्तकः, वसुलः।
(पदकृत्यभाष्यम्)
अथ ठग्रहणं किमर्थम्, न ःथ्य;के कृते अजादावित्येव सिद्धम्?
(5784 ठग्रहणप्रयोजनवार्तिकम्।। 1 ।।)
- ठग्रहणमुको द्वितीयत्वे कविधानार्थम् -
(भाष्यम्) ठग्रहणं क्रियते, उको द्वितीयत्वे कविधिर्यथा स्यात्। वायुदत्तकः, वायुकः। पितृदत्तकः, पितृकः।।
(5885 ठग्रहणाभावे दोषवार्तिकम्।। 2 ।।)
- अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः -
(भाष्यम्) अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत। तद्यथा--मथितं पण्यमस्य माथितिक ःथ्य;ति अकारलोपे कृते तान्तादिति कादेशो न भवति।
एवमिहापि न स्यात्।।
(5886 उपसंख्यानवार्तिकम्।। 3 ।।)
- द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् -
(भाष्यम्) द्वितीयादयो लोपे संध्यक्षरद्वितीयत्वे तदादेर्लोपो वक्तव्यः। लहोडः, लहिकः। कहोडः, कहिकः।।
-5-3-84- शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् (2242)
(5887 उपंसख्यानवार्तिकम्।। 4 ।।)
- वरुणादीनां च तृतीयात् स चाकृतसंधीनाम् -
(भाष्यम्) वरुणादीनां च तृतीयाल्लोप उच्यते, स चाकृतसंधीनां वक्तव्यः। सुपर्याशीर्दत्तः--सुपरिकः, सुपरियः, सुपरिलः।।
(आक्षेपभाष्यम्)
ःथ्य;ह षडङ्गुलिः षडिक ःथ्य;त्यजादिलोपे कृते पदसंज्ञा न प्राप्नोति।
तत्र को दोषः?
जश्त्वं न स्यात्।।
(5888 समाधानवार्तिकम्।। 5 ।।)
- षडिके जश्त्वे उक्तम् -
(भाष्यम्) किमुक्तम्?
सिद्धमचः स्थानिवत्त्वात् ःथ्य;ति। यद्येवं,
(5889 प्रत्याक्षेपवार्तिकम्।। 6 ।।)
- वाचिकादिषु पदवृत्तप्रतिषेधः -
(भाष्यम्) वाचिकादिषु पदवृत्तस्य प्रतिषेधो वक्तव्यः। वागाशीर्दत्तः, वाचिक ःथ्य;ति।।
(5890 प्रत्याक्षेपनिरासवार्तिकम्।। 7 ।।)
- सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् -
(भाष्यम्) सिद्धमेतत्।
कथम्?
एकाक्षरपूर्वपदानामुत्तरपदस्य लोपो वक्तव्यः। वाचिकः।।
(आक्षेपभाष्यम्)
ःथ्य;हापि तर्हि प्राप्नोति--षडङ्गुलिः, षडिक ःथ्य;ति।।
(5891 समाधानवार्तिकम्।। 8 ।।)
- षषष्ठाजादिवचनात् सिद्धम् -
(भाष्यम्) षषष्ठाजादिवचनात्सिद्धमेतत्।।
-5-3-85- अल्पे (2243)

-5-3-86- ह्रस्वे (2244)
(कनोऽधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थमिमावुभावर्थौ निर्दिश्येते, न यदल्पं ह्रस्वमपि तद्भवति, यच्च ह्रस्वमल्पमपि तद्भवति?
(समाधानभाष्यम्)
नैतयोरावश्यकः समावेशः। अल्पं घृतम्, अल्पं तैलमित्युच्यते। न कश्चिदाह--ह्रस्वं वृतम्, ह्रस्वं तैलमिति।
तथा ह्रस्वः पटः, ह्रस्वः शाटक उच्यते, न कश्चिदाह--अल्पः पटः, अल्पः शाटक ाः थ्य;ति।।
-5-3-88- कुटीशमीशुण्डाभ्यो रः (2246)
(रप्रत्ययाधिकरणम्)
(5892 एकदेशिन उपसंख्यानवार्तिकम्।। 1 ।।)
- कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् -
(भाष्यम्) कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्भावो वक्तव्यः। कुटी--कुटीरः। शमी--शमीरः। शुण्डा--शुण्डार ाः थ्य;ति।।
(वार्तिकप्रयोजनभाष्यम्)
किं पुनः कारणं न सिध्यति?
स्वार्थिकोऽयं, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।।
(5893 उपसंख्यानानर्थक्यबोधकवार्तिकम्।। 2 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानीति।।
-5-3-91- वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे (2249)
(ष्टरच्प्रत्ययाधिकरणम्)
(5894 पूर्वपक्षिवार्तिकम्।। 1 ।।)
- वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः -
(भाष्यम्) वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधो वक्तव्यः। कृशो वत्सो वत्सर ाः थ्य;ति मा भूदिति।।
(वार्तिकान्यथासिद्धिप्रदर्शकभाष्यम्)
स तर्हि प्रतिषेधो वक्तव्यः।
न वक्तव्यः। यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशस्तदभिधाने तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्। न च कार्श्यस्य भावात् द्रव्ये वत्सशब्दः।।
-5-3-92- किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् (2250)
-5-3-93- वा बहूनां जातिपरिप्रश्ने डतमच् (2251)
(डतरच्डतमचोरधिकरणम्)
(5895 सूत्रांशाक्षेपवार्तिकम्।। 1 ।।)
- किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम् -
(भाष्यम्) किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाधिग्रहणमनर्थकम्।
किं कारणम्?
बहिर्धारणं निर्धारणमिति। यावता द्वयोरेकस्यैव बहिर्धारणं भवति।।
(वा बहूनामिति सूत्रांशाक्षेपभाष्यम्)
अपर आह--बहूनां जातिपरिप्रश्ने डतमच् ाः थ्य;त्यत्र बहुग्रहणमनर्थकम्।
किं कारणम्?
किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नश्चानिर्ज्ञाते, अनिर्ज्ञातं च बहुषु। द्वयेकयोः पुनर्निर्ज्ञातम्। निर्ज्ञातत्वात् द्व्येकयोः परिप्रश्नो न, परिप्रश्नाभावात् किमेव नास्ति कुतः प्रत्ययः।।
-5-3-94- एकाच्च प्राचाम् (2252)
(प्राग्ग्रहणाक्षेपभाष्यम्)
प्राग्वचनं किमर्थम्?
विभाषा यथा स्यात्।
(5896 प्राग्ग्रहणानर्थक्यबोधकवार्तिकम्।। 1 ।।)
- प्राग्वचनानर्थक्यं च विभाषाप्रकरणात् -
(भाष्यम्) प्राग्वचनमनर्थकम्।
किं कारणम्?

विभाषाप्रकरणात्। प्रकृता महाविभाषा तयैव सिद्धम्।।
-5-3-95- अवक्षेपणे कन् (2253)
(कनोऽधिकरणम्)
(सूत्राक्षेपभाष्यम्)
अवक्षेपणे कन् विधीयते, कुत्सिते कः, क एतयोरर्थयोर्विशेषः?
अवक्षेपणं करणम्, कुत्सितं कर्म।
अवक्षेपणं वै कुत्सितं करणं तेन यत्कुत्स्यते तदपि कुत्सितं भवति। तत्र कुत्सितमित्येव सिद्धं भवति।।
(प्रयोजनभाष्यम्)
एवं तर्हि यत्परस्य कुत्सार्थमुपादीयते तदिहोदाहरणम्। व्याकरणकेन नामायं गर्वितः। याज्ञिक्यकेन नामायं गर्वितः।
यत्स्वकुत्सार्थमुपादीयते तत्तत्रोदाहरणम्। देवदत्तकः, यज्ञदत्तकः।।
-5-3-98- लुम्मनुष्ये (2256)
(कनो लुबधिकरणम्)
(आक्षेपभाष्यम्)
किमर्थं मनुष्ये लुबुच्यते, न लुगेवोच्येत?
(5897 समाधानवार्तिकम्।। 1 ।।)
- लिङ्गसिद्ध्यर्थम् लुब्मनुष्ये -
(भाष्यम्) लिङ्गसिद्ध्यर्थं मनुष्ये लुबुच्यते। चञ्चेव चञ्चा। वध्रिकेव वध्रिका। खरकुटीव खरकुटी।।
-5-3-99- जीविकार्थे चापण्ये (2257)
(सूत्रोदाहरणप्रदर्शकभाष्यम्)
अपण्ये ःथ्य;त्युच्यते, तत्रेदं न सिध्यति--शिवः, स्कन्दः, विशाख ःथ्य;ति।
किं कारणम्?
मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः।
भवेत्तासु न स्यात्।
यास्त्वेताः संप्रतिपूजार्थास्तासु भविष्यति।।
-5-3-106- समासाच्च तद्विषयात् (2264)
(छप्रत्ययाधिकरणम्)
(तत्पदार्थप्रतिपादकभाष्यम्)
तदित्यनेन किं प्रतिनिर्दिश्यते?
छः।।
(सूत्रार्थोपपादकभाष्यम्)
कथं पुनः समासो नाम छविषयः स्यात्।
एवं तर्हीवार्थः।
यदि तर्हि समासोऽपीवार्थे, प्रत्ययोऽपि, समासेनोक्तत्वात्प्रत्ययो न प्राप्नोति।
एवं तर्हि द्वाविवार्थौ।
कथम्?
काकागमनमिव तालपतनमिव काकतालम्, काकतालमिव काकतालीयम्।।
-5-3-118- अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् (2276)
(यञोऽधिकरणम्)
(5898 उपसंख्यानवार्तिकम्।। 1 ।।)
- अणो गोत्राद्गोत्रवचनम् -
(भाष्यम्) अणो गोत्रात् गोत्रग्रहणं कर्तव्यम्।
गोत्रादिति वक्तव्यम्। ःथ्य;ह मा भूत्--आभिजितो मुहूर्तः, आभिजितः स्थालीपाक ःथ्य;ति।
गोत्रमिति च वक्तव्यम्।
किं प्रयोजनम्?
आभिजितकः। गोत्राश्रयो वुञ् यथा स्यात्।
गोत्रमिति शक्यमकर्तुम्।
कथमाभिजितकः?
गोत्रादयं स्वार्थिको गोत्रमेव भवति।।

# महाभाष्यम्/पञ्चमोऽध्यायः/चतुर्थः पादः


-5-4-1- पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च (2278)
(वुनोऽधिकरणम्)
(5899 सूत्रैकदेशानर्थक्यबोधकवार्तिकम्।। 1 ।।)
- पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् -
(भाष्यम्) पादशतग्रहणमनर्थकम्।
किं कारणम्?
अन्यत्रापि दर्शनात्। अन्यत्रापि हि वुन् दृश्यते--द्विमोदकिकां ददाति।।
-5-4-3- स्थूलादिभ्यः प्रकारवचने कन् (2280)
(कनोऽधिकरणम्)
(5900 उपसंख्यानवार्तिकम्।। 1 ।।)
- कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् -
(भाष्यम्) कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानं कर्तव्यम्। चञ्चत्कः, बृहत्कः।।
-5-4-4- अनत्यन्तगतौ क्तात् (2281)
(4901 पूर्वविप्रतिषेधबोधकवार्तिकम्।। 1 ।।)
- अनत्यन्तगतौ क्तान्तात्तमादयः पूर्वविप्रतिषिद्धम् -
(भाष्यम्) अनत्यन्तगतौ क्तान्तात्तमादयो भवन्ति पूर्वविप्रतिषेधेन।
अत्यन्तगतौ क्तान्तात्कन् भवतीत्यस्यावकाशः--अनत्यन्तगतेर्वचनं प्रकर्षस्यावचनम्--भिन्नकम् छिन्नकम्।
तमादीनामवकाशः--प्रकर्षस्य वचनमनत्यन्तगते रवचनम्--पटुतरः, पटुतमः।
उभयवचने उभयं प्राप्नोति--भिन्नतरकम्, छिन्नतरकम्।
तमादयो भवन्ति पूर्वविप्रतिषेधेन।।
(5902 उपसंख्यानवार्तिकम्।। 2 ।।)
- तदन्ताच्च स्वार्थे कन्वचनम् -
(भाष्यम्) तदन्ताच्च स्वार्थे कन्वक्तव्यः। भिन्नतरकम्, छिन्नतरकम्।।
-5-4-5- न सामिवचने (2282)
(5903 सूत्रानर्थक्यबोधकवार्तिकम्।। 1 ।।)
- सामिवचने प्रतिषेधानार्थक्यं प्रकृत्यभिहितत्वात् -
(भाष्यम्) सामिवचने प्रतिषेधोऽनर्थकः।
किं कारणम्?
प्रकृत्यभिहितत्वात्। प्रकृत्याऽभिहितः सोऽर्थ इति कृत्वा कन्न भविष्यति।।
-5-4-7- अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः (2284)
(खप्रत्ययाधिकरणम्)
(5904 प्रत्ययानुपपत्तिप्रदर्शकवार्तिकम्।। 1 ।।)
- अध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् -
(भाष्यम्) अध्युत्तरपदात्प्रत्ययविधेरनुपपत्तिः।
किं कारणम्?
विग्रहाभावात्। विग्रहपूर्विका तद्धितोत्पत्तिः, न चाध्युत्तरपदेन विग्रहो दृश्यते।।
(5905 न्यासान्तरेण प्रत्ययोपपादकवार्तिकम्।। 2 ।।)
- तस्मात्तत्रेदमिति सधीनर् -
(भाष्यम्) तस्मात्तत्रेदमिति सधीनर्प्रत्ययो वक्तव्यः। राजनीदम्, राजाधीनम्।
(न्यासान्तराक्षेपभाष्यम्)
यदि सधीनर् क्रियते सकारस्येत्संज्ञा न प्राप्नोति।
इह च श्र्यधीनः, भ्रवधीन इत्यङ्गस्येति इयङुवङौ स्याताम्।
सूत्रं च भिद्यते।।
(अनुपपत्तिनिरासभाष्यम्)

यथान्यासमेवास्तु।
ननु चोक्तम् ।अध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् इति।
नैष दोषः। अस्ति कारणं येनात्र विग्रहो न भवति।
किं कारणम्?
नित्यप्रत्ययोऽयम्।
(नित्यप्रत्ययप्रतिपादकभाष्यम्)
के पुनर्नित्यप्रत्ययाः। तमादयः प्राक्कनः, ञ्यादयः प्राग्वुनः, आमादयः प्राङ्नयटः, बृहतीजात्यन्ताः, समासान्ताश्चेति।
(अध्युत्तरपदादिति वार्तिकस्य प्रकृत्यनुपपत्तिप्रदर्शकपरं भाष्यम्)
एवं तर्हि नायं प्रत्ययविधिरुपालभ्यते।
किं तर्हि?
प्रकृतिरुपालभ्यते, अध्युत्तरपदा प्रकृतिर्नास्ति।
किं कारणम्?
विग्रहाभावात्। विग्रहपूर्विका समासप्रवृत्तिः, न चाधिना विग्रहो दृश्यते।।
(अनुपपत्तिनिरासभाष्यम्)
एवं तर्हि बहुव्रीहिर्भविष्यति।
किं कृतं भवति?
भवति वै कश्चिदस्वपदविग्रहोऽपि बहुव्रीहिः तद्यथा--शोभनं मुखमस्याः सुमुखीति।
नैवं शक्यम्।
इह हि महदधीनमित्यात्वकपौ प्रसज्येयाताम्।
एवं तर्ह्यव्ययीभावो भविष्यति।
एवमप्यधेः पूर्वनिपातः प्राप्नोति।
राजदन्तादिषु पाठः करिष्यते।
अथवा सप्तमीसमासोऽयम्। अधिः शौण्डादिषु पठ्यते।।
-5-4-8- विभाषाऽञ्चेरदिक् स्त्रियाम् (2285)
(पदकृत्यभाष्यम्)
दिग्ग्रहणं किमर्थम्?
अस्त्रियामितीयत्युच्यमाने प्राचीना ब्राह्मणी अवाचीना शिखा इत्यत्रापि प्रसज्येत। दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति।
(पदकृत्यभाष्यम्)
अथ स्त्रीग्रहणं किमर्थम्, न यावता दिक्शब्दः स्त्रीविषय एव।
भवति वै कश्चिद्दिक्शब्दोऽस्त्रीविषयोऽपि।
तद्यथा,--प्राक्, प्राचीनम्। प्रत्यक्, प्रतीचीनम्। उदक्, उदीचीनम्।।
-5-4-14- णचः स्त्रियामञ् (2291)
(अञोऽधिकरणम्)
(स्त्रीग्रहणस्य ज्ञापकत्वोपपादकभाष्यम्)
स्त्रीग्रहणं किमर्थम्, न स्वार्थिकोऽयम्?
स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।
एवं तर्हि सिद्धे सति यत् स्त्रीग्रहणं करोति तज्ज्ञापयत्याचार्यः--स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानीति।
किमेतस्य ज्ञापने प्रयोजनम्?
गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत्सिद्धं भवति।।
-5-4-19- एकस्य सकृच्च (2296)
(सुचोऽधिकरणम्)
(अभ्यावृत्तिपदार्थबोधकभाष्यम्)
सकृदादेशेऽभ्यावृत्तिग्रहणं निर्वत्यम्।
किं प्रयोजनम्?
पुनः पुनरावृत्तिरभ्यावृत्तिः, न चैकस्य पुनः पुनरावृत्तिर्भवति।।
(एकदेशिनः क्रियाग्रहणानुवृत्तौ फलभाष्यम्)
अथ क्रियाग्रहणमनुवर्तत उताहो न?
किं चार्थोऽनुवृत्त्या?
बाढमर्थः। इह मा भूत्--एको भुङ्क्त इति।।

(क्रियाग्रहणानुवृत्तावाक्षेपभाष्यम्)
अथानुवर्तमानेऽपि क्रियाग्रहण इह कस्मान्न भवति--एकः पाक इति।।
(प्रतिबन्द्युत्तरभाष्यम्)
पूर्वयोश्चापि योगयोः कस्मान्न भवति--द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दश पाका इति?
नैतत् क्रियागणनम्।
किं तर्हि?
द्रव्यगणनमेतत्।
कथम्?
कृदभिहितो भावो द्रव्यवद्भवतीति।।
इहापि तर्हि द्रव्यगणनान्न प्राप्नोति--सकृद्भुक्त्वा--सकृद्भोक्तुमिति।
पूर्वयोश्चापि योगयोः--द्विर्भुक्त्वा--द्विर्भोक्तुम्, त्रिर्भुक्त्वा--त्रिर्भोक्तुम्, पञ्चकृत्वो भुक्त्वा--पञ्चकृत्वो भोक्तुम्, दशकृत्वो भुक्त्वा--दशकृत्वो भोक्तुमिति द्रव्यगणनान्न प्राप्नोति।।
(पुनः पुनरावृत्तावित्यर्थे दोषभाष्यम्)
यदि खल्वपि पुनः पुनरावृत्तिरभ्यावृत्तिर्द्विरावृत्ते सकृदिति स्यात्, त्रिरावृत्ते द्विरिति।।
(अभ्यावृत्तिपदार्थबोधकभाष्यम्)
एवं तर्ह्यनुवर्तते--अभ्यावृत्तिग्रहणम्। न तु पुनः पुनरावृत्तिरभ्यावृत्तिः।
किं तर्हि?
अभिमुखी प्रवृत्तिरभ्यावृत्तिः। पूर्वा च परे प्रत्यभिमुखी, परे च पूर्वां प्रत्यभिमुख्यौ।।
(क्रियाग्रहणानुवृत्तावपि दोषाभावोपपादकभाष्यम्)
यदप्युच्यते--अनुवर्तमानेऽपि क्रियाग्रहण इह कस्मान्न भवति--एकः पाक इति, पूर्वयोश्चापि योगयोः--द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दश पाका इति।
परिहृतमेतत्--नैतत् क्रियागणनम्।
किं तर्हि?
द्रव्यगणनमेतत्। कृदभिहितो भावो द्रव्यवद्भवतीति।
ननु चोक्तमिहापि तर्हि द्रव्यगणनान्न प्राप्नोति-सकृद्भुक्त्वा, सकृद्भोक्तमिति--पूर्वयोश्चापि
योगयोः--द्विर्भुक्त्वा--द्विर्भोक्तुम्, त्रिर्भुक्त्वा--त्रिर्भोक्तुम्, पञ्चकृत्वो भुक्त्वा--पञ्चकृत्वो भोक्तम्, दशकृत्वो भुक्त्वा--दशकृत्वो भोक्तुमिति--द्रव्यगणनान्न प्राप्नोतीति।
नैष दोषः।
क्रियागणनाद्भविष्यति।
कथम्?
कृदभिहितो भावो द्रव्यवदपि क्रियावदपि यद्यपि।।
-5-4-24- देवतान्तात्तादर्थ्ये यत् (2301)
(यतोऽधिकरणम्)
(देवताशब्दस्य जातिवाचित्वे दोषभाष्यम्)
देवतान्तादित्युच्यते तत्रेदं न सिद्ध्यति--पितृदेवत्यमिति।
किं कारणम्?
न हि पितरो देवता।।
(देवताशब्दस्य क्रियावाचित्वमाश्रित्य दोषभावबोधकभाष्यम्)
नैष दोषः। दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तल्। एवं च कृत्वा देवदेवत्यमपि सिद्धं भवति।।
-5-4-27- देवात्तल् (2304)
(तलोऽधिकरणम्)
(5906 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- तलि स्त्रीलिङ्गवचनम् -
(भाष्यम्) तलि स्त्रीलिङ्गं वक्तव्यम्। देवता।
किं पुनः कारणं न सिद्ध्यति?
देवशब्दोऽयं पुंल्लिङ्गः स्वार्थिकश्चायम्, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते।।
(5907 सिद्धान्तवार्तिकम्।। 2 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?

स्वार्थिका अतिवर्तन्तेऽपि लिङ्गावचनानीति।।
-5-4-30- लोहितान्मणौ (2307)
(कनोऽधिकरणम्)
(5908 एकदेशिन उपसंख्यानवार्तिकम्।। 1 ।।)
- लोहिताल्लिङ्गबाधनं वा -
(भाष्यम्) लोहिताल्लिङ्गबाधनं वेति वक्तव्यम्।
लोहितिका, लोहिनिका।।
(5909 एकदेशिन उपसंख्यानवार्तिकम्।। 2 ।।)
- अक्षरसमूहे छन्दस उपसंख्यानम् -
(भाष्यम्) अक्षरसमूहे छन्दस उपसंख्यानं कर्तव्यम्। ओ श्रावयेति चतुरक्षरम्। अस्तु श्रौषडिति चतुरक्षरम्। ये यजामह इति पञ्चाक्षरम्। यजेति द्व्यक्षरम्। द्व्यक्षरो वषट्कारः। एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञमनुविहितः।।
(5910 एकदेशिन उपसंख्यानवार्तिकम्।। 3 ।।)
- छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् -
(भाष्यम्) छन्दसि बहुभिर्वसव्यैरुपसंख्यानं कर्तव्यम्। हस्तौ पृणस्व बहुभिर्वसव्यैः।।
(5911 एकदेशिन उपसंख्यानवार्तिकम्।। 4 ।।)
- अग्निरीशे वसव्यस्येति -
(भाष्यम्) अग्निरीशे वसव्यस्येत्युपसंख्यानं कर्तव्यम्।।
(5912 एकदेशिप्रत्याख्याने सिद्धान्तवार्तिकम्।। 5 ।।)
- उक्तं वा -
(भाष्यम्) किमुक्तम्?
।स्वार्थविज्ञानात्सिद्धम् इति। अपस्यो वसानाः। अपो वसानाः।। स्व ओक्ये। स्व ओके।। कव्योऽसि हव्यसूदन। कविरसि।। रौद्रेणानीकेन कव्यतायै। कवितायै।। आमुष्यायणस्य। अमुष्यपुत्रस्य।। क्षेम्यस्येशे। क्षेमस्येशे।। क्षेम्यमध्यवस्यति। क्षेममध्यवस्यति।। आयुर्वर्चस्यम्। वर्च एव वर्चस्यम्।। निष्केवल्यम्। निष्केवलम्।। उक्थ्यम्। उक्थम्।। जन्यं ताभिः। सजन्यं ताभिः। जनं ताभिः सजनं ताभिः।। स्तोमैर्जनयामि नव्यम्। नवम्।। प्रणो नव्येभिः। नवैः।। ब्रह्म पूर्व्यम्। पाथः पूर्व्यम्। तनुषु पूर्व्यम्। पूर्वम्।। पूर्व्याहः। पूर्वाहः।। पूर्व्या विशः। पूर्वा विशः।। पूर्व्यासः। पूर्वासः।। स प्र पूर्व्यः। स प्र पूर्वः।। अग्निं वः पूर्व्यम्। पूर्वम्।। तं जुषस्व यविष्ठ्य। यविष्ठ।। होत्रवाहं यविष्ठयम्। यविष्ठम्।। त्वं ह यद्यविष्ठ्य। यविष्ठ।। समावद्वसति समावद्गृह्णाति। समं वसति समं गृह्णाति।। समावद्देवयज्ञे हस्तौ। समम्।। समावद्वीर्यावहानि। समानि।। समावद्वीर्याणि करोति। समानि।। य इर्वत उलोकम्। य इर्वते ब्रह्मणे। य इर्यते।।
(5913 उपसंख्यानवार्तिकम्।। 6 ।।)
- नवस्य नू त्नप्तनखाश्च -
(भाष्यम्) नवस्य नू इत्ययमादेशो वक्तव्यः, त्नप्तनखाश्च प्रत्यया वक्तव्याः। नूत्नं, नूतनं, नवीनम्।।
(5914 उपसंख्यानवार्तिकम्।। 7 ।।)
- नश्च पुराणे प्रात् -
(भाष्यम्) नश्च पुराणे प्राद् वक्तव्यः। त्नप्तनखाश्च प्रत्यया वक्तव्याः। प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्।।
-5-4-36- तद्युक्तात्कर्मणोऽण् (2312)
(अणोऽधिकरणम्)
(तत्पदार्थप्रकाशकभाष्यम्)
तदित्यनेन किं प्रतिनिर्दिश्यते?
वागेव। यदेव वाचा व्याह्रियते तत्कर्मणा क्रियते।।
(5915 उपसंख्यानवार्तिकम्।। 1 ।।)
- अण्प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यच्छन्दसि -
(भाष्यम्) अण्प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दस्युपसंख्यानं कर्तव्यम्। कौलालः। वारुडः। नैषादः। चाण्डालः। आमित्रः।।
(5916 उपसंख्यानवार्तिकम्।। 2 ।।)
- भागरूपनामभ्यो धेयः -
(भाष्यम्) भागरूपनामभ्यो धेयो वक्तव्यः। भागधेयम्। रूपधेयम्। नामधेयम्।।
(5917 उपसंख्यानवार्तिकम्।। 3 ।।)
- मित्राच्छन्दसि -
(भाष्यम्) मित्राच्छन्दसि धेयो वक्तव्यः। मित्रधेये यतस्व।।
(5918 उपसंख्यानवार्तिकम्।। 4 ।।)
- अणमित्राच्च -

(भाष्यम्) अणमित्राच्चेति वक्तव्यम्। मैत्रः। आमित्रः।।
(सान्नाय्यादीनां निपातनभाष्यम्)
सान्नाय्यानुजावरानुषूकचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनानि निपात्यन्ते। सांनाय्यम्।
आनुजावरः। आनुषूकः। चातुष्प्राश्यः। राक्षोघ्नः। वैयातः। वैकृतः। वारिवस्कृतः। आग्रायणः। आग्रहायणः। सान्तपनः।।
(5919 उपसंख्यानवार्तिकम्।। 5 ।।)
- आग्नीध्रसाधारणादञ् -
(भाष्यम्) आग्नीध्रसाधारणादञ् वक्तव्यः। आग्नीध्रम्, साधारणम्।।
(5920 उपसंख्यानवार्तिकम् ।। 6 ।।)
- अयवसमरुद्भ्यां छन्दसि -
(भाष्यम्) अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः। आयवसे वर्धन्ते। मारुतं शर्धः।।
(5921 उपसंख्यानवार्तिकम्।। 7 ।।)
- नवसूरमर्तयविष्ठेभ्यो यत् -
(भाष्यम्) नवसूरमर्तयविष्ठेभ्यो यद्वक्तव्यः। नव्यः। सूर्यः। मर्त्यः। यविष्ठ्यः।।
(5922 उपसंख्यानवार्तिकम्।। 8 ।।)
- क्षेमाद्यः -
(भाष्यम्) क्षेमाद्यो वक्तव्यः। क्षेम्यस्तिष्ठन् प्रतरणः सुवीरः।।
-5-4-42- बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् (2319)
(शसोऽधिकरणम्)
(5923 उपसंख्यानवार्तिकम्।। 1 ।।)
- बह्वल्पार्थान्मङ्गलामङ्गलवचनम् -
(भाष्यम्) बह्वल्पार्थान्मङ्गलामङ्गलवचनं कर्तव्यम्। बहुशो देहि। अनिष्टेषु श्राद्धादिषु मा भूत्, इष्टेषु प्राशित्रादिषु यथा स्यात्। अल्पशो देहि। इष्टेषु प्राशित्रादिषु मा भूत्, अनिष्टेषु श्राद्धादिषु यथा स्यात्।।
-5-4-44- प्रतियोगे पञ्चम्यास्तसिः (2321)
(तसिप्रत्ययाधिकरणम्)
(5924 उपसंख्यानवार्तिकम्।।1।।)
तसिप्रकरण आद्यादिभ्य उपसंख्यानम्।।
तसिप्रकरण आद्यादिभ्य उपसंख्यानं कर्तव्यम्।। आदितः । अध्यतः । अन्ततः।
-5-4-50- कृभ्वस्तियोगे संपद्यकर्तरि च्विः (2327)
(च्विप्रत्ययाधिकरण)
(5925 सूत्रपूरकवार्तिकम्।। 1 ।।)
- च्विविधावभूततद्भावग्रहणम् -
(भाष्यम्) च्विविधावभूततद्भावग्रहणं कर्तव्यम्। इह मा भूत्--संपद्यन्ते यवाः, संपद्यन्ते शालय इति।।
(वार्तिकावतरणभाष्यम्)
अथ क्रियमाणेऽपि वै अभूततद्भावग्रहण इह कस्मान्न भवति--संपद्यन्तेऽस्मिन् क्षेत्रे शालय इति?
(5926 सूत्रांशपूरकवार्तिकम्।। 2 ।।)
- प्रकृतिविवक्षाग्रहणं च -
(भाष्यम्) प्रकृतिविवक्षाग्रहणं च कर्तव्यम्।।
(5927 उपसंख्यानवार्तिकम्।। 3 ।।)
- समीपादिभ्य उपंसख्यानम् -
(भाष्यम्) समीपादिभ्य उपसंख्यानं कर्तव्यम्। समीपीभवति। अभ्याशीभवति। अन्तिकीभवति।।
(समीपादिभ्यः इति वार्तिकप्रत्याख्यानभाष्यम्)
किं पुनः कारणं न सिध्यति?
न ह्यसमीपं समीपं भवति। किं तर्हि?
असमीपस्थं समीपस्थं भवति।।
तत्तर्हि वक्तव्यम्?
न वक्तव्यम्। तात्स्थ्यात्ताच्छब्द्यं भविष्यति।।
-5-4-57- अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् (2334
(डाचोऽधिकरणम्)
(चित्करणप्रयोजनभाष्यम्)

किमर्थश्चकारः?
स्वरार्थः। चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।।
(चित्करणस्य निष्फलत्वद्योतकभाष्यम्)
नैतदस्ति प्रयोजनम्। एकाजयं तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन। प्रत्ययस्वरेणैव सिद्धम्।।
<M.4.415>
अत उत्तरं पठति--
(5928 चित्करणप्रयोजनवार्तिकम्।। 1 ।।)
- डाचि चित्करणं विशेषणार्थम् -
(भाष्यम्) डाचि चित्करणं क्रियते विशेषणार्थम्।
क्व विशेषणार्थेनार्थः?
लोहितादिडाज्भ्यः क्यष् 3।1।13 इति। डा इति ह्युच्यमान इडा अतोऽपि प्रसज्येत।
अर्थवद्ग्रहणे नानर्थकस्येतीत्येवमेतस्य न भविष्यति।
इदं तर्हि प्राप्नोति--नाभा पृथिव्या निहितो दविद्युतत्। तस्माच्चकारः कर्तव्यः।।
-5-4-67- मद्रात् परिवापणे (2344)
(उपसंख्यानभाष्यम्)
भद्राच्चेति वक्तव्यम्। भद्राकरोति।।
-5-4-68- समासान्ताः (2345)
(अधिकाराधिकरणम्)
(अन्तग्रहणप्रयोजनभाष्यम्)
अन्तग्रहणं किमर्थम्?
अन्तो यथा स्यात्।
नैतदस्ति प्रयोजनम्। प्रत्ययपरत्वेनाप्येतत्सिद्धम्।।
इदं तर्हि प्रयोजनम्--तद्ग्रहणेन ग्रहणं यथा स्यात्।
कानि पुनस्तद्ग्रहणस्य प्रयोजनानि?
<M.4.416>
(5929 तद्ग्रहणप्रयोजनवार्तिकम्।। 1 ।।)
- प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः -
(भाष्यम्) अव्ययीभावः प्रयोजनम्। प्रतिराजम्, उपराजम्। अव्ययीभावश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्।
नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।
इदं तर्हि प्रयोजनम्--नाव्ययीभावादतोऽम्त्वपञ्चम्याः (2।4।83) इत्येष विधिर्यथा स्यात्। अव्ययीभाव।।
द्विगु। द्विगुसंज्ञा च प्रयोजनम्। पञ्चगवम्, दशगवम्। द्विगुश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्।
नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।
इदं तर्हि प्रयोजनम्--द्विपुरी, त्रिपुरी--द्विगोरकारान्तादिति ईकारो यथा स्यात्।
एतदपि नास्ति प्रयोजनम्।
पुरशब्दोऽयमकारान्तस्तेन समासो भविष्यति। आतश्चाकारान्तः।
एवं ह्याह--
क्षेमे सुभिक्षे कृतसञ्चयानि
पुराणि राज्ञां विनयन्ति कोपम्। इति।।
इदं तर्हि प्रयोजनम्--द्विधुरी, त्रिधुरी--द्विगोरकारान्तादिति ङीब् यथा स्यात्। द्विगु।।
द्वन्द्व। द्वन्द्वसंज्ञा च प्रयोजनम्। वाक्त्वचम्, स्रक्त्वचम् । द्वन्द्वश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्।
नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।।
इदं तर्हि प्रयोजनम्--कोशश्च निषच्च कोशनिषदम्--कोशनिषदिनी द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः (5।2।128) इतीनिर्यथा स्यात्। द्वन्द्व।।
तत्पुरुष। तत्पुरुषसंज्ञा च प्रयोजनम्। परमधुरा, उत्तमधुरा--परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (2।4।26) इति परवल्लिङ्गता यथा स्यात्।
नैतदस्तिप्रयोजनम्। उत्तरपदार्थप्रधानस्तत्पुरुषः।।
इदं तर्हि प्रयोजनम्--अर्धधुरा।
एतदपि नास्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।।
इदं तर्हि--निर्धुरः। अव्ययं तत्पुरुषे प्रकृतिस्वरं भवतीत्येष स्वरो यथा स्यात्। तत्पुरुष।।
बहुव्रीहि। बहुव्रीहिसंज्ञा च प्रयोजनम्। उच्च धुरः, नीचधुरः। बहुव्रीहौ प्रकृत्या पूर्वपदं भवतीत्येष स्वरो यथा स्यात्।।
-5-4-69- न पूजनात् (2346)

(निषेधाधिकरणम्)
(सूत्रार्थोपपादकभाष्यम्)
इदं विप्रतिषिद्धम्।
को विप्रतिषेधः?
परिगणिताभ्यः प्रकृतिभ्यः समासान्तो विधीयते, न च तत्र काचित् पूजनान्ता प्रकृतिर्निर्दिश्यते।।
नैतद्विप्रतिषिद्धम्। नैवं विज्ञायते याभ्यः प्रकृतिभ्यः समासान्तो विधीयते न चेत्ताः पूजनान्ता भवन्तीति।
कथं तर्हि?
न चेत्ताः पूजनात्परा भवन्तीति।।
(5930 उपसंख्यानवार्तिकम्।। 1 ।।)
- पूजायां स्वतिग्रहणम् -
(भाष्यम्) पूजायां स्वतिग्रहणं कर्तव्यम्। सुराजा, अतिराजा।
<M.4.417>
क्व मा भूत्?
परमगवः, उत्तमगवः।।
(5931 उपसंख्यानवार्तिकम्।। 2 ।।)
- प्राग्बहुव्रीहिग्रहणं च -
(भाष्यम्) प्राग् बहुव्रीहिग्रहणं च कर्तव्यम्। इह मा भूत्--स्वक्षः, अत्यक्ष इति।।
-5-4-70- किमः क्षेपे (2347)
(क्षेपेग्रहणानर्थक्यबोधकभाष्यम्)
क्षेप इति किमर्थम्?
कस्य राजा किंराजः।।
क्षेप इति शक्यमकर्तुम्।
कस्मान्न भवति--कस्य राजा किंराज इति?
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।।
-5-4-73- बहुव्रीहौ संख्येये डचबहुगणात् (2350)
(समासान्ताधिकरणम्)
(5932 उपसंख्यानवार्तिकम्।। 1 ।।)
- डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् -
(भाष्यम्) डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्तव्यम्।
किं प्रयोजनम्?
निस्त्रिंशाद्यर्थम्। निस्त्रिंशानि वर्षाणि, निश्चत्वारिंशानि वर्षाणि।।
(5933 सूत्रपर्युदासवार्तिकम्।। 2 ।।)
- अन्यत्राधिकलोपात् -
(भाष्यम्) अन्यत्राधिकलोपादिति वक्तव्यम्। इह मा भूत्--एकाधिका विंशतिरेकविंशतिः। द्व्यधिका विंशतिर्द्वाविंशतिः।
(उपसंख्यानभाष्यम्)
अव्ययादेरिति च वक्तव्यम्।
इह मा भूत्--गोत्रिंशत्, गोचत्वारिंशदिति। तत्तर्हि वक्तव्यम्।
यद्यप्येतदुच्यते, अथ वै तर्हि--अन्यत्राधिकलोपादित्येतन्न क्रियते।।
-5-4-74- ऋक्पूरब्धूःपथामानक्षे (351)
(अनक्षे इत्यत्र पक्षद्वयेऽपि दोषोपपादकभाष्यम्)
अनक्ष इति कथमिदं विज्ञायते--न चेदक्षधूरन्तः समास इति, आहोस्विन्न चेदक्षः समासार्थ इति।
किं चातः?
यदि विज्ञायते--न चेदक्षधूरन्तः समास इति। सिद्धमक्षस्य धूः--अक्षधूरिति।
इदं तु न सिध्यति--दृढधूरयमक्षः।
अस्तु तर्हि--न चेदक्षः समासार्थ इति।
सिद्धं दृढधूरक्ष इति।
इदं तु न सिध्यति--अक्षस्य धूः--अक्षधूरिति।
(अनक्षे पदार्थबोधकभाष्यम्)
एवं तर्हि नैवं विज्ञायते--न चेदक्षधूरन्तः समास इति, नापि--न चेदक्षः समासार्थ इति।

कथं तर्हि?
<M.4.418>
न चेदक्षस्य धूरिति। एवं च कृत्वा नापि न चेदक्षधूरन्तः समास इति विज्ञायते, नापि न चेदक्षः समासार्थ इति--अथ चोभयोर्न भवति।।
-5-4-76- अक्ष्णोऽदर्शनात् (2353)
(अदर्शनात् इत्यस्य निष्फलत्वबोधकभाष्यम्)
अदर्शनादित्युच्यते तत्रेदं न सिध्यति--कबराक्षम्।
अदर्शनादिति शक्यमकर्तुम्।
कथं--ब्राह्मणाक्षि, क्षत्रियाक्षि?
अप्राण्यङ्गादिति वक्तव्यम्।।
-5-4-77- अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्युजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः (2354)
(सूत्रघटकपदोपपादकभाष्यम्)
आद्यास्त्रयो बहुव्रीहयः--अद्रष्टा चतुर्णामचतुरः, विद्रष्टा चतुर्णां विचतुरः, सुद्रष्टा चतुर्णां सुचतुरः।।
ततः परे एकादश द्वन्द्वाः--स्त्रीपुंस, धेन्वनडुह, ऋक्साम, वाङ्मनस, अक्षिभ्रुव, दारगव, ऊर्वष्ठीव, पदष्ठीव, नक्तन्दिव, रात्रिन्दिव, अहर्दिव।।
ततोऽव्ययीभावः--सह रजसा सरजसम्।।
ततस्तत्पुरुषः--निश्चितं श्रेयो निःश्रेयसम्।।
ततः षष्ठीसमासः--पुरुषस्यायुः पुरुषायुषम्।।
ततो द्विगू--द्वे आयुषी द्व्यायुषम्, त्रीण्यायूंषि त्र्यायुषम्।।
ततो द्वन्द्वः--ऋक् च यजुश्च ऋग्यजुषम्।।
जातादय उक्षान्ताः समानाधिकरणाः--जात उक्षा जातोक्षः, महानुक्षा महोक्षः, वृद्ध उक्षा वृद्धोक्षः।।
ततोऽव्ययीभावः--शूनः समीपमुपशुनम्।।
ततः सप्तमीसमासः--गोष्ठे श्वा गोष्ठश्वः।।
(5934 उपसंख्यानवार्तिकम्।। 1 ।।)
- चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् -
(भाष्यम्) चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानं कर्तव्यम्। त्रिचतुराः, उपचतुराः।।
-5-4-78- ब्रह्महस्तिभ्यां वर्चसः (2355)
(उपसंख्यानभाष्यम्)
पल्यराजभ्यां चेति वक्तव्यम्। पल्यवर्चसम्, राजवर्चसम्।।
-5-4-87- अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः (2364)
(5935 अहर्ग्रहणे विशेषार्थबोधककवार्तिकम्।। 1 ।।)
- अहर्ग्रहणं द्वन्द्वार्थम् -
(भाष्यम्) अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्यम्।।
<M.4.419>
किमुच्यते द्वन्द्वार्थमिति, न पुनस्तत्पुरुषार्थमपि स्यात्?
तत्पुरुषाभावात्। न हि रात्र्यन्तोऽहरादिस्तत्पुरुषोऽस्ति।।
-5-4-88- अह्नोऽह्न एतेभ्यः (2365)
(5936 सूत्रानर्थक्यबोधकवार्तिकम्।। 1 ।।)
- अह्नोऽह्नवचनानर्थक्यं चाह्नष्टखोर्नियमवचनात् -
(भाष्यम्) अह्नोऽह्नवचनमनर्थकम्।
किं कारणम्?
अह्नष्टखोर्नियमवचनात्। अह्नष्टखोरेव (6।4।145) इत्येतन्नियमार्थं भविष्यति।।
-5-4-103- अनसन्तान्नपुंसकाच्छन्दसि (2380)
5-4-1 आ. 27 (1025 विधिसूत्रम्
(विकल्पोपसंख्यानभाष्यम्)
अनसन्तान्नपुंसकाच्छन्दसि वेति वक्तव्यम्। ब्रह्मसामम्, ब्रह्मसाम। देवच्छन्दसम्, देवच्छन्दः।।
-5-4-113- बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् (2390)
(षचाक्षेपभाष्यम्)
किमर्थं षच् प्रत्ययान्तरं विधीयते, न टच्प्रकृतः सोऽनुवर्तिष्यते।।
अत उत्तरं पठति--

(5937 षच्करणस्य सार्थक्यबोधकवार्तिकम्।। 1 ।।)
- षचि प्रत्ययान्तरकरणमनन्तोदात्तार्थम् -
(भाष्यम्) षचि प्रत्ययान्तरं क्रियते।
किं प्रयोजनम्?
अनन्तोदात्तार्थम्। अनन्तोदात्ताः प्रयोजयन्ति--चक्रसक्थम्, चक्रसक्थी।।
-5-4-115- द्वित्रिभ्यां ष मूर्ध्नः (2392)
(षप्रत्ययाक्षेपभाष्यम्)
किमर्थं मूर्ध्नः षः प्रत्ययान्तरं क्रियते न षच्प्रकृतः सोऽनुवर्तिष्यते।।
<M.4.420>
(5938 षप्रत्ययस्य फलबोधकं वार्तिकम्।। 1 ।।)
- मूर्ध्नश्च षवचनम् -
(भाष्यम्) किम्?
अनन्तोदात्तार्थमित्येव। द्विमूर्धः, त्रिमूर्धः।।
-5-4-116- अप्पूरणीप्रमाण्योः (2393)
(5939 उपसंख्यानवार्तिकम्।। 1 ।।)
- अपि प्रधानपूरणीग्रहणम् -
(भाष्यम्) अपि प्रधानपूरणीग्रहणं कर्तव्यम्। प्रधानं या पूरणीति वक्तव्यम्। इह मा भूत्--कल्याणी पञ्चमी अस्य पक्षस्य कल्याणपञ्चमीकः पक्षः।।
अथेह कथं भवितव्यम्--कल्याणी पञ्चमी यासां रात्रीणामिति?
कल्याणीपञ्चमा रात्रय इति भवितव्यम्। रात्रयोऽत्र प्रधानम्।।
(5940 उपसंख्यानवार्तिकम्।। 2 ।।)
- नेतुर्नक्षत्रे उपसंख्यानम् -
(भाष्यम्) नेतुर्नक्षत्रे उपसंख्यानं कर्तव्यम्। पुष्यनेत्राः, मृगनेत्राः।।
(4941 उपंसख्यानवार्तिकम्।। 3 ।।)
- छन्दसि च -
(भाष्यम्) छन्दसि च नेतुरुपसंख्यानं कर्तव्यम्। बृहस्पतिनेत्राः, सोमनेत्राः।।
(5942 उपसंख्यानवार्तिकम्।। 4 ।।)
- मासात् भृतिप्रत्ययपूर्वपदाट्ठज्विधिः -
(भाष्यम्) मासात् भृतिप्रत्ययपूर्वपदात् ठच् विधेयः, पञ्चकमासिकः, षट्कमासिकः, दशकमासिकः।।
-5-4-118- अञ्नासिकायाः संज्ञायां नसं चास्थूलात् (2395)
(उपसंख्यानभाष्यम्)
खरखुराभ्यां च नस् वक्तव्यः। खरणाः, खुरणाः।
शितिना अर्चना अहिना इति नैगमाः। शितिनाः, अर्चनाः, अहिनाः।।
-5-4-119- उपसर्गाच्च (2396)
(उपसंख्यानभाष्यम्)
वेर्ग्रो वक्तव्यः। विग्रः।
(उपसंख्यानभाष्यम्)
(ख्यश्च वक्तव्यः। विख्यः।।)
<M.4.421>
-5-4-131- ऊधसोऽनङ् (2408)
(5943 उपसंख्यानवार्तिकम्।। 1 ।।)
- ऊधसोऽनङि स्त्रीग्रहणम् -
(भाष्यम्) ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम्। इह मा भूत्--महोधाः पर्जन्य इति।।
-5-4-135- गन्धस्येदुत्पूतिसुसुरभिभ्यः (2412)
(5944 उपसंख्यानवार्तिकम्।। 2 ।।)
- गन्धस्येत्त्वे तदेकान्तग्रहणम् -
(भाष्यम्) गन्धस्येत्त्वे तदेकान्तग्रहणं कर्तव्यम्।
इह मा भूत्--शोभना गन्धा अस्य सुगन्ध आपणिक इति।।
अथानुलिप्ते कथं भवितव्यम्?

यदि तावद्यदनुगतं तदभिसमीक्षितम् सुगन्धिः इति भवितव्यम्। अथ यत्प्रविशीर्णम् सुगन्धः इति भवितव्यम्।।
-5-4-154- शेषाद्विभाषा (2431)
(शेषपदार्थबोधकभाष्यम्)
शेषादित्युच्यते कः शेषो नाम?
याभ्यः प्रकृतिभ्यः समासान्तो न विधीयते स शेषः।।
(शेषपदस्य फलबोधकभाष्यम्)
किमर्थं पुनः शेषग्रहणं क्रियते?
याभ्यः प्रकृतिभ्यः समासान्तो विधीयते ताभ्यः कब्मा भूदिति।
नैतदस्ति प्रयोजनम्।
ये प्रतिपदं विधीयन्ते ते तत्र बाधका भविष्यन्ति।
अनवकाशा हि विधयो बाधका भवन्ति सावकाशाश्च समासान्ताः।
कोऽवकाशः?
विभाषा कप् यदा न कप् सोऽवकाशः। कपः प्रसङ्गे उभयं प्राप्नोति। परत्वात्कप् प्राप्नोति। तस्माच्छेषग्रहणं कर्तव्यम्।।
(शेषग्रहणे पक्षद्वयोपपादकभाष्यम्)
किं पुनिरदं शेषग्रहणं कबपेक्षम्--यस्माद्बहुव्रीहेः कब्न विहित इति, आहोस्वित्समासान्तापेक्षम्--यस्माद् बहुव्रीहेः समासान्तो न विहित इति?
किं चातः?
<M.4.422>
(प्रथमपक्षे दोषोपपादकभाष्यम्)
यदि विज्ञायते--कबपेक्षम्,
अनृचः--बह्वृच इत्यत्रापि प्राप्नोति।।
(द्वितीयपक्षे दोषोपपादकभाष्यम्)
अथ समासान्तापेक्षम्।
अनृक्कं साम--बह्वृक्कं सूक्तमिति न सिद्ध्यति।।
(प्रथमपक्षे दोषान्तरोपपादकभाष्यम्)
अस्तु कबपेक्षम्।
कथमनृचो बह्वृच इति?
विशेष एतद् वक्तव्यम्--अनृचो, माणवे बह्वृचश्चरणाख्यायाम् इति।
इदं तर्हि--ऊधसोऽनङि स्त्रीग्रहणं चोदितं तस्मिन् क्रियमाणेऽपि प्राप्नोति।।
(शेषग्रहणस्यापेक्ष्यनिर्धारकभाष्यम्)
एवं तर्हि नैव कबपेक्षं शेषग्रहणम्, नापि समासान्तापेक्षम्।
किन्तर्हि?
अनन्तरो यो बहुव्रीह्यधिकारः सोऽपेक्ष्यते। अनन्तरे बहुव्रीह्यधिकारे यस्माद् बहुव्रीहेः समासान्तो न विहित इति।
कथमनृचः--बह्वृच इति?
वक्तव्यमेवैतत्--अनृचो माणवे, बह्वृचश्चरणाख्यायाम् इति।।
-5-4-156- इर्यसश्च (2433)
(5945 पूर्वपक्षिवार्तिकम्।। 1 ।।)
- इर्यस उपसर्जनदीर्घत्वं च -
(भाष्यम्) इर्यस उपसर्जनदीर्घत्वं चेति वक्तव्यम्। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी, विद्यमानश्रेयसी।।
<M.4.423>
(5946 पूर्वपक्षिवार्तिकम्।। 1 ।।)
- पुंवद्वचनात्सिद्धम् -
(भाष्यम्) पुंवद्वचनात्सिद्धमेतत्। पुंवद्भावोऽत्र भवति--इर्यसो बहुव्रीहौ पुंवद्वचनमिति।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।।
।। पादश्च समाप्तः ।।
पञ्चमोऽध्यायः समाप्तः ।। -5-4-1- आ. 27 (1025 विधिसूत्रम् -5-4-103- 2380 अनसन्तान्नपुंसकाच्छन्दसि
(विकल्पोपसंख्यानभाष्यम्)
अनसन्तान्नपुंसकाच्छन्दसि वेति वक्तव्यम्। ब्रह्मसामम्, ब्रह्मसाम। देवच्छन्दसम्, देवच्छन्दः।।

# महाभाष्यम्/षष्ठोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/nmw
< महाभाष्यम्
-6-1-1- एकाचो द्वे प्रथमस्य (2438)
(द्वित्वाधिकरणम्)
(एकाच्पदार्थबोधकवार्तिकावतरणभाष्यम्)
एकाच इति किमयं बहुव्रीहिः --- एकोऽच् यस्मिन् स एकाच् --- एकाचः --- इति,
आहोस्वित् तत्पुरुषोऽयं समानाधिकरणः --- एकोऽच् --- एकाच् --- एकाच इति ?
किं चातः ?
यदि बहुव्रीहिः, सिद्धम् --- पपाच, पपाठ । इयाय, आर --- इति न सिद्ध्यति ।
अथ तत्पुरुषः समानाधिकरणः, सिद्धम् --- इयाय, आर --- इति । पपाच, पपाठ --- इति न सिद्ध्यति ।।
अत उत्तरं पठति ---
(5947 एकाच्पदार्थबोधकवार्तिकम् ।। 1 ।।)
- एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः -
एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशोऽयम् ।।
एकवर्णेषु च कथम् ?
(5948 अनुपपत्तिपरिहारकवार्तिकम् ।। 2 ।।)
- एकवर्णेषु च व्यपदेशिवद्वचनात् -
व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम् । एवमेकवर्णेषु द्विर्वचनं भविष्यति ।।
(अधिकारत्वनिर्णायकभाष्यम्)
एकाचो द्वे भवत इत्युच्यते, तत्र न ज्ञायते --- कस्यैकाचो द्वे भवत इति ।
वक्ष्यति लिटि धातोरनभ्यासस्य (6-1-8) इति, तेन धातोरेकाच इति विज्ञायते ।
यदि धातोरेकाच इति, सिद्धम् --- पपाच, पपाठ । जजागार, पुपुत्रीयिषति --- इति न सिध्यति ।
धातोरिति नैषैकाच्समानाधिकरणा षष्ठी --- धातोरेकाच इति ।
किं तर्हि ?
अवयवयोगैषा षष्ठी --- धातोर्य एकाजवयव इति ।।
अवयवयोगैषा षष्ठी चेत्सिद्धम् --- जजागार --- पुपुत्रीयिषतीति । पपाच --- पपाठेति न सिध्यति ।
एषोऽपि व्यपदेशिवद्भावेन धातोरेकाजवयव इति भविष्यति ।।
(प्रथमाक्षेपभाष्यम्)
एकाचो द्वे प्रथमस्येत्युच्यते तेन यत्रैव प्रथमश्चाप्रथमश्चास्ति तत्र द्विर्वचनं स्यात् --- जजागार, पुपुत्रीयिष्यतीति ।
पपाच --- पपाठेत्यत्र न स्यात् ।।
(5949 समाधानवार्तिकम् ।। 3 ।।)
- प्रथमत्वे च -
प्रथमत्वे च ।
किम् ?
व्यपदेशिवद्भावात्सिद्धमित्येव ।।
स तर्हि व्यपदेशिवद्भावो वक्तव्यः ।
न वक्तव्यः ।।
(5950 समाधानसाधकवार्तिकम् ।। 4 ।।)
- उक्तं वा -
किमुक्तम् ?
तत्र व्यपदेशिवद्वचनम् एकाचो द्वे प्रथमार्थम् षत्वे चादेशसंप्रत्ययार्थम् ।
नैषः दोषः ।
अवचनाल्लोकविज्ञानात्सिद्धम् इत्येव ।।
(5951 समाधानसाधकान्तरवार्तिकम् ।। 5 ।।)
- योगविभागो वा -
अथवा योगविभागः करिष्यते --- एकाचो द्वे भवतः ।।

किमर्थो योगविभागः ?
(5952 साधकान्तरसमर्थकवार्तिकम् ।। 6 ।।)
- एकाज्मात्रस्य द्विर्वचनार्थः -
एकाज्मात्रस्य द्विर्वचनं यथा स्यात् । इयायं, पपाच ।
ततः ---
प्रथमस्य ।
प्रथमस्यैकाचो द्वे भवतः ।
इदमिदानीं किमर्थम् ?
नियमार्थम् । यत्र प्रथमश्चाप्रथमश्चास्ति तत्र प्रथमस्यैकाचो द्विर्वचनं यथा स्यात्, अप्रथमस्य मा भूदिति । जजागार --- पुपुत्रीयिषतीति ।।
(5953 आक्षेपवार्तिकम् ।। 7 ।।)
- एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनप्रसङ्गः -
एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनं प्राप्नोति । नेनिजतीत्यत्र निज्शब्दोऽप्येकाच्, इज्शब्दोऽप्येकाच्, इकारोऽप्येकाच्, निशब्दोऽपि ।
तत्र निज्शब्दस्य द्विर्वचने रूपं सिद्धम्, दोषाश्च न सन्ति ।
इज्शब्दस्य द्विर्वचने रूपं न सिध्यति, दोषा अपि न सन्ति ।
इकारस्य द्विर्वचने रूपं न सिद्ध्यति, दोषाश्च सन्ति ।
निशब्दस्य द्विर्वचने रूपं सिद्धम्, दोषास्तु सन्ति ।।
तत्र को दोषः ?
(5954 आक्षेपसमर्थकवार्तिकम् ।। 8 ।।)
- तत्र जुस्भाववचनम् -
तत्र जुस्भावो वक्तव्यः । अनेनिजुः, पर्यवेविषुः । अभ्यस्तात् झेर्जुस्भावो भवतीति जुस्भावो न प्राप्नोति, जकारेण व्यवधानात् ।।
(5955 आक्षेपसमर्थकवार्तिकम् ।। 9 ।।)
- स्वरश्च -
स्वरश्च न सिध्यति । नेनिजति --- यत्परिवेविषतीति । अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुक इत्येष स्वरो न प्राप्नोति ।।
(5956 आक्षेपसमर्थकवार्तिकम् ।। 10 ।।)
- अद्भावश्च -
अद्भावश्च न सिध्यति । नेनिजति, परिवेविषतीति । अदभ्यस्तात् (6-1-4) इत्यद्भावो न प्राप्नोति ।।
(5957 आक्षेपसमर्थकवार्तिकम् ।। 11 ।।)
- नुम्प्रतिषेधश्च -
नुम्प्रतिषेधश्च न सिद्ध्यति । नेनिजत्, परिवेविषत् । नाभ्यस्ताच्शतुः (7-1-78) इति नुम्प्रतिषेधो न प्राप्नोति, जकारणे व्यवधानात् ।।
(5958 समर्थकवार्तिकम् ।। 12 ।।)
- शास्त्रहानिश्च -
शास्त्रहानिश्च भवति । समुदायैकाचः शास्त्रं हीयते ।।
(5959 आक्षेपवारकवार्तिकम् ।। 13 ।।)
- सिद्धं तु तत्समुदायैकाच्त्वात् शास्त्राहानेः -
सिद्धमेतत् ।
कथम् ?
तत्समुदायैकाच्त्वात् ।
किमिदं तत्समुदायैकाच्त्वादिति ?
तस्य समुदायस्तत्समुदायः । एकाज्भाव एकाच्त्वम् । तत्समुदायस्यैकाच्त्वं तत्समुदायैकाच्त्वम्, तत्समुदायैकाच्त्वात् । तत्समुदायैकाचो द्विर्वचनं भविष्यति ।।
कुत एतत् ?
शास्त्राहानेः, एवं हि शास्त्रमहीनं भवति ।।
ननु च समुदायैकाचोऽपि द्विर्वचने क्रियमाणेऽवयवैकाचः शास्त्रं हीयते ।
न हीयते ।
किं कारणम् ?
अवयवात्मकत्वात्समुदायस्य । अवयवात्मकः समुदायः । अभ्यन्तरो हि समुदायेऽवयवः । तद्यथा --- वृक्षः प्रचलन् सहावयवैः प्रचलति ।।
(5960 आक्षेपवार्तिकम् ।। 14 ।।)
- तत्र बहुव्रीहिनिर्देशे अनच्कस्य द्विर्वचनमन्यपदार्थत्वात् -
तत्र बहुव्रीहिनिर्देशेऽनच्कस्य द्विर्वचनं प्राप्नोति । आटतुः, आटुः ।

किं कारणम् ?
अन्यपदार्थत्वाद् बहुव्रीहेः । अन्यपदार्थे बहुव्रीहिर्वर्तते, तेन यदन्यदचस्तस्य द्विर्वचनं स्यात् ।
तद्यथा --- चित्रगुरानीयतामित्युक्ते यस्यता गावः सन्ति स आनीयते, न गावः ।।
(5961 समाधानवार्तिकम् ।। 15 ।।)
- सिद्धं तु तद्गुणसंविज्ञानात्पाणिनेर्यथा लोके -
सिद्धमेतत् ।
कथम् ?
तद्गुणसंविज्ञानाद्भगवतः पाणिनेराचार्यस्य, यथा लोके । तद्यथा --- लोके शुक्लवाससमानाय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति । एवमिहापि ।।
(स्थाने द्विर्वचनपक्षोपपादकभाष्यम्)
अथ यस्य द्विर्वचनमारभ्यते किं तस्य स्थाने भवति, आहोस्विद् द्विः प्रयोग इति ।
कश्चात्र विशेषः ?
(5962 स्थाने द्विर्वचनपक्षे आक्षेपवार्तिकम् ।। 16 ।।)
- स्थाने द्विर्वचने णिलोपवचनं समुदायादेशत्वात् -
स्थाने द्विर्वचने णिलोपो वक्तव्यः । आटिटत्, आशिशत् ।
किं कारणम् ?
समुदायादेशत्वात् । समुदायस्य समुदाय आदेशः, तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययसमुदायस्य नष्टो णिर्भवतीति णेरनिटि (6-4-51) इति णिलोपो न प्राप्नोति ।
इदमिह संप्रधार्यम् --- द्विर्वचनं क्रियतां णिलोप इति, किमत्र कर्तव्यम् ?
परत्वाण्णिलोपः ।
नित्यं द्विर्वचनम् । कृतेऽपि णिलोपे प्राप्नोत्यकृतेऽपि ।
अनित्यं द्विर्वचनम् । अन्यस्य कृते णिलोपे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।
नित्यमेव द्विर्वचनम् ।
कथम् ?
रूपस्य स्थानिवत्त्वात् ।।
(5963 आक्षेपवार्तिकम् ।। 17 ।।)
- यच्च सन्यङन्तस्य द्विर्वचने -
यच्च सन्यङन्तस्य द्विर्वचने चोद्यं तदिहापि चोद्यम् ।
किं पुनस्तत् ?
सन्यङन्तस्येति चेदशेः सन्यनिटः दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात् आवृद्ध्योश्चाभ्यस्तविधिप्रतिषेधः सन्यङाश्रये च समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेश आमिश्रत्वात् इति ।।
(सिद्धान्तोपपादकभाष्यम्)
अस्तु तर्हि द्विः प्रयोगो द्विर्वचनम् ।
(5964 सिद्धान्ताक्षेपवार्तिकम् ।। 18 ।।)
- द्विः प्रयोग इति चेण्णकारषकारादेशादेरेत्ववचनं लिटि -
द्विः प्रयोग इति चेण्णकारषकारादेशादेरेत्वं लिटि वक्तव्यम् । नेमतुः, नेमुः । सेहे, सेहाते, सेहिरे । अनादेशादेरिति प्रतिषेधः प्राप्नोति ।
स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशः, तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स आदेशादिर्भवति ।।
(समाधानभाष्यम्)
द्विः प्रयोगेऽपि द्विर्वचने सति न दोषः । वक्ष्यति तत्र लिड्ग्रहणस्य प्रयोजनम् --- लिटिय आदेशादिस्तदादेर्न इति ।।
(5965 आक्षेपवार्तिकम् ।। 19 ।।)
- इड्वचनं च यङ्लोपे -
इट् च यङ्लोपे वक्तव्यः । बेभिदिता, बेभिदितुम् । एकाच उपदेशेनुदात्तात् (7-2-10) इतीट्प्रतिषेधः प्राप्नोति ।
स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स भवति य एकाजुपदेशेऽनुदात्तः ।।
(समाधानभाष्यम्)
द्विः प्रयोगे चापि द्विर्वचने न दोषः । एकाज्ग्रहणेनाङ्गं विशेषयिष्यामः --- एकाचोऽङ्गादिति ।
ननु चैकैकमत्राङ्गम् ।
समुदाये या वाक्यपरिसमाप्तिस्तयाऽङ्गसंज्ञा भविष्यति ।
कुत एतत् ?
शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति ।।

(5966 आक्षेपवार्तिकम् ।। 20 ।।)
- इड्दीर्घप्रतिषेधश्च -
इटो दीर्घत्वस्य च प्रतिषेधो वक्तव्यः । जरीगृहिता, जरीगृहितुम् । ग्रहोऽलिटि दीर्घः (7-2-37) इति दीर्घत्वं प्राप्नोति । स्थाने पुनर्दिर्वचने समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो ग्रहिः ।।
(समाधानभाष्यम्)
द्विः प्रयोगे चापि द्विर्वचने न दोषः । ग्रहिणाऽङ्गं विशेषयिष्यामः --- ग्रहेरङ्गादिति । ननु चैकैकमप्यत्राङ्गम् । समुदाये या वाक्यपरिसमाप्तिस्तयाऽङ्गसंज्ञा भविष्यति ।
कुत एतत् ?
शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति ।।
(5967 दोषवार्तिकम् ।। 21 ।।)
- पदादिविधिप्रतिषेधश्च -
पदादिलक्षणविधेः प्रतिषेधो वक्तव्यः । सिषेच, सुष्वाप । सात्पदाद्योः (8-3-111) इति षत्वप्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति न दोषः । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स पदादिर्भवति ।।
(समाधानभाष्यम्)
द्विः प्रयोगे चापि द्विर्वचने न दोषः । सुप्तिङ्भ्यां पदं विशेषयिष्यामः --- सुप्तिङन्तं पदम् --- यस्मात्सुप्तिङ्विधिस्तिदादि सुबन्तं तिङन्तं च । ननु चैकैकस्मादप्यत्र सुप्तिङ्विधिः । समुदाये या वाक्यपरिसमाप्तिस्तया पदसंज्ञा भविष्यति ।
कुत एतत् ?
शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति ।।
तावेव सुप्तिङौ यौ
ततः परौ सैव च प्रकृतिराद्या ।
आदिग्रहणं च कृतं
समुदायपदत्वमेतेन ।।
-6-1-2- अजादेर्द्वितीयस्य (2439)
(5968 द्वितीयस्येति पदाक्षेपवार्तिकम् ।। 1 ।।)
- द्वितीयस्येत्यवचनमजादेरिति कर्मधारयात्पञ्चमी -
द्वितीयस्येति शक्यमवक्तुम् ।
कथम् ?
अजादेरिति नैषा बहुव्रीहेः षष्ठी --- अज् आदिर्यस्य सोऽयमजादिः --- अजादेरिति ।
किं तर्हि ?
कर्मधारयात्पञ्चमी --- अच् आदिः --- अजादिः, अजादेः परस्येति । तत्रान्तरेण द्वितीयग्रहणं द्वितीयस्यैव भविष्यति ।।
(5969 प्रत्याक्षेपवार्तिकम् ।। 2 ।।)
- द्वितीयद्विर्वचने प्रथमनिवृत्तिः प्राप्तत्वात् -
द्वितीयद्विर्वचने प्रथमस्य निवृत्तिर्वक्तव्या । अटिटिषति, अशिशिषतीति ।
किं कारणम् ?
प्राप्तत्वात् । प्राप्नोति एकाचो द्वे प्रथमस्य (6-1-1) इति ।।
ननु च द्वितीयद्विर्वचनं प्रथमद्विर्वचनं बाधिष्यते ।
कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ?
असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात् ।।
(5970 प्रत्याक्षेपसमाधानवार्तिकम् ।। 3 ।।)
- न वा प्रथमविज्ञाने हि द्वितीयाप्राप्तिरद्वितीयत्वात् -
न वा वक्तव्यम् ।
किं कारणम् ?
प्रथमविज्ञाने हि सति द्वितीयस्याप्राप्तिः स्यात् ।
किं कारणम् ?
अद्वितीयत्वात् । न हीदानीं प्रथमद्विर्वचने कृते द्वितीयो द्वितीयो भवति ।
कस्तर्हि ?
तृतीयः । तद्यथा --- द्वयोरासीनयोस्तृतीय उपजायमाने न द्वितीयो भवति ।
कस्तर्हि ?

तृतीयः ।।
न हि किंचिदुच्यते --- अकृते द्विर्वचने यो द्वितीयस्तस्य भवितव्यमिति ।
किं तर्हि ?
कृते द्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं भविष्यति ।।
अनारम्भसममेवं स्यात् । अटेः प्रथमस्य द्विर्वचनं स्यात्, हलादिः शेषः; द्वितीयस्य द्विर्वचनम्, हलादिः शेषः । त्रयाणामकाराणां पररूपत्वे --- अटिषतीत्येवं रूपं स्यात् ।।
नानारम्भसमम् । अटेः प्रथमस्य द्विर्वचनम्, हलादिः शेषः, इत्वम्, द्वितीयस्य द्विर्वचनम्, हलादिः शेषः, इत्वम्, द्वयोरिकारयोः सवर्णदीर्घत्वम्, अभ्यासस्यासवर्णे (6-4-78) इतीयङादेशः, इयटिषतीत्येतद्रूपं यथा स्यात्, ओणेश्वोवोणिषतीति ।।
नानिष्टार्था शास्त्रप्रवृत्तिर्भवितुमर्हति ।।
(5971 प्रत्याक्षेपसमाधाने दृष्टान्तवार्तिकम् ।। 4 ।।)
- यथा वाऽऽदिविकारेऽलोन्त्यविकाराभावः -
यथा वा आदिविधावलोन्त्यविधिर्न भवति, एवं द्वितीयद्विर्वचने प्रथमद्विर्वचनं न भविष्यति ।।
विषम उपन्यासः । नाप्राप्तेऽलोन्त्यविधावादिविधिरारभ्यते स तस्य बाधको भविष्यति ।।
इदमप्येवंजातीयकम् । नाप्राप्ते प्रथमद्विर्वचने द्वितीयद्विर्वचनमारभ्यते तद्बाधकं भविष्यति ।।
यदप्युच्यते --- असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यादिति, नैतदस्ति ।
सत्यपि संभवे बाधनं भवति । तद्यथा --- दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि दधिदानस्य संभवे तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनं बाधिष्यते ।।
(वार्तिकावतरणभाष्यम्)
तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिर्वक्तव्या । अटिटिषति --- इति । यथैवाचो निवृत्तिर्भवत्येवं व्यञ्जनस्यापि प्राप्नोति ।।
(5972 आक्षेपवारकवार्तिकम् ।। 5 ।।)
- तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिरशासनात्पूर्वस्य -
तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिः सिद्धा ।
कुतः ?
अशासनात्पूर्वस्य । नेह वयं पूर्वस्य प्रतिषेधं शिष्मः ।
किं तर्हि ?
द्वितीयस्य द्विर्वचनमारभामहे । व्यञ्जनानि पुनर्नटभार्यावद्भवन्ति । तद्यथा --- नटानां स्त्रियो रङ्गगता यो यः पृच्छति कस्य यूयं कस्य यूयमिति तं तं तव तवेत्याहुः । एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यते तं तं भजन्ते ।।
(5973 व्यञ्जनानिवृत्तौ हेतुवार्तिकम् ।। 6 ।।)
- न्द्रादिप्रतिषेधाच्च -
यदयं न न्द्राः संयोगादयः (6-1-3) इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः --- पूर्वनिवृत्तौ व्यञ्जनस्यानिवृत्तिरिति ।।
(5974 पूर्वपक्षवार्तिकम् ।। 7 ।।)
- तत्र द्वितीयाभावे प्रथमाद्विर्वचनं प्रतिषिद्धत्वात् -
तत्र द्वितीयस्यैकाचोऽभावे प्रथमस्य द्विर्वचनं न प्राप्नोति । आटतुः, आटुः ।
किं कारणम् ?
प्रतिषिद्धत्वात् । अजादेर्द्वितीयस्येति प्रतिषेधात् ।।
(पूर्वपक्षसमाधानभाष्यम्)
नैष दोषः । सति तस्मिन्प्रतिषेधः । सति द्वितीयद्विर्वचने प्रथमस्य प्रतिषेधः ।।
(5975 प्रत्याक्षेपवार्तिकम् ।। 8 ।।)
- सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोषः -
सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोषो भवति । हलादिशेषे सत्याद्ये हल्यनाद्यस्य हलो लोपः स्यात् ।
इहैव स्यात् --- पपाच पपाठेति ।
इह न स्यात् --- आटतुः, आटुरिति ।।
(5976 प्रत्याक्षेपवारकवार्तिकम् ।। 9 ।।)
- लोकवद्धलादिशेषे -
लोकवद्धलादिशेषे सिद्धम् । तद्यथा --- लोके इश्वर आज्ञापयति --- ग्रामाद्ग्रामान्मनुष्या आनीयन्ताम्, प्रागाङ्गं ग्रामेभ्यो ब्राह्मणा आनीयन्तामिति । येषु तत्र ग्रामेषु ब्राह्मणा न सन्ति न तर्हीदानीं ततोऽन्यस्यानयनं भवति । यथा तत्र क्वचिदपि ब्राह्मणस्य सत्ता सर्वत्राब्राह्मणस्य निवर्तिका भवति, एवमिहापि क्वचिदपि
हलाद्यः सन् सर्वस्यानाद्यस्य हलो निवर्तको भवति ।।
(5977 प्रत्याक्षेपवार्तिकम् ।। 10 ।।)

- क्वचिदन्यत्र लोप इति चेत् द्विर्वचनम् -
क्वचिदन्यत्र लोप इति चेद् द्विर्वचनमप्येवं प्राप्नोति । क्वचिदपि द्वितीयः सन् सर्वस्य प्रथमस्य निवर्तकः स्यात् ।।
(सिद्धान्तभाष्यम्)
तस्मादस्तु सति तस्मिन् प्रतिषेध इत्येव ।
ननु चोक्तं सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोष इति ।
प्रतिविधास्यते हलादिशेषे ।।
-6-1-3- न न्द्राः संयोगादयः (2440)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते ?
(5978 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- न्द्रादेर्द्विर्वचनप्रसङ्गस्तत्र न्द्राणां प्रतिषेधः -
न्द्रादेरेकाचो द्विर्वचनं प्राप्नोति । तत्र न्द्राणां संयोगादीनां प्रतिषेध उच्यते ।।
(5979 उपसंख्यानवार्तिकम् ।। 2 ।।)
- ईर्ष्यतेस्तृतीयस्य द्वे भावतः -
ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम् ।
केचिदाहुः --- एकाच इति । ईर्ष्यिषिषति ।
अपर आह ---
व्यञ्जनस्येति । ईर्ष्यियिषति ।।
(5980 उपसंख्यानवार्तिकम् ।। 3 ।।)
- कण्ड्वादीनां च -
कण्ड्वादीनां च तृतीयस्य द्वे भवत इति वक्तव्यम् । कण्डूयियिषति । असूयियिषति ।।
(5981 उपसंख्यानवार्तिकम् ।। 4 ।।)
- वा नामधातूनाम् -
वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम् । अश्वीयियिषति । अशिश्वीयिषति ।।
अपर आह ---
यथेष्टं वा ।
यथेष्टं वा नामधातूनामिति । पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति।।
-6-1-4- पूर्वोऽभ्यासः (2441)
?B(अभ्याससंज्ञाधिकरणम्)
(सूत्रार्थसंयोजकभाष्यम्)
पूर्वोऽभ्यास इत्युच्यते, कस्य पूर्वोऽभ्याससंज्ञो भवति ?
द्वे इति वर्तते । द्वयोरिति वक्तव्यम् ।।
स तर्हि तथानिर्देशः कर्तव्यः । न कर्तव्यः । अर्थाद्विभक्तिविपरिणामो भविष्यति ।
तद्यथा --- -उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम् । देवदत्तमिति गम्यते ।
देवदत्तस्य गावोऽश्वा हिरण्यम्, आढ्यो वैधवेयः । देवदत्त इति गम्यते ।
पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति ।
एवमिहापि पुरस्तात् प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति ।।
-6-1-5- उभे अभ्यस्तम् (2442)
(अभ्यस्तसंज्ञाधिकरणम्)
(5982 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अभ्यस्तसंज्ञायां सहग्रहणम् -
उभे अभ्यस्तं सहेति वक्तव्यम् । किं प्रयोजनम् ?
(5983 सहपदप्रयोजनवार्तिकम् ।। 2 ।।)
- आद्युदात्तत्वे पृथगप्रसङ्गार्थम् -
आद्युदात्तत्वं सहभूतयोर्यथा स्यात्, एकैकस्य मा भूदिति ।
यस्मिन्नेवाभ्यस्तकार्येऽदोषस्तदेव पठितम् । अनुदात्तं पदमेकवर्जम् (6-1-158) इति नास्ति यौगपद्येन संभवः ।
पर्यायस्तर्हि प्रसज्येत । पर्यायश्च पूर्वस्य तावत् परेण रूपेण व्यवहितत्वान्न भविष्यति ।
परस्य तर्हि स्यात् । तत्राचार्यप्रवृत्तिर्ज्ञापयति --- न परस्य भवतीति, यदयं बिभेत्यादीनां पिति प्रत्ययात्पूर्वमुदात्तं भवतीत्याह । एवं व्यवधानान्न पूर्वस्य, ज्ञापकान्न परस्य ।

उच्यते चेदं --- अभ्यस्तानामादिरुदात्तो भवतीति । तत्र स एव दोषः --- पर्यायः प्रसज्येत ।
तस्मात्सहग्रहणं कर्तव्यम् ।।
(सहग्रहणप्रत्याख्यानभाष्यम्)
न कर्तव्यम् । उभेग्रहणं क्रियते तत्सहार्थं विज्ञास्यते । अस्त्यन्यदुभेग्रहणस्य प्रयोजनम् ।
किम् ?
उभेग्रहणं संज्ञिनिर्देशार्थम् ।
अन्तरेणाप्युभेग्रहणं प्रक्लृप्तः संज्ञिनिर्देशः ।
कथम् ?
द्वे इति वर्तते ।।
इदं तर्हि प्रयोजनम् --- यत्रोभे शब्दरूपे श्रूयेते तत्राभ्यस्तसंज्ञा यथा स्यात्, इह मा भूत् --- ईर्त्सन्ति --- इर्प्सन्तीति, ईर्त्सन् --- इर्प्सन्, ऐर्त्सन् --- ऐप्सन् ।
किंच स्यात् ?
अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन् ।।
अद्भावे तावन्न दोषः । सप्तमे योगविभागः करिष्यते --- इदमस्ति अदभ्यस्तात् (7-1-4) इति । तत आत्मनेपदेषु । आत्मनेपदेषु चाद्भवति । अनत इत्युभयोः शेषः ।।
यदप्युच्यते --- नुम्प्रतिषेध इति ।
एकादेशे कृते व्यपवर्गाभावान्न भविष्यति ।
इदमिह संप्रधार्यं --- नुम्प्रतिषेधः क्रियतामेकादेश इति, किमत्र कर्तव्यम् ?
परत्वान्नुम्प्रतिषेधः । नित्य एकादेशः, कृतेऽपि नुम्प्रतिषेधे प्राप्नोत्यकृतेऽपि । एकादेशोऽप्यनित्यः । अन्यस्य कृते नुम्प्रतिषेधे प्राप्नोति, अन्यस्याकृते; शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।
अन्तरङ्गस्तर्ह्येकादेशः ।
काऽन्तरङ्गता ?
वर्णावाश्रित्यैकादेशः, विधिविषये नुम्प्रतिषेधः । विधिश्च नुमः सर्वनामस्थाने, प्राक्तु सर्वनामस्थानोत्पत्तेरेकादेशः । तत्र नित्यत्वाच्चान्तरङ्गत्वाच्चैकादेशः, एकादेशे कृते व्यपवर्गाभावान्नुम्प्रतिषेधो न भविष्यति ।।
यदप्युच्यते --- जुस्भाव इति ।
एकादेशे कृते व्यपवर्गाभावान्न भविष्यति ।
एकादेश इत्युच्यते, केन चात्रैकादेशः ?
अन्तिना ।
नात्रान्तिभावः प्राप्नोति ।
किं कारणम् ?
जुस्भावेन बाध्यते ।
नात्र जुस्भावः प्राप्नोति ।
किं कारणम् ?
शपा व्यवहितत्वात् ।
एकादेशे कृते नास्ति व्यवधानम् ।
एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव ।।
किं पुनः कारणम् निमित्तवानन्तिरेकादेशं तावत्प्रतीक्षते, न पुनस्तावत्येव निमित्तमस्तीत्यन्तिभावेन भवितव्यम् ?
इहापि तर्हि तावत्येव निमित्तमस्तीत्यन्तिभावः स्यात् --- अनेनिजुः, पर्यवेविषुः । अस्तु, अन्तिभावे कृते स्थानिवद्भावाज्झिग्रहणेन ग्रहणाज्जुस्भावो भविष्यति ।।
अथवा यद्यपि निमित्तिवानन्तिरयं तस्य जुस्भावोऽपवादः, न चापवादविषये उत्सर्गोऽभिनिमविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयमुत्सर्गः प्रवर्तते । न तावदत्र कदाचिदप्यन्तिभावो भवति । अपवादं जुस्भावं प्रतीक्षते ।।
नखल्वपि क्वचिदभ्यस्तानां ज्ञेश्चानन्तर्यम्, सर्वत्र विकरणैर्व्यवधानम् । तेनावश्यं विकरणनाशः प्रतीक्ष्यः
क्वचिल्लुका, क्वचित् श्लुना, क्वचिदेकादेशेन । स यथैव श्लुलुकौ प्रतीक्षते तथैकादेशमपि प्रतीक्षते ।
एवं तर्हीदमिह व्यपदेश्यं सत् आचार्यो न व्यपदिशति ।
किम् ?
स्थानिवद्भावम् । स्थानिवद्भावाद्व्यवधानम्, व्यवधानान्न भविष्यति ।
पूर्वविधौ स्थानिवद्भावो न चायं पूर्वस्य विधिः ।
पूर्वस्मादपि विधिः पूर्वविधिः ।।
तदेतदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते ।।

(पक्षभेदेन सहपदप्रयोजनभाष्यम्)
कथं कृत्वैकैकस्याप्यभ्यस्तसंज्ञा प्राप्नोति ?
प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति । तद्यथा --- प्रत्येकं वृद्धिगुणसंज्ञे भवतः ।
ननु चायमप्यस्ति दृष्टान्तः --- समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा --- गर्गाः शतं दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति ।
सत्येतस्मिन् दृष्टान्ते तत्र यदि प्रत्येकमित्युच्यत इहापि सहग्रहणं कर्तव्यम् ।
अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवत इहापि नार्थः सहग्रहणेन ।।
-6-1-6- जक्षित्यादयः षट् (2443)
(5984 षट्पदाक्षेपवार्तिकम् ।। 1 ।।)
- जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम् -
जक्षित्यादिषु सप्तग्रहणं कर्तव्यम् । सप्त जक्षित्यादयोऽभ्यस्तसंज्ञका भवन्तीति वक्तव्यम् ।
किं प्रयोजनम् ?
वेवीत्यर्थम् । वेवीतेरभ्यस्तसंज्ञा यथा स्यात् । वेव्यते । अभ्यस्तानामादिः इत्याद्युदात्तत्वं भवति ।।
(5985 षट्पदप्रत्याख्यानवार्तिकम् ।। 2 ।।)
- अपरिगणनं वा गणान्तत्वात् -
न वाऽर्थः परिगणनेन । अस्त्वागणान्तमभ्यस्तसंज्ञा ।।
इहापि तर्हि प्राप्नोति --- आङः शासु ।
अस्तु ।
अभ्यस्तकार्याणि कस्मान्न भवन्ति ?
भूयिष्ठानि कार्याणि परस्मैपदेषु, आत्मनेपदी चायम् ।
स्वरस्तर्हि प्राप्नोति । यत्राप्यस्यात्मनेपदेष्वभ्यस्तकार्यं स्वरस्तत्राप्यनुदात्तेतः परं लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वे कृते नास्ति विशेषो धातुस्वरेणोदात्तत्वे सत्यभ्यस्तस्वरेण वा ।।
षसिवशी छान्दसौ । दृष्टानुविधयश्छन्दसि भवन्ति ।।
चर्करीतमभ्यस्तसंज्ञमेव ।।
ह्नुङस्तर्हि प्राप्नोति ।
अस्तु ।
अभ्यस्तकार्याणि कस्मान्न भवन्ति ?
भूयिष्ठानि परस्मैपदेषु, आत्मनेपदी चायम् ।
स्वरस्तर्हि प्राप्नोति ।
अह्निवङोः इति प्रतिषेधविधानसामर्थ्यात्स्वरो न भविष्यति ।।
(षट्पदार्थकथनपरभाष्यम्)
अथवा सप्तैवेमे धातवः पठ्यन्ते । जक्ष् --- अभ्यस्तसंज्ञो भवति । इत्यादयश्च षट्, जक्षित्यादयः षडिति ।।
-6-1-7- तुजादीनां दीर्घोऽभ्यासस्य (2444)
- तुजादिषु च्छन्दः प्रत्ययग्रहणम् -
तुजादिषु च्छन्दः प्रत्ययग्रहणं कर्तव्यम् । छन्दसि तुजादीनां दीर्घो भवतीति वक्तव्यम् । अस्मिंश्चास्मिंश्च प्रत्यय इति वक्तव्यम् । इह मा भूत्तुतोज शबलान् हरीन् ।।
(5986 उपसंख्यानानुपयोगकथने वार्तिकम् ।। 2 ।।)
- अनारम्भो वाऽपरिगणितत्वात् -
अनारम्भो वा पुनश्छन्दसि दीर्घत्वस्य नाय्यः ।
कुतः ?
अपरिगणितत्वात् । न हि च्छन्दसि दीर्घस्य परिगणनं कर्तुं शक्यम् ।
किं कारणम् ?
(5987 उपसंख्यानानुपयोगसाधकवार्तिकम् ।। 3 ।।)
- अन्येषां च दर्शनात् -
येषामपि दीर्घत्वं नारभ्यते तेषामपि च्छन्दसि दीर्घत्वं दृश्यते । तद्यथा --- पूरुषः, नारक इति ।।
(5988 उपसंख्यानानुपयोगसाधकवार्तिकम् ।। 4 ।।)
- अनेकान्तत्वाच्च -
येषां चाप्यारभ्यते तेषामप्यनेकान्तः । यस्मिन्नेव च प्रत्यये दीर्घत्वं दृश्यते तस्मिन्नेव च प्रत्यये न दृश्यते --- मामहान उक्थपात्रम्, ममहान इति च ।।

-6-1-8- लिटि धातोरनभ्यासस्य (2445)
(द्वित्वाधिकरणम्)
(पदकृत्यभाष्यम्)
धातोरिति किमर्थम् ?
इर्हाञ्चक्रे ।
नैतदस्ति । लिटीत्युच्यते, न चात्र लिटं पश्यामः ।
प्रत्ययलक्षणेन ।
न लुमता तस्मिन् (1-1-63) इति प्रत्ययलक्षणप्रतिषेधः ।
इदं तर्हि --- ससृवांसो विशृण्विरे ।।
(5989 उपसंख्यानवार्तिकम् ।। 1 ।।)
- लिटि द्विर्वचने जागर्तेर्वावचनम् -
लिटि द्विर्वचने जागर्तेर्वेति वक्तव्यम् । यो जागार तमृचः कामयन्ते । यो जजागार तमृचः कामयन्ते ।
(पदकृत्यभाष्यम्)
अनभ्यासस्येति किम् ?
कृष्णो नोनाव वृषभो यदीदम् । नोनूयतेर्नोनाव ।।
(5990 अभ्यासप्रतिषेधानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- अभ्यासप्रतिषेधानर्थक्यं च छन्दसि वावचनात् -
अभ्यासप्रतिषेधश्चानर्थकः ।
किं कारणम् ?
छन्दसि वावचनात् । अवश्यं छन्दसि वा द्वे भवत इति वक्तव्यम् ।
किं प्रयोजनम् ?
(5991 विकल्पप्रयोजनवार्तिकम् ।। 3 ।।)
- प्रयोजनमादित्यान्याचिषामहे -
यियाचिषामह इति प्राप्ते । देवता नो दाति प्रियाणि, ददाति प्रियाणि । मघवा दातु, मघवा ददातु । स न स्तुतो वीरवद्धातु । वीरवद्दधातु ।।
(धातुग्रहणप्रत्याख्यानभाष्यम्)
यावतेदानीं छन्दसि वा द्वे भवत इत्युच्यते धातुग्रहणेनापि नार्थः ।
कस्मान्न भवति --- ससृवांसो विशृण्विर इति ?
छन्दसि वावचनात् ।।
तदेतद्धातुग्रहणं सान्यासिकं तिष्ठतु तावत् ।।
-6-1-9- सन्यङोः (2446)
(विभक्तिसन्देहभाष्यम्)
किमियं षष्ठी, आहोस्वित्सप्तमी ?
कुतः सन्देहः ?
समानो निर्देशः ।
किं चातः ?
यदि षष्ठी, सन्यङन्तस्य द्विर्वचनेन भवितव्यम् ।
अथ सप्तमी, सन्यङोः परतः पूर्वस्य द्विर्वचनेन भवितव्यम् ।
कश्चात्र विशेषः ?
(5992 सप्तमीपक्षे दोषवार्तिकम् ।। 1 ।।)
- सन्यङोः परत इति चेदिटो द्विर्वचनं परादित्वात् -
सन्यङोः परत इति चेदिटो द्विर्वचनं कर्तव्यम् । अटिटिषति, अशिशिषति ।
किं पुनः कारणं न सिद्ध्यति ?
परादित्वात् । इट् परादिः ।।
(5993 सप्तमीपक्षे दोषवार्तिकम् ।। 2 ।।)
- हन्तेश्चेटः -
हन्तेश्चेटो द्विर्वचनं कर्तव्यम् । जेघ्नीयते ।।
(प्रत्याक्षेपसमाधानभाष्यम्)
ननु च यस्यापि सन्यङन्तस्य द्विर्वचनं तस्यापि स्थानिवद्भावप्रसङ्गः । इर्टिं स्थानिवद्भावादीटो द्विर्वचनं न प्राप्नोति ।
नैष दोषः ।

द्विर्वचननिमित्तेऽचि स्थानिवदित्युच्यते, न चासौ द्विर्वचननिमित्तम् । यस्मिन्नपि द्विर्वचनं यस्यापि द्विर्वचनं सर्वोऽसौ द्विर्वचननिमित्तम् । तस्मादीटो द्विर्वचनम् । तस्मादुभाभ्यामेव इर्टो द्विर्वचनं कर्तव्यम्, यश्चोभयोर्दोषो न तमेकश्चोद्यो भवति ।।
(5994 सप्तमीपक्षे दोषवार्तिकम् ।। 3 ।।)
- एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधः -
एकाच उपदेशेऽनुदात्तात् (7-2-10) इत्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधो वक्तव्यः । विभित्सति, चिच्छित्सति । द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति ।।
(षष्ठीपक्षावतरणभाष्यम्)
अस्तु तर्हि सन्यङन्तस्य ।।
(5995 षष्ठीपक्षे दोषवार्तिकम् ।। 4 ।।)
- सन्यङन्तस्येति चेदशेः सन्यनिटः -
सन्यङन्तस्येति चेदशेः सन्यनिटो द्विर्वचनं वक्तव्यम् । इयक्षमाणा भृगुभिः सजोषाः ।।
(प्रत्याक्षेपभाष्यम्)
यस्यापि सन्यङोः परतो द्विर्वचनं तेनाप्यत्रावश्यमिडभावे यत्नः कर्तव्यः ।
किं कारणम् ?
अशेर्हि प्रतिपदमिड्विधीयते --- स्मिपूङ्रञ्ज्वशां सनि (7-2-74) इति । तेनैव द्वितीयद्विर्वचनमपि न भविष्यति ।।
(प्रत्याक्षेपसमाधानभाष्यम्)
अथ वा नैतदशे रूपम् । यजेरेष च्छान्दसो वर्णलोपः ।
तद्यथा --- तुभ्येदमग्ने, तुभ्यमिदमग्न इति प्राप्ते ।
अम्बानां चरुम्, नाम्बानां चरुमिति प्राप्ते ।
आव्याधिनीरुगणाः, सुगणा इति प्राप्ते ।
इष्कर्तारमध्वरस्य, निष्कर्तारमध्वरस्येति प्राप्ते ।
शिवा उद्रस्य भेषजी, शिवा रुद्रस्य भेषजीति प्राप्ते ।।
अश्यर्थो वै गम्यते ।
कः पुनरशेरर्थः ?
अश्नोतिर्व्याप्तिकर्मा । एवन्तर्हि --- यजिरप्यश्यर्थे वर्तते ।
कथं पुनरन्यो नामान्यस्यार्थे वर्तते ?
बह्वर्था अपि धातवो भवन्ति । तद्यथा --- वपिः प्रकिरणे दृष्टश्छेदनेऽपि वर्तते --- केशान् वपति ।
इर्डिः स्तुतिचोदनायाच्ञासु दृष्ट ईरणे चापि वर्तते --- अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्चावयन्ति ।
करोतिरयमभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते --- पृष्ठं कुरु --- पादौ कुरु, उन्मृदानेति गम्यते । निक्षेपणे चापि दृश्यते --- कटे कुरु --- घटे कुरु --- अश्मानमितः कुरु, स्थापयेति गम्यते ।।
एवं तर्हि ---
(5996 षष्ठीपक्षे दोषवार्तिकम् ।। 5 ।।)
- दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात् -
दीर्घत्वं द्विर्वचनाधिकस्य न सिध्यति । चिचीषति, तुष्टूषति । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः सन् भवति । तत्राजन्तानां सनीति दीर्घत्वं न प्राप्नोति ।।
इदमिह संप्रधार्यम् --- दीर्घत्वं क्रियतां द्विर्वचनमिति ।
किमत्र कर्तव्यम् ?
परत्वाद्दीर्घत्वम् ।
नित्यं द्विर्वचनम्, कृतेऽपि दीर्घत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति ।
दीर्घत्वमपि नित्यम् । कृतेऽपि द्विर्वचने प्राप्नोत्यकृतेऽपि प्राप्नोति।
अनित्यं दीर्घत्वम् । न हि कृते द्विर्वचने प्राप्नोति ।
किं कारणम् ?
समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्याजन्तता नास्तीति दीर्घत्वं न प्राप्नोति ।
द्विर्वचनमप्यनित्यम् । अन्यस्य कृते दीर्घत्वे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।
उभयोरनित्ययोः परत्वाद्दीर्घत्वम् ।।
यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तन्न सिध्यति । जुहूषति ।।
कुत्वं द्विर्वचनाधिकस्य न सिध्यति --- जिघांसति, जङ्घन्यते ।
किं कारणम् ?
समुदायस्य समुदाय आदेशस्तत्र संप्रमुमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो हन्तिर्भवति । तत्राभ्यासाद्धन्तिहकारस्येति कुत्वं न प्राप्नोति ।।

संप्रसारणं च द्विर्वचनाधिकस्य न सिद्ध्यति --- जुहूषति, जोहूयते । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टो ह्वयतिर्भवति । तत्र ह्वोऽभ्यस्तस्येति संप्रसारणं न प्राप्नोति ।
नैष दोषः । वक्ष्यत्येतत् --- ह्वोऽभ्यस्तनिमित्तस्येति । यावता चेदानीं ह्वोऽभ्यस्तनिमित्तस्येत्युच्यते सोऽप्यदोषो भवति यदुक्तम् --- यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तन्न सिद्ध्यतीति ।।
षत्वं च द्विर्वचनाधिकस्य न सिद्ध्यति --- पिपक्षति, यियक्षति । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः सन् भवति । तत्रेण्कुभ्यामुत्तरस्य प्रत्ययसकारस्येति षत्वं न प्राप्नोति ।।
इदमिह संप्रधार्यम् --- द्विर्वचनं क्रियतां षत्वमिति ।
किमत्र कर्तव्यम् ?
परत्वात्षत्वम् । पूर्वत्रासिद्धे षत्वम्, सिद्धासिद्धयोश्च नास्ति संप्रधारणा ।।
(5997 षष्ठीपक्षे दोषवार्तिकम् ।। 6 ।।)
- आबृद्ध्योश्चाभ्यस्तविधिप्रतिषेधः -
आबृद्ध्योश्चाभ्यस्ताश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । इर्प्सन्ति, ईर्त्सन्ति । इर्प्सन्, ईर्त्सन् । ऐप्सन्, ऐर्त्सन् ।
किं च स्यात् ?
अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन् ।।
नैष दोषः । उक्ता अत्र परिहाराः ।।
(5998 षष्ठीपक्षे दोषवार्तिकम् ।। 7 ।।)
- सङाश्रये च समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेश आमिश्रत्वात् -
सङाश्रये च कार्ये समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेशः ।
किं कारणम् ?
आमिश्रत्वात् । आमिश्रीभूतमिवेदं भवति । तद्यथा --- क्षीरोदके संपृक्ते आमिश्रत्वान्न ज्ञायते कियत् क्षीरं कियदुदकमिति, कस्मिन् वा अवकाशे क्षीरं कस्मिन्नवकाशे उदकमिति । एवमिहाप्यामिश्रत्वान्न ज्ञायते --- का प्रकृतिः, कः प्रत्ययः, कस्मिन्नवकाशे प्रकृतिः, कस्मिन्नवकाशे प्रत्यय इति ।
तत्र को दोषः ?
सङि झलीति कुत्वादीनि न सिद्ध्यन्ति ।
इदमिह संप्रधार्यम् --- द्विर्वचनं क्रियताम्, कुत्वादीनीति; किमत्र कर्तव्यम् ?
परत्वात्कुत्वादीनि । पूर्वत्रासिद्धे कुत्वादीनि, सिद्धासिद्धयोश्च नास्ति संप्रधारणा ।।
एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इति वक्तव्यम् । तच्चावश्यं वक्तव्यम् । विभाषिताः प्रयोजयन्ति । दोग्धा --- दोग्धा । द्रोढा --- द्रोढा ।।
यावता चेदानीं पूर्वत्रासिद्धीयमद्विर्वचन इत्युच्यते सोऽप्यदोषो भवति यदुक्तं षत्वं न सिद्ध्यति इति ।।
(सिद्धान्तकथनभाष्यम्)
इह स्थाने द्विर्वचने णिलोपोऽपरिहृतः । सन्यङोः परतो द्विर्वचने इटो द्विर्वचनं वक्तव्यम् । सन्यङन्तस्य द्विर्वचने हन्तेः कुत्वमपरिहृतम् ।
तत्र सन्यङन्तस्य द्विर्वचनं द्विः प्रयोगश्चेत्येष पक्षो निर्दोषः ।
तत्रेदमपरिहृतम् --- सन इट्प्रतिषेध इति ।
एतस्यापि सप्तमे परिहारं वक्ष्यति --- उभयविशेषणत्वात्सिद्धमिति ।
कथं जेघ्नीयते ?
वक्ष्यत्येतत् --- यङ्प्रकरणे हन्तेर्हिंसायां घ्नीति ।।
-6-1-12- दाश्वान् साह्वान्मीढ्वांश्च (2449)
(वार्तिकावतरणभाष्यम्)
दाश्वानिति किं निपात्यते ?
(5999 निपातनदर्शकवार्तिकम् ।। 1 ।।)
- दाशेर्वसौ द्वित्वेट्प्रतिषेधौ -
दाशेर्वसौ द्वित्वेट्प्रतिषेधौ निपात्येते । दाश्वांसो दाशुषः सुतम् ।।
दाश्वान् ।
साह्वानिति किं निपात्यते ?
(6000 निपातनदर्शकवार्तिकम् ।। 2 ।।)
- सहेर्दीर्घत्वं च -
किं च ?
द्वित्वेट्प्रतिषेधौ च । साह्वान् बलाहकः ।।
साह्वान् ।
मीढ्वानिति किं निपात्यते ?

(6001 निपातनदर्शकवार्तिकम् ।। 3 ।।)
- मिहेर्ढत्वं च -
यच्च पूर्वयोः ।
किञ्च पूर्वयोः ?
द्वित्वेट्प्रतिषेधौ दीर्घत्वं च । मीढ्वस्तोकाय तनयाय मृडय । यथेयमिन्द्रमीढ्वः ।।
(आक्षेपभाष्यम्)
मह्यर्थो वै गम्यते ।
कः पुनर्मह्यर्थः ?
महिर्दानकर्मा ।
अतः किम् ?
इत्वमपि निपात्यम् ।।
(6002 आक्षेपनिरासवार्तिकम् ।। 4 ।।)
- मह्यर्थ इति चेन्मिहेस्तदर्थत्वात्सिद्धम् -
मह्यर्थ इति चेन्मिहिरपि मह्यर्थे वर्तते । कथं पुनरन्योनामान्यस्यार्थे वर्तते । बह्वर्था अपि धातवो भवन्तीति ।।
अस्ति पुनरन्यत्रापि क्वचिन्मिहिर्मह्यर्थे वर्तते ? अस्तीत्याह --- मिहेर्मेघः ।
मेघश्च कस्माद्भवति ?
अपो ददातीति ।।
(6003 उपसंख्यानवार्तिकम् ।। 5 ।।)
- द्विर्वचनप्रकरणे कृञ्रादीनां के -
द्विर्वचनप्रकरणे कृञ्रादीनां के उपसंख्यानं कर्तव्यम् । चक्रम्, चिक्लिदम्, चक्नसमिति ।।
कादिष्विति वक्तव्यम् ।
इहापि यथा स्यात् --- बभ्रुः, ययुरिति ।।
(6004 उपसंख्यानवार्तिकम् ।। 6 ।।)
- चरिचलिपतिवदीनामच्याक् चाभ्यासस्य -
चरिचलिपतिवदीनामचि द्वे भवत इति वक्तव्यम्, आक्चाभ्यासस्य । चराचरः, चलाचलः, पतापतः,
वदावदः ।।
(6005 उपसंख्यानवार्तिकम् ।। 7 ।।)
- हन्तेर्घश्च -
हन्तेर्घश्च वक्तव्यः । अचि द्वे भवतः, आक्चाभ्यासस्य । घनाघनः ।।
(6006 उपसंख्यानवार्तिकम् ।। 8 ।।)
- पाटेर्णिलुक्च दीर्घश्चाभ्यासस्योक्च -
पाटयतेर्णिलुग् वक्तव्यः । अचि द्वे भवत इति वक्तव्यम्, दीर्घश्चाभ्यासस्य, ःढ्य;क्चागमः । पाटूपटः ।।
(6007 विप्रतिषेधवार्तिकम् ।। 9 ।।)
- द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः -
यण् --- अयवायावादेश --- आल्लोप --- उपधालोप --- णिलोप --- किकिनोरुत्वेभ्यो द्विर्वचनं भवति पूर्वविप्रतिषेधेन ।।
द्विर्वचनस्यावकाशः --- बिभिदतुः, बिभिदुः ।
यणादेशस्यावकाशः --- दध्यत्र, मध्वत्र । इहोभयं प्राप्नोति --- चक्रतुः, चक्रुरिति ।
अयवायावादेशानामवकाशः --- चयनम्, चायकः, लवनम्, लावकः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- चिचाय, चिचयिथ, लुलाव, लुलविथ ।
आल्लोपस्यावकाशः --- गोदः, कम्बलदः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- ययतुः, ययुः, तस्थतुः, तस्थुः ।
उपधालोपस्यावकाशः --- श्लेष्मघ्नं मधु, पित्तघ्नं घृतम् । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- जग्मतुः, जग्मुः, जघ्नतुः, जघ्नुः ।
णिलोपस्यावकाशः --- कारणा, हारणा । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- आटिटत्, आशिशत् ।
उत्वस्यावकाशः --- निपूर्ताः पिण्डाः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- मित्रावरुणौ ततुरिः, दूरे ह्यध्वा जगुरिः ।।
द्विर्वचनं भवति पूर्वविप्रतिषेधेन ।।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।।
(6008 विप्रतिषेधवार्तिकम् ।। 10 ।।)
- द्विर्वचनात् प्रसारणात्वधात्वादिविकाररीत्वेत्त्वेत्त्वोत्त्वगुणवृद्धिविधयः -
द्विर्वचनात् प्रसारण --- आत्व --- धात्वादिविकार --- रीत्व --- इत्त्व --- इत्त्वोत्त्व --- गुणवृद्धिविधयो भवन्ति विप्रतिषेधेन ।
द्विर्वचनस्यावकाशः --- बिभिदतुः, बिभिदुः ।

संप्रसारणस्यावकाशः--इष्टम्, सुप्तम् ।
इहोभयं प्राप्नोति --- इर्जतुः, इर्जुरिति ।
नैतदस्ति ।
अस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति, पूर्वस्य लिट्यभ्यासस्योभयेषाम् (6-1-17) इति ।
इदं तर्हि --- सोषुप्यते ।
इदं चाप्युदाहरणम् --- इर्जतुः, इर्जुः .
ननु चोक्तमस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति, पूर्वस्य
लिट्यभ्यासस्योभयेषामिति ।
न सिद्ध्यति । न संप्रसारणे संप्रसारणम् (37) इति प्रतिषेधः प्राप्नोति । अकारेण व्यवहितत्वान्न
भविष्यति । (एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।)
एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति ।।
आत्वस्यावकाशः --- ग्लाता, म्लाता । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- जग्ले, मम्ले ।।
धात्वादिविकाराणामवकाशः --- नमति, सिञ्चति । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- ननाम, सिषेच, सस्नौ ।।
रीत्वस्यावकाशः --- मात्रीयति, पित्रीयति । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- चेक्रीयते, जेह्रीयते ।।
इत्वस्यावकाशः --- पीयते, गीयते । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- पेपीयते, जेगीयते ।।
इत्वोत्वयोरवकाशः --- आस्तीर्णम्, निपूर्ताः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- आतेस्तीर्यते, निपोपूर्यते ।।
गुणवृद्ध्योरवकाशः --- चेता, गौः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति --- चिचाय, चिचयिथ, लुलाव, लुलविथ ।
नैतदस्ति प्रयोजनम् । अस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य गुणवृद्धी भविष्यतः ।
इदं तर्हि प्रयोजनम् --- इयाय, इययिथ ।
ननु चात्राप्यस्तु द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य गुणवृद्धी भविष्यतः ।
न सिद्ध्यति । अन्तरङ्गत्वात्सवर्णदीर्घत्वं प्राप्नोति । वार्णादाङ्गं बलीय इति गुणवृद्धी भविष्यतः ।
किं वक्तव्यमेतत् ?
न हि ।
कथमनुच्यमानं गंस्यते ?
आचार्यप्रवृत्तिर्ज्ञापयति --- वार्णादाङ्गं बलीयो भवतीति यदयं अभ्यासस्यासवर्णे (6-4-78) इत्यसवर्णग्रहणं करोति ।
कथं कृत्वा ज्ञापकम् ?
न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवति ।
नैतदस्ति ज्ञापकम् । अर्त्यर्थमेतत्स्यात् । इयृतः, इयृथः, उवोण, उवोणिथ ।
यत्तर्हि दीर्घ इणः किति (7-4-69) इति दीर्घत्वं शास्ति ।
एतस्याप्यस्ति वचने प्रयोजनम् ।
किम् ?
सवर्णदीर्घबाधनार्थमेतत्स्यात् । स यथैव तर्हि सवर्णदीर्घत्वं बाधते, एवं यणादेशमपि बाधेत ।
एवं तर्हि यणादेशे योगविभागः करिष्यते । इदमस्ति --- इणो यण् भवति ।
ततः --- एरनेकाचः । एश्चानेकाच इणो यणभवति ।
ततः --- असंयोगपूर्वस्य, एरनेकाच इत्येव ।।
असवर्णग्रहणमेव तर्हि ज्ञापकम् ।
ननु चोक्तमर्त्यर्थमेतत्स्यादिति ।
नैकमुदाहरणमसवर्णग्रहणं प्रयोजयति ।।
एवमपि स्थानिवद्भावादियङ्न प्राप्नोति ।
अथ सत्यपि विप्रतिषेधे यावता स्थानिवद्भावः कथमिवैतत्सिद्ध्यति --- कस्मादेवात्र न भवति ?
योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः । आदिष्टाच्चैषोऽचः पूर्व इति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ।।
-6-1-13- ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे (2450)
(सम्प्रसारणाधिकरणम्)
(6009 अतिप्रसङ्गापादकवार्तिकम् ।। 1 ।।)
- ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गः -
ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गो भवति । पुत्रपत्यादौ संप्रसारणं प्राप्नोति । कारीषगन्ध्यापुत्रकुलम्, कारीषगन्ध्यापतिकुलम् ।।
(6010 अतिप्रसङ्गाक्षेपवार्तिकम् ।। 2 ।।)
- वर्णग्रहणात्सिद्धम् -

वर्णग्रहण एतद्भवति --- यस्मिन् विधिस्तदादाविति, न चेदं वर्णग्रहणम् ।।
(6011 प्रत्याक्षेपवार्तिकम् ।। 3 ।।)
- वर्णग्रहण इति चेत्तदन्तप्रतिषेधः -
वर्णग्रहण इति चेत्तदन्तस्य प्रतिषेधो वक्तव्यः । पुत्रपत्यन्ते संप्रसारणं प्राप्नोति । कारीषगन्ध्यापरमपुत्रः, कारीषगन्ध्यापरमपतिः, कौमुदगन्ध्यापरमपुत्रः, कौमुदगन्ध्यापरमपतिः ।
किं कारणम् ?
यत्र हि तदादिविधिर्नास्ति तदन्तविधिना तत्र भवितव्यम् ।।
(6012 प्रत्याक्षेपनिरासवार्तिकम् ।। 4 ।।)
- सिद्धं तूत्तरपदवचनात् -
सिद्धमेतत् ।
कथम् ?
उत्तरपदवचनात् । पुत्रपत्योरुत्तरपदयोरिति वक्तव्यम् ।
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् ।
पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपद उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदमिति, न चात्र पुत्रपती उत्तरपदे ।।
इहापि तर्हि न प्राप्नोति--कारीषगन्धीपुत्रः, कारीषगन्धीपतिरिति ।
किं कारणम् ?
पूर्वपदमित्युच्यते, न ह्यत्र ष्यङ् पूर्वपदमस्ति, ष्यङन्तमेतत्पूर्वपदम् ।
कथम् ?
प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति ।।
यदि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युच्यते, परमकारीषगन्धीपुत्रः --- परमकारीषगन्धीपतिरिति न सिद्ध्यति ।
प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवत्यस्त्रीप्रत्ययेनेति ।।
यद्यस्त्रीप्रत्ययेनेत्युच्यते, अतिक्रान्तः कारीषगन्ध्यामतिकारीषगन्ध्यः, तस्य पुत्रः --- अतिकारीषगन्ध्यपुत्रः, अतिकारीषगन्ध्यपतिः --- इत्यत्रापि प्राप्नोति ।
अस्त्रीप्रत्ययेनानुपसर्जनेन । यो ह्युपसर्जनं स्त्रीप्रत्ययो भवत्येषा तत्र परिभाषा --- प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति ।।
(अतिप्रसङ्गापादकभाष्यम्)
ष्यङन्ते यावन्तो यणस्तेषां सर्वेषां संप्रसारणं प्राप्नोति । वाराहीपुत्रः, तार्णकर्णीपुत्रः । तत्राप्रत्ययस्थस्य प्रतिषेधो वक्तव्यः ।।
(6013 अतिप्रसङ्गापोहवार्तिकम् ।। 5 ।।)
- यथागृहीतस्यादेशवचनादप्रत्ययस्थे सिद्धम् -
निर्दिश्यमानस्यादेशा भवन्तीत्येवमप्रत्ययस्थस्य न भविष्यति ।।
(6014 अतिप्रसङ्गापोहे सिद्धान्तवार्तिकम् ।। 6 ।।)
- अनन्त्यविकारेऽन्त्यसदेशस्य वा -
अथवा --- अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्येषा परिभाषा कर्तव्या ।।
कः पुनरत्र विशेषः --- एषा वा परिभाषा क्रियेत, अप्रत्ययस्थस्य वा प्रतिषेध उच्येत ?
अवश्यमेषा परिभाषा कर्तव्या, बहून्येतस्याः परिभाषायाः प्रयोजनानि ।
कानि ?
(6015 परिभाषाप्रयोजनवार्तिकम् ।। 7 ।।)
- प्रयोजनं न संप्रसारणे संप्रसारणम् -
न संप्रसारणे संप्रसारणम् (6-1-37) इत्येतन्न वक्तव्यं भवति ।
कथं व्यधेर्विद्ध इति ?
अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ।
नैतदस्ति प्रयोजनम् । क्रियते न्यास एव ।।
(6016 परिभाषाप्रयोजनवार्तिकम् ।। 8 ।।)
- सान्तमहतो दीर्घत्वे -
सान्तमहतो दीर्घत्वे प्रयोजनम् । पयांसि, यशांसि । प इत्यस्यापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति दोषो न भवति ।।
एतदपि नास्ति प्रयोजनम् । नोपधायाः (6-4-7) इति तत्र वर्तते ।।
एवमप्यनांसि मनांसीत्यत्रापि प्राप्नोति ।
सान्तसंयोगेनोपधां विशेषयिष्यामः --- सान्तसंयोगस्य नोपधाया इति ।।
एवमपि हंसशिरांसि --- ध्वंसशिरांसि --- अत्रापि प्राप्नोति ।

नैष दोषः । हम्मतेः हंसः ।
कः पुनराह --- हम्मतेर्हंस इति ?
किं तर्हि ?
हन्तेर्हंसः, हन्त्यध्वानमिति ।।
एवं तर्हि सर्वनामस्थान इति वर्तते । सर्वनामस्थानपरतया सान्तसंयोगं विशेषयिष्यामः, सान्तसंयोगेन नोपधाम् --- सर्वनामस्थानपरस्य सान्तसंयोगस्य नोपधाया इति ।।
(6017 प्रयोजनवार्तिकम् ।। 9 ।।)
- अन्कारान्तस्योल्लोपे -
अन्कारान्तस्याल्लोपे प्रयोजनम् । तक्ष्णा, तक्ष्णे --- इति त इत्यत्रापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ।।
एतदपि नास्ति प्रयोजनम् । अनाऽकारं विशेषयिष्यामः --- अनो योऽकार इति ।।
एवमप्यनसा, अनसे --- इत्यत्रापि प्राप्नोति ।
अन्कारेणाङ्गं विशेषयिष्यामः, अना अकारम् --- अन्कारान्तस्याङ्गस्यानो योऽकार इति ।।
एवमप्यनस्तक्ष्णा, अनस्तक्ष्णे --- इत्यत्रापि प्राप्नोति ।
एवं तर्हि कार्यकालं संज्ञापरिभाषम् यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । भस्येति तत्रोपस्थितमिदं भवति यचि भम् (1-4-18) इति तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अनाऽकारम् --- यजादिपरस्यानो योऽकार इति ।।
(6018 प्रयोजनवार्तिकम् ।। 10 ।।)
- मृजेर्वृद्धिविधौ -
मृजेर्वृद्धिविधौ प्रयोजनम् । न्यमार्ट् । अटोऽपि वृद्धिः प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ।।
एतदपि नास्ति प्रयोजनम् । यथापरिभाषितं इको गुणवृद्धी (1-1-3) इति, इक एव वृद्धिर्भविष्यति ।।
एवमपि मिमार्जिषतीत्यत्र प्राप्नोति ।
अस्तु ।
अभ्यासनिर्ह्रासेन ह्रस्वो भविष्यति ।।
(6019 प्रयोजनवार्तिकम् ।। 11 ।।)
- वसोः संप्रसारणे च -
वसोः संप्रसारणे च प्रयोजनम् । विदुषः पश्य । विदिवकारस्यापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति ।।
एतदपि नास्ति प्रयोजनम् । न संप्रसारणे संप्रसारणम् (6-1-37) इति प्रतिषेधो भविष्यति ।
इद्कारेण व्यवहितत्वान्न प्राप्नोति ।
एवं तर्हि निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति ।।
(6020 प्रयोजनवार्तिकम् ।। 12 ।।)
- युवादीनाञ्च -
युवादीनां च संप्रसारणे प्रयोजनम् । यूनः, यूना, यूने । यकारस्यापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति ।।
एतदपि नास्ति प्रयोजनम् । न संप्रसारणे संप्रसारणम् इति न भविष्यति ।
उकारेण व्यवहितत्वान्न प्राप्नोति ।
एकादेशे कृते नास्ति व्यवधानम् ।
एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।
एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति ।।
(6021 प्रयोजनवार्तिकम् ।। 13 ।।)
- र्वोरुपधाग्रहणं च -
र्वोश्चोपधाग्रहणं न कर्तव्यं भवति --- र्वोरुपधाया दीर्घ इकः (8-2-76) इति ।
इह कस्मान्न भवति --- अबिभर्भवान् ?
अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति ।।
एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव ।।
(6022 अनन्त्यविकारेतिस्वीकारे दोषापादकवार्तिकम् ।। 14 ।।)
- आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वेष्वतिप्रसङ्गः -
आदिविधावतिप्रसङ्गो भवति । धात्वादेः षः सः (6-1-14) णो नः (65) इहैव स्यात् --- नेता, सोता । इह न स्यात् --- नमति, सिञ्चतीति । आदि ।।
त्यदादिविधि । इहैव स्यात् --- तद्, सः । त्यद्, स्यः --- इत्यत्र न स्यात् । त्यदादिविधि ।।

संयोगादिलोप । इहैव स्यात् --- मङ्क्ता । मङ्क्तव्यमित्यत्र न स्यात् । संयोगादिलोप ।।
कुत्व । इहैव स्यात् --- पक्ता । पक्तव्यमित्यत्र न स्यात् । कुत्व ।।
ढत्व । इहैव स्यात् --- लेढा । लेढव्यमित्यत्र न स्यात् । ढत्व ।।
भष्भाव । इहैव स्यात् --- अभुत्सि । अभुत्सातामित्यत्र न स्यात् । भष्भाव ।।
षत्व । इहैव स्यात् --- द्रष्टा । द्रष्टव्यमित्यत्र न स्यात् । षत्व ।।
णत्व । इहैव स्यात् --- माषवापेण । माषवापाणामित्यत्र न स्यात् । णत्व ।।
(परिभाषाविषये सिद्धान्तभाष्यम्)
एते दोषाः समा भूयांसो वा, तस्मान्नार्थोऽनया परिभाषया ।।
न हि दोषाः सन्तीति परिभाषा न वक्तव्या, लक्षणं वा न प्रणेयम् । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् ।
कुत एतत् ?
न हि दोषाणां लक्षणमस्ति ।
तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु ।
इदं प्रतिविधीयते ---
(6023 परिभाषादोषनिरासवार्तिकम् ।। 15 ।।)
- उदात्तनिर्देशात् सिद्धम् -
यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः । ततो वक्तव्यम् --- अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देश इति ।।
(परिभाषाऽर्थबोधकभाष्यम्)
स तर्ह्युदात्तनिर्देशः कर्तव्यः ।
न कर्तव्यः । यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत्समवस्थितौ तत्रैषा परिभाषा भवति, दोषेषु च --- अन्यत्रान्त्यसदेशः, अन्यत्रानन्त्यसदेशः । प्रयोजनेषु पुनस्तत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च ।।
तथाजातीयकानि खल्वत्याचार्येण प्रयोजनानि पठितानि, यान्युभयवन्ति भवन्ति ।
इदमेकं यथा दोषास्तथा वोरुपधाग्रहणमिति । अविभर्भवान् । तच्चापि क्रियते न्यास एव ।।
-6-1-14- बन्धुनि बहुव्रीहौ (245)
(उपसंख्यानभाष्यम्)
मातज्मातृकमातृषु ष्यङ् प्रसार्यो विभाषया ।।
मातच् --- कारीषगन्ध्या माताऽस्य कारीषगन्धीमातः, कारीषगन्ध्यामातः । मातच् ।।
मातृक --- कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः । मातृक ।।
मातृ --- कारीषगन्धीमाता, कारीषगन्ध्यामाता ।।
-6-1-16- ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च (245)
(पदकृत्यभाष्यम्)
वयिग्रहणं किमर्थं न वेञ् यजादिषु पठ्यते, वेञश्च वयिरादेशः क्रियते ?
तत्र यजादीनां कितीत्येव सिद्धम् ।
तत्रैतत्स्यात् --- ङिदर्थोऽयमारम्भ इति । तच्च न । लिट्यमादेशः, लिट् च किदेव ।।
अत उत्तरं पठति ---
(6024 पदकृत्यवार्तिकम् ।। 1 ।।)
- वयिग्रहणं वेञः प्रतिषेधात् -
वयिग्रहणं क्रियते, वेञः प्रतिषेधात् । वेञो लिटि प्रतिषेधं वक्ष्यति, स वयेर्मा भूदिति ।।
यथैव हि वेञ्ग्रहणाद्विधिः प्रार्थ्यते एवं प्रतिषेधोऽपि प्राप्नोति ।।
(6025 आक्षेपवार्तिकम् ।। 2 ।।)
- न वा यकारप्रतिषेधो ज्ञापकोऽप्रतिषेधस्य -
न वा एष दोषः ।
किं कारणम् ?
यदयं लिटि वयो यः (6-1-38) इति वयेर्यकारस्य संप्रसारणस्य प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः --- न वेञ्ग्रहणाद्वयेः संप्रसारणप्रतिषेधो भवतीति ।।
नैतदस्ति ज्ञापकम्, पित्यभ्यासार्थमेतत्स्यात् । वयेः पित्सु वचनेष्वभ्यासयकारस्य संप्रसारणं मा भूदिति ।
ननु च वेञ्ग्रहणादेव वयेः पित्स्वपि वचनेष्वभ्यासयकारस्य संप्रसारणप्रतिषेधः सिद्धः ।
न सिध्यति ।
किं कारणम् ?

कितीति तत्रानुवर्तते ।।
एवमपि वयेः पित्सु वचनेष्वभ्यासस्य यकारस्य संप्रसारणं न प्राप्नोति ।
किं कारणम् ?
हलादिः शेषेण बाध्यते । नात्र हलादिः शेषः प्राप्नोति ।
किं कारणम् ?
वक्ष्यति ह्येतत् --- अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेनेति ।।
स एष वयेर्यकारस्य संप्रसारणप्रतिषेधः पित्यभ्यासार्थः, न ज्ञापकार्थो भवति ।।
(6026 समाधानवार्तिकम् ।। 3 ।।)
- पित्यभ्यासार्थमिति चेन्नाविशिष्टत्वात् -
पित्यभ्यासार्थमिति चेत् तन्न ।
किं कारणम् ?
अविशिष्टत्वात् । अविशेषेण प्रतिषेधः, निवृत्तं तत्र कितीति ।
आतश्चाविशेषेण वेञ्ञोऽपि हि पित्सु वचनेष्वभ्यासस्य संप्रसारणं नेष्यते --- ववौ, वविथेति ।
विकृतिग्रहणं खल्वपि प्रतिषेधे क्रियते, न च विकृतिः प्रकृतिं गृह्णाति ।।
-6-1-17- लिट्यभ्यासस्योभयेषाम् (2454)
(6027 ग्रह्यादीनां फले विशेषाभावबोधकवार्तिकम् ।। 1 ।।)
- ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः -
(वार्तिकाशयखण्डनभाष्यम्)
यदुच्यते वृश्चेरविशेष इति । तन्न । यद्यत्र रेफस्य संप्रसारणं न स्याद्वकारस्य प्रसज्येत । रेफस्य पुनः संप्रसारणे सति उरदत्वस्य स्थानिवद्भावात् न संप्रसारणे संप्रसारणम् (6-1-37) इति प्रतिषेधः सिद्धो भवति ।
तस्माद्वक्तव्यम् --- ग्रहेरविशेषः पृच्छतिभृज्जत्योरविशेष इति ।।
(पदकृत्यभाष्यम्)
अथोभयेषां ग्रहणं किमर्थम् ?
उभयेषामभ्यासस्य संप्रसारणं यथा स्यात् --- वचिस्वपियजादीनाम्, ग्रहादीनां च ।।
नैतदस्ति प्रयोजनम् ।
प्रकृतमुभयेषां ग्रहणमनुवर्तते ।
?B यद्यनुवर्तते, ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चेति यजादीनां ङित्यपि प्राप्नोति ।।
नैष दोषः ।
सम्बन्धमनुवर्तिष्यते --- वचिस्वपियजादीनां किति, ग्रहादीनां ङिति, वचिस्वपियजादीनां किति । ततः --- लिट्यभ्यासस्योभयेषाम्, किति ङिति --- इति निवृत्तम् ।।
अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ।।
अथवैकयोगः करिष्यते --- वचिस्वपियजादीनां किति ग्रहादीनां ङिति च --- इति । ततो लिट्यभ्यासस्येति । न चैकयोगेऽनुवृत्तिर्भवति ।।
अथवोभयं निवृत्तं तदपेक्षिष्यामहे ।।
इदं तर्हि उभयेषां ग्रहणस्य प्रयोजनम् --- उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।
किं चान्यत् प्राप्नोति ?
हलादिशेषः । अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेन इति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति ।।
(6028 विप्रतिषेधबोधकमेकदेशिवार्तिकम् ।। 2 ।।)
- अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेन -
अभ्यासस्य संप्रसारणं भवति हलादिशेषाद्विप्रतिषेधेन । अभ्याससंप्रसारणस्यावकाशः --- इयाज, उवाप । हलादिशेषस्यावकाशः --- बिभिदतुः, बिभिदुः ।
इहोभयं प्राप्नोति --- विव्याध, विव्यधिथ । अभ्याससंप्रसारणं भवति पूर्वविप्रतिषेधेन ।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।।
(6029 विप्रतिषेधखण्डकवार्तिकम् ।। 3 ।।)
- न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि -
न वा वक्तव्यः ।
किं कारणम् ?
संप्रसारणाश्रयस्य बलीयस्त्वादन्यत्रापि । संप्रसारणं संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम् । अन्यत्रापि, नावश्यमिहैव वक्तव्यम् ।
किं प्रयोजनम् ?
(6030 संप्रसारणाश्रयस्य बलीयस्त्वप्रदर्शकवार्तिकम् ।। 4 ।।)

- प्रयोजनं रमाल्लोपेयङ्यणः -
रम् ---
भृष्टः, भृष्टवान् । संप्रसारणं च प्राप्नोति रम्भावश्च । परत्वाद्रम्भावः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यम्, संप्रसारणं यथा स्यात् ।।
आल्लोपः ---
जुहुवतुः, जुहुवुः । संप्रसारणं च प्राप्नोत्याल्लोपश्च । परत्वादाकारलोपः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यं संप्रसारणं यथा स्यात् ।।
संप्रसारणे कृते पूर्वत्वं च प्राप्नोत्याकारलोपश्च । परत्वादाल्लोपः स्यात् । संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यं पूर्वत्वं यथा स्यात् ।।
इयङ् ---
शुशुवतुः, शुशुवुः । संप्रसारणं च प्राप्नोति, इयङादेशश्च । परत्वादियङादेशः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यं संप्रसारणं यथा स्यात् ।।
यण् ---
संप्रसारणे कृते पूर्वत्वं च प्राप्नोति, यणादेशश्च । परत्वाद्यणादेशः स्यात् । संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यं पूर्वत्वं यथा स्यात् ।।
(बलीयस्त्वप्रदर्शकखण्डकभाष्यम्)
नैतानि सन्ति प्रयोजनानि ।
यत्तावदुच्यते --- रम् --- इति । इदमिह संप्रधार्यम् --- रम्भावः क्रियतां संप्रसारणमिति । किमत्र कर्तव्यम् ?
परत्वाद्रम्भावः । नित्यं संप्रसारणम्, कृतेऽपि रम्भावे प्राप्नोत्यकृतेऽपि ।
रम्भावोऽपि नित्यः, कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि ।
कथम् ?
योऽसावृकारे रेफस्तस्य चोपधायाश्च प्राप्नोति ।
अनित्यो रम्भावः न हि कृते संप्रसारणे प्राप्नोति ।
किं कारणम् ?
न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।
अथापि गृह्यन्ते, एवमप्यनित्यः । उपदेशे इति वर्तते । तच्चावश्यमुपदेशग्रहणमनुवर्त्यम्, बरीभृज्यत इत्येवमर्थम् ।।
आल्लोपेयङ्यणः --- इति । नित्यं संप्रसारणम् । अन्तरङ्गं पूर्वत्वम् ।।
तदनन्यार्थं संप्रसारणं तदाश्रयञ्च बलीयो भवतीति वक्तव्यम्, पूर्वविप्रतिषेधो वा वक्तव्यः ।।
उभयं न वक्तव्यम् । उक्तमत्रोभयेषां ग्रहणस्य प्रयोजनम् --- उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।।
(6031 उपसंख्यानवार्तिकम् ।। 5 ।।)
- व्यचेः कुटादित्वमनस्यञ्ञिति संप्रसारणार्थम् -
व्यचेः कुटादित्वमनसीति वक्तव्यम् ।
किं प्रयोजनम् ?
अञ्ञिति संप्रसारणार्थम् । अञ्ञिति संप्रसारणं यथा स्यात् । अद्विचिता, उद्विचितुम्, उद्विचितव्यम् ।।
अनसीति किमर्थम् ?
उरुव्यचाः कण्टकः ।।
-6-1-18- स्वापेश्चङि (2455)
चङ्ग्रहणं शक्यमकर्तुम् ।
कथम् ?
ङितीति वर्तते । न चान्यः स्वापेर्ङिदस्ति, अन्यदतश्चङः ।।
-6-1-20- न वशः (2457)
(6032 उपसंख्यानवार्तिकम् ।। 1 ।।)
- वशेर्यङि प्रतिषेधः -
वशेर्यङि प्रतिषेधो वक्तव्यः संप्रसारणस्य । वावश्यते ।
क्व मा भूत् ?
उष्टः उशन्ति --- इति । स तर्हि तथा प्रतिषेधो वक्तव्यः ।
न वक्तव्यः । यङीति वर्तते ।
एवं तर्ह्यन्वाचष्टे --- यङीति वर्तत इति ।
नैतदन्वाख्येयम् --- अधिकारा अनुवर्तन्त इति । एष एव न्यायो यदुताधिकारा अनुवर्तेरन्निति ।।
-6-1-27- शृतं पाके (2464)
(निपातनाकांक्षाभाष्यम्)
किं निपात्यते ?
(6033 निपातनबोधकवार्तिकम् ।। 1 ।।)
- श्राश्रप्योः शृभावः -

श्राश्रप्योः शृभावो निपात्यते ।।
क्षीरहविषोरिति वक्तव्यम् ।
शृतं क्षीरम्, शृतं हविः ।
क्व मा भूत् ?
श्राणा यवागूः, श्रपिता यवागूरिति ।।
(6034 निपातननियमवार्तिकम् ।। 2 ।।)
- श्रपेः शृतमन्यत्र हेतोः -
श्रपेः शृतमन्यत्र हेतोरिति वक्तव्यम् । इह मा भूत् --- श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति ।।
-6-1-28- प्यायः पी (2465)
(6035 निपातननियामकवार्तिकम् ।। 1 ।।)
- आङ्पूर्वादन्धूधसोः -
आङ्पूर्वादन्धूधसोरिति वक्तव्यम् । आपीनोऽन्धुः, आपीनमूधः ।
किं प्रयोजनम् ?
नियमार्थम् । आङ्पूर्वादन्धूधसोरेव ।
क्व मा भूत् ?
आप्यानश्चान्द्रमा इति ।।
उभयतो नियमश्चायं द्रष्टव्यः --- आङ्पूर्वादेवान्धूधसोः, अन्धूधसोरेवाङ्पूर्वादिति ।
क्व मा भूत् ? प्रप्यानोऽन्धुः, प्रप्यानमूधः ।।
आङ्पूर्वाच्चैष नियमो द्रष्टव्यः । भवति हि--पीनं पुण्यम्, पीनाः शंबट्यः, श्लक्ष्णपीनमुखी कन्येति ।।
-6-1-30- विभाषा श्वेः (2467)
(6036 आक्षेपवार्तिकम् ।। 1 ।।)
- श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः -
श्वेर्लिट्यभ्यासलक्षणं संप्रसारणं नित्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । शिश्वियतुः, शिश्वियुः ।।
किमुच्यतेऽभ्यासलक्षणस्येति, न पुनः किल्लक्षणस्यापि । किल्लक्षणमपि हि नित्यमत्र प्राप्नोति ।
किल्लक्षणं श्वयतिलक्षणं बाधिष्यते ।
यथैव तर्हि किल्लक्षणं श्वयतिलक्षणं बाधते, एवमभ्यासलक्षणमपि बाधेत ।।
न ब्रूमोऽपवादत्वात् श्वयतिलक्षणं किल्लक्षणं बाधिष्यत इति ।
किं तर्हि ?
परत्वात् ।
श्वयतिलक्षणस्यावकाशः पिति वचनानि --- शुशाव, शुशविथ, शिश्वाय, शिश्वयिथ ।
किल्लक्षणस्यावकाशोऽन्ये कितः --- शूनः, शूनवान् ।
इहोभयं प्राप्नोति --- शिश्वियतुः, शिश्वियुरिति ।
श्वयतिलक्षणं भवति विप्रतिषेधेन ।।
(समाधानभाष्यम्)
अभ्यासलक्षणादपि तर्हि श्वयतिलक्षणं भविष्यति विप्रतिषेधेन ।
अभ्यासलक्षणस्यावकाशोऽन्ये यजादयः --- इयाज, उवाय ।
श्वयतिलक्षणस्यावकाशः परं धातुरूपम् --- शुशुवतुः, शुशुवुः, शुशविथ ।
श्वयतेरभ्यासस्योभयं प्राप्नोति --- शिश्वियुः ।
श्वयतिलक्षणं भविष्यति विप्रतिषेधेन ।।
नैष युक्तो विप्रतिषेधः । न हि श्वयतेरभ्यासस्यान्ये यजादयोऽवकाशः । श्वयतेर्यजादिषु यः पाठः सोऽनवकाशः, तस्यानवकाशत्वादयुक्तो विप्रतिषेधः ।
तस्मात्सुष्ठूच्यते --- श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति ।।
-6-1-32-33- ह्वः संप्रसारणम्-अभ्यस्तस्य च (2469-70)
-6-1-33- ह्वः संप्रसारणम्-अभ्यस्तस्य च (2469-70)
6037 योगविभागदर्शकवार्तिकम्।।1।।
ह्वः संप्रसारणे योगविभागः
ह्वः संप्रसारणे योगविभागः कर्तव्यः। ह्वः संप्रसारणम् --- भवति णौ च संश्चङोः। ततः--अभ्यस्तस्य च ।
अभ्यस्तस्य च संप्रसारणं भवतीति। किमर्थो योगविभागः?
6038 योगविभागफलबोधकवार्तिकम्।।2।।

णौ च संश्वङ्विषयार्थः
णौ च संश्वङविषये ह्वः संप्रसारणं यथा स्यात्। जुहावयिषति,अजूहवत्।
किं पुनः कारणं न सिद्ध्यति? ह्वोऽभ्यस्तस्येत्युच्यते। न चैतद् ह्वोऽभ्यस्तम्। कस्य तर्हि? ह्वाययतेः। ह्व एतदभ्यस्तम्। कथम्? एकाचो द्वे प्रथमस्य (6-1-1) इति। एवं तर्हि ह्वयतेरभ्यस्तस्येत्युच्यते। न चात्र ह्वयतिरभ्यस्तम्। कस्तर्हि? ह्वाययतिः। ह्वयतिरेवात्राभ्यस्तम्। कथम्? एकाचो द्वे प्रथमस्येति। एवमपि-
6039 योगविभागफलोपष्टम्भकवार्तिकम्।।3।।
अभ्यस्तनिमित्तेऽनभ्यस्तप्रसारणार्थम्
अभ्यस्तनिमित्त इति वक्तव्यम्। किं प्रयोजनम्? अनभ्यस्तप्रसारणार्थम्। अनभ्यस्तस्य प्रसारणं यथा स्यात्। जुहूषति,जोहूयते।
6040 आक्षेपवार्तिकम्।।4।।
अभ्यस्तप्रसारणे ह्यभ्यासप्रसारणाप्राप्तिः
अभ्यस्तप्रसारणे हि अभ्यासप्रसारणस्याप्राप्तिः स्यात्। न संप्रसारणे संप्रसारणम्(6-1-37) इति प्रतिषेधः प्रसज्येत। नैष दोषः । व्यवहितत्वान्न भविष्यति।
6041 आक्षेपसाधकवार्तिकम्।।5।।
समानाङ्गे प्रसारणप्रतिषेधात् प्रतिषेधः
समानाङ्गे प्रसारणप्रतिषेधात्प्रतिषेधः प्राप्नोति। समानाङ्गग्रहणं तत्र चोदयिष्यति।
6042 योगविभागफलोपष्टम्भसंपादकवार्तिकम्।। 6।।
कृदन्तप्रतिषेधार्थं च
कृदन्तप्रतिषेधार्थं चाभ्यस्तनिमित्त इति वक्तव्यम्। किं प्रयोजनम्? ह्वायकमिच्छति ह्वायकीयति,ह्वाकीयतेः सन् जिह्वायकीयिषति।
(समाधानपूर्वकसिद्धान्तभाष्यम्)
स तर्हि निमित्तशब्द उपादेयः, न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते। अन्तरेणापि निमित्तशब्दं निमित्तार्थोऽवगम्यते। तद्यथा -- दधित्रपुसं प्रत्यक्षो ज्वरः,ज्वरनिमित्तमिति गम्यते। नड्वलोदकं पादरोगः, पादरोगनिमित्तमिति गम्यते। आयुर्वै घृतम्, आयुषो निमित्तमिति गम्यते। अथवाऽकारो मत्वर्थीयः। अभ्यस्तमस्त्यस्मिन् सोऽयमभ्यस्तः,अभ्यस्तस्येति। अथवाऽभ्यस्तस्येति नैषा ह्वयतिसमानाधिकरणा षष्ठी।
का तर्हि? संबन्धषष्ठी । अभ्यस्तस्य यो ह्वयतिः। किं चाभ्यस्तस्य ह्वयतिः। प्रकृतिः। ह्वोऽभ्यस्तस्य प्रकृतेरिति। योगविभागस्तु कर्तव्य एव। नात्र ह्वयतिरभ्यस्तप्रकृतिः। किं तर्हि? ह्वाययतिः।
-6-1-36- अपस्पृधेथामानृचुरानृहुश्चिच्युषे तित्याज श्राताः श्रितमाशीराशीर्ताः (2473)
(निपातनोपदर्शकभाष्यम्)
अपस्पृधेथामिति किं निपात्यते ?
स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचने आथामि द्विर्वचनं संप्रसारणमकारलोपश्च निपात्यते । इन्द्रश्च विष्णो यदपस्पृधेथाम्, अस्पर्धेथामिति भाषायाम् ।।
अपर आह ---
अपपूर्वात्स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचने आथामि संप्रसारणमकारलोपश्च निपात्यते ।
इन्द्रश्च विष्णो यदपस्पृधेथाम्, अपास्पर्धेथामिति भाषायाम् ।।
श्राताः श्रितमिति किं निपात्यते ?
श्रीणातेः क्ते श्राभावश्रिभावौ निपात्येते ।
क्व पुनः श्राभावः, क्व वा श्रिभावः ?
सोमे श्राभावः, अन्यत्र श्रिभावः । न तर्हीदानीमिदं भवति --- श्रितः सोम इति ।
बहुवचने श्राभावः ।।
न तर्हीदानीमिदं भवति --- श्रिता नो ग्रहाः ।
सोमबहुत्वे श्राभावः, अन्यत्र श्रिभावः ।।
-6-1-37- न संप्रसारणे संप्रसारणम् (2474)
(सूत्रप्रयोजनभाष्यम्)
किमर्थमिदमुच्यते ?
वचिस्वपियजादीनां च ग्रहादीनां च संप्रसारणमुक्तम् । तत्र यावन्तो यणः सर्वेषां संप्रसारणं प्राप्नोति । इष्यते च परस्य यथा स्यान्न पूर्वस्य --- इति । तच्चान्तरेण यत्नं न सिध्यतीति ---
न संप्रसारणे संप्रसारणम् ।
एवमर्थमिदमुच्यते ।।
किमन्येऽप्येवं विधयो न भवन्ति --- अतो दीर्घो यञ्जि सुपि च (7-3-101;102) इति, घटाभ्याम् । अकारमात्रस्य दीर्घत्वं कस्मान्न भवति ?
अस्त्यत्र विशेषः । इयमत्र परिभाषोपतिष्ठते --- अलोऽन्त्यस्य (1-1-52) इति ।
ननु चेदानीमेतया परिभाषयेहापि शक्यमुपस्थातुम् ।

नेत्याह । न हि वचिस्वपियजादीनां ग्रहादीनां चान्त्यो यणस्ति ।
एवं तर्ह्यनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्यन्त्यसदेशो यो यण् तस्य कार्यं भविष्यति ।
नैतस्याः परिभाषायाः सन्ति प्रयोजनानि ।।
(प्रयोजनाक्षेपभाष्यम्)
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति --- न सर्वस्य यणः संप्रसारणं भवतीति यदयं प्यायः पीभावं शास्ति ।
कथं कृत्वा ज्ञापकम् ?
पीभाववचन एतत्प्रयोजनम् --- आपीनोऽन्धुः, आपीनमूधः --- एतद् रूपं यथा स्यादिति । यदि चात्र सर्वस्य यणः संप्रसारणं स्यात् पीभाववचनमनर्थकं स्यात् । संप्रसारणे कृते संप्रसारणपरपूर्वत्वे द्वयोरिकारयोरेकादेशे सिद्धं रूपं स्यात् --- आपीनोऽन्धुः, आपीनमूध इति ।
पश्यति त्वाचार्यः --- न सर्वस्य यणः संप्रसारणं भवतीति ततः प्यायः पीभावं शास्ति ।।
(प्रत्याक्षेपभाष्यम्)
नैतदस्ति ज्ञापकम् । सिद्धे हि विधिरारभ्यमाणो ज्ञापको भवति, न च प्यायः संप्रसारणेन सिध्यति । संप्रसारणे हि सत्यन्त्यस्य प्रसज्येत ।।
(प्रत्याक्षेपनिरासभाष्यम्)
एवमपि ज्ञापकमेव ।
कथम् ? प्याय इति नैषा स्थानषष्ठी ।
का तर्हि ?
विशेषणषष्ठी । प्यायो यो यणिति । तदेतज्ज्ञापयत्याचार्यः --- न सर्वस्य यणः संप्रसारणं भवतीति यदयं प्यायः पीभावं शास्ति ।।
(आक्षेपसमर्थकभाष्यम्)
एवमप्यनैकान्तिकमेतत् । एतावज्ज्ञाप्यते --- न सर्वस्य यणः संप्रसारणं भवतीति । तत्र कुत एतत् परस्य
भविष्यति न पूर्वस्येति ।।
उच्यमानेऽप्येतस्मिन् सूत्रे कुत एतत्परस्य भविष्यति न पुनः पूर्वस्येति ।
एकयोगलक्षणं खल्वपि संप्रसारणम्, तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव । प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुं नाभिनिर्वृत्तस्य । यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति, किं तेन
कृतं स्यात् ।
अथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव । तत्र निमित्तसंश्रयोऽनुपपन्नो न संप्रसारणे संप्रसारणमिति ।।
(आक्षेपनिवारकभाष्यम्)
नैष दोषः । यत्तावदुच्यते --- उच्यमानेऽप्येतस्मिन् कुत एतत्परस्य भविष्यति न पूर्वस्येति । इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते । एतदेव ज्ञापयति --- परस्य भविष्यति न पूर्वस्येति यदयं न संप्रसारणे संप्रसारणमिति प्रतिषेधं शास्ति ।।
यदप्युच्यते --- एकयोगलक्षणं खल्वपि संप्रसारणं तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति । अस्तूभयोरभिनिर्वृत्तिः । न वयं पूर्वस्य प्रतिषेधं शिष्मः ।
किं तर्हि ?
संप्रसारणाश्रयं यत् प्राप्नोति तस्य प्रतिषेधम् । ततः पूर्वत्वे प्रतिषिद्धे यणादेशेन सिद्धम् ।।
यदप्युच्यते --- अथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव तत्र निमित्तसंश्रयोऽनुपपन्न इति । तादर्थ्यात्ताच्छब्द्यं भविष्यति । तद्यथा --- इन्द्रार्था स्थूणा --- इन्द्र इति ।
एवमिहापि संप्रसारणार्थं संप्रसारणम् । तद्यत्प्रसारणार्थं प्रसारणं तस्मिन् प्रतिषेधो भविष्यति ।।
(वार्तिकावतरणभाष्यम्)
अथ संप्रसारणमिति वर्तमाने पुनः संप्रसारणग्रहणं किमर्थम् ?
(6043 पदकृत्यवार्तिकम् ।। 1 ।।)
- प्रसारणप्रकरणे पुनः प्रसारणग्रहणमतोऽन्यत्र प्रसारणप्रतिषेधार्थम् -
प्रसारणमिति वर्तमाने पुनः संप्रसारणग्रहण एतत् प्रयोजनं विदेशस्थमपि यत् संप्रसारणं तस्यापि प्रतिषेधो यथा स्यात् --- व्यथो लिटि (7-4-68) विव्यथे ।
नैतदस्ति प्रयोजनम् । हलादिशेषापवादोऽत्र संप्रसारणम् ।।
इदं तर्हि --- श्वयुवमघोनामतद्धिते (6-4-133) यूना, यूने ।
उच्यमानेऽप्येतस्मिन्न सिध्यति ।
किं कारणम् ?
उकारेण व्यवधानात् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।
एवं तर्हि ---
(6044 उपसंख्यानवार्तिकम् ।। 2 ।।)
- समानाङ्गग्रहणं च -

समानाङ्गग्रहणं च कर्तव्यम् । न संप्रसारणे संप्रसारणं समानाङ्गे इति वक्तव्यम् ।।
(6045 उपसंख्याने दोषवार्तिकम् ।। 3 ।।)
- तत्रोपोषुषि दोषः -
तत्रोपोषुषि दोषो भवति । उपोषुषा, उपोषुषे, उपोपुषि --- इति ।।
(6046 दोषनिरासवार्तिकम् ।। 4 ।।)
- न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् प्राप्तिप्रतिषेधात् -
न वा एष दोषः ।
किं कारणम् ?
यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् द्वितीया या प्राप्तिः सा प्रतिषिध्यते । अत्र च वसिः क्वसावङ्गम्, क्वस्वन्तं पुनर्विभक्तौ ।।
अथवा --- यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते ?
यावद्ब्रूयात् प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति । अत्र च यदा वसेः, न तदा क्वसोः । यदा च क्वसोः, अभिनिर्वृत्तं तदा वसेर्भवति ।।
अथवा --- यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते ?
यावद्ब्रूयादसिद्धं बहिरङ्गमन्तरङ्ग इति । असिद्धत्वाद्बहिरङ्गलक्षणस्य वसुसंप्रसारणस्यान्तरङ्गलक्षणः प्रतिषेधो न भविष्यति ।।
(6047 उपसंख्यानवार्तिकम् ।। 5 ।।)
- ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि -
ऋचि त्रेः संप्रसारणं वक्तव्यम्, उत्तरपदादिलोपश्छन्दसि वक्तव्यः । तृचं सूक्तम्, तृचं साम ।
छन्दसीति किम् ?
त्यृचानि ।।
(6048 उपसंख्यानवार्तिकम् ।। 6 ।।)
- रयेर्मतौ बहुलम् -
रयेर्मतौ संप्रसारणं बहुलं वक्तव्यम् । आरेवानेतु नो विशः । न च भवति --- रयिमान् पुष्टिवर्धनः ।।
(6049 उपसंख्यानवार्तिकम् ।। 7 ।।)
- कक्ष्यायाः संज्ञायाम् -
कक्ष्यायाः संज्ञायां मतौ संप्रसारणं कर्तव्यम् । कक्षीवन्तं य औशिजः । कण्वः --- कक्षीवान् ।
संज्ञायामिति किमर्थम् ?
कक्ष्यावान् हस्ती ।।
-6-1-39- वश्चास्यान्यतरस्यां किति (2476)
(वश्चास्यग्रहणप्रत्याख्यानभाष्यम्)
वश्चास्यग्रहणं शक्यमकर्तुम् । अन्यतरस्यां किति वेञो न संप्रसारणं भवतीत्येव सिद्धम् ।
कथम् ?
प्रसारणे कृत उवङादेशे च द्विर्वचनं सवर्णदीर्घत्वम् । तेन सिद्धम् --- ववतुः, ववुः, ःढ़ग;वतुः, ःढ़ग;वुः । वयेरपि नित्यं यकारस्य प्रतिषेधः संप्रसारणस्य, ःढ़ग;यतुः, ःढ़ग;युः ।
त्रैशब्दं चेह साध्यम्, तच्चैवं सति सिद्धं भवति ।।
यद्येवं --- ववौ, वविथेति न सिद्ध्यति ।
ल्यपि च (6-1-41) इत्यनेन चकारेण लिडप्यनुकृष्यते । तस्मिन्नित्ये प्रसारणप्रतिषेधे प्राप्ते इयं किति विभाषाऽऽरभ्यते ।।
इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।।
-6-1-45- आदेच उपदेशेऽशिति (2482)
(आत्वाधिकरणम्)
(उपदेशपदार्थे पक्षद्वयदर्शकं भाष्यम्)
कथमिदं विज्ञायते --- एज्य उपदेश इति, आहोस्विदेजन्तं यदुपदेश इति ?
किं चातः ?
(उपदेशशब्दस्य करणसाधनत्वे दोषोपपादकं भाष्यम्)
यदि विज्ञायते--एज्य उपदेश इति, ढौकितात्रौकिता --- अत्रापि प्राप्नोति ।
अथ विज्ञायते --- एजन्तं यदुपदेश इति, न दोषो भवति ।।
ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमाने --- अत्रापि प्राप्नोति, एतदपि हि व्यपदेशिवद्भावेनैजन्तं भवत्युपदेशे ।
अर्थवता व्यपदेशिवद्भावः ।।
ननु चैज्य उपदेश इत्यपि विज्ञायमाने न दोषो भवति । अशितीत्युच्यते, न चात्राशितं पश्यामः ।
ननु च ककार एवात्राशित् ।

न ककारे भवितव्यम् ।
किं कारणम् ?
नञ्िवयुक्तमन्यसदृशाधिकरणे तथा
ह्यर्थगतिः ।
नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते । तद्यथा --- लोके अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति, नासौ लोष्टमानीय कृती भवति । एवमिहाप्यशिति प्रतिषेधादन्यस्मिन्नशिति --- शित्सदृशे कार्यं विज्ञास्यते ।
किं चान्यदशित् --- शित्सदृशम् ?
प्रत्ययः ।।
इदं तर्हि --- ग्लै ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम्, शो निशानीयम् --- परत्वादायादयः प्राप्नुवन्ति ।।
(उपदेशशब्दस्य कर्मसाधनत्वे दोषनिवारकभाष्यम्)
ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमाने परत्वादायादयः प्राप्नुवन्ति ।
सन्तु ।
आयादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणात्पुनरात्वं भविष्यति ।
ननु चैज्य उपदेशे इत्यपि विज्ञायमाने परत्वादायादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणादात्वं भविष्यति ।
न भविष्यति । अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम् ।।
(उपदेशशब्दस्य कर्मसाधनत्वे दोषवारकभाष्यम्)
एवं तर्हि ---
एजन्तं यदुपदेश इत्यपि विज्ञायमाने हूतः --- हूतवान् इत्यत्रापि प्राप्नोति ।
भवत्येवात्रात्वम् ।
श्रवणं कस्मान्न भवति ?
पूर्वत्वमस्य भवति ।
न सिध्यति ।
इदमिह संप्रधार्यम् --- आत्वं क्रियतां पूर्वत्वमिति ।
किमत्र कर्तव्यम् ?
परत्वात्पूर्वत्वम् ।
एवं तर्हीदमिह संप्रधार्यम् --- आत्वं क्रियतां संप्रसारणमिति ।
किमत्र कर्तव्यम् ?
परत्वादात्वम् ।
नित्यं संप्रसारणम्, कृतेऽप्यात्वे प्राप्नोत्यकृतेऽपि ।
आत्वमपि नित्यम्, कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि ।
अनित्यमात्वम्, न हि कृते संप्रसारणे प्राप्नोति ।
किं कारणम् ?
अन्तरङ्गं पूर्वत्वं तेन बाध्यते ।
यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति, अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् ।
उभयोर्नित्ययोः परत्वादात्वे कृते संप्रसारणम्, संप्रसारणपूर्वत्वम् । कार्यकृतत्वात्पुनरात्वं न भविष्यति ।
अथापि कथं चिदात्वमनित्यं स्यात्, एवमपि न दोषः । उपदेशग्रहणं न करिष्यते।।
(उपदेशग्रहणवैयर्थ्यबोधकभाष्यम्)
यदि तन्न क्रियते, चेता स्तोतेत्यत्रापि प्राप्नोति ।
नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति --- न परनिमित्तकस्यात्वं भवतीति, यदयं क्रीङ्जीनां णावात्वं शास्ति ।
नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात् --- क्रीङ्जीनां णावेवेति ।
यत्तर्हि मीनातिमिनोतिदीङां ल्यपि च (6-1-50) इत्यत्रैज्ग्रहणमनुवर्तयति ।।
इह तर्हि --- ग्लै ग्लानीयम्, म्लै म्लानीयम्, शो निशानीयम् --- परत्वादायादयः प्राप्नुवन्ति ।
अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति --- नायादय आत्वं बाधन्त इति, यदयमशितीति प्रतिषेधं शास्ति । यदि हि बाधेरन्, शित्यपि बाधेरन् ।।
(करणसाधनपक्षोपपादकभाष्यम्)
अथ वा पुनरस्तु एज्य उपदेश इति । ननु चोक्तं --- ग्लै ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम्, शो निशानीयम् --- परत्वादायादयः प्राप्नुवन्ति ।
अत्रापि शित्प्रतिषेधो ज्ञापकः --- नायादय आत्वं बाधन्त इति ।।
(6050 करणसाधनत्वे दोषोपपादकवार्तिकम् ।। 1 ।।)
- आत्व एश्युपसंख्यानम् -

आत्वे एश्युपसंख्यानं कर्तव्यम् । जग्ले, मम्ले । अशितीति प्रतिषेधः प्राप्नोति ।
नैष दोषः । नैवं विज्ञायते --- शकार इत् यस्य सोऽयं शित्, न शित् अशिदशितीति ।
कथं तर्हि ?
शकार इत् --- शित्, न शित् --- अशित् --- अशितीति ।।
यद्येवम्, स्तनन्धय इत्यत्रापि प्राप्नोति ।
अत्रापि शप् शिद्भवति ।।
(अशिति पदे पक्षद्वयोपस्थापकभाष्यम्)
किं पुनरयं पर्युदासः --- यदन्यच्छित इति । आहोस्वित् प्रसज्यायं प्रतिषेधः --- शिति नेति ।
कश्चात्र विशेषः ?
(6051 पर्युदासस्वीकारे दोषवार्तिकम् ।। 2 ।।)
- अशित्येकादेशे प्रतिषेध आदिवत्त्वात् -
अशित्येकादेशे प्रतिषेधो वक्तव्यः --- ग्लायन्ति, म्लायन्ति ।
किं कारणम् ?
आदिवत्त्वात् । शिदशितोरेकादेशोऽशित आदिवत्स्यात्, अस्त्यन्यच्छित इति कृत्वाऽऽत्वं प्राप्नोति ।।
(6052 पर्युदासपक्षे दोषवार्तिकम् ।। 3 ।।)
- प्रत्ययविधिः -
प्रत्ययविधिश्च न सिद्ध्यति --- सुग्लः, सुम्लः । आकारान्तलक्षणः प्रत्ययविधिर्न प्राप्नोति । अनिष्टे प्रत्ययेऽवस्थिते आत्वम् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत ।।
(6053 पर्युदासपक्षे दोषवार्तिकम् ।। 4 ।।)
- अभ्यासरूपं च -
अभ्यासरूपं च न सिद्ध्यति --- जग्ले, मम्ले । इवर्णाभ्यासता प्राप्नोति ।।
(6054 पर्युदासपक्षे दोषवार्तिकम् ।। 5 ।।)
- अयवायावां प्रतिषेधश्च -
अयादीनां च प्रतिषेधो वक्तव्यः । ग्लै ग्लानीयम्, म्लै म्लानीयम्, शो निशानीयम्, वेञ् वानीयम् । परत्वादायादयः प्राप्नुवन्ति ।।
अस्तु तर्हि प्रसज्यप्रतिषेधः --- शिति नेति ।।
(6055 प्रसज्यप्रतिषेधे दोषवार्तिकम् ।। 6 ।।)
- शिति प्रतिषेधे श्लुलुकोरुपसंख्यानम् --- ररीध्वम्, त्राध्वम्, शिशीते -
शिति प्रतिषेधे श्लुलुकोरुपसंख्यानं कर्तव्यम् । दिवो नो वृष्टिं मरुतो ररीध्वम् । लुक्त्राध्वं नो देवा निजुरो वृकस्य । शिशीते शृङ्गे रक्षसे विनिक्षे ।
नैष दोषः । इह तावत् --- दिवो नो वृष्टिं मरुतो ररीध्वमिति, नैतत् रै इत्यस्य रूपम् ।
कस्य तर्हि ?
रातेर्दानकर्मणः ।
शिशीते शृङ्गे इति नैतत् श्यते रूपम् ।
कस्य तर्हि ?
शीङः ।
श्यत्यर्थो वै गम्यते ।
कः पुनः श्यतेरर्थः ?
श्यतिर्निशाने वर्तते ।
शीङपि श्यत्यर्थे वर्तते ।
कथं पुनरन्यो नामान्यस्यार्थे वर्तते ?
बह्वर्था अपि धातवो भवन्ति । तद्यथा --- वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते --- केशान् वपति इति ।
इडिः स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते --- अग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्ति ।
करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते --- पृष्ठं कुरु, पादौ कुरु --- उन्मृदानेति गम्यते । निः क्षेपणे चापि वर्तते । घटे कुरु, कटे कुरु, अश्मानमितः कुरु --- स्थापयेति गम्यते ।।
(प्रसज्यप्रतिषेधे दोषोद्धारकभाष्यम्)
सर्वेषामेष परिहारः --- शितीत्युच्यते न चात्र शितं पश्यामः ।
प्रत्ययलक्षणेन ।
न लुमता तस्मिन्निति प्रत्ययलक्षणाप्रतिषेधः ।।
त्राध्वमिति लुङेष व्यत्ययेन भविष्यति ।।
(पर्युदासपक्षे दोषोद्धारकभाष्यम्)

अथ वा पुनरस्तु पर्युदासः । ननु चोक्तम् अशित्येकादेशे प्रतिषेध आदिवत्त्वात् इति ।
नैष दोषः ।
एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम् ।।
यदपि प्रत्ययविधिः इति, आचार्यप्रवृत्तिर्ज्ञापयति --- भवत्येजन्तेभ्य आकारान्तलक्षणः प्रत्ययविधिरिति, यदयं ह्वावामश्च (3-2-2) इत्यणं कबाधनार्थं शास्ति ।।
यदपि अभ्यासरूपम् इति, प्रत्याख्यायते स योगः । अथापि क्रियते, एवमपि न दोषः ।
कथम् ?
लिटीत्यनुवर्तते द्विलकारकश्चायं निर्देशः । लिटि लकारादाविति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम् --- आत्व एश्युपसंख्यानम् इति ।।
यदप्युक्तम् --- अयवायावां प्रतिषेधश्च इति, शिति प्रतिषेधो ज्ञापको नायादय आत्वं बाधन्त इति ।।
(6056 प्रतिषेधोपसंख्यानवार्तिकम् ।। 7 ।।)
- प्रातिपदिकप्रतिषेधः -
प्रातिपदिकानां प्रतिषेधो वक्तव्यः । गोभ्याम्, गोभिः, नौभ्याम्, नौभिः ।। स तर्हि वक्तव्यः ।
न वा वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति --- न प्रातिपदिकानामात्वं भवतीति, यदयं रायो हलि (7-2-85)
इत्यात्वं शास्ति ।
नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात् --- रायो हल्येवेति ।
यत्तर्हि औतोम् शसोः (6-1-93) इत्यात्वं शास्ति ।
एतस्याप्यस्ति वचने प्रयोजनम् --- अमि वृद्धिबाधनार्थमेतत्स्यात्, शसिप्रतिषेधार्थं च । तस्मात् प्रातिपदिकानां प्रतिषेधो वक्तव्यः ।।
न वक्तव्यः ।।
(6057 उपसंख्यानवैयर्थ्यबोधकवार्तिकम् ।। 8 ।।)
- धात्वधिकारात्प्रातिपदिकस्याप्राप्तिः -
धात्वधिकारात्प्रातिपदिकस्यात्वं न भविष्यति । धातोरिति वर्तते ।
क्व प्रकृतम् ?
लिटि धातोरनभ्यासस्य (6-1-8) इति ।।
अथापि निवृत्तम् ।
एवमप्यदोषः । उपदेशे इत्युच्यते, उद्देशश्च प्रातिपदिकानां नोपदेशः ।।
-6-1-48- क्रीङ्जीनां णौ (2485)
(6058 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आत्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः -
आत्वे णौ लीयतेरुपसंख्यानं कर्तव्यं प्रलम्भनशालीनीकरणयोः ।
किं प्रयोजनम् ?
प्रलम्भने चार्थे शालीनीकरणे च नित्यमात्वं यथा स्यात् ।
प्रलम्भने तावत् --- जटाभिरालापयते, श्मश्रुभिरालापयते ।
शालीनीकरणे --- श्येनी वर्तिकामुल्लापयते, रथी रथिनमपलापयते ।।
-6-1-49- सिध्यतेरपारलौकिके (2486)
(6059 उपसंख्यानवार्तिकम् ।। 1 ।।)
- सिध्यतेरज्ञानार्थस्य -
सिध्यतेरज्ञानार्थस्येति वक्तव्यम् ।।
(6060 उपसंख्यानफलबोधकवार्तिकम् ।। 2 ।।)
- इतरथा ह्यनिष्टप्रसङ्गः -
अपारलौकिके इत्युच्यमानेऽनिष्टं प्रसज्येत । अन्नं साधयति, ब्राह्मणेभ्यो दास्यामीति ।।
अस्ति पुनरयं सिध्यतिः क्वचिदन्यत्रापि ज्ञानार्थे वर्तते ।
अस्तीत्याह --- तपस्तापसं सेधयति, ज्ञानमस्य प्रकाशयति ।
स्वान्येवैनं कर्माणि सेधयन्ति, ज्ञानमस्य प्रकाशयन्तीत्यर्थः ।।
-6-1-50- मीनातिमिनोतिदीङां ल्यपि च (2487)
(6061 उपसंख्यानवार्तिकम् ।। 1 ।।)
- मीनात्यादीनामात्व उपदेशवचनं प्रत्ययविध्यर्थम् -
मीनात्यादीनामात्व उपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामात्वं भवतीति वक्तव्यम् ।
किं प्रयोजनम् ?
प्रत्ययविध्यर्थम् । उपदेशावस्थायामात्वे कृत इष्टः प्रत्ययविधिर्यथा स्यात् ।।

(वार्तिकफलबोधकभाष्यम्)
के पुनः प्रत्यया उपदेशिवद्भावं प्रयोजयन्ति ?
काः ।
कास्तावन्न प्रयोजयन्ति ।
किं कारणम् ?
एच इत्युच्यते, न च केष्वेजस्ति ।
णघञ्युज्विधयस्तर्हि प्रयोजयन्ति ।
ण, अवदायः । आत इति णः सिद्धो भवति । ण ।।
घञ्, अवदायो वर्तते । आत इति घञ् सिद्धो भवति ।
किं च भो आत इति घञुच्यते ?
न खल्वप्यात इत्युच्यते, आतस्तु विज्ञायते ।
कथम् ?
अविशेषेण घञुत्सर्गः, तस्य इवर्णान्तादुवर्णान्ताच्चाजपावपवादौ । तत्रोपदेशावस्थायामात्वे कृते अपवादस्य निमित्तं नास्तीति कृत्वा, उत्सर्गेण घञ् सिद्धो भवति । एवं च कृत्वा न च आतः इत्युच्यते, आतस्तु विज्ञायते ।।
युच्, ईषदवदानम्, स्ववदानम् । आत इति युच् सिद्धो भवति ।।
(उपदेशपदान्वयबोधकभाष्यम्)
इदं विप्रतिषिद्धम् --- एच उपदेश इति । यद्येचः, नोपदेशे । अथोपदेशे, नैचः । एचश्चोपदेशे चेति विप्रतिषिद्धम् ।
नैतद्विप्रतिषिद्धम् । आहायम् --- एच उपदेश इति । यद्येचो नोपदेशे --- अतोपदेशे नैचः, ते वयं विषयं विज्ञास्यामः --- एज्विषय इति ।।
(उपदेशपदानुवृत्तिबोधकभाष्यम्)
तत्तर्हि उपदेशग्रहणं कर्तव्यम् ।
न कर्तव्यम्, प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
आदेच उपदेशेऽशिति (45) इति ।
तद्वै प्रकृतिविशेषणम्, विषयविशेषणेन चेहार्थः ।
न चान्यार्थं प्रकृतमन्यार्थं भवति ।
न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति --- न हि गोधा सर्पन्ती सर्पणादहिर्भवति ।।
(उपदेशपदस्य यथेष्टमभिसंबन्धबोधकभाष्यम्)
यत्तावदुच्यते --- न चान्यार्थं प्रकृतमन्यार्थं भवतीति ।
अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा --- शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते ।।
यदप्युच्यते --- न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति --- न हि गोधा सर्पन्ती सर्पणादहिर्भवतीति ।
भवेत्, द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येनाभिसंबध्यते तस्य तस्य विशेषको भवति । तद्यथा ---
गौः शुक्लः, अश्वश्च । शुक्ल इति गम्यते ।।
(6062 प्रतिषेधोपसंख्यानवार्तिकम् ।। 2 ।।)
- निमिमीलियां खलचोः प्रतिषेधः -
निमिमीलियां खलचोः प्रतिषेधो वक्तव्यः ।
ईषन्निमयम्, सुनिमयम्, निमयो वर्तते, नियमः । मि ।।
मी । ईषत्प्रमयम्, सुप्रमयम् प्रमयो वर्तते, प्रमयः । मी ।।
ली । ईषद्विलयम्, सुविलयम्, विलयो वर्तते, विलयः ।।
-6-1-51- विभाषा लीयतेः (2488)
(लीयतेः इति निर्देशार्थबोधकभाष्यम्)
किमिदं लीयतेरिति ?
लिनातिलीयत्योर्यका निर्देशः ।।
-6-1-56- बिभेतेर्हेतुभये (2493)
(पदकृत्यभाष्यम्)
हेतुभय इति किमर्थम् ?
कुञ्चिकयैनं भाययति, अहिनैनं भाययति ।।
(आक्षेपभाष्यम्)
हेतुभये इत्युच्यमानेऽप्यत्र प्राप्नोति । एतदपि हेतुभयम् ।।
(समाधानभाष्यम्)

हेतुभय इति नैवं विज्ञायते --- हेतोर्भयम् --- हेतुभयम्, हेतुभय इति ।
कथं तर्हि ?
हेतुरेव भयम् --- हेतुभयम्, हेतुभय इति । यदि स एव हेतुर्भयं भवतीति ।।
-6-1-58- सृजिदृशोर्झल्यमकिति (2495)
(अमागमाधिकरणम्)
(6063 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अमि सङ्ग्रहणम् -
अमि सङ्ग्रहणं कर्तव्यम् ।
किमिदं सङिति ?
प्रत्याहारग्रहणम् ।
क्व सन्निविष्टानां प्रत्याहारः ?
सनः प्रभृति आमहिङो ङकारात् ।।
किं प्रयोजनम् ?
(6064 उपसंख्यानफलबोधकवार्तिकम् ।। 2 ।।)
- क्विप्प्रतिषेधार्थम् -
क्विबन्तस्य मा भूत् । रज्जुसृड्भ्याम्, रज्जुसृड्भिः, देवदृग्भ्याम्, देवदृग्भिः ।।
(6065 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 3 ।।)
- उक्तं वा -
किमुक्तम् ?
धातोः स्वरूपग्रहणे तत्प्रत्ययविज्ञानात्सिद्धमिति ।।
-6-1-60- शीर्षं श्छन्दसि (2497)
(प्रकृत्यन्तरबोधनाधिकरणम्)
(6066 सूत्रार्थबोधकवार्तिकम् ।। 1 ।।)
- शीर्षन् छन्दसि प्रकृत्यन्तरम् -
शीर्षन् छन्दसि प्रकृत्यन्तरं द्रष्टव्यम् । किं प्रयोजनम् ?
आदेशप्रतिषेधार्थम् । आदेशो मा विज्ञायि, प्रकृत्यन्तरं यथा विज्ञायेत ।
किं च स्यात् ?
अस्कारान्तस्य च्छन्दसि श्रवणं न स्यात् --- शिरो मे शीर्यते मुखे, इदं ते शिरो भिनद्मीति, तद्वा अथर्वणः शिरः ।।
-6-1-61- ये च तद्धिते ( 2498)
(6067 उपसंख्यानवार्तिकम् ।। 1 ।।)
- ये च तद्धिते शिरस आदेशार्थम् -
ये च तद्धिते इत्यत्र शिरसो ग्रहणं कर्तव्यम् ।
किं प्रयोजनम् ?
आदेशार्थम् । आदेशो यथा विज्ञायेत, प्रकृत्यन्तरं मा विज्ञायि ।
किं च स्यात् ?
यकारादौ तद्धितेऽस्कारान्तस्य श्रवणं प्रसज्येत--शीर्षण्यो हि मुख्यो भवति, शीर्षण्यः स्वरः ।।
(6068 विकल्पोपसंख्यानवार्तिकम् ।। 2 ।।)
- वा केशेषु -
वा केशेषु शिरसः शीर्षन्भावो वक्तव्यः । शीर्षण्याः केशाः, शिरस्याः ।।
(6069 उपसंख्यानवार्तिकम् ।। 3 ।।)
- अचि शीर्षः -
अचि परतः शिरसः शीर्षभावो वक्तव्यः । हास्तिशीर्षिः, पैलुशीर्षिः ।।
(6070 उपसंख्यानवार्तिकम् ।। 4 ।।)
- छन्दसि च -
शिरसः शीर्षभावो वक्तव्यः । द्वे शीर्षे ।।
(आक्षेपभाष्यम्)
इह --- हास्तिशीर्ष्या, पैलुशीर्ष्या --- इति, शिरसो ग्रहणेन ग्रहणात् शीर्षन्भावः प्राप्नोति ।
अस्तु । नस्तद्धिते (6-4-144) इति टिलोपो भविष्यति ।
न सिध्यति ।

ये चाभावकर्मणोः (6-4-167) इति प्रकृतिभावः प्रसज्येत ।
(न्यासान्तरेण दोषनिवारकभाष्यम्)
यदि पुनः येऽचि तद्धिते इत्युच्यते ।
किं कृतं भवति ?
इञ्ञि शीर्षन्भावे कृते टिलोपेन सिद्धम् ।।
(न्यासान्तरे दोषभाष्यम्)
नैवं शक्यम् । इह हि --- स्थूलशिरस इदं स्थौलशीर्षमिति --- अन् (6-4-167) अणि --- इति प्रकृतिभावः प्रसज्येत ।
तस्मान्नैवं शक्यम् । न चेदेवं शिरसो ग्रहणेन ग्रहणाच्शीर्षन्भावः प्राप्नोति ।
(प्रथमाक्षेपसमाधानभाष्यम्)
पाक्षिक एष दोषः ।
कतरस्मिन् पक्षे ?
ष्यङ्विधौ द्वैतं भवति --- अणिञ्ञोर्वाऽऽदेशः ष्यङ्, अणिञ्भ्यां वा पर इति ।
तद्यदा तावदणिञ्ञोरादेशः, तदैष दोषः ।
यदा ह्यणिञ्भ्यां परः, न तदा दोषो भवति, अणिञ्भ्यां व्यवहितत्वात् ।।
-6-1-63- पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्शकन्नुदनासञ्शस्प्रभृतिषु (2500)
(प्रकृतिग्रहणस्य प्रकारार्थत्वबोधकभाष्यम्)
शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृतिष्वपि दृश्यते --- शलादोषणी, ककुद्दोषणी याचते महादेवः ।।
(6071 उपसंख्यानवार्तिकम् ।। 1 ।।)
- पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् -
पदादिषु मांस्पृत्स्नूनामुपसंख्यानं कर्तव्यम् ।
यन्नीक्षणं मांस्पचन्याः, मांसपचन्या इति प्राप्ते । मांस् ।।
पृत् । पृत्सु मर्त्यम्, पृतनासु मर्त्यमिति प्राप्ते । पृत् ।।
स्नु । न ते दिवो न पृथिव्या अधि स्नुषु, अधि सानुष्विति प्राप्ते ।।
(6072 उपसंख्यानवार्तिकम् ।। 2 ।।)
- नस्नासिकाया यत्तस्क्षुद्रेषु -
यत्तस्क्षुद्रेषु परतो नासिकाया नस्भावो वक्तव्यः । यत् । नस्यम् । यत् ।।
तस् । नस्तः । तस् ।।
क्षुद्र । नः क्षुद्रः ।।
(उपसंख्याने शङ्कासमाधानभाष्यम्)
अवर्णनगरयोरिति वक्तव्यम् । इह मा भूत् --- नासिक्यो वर्णः, नासिक्यं नगरम् ।
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् । इह तावत् --- नासिक्यो वर्ण इति, परिमुखादिषु पाठः करिष्यते ।
नासिक्यं नगरमिति, संकाशादिषु पाठः करिष्यते ।।
-6-1-64- धात्वादेः षः सः (2501)
(सत्वाधिकरणम्)
(पदकृत्यभाष्यम्)
धातुग्रहणं किमर्थम् ?
इह मा भूत् --- षोडन्, षण्डः, षडिकः ।।
अथादिग्रहणं किमर्थम् ?
इह मा भूत् --- पेष्टा, पेष्टुम् ।
नैतदस्ति प्रयोजनम् । अस्त्वत्र सत्वम्, सत्वे कृते इण उत्तरस्यादेशसकारस्येति षत्वं भविष्यति ।
इदं तर्हि --- लषिता, लषितुम् ।।
इदं चाप्युदाहरणम् --- षेष्टा, षेष्टुम् ।
ननु चोक्तम् --- अस्त्वत्र सत्वं सत्वे कृते इण उत्तरस्यादेशसकारस्येति षत्वं भविष्यतीति ।
नैवं शक्यम् । इह हि --- पेक्ष्यतीति, षत्वस्यासिद्धत्वात् षढोः कः सि (8-2-41) इति कत्वं न स्यात् ।।
(6073 प्रतिषेधवार्तिकम् ।। 1 ।।)
- सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः -
सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः । सुब्धातु --- षोडीयति, षण्डीयति ।। ष्ठिवु --- ष्ठीवति ।। ष्वष्क, ष्वष्कते ।।
(वार्तिकान्यथासिद्धिबोधकभाष्यम्)

सुब्धातूनां तावन्न वक्तव्यः । उपदेश इति वर्तते, उद्देशश्च प्रातिपदिकानां नोपदेशः ।।
यद्येवम्, नार्थो धातुग्रहणेन ।
कस्मान्न भवति --- षोडन्, षण्डः, षडिक इति ?
उपदेश इति वर्तते, उद्देशश्च प्रातिपदिकानां नोपदेशः ।।
ष्ठिवेरपि द्वितीयो वर्णष्ठकारः ।
यदि ठकारः, तेष्ठीव्यत इति न सिध्यति ।
एवं तर्हि थकारः ।
यदि थकारः, टुष्ठ्यूषति --- टेष्ठीव्यते इति न सिध्यति ।
एवं तर्हि द्वाविमौ ष्ठिवू । एकस्य द्वितीयो वर्णष्ठकारः, अपरस्य थकारः ।
यस्य थकारस्तस्य सत्वं प्राप्नोति ।।
एवं तर्हि द्वाविमौ द्विषकारकौ ष्ठिवुष्वष्कती ।
किं कृतं भवति ?
पूर्वस्य षकारस्य सत्वे कृते परेण सन्निपाते ष्टुत्वं भविष्यति ।
नैवं शक्यम्, इह हि --- श्वलिट् ष्ठीवति, मधुलिट् ष्वष्कते --- ष्टुत्वस्यासिद्धत्वात् डः सि धुट् (8-3-29) इति धुट् प्रसज्येत ।।
एवं तर्हि यकारादी ष्ठिवुष्वष्कती ।
किं यकारो न श्रूयते ?
लुप्तनिर्दिष्टो यकारः ।।
(सूत्रप्रयोजनभाष्यम्)
अथ किमर्थं षकारमुपदिश्य तस्य स आदेशः क्रियते, न सकार एवोपदिश्येत ।
लघ्वर्थमित्याह ।
कथम् ?
अविशेषेणायं षकारमुपदिश्य सकारमादेशमुक्त्वा लघुनोपायेन षत्वं निर्वर्तयति --- आदेशप्रत्यययोः (8-3-59) इति । इतरथा हि येषां षत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् ।।
(षोपदेशप्रदर्शकभाष्यम्)
के पुनः षोपदेशा धातवः पठितव्याः ?
अथ कोऽत्र भवतः पुरुषकारः ? यद्यन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् ।
अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् ।
कथम् ?
अज्दन्त्यपराः सादयः षोपदेशाः, स्मिङ्स्वदिस्विदिस्वञ्जिस्वपश्च, सृपिसृजिस्तृस्त्यासेकृसृवर्जम् ।।
-6-1-65- णो नः (2502)
(नत्वाधिकरणम्)
(सूत्रप्रयोजनभाष्यम्)
अथ किमर्थं णकारमुपदिश्य तस्य नकार आदेशः क्रियते, न नकार एवोपदिश्यते ?
लघ्वर्थमित्याह ।
कथम् ?
अविशेषेणायं णकारमुपदिश्य तस्य नकारमादेशमुक्त्वा तस्य लघुनोपायेन णत्वं निर्वर्तयति --- उपसर्गादसमासेऽपि णोपदेशस्य (8-4-14) इति ।
इतरथा हि येषां णत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् ।
(णोपदेशपरिगणनभाष्यम्)
के पुनर्णोपदेशा धातवः पठितव्याः ?
कोऽत्र भवतः पुरुषकारः ?
यद्यन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् ।
अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् ।
कथम् ?
सर्वे नादयो णोपदेशाः, नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनृवर्जम् ।।
-6-1-66- लोपो व्योर्वलि (2503)
(लोपाधिकरणम्)
(6074 उपसंख्यानवार्तिकम् ।। 1 ।।)
- व्योर्लोपे क्वावुपसंख्यानम् -

व्योर्लोपे क्वावुपसंख्यानं कर्तव्यम् । इहापि यथा स्यात् --- कण्डूयतेरप्रत्ययः --- कण्डूरिति ।
किं पुनः कारणं न सिध्यति ?
वलीत्युच्यते, न चात्र वलादिं पश्यामः ।
ननु चायं क्विबेव वलादिः ।
क्विब्लोपे कृते वलाद्यभावान्न प्राप्नोति ।।
एवं तर्हि --- इदमिह संप्रधार्यम् --- क्विब्लोपः क्रियताम् --- यलोप इति, किमत्र कर्तव्यम् ?
परत्वात् क्विब्लोपः, नित्यत्वाच्च ।
नित्यः खल्वपि क्विब्लोपः । कृतेऽपि यलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वात्परत्वाच्च क्विब्लोपः । क्विब्लोपे कृते वलाद्यभावाद्यलोपो न प्राप्नोति ।।
(उपसंख्यानप्रत्याख्यानभाष्यम्)
एवं तर्हि प्रत्ययलक्षणेन भविष्यति ।
वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा कानिचिदन्यान्यपि वर्णाश्रयाणि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति ।।
अथवैवं वक्ष्यामि --- लोपो व्योर्वलि ।
ततः --- वेः । व्यन्तयोश्च व्योर्लोपो भवति ।
ततः --- अपृक्तस्य । अपृक्तस्य च लोपो भवति । वेरित्येव ।।
(6075 व्योर्वकाराक्षेपवार्तिकम् ।। 2 ।।)
- वलोपाप्रसिद्धिरूङ्भाववचनात् -
वलोपस्याप्रसिद्धिः --- आस्रेमाणम्, जीरदानुरिति ।
किं कारणम् ?
ाढ़्य;ङ्भाववचनात् । च्छोः शूडनुनासिके च (6-4-19) इत्यूठ् प्राप्नोति ।।
(6076 वकारग्रहणेऽतिप्रसङ्गापादकवार्तिकम् ।। 3 ।।)
- अतिप्रसङ्गो व्रश्चादिषु -
व्रश्चादिषु चातिप्रसङ्गो भवति । इहापि प्राप्नोति --- व्रश्चनः, व्रीहयः, व्रण इति ।।
(अतिप्रसङ्गनिरासे वार्तिकावतरणभाष्यम्)
उपदेशसार्मथ्यात्सिद्धम् । उपदेशसार्मथ्यात् व्रश्चादिषु लोपो न भविष्यति ।।
(6077 आक्षेपवार्तिकम् ।। 4 ।।)
- उपदेशसार्मथ्यात्सिद्धमिति चेत्संप्रसारणहलादिशेषेषु सार्मथ्यम् -
उपदेशसार्मथ्यात्सिद्धमिति चेत्, अस्त्यन्यदुपदेशवचने प्रयोजनम् । संप्रसारणहलादिशेषेषु कृतेषु वकारस्य श्रवणं यथा स्यात् --- वृक्णः, वृक्णवान्, वृश्चति, विव्रश्चिषतीति ।।
(6078 समाधानवार्तिकम् ।। 5 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा एतत्प्रयोजनमस्ति ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गाः संप्रसारणहलादिशेषाः, अन्तरङ्गो लोपः । असिद्धं बहिरङ्गमन्तरङ्गे ।।
(6079 व्योर्वकारप्रत्याख्यानवार्तिकम् ।। 6 ।।)
- अनारम्भो वा -
अनारम्भो वा पुनर्वलोपस्य न्याय्यः । कथम् --- आस्रेमाणम्, जीरदानुरिति ?
(6080 अनुपपत्तिपरिहारवार्तिकम् ।। 7 ।।)
- आस्रेमाणं जीरदानुरिति वर्णलोपात् -
आस्रेमाणं जीरदानुरिति च्छान्दसाद्वर्णलोपात्सिद्धम् ।।
(6081 अनुपपत्तिपरिहारे दृष्टान्तवार्तिकम् ।। 8 ।।)
- यथा संस्फानो गयस्फानः -
तद्यथा --- संस्फायनः --- संस्फानः, गयस्फायनः --- गयस्फान इति ।।
-6-1-67- वेरपृक्तस्य (2504)
(उपसंख्यानभाष्यम्)
दर्विजागृव्योः प्रतिषेधो वक्तव्यः । दर्विः, जागृविः ।।
किमुच्यते --- दर्विजागृव्योः प्रतिषेधो वक्तव्य इति यदाऽपृक्तस्येत्युच्यते ।
भवति वै किंचित्, आचार्याः क्रियमाणमपि चोदयन्ति ।
तद्वा कर्तव्यम्, दर्विजागृव्योः प्रतिषेधो वा वक्तव्यः ।।

(6082 प्रतिषेधानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽनुनासिकपरत्वात् -
वेर्लोपे दर्विजागृव्योरप्रतिषेधः । अनर्थकः प्रतिषेधः --- अप्रतिषेधः ।
लोपः कस्मान्न भवति ?
अनुनासिकपरत्वात्, अनुनासिकपरस्य विशब्दस्य ग्रहणम् । न चात्रानुनासिकपरो विशब्दः, शुद्धपरश्चात्र विशब्दः ।।
(वार्तिकाक्षेपभाष्यम्)
यद्यनुनासिकपरस्य विशब्दस्य ग्रहणमित्युच्यते, घृतस्पृक् --- दलस्पृक् --- अत्र न प्राप्नोति, न ह्येतस्माद्विशब्दादनुनासिकं परं पश्यामः ।
अनुनासिकपरत्वात् इति नैवं विज्ञायते --- अनुनासिकः परो यस्मात्सोऽयमनुनासिकपरः, अनुनासिकपरत्वादिति ।
कथं तर्हि ?
अनुनासिकः परोऽस्मिन् सोऽयमनुनासिकपरः, अनुनासिकपरत्वादिति ।।
एवमपि प्रियदर्वि --- अत्रापि प्राप्नोति ।
असिद्धोऽत्रानुनासिकः ।।
एवमपि धात्वन्तस्य प्रतिषेधो वक्तव्यः । इवि, दिवि, धिवि ।।
(6083 प्रतिषेधानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- धात्वन्तस्य चार्थवद्ग्रहणात् -
अर्थवतो विशब्दस्य ग्रहणम्, न धात्वन्तोऽर्थवान् ।।
(6084 प्रकारान्तरबोधकवार्तिकम् ।। 3 ।।)
- वस्य वाऽनुनासिकत्वात्सिद्धम् -
अथवा वकारस्यैवेदमनुनासिकस्य ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ।।
-6-1-68- हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (2505)
(वार्तिकावतरणभाष्यम्)
यदि पुनरयमपृक्तलोपः संयोगान्तलोपो विज्ञायेत ।
किं कृतं भवति ?
द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यं भवति ।।
(6085 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावो यथा पचन्निति -
हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावः --- राजा, तक्षा । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न प्राप्नोति ।
यथा --- पचन् --- इति । तद्यथा --- पचन्, यजन् --- इत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न भवति ।।
(वार्तिकोक्तप्रयोजनान्यथासिद्धबोधकभाष्यम्)
नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति --- सिद्धः संयोगान्तलोपो नलोपे --- इति, यदयं न ङिसंबुद्ध्योः (8-2-8) इति संबुद्धौ प्रतिषेधं शास्ति ।
इहापि तर्हि प्राप्नोति --- पचन्, यजन् ।
तुल्यजातीयस्य ज्ञापकं भवति ।
कश्च तुल्यजातीयः ?
यः संबुद्धावनन्तरः ।।
(6086 सूत्रप्रयोजनवार्तिकम् ।। 2 ।।)
- वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात् -
वस्वादिषु दत्वं च न सिध्यति । उखास्रत्, पर्णध्वत् ।
किं कारणम् ?
संयोगादिलोपबलीयस्त्वात् । संयोगान्तलोपात्संयोगादिलोपो बलीयानिति ।।
(6087 संयोगादिलोपबलीयस्त्वबोधकवार्तिकम् ।। 3 ।।)
- यथा कूटतडिति -
तद्यथा --- कूटतट्, काष्ठतट् --- इत्यत्र संयोगान्तलोपात्संयोगादिलोपो बलीयान् भवति ।।
ननु च दत्वे कृते न भविष्यति ।
असिद्धं दत्वम्, तस्यासिद्धत्वात् प्राप्नोति ।
सिद्धकाण्डे पठितं वस्वादिषु दत्वं सौ दीर्घत्व इति । तत्रसौ दीर्घत्वग्रहणं न करिष्यते । वस्वादिषु दत्वं सिद्धमित्येव ।।
एवमप्यपदान्तत्वान्न प्राप्नोति ।
अथ सावपि पदं भवति ।
राजा, तक्षा --- नलोपे कृते विभक्तेः श्रवणं प्राप्नोति ।
सैषोभयतस्पाशा रज्जुर्भवति ।।

(6088 एकदेश्युपसंख्यानवार्तिकम् ।। 4 ।।)
- रात्तलोपो नियमवचनात् -
रात्तस्य लोपो वक्तव्यः । अबिभर्भवान्, अजागर्भवान् ।
किं पुनः कारणं न सिध्यति ?
नियमवचनात् । रात्सस्य (8-2-24) इत्येतस्मान्नियमान्न प्राप्नोति ।।
नैष दोषः । रात्सस्य इत्यत्र तकारोऽपि निर्दिश्यते ।
यद्येवम्, कीर्तयतेरप्रत्ययः --- कीः इति प्राप्नोति, कीर्त् इति चेष्यते ।
यथा लक्षणमप्रयुक्ते ।।
(6089 उपसंख्यानवार्तिकम् ।। 5 ।।)
- रोरुत्वं च -
रोश्चोत्वं वक्तव्यम् । अभिनोऽत्र, अच्छिनोऽत्र । संयोगान्तलोपस्यासिद्धत्वात् । अतोऽति इत्युत्वं न प्राप्नोति ।।
(6090 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 6 ।।)
- न वा संयोगान्तलोपस्योत्वे सिद्धत्वात् -
न वा वक्तव्यम् । किं कारणम् । संयोगान्तलोपस्योत्वे सिद्धत्वात् । संयोगान्तलोप उत्वे सिद्धो भवति ।।
(6091 आनर्थक्ये दृष्टान्तवार्तिकम् ।। 7 ।।)
- यथा हरिवो मेदिनमिति -
तद्यथा --- हरिवो मेदिनं त्वा --- इत्यत्र संयोगान्तलोप उत्वे सिद्धो भवति ।।
(सूत्रप्रयोजने सिद्धान्तभाष्यम्)
स एव तर्हि दोषः --- सैषोभयतस्पाशेति ।
तस्मादशक्यो हलपृक्तलोपः संयोगान्तलोपो विज्ञातुम् । न चेद्विज्ञायते, द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं कर्तव्यमेव ।।
-6-1-69- एङ्ह्रस्वात्संबुद्धेः (2506)
(6092 एकदेश्युपसंख्यानवार्तिकम् ।। 1 ।।)
- संबुद्धिलोपे डतरादिभ्यः प्रतिषेधः -
संबुद्धिलोपे डतरादिभ्यः प्रतिषेधो वक्तव्यः । हे कतरत्, हे कतमत् ।
किमुच्यते --- डतरादिभ्यः प्रतिषेधो वक्तव्य इति यदाऽपृक्तस्येत्यनुवर्तते ?
(6093 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- अपृक्ताधिकारस्य निवृत्तत्वात् -
निवृत्तोऽपृक्ताधिकारः ।।
किं डतरादिभ्यः प्रतिषेधं वक्ष्यामीत्यतोऽपृक्ताधिकारो निवर्तते ?
नेत्याह ।।
(6094 पूर्वोक्तार्थसमर्थकवार्तिकम् ।। 3 ।।)
- तच्चामर्थम् -
स चावश्यमपृक्ताधिकारो निर्वत्यः ।
किमर्थम् ?
अमर्थम् । अमो लोपो यथा स्यात् । हे कुण्ड, हे पीठ ।।
(आक्षेपभाष्यम्)
निवृत्तेऽपि वै अपृक्ताधिकारे अमो लोपो न प्राप्नोति ।
किं कारणम् ?
मा भूत्सर्वस्य लोपः । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य लोपे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात् --- हे कुण्ड, हे पीठेति ।।
यद्येतल्लभ्येत कृतं स्यात् । तत्तु न लभ्यम् ।
किं कारणम् ?
अत्र हि तस्मादित्युत्तरस्य आदेः परस्य (1-1-67,54) इत्यकारस्य लोपः प्राप्नोति । अकारलोपे च सति मकारे अतो दीर्घो यञ्ञि सुपि च (7-3-101;102) इति दीर्घत्वे --- हे कुण्डाम्, हे पीठाम् --- इत्येतद्रूपं प्रसज्येत ।।
(सिद्धान्तभाष्यम्)
एवं तर्हि हलो लोपः संबुद्धिलोपः ।
तद्धल्ग्रहणं कर्तव्यम् ।
न कर्तव्यम् । प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (68) इति ।

तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।
नैष दोषः । एङ्ह्रस्वादित्येषा पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति ।।
एमवपि प्रथमयोः पूर्वसवर्णदीर्घत्वे कृते --- हे कुण्डा, हे पीठा --- इत्येतद्रूपं प्रसज्येत ।
अमि पूर्वत्मत्र बाधकं भविष्यति ।
अमीत्युच्यते, न चात्रामं पश्यामः ।
एकदेशविकृतमनन्यवद्भवतीति ।।
अथ वेदमिह संप्रधार्यम् --- संबुद्धिलोपः क्रियताम्, एकादेश इति; किमत्र कर्तव्यम् ?
परत्वादेकादेशः ।
एवमप्येकादेशे कृते व्यपवर्गाभावात्संबुद्धिलोपो न प्राप्नोति ।
अन्तादिवद्भावेन व्यपवर्गो भविष्यति ।
उभयत आश्रयणे नान्तादिवत् ।
नोभयत आश्रयः करिष्यते ।
कथम् ?
नैवं विज्ञायते --- ह्रस्वादुत्तरस्याः संबुद्धेर्लोपो भवतीति ।
कथं तर्हि ?
ह्रस्वादुत्तरस्य हलो लोपो भवतीति, स चेत्संबुद्धेरिति ।।
डतरादिभ्यः स तर्हि प्रतिषेधो वक्तव्यः ।
न वक्तव्यः ।।
(6095 सिद्धान्तवार्तिकम् ।। 4 ।।)
- उक्तं वा -
किमुक्तम् ?
सिद्धमनुनासिकोपधत्वात् इति ।।
एवमपि दलोपः साधीयः प्राप्नोति ।
दुक्करणाद्वा । अथवा दुक्डतरादीनामिति वक्ष्यामि ।।
डित्करणाद्वा । अथवा डिदच्छब्दः करिष्यते ।
स तर्हि डकारः कर्तव्यः ।
क्रियते न्यास एव, द्विडकारको निर्देशः --- अदड्डतरादिभ्य इति ।।
एवमपि लोपः प्राप्नोति ।
विहितविशेषणं ह्रस्वग्रहणम् । यस्माद्ह्रस्वात्संबुद्धिर्विहितेति ।।
(6096 एकदेशिनो विप्रतिषेधबोधकवार्तिकम् ।। 5 ।।)
- अपृक्तसंबुद्धिलोपाभ्यां लुक् -
अपृक्तसंबुद्धिलोपाभ्यां लुग्भवति विप्रतिषेधेन ।
अपृक्तलोपस्यावकाशः --- गोमान्, यवमान् ।
लुकोऽवकाशः --- त्रपु, जतु ।
इहोभयं प्राप्नोति --- तत् ब्राह्मणकुलम्, यत् ब्राह्मणकुलम् ।
संबुद्धिलोपस्यावकाशः --- अग्ने, वायो ।
लुकः स एव ।
इहोभयं प्राप्नोति --- हे त्रपु, हे जतु ।
लुग्भवति विप्रतिषेधेन ।
स तर्हि विप्रतिषेधो वक्तव्यः ।
न वक्तव्यः ।।
(6097 सिद्धान्तवार्तिकम् ।। 6 ।।)
- न वा लोपलुकोर्लुगवधारणाद्यथाऽनडुह्यत इति -
न वाऽर्थो विप्रतिषेधेन ।
किं कारणम् ?
लोपलुकोर्लुगवधारणात् । लोपलुकोर्हि लुग्वधार्यते --- लुग्लोपयणयवायावेकादेशेभ्यः ।
यथा --- अनडुह्यत इति । तद्यथा --- अनड्वानिवाचरति --- अनुडुह्यत इत्यत्र लोपलुकोर्लुगवधार्यते ।
एवमिहापि ।।
-6-1-70- शेश्छन्दसि बहुलम् (2507)

(योगानुपयोगप्रख्यापनभाष्यम्)
अयं योगः शक्योऽवक्तुम् ।
कथम् --- अग्ने त्री ते वाजिना त्री षधस्था, ता ता पिण्डानाम् --- इति ?
पूर्वसवर्णेनाप्येतत्सिद्धम् ।।
न सिध्यति । नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति ।।
छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः --- मधोर्गृह्णाति, मधोस्तृप्ता इवासते, इत्येवमर्थम् । तत्र पुंवद्भावेन नुमो निवृत्तिः । नुमि निवृत्ते पूर्वसवर्णेन सिद्धम् ।।
भवेत्सिद्धम् --- अग्ने त्री ते वाजिना त्री षधस्था ।
इदं तु न सिध्यति --- ता ता पिण्डानामिति ।
इदमपि सिद्धम् ।
कथम् ?
साप्तमिके पूर्वसवर्णे कृते पुनः षाष्ठिको भविष्यति ।।
एवमपि जसि गुणः प्राप्नोति ।
वक्ष्यत्येतत् --- जसादिषु छन्दो वावचनं प्राङ् णौ चङ्युपधायाः ।।
-6-1-71- ह्रस्वस्य पिति कृति तुक् (2508)
(तुगधिकरणम्)
(6098 तुकः पूर्वान्तत्वे दोषवार्तिकम् ।। 1 ।।)
- तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च -
तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति । आराशस्त्रिच्छत्रम् । धानाशष्कुलिच्छत्रम् । निष्कौशाम्बिच्छत्रम् । निर्वाराणसिच्छत्रम् ।
द्विगुस्वरः --- पञ्चारत्निच्छत्रम्, दशारत्निच्छत्रम् ।
तुकि कृतेऽनन्त्यत्वादेते विधयो न प्राप्नुवन्ति ।।
(6099 पूर्वान्तत्वे दोषाभावोपपादकवार्तिकम् ।। 2 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा एष दोषः ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणस्तुक्, अन्तरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे ।।
इह तर्हि --- ग्रामणिपुत्रः, सेनानिपुत्रः, ह्रस्वत्वे कृते तुक् प्राप्नोति ।।
(6100 दोषाभावोपपादकवार्तिकम् ।। 3 ।।)
- ग्रामणिपुत्रादिषु चाप्राप्तिः -
ग्रामणिपुत्रादिषु चाप्राप्तिः ।
किं कारणम् ?
बहिरङ्गलक्षणत्वादेव ।।
अथवा परादिः करिष्यते ।
(6101 तुकः परादित्वे दोषवार्तिकम् ।। 4 ।।)
- परादौ संयोगादेरित्यतिप्रसङ्गः -
परादौ संयोगादेरित्यतिप्रसङ्गो भवति । अपच्छायात् । वाऽन्यस्य संयोगादेः(6-4-68) इत्येत्वम्प्रसज्येत ।।
(6102 दोषवार्तिकम् ।। 5 ।।)
- विलोपवचनं च -
वेश्च लोपो वक्तव्यः । अग्निचित्, सोमसुत् । अपृक्तस्य इति वेर्लोपो न प्राप्नोति ।
नैष दोषः । अपृक्तग्रहणं न करिष्यते ।
यदि न क्रियते, दर्विः --- जागृविः अत्रापि प्राप्नोति ।
अनुनासिकपरस्य विशब्दस्य ग्रहणम्, शुद्धपरश्चात्र विशब्दः ।
एवमपि सतुक्कस्य लोपः प्राप्नोति ।
निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति ।।
(6103 दोषवार्तिकम् ।। 6 ।।)
- इट्प्रतिषेधश्च -
इट्प्रतिषेधश्च वक्तव्यः । परीतत् । सतुक्कस्य वलादिलक्षण इट् प्रसज्येत ।।
एवं तर्ह्यभक्तः करिष्यते ।।

(6104 अभक्तत्वे दोषवार्तिकम् ।। 7 ।।)
- अभक्ते स्वरः -
यद्यभक्तस्तर्हि स्वरभेदो भवति --- दधिच्छादयति, मधुच्छादयति तिङ्ङतिङः (8-1-28) इति निघातो न प्राप्नोति ।
ननु च तुगेवातिङ् ।
न तुकः परस्य निघातः प्राप्नोति ।
किं कारणम् ?
नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्ते इवयुक्ते वाऽन्यस्मिन् तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । तद्यथा --- अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमेवानयति, नासौ लोष्टमानीय कृती भवति । एवमिहापि अतिङ् इति प्रतिषेधादन्यस्मिंस्तिङ्सदृशे कार्यं विज्ञास्यते ।
किं चान्यदतिङ् --- तिङ्सदृशम् ?
पदम् ।।
-6-1-72- संहितायाम् (2509)
(योगानर्थक्यबोधकभाष्यम्)
अयं योगः शक्योऽवक्तुम् ।
कथम् ?
अधिकरणं नाम त्रिः प्रकारम् --- व्यापकम्, औपश्लेषिकम्, वैषयिकम् --- इति ।
शब्दस्य च शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हत्यन्यदत उपश्लेषात् । इको यणचि (6-1-77) अचि उपश्लिष्टस्येति ।
तत्रान्तरेण संहिताग्रहणं संहितायामेव भविष्यति ।।
-6-1-74- आङ्माङोश्च (2511)
(वार्तिकावतरणभाष्यम्)
अथ किमर्थमाङ्माङोः सानुबन्धकयोर्निर्देशः ?
(6105 अनुबन्धफलबोधकवार्तिकम् ।। 1 ।।)
- आङ्माङोः सानुबन्धकयोर्निर्देशो गतिकर्मप्रवचनीयप्रतिषेधसंप्रत्ययार्थः -
आङ्माङोः सानुबन्धकयोर्निर्देशः क्रियते --- आङो गतिकर्मप्रवचनीयसंप्रत्ययार्थः, माङः प्रतिषेधसंप्रत्ययार्थः ।
-6-1-75- दीर्घात् (2512)
-6-1-76- पदान्ताद्वा (2513)
(6106 उपसंख्यानवार्तिकम् ।। 1 ।।)
- दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि -
दीर्घात्पदान्ताद्वेत्यत्र विश्वजनादीनां छन्दस्युपसंख्यानं कर्तव्यम् । विश्वजनस्य छत्रम्, विश्वजनस्य च्छत्रम्, न छायां कुरवोऽपराम्, न च्छायां कुरवोऽपराम् ।।
-6-1-77- इको यणचि (2514)
(यणोऽधिकरणम्)
(पदकृत्यभाष्यम्)
इग्ग्रहणं किमर्थम् ?
इह मा भूत् --- अग्निचिदत्र, सोमसुदत्र ।
नैतदस्ति प्रयोजनम् । जश्त्वमत्र बाधकं भविष्यति ।।
(प्रत्याक्षेपकश्लोकभाष्यम्)
जश्त्वं न सिद्धं यणमत्र पश्य
असिद्धमत्र जश्त्वं तस्यासिद्धत्वाद्यणादेशः प्राप्नोति ।।
(अतिव्याप्तिदर्शकश्लोकभाष्यम्)
यश्चापदान्तो हलचश्च पूर्वः ।
यश्चापदान्तो हल् अचश्च पूर्वस्तस्य प्राप्नोति । पचतीति ।।
एवं तर्हि ---
(अतिव्याप्तिवारकश्लोकभाष्यम्)
दीर्घस्य यण्
दीर्घस्य यणादेशं वक्ष्यामि ।
तद्दीर्घग्रहणं कर्तव्यम् ।
न कर्तव्यम् । प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?

दीर्घात् --- पदान्ताद्वा (75;76) इति ।
तद्वै पञ्चमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।
अचीत्येषा सप्तमी दीर्घादिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य (1-1-66) इति ।।
भवेत्सिद्धम् --- कुमार्यत्र, ब्रह्मबन्ध्वर्थमिति ।
इदं तु न सिध्यति --- दध्यत्र, मध्वत्रेति ।।
(अतिव्याप्तिवारकश्लोकभाष्यम्)
ह्रस्व इति प्रवृत्तं
ह्रस्वग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
ह्रस्वस्य पिति कृति (71) इति ।
यदि तदनुवर्तते दीर्घात्पदान्ताद्वा ह्रस्वस्य --- इति ह्रस्वादपि पदान्ताद्विकल्पेन प्राप्नोति ।।
(दोषवारकश्लोकभाष्यम्)
संबन्धवृत्त्या
संबन्धमनुवर्तिष्यते ---
ह्रस्वस्य पिति कृति तुक् (71) ।
संहितायाम् (72) ह्रस्वस्य पिति कृति तुक् ।
छे च (73) ह्रस्वस्य पिति कृति तुक् ।
आङ्माङोश्च (74) ह्रस्वस्य पिति कृति तुक् ।
दीर्घात्पदान्ताद्वा (75-76) ह्रस्वस्य पिति कृति तुक् ।
ततः इको यणचि ह्रस्वस्येति वर्तते, पिति कृति तुगिति निवृत्तम् ।।
इह तर्हि प्राप्नोति --- चयनम्, चायकः, लवनम्, लावकः ।
अयादयोऽत्र बाधका भविष्यन्ति ।।
इह तर्हि प्राप्नोति --- खट्वेन्द्रः, मालेन्द्रः, खट्वैलका, मालैलका ।
(अतिव्याप्तिवारकश्लोकभाष्यम्)
गुणवृद्धिबाध्यम् ।।
गुणवृद्धी अत्र बाधिके भविष्यतः ।
इदं तर्हि प्रयोजनम् --- इकोऽचि यणेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।
किं चान्यत्प्राप्नोति ?
शाकलम् । सिन्नित्यसमासयोः शाकलप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति ।।
(6107 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- यणादेशः प्लुतपूर्वस्य च -
यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम् । अग्ना3इ इन्द्रम् --- अग्ना3यिन्द्रम् । पटा3उ उदकम्--पटा3वुदकम् । अग्ना3इ आशा--अग्ना3याशा । पटा3उ आशा --- पटा3वाशा ।।
किं पुनः कारणं न सिध्यति ?
असिद्धः प्लुतः, प्लुतविकाराविमौ ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
सिद्धः प्लुतः स्वरसन्धिषु ।
कथं ज्ञायते ?
यदयं प्लुतप्रगृह्या अचि --- (6-1-125) इति प्लुतस्य प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्यः --- सिद्धः प्लुतः स्वरसन्धिष्विति ।
कथं कृत्वा ज्ञापकम् ?
सतो हि कार्यिणः कार्येण भवितव्यम् ।।
इदं तर्हि प्रयोजनम् ---
(6108 उपसंख्यानप्रयोजनवार्तिकम् ।। 2 ।।)
- दीर्घशाकलप्रतिषेधार्थम् -
दीर्घत्वं शाकलं च मा भूदिति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
एतदपि नास्ति प्रयोजनम् । आरभ्यते प्लुतपूर्वस्य यणादेशः --- तयोर्य्वावचि संहितायाम् (8-2-108) इति, तदेव दीर्घशाकलप्रतिषेधार्थं भविष्यति ।।

तन्न वक्तव्यं भवति ।।
ननु च च तस्मिन्नप्युच्यमाने इदं न वक्तव्यं भवति ।
अवश्यमिदं वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम् । भो3 इ इन्द्रम् --- भो3 यिन्द्रम् । भो3 इ इह --- भो3 यिहेति ।।
यदि तर्ह्यस्य निबन्धनमस्ति, इदमेव वक्तव्यम् । तन्न वक्तव्यम् ।
तदप्यवश्यं स्वरार्थं वक्तव्यम् । अनेन हि सति उदात्तस्वरितयोर्यणः --- (8-2-4) इत्येष स्वरः प्रसज्येत । ते पुनः सत्यसिद्धत्वान्न भविष्यति ।।
यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम्, इदं न वक्तव्यम् ।
ननु चोक्तम् --- इदमप्यवश्यं वक्तव्यम्, यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम् --- भो3 यिन्द्रम्, भो3 यिहेति ।
छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ।
यत्तर्हि न छान्दसम् --- भो3यिन्द्र भो3यिहेति साम गायति ।
एषोऽपि छन्दसि दृष्टस्यानुप्रयोगः क्रियते ।।
जश्त्वं न सिद्धं यणमत्र पश्य यश्चापदान्तो हलचश्च पूर्वः ।
दीर्घस्य यण् ह्रस्व इति प्रवृत्तं संबन्धवृत्त्या गुणवृद्धिबाध्यम्।। 1 ।।
नित्ये च यः शाकलभाक्समासे तदर्थमेतद्भगवांश्चकार ।
सार्मथ्ययोगान्नहि किंचिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात् ।। 2 ।।
-6-1-79- वान्तो यि प्रत्यये (2516)
(आयाद्यादेशाधिकरणम्)
(6109 पूर्वपक्षिवार्तिकम् ।। 1 ।।)
- वान्तादेशे स्थानिनिर्देशः -
वान्तादेशे स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम् । एकारैकारयोर्मा भूदिति ।।
(वार्तिकप्रत्याख्यानभाष्यम्)
स तर्हि वक्तव्यः ।
न वक्तव्यः । वान्तग्रहणं न करिष्यते । एचो यि प्रत्ययेऽयादयो भवन्तीत्येव सिद्धम् ।
यदि वान्तग्रहणं न क्रियते --- चेयम् जेयम् --- इत्यत्रापि प्राप्नोति ।
क्षय्यजय्यौ शक्यार्थे (6-1-81) इत्येतन्नियमार्थं भविष्यति --- क्षिज्योरेवैच इति ।
तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति --- क्षेयं पापम्, जेयो वृषल इति ।
उभयतो नियमो विज्ञास्यते --- क्षिज्योरेवैचः, तयोश्च शक्यार्थ एव --- इति ।
इहापि तर्हि नियमान्न प्राप्नोति --- लव्यम्, पव्यम्, अवश्यलाव्यम्, अवश्यपाव्यम् ।
तुल्यजातीयस्य नियमः ।
कश्च तुल्यजातीयः ?
यथाजातीयकः क्षिज्योरेच् ।
कथं जातीयकः क्षिज्योरेच् ?
एकारः ।
एवमपि रायमिच्छति--रैयति, अत्रापि प्राप्नोति ।
रायिश्छान्दसः, दृष्टानुविधिश्छन्दसि भवति ।।
(6110 उपसंख्यानवार्तिकम् ।। 2 ।।)
- गोर्यूतौ छन्दसि -
गोर्यूतौ छन्दस्युपसंख्यानं कर्तव्यम् । आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । गोयूतिमित्येवान्यत्र ।।
(6111 उपसंख्यानवार्तिकम् ।। 3 ।।)
- अध्वपरिमाणे च -
अध्वपरिमाणे च गोर्यूतावुपसंख्यानं कर्तव्यम् । गव्यूतिमध्वानं गतः । गोयूतिमित्येवान्यत्र ।।
-6-1-80- धातोस्तन्निमित्तस्यैव (2517)
(एवकारप्रयोजनभाष्यम्)
एवकारः किमर्थः ?
नियमार्थः ।
नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ।।
इष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत --- धातोस्तन्निमित्तस्यैवेति, मैवं विज्ञायि --- धातोरेव तन्निमित्तस्येति ।
किं च स्यात् ?
अधातोस्तन्निमित्तस्य न स्यात् । शङ्कव्यं दारु, पिचव्यः कार्पास इति ।।
-6-1-82- क्रय्यस्तदर्थे (2519)

(तत्पदार्थोपदर्शकभाष्यम्)
तत् --- इत्यनेन किं प्रतिनिर्दिश्यते ?
स एव क्रीणात्यर्थः । इह मा भूत् --- क्रेयं नो धान्यम्, न चास्ति क्रय्यमिति ।।
-6-1-83- भय्यप्रवय्ये च च्छन्दसि (2520)
(6112 उपसंख्यानवार्तिकम् ।। 1 ।।)
- भय्यादिप्रकरणे ह्रदय्या उपसंख्यानम् -
भय्यादिप्रकरणे ह्रदय्या उपसंख्यानं कर्तव्यम् । ह्रदय्या आपः ।।
(6113 उपसंख्यानवार्तिकम् ।। 2 ।।)
- अव् शरस्य च -
अवादेशो भवतीति वक्तव्यम् । शरस्य च ह्रदस्य चातोऽव्वक्तव्यः । ह्रदव्या आपः । शरव्या वै तेजनम् । शरव्यस्य पशूनभिघातकः स्यात् ।।
(6114 शरब्यशब्दस्यान्यथासिद्धिकथनवार्तिकम् ।। 3 ।।)
- शरुवृत्ताद्वा सिद्धम् -
शरुवृत्ताद्वा पुनः सिद्धमेतत् ।।
(6115 वार्तिकम् ।। 4 ।।)
- ऋञ्जती शरुः इत्यपि दृश्यते -
ऋञ्जती शरुरित्यपि शरुशब्दप्रवृत्तिर्दृश्यते ।।
(6116 वार्तिकम् ।। 5 ।।)
- शरुहस्त इति च लोके -
शरुहस्त इति च लोके शरहस्तमुपाचरन्ति ।।
-6-1-84- एकः पूर्वपरयोः (2521)
(एकादेशाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
एकवचनं किमर्थम् ?
(6117 पदकृत्यवार्तिकम् ।। 1 ।।)
- एकवचनं पृथगादेशप्रतिषेधार्थम् -
एकवचनं क्रियते, एक आदेशो यथा स्यात्, पृथगादेशो मा भूदिति ।।
(6118 एकपदानुपयोगप्रकथनवार्तिकम् ।। 2 ।।)
- न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेः -
न वा एतत्प्रयोजनम् ।
किं कारणम् ?
द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेरेक आदेशो भविष्यति । तद्यथा --- द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति । अनयोः पूलयोः कटं कुरु, अनयोर्मृत्पिण्डयोर्घटं कुरु --- इति । न चोच्यते एकमिति, एकं चासौ करोति ।।
किं पुनः कारणं द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति ?
(6119 एकपदानुपयोगसमर्थकवार्तिकम् ।। 3 ।।)
- तच्चैकवाक्यभावात् -
एकवाक्यभावादद्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति । आतश्चैकवाक्यभावाद्व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति --- ज्वरत्वरस्रिव्यविमवामुपधायाश्च (6-4-20) भ्रस्जोरोपधयोरमन्यतरस्याम् (6-4-47) इति ।।
(लौकिकदृष्टान्तेनाक्षेपभाष्यम्)
यत्तावदुच्यते --- एकवाक्यभावान् --- इति ।
तन्न ।
अर्थात् प्रकरणाद्वा लोके द्वयोरेकस्याभिनिर्वृत्तिर्भवति । अर्थो वाऽस्यैकेन भवति, प्रकृतं वा तत्र भवति --- इदमेकमेव कर्तव्यमिति । आतश्चार्थाद्वा प्रकरणाद्वा व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः --- रदाभ्यां निष्ठातो नः पूर्वस्य च दः (8-2-42) उभौ साभ्यासस्य (8-2-21) इति ।।
कथं यत्तदुक्तं --- व्याकरणेऽपि हि अन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति --- ज्वरत्वरस्रिव्यविमवामुपधायाश्च भ्रस्जो रोपधयोरमन्यतरस्याम् इति ?
इह तावत् --- ज्वरत्वरस्रिव्यविमवामुपधायश्च इति, स्तां द्वावूठौ नास्ति दोषः, सवर्णदीर्घत्वेन सिद्धम् ।
इह --- भ्रस्जो रोपधयोरमन्यतरस्याम् इति, वक्ष्यति ह्येतत् --- भ्रस्जो रोपधयोर्लोप आगमो रम्विधीयत इति ।।
(समाधानभाष्यम्)
यदुच्यते --- अर्थात् प्रकरणाद्वेति,

तन्न ।
किं कारणम् ?
एकवाक्यभावादेव लोके द्वयोरेकस्याभिनिर्वृत्तिर्भवति ।
आतश्चैकवाक्यभावात् । अङ्ग हि भवान् ग्राम्यं पांसुरपादमप्रकरणज्ञमागतं ब्रवीतु --- अनयोः पूलयोः कटं कुरु, अनयोर्मृत्पिण्डयोर्घटं कुरु --- इति । एकमेवासौ करिष्यति ।।
कथं यदुक्तं --- व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः --- रदाभ्यां निष्ठातो नः पूर्वस्य च दः उभौ साभ्यासस्य इति ?
इह तावत् --- रदाभ्यां निष्ठातो नः, पूर्वस्य च दः --- इति द्वे वाक्ये ।
कथम् ?
योगविभागः करिष्यते --- रदाभ्यां निष्ठातो नः ततः पूर्वस्य च दः इति ।
इहापि --- उभौ साभ्यासस्य इति, उभौग्रहणसार्मथ्याद् द्वावादेशौ भविष्यतः ।।
(6120 लौकिकदृष्टान्तेनाक्षेपवार्तिकम् ।। 4 ।।)
- तत्रावयवे शास्त्रार्थसम्प्रत्ययो यथा लोके -
तत्रावयवे शास्त्रार्थसम्प्रत्ययः प्राप्नोति, यथा लोके ।
तद्यथा लोके ---
वसन्ते ब्राह्मणोऽग्नीनादधीत इति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।
गर्भाष्टमे ब्राह्मण उपनेयः इति सकृदुपनीय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।
तथा त्रिर्हृदयङ्गमाभिरद्भिरशब्दाभिरुपस्पृशेत् इति सकृदुपस्पृश्य कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।
एवमिहापि खट्वेन्द्रे कृतः शास्त्रार्थ इति कृत्वा मालेन्द्रादिषु न स्यात् ।।
(6121 लौकिकदृष्टान्तेन समाधानवार्तिकम् ।। 5 ।।)
- सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानाद् यथा लौकिकवैदिकेषु -
सिद्धमेतत् ।
कथम् ?
धर्मोपदेशनमिदं शास्त्रम्, धर्मोपदेशने चास्मिञ्ञ्छास्त्रेऽनवयवेन शास्त्रार्थः संप्रतीयते, यथा लौकिकवैदिकेषु च कृतान्तेषु ।।
लोके तावत् --- ब्राह्मणो न हन्तव्यः, सुरा न पेया --- इति,
ब्राह्मणमात्रं न हन्यते, सुरामात्रं च न पीयते ।
यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, एकं च ब्राह्मणमहत्वैकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात् ।
तथा --- पूर्ववया ब्राह्मणः प्रत्युत्थेयः इति,
पूर्ववयोमात्रं प्रत्युत्थीयते ।
यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, एकं पूर्ववयसं प्रत्युत्थायान्यत्र कामचारः स्यात् ।।
तथा --- वेदे खल्वपि वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतूभिर्यजेतेति,
अग्न्याधाननिमित्तं वसन्ते वसन्ते इज्यते ।
यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, सकृदिष्ट्वा पुनरिज्यायां न प्रवर्तेत ।।
(द्विविधदृष्टान्तव्यवस्थापकभाष्यम्)
उभयथेह लोके दृश्यते --- अवयवेनापि शास्त्रार्थसंप्रत्ययः, अनवयवेनापि ।
कथं पुनरिदमुभयं लभ्यते ?
लभ्यमित्याह ।
कथम् ?
इह तावत् --- वसन्ते ब्राह्मणोऽग्नीनादधीतेति,
अग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थम् । सकृदाधाय कृतः शास्त्रार्थःउप्रतिपन्नं यज्ञमुखमिति कृत्वा पुनः प्रवृर्तिर्न भवति । अतोऽत्रावयवेन शास्त्रार्थः संप्रतीयते ।
तथा --- गर्भाष्टमे ब्राह्मण उपनेय इति,
उपनयनं संस्कारार्थम् । सकृच्चासावुपनीतः संस्कृतो भवति । अतोऽत्राप्यवयवेन शास्त्रार्थः संप्रतीयते ।
तथा --- त्रिर्हृदयङ्गमाभिरद्भिरशब्दाभिरुपस्पृशेदिति,
उपस्पर्शनं शौचार्थम् । सकृच्चासावुपस्पृश्य शुचिर्भवति । अतोऽत्राप्यवयवेन शास्त्रार्थः संप्रतीयते ।।
इहेदानीम् --- ब्राह्मणो न हन्तव्यः --- सुरा न पेयेति,
ब्राह्मणवधे सुरापाने च महान् दोष उक्तः । स ब्राह्मणवधमात्रे सुरापानमात्रे च प्रसक्तः । अतोऽत्रानवयवेन शास्त्रार्थः संप्रतीयते ।
तथा --- पूर्ववया ब्राह्मणः प्रत्युत्थेय इति,

पूर्ववयसोऽप्रत्युत्थाने दोष उक्तः, प्रत्युत्थाने च गुणः ।
कथम् ?
ःढ्द्य;ध्र्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ।। इति ।
स च पूर्ववयोमात्रे प्रसक्तः । अतोऽत्राप्यनवयवेन शास्त्रार्थः संप्रतीयते ।
तथा --- वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रितुभिर्यजेतेति,
इज्यायाः किंचित्प्रयोजनमुक्तम् ।
किम् ?
स्वर्गे लोकेऽप्सरस एनं जाया भूत्वोपशेरते इति । तच्च द्वितीयस्याश्च तृतीयस्याश्चेज्यायाः फलं भवितुमर्हति । अतोऽत्राप्यनवयेन शास्त्रार्थः संप्रतीयते ।
तथा --- शब्दस्यापि ज्ञाने प्रयोजनमुक्तम् ।
किम् ?
एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः
सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति --- इति ।
यद्येकः शब्दः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति, किमर्थं द्वितीयस्तृतीयश्च प्रयुज्यते ?
न वै कामानां तृप्तिरस्ति ।।
(वार्तिकावतरणभाष्यम्)
अथ पूर्वपरग्रहणं किमर्थम् ?
(6122 पदकृत्यवार्तिकम् ।। 6 ।।)
- पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् -
पूर्वपरग्रहणं क्रियते परस्यादेशप्रतिषेधार्थम् । परस्यादेशो मा भूत् --- आद् गुणः (6-1-87) इति ।।
कथं च प्राप्नोति ?
(6123 पदकृत्यसमर्थकवार्तिकम् ।। 7 ।।)
- पञ्चमीनिर्दिष्टाद्धि परस्य -
पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते । तद्यथा --- द्व्यन्तरुपसर्गेभ्योऽप इर्त् (6-3-97) इति ।।
(6124 पदकृत्यसमर्थकवार्तिकम् ।। 8 ।।)
- षष्ठीनिर्दिष्टार्थं तु -
षष्ठीनिर्देशार्थं च पूर्वपरग्रहणं क्रियते । षष्ठीनिर्देशो यथा प्रकल्पेत ।।
(6125 पदकृत्यसमर्थकवार्तिकम् ।। 9 ।।)
- अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः -
अक्रियमाणे हि पूर्वपरग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात् ।
कस्य ?
स्थानेयोगत्वस्य ।।
नैष दोषः । आदित्येषा पञ्चमी अचीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1-1-67) इति ।
तथा --- अचीत्येषा सप्तमी आदिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य (1-1-68) इति ।।
एवं तर्हि सिद्धे सति यत्पूर्वपरग्रहणं करोति तज्ज्ञापयत्याचार्यः --- नोभे युगपत्प्रकल्पिके भवत इति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
यदुक्तं --- सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग इति, स न दोषो भवति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ।।
-6-1-85- अन्तादिवच्च (2522)
(अतिदेशाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
किमर्थमिदमुच्यते ?
(6126 प्रयोजनवार्तिकम् ।। 1 ।।)
- अन्तादिवद्वचनमामिश्रस्यादेशवचनात् -
अन्तादिवद्वचनं क्रियते, आमिश्रस्यादेशवचनात् । आमिश्रस्यायमादेश उच्यते स नैव पूर्वग्रहणेन गृह्यते, नापि परग्रहणेन । तद्यथा --- क्षीरोदके संपृक्ते आमिश्रत्वान्नैव क्षीरग्रहणेन गृह्येते नाप्युदकग्रहणेन, इष्यते च ग्रहणं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यन्तादिवद्वचनम् ।
एवमर्थमिदमुच्यते ।।
(वार्तिकावतरणभाष्यम्)

अस्ति प्रयोजनमेतत् ।
किं तर्हीति ?
(6127 पूर्वपक्षिवार्तिकम् ।। 2 ।।)
- तत्र यस्यान्तादिवत्तन्निर्देशः -
तत्र यस्यान्तादिवद्भाव इष्यते तन्निर्देशः कर्तव्यः । अस्यान्तवद्भवति, अस्यादिवद्भवतीति वक्तव्यम् ।।
(6128 समाधानवार्तिकम् ।। 3 ।।)
- सिद्धं तु पूर्वपराधिकारात् -
सिद्धमेतत् ।
कथम् ?
पूर्वपराधिकारात् । पूर्वपरयोरिति वर्तते । पूर्वस्य कार्यं प्रत्यन्तवद्भवति । परस्य कार्यं प्रत्यादिवद्भवति ।।
(सूत्रस्याप्रवृत्तिस्थलबोधकभाष्यम्)
अथ यत्रोभयमाश्रीयते, किं तत्र पूर्वस्यान्तवद्भवति --- आहोस्वित्परस्यादिवद्भवति ?
उभयत आश्रये नान्तादिवत् ।
किं वक्तव्यमेतत् ?
न हि ।
कथमनुच्यमानं गंस्यते ?
लौकिकोऽयं दृष्टान्तः । तद्यथा --- लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोति । यदा तु तमुभौ युगपत् प्रेषयतः, नानादिक्षु च कार्ये भवतः, तत्र यद्यसावविरोधार्थी भवति उभयोर्न करोति
।
किं पुनः कारणमुभयोर्न करोति ?
यौगपद्यासंभवात् । नास्ति यौगपद्येन संभवः ।।
(वार्तिकावतरणभाष्यम्)
अथान्तवत्त्वे कानि प्रयोजनानि ?
(6129 अन्तवत्त्वप्रयोजनवार्तिकम् ।। 4 ।।)
- अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठज्विधाने -
अन्तवत्त्वे बह्वच्पूर्वपदाट्ठज्विधाने प्रयोजनम् । द्वादशान्यिकः । पूर्वपदोत्तरपदयोरेकादेशः पूर्वस्यान्तवद्भवति, यथा शक्यते कर्तुं --- बह्वच्पूर्वपदाट्ठज्भवतीति ।
क्व तर्हि स्यात् ?
यत्र कृतेऽप्येकादेशे बह्वच्पूर्वपदं भवति --- त्रयोदशान्यिकः ।।
(6130 अन्तवत्त्वप्रयोजनवार्तिकम् ।। 5 ।।)
- प्रत्ययैकादेशः पूर्वविधौ -
प्रत्ययैकादेशः पूर्वविधौ प्रयोजनम् । मधु पिबन्ति । शिदशितोरेकादेशः शितोऽन्तवद्भवति, यथा शक्येत कर्तुं --- शितीति पिबादेशः ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न भवति --- पिबति ।।
(6131 अन्तवत्त्वप्रयोजनवार्तिकम् ।। 6 ।।)
- वैभक्तस्य णत्वे -
वैभक्तस्य णत्वे प्रयोजनम् । क्षीरपेण, सुरापेण । उत्तरपदविभक्त्योरेकादेश उत्तरपदस्यान्तवद्भवति, यथा शक्येत कर्तुम् --- एकाजुत्तरपदे णो भवतीति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न भवति --- क्षीरपाणाम्, सुरापाणाम् ।।
(6132 अन्तवत्त्वप्रयोजनवार्तिकम् ।। 7 ।।)
- अदस इत्वोत्वे -
अदस इत्वोत्वे प्रयोजनम् । अमी अत्र, अमी आसते । अमू अत्र, अमू आसाते । अदस्विभक्त्योरेकादेशोऽदसोऽन्तवद्भवति, यथा शक्येत कर्तुं --- अदसोसेर्दादुदोमः एत ईद्बहुवचने (8-2-80;81) इति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न भवति --- अमीभिः, अमूभ्याम् ।।
(वार्तिकावतरणे प्रयोजनभाष्यम्)
स्वरितत्वे प्रयोजनम् --- कार्या, हार्या । तिदतितोरेकादेशस्तितोऽन्तवद्भवति, यथा शक्येत कर्तुं --- तित्स्वरितम् (6-1-185) इति ।
क्व तर्हि स्यात् ?

यत्रैकादेशो न भवति --- कार्यः, हार्यः ।।
(6133 भाष्योक्तप्रयोजनखण्डनवार्तिकम् ।। 8 ।।)
- स्वरितत्वं विप्रतिषेधात् -
स्वरितत्वं क्रियताम् --- एकादेश इति, किमत्र कर्तव्यम् ?
परत्वात्स्वरितत्वं भविष्यति विप्रतिषेधेन ।।
(विप्रतिषेधाक्षेपनिरासभाष्यम्)
नैष युक्तो विप्रतिषेधः, नित्य एकादेशः, कृतेऽपि स्वरितत्वे प्राप्नोत्यकृतेऽपि ।
अनित्य एकादेशः । अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोति, अन्यथास्वरस्याकृते स्वरितत्वे प्राप्नोति । स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति ।।
अन्तरङ्गस्तर्ह्येकादेशः ।
काऽन्तरङ्गता ?
वर्णावाश्रित्यैकादेशः, पदस्य स्वरितत्वम् ।
स्वरितत्वमप्यन्तरङ्गम् ।
कथम् ?
उक्तमेतत् --- पदग्रहणं परिमाणार्थमिति ।
उभयोरन्तरङ्गयोः परत्वात्स्वरितत्वम्, स्वरितत्वे कृते आर्न्तय्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति ।।
(6134 खण्डनोपष्टम्भकवार्तिकम् ।। 9 ।।)
- लिङ्गविशिष्टग्रहणाद्वा -
अथवा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवमत्र स्वरितत्वं भविष्यति ।।
(वार्तिकावतरणे प्रयोजनभाष्यम्)
पूर्वपदान्तोदात्तत्वं च प्रयोजनम् --- गुडोदकम्, मथितोदकम् । पूर्वपदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति, यथा शक्येत कर्तुम् --- उदकेऽकेवले पूर्वपदस्यान्त उदात्तो भवतीति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो नास्ति --- उदश्विदुदकम् ।।
(6135 अवतरणोक्तप्रयोजनखण्डनवार्तिकम् ।। 10 ।।)
- पूर्वपदान्तोदात्तत्वं च -
पूर्वपदान्तोदात्तत्वं च विप्रतिषेधात् । पूर्वपदान्तोदात्तत्वं क्रियतामेकादेश इति, किमत्र कर्तव्यम् ?
परत्वात्पूर्वपदान्तोदात्तत्वम् । पूर्वपदान्तोदात्तस्यावकाशः --- उदश्विदुदकम् । एकादेशस्यावकाशः --- दण्डाग्रम्, क्षुपाग्रम् ।
इहोभयं प्राप्नोति --- मथितोदकम्, गुडोदकम् ।
पूर्वपदान्तोदात्तत्वं भवति विप्रतिषेधेन ।।
स चावश्यं विप्रतिषेध आश्रयितव्यः ।
(6136 विप्रतिषेधप्रयोजनवार्तिकम् ।। 11 ।।)
- एकादेशे हि स्वरिताप्रसिद्धिः -
एकादेशे हि स्वरितस्याप्रसिद्धिः स्यात् । यो हि मन्यते --- अस्त्वत्रैकादेशः, एकादेशे कृते पूर्वपदान्तोदात्तत्वं भविष्यति --- इति, स्वरितत्वं तस्य न सिध्यति --- स्वरितो वाऽनुदात्ते पदादौ (8-2-6) इति । गुडोदकम्, मथितोदकम् ।।
(वार्तिकावतरणेऽन्तवत्त्वप्रयोजनभाष्यम्)
कृदन्तप्रकृतिस्वरत्वं च प्रयोजनम् । प्राटिता प्राशिता । कृद्गत्योरेकादेशो गतेरन्तवद्भवति । यथा शक्यते कर्तुम् --- गतिकारकोपपदात्कृदन्तमुत्तरपदं प्रकृतिस्वरं भवति --- इति ।
क्व तर्हि स्यात् ?
यत्र नैकादेशः --- प्रकारकः, प्रकरणम् ।।
(6137 भाष्योक्तप्रयोजनान्यथासिद्धिवार्तिकम् ।। 12 ।।)
- कृदन्तप्रकृतिस्वरत्वं च -
कृदन्तप्रकृतिस्वरत्वं विप्रतिषेधात् ।
कृदन्तप्रकृतिस्वरत्वं क्रियतामेकादेश इति, किमत्र कर्तव्यम् ?
कृदन्तप्रकृतिस्वरस्यावकाशः --- प्रकारकः, प्रकरणम् ।
एकादेशस्यावकाशः --- दण्डाग्रम्, क्षुपाग्रम् ।
इहोभयं प्राप्नोति --- प्राटिता, प्राशिता ।
कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन ।।

स चावश्यं विप्रतिषेध आश्रयितव्यः ।
(6138 अन्तवत्त्वेनासिद्धिबोधकवार्तिकम् ।। 13 ।।)
- एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात् -
यो हि मन्यते --- अस्त्वत्रैकादेशः, एकादेशे कृते कृदन्तप्रकृतिस्वरत्वं भविष्यतीति, कृदन्तप्रकृतिस्वरत्वं
तस्य न सिध्यति ।
किं कारणम् ?
उत्तरपदस्यापरत्वात् ।
न हीदानीमेकादेशे कृत उत्तरपदं परं भवति ।
ननु चान्तादिवद्भावेन परम् ।
उभयत आश्रये नान्तादिवत् ।।
(6139 विप्रतिषेधबोधकवार्तिकम् ।। 14 ।।)
- उत्तरपदवृद्धिश्चैकादेशात् -
उत्तरपदवृद्धःथ्य;श्चैकादेशाद्भवति विप्रतिषेधेन ।
उत्तरपदवृद्धेरवकाशः --- पूर्वत्रैगर्तकः, अपरत्रैगर्तकः ।
एकादेशस्यावकाशः --- दण्डाग्रम्, क्षुपाग्रम् ।
इहोभयं प्राप्नोति --- पूर्वैषुकामशमः, अपरैषुकामशमः ।
उत्तरपदवृद्धिर्भवति विप्रतिषेधेन ।।
(6140 एकादेशस्यान्तरङ्गत्वबोधकवार्तिकम् ।। 15 ।।)
- एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात् -
एकादेशस्तु प्राप्नोति ।
किं कारणम् ?
अन्तरङ्गबलीयस्त्वात् । अन्तरङ्गं बलीयो भवति ।
तत्र को दोषः ?
(6141 एकादेशस्यान्तरङ्गत्वे दोषवार्तिकम् ।। 16 ।।)
- तत्र वृद्धिविधानम् -
तत्र वृद्धिर्विधेया ।।
(एकादेशसाधकभाष्यम्)
नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति --- पूर्वोत्तरपदयोस्तावत्कार्यं भवति, नैकादेशः --- इति, यदयम् नेन्द्रस्य परस्य (7-3-22) इति प्रतिषेधं शास्ति ।
कथं कृत्वा ज्ञापकम् ?
इन्द्रे द्वावचौ । तत्रैकः यस्य --- इति लोपेन ह्रियते, अपर एकादेशेन । अनच्क इन्द्रः संपन्नः । तत्र को वृद्धेः प्रसङ्गः ? पश्यति त्वाचार्यः --- पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति, ततो नेन्द्रस्य परस्य इति प्रतिषेधं शास्ति ।।
(वार्तिकावतरणभाष्यम्)
अथादिवत्त्वे कानि प्रयोजनानि ?
(6142 आदिवत्त्वे प्रयोजनवार्तिकम् ।। 17 ।।)
- आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम् -
आदिवत्त्वे प्रगृह्यसंज्ञायां प्रयोजनम् । अग्नी इति, वायू इति । द्विवचनाद्द्विवचनयोरेकादेशो द्विवचनस्यादिवद्भवति । यथा शक्येत कर्तुम् --- ईदूदेद्द्विवचनं प्रगृह्यम् (1-1-11) इति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न भवति --- त्रपुणी इति, जतुनी इति ।।
(6143 आदिवत्त्वे प्रयोजनवार्तिकम् ।। 18 ।।)
- सुप्तिङाब्विधिषु -
सुप्तिङाब्विधिषु प्रयोजनम् ।
सुप् --- वृक्षे तिष्ठति, प्लक्षे तिष्ठति । सुब्सुपोरेकादेशः सुप आदिवद्भवति । यथा शक्यते कर्तुम्-सुबन्तं
पदम् --- इति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न भवति --- वृक्षस्तिष्ठति, प्लक्षस्तिष्ठति । सुप् ।।
तिङ् --- पचे, यजे --- इति । तिङतिङोरेकादेशस्तिङ आदिवद्भवति । यथा शक्यते कर्तुम् --- तिङन्तं पदम् --- इति ।
क्व तर्हि स्यात् ?

यत्रैकादेशो न भवति --- पचति, यजति । तिङ् ।।
आप् --- खट्वा, माला । आबनापोरेकादेश आप आदिवद्भवति । यथा शक्यते कर्तुम् --- आबन्तात्सोर्लोपो भवति --- इति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न --- कुञ्चा, उष्णिहा, देवविशा ।।
(6144 आदिवत्त्वे प्रयोजनवार्तिकम् ।। 19 ।।)
आङ्ग्रहणे पदविधौ प्रयोजनम् । अद्याहते, कदाहते । आङ्नाङोरेकादेश आङ आदिवद्भवति । यथा शक्येत कर्तुम् --- आङो यमहनः (1-3-28) इत्यात्मनेपदं भवति --- इति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न --- आहते ।।
(6145 आदिवत्वे प्रयोजनवार्तिकम् ।। 20 ।।)
- आटश्च वृद्धिविधौ -
आटश्च वृद्धिविधौ प्रयोजनम् । अयैहिष्ट, कदैहिष्ट । आटोऽद्यशब्दस्य चैकादेश आट आदिवद्भवति । यथा शक्येत कर्तुम् --- आटश्च अचि वृद्धिर्भवति --- इति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न --- ऐहिष्ट, ऐक्षिष्ट ।।
(6146 आदिवत्त्वे प्रयोजनवार्तिकम् ।। 21 ।।)
- कृदन्तप्रातिपदिकत्वे च -
कृदन्तप्रातिपदिकत्वे च प्रयोजनम् । धारयः, पारयः । कृदकृतोरेकादेशः कृत आदिवद्भवति । यथा शक्येत कर्तुम् --- कृदन्तं प्रातिपदिकमिति ।
क्व तर्हि स्यात् ?
यत्रैकादेशो न --- कारकः, हारकः ।।
(6147 अन्तादिवद्भावनिषेधवार्तिकम् ।। 22 ।।)
- नाभ्यासादीनां ह्रस्वत्वे -
अभ्यासादीनां ह्रस्वत्वे नान्तादिवद्भवतीति वक्तव्यम् ।
के पुनरभ्यासादयः ?
अभ्यासोहाम्बार्थनदीनपुंसकोपर्जनह्रस्वत्वानि ।
अभ्यासह्रस्वत्वम् --- उपेयाज, उपोवाप ।
ःढ्य;हेर्ह्रस्वत्वम् --- उपोह्यते, प्रोह्यते, परोह्यते ।
अम्बार्थ --- नदी --- नपुंसक --- उपसर्जनह्रस्वत्वानि --- अम्बात्र, अक्कात्र । कुमारीदम्, किशोरीदम् । आराशस्त्रीदम्, धानाशष्कुलीदम् । निष्कौशाम्बीदम्, निर्वाराणसीदम् । अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनग्रहणेन ग्रहणाद्ह्रस्वत्वं प्राप्नोति ।।
(6148 निषेधानर्थक्यबोधकवार्तिकम् ।। 23 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा एतद्वक्तव्यम् ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । अन्तरङ्गं ह्रस्वत्वम्, बहिरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे ।।
(6149 अन्तादिवद्भावनिषेधवार्तिकम् ।। 24 ।।)
- वर्णाश्रयविधौ च -
वर्णाश्रयविधौ च नान्तादिवद्भवतीति वक्तव्यम् ।
किं प्रयोजनम् ?
(6150 अन्तादिवद्भावनिषेधप्रयोजनवार्तिकम् ।। 25 ।।)
- प्रयोजनं खट्वाभिर्जुहावास्या अश्व इति -
इह --- खट्वाभिः, मालाभिः --- अतो भिस ऐस्भवतीत्यैस्भावः प्राप्नोति । नैष दोषः । तपरकरणसामर्थ्यान्न भविष्यति ।
अस्त्यन्यत् तपरकरणे प्रयोजनम् ।
किम् ?
कीलालपाभिः, शुभंयाभिः ।।
जुहाव --- आत औ णलः (7-1-34) इत्यौत्वं प्राप्नोति ।।
अस्या अश्व इति --- एङः पदान्तादति (6-1-109) इति पूर्वत्वं प्राप्नोति ।।
(6151 निषेधप्रत्याख्यानवार्तिकम् ।। 26 ।।)
- न वाऽताद्रूप्यातिदेशात् -
न वा वक्तव्यम् ।

किं कारणम् ?
अतादूप्यातिदेशात् । न हि तादूप्यमतिदिश्यते । रूपाश्रया वा एते विधयः, अतादूप्यान्न भविष्यन्ति ।।
-6-1-86- षत्वतुकोरसिद्धः (2523)
(वार्तिकावतरणभाष्यम्)
किमर्थमिदमुच्यते ?
(6152 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च -
षत्वतुकोरसिद्धत्वमुच्यते, आदेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ।
आदेशलक्षणप्रतिषेधार्थं तावत् --- कोऽसिञ्चत्, सोऽसिञ्चत् । एकादेशे कृते इण इति षत्वं प्राप्नोति, असिद्धत्वान्न भवति ।
उत्सर्गलक्षणभावार्थं च --- अधीत्य, प्रेत्य । एकादेशे कृते ह्रस्वस्य --- इति तुग्न प्राप्नोति,
असिद्धत्वाद्भवति ।।
अस्ति प्रयोजनमेतत् ।
किं तर्हीति ?
(6153 सूत्राक्षेपवार्तिकम् ।। 2 ।।)
- तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् -
तत्रोत्सर्गलक्षणस्य कार्यस्याप्रसिद्धिः । अधीत्य, प्रेत्य ।
किं कारणम् ?
उत्सर्गाभावात् । ह्रस्वस्येति । उच्यते, न चात्र ह्रस्वं पश्यामः ।।
ननु चात्राप्यसिद्धवचनात्सिद्धम् ।।
(6154 आक्षेपसमर्थकवार्तिकम् ।। 3 ।।)
- असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः -
असिद्धवचनात्सिद्धमिति चेत्, तन्न ।
किं कारणम् ?
नान्यस्यासिद्धवचनादन्यस्य भावः । न ह्यन्यस्यासिद्धवचनादन्यस्य प्रादुर्भावो भवति । न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति ।।
(6155 एकदेशिन उपसंख्यानवार्तिकम् ।। 4 ।।)
- तस्मात्स्थानिवद्वचनमसिद्धत्वं च -
तस्मात्स्थानिवद्भावो वक्तव्यः, असिद्धत्वं च ।
अधीत्ये, प्रेत्येति स्थानिवद्भावः ।
कोऽसिञ्चत्, सोऽसिञ्चदित्यत्रासिद्धत्वम् ।।
(6156 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 5 ।।)
- स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात् -
स्थानिवद्वचनमनर्थकम् ।
किं कारणम् ?
शास्त्रासिद्धत्वात् । नानेन कार्यस्यासिद्धत्वं क्रियते ।
किं तर्हि ?
शास्त्रासिद्धत्वमनेन क्रियते । एकादेशशास्त्रं तुक्शास्त्रेऽसिद्धं भवतीति ।।
(वार्तिकावतरणे --- उपसंख्यानभाष्यम्)
संप्रसारणङीट्सु सिद्धः । संप्रसारणङीट्सु सिद्ध एकादेश इति वक्तव्यम् ।
शकहूषु, परिवीषु । संप्रसारण ।
ङि --- वृक्षे छत्रं, वृक्षे च्छत्रं, प्लक्षे छत्रं, प्लक्षे च्छत्रम् । ङि ।
इट् --- अपचे छत्रम्, अपचे च्छत्रम्, अयजे छत्रम्, अयजे च्छत्रम् ।।
(6157 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 6 ।।)
- संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्यासिद्धवचनात् -
संप्रसारणङीट्सु सिद्ध एकादेशः । कुतः ?
पदान्तपदाद्योरेकादेशस्यासिद्धवचनात् । पदान्तपदाद्योरेकादेशोऽसिद्धो भवतीत्युच्यते, न चैष पदान्तपदाद्योरेकादेशः ।।
यदि पदान्तपदाद्योरेकादेशोऽसिद्धः --- सुसस्या ओषधीस्कृधि, सुपिप्पला ओषधीस्कृधि --- अत्र षत्वं प्राप्नोति ।
तुग्विधिं प्रति पदान्तपदाद्योरेकादेशोऽसिद्धः, षत्वं प्रत्येकादेशमात्रमसिद्धं भवति ।।
यदि षत्वं प्रत्येकमात्रदेशामसिद्धम् --- शकहूषु, परिवीषु --- अत्र षत्वं न प्राप्नोति ।।

अस्तु तर्ह्यविशेषेण ।
कथं --- सुसस्या ओषधीस्कृधि, सुपिप्पला ओषधीस्कृधि ?
नैष दोषः । भ्रातुष्पुत्रग्रहणं ज्ञापकम् --- एकादेशनिमित्तात् षत्वप्रतिषेधस्य । यदयं कस्कादिषु भ्रातुष्पुत्रग्रहणं करोति तज्ज्ञापयत्याचार्यः --- नैकादेशनिमित्तात्षत्वं भवतीति ।
यद्येतज्ज्ञाप्यते, शकहूषु, परिवीषु --- अत्र षत्वं न प्राप्नोति ।
तुल्यजातीयस्य ज्ञापकम् ।
किं च तुल्यजातीयम् ?
यः कुप्वोः ।।
यद्येवं, वेञ्त्रोऽप्रत्यये परत उरिति प्राप्नोति, उदिति चेष्यते ।
यथा लक्षणमप्रयुक्ते ।
अथवा --- नैवं विज्ञायते --- पूर्वस्य च पदादेः परस्य च पदान्तस्येति ।
कथं तर्हि ?
परस्य च पदादेः पूर्वस्य पदान्तस्येति ।।
-6-1-87- आद्गुणः (2524)
(गुणाधिकरणम्)
(पदकृत्यभाष्यम्)
गुणग्रहणं किमर्थम्, न आदेको भवतीत्युच्येत ?
(गुणपदाभावे आक्षेपश्लोकभाष्यम्)
आदेकश्चेद्गुणः केन
आदेकश्चेत्, गुणः केनेदानीं भविष्यति --- खट्वेन्द्रः, मालेन्द्रः । खट्वोदकम्, मालोदकम् ।
(समाधानश्लोकभाष्यम्)
स्थानेऽन्तरतमो हि सः ।
स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति ।।
ऐदौतावपि तर्हि प्राप्नुतः ।
(समाधानश्लोकभाष्यम्)
ऐदौतौ नैचि तावुक्तौ
ऐदौतौ न भविष्यतः ।
किं कारणम् ?
एचि ह्यैदौतावुच्येते ।।
इह तर्हि --- खर्ट्वश्यः, मार्लश्यः --- ऋकारस्तर्हि प्राप्नोति ।
(समाधानश्लोकभाष्यम्)
ऋकारो नोभयान्तरः ।। 1 ।।
उभयोर्योऽन्तरतमस्तेन भवितव्यम्, न च ऋकार उभयोरन्तरतमः ।।
आकारस्तर्हि प्राप्नोति ।
(समाधानश्लोकभाष्यम्)
आकारो नर्तिधातौ सः
आकारो न भविष्यति ।
किं कारणम् ?
ऋतिधातावाकार उच्यते तन्नियमार्थं भविष्यति --- ऋकारादौ धातावेव, नान्यत्रेति ।।
प्लुतस्तर्हि प्राप्नोति ।
(समाधानश्लोकभाष्यम्)
प्लुतश्च विषये स्मृतः ।
विषये प्लुत इत्युच्यते । यदा च स विषयः, भवितव्यमेव तदा प्लुतेन ।।
(गुणपदप्रयोजनश्लोकभाष्यम्)
आन्तर्यात् त्रिचतुर्मात्राः
इदं तर्हि प्रयोजनम् --- आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा --- इन्द्रः --- खट्वेन्द्रः । खट्वा --- उदकं --- खट्वोदकम् । खट्वा --- ईर्षा --- खट्वेषा । खट्वा --- ःढ़्य;ढा --- खट्वोढा । खट्वा --- एलका --- खट्वैलका । खट्वा --- ओदनः --- खट्वौदनः । खट्वा --- ऐतिकायनः --- खट्वैतिकायनः । खट्वा --- औपगवः --- खट्वौपगवः ।।
(आक्षेपभाष्यम्)

अथ क्रियमाणेऽपि गुणग्रहणे कस्मादेवात्र त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ?
(समाधानश्लोकभाष्यम्)
तपरत्वान्न ते स्मृताः ।। 2 ।।
तपरे च गुणवृद्धी ।।
(तपरपदार्थबोधकभाष्यम्)
ननु च तः परो यस्मात्सोऽयं तपरः । नेत्याह ।
तादपि परस्तपरः । यदि तादपि परस्तपरः, ॠदोरप् (3-3-57) इहैव स्यात् --- यवः, स्तवः ।
लवः, पवः --- इत्यत्र न स्यात् ।
नैष तकारः ।
कस्तर्हि ?
दकारः ।
किं दकारे प्रयोजनम् ?
अथ किं तकारे ?
असंदेहार्थस्तकारः ।
यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि ।।
(6158 एकदेशिन उपसंख्यानवार्तिकम् ।। 7 ।।)
- गुणे ङिशीटामुपसंख्यानं दीर्घत्वबाधनार्थम् -
गुणे ङिशीटामुपसंख्यानं कर्तव्यम् । ङि --- वृक्ष इन्द्रः, प्लक्ष इन्द्रः ।
शी --- य इन्द्रम्, त इन्द्रम् ।
इट् --- अपच इन्द्रम्, अयज इन्द्रम् ।
किं प्रयोजनम् ?
दीर्घत्वबाधनार्थम् । सवर्णदीर्घत्वं मा भूदिति ।।
(6159 प्रत्याख्यानवार्तिकम् ।। 8 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा कर्तव्यम् ।
किं कारणं ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणं सवर्णदीर्घत्वम्, अन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे ।।
आदेकश्चेद्गुणः केन स्थानेऽन्तरतमो हि सः ।
ऐदौतौ नैचि तावुक्तौ ॠकारो नोभयान्तरः ।। 1 ।।
आकारो नर्तिधातौ सः प्लुतश्च विषये स्मृतः ।
आन्तर्यात् त्रिचतुर्मात्रास् तपरत्वान्न ते स्मृताः ।। 2 ।।
-6-1-89- एत्येधत्यूठ्सु (2526)
(वृद्ध्यधिकरणम्)
(एत्येधत्योर्विषये पक्षद्वयोपस्थापकं भाष्यम्)
किमिदमेत्येधत्यो रूपग्रहणम्, आहोस्विद्धातुग्रहणम् ?
किं चातः ?
यदि रूपग्रहणम्, सिद्धम् --- उपैति, प्रैति । उपैषि, उपैमि, प्रैमीति न सिद्ध्यति ।
अथ धातुग्रहणम्, सिद्धमेतद्भवति ।।
किं तर्हीति ?
(6160 धातुग्रहणपक्षे दोषवार्तिकम् ।। 9 ।।)
- इणीकारादौ प्रतिषेधः -
इणीकारादौ वृद्धेः प्रतिषेधो वक्तव्यः । उपेतः, प्रेतः --- इति ।।
(6161 दोषनिरासवार्तिकम् ।। 10 ।।)
योगविभागात्सिद्धम्
योगविभागः करिष्यते । वृद्धिरेचि (88) । ततः --- एत्येधत्योः । एत्येधत्योश्चैचि वृद्धिर्भवति । ततः --- ःढ़द्य;ठि । ःढ़द्य;ठि च वृद्धिर्भवतीति ।।
(योगविभागे आक्षेपसमाधानविषयकं भाष्यम्)
एवमपि आ इतः --- एतः; उपेतः, प्रेतः --- इत्यत्रापि प्राप्नोति ।
आङि पररूपमत्र बाधकं भविष्यति ।
न भविष्यति । नाप्राप्ते पररूप इयं वृद्धिरारभ्यते, सा यथैव एङि पररूपम् बाधते, एवमाङिपररूपं बाधेत ।

न बाधते ।
किं कारणम् ?
येन नाप्राप्ते तस्य बाधनं भवति न चाप्राप्त एङि पररूप इयं वृद्धिरारभ्यते, आङि पररूपे पुनः प्राप्ते चाप्राप्ते च ।
अथ वा --- पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इतीयं वृद्धिरेङि पररूपं बाधिष्यते, नाङि पररूपम् ।।
(6162 उपसंख्यानवार्तिकम् ।। 11 ।।)
- अक्षादूहिन्याम् -
अक्षादूहिन्यां वृद्धिर्वक्तव्या । अक्षौहिणी ।।
(6163 उपसंख्यानवार्तिकम् ।। 12 ।।)
- प्रादूहोढोढ्येषैष्येषु -
प्रात् --- ःढ्य;ह-ःढ्य;ढ-ःढ्य;ढि-एष-एष्य-इत्येतेषु वृद्धिर्वक्तव्या । प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः ।।
(6164 उपसंख्यानवार्तिकम् ।। 13 ।।)
- स्वादीरेरिणोः -
स्वात् --- ईर --- ईरिन् --- इत्येतयोर्वृद्धिर्वक्तव्या । स्वैरः, स्वैरी ।।
(ईरिन्ग्रहणप्रत्याख्यानभाष्यम्)
ईरिन्ग्रहणं शक्यमकर्तुम् ।
कथं स्वैरीति ?
इनिनैतन्मत्वर्थीयेन सिद्धम् --- स्वैरोऽस्यास्तीति स्वैरी ।।
(6165 उपसंख्यानवार्तिकम् ।। 14 ।।)
- ऋते च तृतीयासमासे -
ऋते च तृतीयासमासे वृद्धिर्वक्तव्या । सुखार्तः, दुःखार्तः ।
ऋत इति किम् ?
सुखेतः, दुःखेतः ।
तृतीयाग्रहणं किम् ?
परमर्तः ।
समास इति किम् ?
सुखेनर्तः ।।
(6166 उपसंख्यानवार्तिकम् ।। 15 ।।)
- प्रबत्सतरकम्बलवसनानां चर्णे -
प्रवत्सतरकम्बलवसनानां च ऋणे वृद्धिर्वक्तव्या । प्रार्णम्, वत्सतरार्णम्, कम्बलार्णम्, वसनार्णम् ।।
(6167 उपसंख्यावार्तिकम् ।। 16 ।।)
- ऋणदशाभ्यां च -
ऋणदशाभ्यां च वृद्धिर्वक्तव्या । ऋणार्णम्, दशार्णम् ।।
-6-1-90- आटश्च (2527)
(चकारप्रयोजनभाष्यम्)
किमर्थश्चकारः ?
वृद्धेरनुकर्षणार्थः ।
नैतदस्ति प्रयोजनम्, प्रकृता वृद्धिरनुवर्तिष्यते ।।
इदं तर्हि --- आटोऽचि वृद्धिरेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।
किं चान्यत् प्राप्नोति ?
पररूपम् ।
उस्योमाङ्क्ष्वाटः पररूपप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति ।।
-6-1-91- उपसर्गादृति धातौ( 2528)
(धातुग्रहणप्रयोजनभाष्यम्)
धाताविति किमर्थम् ?
इह मा भूत् । प्रर्षभं वनम् ।।
(6168 धातुग्रहणानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- उपसर्गाद्वृद्धिविधौ धातुग्रहणे उक्तम् -
किमुक्तम् ?
गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्ताः प्रादयस्तं प्रतीति वचनमिति ।।

क्रियमाणेऽपि धातुग्रहणे प्रर्छक इति प्राप्नोति ।
यत्क्रियायुक्ताः प्रादयस्तं प्रतीति वचनान्न भवति ।।
(धातुग्रहणप्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम् --- उपसर्गादृति धातौ वृद्धिरेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।
किं चान्यत् प्राप्नोति ?
ह्रस्वत्वम् ऋत्यकः (6-1-128) इति ।
ऋति ह्रस्वादुपसर्गाद्वृद्धिः पूर्वविप्रतिषेधेन इति चोदयिष्यति स न वक्तव्यो भवति ।।
(6169 विप्रतिषेधवार्तिकम् ।। 2 ।।)
- छे तुकः संबुद्धिगुणः -
छे तुग्भवतीत्यस्मात्संबुद्धिगुणो भवति विप्रतिषेधेन ।
छे तुग्भवतीत्यस्यावकाशः --- इच्छति, गच्छति ।
संबुद्धिगुणस्यावकाशः --- अग्ने, वायो ।
इहोभयं प्राप्नोति --- अग्नेच्छत्रम् --- अग्ने छत्रम्, वायोच्छत्रम्--वायो छत्रम् ।
संबुद्धिगुणो भवति विप्रतिषेधेन ।।
स तर्हि विप्रतिषेधो वक्तव्यः ।
(6170 विप्रतिषेधखण्डनवार्तिकम् ।। 3 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा वक्तव्यः ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणस्तुक् । अन्तरङ्गलक्षणः सम्बुद्धिगुणः । असिद्धं बहिरङ्गमन्तरङ्गे ।।
(आक्षेप --- समाधानपरभाष्यम्)
अन्तरेणापि विप्रतिषेधमन्तरेणापि चैतां परिभाषां सिद्धम् ।
कथम् ?
इदमिह संप्रधार्यम् --- संबुद्धिलोपः क्रियतां गुण इति, किमत्र कर्तव्यम् ?
परत्वाद् गुणः ।
नित्यः संबुद्धिलोपः । कृतेऽपि गुणे प्राप्नोत्यकृतेऽपि ।
गुणोऽपि नित्यः। कृतेऽपि संबुद्धिलोपे प्राप्नोत्यकृतेऽपि।
अनित्यो गुणः । न हि संबुद्धिलोपे कृते प्राप्नोति । तावत्येव छेनानन्तर्यम्, तत्र तुका भवितव्यम् ।
तस्मात्सुष्ठूच्यते --- छे तुकः संबुद्धिगुणे न वा, बहिरङ्गलक्षणत्वादिति ।।
(6171 विप्रतिषेधवार्तिकम् ।। 4 ।।)
- सम्प्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणादयश्च -
संप्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन ।।
संप्रसारणदीर्घत्वस्यावकाशः --- हूतः, जीनः, संवीतः, शूनः ।
तुकोऽवकाशः --- अग्निचित्, सोमसुत् ।
इहोभयं प्राप्नोति --- परिवीषु, शकहूषु ।।
णिलोपस्यावकाशः --- कारणा, हारणा ।
तुकः स एव ।
इहोभयं प्राप्नोति --- प्रकार्य गतः, प्रहार्य गतः ।।
अल्लोपस्यावकाशः --- प्रचिकीर्षिता, प्रजिहीर्षिता ।
तुकः स एव ।
इहोभयं प्राप्नोति --- प्रचिकीर्ष्य गतः, प्रजिहीर्ष्य गतः ।।
अभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन ।
के पुनरभ्यासगुणादयः ?
ह्रस्वत्वात्त्वेत्त्वगुणाः ।
ह्रस्वत्वस्यावकाशः --- ययतुः --- ययुः, तस्थतुः --- तस्थुः ।
तुकः स एव ।
इहोभयं प्राप्नोति --- अपचच्छतुः, अपचच्छुः ।।
अत्वस्यावकाशः --- चक्रतुः, चक्रुः ।
तुकः स एव ।

इहोभयं प्राप्नोति --- अपचच्छृदतुः, अपचच्छृदुः ।।
इत्वस्यावकाशः --- यियक्षति, पिपक्षति ।
तुकः स एव ।
इहोभयं प्राप्नोति --- चिच्छादयिषति, चिच्छर्दयिषति ।।
गुणस्यावकाशः --- लोलूयते, बेभिद्यते ।
तुकः स एव ।
इहोभयं प्राप्नोति --- चेच्छिद्यते, चोच्छुप्यते ।।
(6172 विप्रतिषेधवार्तिकम् ।। 5 ।।)
- यणादेशादाद्गुणः -
यणादेशादाद्गुणो भवति विप्रतिषेधेन ।
यणादेशस्यावकाशः --- दध्यत्र, मध्वत्र ।
आद्गुणस्यावकाशः --- खट्वेन्द्रः, खट्वोदकम् ।
इहोभयं प्राप्नोति --- वृक्षोऽत्र, प्लक्षोऽत्र ।।
(6173 विप्रतिषेधवार्तिकम् ।। 6 ।।)
- इरुर्गुणवृद्धिविधयश्च -
इरुर्गुणवृद्धिविधयश्च यणादेशाद्भवन्ति विप्रतिषेधेन ।।
इरुरोरवकाशः --- आस्तीर्णम्, निपूर्ताः पिण्डाः ।
यणादेशस्यावकाशः --- चक्रतुः, चक्रुः ।
इहोभयं प्राप्नोति --- दूरे ह्यध्वा जगुरिः, मित्रावरुणौ ततुरिः, किरति, गिरति ।।
गुणवृद्ध्योरवकाशः --- चेता, गौः ।
यणादेशस्य स एव ।
इहोभयं प्राप्नोति --- चयनम् --- चायकः, लवनम्--लावकः ।।
(6174 विप्रतिषेधवार्तिकम् ।। 7 ।।)
- भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृत्तिस्वरा एकादेशाच्च -
भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृत्तिस्वरा एकादेशाच्च यणादेशाच्च भवन्ति विप्रतिषेधेन ।।
भलोपस्यावकाशः --- गार्ग्यः, वात्स्यः ।
एकादेशयणादेशयोरवकाशः --- दधीन्द्रः मधूदकम्, दध्यत्र --- मध्वत्र ।
इहोभयं प्राप्नोति --- दाक्षी --- दाक्षायणः, प्लाक्षीप्लाक्षायणः ।।
(अचि भलोप एकादेशाद्भवति विप्रतिषेधेन ।
अचि भलोपस्यावकाशः --- दाक्षी --- दाक्षायणः, प्लाक्षी --- प्लाक्षायणः ।
एकादेशस्यावकाशः --- दण्डाग्रम्, क्षुपाग्रहम् ।
इहोभयं प्राप्नोति --- गाङ्गेयः, गाङ्गः ।।)
धातुस्वरस्यावकाशः --- पचति, पठति ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- श्र्यर्थम्, श्रीषा ।।
प्रातिपदिकस्वरस्यावकाशः --- आम्रः, शालः ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- अग्न्युदकम्, वृक्षार्थम् ।।
प्रत्ययस्वरस्यावकाशः --- चिकीर्षुः, औपगवः ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- चिकीर्ष्वर्थम्, औपगवार्थम् ।।
समासान्तोदात्तस्यावकाशः --- राजपुरुषः, ब्राह्मणकम्बलः ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- राजवैद्यर्थम्, राजवैदीहते ।।
उदात्तनिवृत्तिस्वरस्यावकाशः --- नदी, कुमारी ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- कुमार्यर्थम्, कुमारीहते ।।
(6175 विप्रतिषेधवार्तिकम् ।। 8 ।।)
- अल्लोपाल्लोपौ चार्धधातुके -

अल्लोपाल्लोपौ चार्धधातुके एकादेशाद्भवतो विप्रतिषेधेन ।।
अल्लोपस्यावकाशः --- चिकीर्षिता, जिहीर्षिता ।
एकादेशस्यावकाशः --- पचन्ति, पठन्ति ।
इहोभयं प्राप्नोति --- चिकीर्षकः, जिहीर्षकः ।।
आल्लोपस्यावकाशः --- पपिः सोमम्, ददिर्गाः ।
एकादेशस्यावकाशः --- यान्ति, वान्ति ।
इहोभयं प्राप्नोति --- ययतुः, ययुः ।।
(6176 विप्रतिषेधवार्तिकम् ।। 9 ।।)
- इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदविकाराश्च -
इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदविकाराश्चैकादेशयणादेशाभ्यां भवन्ति विप्रतिषेधेन ।
इयङुवङोरवकाशः --- श्रियौ --- श्रियः, भ्रुवौ --- भ्रुवः ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- चिक्षियिव --- चिक्षियिम, लुलुवतुः --- लुलुवुः, पुपुवतुः --- पुपुवुः ।।
गुणवृद्ध्योरवकाशः --- चेता, गौः ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- साधुचायी, सुचायी, नग्नंभावुकोऽध्वर्युः, शयिता, शयितुम् ।।
टितोऽवकाशः --- षण्णाम्, सप्तानाम्, पञ्चानाम् ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- वृक्षाणाम्, प्लक्षाणाम् ।।
कितोऽवकाशः --- साधुदायी, सुष्ठुदायी ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- दायकः, धायकः ।।
मितोऽवकाशः --- त्रपुणी, जतुनी ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- अस्थीनि, दधीनि, अतिसखीनि ब्राह्मणकुलानि ।।
पूर्वपदविकाराणामवकाशः --- होतापोतारौ ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- नेष्टोद्गातारौ, आग्नेन्द्रम् ।।
(6177 विप्रतिषेधबोधकवार्तिकम् ।। 10 ।।)
- उत्तरपदविकाराश्च -
उत्तरपदविकाराश्चेति वक्तव्यम् ।।
उत्तरविकाराणामवकाशः --- समीपम्, दुरीपम् ।
एकादेशयणादेशयोः स एव ।
इहोभयं प्राप्नोति --- नीपम्, वीपम्, प्रेपम्, परेपम् ।।
-6-1-93- औतोम्शसोः (2530)
(6178 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- ओतस्तिङि प्रतिषेधः -
ओतस्तिङि प्रतिषेधो वक्तव्यः । अचिनवम्, असुनवम् ।।
(वार्तिकप्रत्याख्यानभाष्यम्)
स तर्हि प्रतिषेधो वक्तव्यः ।
न वक्तव्यः । गोग्रहणं करिष्यते, आ गोतः --- इति वक्तव्यम् ।।
(6179 उपसंख्यानवार्तिकम् ।। 2 ।।)
- गोग्रहणे द्योरुपसंख्यानम् -
गोग्रहणे द्योरुपसंख्यानं कर्तव्यम् । द्यां गच्छ ।।
(6180 प्रतिषेधोपसंख्यानवार्तिकम् ।। 3 ।।)
- समासाच्च प्रतिषेधः -
समासाच्च प्रतिषेधो वक्तव्यः । चित्रगुं पश्य, शबलगुं पश्य ।।
ननु च आ-ओतः इत्युच्यमानेऽपि समासात्प्रतिषेधो वक्तव्यः ।
न वक्तव्यः । ह्रस्वत्वे कृते न भविष्यति ।

इदमिह संप्रधार्यम् --- आत्वं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् ?
परत्वादात्वम् ।।
(6181 पूर्ववार्तिकप्रत्याख्यानवार्तिकम् ।। 4 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा वक्तव्यः ।
न वक्तव्यः ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणमात्वम्, अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ।।
ननु च --- आ गोतः --- इत्युच्यमानेऽपि समासात्प्रतिषेधो न वक्तव्यः ।
कथम् ?
ह्रस्वत्वे कृते न भविष्यति ।
स्थानिवद्भावात्प्राप्नोति ।
ननु च ओतः इत्युच्यमानेऽपि स्थानिवद्भावात् प्राप्नोति ।
नेत्याह । अनल्विधौ स्थानिवद्भावः ।
आ गोतः इत्युच्यमानेऽपि न दोषः । प्रतिषिध्यतेऽत्र स्थानिवद्भावः --- गोः पूर्वणित्त्वात्वस्वरेषु स्थानिवन्न भवतीति ।।
स एव तर्हि दोषः --- गोग्रहणे द्योरुपसंख्यानमिति । सूत्रञ्च भिद्यते ।
यथान्यासमेवास्तु ।
ननु चोक्तम् --- ओतस्तिङि प्रतिषेध इति ।।
(6182 प्रथमवार्तिकप्रत्याख्याने वार्तिकम् ।। 5 ।।)
- सुबधिकारात्सिद्धम् -
सुपीति प्रकृतं वर्तते ।
क्व प्रकृतम् ?
वा सुप्यापिशलेः (92) इति ।।
यद्यनुवर्तते, इहापि विभाषा प्राप्नोति ।
सुब्ग्रहणमनुवर्तते, वाग्रहणं निवृत्तम् ।।
कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते, एकदेशो न ? ।
(6183 प्रत्याख्यानोपष्टम्भकवार्तिकम् ।। 6 ।।)
- एकयोगे चैकदेशानुवृत्तिरन्यत्रापि -
एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति । अन्यत्रापि, नावश्यमिहैव ।
क्वान्यत्र ?
अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्रागङ्गाधिकारात् ।।
एवमपि--
(6184 आक्षेपवार्तिकम् ।। 7 ।।)
- अम्युपसंख्यानं वृद्धिबलीयस्त्वात् -
अम्युपसंख्यानं कर्तव्यम् । गां पश्य । किं पुनः कारणं न सिध्यति ?
वृद्धिबलीयस्त्वात् । परत्वाद् वृद्धिः प्राप्नोति ।।
(6185 समाधानवार्तिकम् ।। 8 ।।)
- न वाऽनवकाशत्वात् -
न वा वक्तव्यम् ।
किं कारणम् ?
अनवकाशत्वात् । अनवकाशमात्वं वृद्धिं बाधिष्यते ।।
सावकाशमात्वम् ।
कोऽवकाशः ? द्यां गच्छ ।।
(6186 समाधानसाधकवार्तिकम् ।। 9 ।।)
- द्योश्च सर्वनामस्थाने वृद्धिविधिः -
द्योश्च सर्वनामस्थाने वृद्धिर्विधेया । किं प्रयोजनम् ?
(6187 समाधानसाधकप्रयोजनवार्तिकम् ।। 10 ।।)
- यद्याव इन्द्रेति दर्शनात् -
यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।

यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यते, अनवकाशमात्वं वृद्धिं बाधिष्यते ।।
-6-1-94- एङि पररूपम् (2531)
(पररूपाधिकरणम्)
(6188 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- पररूपप्रकरणे तुन्वोर्वि निपात उपसंख्यानम् -
पररूपप्रकरणे तु नु इत्येतयोर्वकारादौ निपात उपसंख्यानं कर्तव्यम् । तु वै-त्वै, वै-न्वै ।
वकारादाविति किमर्थम् ?
त्वावत्, न्वावत् ।।
निपात इति किमर्थम् ?
तु वानि, नु वानि ।।
(6189 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- न वा निपातैकत्वात् -
न वा कर्तव्यम् ।
किं कारणम् ?
निपातैकत्वात् । एक एवायं निपातः --- त्वै, न्वै ।।
(6190 उपसंख्यानवार्तिकम् ।। 3 ।।)
- एवे चानियोगे -
पररूपं वक्तव्यम् । इह एव --- इहेव, अद्येव ।
अनियोग इति किमर्थम् ?
इहैव भव मा स्म गाः, अत्रैव त्वमिह वयं सुशेवाः ।।
(6191 उपसंख्यानवार्तिकम् ।। 4 ।।)
- शकन्ध्वादिषु च -
शकन्ध्वादिषु पररूपं वक्तव्यम् । शक अन्धुः --- शकन्धुः, कुल अटा --- कुलटा, सीम अन्तः --- सीमन्तः ।
केशेष्विति वक्तव्यम् । यो हि सीम्नोऽन्तः, सीमान्तः स भवति ।।
(6192 उपसंख्यानवार्तिकम् ।। 5 ।।)
- ओत्वोष्ठयोः समासे वा -
ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् । स्थूलोतुः --- स्थूलौतुः, बिम्बोष्ठी --- बिम्बौष्ठी ।।
(6193 उपसंख्यानवार्तिकम् ।। 6 ।।)
- एमनादिषु च्छन्दसि -
एमनादिषु च्छन्दसि पररूपं वक्तव्यम् । अपां त्वेमन्सादयाम्यपां त्वोद्मन्सादयामि ।।
-6-1-95- ओमाङोश्च (2532)
(चकारानर्थक्यबोधकभाष्यम्)
किमर्थश्चकारः ? ।
एङीत्यनुकृष्यते ।
किं प्रयोजनम् ? ।
इह मा भूत् --- अद्य आ ऋश्यात् --- अद्यार्श्यात्, कदा अर्श्यात् --- कदार्श्यात् ।
नैतदस्ति प्रयोजनम् । अर्यश्यादित्येव भवितव्यम् ।
एवं हि सौनागाः पठन्ति --- चोऽनर्थकोऽनधिकारादेङः ।।
(6194 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- उस्योमाङ्क्ष्वाटः प्रतिषेधः -
उसि पररूपे ओमाङोश्चाटः प्रतिषेधो वक्तव्यः । औस्रीयत्, औढीयत्, औङ्कारीयत् ।।
स तर्हि प्रतिषेधो वक्तव्यः ।
न वक्तव्यः । उक्तम् आटश्च (90) इत्यत्र चकारस्य प्रयोजनम् --- आटोऽचि वृद्धिरेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।।
-6-1-96- उस्यपदान्तात्( 2533)
(अपदान्तात्पदप्रयोजनभाष्यम्)
अपदान्तादिति किमर्थम् ?
का उस्रा --- कोस्रा ।
अपदान्तादिति शक्यमकर्तुम् ।
कस्मान्न भवति --- का उस्रा --- कोस्रा ?

अर्थवद्ग्रहणे नानर्थकस्येति ।
नैषा परिभाषेह शक्या विज्ञातुम्, इह हि दोषः स्यात् --- भिन्द्या उस् --- भिन्द्युः, छिन्द्या उस् --- छिन्द्युः ।।
एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ।।
उत्तरार्थं तर्ह्यपदान्तग्रहणं कर्तव्यम् । अतो गुणे (97) अपदान्ताद्यथा स्यादिति ।
इह मा भूत् --- दण्डाग्रम्, क्षुपाग्रमिति ।।
-6-1-98- अव्यक्तानुकरणस्यात इतौ (2535)
(6195 उपसंख्यानवार्तिकम् ।। 1 ।।)
- इतावनेकाज्ग्रहणं श्रदर्थम् -
इतावनेकाज्ग्रहणं कर्तव्यम् ।
किं प्रयोजनम् ?
श्रदर्थम् । इह मा भूत् --- श्रदिति ।।
-6-1-99- नाम्रेडितस्यान्त्यस्य तु वा (2536)
(6196 एकदेशिनो नित्यत्वबोधकवार्तिकम् ।। 1 ।।)
- नित्यमाम्रेडिते डाचि -
नित्यमाम्रेडिते डाचि पररूपं कर्तव्यम् । पटपटायति ।।
(6197 नित्यत्वबोधनप्रत्याख्यानवार्तिकम् ।। 2 ।।)
- अकारान्तानुकरणाद्वा -
अथवा --- अकारान्तमेतदनुकरणम् ।
भवेत्सिद्धं यदाऽकारान्तम् ।
यदा तु खलु अच्छब्दान्तं तदा न सिध्यति ।
विचित्रास्तद्धितवृत्तयः, नातस्तद्धित उत्पद्यते ।।
-6-1-101- अकः सवर्णे दीर्घः (2538)
(दीर्घाधिकरणम्)
(6198 उपसंख्यानवार्तिकम् ।। 1 ।।)
- सवर्णदीर्घत्वे ऋति ॠ वावचनम् -
सवर्णदीर्घत्वे ऋति ॠ वा भवतीति वक्तव्यम् । होतृ ऋकारः --- होतॄकारः ।।
(6199 उपसंख्यानवार्तिकम् ।। 2 ।।)
- ऌति ॡ वा -
ऌति ॡ वा भवतीति वक्तव्यम् । होतृ ऌकारः --- होत्ॡकारः ।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ।।
-6-1-102- प्रथमयोः पूर्वसवर्णः (2539)
(दीर्घाधिकरणम्)
(प्रथमपदार्थे पक्षद्वयोपस्थापकम्भाष्यम्)
प्रथमयोरित्युच्यते, कयोरिदं प्रथमयोर्ग्रहणम् ?
किं विभक्त्योः आहोस्वित् प्रत्ययोः ?
(सिद्धान्तदर्शनभाष्यम्)
विभक्त्योरित्याह ।
कथं ज्ञायते ?
अचीति वर्तते । न चाजादी प्रथमौ प्रत्ययौ स्तः ।।
(आक्षेपभाष्यम्)
ननु चैवं विज्ञायते --- अजादी यौ प्रथमौ, अजादीनां वा यौ प्रथमौ --- इति ।।
(सिद्धान्तभाष्यम्)
यत्तर्हि तस्माच्छसो नः पुंसि (103) इत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यः विभक्त्योर्ग्रहणमिति ।।
अथवा --- सुपीति वर्तते ।।
(अमिपूर्वः इति सूत्रप्रयोजनभाष्यम्)
अथ किमर्थं पूर्वसवर्णदीर्घः, अमिपूर्वत्वं चोच्यते, न प्रथमयोः पूर्वसवर्णः इत्येव सिद्धम् ?
न सिध्यति ।
प्रथमयोः पूर्वसवर्ण इत्युच्यमानेऽम्यपि दीर्घः प्राप्नोति --- वृक्षम्, प्लक्षम् ।
नैष दोषः ।

यत् पूर्वस्मिन् योगे दीर्घग्रहणं तदुत्तरत्र निवृत्तम् ।
एवमपि इदमपि पूर्वसवर्णग्रहणं क्रियते तेनाम्यपि पूर्वसवर्णः प्रसज्येत --- वृक्षम्, प्लक्षम्, द्विमात्रः प्राप्नोति ।
नैष दोषः ।
सवर्णग्रहणं न करिष्यते ।
यदि सवर्णग्रहणं न क्रियते, कुतो व्यवस्था ?
आन्तर्यतः ।
यद्येवम् --- अग्नी, वायू --- त्रिमात्रः प्राप्नोति । वृक्षम्, प्लक्षम् --- द्विमात्रः ।
तस्मात्सवर्णग्रहणं कर्तव्यम्, तस्मिंश्च क्रियमाणे दीर्घग्रहणमनुर्वत्यम्, तस्मिन्ननुवर्तमाने अमि पूर्वः इत्यपि वक्तव्यम् ।।
(योगविभागप्रयोजनभाष्यम्)
अथ किमर्थं पृथगुच्यते, नेहैवोच्येत --- प्रथमयोः पूर्वसवर्णोऽमि च इति ?
यदि प्रथमयोः पूर्वसवर्णदीर्घो भवति, अमि चेत्युच्यते, तेनाम्यपि दीर्घः प्रसज्येत --- वृक्षम्, प्लक्षम् ।
नैष दोषः ।
दीर्घग्रहणं निवर्तयिष्यते ।
एवमपि पूर्वसवर्णः प्रसज्येत ।
सवर्णग्रहणं न करिष्यते ।
यदि सवर्णग्रहणं न क्रियते, पूर्वस्मिन् योगे विप्रतिषिद्धम् --- यदि पूर्वः, न दीर्घः । अथ दीर्घः, न पूर्वः । पूर्वो दीर्घश्चेति विप्रतिषिद्धम् ।
तस्मादुभयमारब्धव्यम्, पृथक् च वक्तव्यम् ।।
(6200 योगविभागे पूर्वपक्षवार्तिकम् ।। 1 ।।)
- प्रथमयोरिति योगविभागः सवर्णदीर्घार्थः -
प्रथमयोः इति योगविभागः कर्तव्यः प्रथमयोरकः सवर्णदीर्घो भवति ।
ततः पूर्वसवर्णः, पूर्वसवर्णदीर्घो भवत्यकः प्रथमयोरिति ।।
किमर्थो योगविभागः ?
सवर्णदीर्घार्थः । सवर्णदीर्घत्वं यथा स्यात् --- वृक्षाः, प्लक्षाः, वृक्षान्, प्लक्षान् ।।
(6201 योगविभागसमर्थकवार्तिकम् ।। 2 ।।)
- एकयोगे हि जश्शसोः पररूपप्रसङ्गः -
एकयोगे हि सति जश्शसोः पररूपप्रसज्येत --- वृक्षाः, प्लक्षाः, वृक्षान्, प्लक्षान् ।।
ननु च पूर्वसवर्णदीर्घत्वं पररूपं बाधिष्यते ।
नोत्सहते बाधितुम् ।
किं कारणम् ?
(6202 योगविभागफलसमर्थकवार्तिकम् ।। 3 ।।)
- आद्गुणयणादेशयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशास्तेषां पररूपं स्वरसन्धिषु -
आद्गुणयणादेशावुत्सर्गौ । तयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशाः । तेषां सर्वेषां पररूपमपवादः । तत्सर्वबाधकम्, सर्वबाधकत्वात् प्राप्नोति ।।
(योगविभागसामर्थ्यबोधकभाष्यम्)
अथ क्रियमाणेऽपि योगविभागे यावता पररूपमपवादः कस्मादेव न बाधते ?
योगविभागोऽन्यशास्त्रनिवृत्यर्थः । योगविभागोऽन्यशास्त्रनिवृत्यर्थो विज्ञायते ।।
(6203 योगविभागेऽतिप्रसङ्गापादनवार्तिकम् ।। 4 ।।)
- योगविभागोऽन्यशास्त्रनिवृत्यर्थश्चेदम्यतिप्रसङ्गः -
योगविभागोऽन्यशास्त्रनिवृत्यर्थश्चेदम्यतिप्रसङ्गो भवति --- वृक्षम्, प्लक्षम् ।
यथैव हि योगविभागः पररूपं बाधते, एवममिपूर्वत्मपि बाधेत ।।
(6204 योगविभागेऽतिप्रसङ्गापादकवार्तिकम् ।। 5 ।।)
- नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् -
नत्वस्य चाभावः --- वृक्षान्, प्लक्षान् । किं कारणम् ?
तस्मादित्यनन्तरनिर्देशात् । तस्मादित्यनेनानन्तरो योगः प्रतिनिर्दिश्यते --- प्रथमयोः पूर्वसवर्णः तस्माच्छसो नः पुंसि ।
किं पुनः कारणं तस्मादित्यनन्तरो योगो निर्दिश्यते ?
इह मा भूत् --- एतान् गाश्चतुरो बलीवर्दान् पश्य ।।
(वार्तिकावतरणभाष्यम्)
अस्तु तर्ह्येकयोग एव ।
ननु चोक्तम् --- एकयोगे हि जश्शसोः पररूपप्रसङ्गः इति ।
नैष दोषः ।

(6205 एकयोगत्वसमर्थकवार्तिकम् ।। 6 ।।)
- इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य -
यदयं नादिचि (104) इतीज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः --- न जश्शसोः पररूपं भवतीति ।
कथं कृत्वा ज्ञापकम् ?
इज्ग्रहणस्यैतत्प्रयोजनम् --- इह मा भूत् --- वृक्षाः, प्लक्षाः, वृक्षान्, प्लक्षान् । यदि च जश्शसोः पररूपं स्यात्, इज्ग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यः --- न जश्शसोः पररूपं भवति --- इति, तत इज्ग्रहणं करोति
।।
नैतदस्ति ज्ञापकम् ।
उत्तरार्थमेतत्स्यात् --- दीर्घाज्जसि च (105) इति चेति ।
यद्युत्तरार्थमेतत्स्यात्तत्रैवायमिज्ग्रहणं कुर्वीत । इहापि तर्हि क्रियमाणं यद्युत्तरार्थम्, न ज्ञापकं भवति ।
एवं तर्हि यद्युत्तरार्थमेतत्स्यान्नैवायमिज्ग्रहणं कुर्वीत, नापि जस्ग्रहणम् । एतावदयं ब्रूयात् --- दीर्घाच्छसि पूर्वसवर्णो भवति --- इति तन्नियमार्थं भविष्यति --- दीर्घाच्छस्येव, नान्यत्रेति ।
सोऽयमेवं लघीयसा न्यासेन सिद्धे यदिज्ग्रहणं करोति, तज्ज्ञापयत्याचार्यः --- न जश्शसोः पररूपं भवतीति ।।
(योगविभागसमर्थकभाष्यम्)
अथवा पुनरस्तु योगविभागः ।
ननु चोक्तम् --- योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गः --- इति ।
नैष दोषः ।
अम्यपि योगविभागः करिष्यते --- अमि । अमि यदुक्तं तन्न भवतीति । ततः --- पूर्वः । पूर्वश्च भवत्यमिति ।।
यदप्युच्यते --- नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् --- इति ।
कः पुनरर्हति तस्मादित्यनेनानन्तरं योगं निर्देष्टुम् ?
एवं किल प्रतिनिर्दिश्यते --- तस्मात्उपूर्वसवर्णदीर्घादिति ।
तच्च न ।
एवं प्रतिनिर्दिश्यते --- तस्मात्उअको दीर्घादिति ।
अथवा --- तस्मात्उप्रथमयोर्दीर्घादिति ।।
(एकयोगत्वे सिद्धान्तभाष्यम्)
अथवा --- पुनरस्तु अम्येकयोगः ।
ननु चोक्तम् --- योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गः --- इति ।
नैष दोषः ।
मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमयं योगविभागः पररूपं बाधिष्यते, अमि पूर्वत्वं न बाधिष्यते ।
यद्येतदस्ति --- मध्येऽपवादाः --- पुरस्तादपवादाः --- इति, नार्थ एकेनापि योगविभागेन ।
पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इत्येवं पररूपमकः सवर्णदीर्घत्वं बाधिष्यते, प्रथमयोः पूर्वसवर्णदीर्घत्वं न बाधिष्यते ।।
(प्रकारान्तरेण सिद्धान्तसाधकभाष्यम्)
अथवा --- सप्तमे योगविभागः करिष्यते ।
इदमस्ति --- अतो दीर्घो यञि (7-3-101) सुपि च (102) इति । ततो वक्ष्यामि --- बहुवचने । बहुवचने च अतो दीर्घो भवति । ततः --- झल्येत् । एकारश्च भवति बहुवचने झलीति ।
इहापि तर्हि प्राप्नोति --- वृक्षाणाम्, प्लक्षाणाम् ।
तत्र को दोषः ?
दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति ।
इदमिह संप्रधार्यम् --- दीर्घत्वं क्रियतां नुडिति, किमत्र कर्तव्यम् ?
परत्वाद्दीर्घत्वम् ।
नित्यं खल्वपि दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोति, अकृतेऽपि । नित्यत्वात्परत्वाच्च दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति ।
एवं तर्हि आत् ग्रहणमिहापि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
आज्जसेरसुक् (7-1-50) इति । तेन कृतेऽपि दीर्घत्वे नुट् भविष्यति ।
इहापि तर्हि प्राप्नोति --- कीलालपाम्, शुभयाम् ।
आतो लोपोऽत्र बाधको भविष्यति ।
इदमिह संप्रधार्यम् --- लोपः क्रियतां नुडिति, किमत्र कर्तव्यम् ?
परत्वान्नुट् ।
एवं तर्हि ह्रस्वनद्यापो नुट् इत्यत्र आतो धातोः (6-4-140) इत्यातो लोपः संबन्धमनुवर्तिष्यते ।

इहापि तर्हि प्राप्नोति --- कीलालपानाम् ब्राह्मणकुलानाम् ।
नपुंसकस्य नेत्यप्यनुवर्तिष्यते ।।
-6-1-103- तस्माच्छसो नः पुंसि (2540)
(नत्वाधिकरणम्)
(पुंसांबहुत्वे--पुंशब्दाद्बहुषु --- इति पक्षद्वयोपस्थापकभाष्यम्)
किमदं नत्वं पुंसां बहुत्वे भवति, आहोस्वित्पुंशब्दाद्बहुषु ।
कश्चात्र विशेषः ?
(प्रथमे पक्षे दोषदर्शकं श्लोकभाष्यम्)
नत्वं पुंसां बहुत्वे चेत् पुंशब्दादिष्यते स्त्रियाम् ।
तन्न सिद्ध्यति । भ्रूकुंसान् पश्येति ।।
(प्रथमे दोषदर्शकं श्लोकभाष्यम्)
नपुंसके तथैवेष्टम्
तच्च न सिद्ध्यति । षण्ढान् पश्य, पण्डकान् पश्येति ।।
(प्रथमाश्रयणेऽतिव्याप्तिदर्शकं श्लोकभाष्यम्)
स्त्रीशब्दाच्च प्रसज्यते ।। 1 ।।
स्त्रीशब्दाच्च प्राप्नोति । चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्य ।।
अस्तु तर्हि पुंशब्दाद्बहुषु ।
(द्वितीये पक्षे दोषदर्शकं श्लोकभाष्यम्)
पुंशब्दादिति चेदिष्टं स्थूरापत्ये न सिद्ध्यति ।
स्थूरान् पश्येति ।।
(द्वितीये दोषदर्शकं श्लोकभाष्यम्)
कुण्डिन्या अररकायाः
अपत्यं च न सिध्यति । कुण्डिनान् पश्य, अररकान् पश्य ।।
(दोषवारकं श्लोकभाष्यम्)
पुंस्प्राधान्यात्प्रसिध्यति ।। 2 ।।
पुंस्प्रधाना एते शब्दाः ततो नत्वं भविष्यति ।।
(विशिष्टार्थे दोषदर्शकं श्लोकभाष्यम्)
पुंस्प्राधान्ये त एव स्युर्ये दोषाः पूर्वचोदिताः ।
भ्रूकुंसान् पश्य, षण्ढान् पश्य, पण्डकान् पश्य, चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्येति ।।
(सिद्धान्तभाष्यम्)
तस्माद्यस्मिन् पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु ।।
(संग्रहः)
न त्वं पुंसां बहुत्वे चेत् पुंशब्दादिष्यते स्त्रियाम् ।।
नपुंसके तथैवेष्टं स्त्रीशब्दाच्च प्रसज्येत ।। 1 ।।
पुंशब्दादिति चेदिष्टं स्थूरापत्ये न सिध्यति ।।
कुण्डिन्या अररकायाः पुंस्प्राधान्यात् प्रसिध्यति ।। 2 ।।
पुंस्प्राधान्ये त एव स्युर् ये दोषाः पूर्वचोदिताः ।।
तस्मादर्थे भवेन्नत्वं वध्रिकादिषु युक्तवत् ।। 3 ।।
-6-1-107- अमि पूर्वः (2544)
(पूर्वरूपाधिकरणम्)
(छन्दसि विकल्पबोधकं भाष्यम्)
वा च्छन्दसीत्येव । यमीं च यम्यं च, शमीं च शम्यं च, गौरीं च गौर्यं च, किशोरीं च किशोर्यं च ।।
-6-1-108- संप्रसारणाच्च (2545)
(छन्दसि वेत्यस्य सम्बन्धबोधकं भाष्यम्)
वाच्छन्दसीत्येव । मित्रावरुणौ यज्यमानः, मित्रावरुणौ इज्यमानः ।।
(6206 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणसमानाङ्गप्रतिषेधार्थम् -
संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम् ।
किं प्रयोजनम् ?

असमानाङ्गप्रतिषेधार्थम् । असमानाङ्गस्य मा भूदिति --- शकह्वर्थम्, परिव्यर्थम् ।।
(6207 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- सिद्धमसंप्रसारणात् -
सिद्धमेतत् ।
कथम् ?
असंप्रसारणात् ।
कथमसंप्रसारणम् ?
वाक्यस्य संप्रसारणसंज्ञा, न वर्णस्य ।।
अथ वर्णस्य संप्रसारणसंज्ञायां दोष एव ।
वर्णस्य च संप्रसारणसंज्ञायां न दोषः ।
कथम् ?
अन्योऽयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते ।।
(6208 एकदेशिनः समाधानान्तरवार्तिकम् ।। 3 ।।)
- कार्यकृतत्वाद्वा -
अथवा सकृत् कृतं पूर्वत्वमिति कृत्वा पुनर्न भविष्यति । तद्यथा --- वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।।
(एकदेशिसमाधानासङ्गतिबोधकभाष्यम्)
विषम उपन्यासः । युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न भवति ।
यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा --- वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत --- इति अग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते ।
तस्मात्पूर्वोक्त एव परिहारः --- सिद्धमसंप्रसारणात् --- इति ।।
(असंप्रसारणत्वे आक्षेपभाष्यम्)
यदि तर्हि नेदं संप्रसारणम्, हूत इति दीर्घत्वं न प्राप्नोति ।।
(6209 समाधानवार्तिकम् ।। 4 ।।)
- दीर्घत्वं वचनप्रामाण्यात् -
अनवकाशं दीर्घत्वं तद्वचनप्रामाण्याद्भविष्यति ।।
(6210 समाधानान्तरवार्तिकम् ।। 5 ।।)
- अन्तवत्त्वाद्वा -
अथवा पूर्वस्य कार्यं प्रत्यन्तवद्भवतीति दीर्घत्वं भविष्यति ।।
(6211 एकादेशप्रकरणशेषे विप्रतिषेधोपसंख्यानवार्तिकम् ।। 6 ।।)
- आटो वृद्धेरियङ् -
आटो वृद्धिर्भवतीत्येतस्मादियङ् भवति विप्रतिषेधेन ।
आटो वृद्धिर्भवतीत्यस्यावकाशः --- ऐक्षिष्ट, ऐहिष्ट ।
इयङोऽवकाशः --- अधीयाते, अधीयते ।
इहोभयं प्राप्नोति --- अध्यैयाताम्, अध्यैयत ।
इयङादेशो भवति विप्रतिषेधेन ।।
नैष युक्तो विप्रतिषेधः,
अन्तरङ्गाऽऽटो वृद्धिः ।
काऽन्तरङ्गता ?
वर्णावाश्रित्याटो वृद्धिः, अङ्गस्येयङादेशः ।
एवं तर्हीदमिह संप्रधार्यम् --- आट् क्रियताम् इयङादेश इति, किमत्र कर्तव्यम् ?
परत्वादियङ् ।
नित्य आडागमः, कृतेऽपीयङि प्राप्नोति --- अकृतेऽपि ।
इयङ्पि नित्यः,कृतेऽप्याटि प्राप्नोति --अकृतेऽपि।
अनित्य इयङ्, न हि कृत आटि प्राप्नोति ।
किं कारणम् ?
अन्तरङ्गाऽऽटो वृद्धिः ।
यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न चात्राडेवेयङो निमित्तं विहन्ति, अवश्यं लक्षणान्तरमाटो वृद्धिः प्रतीक्ष्या । उभयोर्नित्ययोः परत्वादियङादेशः ।।

(6212 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 7 ।।)
- आद्गुणात्सवर्णदीर्घत्वमाङभ्यासयोः -
आद्गुणात्सवर्णदीर्घत्वं भवति विप्रतिषेधेन ।
क्व ?
आङभ्यासयोः ।
आद्गुणस्यावकाशः --- खट्वा --- इन्द्रः --- खट्वेन्द्रः, खट्वोदकम् ।
सवर्णदीर्घत्वस्यावकाशः --- दण्डाग्रम्, क्षुपाग्रम् ।
इहोभयं प्राप्नोति --- अद्य-आ-ःढ़द्य;ढा-अद्योढा, कदा-आ-ःढ़द्य;ढा-कदोढा, उप-इ-इजतुः-उपेजतुः, उप-उ-उपतुः-उपोपतुः ।
सवर्णदीर्घत्वं भवति विप्रतिषेधेन ।।
(उदाहरणान्यथासिद्धिसाधकभाष्यम्)
अभ्यासार्थेन तावन्नार्थः ।
अस्त्वत्राद्गुणः, आद्गुणे कृते अयवौ च, हलादिः शेषः, पुनराद्गुणो भविष्यति ।
भवेत्सिद्धम् --- उपेजतुः, उपेजुरिति ।
इदं तु न सिद्ध्यति --- उपोपतुः, उपोपुरिति ।
अत्र ह्याद्गुणे कृत ओदन्तो निपात इति प्रगृह्यसंज्ञा, प्रगृह्यः प्रकृत्येति प्रगृह्याश्रयः प्रकृतिभावः प्राप्नोति ।
पदान्तप्रकरणे प्रकृतिभावः न चैष पदान्तः ।
पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते ।
एवं तर्ह्येतदेवात्र नास्ति --- ओदन्तो निपात इति ।
किं कारणम् ?
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।।
इहापि तर्हि --- यद्योढा, कदोढेति ।
भवेद्रूपं सिद्धं स्यात् ।।
(6213 विप्रतिषेधाभावे दोषदर्शकवार्तिकम् ।। 8 ।।)
- स्वरदोषस्तु -
स्वरे तु दोषो भवति । अद्योढा --- एवं स्वरः प्रसज्येत, अद्योढा --- सति चेष्यते ।।
(विप्रतिषेधाभावे पररूपानर्थक्यबोधकभाष्यम्)
आङि पररूपवचनं चेदानीमनर्थकं स्यात् ।
नानर्थकम्, ज्ञापनार्थम् ।
किं ज्ञाप्यम् ?
(6214 पररूपवचनज्ञापनवार्तिकम् ।। 9 ।।)
- आङि पररूपं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य -
एतज्ज्ञापयत्याचार्यः --- अन्तरङ्गं बलीयो भवतीति ।
किं पुनरिहान्तरङ्गं किं बहिरङ्गम्, यावतो द्वे पदे आश्रित्य सवर्णदीर्घत्वमपि भवत्याद्गुणोऽपि ।
धातूपसर्गयोर्यत्कार्यं तदन्तरङ्गम् ।
कुत एतत् ।
पूर्वमुपसर्गस्य हि धातुना योगो भवति, नाद्यशब्देन ।
किमर्थं तर्ह्यशब्दः प्रयुज्यते ?
अद्यशब्दस्यापि समुदायेन योगो भवति ।।
किमेतस्य ज्ञापने प्रयोजनम् ?
(6215 ज्ञापनप्रयोजनवार्तिकम् ।। 10 ।।)
- प्रयोजनं पूर्वसवर्णपूर्वत्वतहिलोपटेनङेर्यङिस्मिन्ङिणलौत्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात् -
पूर्वसवर्णः प्रयोजनम् । अग्नी अत्र, वायू अत्र । पूर्वसवर्णश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकार आवादेशः ।
पूर्वसवर्णदीर्घत्वं भवत्यन्तरङ्गतः । पूर्वसवर्ण ।।
पूर्वत्व । शकह्वर्थम्, परिव्यर्थम् । पूर्वत्वं च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् ।
पूर्वत्वं भवत्यन्तरङ्गतः । पूर्वत्व ।।
तहिलोप । अकार्यत्र, अहार्यत्र, पचेदम् । तहिलोपौ च प्राप्नुतः, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् ।
तहिलोपौ भवतोऽन्तरङ्गतः । तहिलोप ।।
तेन । वृक्षेणात्र, प्लक्षेणात्र । इनादेशश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् ।
इनादेशो भवत्यन्तरङ्गतः । तेन ।।

ङेर्य । वृक्षायात्र, प्लक्षायात्र । ङेर्यादेशश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः --- एङः पदान्तादति (6-1-109) इति परपूर्वत्वम् ।
ङेर्यादेशो भवत्यन्तरङ्गतः । ङेर्य ।।
ङिस्मिन् । यस्मिन्निदम्, तस्मिन्निदम् । स्मिन्भावश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम् ।
स्मिन्भावो भवत्यन्तरङ्गतः । ङिस्मिन् ।।
ङिणलौत्वम् । अग्नाविदम्, ययावत्र । ङिणलौत्वं प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्
।
औत्वं भवत्यन्तरङ्गतः ।।
(प्रयोजनाक्षेपभाष्यम्)
नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाप्येतानि सिद्धानि ।
(ज्ञापनप्रयोजनसमर्थकभाष्यम्)
इदं तर्हि प्रयोजनम् --- वृक्षा अत्र, प्लक्षा अत्र । पूर्वसवर्णश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः --- अतो रोरप्लुतादप्लुते (6-1-113) इत्युत्वम् ।
पूर्वसवर्णो भवत्यन्तरङ्गतः ।
न चावश्यमिदमेव प्रयोजनम् । आद्ययोगे बहूनि प्रयोजनानि सन्ति यदर्थमेषा परिभाषा कर्तव्या । प्रतिविधेयं दोषेषु ।।
-6-1-112- ख्यत्यात्परस्य (2549)
(ख्यत्यात्पदार्थबोधकभाष्यम्)
किमिदं ख्यत्यादिति ?
सखिपत्योर्विकृतग्रहणम् ।
किं पुनः कारणं विकृतयोः सखिपत्योर्ग्रहणं क्रियते, न सखिपतिभ्यामित्येवोच्येत ?
(विकृतनिर्देशप्रयोजनभाष्यम्)
नैवं शक्यम् । गरीयांश्चैव निर्देशः स्यात् ।
इह च प्रसज्येत --- अतिसखेरागच्छति, अतिसखेः स्वम् ।
इह च न स्यात् --- सखीयतेरप्रत्ययः --- सख्युः, पत्युः । लूनीयतेरप्रत्ययः --- लून्युः, पून्युः ।।
-6-1-113- अतो रोरप्लुतादप्लुते (2550)
(रुत्वाधिकरणम्)
(पदाक्षेपभाष्यम्)
किमर्थमप्लुतादप्लुत इत्युच्यते ?
(समाधानभाष्यम्)
प्लुतात्परस्य प्लुते वा परतो मा भूत् --- इति ।
प्लुत्पतारस्य --- सुस्रोता 3 अत्र न्वसि ।
प्लुते परतः --- तिष्ठतु पय आ3ग्निदत्त ।
अतः --- अति इत्युच्यते, कः प्रसङ्गः प्लुतात्परस्य प्लुते वा परतः स्यात् ?
असिद्धः प्लुतः, तस्यासिद्धत्वात् प्राप्नोति ।।
(अप्लुताप्लुतपदार्थनिर्णये एकदेशिभाष्यम्)
अथ अप्लुतात् --- अप्लुते इत्युच्यमानेऽपि यावताऽसिद्धः प्लुतः, कस्मादेवात्र न प्राप्नोति ?
अप्लुतभाविनोऽप्लुतभाविनीत्येवमेतद्विज्ञायते ।।
(एकदेशिनोज्ञापकाश्रयेण समाधानभाष्यम्)
नैतदस्ति प्रयोजनम्। सिद्धः प्लुतः स्वरसंधिषु। कथं ज्ञायते? यदयं प्लुतः प्रकृत्येति प्लुतस्य प्रकृतिभावं शास्ति, सतो हि कार्यिणः कार्येण भवितव्यम्।।
(6216 एकदेशिवार्तिकम् ।। 1 ।।)
- अप्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधः -
अप्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधो वक्तव्यः । पयो3ट्, पयो3द ।।
(6217 समाधानवार्तिकम् ।। 2 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा वक्तव्यम् ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः, अन्तरङ्गमुत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ।।
इहापि तर्हि प्राप्नोति --- सुस्रोता3 अत्र न्वसि ।
अन्तरङ्गोऽत्र प्लुतः बहिरङ्गमुत्वम् ।।

(प्लुतोत्वयोरन्तरङ्गत्वबहिरङ्गत्वव्यवस्थापकभाष्यम्)
क्व पुनरिहान्तरङ्गः प्लुतः क्व वा बहिरङ्गमुत्वम्, उत्वं वाऽन्तरङ्गम् --- प्लुतो वा बहिरङ्गः ?
वाक्यान्तस्य वाक्यादावन्तरङ्गः प्लुतः, बहिरङ्गमुत्वम् ।
समानवाक्ये पदान्तस्य पदादावुत्वमन्तरङ्गम्, बहिरङ्गः प्लुतः ।।
(सिद्धान्तभाष्यम्)
किं पुनः कारणं बहिरङ्गत्वमुत्वे हेतुर्व्यपदिश्यते, न पुनरसिद्धत्वमपि ?
यथैव ह्ययं बहिरङ्ग एवमसिद्धोऽपि ।
एवं मन्यते --- असिद्धः प्लुत आश्रयात्सिद्धो भवति ।।
अथवा यस्यां नाप्राप्तायां परिभाषायामुत्वमारभ्यते, साऽऽश्रयात्सिद्धा स्यात् ।
कस्यां च नाप्राप्तायाम् ?
असिद्धपरिभाषायाम् ।
बहिरङ्गपरिभाषायां पुनः प्राप्तायामप्राप्तायां च ।।
-6-1-115- नान्तः पादमव्यपरे (2552)
(प्रकृतिभावाधिकरणम्)
(प्रतिषेध्यबोधकभाष्यम्)
कस्यायं प्रतिषेधः ?
नान्तः पादमिति सर्वप्रतिषेधः ।
नान्तः पादमिति सर्वस्यायं प्रतिषेधः ।
कथम् ?
अचीति वर्तते, अचि यत्प्राप्नोति तस्य प्रतिषेधः ।।
(6218 अतिप्रसङ्गापादकवार्तिकम् ।। 1 ।।)
- नान्तः पादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः -
नान्तः पदमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गो भवति । इहापि प्राप्नोति --- अन्वग्निरुषसामग्रमख्यत्, प्रत्यग्निरुषसामग्रमख्यात् ।।
(प्रतिषेध्यान्तरबोधकभाष्यम्)
एवं तर्हि अति इति वर्तते । अकाराश्रयं यत्प्राप्नोति तस्य प्रतिषेधः ।।
(6219 द्वितीयस्मिन् प्रतिषेध्ये दोषवार्तिकम् ।। 2 ।।)
- अकाराश्रयमिति चेदुत्ववचनम् -
अकाराश्रयमिति चेदुत्वं वक्तव्यम् । कालो अश्वः, शतधारो अयं मणिः ।।
(6220 द्वितीये दोषवार्तिकम् ।। 3 ।।)
- अयवोः प्रतिषेधश्च -
अयवोश्च प्रतिषेधो वक्तव्यः । सुजाते अश्वसूनृते, अध्वर्यो अद्रिभिः सुतम्, शुक्रं ते अन्यत् ।।
(दोषद्वयनिराकरणभाष्यम्)
एङ्प्रकरणात्सिद्धम् । एङः-अति इति वर्तते । एङोऽति यत्प्राप्नोति तस्य प्रतिषेधः ।।
(6221 एङ्ग्रहणानुवर्तने दोषवार्तिकम् ।। 4 ।।)
- एङ्प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेधः -
एङ्प्रकरणात्सिद्धमिति चेदुत्वस्य प्रतिषेधो वक्तव्यः । अग्नेरत्र, वायोरत्र । अतो रोरप्लुतादप्लुते (113) एङश्च --- इत्युत्वं प्राप्नोति ।।
(6222 समाधानवार्तिकम् ।। 5 ।।)
- पुनरेङ्ग्रहणात्सिद्धम् -
पुनरेङ्ग्रहणं कर्तव्यम् ।।
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम्, प्रकृतमनुवर्तते ।
ननु चोक्तम् --- एङ्प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेध इति ।
नैष दोषः । पदान्ताभिसंबद्धमेङ्ग्रहणमनुवर्तते, न चैङः पदान्तात्परोरुरस्ति ।।
-6-1-123- अवङ् स्फोटायनस्य (2560)
(6223 न्यासान्तरबोधकवार्तिकम् ।। 1 ।।)
- गोरग्वचनं गवाग्रे स्वरसिद्ध्यर्थम् -
गोरग्वक्तव्यः ।
किं प्रयोजनम् ?
गवाग्रे स्वरसिद्ध्यर्थम् । गवाग्रे स्वरसिद्धिर्यथा स्यात् । गवाग्रम् ।।

(6224 प्रथमन्यासे दोषोपपादकवार्तिकम् ।। 2 ।।)
- अवङादेशे हि स्वरे दोषः -
अवङादेशे हि स्वरे दोषः स्यात् ।
अन्तोदात्तस्यान्तर्यतोऽन्तोदात्त आदेशः प्रसज्येत ।।
(दोषसमर्थकभाष्यम्)
कथं पुनरयमन्तोदात्तो यदैकाच् ?
व्यपदेशिवद्भावेन ।
यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्तः, एवमाद्युदात्तोऽपि । तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशः प्रसज्येत ।
सत्यमेवमेतत् ।
न त्विदं लक्षणमस्ति --- प्रातिपदिकस्यादिरुदात्तो भवतीति ।
इदं पुनरस्ति --- प्रातिपदिकस्यान्त उदात्तो भवतीति ।
सोऽसौ लक्षणेनान्तोदात्तः, तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत ।।
(व्युत्पत्तिपक्षाश्रयेण अवङ्न्यासस्थापनपरभाष्यम्)
यदि पुनर्गमेर्डो विधीयेत ।
किं कृतं भवति ?
प्रत्ययाद्युदात्तत्वे कृत आनन्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति ।
कथं पुनरयमाद्युदात्तो यदैकाच् ?
व्यपदेशिवद्भावेन ।
यथैव तर्हि व्यपदेशिवद्भावेनाद्युदात्तः, एवमन्तोदात्तोऽपि । तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत ।
सत्यमेवमेतत् ।
न त्विदं लक्षणमस्ति --- प्रत्ययस्यान्त उदात्तो भवतीति ।
इदं पुनरस्ति --- प्रत्ययस्यादिरुदात्तो भवतीति ।
सोऽसौ लक्षणेनाद्युदात्तः, तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति ।।
(द्विधासमर्थनेऽप्याक्षेपभाष्यम्)
एतदप्यादेशे नास्ति --- आदेशस्यादिरुदात्तो भवतीति । प्रकृतितोऽनेन स्वरो लभ्यः । प्रकृतिश्चास्य यथैवाद्युदात्ता, एवमन्तोदात्ताऽपि ।।
(सिद्धान्तभाष्यम्)
एवं तर्हि आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ।
एवमपि --- उपदेशिवद्भावो वक्तव्यः ।
यथैव निपातनस्वरः प्रकृतिस्वरस्य बाधक एवं समासस्वरस्यापि । गवास्थि, गवाक्षि ।।
-6-1-124- इन्द्रे च (2561)
(न्यासाक्षेपसमाधानभाष्यम्)
इन्द्रादाविति वक्तव्यम् ।
इहापि यथा स्यात् --- गवेन्द्रयज्ञे वीहीति ।
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् ।
नैवं विज्ञायते --- इन्द्रेऽचीति ।
कथं तर्हि ?
अचि भवति,
कतरस्मिन् ?
इन्द्रेऽचीति ।।
-6-1-125- प्लुतप्रगृह्या अचि नित्यम् (2562)
(नित्यग्रहणप्रयोजनभाष्यम्)
नित्यग्रहणं किमर्थम् ?
विभाषा मा भूदिति ।
नैतदस्ति प्रयोजनम् । पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम् ।
इदं तर्हि प्रयोजनम् --- प्लुतप्रगृह्याणामचि प्रकृतिभाव एव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।
किं चान्यत्प्राप्नोति ?
शाकलम् ।
(सिन्नित्यसमासयोः शाकलप्रतिषेधं वक्ष्यति स न वक्तव्यो भवति) ।।

(अज्ग्रहणप्रयोजनभाष्यम्)
अथाज्ग्रहणं किमर्थम् ?
अचि प्रकृतिभावो यथा स्यात् ।।
(6225 अज्ग्रहणाक्षेपवार्तिकम् ।। 1 ।।)
- प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकमधिकारात्सिद्धम् -
प्लुतप्रगृह्येषु अच्ग्रहणमनर्थकम् ।
किं कारणम् ?
अधिकारादेव सिद्धम् । अचि इति प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
इको यणचि (6-1-77) इति ।।
(6226 समाधानवार्तिकम् ।। 2 ।।)
- तत्तु तस्मिन् प्रकृतिभावार्थम् -
तत्तु द्वितीयमज्ग्रहणं कर्तव्यम्, प्रकृतिभावार्थम् ।
तस्मिन्नचि पूर्वस्य प्रकृतिभावो यथा स्यात् ।
इह मा भूत्--जानु उ अस्य रुजति, जानू अस्य रुजति, जान्वस्य रुजतीति ।।
(प्लुतस्य प्रकृतिभावाक्षेपभाष्यम्)
अथ किमर्थं प्लुतस्य प्रकृतिभाव उच्यते ?
स्वरसन्धिर्मा भूदिति ।
उच्यमानेऽप्येतस्मिन् स्वरसन्धिः प्राप्नोति ।
प्लुते कृते न भविष्यति ।
असिद्धः प्लुतस्तस्यासिद्धत्वात्प्राप्नोति ।।
(6227 समाधानवार्तिकम् ।। 3 ।।)
- प्लुतप्रकृति भाववचनं तु ज्ञापकमेकादेशात् प्लुतो विप्रतिषेधेनेति -
यदयं प्लुतः प्रकृत्येति प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्यः --- एकादेशात्प्लुतो भवति विप्रतिषेधेनेति ।।
(6228 समाधानाक्षेपवार्तिकम् ।। 4 ।।)
- एकादेशात् प्लुतो विप्रतिषेधेनेति चेच्छालेन्द्रेऽतिप्रसङ्गः -
एकादेशात्प्लुतो विप्रतिषेधेनेति चेत् शालेन्द्रेऽतिप्रसङ्गो भवति । शालायामिन्द्र--शालेन्द्रः ।।
(6229 समाधानवार्तिकम् ।। 5 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वाऽतिप्रसङ्गः ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः, अन्तरङ्ग एकादेशः । असिद्धं बहिरङ्गमन्तरङ्गे ।।
-6-1-126- आङोऽनुनासिकश्छन्दसि (2563)
(6230 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आङोऽनर्थकस्य -
आङोनर्थकस्येति वक्तव्यम् । इह मा भूत् --- इन्द्रो बाहुभ्यामातरत् ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् ।
बहुवचनान्न भविष्यति । आङोऽनुनासिकश्छन्दसि बहुलम् ।।
-6-1-127- इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ( 2564)
(चकारप्रत्याख्यानभाष्यम्)
किमर्थश्चकारः ?
प्रकृत्येत्येतदनुकृष्यते ।
किं प्रयोजनम् ?
स्वरसन्धिर्मा भूदिति ।।
नैतदस्ति प्रयोजनम् । ह्रस्ववचनसामर्थ्यान्न भविष्यति ।।
भवेत् --- दीर्घाणां ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न स्यात्, ह्रस्वानां तु खलु स्वरसन्धिः प्राप्नोति ।
ह्रस्वानामपि ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न भविष्यति ।

न ह्रस्वानां ह्रस्वाः प्राप्नुवन्ति । न हि भुक्तवान् पुनर्भुङ्क्ते, न वा कृतश्मश्रुः पुनः श्मश्रूणि कारयति ।
ननु च पुनः प्रवृत्तिरपि दृष्टा । भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रुरपि पुनः श्मश्रूणि कारयति ।
सार्मथ्यात्तत्र पुनः प्रवृत्तिर्भवति --- भोजनविशेषात्, शिल्पिविशेषाद्वा ।
ह्रस्वानां पुनर्ह्रस्ववचने न किंचित् प्रयोजनमस्ति ।
अकृतकारि खल्वपि शास्त्रमग्निवत् । तद्यथा --- अग्निर्यददग्धं तद्दहति ।।
ह्रस्वानामपि ह्रस्ववचन एतत् प्रयोजनम् --- स्वरसन्धिर्मा भूदिति ।
कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा --- पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति ।।
इदं तर्हि प्रयोजनम् --- प्लुतप्रगृह्या अनुकृष्यन्ते । इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च प्लुतप्रगृह्याश्च प्रकृत्या ।
नित्यग्रहणस्याण्येतत् प्रयोजनमुक्तम् ।
अन्यतरच्छक्यमवक्तुम् ।।
(6231 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- सिन्नित्यसमासयोः शाकलप्रतिषेधः -
सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः । अयं ते योनिर्ऋत्वियः, प्रजां विदाम ऋत्वियाम्, वैयाकरणः, सौवश्वः ।।
(वार्तिकस्थनित्यग्रहणप्रत्याख्यानभाष्यम्)
नित्यग्रहणेन नार्थः । सित्समासयोः शाकलं न भवतीत्येव । इदमपि सिद्धं भवति --- वाप्यामश्वो वाप्यश्वः, नद्यामातिर्नद्यातिः ।।
(6232 उपसंख्यानवार्तिकम् ।। 2 ।।)
- इर्षा अक्षादिषु छन्दसि प्रकृतिभावमात्रम् -
इर्षा अक्षादिषु च छन्दसि प्रकृतिभावमात्रं द्रष्टव्यम् । इर्षा अक्षः, का इर्मिरे पिशङ्गिला, यथा अङ्गदः ।।
-6-1-128- ऋत्यकः (2565)
(वार्तिकावतरणभाष्यम्)
किमर्थमिदमुच्यते ?
(6233 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- ऋत्यकः सवर्णार्थः -
सवर्णार्थोऽयमारम्भः । होतृ ऋश्यः ।।
(6234 सूत्रप्रयोजनवार्तिकम् ।। 2 ।।)
- अनिगन्तार्थं च -
खट्व ऋश्यः । माल ऋश्यः ।।
(6235 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 3 ।।)
- ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन -
ऋति ह्रस्वो भवतीत्येतस्मादुपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन ।
ऋति ह्रस्वो भवतीत्येतस्यावकाशः --- खट्व ऋश्यः, माल ऋश्यः ।
उपसर्गाद्वृद्धेरवकाशः --- विभाषा ह्रस्वत्वम्, यदा न ह्रस्वत्वं सोऽवकाशः ।
ह्रस्वप्रसङ्ग उभयं प्राप्नोति --- प्रार्ध्नोति, उपार्ध्नोति ।
उपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन ।।
(विप्रतिषेधानर्थक्यबोधकभाष्यम्)
स तर्हि विप्रतिषेधो वक्तव्यः ?
न वक्तव्यः ।
उक्तं तत्र धातुग्रहणस्य प्रयोजनम् --- उपसर्गादृति धातौ वृद्धिरेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।।
-6-1-129- अप्लुतवदुपस्थिते (2566)
(उपस्थितपदार्थबोधकभाष्यम्)
उपस्थिते इत्युच्यते, किमिदमुपस्थितं नाम ?
अनार्ष इतिकरणः । सुश्लोका 3 इति, सुश्लोकेति ।।
(पदकृत्यभाष्यम्)
अथ वद्वचनं किमर्थम् ?
(6236 वद्वचनप्रयोजनवार्तिकम् ।। 1 ।।)
- वद्वचनं प्लुतकार्यप्रतिषेधार्थम् -
वद्वचनं क्रियते प्लुतकार्यप्रतिषेधार्थम् । प्लुतकार्यं प्रतिषिध्यते, त्रिमात्रता न प्रतिषिध्यते ।
किं चेदानीं त्रिमात्रताया अप्रतिषेधे प्रयोजनम्, यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम् ?
(6237 त्रिमात्रताया अप्रतिषेधे फलबोधकवार्तिकम् ।। 2 ।।)

- प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात् -
प्लुतप्रतिषेधे हि सति प्रगृह्यस्यापि प्लुतस्य त्रिमात्रतायाः प्रतिषेधः प्रसज्येत । अग्नी3इति । वायू3इति ।
किं चेदानीं तस्या अपि त्रिमात्रताया अप्रतिषेधे प्रयोजनम् ?
यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम् ।
न भवितव्यम् ।
किं कारणम् ?
अन्येन विहितत्वात् । अन्येन हि लक्षणेन प्लुतप्रगृह्यस्य प्रकृतिभाव उच्यते । प्रगृह्यः प्रकृत्येति ।।
-6-1-130- इर्3चाक्रवर्मणस्य (2567)
(वार्तिकावतरणभाष्यम्)
किमर्थमिदमुच्यते ?
(6238 प्रयोजनवार्तिकम् ।। 1 ।।)
- इर्3 चाक्रवर्मणस्येत्यनुपस्थितार्थम् -
अनुपस्थितार्थोऽयमारम्भः । चिनु ही3 इदम् --- चिनु हीदम्, सुनु ही3 इदम्-सुनु हीदम् ।।
(इर्कारप्रत्याख्यानभाष्यम्)
इर्कारग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्याचार्यस्याप्लुतवद्भवतीत्येव ।
इदमपि सिद्धं भवति --- वशा 3 इयम्, वशेयम् ।।
-6-1-131- इर्3चाक्रवर्मणस्य (256)
(उकारादेशाधिकरणम्)
(तपरप्रयोजनभाष्यम्)
किमर्थस्तकारः ?
तपरस्तत्कालस्य (1-1-70) इति तत्कालो यथा स्यात् ।।
नैतदस्ति प्रयोजनम् ।
आन्तर्यतोऽर्द्धमात्रिकस्य व्यञ्जनस्य स्थाने मात्रिक उकारः सिद्ध्यति ।
न सिद्ध्यति । ःढ्य;ठि कृते आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति ।।
श्लोकभाष्यम् ---
तदर्थं तपरः कृतः ।
एवमर्थं तपरः क्रियते ।।
-6-1-135- सुट् कात्पूर्वः (2572)
(सुटोऽधिकरणम्)
(कात्पूर्वप्रयोजनभाष्यम्)
कात्पूर्वग्रहणं किमर्थम् ?
कात्पूर्वो यथा स्यात् --- संस्कर्ता, संस्कर्तुम् ।
नैतदस्ति प्रयोजनम् ।
सुडिति आदिलिङ्गोऽयं क्रियते, करोतिश्च ककारादिः, तत्रान्तरेण कात्पूर्वग्रहणं कात्पूर्व एव भविष्यति ।
अत उत्तरं पठति --- सुटि कात्पूर्वग्रहणमककारादौ कात्पूर्वार्थम् ।
सुटि कात्पूर्ववचनं क्रियते, अककारादौ करोतौ कात्पूर्वो यथा स्यात् । संचस्करतुः, संचस्करुः ।।
(6239 कात्पूर्वप्रयोजनाक्षेपवार्तिकम् ।। 1 ।।)
- सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि तत्सिद्धम् -
सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि कात्पूर्वग्रहणं सिद्धम् ।
कथम् ?
द्विर्वचनात्सुड्विप्रतिषेधेन । द्विर्वचनं क्रियतां सुडिति, सुड् भविष्यति विप्रतिषेधेन ।
तत्र द्विर्वचनं भवतीत्यस्यावकाशः --- बिभिदतुः, बिभिदुः ।
सुटोऽवकाशः --- संस्कर्ता, संस्कर्तुम् ।
इहोभयं प्राप्नोति --- संचस्करतुः, संचस्करुरिति ।
सुट् भवति विप्रतिषेधेन ।।
(6240 एकदेशिनो विप्रतिषेधस्वीकारे दोषवार्तिकम् ।। 2 ।।)
- द्विर्वचनात्सुड्विप्रतिषेधेनेति चेत् द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्गः -
द्विर्वचनात्सुड्विप्रतिषेधेनेति चेद्द्विर्भूते शब्दान्तरस्याकृतः सुडिति पुनः सुट् स्यात् ।।
(6241 शब्दान्तरत्वे दोषवार्तिकम् ।। 3 ।।)

- द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्ग इति चेत् द्विर्वचनम् -
सुटि कृते शब्दान्तरस्याकृतं द्विर्वचनमिति पुनर्द्विर्वचनं प्राप्नोति ।।
(6242 विप्रतिषेधस्वीकारेऽनवस्थाख्यापकवार्तिकम् ।। 4 ।।)
- तथा चानवस्था -
पुनः सुट् पुनर्द्विर्वचनमिति चक्रकमव्यवस्था प्रसज्येत ।।
(चक्रकदोषनिवारकभाष्यम्)
नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो हि नाम व्यवस्था । तत्र सुटि कृते द्विर्वचनम्, द्विर्वचनेनावस्थानं भविष्यति ।।
(6243 उपसंख्यानवार्तिकम् ।। 5 ।।)
- अड्व्यवाय उपसंख्यानम् -
अड्व्यवाये उपसंख्यानं कर्तव्यम् । समस्करोत्, समस्कार्षीत् ।।
(6244 उपसंख्यानवार्तिकम् ।। 6 ।।)
- अभ्यासव्यवाये च -
अभ्यासव्यवाये चोपसंख्यानं कर्तव्यम् । संचस्करतुः, संचस्करुः ।।
(उपसंख्यानाक्षेपभाष्यम्)
किमुच्यते अभ्यासव्यवाय इति, यदिदानीमेवोक्तम् --- द्विर्वचनात्सुड्विप्रतिषेधेनेति ।।
(6245 विप्रतिषेधाक्षेपवार्तिकम् ।। 7 ।।)
- अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् सुटः -
अविप्रतिषेधो वा पुनः सुटः ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणः सुट्, अन्तरङ्गं द्विर्वचनम् । असिद्धं बहिरङ्गमन्तरङ्गे ।।
(कात्पूर्वप्रयोजनभाष्यम्)
एवमर्थमेव तर्हि कात्पूर्वग्रहणं कर्तव्यम् --- कात्पूर्वो यथा स्यात् ।।
(कात्पूर्वग्रहणेऽप्याक्षेपभाष्यम्)
क्रियमाणेऽपि वै कात्पूर्वग्रहणेऽत्र न सिध्यति ।
किं कारणम् ?
न ह्ययं कात्पूर्वग्रहणेन शक्यो मध्ये प्रवेशयितुम् ।
किं कारणम् ?
आदिलिङ्गोऽयं क्रियते, करोतिश्च ककारादिः, दृष्टश्च पुनरातिदेशिकः करोतिरककारादिः ।।
(दोषस्थलदर्शकभाष्यम्)
पाक्षिक एष दोषः ।
कतरस्मिन् पक्षे ?
सुड्विधौ द्वैतं भवति --- अविशेषेण वा विहितस्य सुटः कात्पूर्वग्रहणं ककारादिदेशप्रक्लृप्त्यर्थं स्यात्, विशेषेण वा विधिरिति ।
द्विर्वचनविधौ चापि द्वैतं भवति --- स्थाने वा द्विर्वचनं स्यात्, द्विः प्रयोगो वा द्विर्वचनमिति ।
तद्यदा द्विः प्रयोगो द्विर्वचनम्, अविशेषेण विहितस्य च सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थं तदैष दोषः ।
यदा हि स्थाने द्विर्वचनं तदा यद्येवाविशेषेण विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थम् --- अथापि विशेषविधिः, न तदा दोषो भवति ।।
(आक्षेपनिरासभाष्यम्)
द्विः प्रयोगे चापि द्विर्वचने न दोषः ।
संपरिभ्यामिति नैषा पञ्चमी ।
का तर्हि ?
तृतीया । संपरिभ्यामुपसृष्टस्येति । व्यवहितश्चाप्युपसृष्टो भवति ।।
(6246 उपसंख्यानवार्तिकम् ।। 8 ।।)
- उपदेशिवद्वचनं च -
उपदेशिवद्भावश्च वक्तव्यः ।
किं प्रयोजनम् ?
(6247 उपसंख्यानप्रयोजनवार्तिकम् ।। 9 ।।)
- लिटिगुणचङिदीर्घप्रतिषेधार्थम् -
लिटि गुणार्थं चङि दीर्घप्रतिषेधार्थम् ।
लिटिगुणार्थं तावत् --- संचस्करतुः, संचस्करुः ।

चङि दीर्घप्रतिषेधार्थं च --- समचिस्करत् ।।
(उपसंख्यानप्रयोजनान्यथासिद्धिसाधकभाष्यम्)
लिटि गुणार्थेन तावन्नार्थः ।
वक्ष्यत्येतत् --- संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् इति ।।
चङि दीर्घप्रतिषेधार्थेनापि नार्थः ।
पदमितीयं भगवतः कृत्रिमा संज्ञा ।
युक्तमिह द्रष्टव्यम् --- किमन्तरङ्गं किं बहिरङ्गमिति ।
धातूपसर्गयोः कार्यं यत्तदन्तरङ्गम् ।
कुत एतत् ?
पूर्वं हि धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेति ।
नैतत्सारम् ।
पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण । साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम् ।
सत्यमेवमेतत् ।
यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते ।
अवश्यं चैतदेवं विज्ञेयम्, यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुः इति केन सकर्मकः स्यात् ।
एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति ।
कात्पूर्वग्रहणं चापि शक्यमकर्तुम् ।।
(वार्तिकावतरणभाष्यम्)
यदि पुनरयं सुट् कात्पूर्वान्तः क्रियते ।
(6248 पूर्वान्तत्वाक्षेपवार्तिकम् ।। 10 ।।)
- कात्पूर्वान्त इति चेद्रुविधिप्रतिषेधः -
कात्पूर्वान्त इति चेत् रुः कश्चिद्विधेयः, कश्चित्प्रतिषेध्यः । संस्कर्ता । समो विधेयः, सुटः प्रतिषेध्यः ।।
(समाधानभाष्यम्)
समस्तावन्न विधेयः ।
वक्ष्यत्येतत् --- संपुंकानां सत्वम् रुत्वविधौ ह्यनिष्टप्रसङ्गः इति ।।
सुटश्चापि न प्रतिषेध्यः ।
समः सुटि (8-3-5) इति द्विसकारको निर्देशः । सुटि सकारादाविति ।।
(वार्तिकावतरणभाष्यम्)
अथवा परादिः करिष्यते ।
(6249 परादित्वाक्षेपवार्तिकम् ।। 11 ।।)
- परादाविड्गुणप्रसङ्गः -
यदि परादिः, इड्गुणौ प्राप्नुतः ।
संस्कृषीष्ट, ऋतश्च संयोगादेः (7-2-43) इतीट् प्राप्नोति ।
संस्क्रियते, गुणोर्तिसंयोगाद्योः (7-4-29) इति गुणः प्राप्नोति ।।
(वार्तिकावतरणभाष्यम्)
एवं तर्ह्यभक्तः करिष्यते ।
<M.5.140>
(6250 अभक्तत्वाक्षेपवार्तिकम् ।। 12 ।।)
- अभक्ते स्वरे दोषः -
यद्यभक्तः स्वरो न सिध्यति । संस्करोति, तिङ्ङतिङः (8-1-28) इति निघातो न प्राप्नोति ।
ननु चात्र सुडेवातिङ् ।
न सुटः परस्य निघातेन भवितव्यम् ।
किं कारणम् ?
नञ्इवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्तमिव युक्तं चान्यस्मिन् सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते ।
तद्यथा --- अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं क्षत्रियमानयति, नासौ लोष्टमानीय कृती भवति ।
एवमिहापि अतिङ् इति प्रतिषेधादन्यस्मादतिङस्तिङ्सदृशात्कार्यं विज्ञास्यते ।
किं चान्यदतिङ् तिङसदृशम् ?

पदम् ।।
-6-1-142- अपाच्चतुष्पाच्छकुनिष्वालेखने (2579)
(6251 अर्थोपसंख्यानवार्तिकम् ।। 1 ।।)
- किरतेर्हर्षजीविकाकुलायकरणेषु -
किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् । अपस्किरते वृषो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वाऽऽश्रयार्थी ।।
-6-1-144- अपरस्पराः क्रियासातत्ये (2581)
(सातत्यपदार्थबोधकभाष्यम्)
किमिदं सातत्य इति ?
सन्ततस्य भावः सातत्यम् ।
यद्येवं सांतत्ये इति भवितव्यम् ।।
<M.5.141>
(6252 सातत्यरूपसाधकवार्तिकम् ।। 1 ।।)
?B- समो हिततततयोर्वा लोपः -
समो हिततततयोर्वा लोपो वक्तव्यः । संहितम्, सहितम् । संततम्, सततम् ।।
(6253 मलोपसाधकवार्तिकम् ।। 2 ।।)
- सम्तुमुनोः कामे -
सम्तुमुनोः कामे लोपो वक्तव्यः । सकामः । भोक्तुकामः ।।
(मलोपसाधकभाष्यम्)
मनसि चेति वक्तव्यम् । समनाः । भोक्तुमनाः ।।
(6254 मलोपसाधकवार्तिकम् ।। 3 ।।)
- अवश्यमः कृत्ये -
अवश्यमः कृत्ये लोपो वक्तव्यः । अवश्यभाव्यम् ।।
-6-1-145- गोष्पदं सेवितासेवितप्रमाणेषु (2581)
(असेवितपदप्रयोजनभाष्यम्)
इदमतिबहु क्रियते --- सेविते --- असेविते --- प्रमाण इति, सेवितप्रमाणयोरित्येव सिद्धम् ।
केनेदानीमसेविते भविष्यति ?
नञ्ा सेवितप्रतिषेधं विज्ञास्यामः ।।
नैवं शक्यम् ।
सेवितप्रसङ्ग एव स्यात्, असेविते न स्यात् । असेवितग्रहणे पुनः क्रियमाणे बहुव्रीहिरयं विज्ञास्यते --- अविद्यमानसेविते --- असेवित इति ।
तस्मादसेवितग्रहणं कर्तव्यम् ।।
<M.5.142>
-6-1-147- आश्चर्यमनित्ये (2584)
(6256 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आश्चर्यमद्भुते -
आश्चर्यमद्भुत इति वक्तव्यम् । इहापि यथा स्यात् --- आश्चर्यमुच्चता वृक्षस्य, आश्चर्यं नीला द्यौः, आश्चर्यमन्तरिक्षेऽबन्धनानि नक्षत्राणि न पतन्तीति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् । अनित्ये इत्येव सिद्धम् ।
इह तावत् --- आश्चर्यमुच्चता वृक्षस्येति, आश्चर्यग्रहणेन वृक्षोऽभिसंबध्यते ।
किं तर्हि ?
उच्चता । सा चानित्या ।।
आश्चर्यं नीला द्यौरिति, नाश्चर्यग्रहणेन द्यौरभिसम्बध्यते ।
किं तर्हि ?
नीलता । सा चानित्या ।।
आश्चर्यमन्तरिक्षेऽबन्धनानि नक्षत्राणि न पतन्तीति, नाश्चर्यग्रहणेन नक्षत्राण्यभिसम्बध्यन्ते ।
किं तर्हि ?
पतनक्रिया । सा चानित्या ।
तत्रानित्य इत्येव सिद्धम् ।।

-6-1-150- विष्किरः शकुनौ वा (2583)
(6255 उपसंख्यानवार्तिकम् ।। 1 ।।)
- विष्किरः शकुनौ विकिरो वा -
विष्किरः शकुनौ विकिरो वेति वक्तव्यम् । शकुनौ वेत्युच्यमाने शकुनौ वा स्यादन्यत्रापि नित्यम् ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् । न वावचनेन शकुनिरभिसंबध्यते ।
किं तर्हि ?
निपातनमभिसंबध्यते --- विष्किर इत्येतन्निपातनं शकुनौ वा निपात्यत इति ।।
-6-1-154- मस्करमस्करिणौ वेणुपरिव्राजकयोः (2591)
(मस्करिग्रहणप्रयोजनभाष्यम्)
मस्करिग्रहणं शक्यमकर्तुम् ।
कथं मस्करी परिव्राजक इति ?
इनिनैतन्मत्वर्थीयेन सिद्धम् । मस्करोस्यास्तीति ।
न वै मस्करी मस्करोऽस्यास्तीति --- परिव्राजकः ।
किं तर्हि ?
मा कृत कर्माणि मा कृत कर्माणि शान्तिर्वः श्रेयसीत्याह, अतो मस्करी --- परिव्राजकः ।।
<M.5.143>
-6-1-157- पारस्करप्रभृतीनि च संज्ञायाम् (2594)
(गणस्वरूपसाधकभाष्यम्)
अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः ।
पारस्करो देशः । कारस्करो वृक्षः । रथस्पा नदी । किष्किन्धा गुहा । किष्कुः ।।
तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च ।
तस्करः, बृहस्पतिः ।।
प्रायस्य चित्तिचित्तयोः सुडस्कारो वा ।
प्रायश्चित्तिः । प्रायश्चित्तम् ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ।।
-6-1-159- कर्षात्वतो घञोऽन्त उदात्तः ( 2596)
(विकृतग्रहणप्रयोजनभाष्यम्)
किमर्थं कृषेर्विकृतस्य ग्रहणं क्रियते न कृषात्वतः इत्येवोच्येत ?
यस्य कृषेर्विकरण एतद्रूपं तस्य यथा स्यात् ।
इह मा भूत् --- हलस्य कर्षः इति ।।
(मतुबन्तग्रहणप्रयोजनभाष्यम्)
अथ किमर्थं मतुपा निर्देशः क्रियते, न कर्षातः इत्येवोच्येत ?
कर्षातः इतीयत्युच्यमाने यत्रैवाकारादनन्तरो घञस्ति तत्रैव यथा स्यात् । दायः, धायः ।
इह न स्यात् --- पाकः, पाठः ।।
न क्वचिदाकारादनन्तरो घञस्ति । इहापिदायः, धायः --- इति युका व्यधानम् ।।
एवमपि विहितविशेषणमाकारग्रहणं विज्ञायेत-- आकाराद्यो विहित इति ।
मतुब्ग्रहणे पुनः क्रियमाणे न दोषो भवति ।।
-6-1-161- अनुदात्तस्य च यत्रोदात्तलोपः (2598)
(पदकृत्यभाष्यम्)
अनुदात्तस्येति किमर्थम् ?
प्रासङ्गं वहति प्रासङ्ग्यः ।।
(6272 अनुदात्तस्येति पदस्य प्रत्याख्यानवार्तिकम् ।। 1 ।।)
- उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् -
उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणमनर्थकम् । न हि कश्चिदुदात्त उदात्ते स्वरिते वा लुप्यते, सर्वोऽनुदात्त एव ।
ननु चायमुदात्तः स्वरिते लुप्यते --- प्रासङ्गं वहति --- प्रासङ्ग्य इति ।
एषोऽपि निघाते कृतेऽनुदात्त एव लुप्यते ।
इदमिह संप्रधार्यम् --- निघातः क्रियताम्, लोप इति; किमत्र कर्तव्यम् ?

परत्वाल्लोपः ।
एवं तर्ह्ययमद्य निघातस्वरः सर्वस्वराणामपवादः । न चापवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वाऽपवादविषयं तत उत्सर्गोऽभिनिविशते ।
तन्न तावदत्र कदाचिदन्तोदात्तस्थाथादिस्वरो भवति, अपवादं निघातं प्रतीक्षते ।
तत्र --- निघातः क्रियतां लोप इति, यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तः --- अनुदात्ते लुप्यते ।।
(वार्तिकावतरणभाष्यम्)
किं पुनरनुदात्तस्यान्त उदात्तो भवति, आहोस्विदादिः ?
कश्चात्र विशेषः ?
(6273 अन्तोदात्तत्वे दोषवार्तिकम् ।। 2 ।।)
- अन्त इति चेत् श्ॅम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरः -
अन्त इति चेत् श्ॅम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरो न सिध्यति ।
श्ॅम् --- विन्दाते, खिन्दाते । श्ॅम् ।।
क्स --- मा हि धुक्षाताम्, मा हि धुक्षाथाम् । क्स ।।
युष्मदस्मद् --- युष्मभ्यम्, अस्मभ्यम् ।।
इदम्किम्लोपः --- इयान्, कियान् ।।
अस्तु तर्ह्यादिः ।
(6274 आदेरुदात्तत्वे दोषवार्तिकम् ।। 3 ।।)
- आदिरिति चेदिन्धीत द्वयमित्यन्तः -
आदिरिति चेदिन्धीत द्वयमित्यन्तोदात्तत्वं विधेयम् । इन्धीत्, द्वयम् --- त्रयम् ।।
(6275 आद्युदात्तत्वस्थापकवार्तिकम् ।। 4 ।।)
आदौ सिद्धम्
अस्तु तर्ह्यादिरुदात्तो भवतीति ।।
(वार्तिकावतरणभाष्यम्)
ननु चोक्तम् --- आदिरिति चेदिन्धीत द्वयमित्यन्त इति ।।
(6276 आद्युदात्तत्वे दोषवारकवार्तिकम् ।। 5 ।।)
- विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम् -
विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं लिङि नेति वक्तव्यम् ।।
लिङ्ग्रहणेन नार्थः, अविशेषेण विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं नेत्येव ।
इदमपि सिद्धं भवति --- विन्दाते, खिन्दाते ।।
अयचि कथम् ?
(6277 दोषवारकवार्तिकम् ।। 6 ।।)
- अयचि चित्करणात् -
अयचि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति ।।े
-6-1-162- धातोः - (2599)
(वार्तिकावतरणभाष्यम्)
किं धातोरन्त उदात्तो भवति, आहोस्विदादिरिति ?
कश्चात्र विशेषः ?
(6278 अन्तोदात्तत्वे दोषवार्तिकम् ।। 1 ।।)
- धातोरन्त इति चेदनुदात्तेचबग्रहणम् -
धातोरन्त इति चेदनुदात्तेचबग्रहणं कर्तव्यम् ।
अभ्यस्तानामादिः अनुदात्ते च (6-1-189;190) इति वक्तव्यम् ।
बग्रहणं च कर्तव्यम् । बान्तश्च पिबतिराद्युदात्तो भवतीति वक्तव्यम् ।।
(6279 अन्तोदात्तत्वे दोषवार्तिकम् ।। 2 ।।)
- संश्च नित् -
संश्च नित्कर्तव्यः ।
किं प्रयोजनम् ?
चिकीर्षति, जिहीर्षति --- नितीत्याद्युदात्तत्वं यथा स्यात् ।।
अस्तु तर्ह्यादिः ।
(6280 आद्युदात्तत्वे दोषवार्तिकम् ।। 3 ।।)

- आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वम् -
आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वं न सिध्यति ।
ाढ्य;र्णोति । ाढ्य;र्णु ।।
प्रत्ययधातु --- गोपायति, धूपायति, ऋतीयते ।।
(6281 सिद्धान्तवार्तिकम् ।। 4 ।।)
- अन्तोदात्तवचनात्सिद्धम् -
अस्तु तर्ह्यन्तोदात्तो भवतीति ।।
ननु चोक्तम् --- धातोरन्त इति चेदनुदात्तेचबग्रहणं कर्तव्यमिति ।
यत्तावदुच्यते --- अनुदात्ते च ग्रहणं कर्तव्यमिति ।
क्रियते न्यास एव --- अभ्यस्तानामादिः, अनुदात्ते च इति ।।
बग्रहणं कर्तव्यमिति ।
(6282 सिद्धान्तसाधकवार्तिकम् ।। 5 ।।)
- पिबौ निपातनात् -
पिबावाद्युदात्तनिपातनं क्रियते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ।।
संश्च नित्कर्तव्य इति ।
अवश्यं सनो विशेषणार्थो नकारः कर्तव्यः ।
क्व विशेषणार्थेनार्थः ?
सन्यङोः (6-1-9) इति ।
सयङोरितीयत्युच्यमाने --- हंसः, वत्सः --- अत्रापि प्राप्नोति ।
अर्थवद्ग्रहणेनानर्थकस्य इत्येवं न भविष्यति ।
इहापि तर्हि न प्राप्नोति --- जुगुप्सते, मीमांसत इति ।
अर्थवानेषः ।
न वै कश्चिदर्थ आदिश्यते ।
यद्यपि कश्चिदर्थो नादिश्यते, अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति --- इति --- अन्ततः स्वार्थे भविष्यति
।
कश्चास्य स्वार्थः ?
प्रकृत्यर्थः ।
इहापि तर्हि प्राप्नोति --- हंसः, वत्सः --- इति ।
उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।।
स एषोऽनन्यार्थो नकारः कर्तव्यः ।
न कर्तव्यः ।
क्रियते न्यास एव ।।
अथवा धातोरिति वर्तते । धातोः सशब्दान्तस्य द्वे भवति इति ।।
-6-1-163- चितः (2600)
(6283 उपसंख्यानवार्तिकम् ।। 1 ।।)
- चितः सप्रकृतेर्बह्वकजर्थम् -
चितः सप्रकृतेरिति वक्तव्यम् ।
किं प्रयोजनम् ?
बह्वकजर्थम् । बहुजर्थमकजर्थं च ।
बहुजर्थं तावत् --- बहुभुक्तम्, बहुकृतम् ।
अकजर्थम् --- सर्वकैः, विश्वकैः, उच्चकैः, नीचकैः, सर्वके, विश्वके ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् । मतुब्लोपोऽत्र द्रष्टव्यः ।
तद्यथा --- पुष्पका एषां ते पुष्पकाः, कालका एषां ते कालकाः ।।
अथवाऽकारो मत्वर्थीयः ।
तद्यथा --- तुन्दः, घाट इति ।
पूर्वसूत्रनिर्देशश्च --- चित्वान् --- चित इति ।।
-6-1-167-चतुरः शसि (2604)

(प्रतिषेधोपसंख्यानभाष्यम्)
शसि स्त्रियां प्रतिषेधो वक्तव्यः । चतस्रः पश्य ।।
(6285 प्रतिषेधाक्षेपवार्तिकम् ।। 1 ।।)
- चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् -
चतुरः शसि स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधः --- अप्रतिषेधः ।
शसि स्वरः कस्मान्न भवति ?
आद्युदात्तनिपातनात् । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः शसि स्वरस्य बाधको भविष्यति ।।
(उपदेशिवद्भावोपसंख्यानभाष्यम्)
एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः शसि स्वरं बाधते, एवं विभक्तिस्वरमपि बाधेत --- चतसृणामिति ।।
(6286 उपदेशिवद्भावाक्षेपवार्तिकम् ।। 2 ।।)
- विभक्तिस्वरभावश्च हलादिग्रहणात् -
विभक्तिस्वरस्य च भावः सिद्धः ।
कुतः ?
हलादिग्रहणात् । यदयं षट्त्रिचतुर्भ्यो हलादिः (6-1-179) इति हलादिग्रहणं करोति तज्ज्ञापयत्याचार्यः --- न निपातनस्वरो विभक्तिस्वरं बाधत इति ।
कथं कृत्वा ज्ञापकम् ?
(6287 आक्षेपसाधने ज्ञापनसाधकवार्तिकम् ।। 3 ।।)
- आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् -
आद्युदात्तनिपातने हि सति हलादिग्रहणमनर्थकं स्यात् । न ह्यन्यद्धलादिग्रहणं प्रयोजयति --- अन्यदतश्चतसृशब्दात् ।।
षट्संज्ञास्तावन्न प्रयोजयन्ति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
जसिशसी चातो लुप्येते ।
अन्याः सर्वा हलादयो विभक्तयः ।।
त्रिशब्दश्चापि न प्रयोजयति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम्।
शसि भवितव्यम् --- एकादेश उदात्तेनोदात्तः इति ।
अन्या --- सर्वा हलादयो विभक्तयः ।।
तिसृशब्दोऽपि न प्रयोजयति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम् ।
शसि भवितव्यम् --- उदात्तयणो हल्पूर्वात् (6-1-174) इति ।
अन्याः सर्वा हलादयो विभक्तयः ।।
चतुः शब्दश्चापि न प्रयोजयति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
असर्वानामस्थानमिति वचनाज्जसि न भवितव्यम् ।
शसि भवितव्यम् --- चतुरः शसि इति ।
?B अन्याः सर्वा हलादयो विभक्तयः ।।
तत्र चतसृशब्दादेकस्माच्छस् --- असर्वनामस्थानमजादिर्विभक्तिरस्ति । यदि चात्र निपातनस्वरः स्यात् हलादिग्रहणमनर्थकं स्यात् ।।
(सिद्धान्तभाष्यम्)
नैव वा पुनरत्र शसि स्वरः प्राप्नोति ।
किं कारणम् ?
यणादेशे कृते शसः पूर्व उदात्तभावी नास्तीति कृत्वा ।
अवशिष्टस्य तर्हि प्राप्नोति ।
ऋकारेण व्यवहितत्वान्न भविष्यति ।

यणादेशे कृते नास्ति व्यवधानम् ।
स्थानिवद्भावाद्व्यवधानमेव ।
प्रतिषिध्यते तत्र स्थानिवद्भावः --- स्वरविधिं प्रति न स्थानिवद्भवतीति ।
नैषोऽस्ति प्रतिषेधः । उक्तमेतत्प्रतिषेधे --- स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति ।।
-6-1-166- तिसृभ्यो जसः (2603)
(विभक्त्युदात्ताधिकरणम्)
(जस्ग्रहणप्रयोजनभाष्यम्)
जस इति किमर्थम् ?
तिसृका ।।
(6284 प्रयोजनाक्षेपवार्तिकम् ।। 1 ।।)
- तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् -
तिसृभ्यो जस्ग्रहणमनर्थकम् ।
किं कारणम् ?
अन्यत्राभावात् । न ह्यन्यत् तिसृशब्दादन्तोदात्तत्वं प्रयोजयति, अन्यदतो जसः ।
किं कारणम् ?
बहुवचनविषय एव तिसृशब्दः , तेनैकवचनद्विवचने न स्तः ।
शसि भवितव्यम् --- उदात्तयणो हल्पूर्वात् (6-1-174) इति ।
अन्याः सर्वा हलादयो विभक्तयः, तत्र षट्त्रिचतुर्भ्यो हलादिः झल्युपोत्तमम् (6-1-179;80) इत्यनेन स्वरेण भवितव्यम् ।
तत्रान्तरेण जसो ग्रहणं जस एव भविष्यति ।।
ननु चेदानीमेवोदाहृतम् --- तिसृका --- इति ।
नित्स्वरोऽत्र बाधको भविष्यति । नाप्राप्तेऽन्यस्वरे तिसृस्वर आरभ्यते, स यथैव अनुदात्तौ सुप्पितौ (3-1-4) इत्येतं स्वरं बाधते, एवं नित्स्वरमपि बाधेत ।।
नैष दोषः । येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्तेऽनुदात्तौ सुप्पितावित्येतस्मिंस्तिसृस्वर आरभ्यते, नित्स्वरे पुनः प्राप्ते चाप्राप्ते च ।
अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवं तिसृस्वरोऽनुदात्तौ सुप्पिताविति स्वरं बाधिष्यते, नित्स्वरं न बाधिष्यते ।।
(जस्प्रयोजनभाष्यम्)
उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति । अतितिस्रौ, अतितिस्रः ।।
-6-1-167-चतुरः शसि (2604)
(प्रतिषेधोपसंख्यानभाष्यम्)
शसि स्त्रियां प्रतिषेधो वक्तव्यः । चतस्रः पश्य ।।
(6285 प्रतिषेधाक्षेपवार्तिकम् ।। 1 ।।)
- चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् -
चतुरः शसि स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधः --- अप्रतिषेधः ।
शसि स्वरः कस्मान्न भवति ?
आद्युदात्तनिपातनात् । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः शसि स्वरस्य बाधको भविष्यति ।।
(उपदेशिवद्भावोपसंख्यानभाष्यम्)
एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः शसि स्वरं बाधते, एवं विभक्तिस्वरमपि बाधेत --- चतसृणामिति ।।
(6286 उपदेशिवद्भावाक्षेपवार्तिकम् ।। 2 ।।)
- विभक्तिस्वरभावश्च हलादिग्रहणात् -
विभक्तिस्वरस्य च भावः सिद्धः ।
कुतः ?
हलादिग्रहणात् । यदयं षट्त्रिचतुर्भ्यो हलादिः (6-1-179) इति हलादिग्रहणं करोति तज्ज्ञापयत्याचार्यः --- न निपातनस्वरो विभक्तिस्वरं बाधत इति ।
कथं कृत्वा ज्ञापकम् ?
(6287 आक्षेपसाधने ज्ञापनसाधकवार्तिकम् ।। 3 ।।)
- आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् -
आद्युदात्तनिपातने हि सति हलादिग्रहणमनर्थकं स्यात् । न ह्यन्यद्धलादिग्रहणं प्रयोजयति --- अन्यदतश्चतसृशब्दात् ।।
षट्संज्ञास्तावन्न प्रयोजयन्ति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।

जसिशसी चातो लुप्येते ।
अन्याः सर्वा हलादयो विभक्तयः ।।
त्रिशब्दश्चापि न प्रयोजयति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम्।
शसि भवितव्यम् --- एकादेश उदात्तेनोदात्तः इति ।
अन्या --- सर्वा हलादयो विभक्तयः ।।
तिसृशब्दोऽपि न प्रयोजयति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम् ।
शसि भवितव्यम् --- उदात्तयणो हल्पूर्वात् (6-1-174) इति ।
अन्याः सर्वा हलादयो विभक्तयः ।।
चतुः शब्दश्चापि न प्रयोजयति ।
किं कारणम् ?
बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।
असर्वानामस्थानमिति वचनाज्जसि न भवितव्यम् ।
शसि भवितव्यम् --- चतुरः शसि इति ।
अन्याः सर्वा हलादयो विभक्तयः ।।
तत्र चतसृशब्दादेकस्माच्छस् --- असर्वनामस्थानमजादिर्विभक्तिरस्ति । यदि चात्र निपातनस्वरः स्यात् हलादिग्रहणमनर्थकं स्यात् ।।
(सिद्धान्तभाष्यम्)
नैव वा पुनरत्र शसि स्वरः प्राप्नोति ।
किं कारणम् ?
यणादेशे कृते शसः पूर्व उदात्तभावी नास्तीति कृत्वा ।
अवशिष्टस्य तर्हि प्राप्नोति ।
ऋकारेण व्यवहितत्वान्न भविष्यति ।
यणादेशे कृते नास्ति व्यवधानम् ।
स्थानिवद्भावाद्व्यवधानमेव ।
प्रतिषिध्यते तत्र स्थानिवद्भावः --- स्वरविधिं प्रति न स्थानिवद्भवतीति ।
नैषोऽस्ति प्रतिषेधः । उक्तमेतत्प्रतिषेधे --- स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति ।।
-6-1-168- सावेकाचस्तृतीयादिर्विभक्तिः (2605)
(सुपदार्थनिर्णायकभाष्यम्)
साविति किमिदं प्रथमैकवचनस्य ग्रहणम्, आहोस्वित्सप्तमीबहुवचनस्य ?
कुतः सन्देहः ?
समानो निर्देशः ।
सप्तमीबहुवचनस्य ग्रहणम् ।
कथं ज्ञायते ?
यदयं न गोश्वन्साववर्ण --- (6-1-182) इति गोशुनोः प्रतिषेधं शास्ति ।
कथं कृत्वा ज्ञापकम् ?
यदि प्रथमैकवचनस्य ग्रहणं स्यात् गोशुनोः प्रतिषेधवचनमनर्थकं स्यात् ।
ननु चार्थसिद्धिरेवैषा ।
अनुगृहीताः स्मः । यैरस्माभिः प्रथमैकवचनमास्थाय गोशुनोः प्रतिषेधो वक्तव्यः इति स न वक्तव्यो भवति ।
भवेत्प्रतिषेधो न वक्तव्यः ।
दोषास्तु भवन्ति ।
तत्र को दोषः ?
स्विना, खिना । अन्तोदात्तत्वन्न प्राप्नोति ।
स्विखिनौ न स्तः । उक्तमेतत् ---
एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ।।

स्ववान् खवान् इत्येव भवितव्यम् ।।
इह तर्हि --- यादृभ्याम् --- यादृिभः --- इति न सिध्यति ।
तस्मात्सप्तमीबहुवचनस्य ग्रहणम् ।।
(6288 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधः -
सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधो वक्तव्यः । त्वया, मया ।।
(6289 उपसंख्यानाक्षेपवार्तिकम् ।। 2 ।।)
- सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ -
सिद्धमेतत् ।
कथम् ?
यस्मादत्र तृतीयादिर्न तत्सावस्ति ।।
यद्यपि तत् सौ नास्ति, प्रकृतिस्तस्य सावस्ति ।।
(6290 आक्षेपसाधकवार्तिकम् ।। 3 ।।)
- प्रकृतेस्त्वनेकाच्त्वात् -
यद्यपि तस्य प्रकृतिरस्ति सावनेकाच्तु सा भवति ।।
-6-1-169- अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यमासे (2606)
(उत्तरपदग्रहणजिज्ञासाभाष्यम्)
उत्तरपदग्रहणं किमर्थम् ?
(उत्तरपदप्रयोजनभाष्यम्)
यथैकाज्ग्रहणमुत्तरपदविशेषणं विज्ञायेत --- एकाजुत्तरपदादिति ।
अथाक्रियमाण उत्तरपदग्रहणे कस्यैकाज्ग्रहणं विशेषणं स्यात् ?
समासविशेषणम् ।
अस्ति चेदानीं कश्चिदेकाच्समासः, यदर्थमेकाज्ग्रहणं स्यात् ?
अस्तीत्याह । शुनः ःढ़य;र्क् --- श्वोर्क्, श्वोर्जा, श्वोर्जे इति ।।
-6-1-171- ःढ़य;डिदंपदाद्यप्पुम्रैद्युभ्यः (2608)
(पदादिविषये विशेषबोधकभाष्यम्)
पदादिषु निश्पर्यन्तानि प्रयोजयन्ति । अन्यानि पदादीनि उदात्तनिवृत्तिस्वरेण सिद्धानि ।।
(6291 उपसंख्यानवार्तिकम् ।। 1 ।।)
- ःढ़य;ठ्युपधाग्रहणम् -
ःढ़य;ठ्युपधाग्रहणं कर्तव्यम् ।
किं प्रयोजनम् ?
अन्त्यप्रतिषेधार्थम् । अन्त्यस्य मा भूदिति । अक्षद्युवा, अक्षद्युवे ।।
-6-1-172- अष्टनो दीर्घात् (2609)
(दीर्घात्पदवैर्य्यर्थ्यबोधकभाष्यम्)
दीर्घग्रहणं किमर्थम्
अष्टसु प्रक्रमेषु ब्राह्मण आदधीत।। दीर्घादिति शक्यमकर्तुम्। कस्मान्न भवति--अष्टसु प्रक्रमेषु ब्राह्मण आदधीतेति ? षट्स्वरोऽत्र बाधको भविष्यति। नाप्राप्ते षट्स्वरे अष्टनः स्वर आरभ्यते स यथैव दीर्घाद्बाधते,एवं ह्रस्वादपि बाधेत। न दीर्घात्षट्स्वरः प्राप्नोति। किं कारणम् ? आत्वे कृते षट्संज्ञाऽभावात् । अत उत्तरं पठति--
(6292 दीर्घात्पदस्य ज्ञापकत्वस्थापकवार्तिकम्)
अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्।।1।।
अष्टनो दीर्घग्रहणं क्रियते ज्ञापकार्थम्। किं ज्ञाप्यम्? एतज्ज्ञापत्याचार्यः--भवत्यात्वे कृते षट्संज्ञेति। किमेतस्य ज्ञापने प्रयोजनम्? आकारान्तस्य नुडर्थम् । आकारन्तस्य नुट् सिद्धो भवति --अष्टनामिति।। ननु च नित्यमात्वम् एतदेव ज्ञापयति--विभाषा आत्वमिति, यदयं दीर्घग्रहणं करोति। इतरथा हि अष्टनः इत्येव ब्रूयात्।।
-6-1-173- शतुरनुमो नद्यजादी ( 2610)
(6293 उपसंख्यानवार्तिकम् ।। 1 ।।)
- नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् -
नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानं कर्तव्यम् । बृहती, बृहता । महती, महता ।।
-6-1-174- उदात्तयणो हल्पूर्वात् (2611)
(पदकृत्यभाष्यम्)

हल्पूर्वादिति किमर्थम् ?
अग्नये, वायवे ।।
(6294 न्यासान्तरेण लक्ष्यसिद्धिबोधकवार्तिकम् ।। 1 ।।)
- उदात्तयणि हल्ग्रहणं नकारान्तार्थम् -
उदात्तयणि हल्ग्रहणं कर्तव्यम् ।
किं प्रयोजनम् ?
नकारान्तार्थम् । नकारान्तादपि यथा स्यात् । वाक्पत्नी, चित्पत्नी ।।
(6295 हल्पूर्वग्रहणानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वात् -
हल्पूर्वग्रहणं चानर्थकम् ।
किं कारणम् ?
समुदायादेशत्वात् । समुदायोऽत्रादेशः ।।
(6296 आनर्थक्योपष्टम्भकवार्तिकम् ।। 3 ।।)
- स्वरितत्वे वावचनात् -
स्वरितत्वे च हल्पूर्वग्रहणस्यावचनात् मन्यामहे --- हल्पूर्वग्रहणमनर्थकमिति ।।
(वार्तिकत्रयप्रत्याख्यानभाष्यम्)
यत्तावदुच्यते --- उदात्तयणि हल्ग्रहणं नकारान्तार्थमिति, क्रियते न्यास एव । द्विनकारको निर्देशः --- उदात्तयणो हल्पूर्वान्नोङ्धात्वोरिति ।।
यदप्युच्यते --- हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वादिति, अयमस्ति केवल आदेशः --- बहुतितवा, बहुतितवे --- इति ।।
-6-1-176- ह्रस्वनुड्भ्यां मतुप् (2613)
(6297 उपसंख्यानवार्तिकम् ।। 1 ।।)
- मतुबुदात्तत्वे रेग्रहणम् -
मतुबुदात्तत्वे रेग्रहणं कर्तव्यम् । आरेवानेतु नो विशः ।।
(6298 उपसंख्यानवार्तिकम् ।। 2 ।।)
- त्रिप्रतिषेधश्च -
त्रेश्च प्रतिषेधो वक्तव्यः । त्रिवतीर्याज्यानुवाक्या भवन्ति ।।
-6-1-177- नामन्यतरस्याम् (2614)
(उद्देश्यतावच्छेदकनिर्णायकभाष्यम्)
इह कस्मान्न भवति --- किशोरीणाम्, कुमारीणाम् ?
ह्रस्वादिति वर्तते ।
इहापि तर्हि न प्राप्नोति --- अग्नीनाम्, वायूनाम् ।
किं कारणम् ?
दीर्घत्वे कृते ह्रस्वाभावात् ।
इदमिह संप्रधार्यम् --- दीर्घत्वं क्रियतां स्वर इति, किमत्र कर्तव्यम् ?
परत्वाद्दीर्घत्वम् ।
एवं तर्हि ---
(6299 ह्रस्वोपसंख्यानवार्तिकम् ।। 1 ।।)
- नाम्स्वरे मतौ ह्रस्वग्रहणम् -
नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यम् --- मतौ ह्रस्वान्तात् इति ।।
(ह्रस्वग्रहणे प्रत्याख्यानभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् । आहायम् --- ह्रस्वान्तादिति, न च नामि ह्रस्वान्तोऽस्ति, तत्र भूतपूर्वगतिर्विज्ञास्यते --- ह्रस्वान्तं भूतपूर्वमिति ।।
सांप्रतिकाभावे भूतपूर्वगतिर्विज्ञायते ।
अयं चास्ति सांप्रतिकः --- तिसृणाम्, चतसृणामिति ।
नैतदस्ति । षट्त्रिचतुर्भ्यो हलादिः (6-1-179) इत्यनेनात्र भवितव्यम् । तस्मिन्नित्ये प्राप्ते इयं विभाषाऽऽरभ्यते ।
एवं तर्हि योगविभागः करिष्यते --- षट्त्रिचतुर्भ्यः, नामुदात्तो भवति ।
ततः --- हलादिः, हलादिश्च विभक्तिरुदात्ता भवति षट्त्रिचतुर्भ्य इति ।।
इदं तर्हि --- त्वं नृणां नृपते जायसे शुचिः ।
ननु चात्रापि नृ चान्यतरस्याम् (6-1-184) इत्येष स्वरोऽत्र बाधको भविष्यति ।
न सिद्ध्यति ।

किं कारणम् ?
झल्ग्रहणं तत्रानुवर्तते ।
किं पुनः कारणं झल्ग्रहणं तत्रानुवर्तते ?
इह मा भूत् --- न्रा. न्रे । उदात्तयणो हल्पूर्वात् (6-1-174) इत्येष स्वरोऽत्र बाधको भविष्यति ।।
इदं तर्हि --- नरि ।
नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात् नाम् इत्येव ब्रूयात् । तत्र वचनात् भूतपूर्वगतिर्विज्ञास्यते --- ह्रस्वान्तं यद्भूतपूर्वमिति ।।
अथवा नैवं विज्ञायते --- नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यमिति ।
कथं तर्हि ?
नाम्स्वरे मतौ ह्रस्वादिति वर्तत इति ।।
-6-1-182- न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः (2619)
(एकदेशिनः सौ इति सप्तमीबहुवचननिर्णयभाष्यम्)
साविति किमिदं प्रथमैकवचनस्य ग्रहणम्, आहोस्वित्सप्तमीबहुवचनस्य ?
कुतः सन्देहः ?
समानो निर्देशः ।
पुरस्तादेष निर्णयः --- सप्तमीबहुवचनस्य ग्रहणमिति, इहापि तदेव भवितुमर्हति।।
(सप्तमीग्रहणे आक्षेपभाष्यम्)
यदि सप्तमीबहुवचनस्य ग्रहणम्, ताभ्यां ब्राह्मणाभ्याम् --- याभ्यां ब्राह्मणाभ्याम् --- अत्र न प्राप्नोति ।
विधिरप्यत्र न सिध्यति ।
किं कारणम् ?
न ह्येतद्भवति --- यत्सौ रूपम् ।
इदं तर्हि --- तेभ्यो ब्राह्मणेभ्यः, येभ्यो ब्राह्मणेभ्यः ।
विधिश्च सिद्धो भवति ।
प्रतिषेधस्तु न प्राप्नोति ।।
(प्रत्याक्षेपभाष्यम्)
अस्ति पुनः सप्तमीबहुवचनस्य ग्रहणे किंचिदिष्टं संगृहीतं भवति, आहोस्विद्दोषान्तमेव ।
अस्तीत्याह ।
इह --- याभ्यो ब्राह्मणीभ्यः ताभ्यो ब्राह्मणीभ्यः इति । विधिश्च सिद्धो भवति प्रतिषेधश्च ।
(साविति प्रथमैकवचनकग्रहणे दोषभाष्यम्)
अस्तु तर्हि प्रथमैकवचनस्य ग्रहणम् ।
यदि प्रथमैकवचनस्य ग्रहणम्, तेन इति स्वरः पुंसि न सिद्ध्यति ।
न चावश्यं पुंस्येव, स्त्रियां पुंसि नपुंसके च । तेन ब्राह्मणेन, तया ब्राह्मण्या, तेन कुण्डेन --- इति ।
सप्तमीबहुवचनस्यापि ग्रहणे एष दोषः ।।
(यत्तदोर्ग्रहणेन प्रथमैकवचनस्थापनभाष्यम्)
तस्मादुभाभ्यामपि प्रतिषेधे यत्तदोश्च ग्रहणं कर्तव्यम् --- इति । न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः यत्तदोश्च इति ।।
तेनेति यदुपन्यस्तं प्राप्तस्तत्र कथं स्वरः ।
एकारान्तं यदेकाच् सौ तस्मादत्र परो न टा ।।
न चाद्गुणे कृते प्राप्तिर्निषेधादुभयाश्रये ।
विधावन्तादिवत्त्वस्य चिन्त्यं तस्मादिदं बुधैः ।।
-6-1-185- तित्स्वरितम् (2622)
(स्वरिताधिकरणम्)
(6300 उपसंख्यानवार्तिकम् ।। 1 ।।)
- तिति प्रत्ययग्रहणम् -
तिति प्रत्ययग्रहणं कर्तव्यम् ।
इह मा भूत् --- ॠत इद्धातोः (7-1-100) किरति, गिरति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् ।
नैष तकारः ।

कस्तर्हि ?
दकारः ।।
(दकारकरणे दोषनिवारकभाष्यम्)
यदि दकार आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति ।
भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति ।।
(भाव्यमानोऽप्युकार इति परिभाषासाधकभाष्यम्)
यदि भाव्यमानेन सवर्णानां ग्रहणं नेत्युच्यते अदसोसेर्दादुदोमः (8-2-80) अमूभ्यामित्यत्र न प्राप्नोति ।
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति --- भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणम् --- इति, यदयं दिव उत् (6-1-131) इति उकारं तपरं करोति ।।
(उपसंख्यानोपष्टम्भकभाष्यम्)
एवमर्थमेव तर्हि प्रत्ययग्रहणं कर्तव्यम्, अत्र मा भूदिति ।।
(उपसंख्यानाक्षेपभाष्यम्)
नैष तकारः ।
कस्तर्हि ?
दकारः ।
यदि दकारः, न ज्ञापकं भवति ।
(समाधानभाष्यम्)
एवं तर्हि तपरस्तत्कालस्य (1-1-70) इति दकारोऽपि चर्त्वभूतो निर्दिश्यते ।
यद्येवं चर्त्वस्यासिद्धत्वात् हशि च (6-1-114) इत्युत्वं प्राप्नोति ।
सौत्रो निर्देशः ।
अथवा --- असंहितया निर्देशः करिष्यते --- अणुदित्सवर्णस्य चाप्रत्ययः तपरस्तत्कालस्य इति ।।
-6-1-186- तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः (2623)
(अनुदात्ताधिकरणम्)
(अकारान्तं यदुपदेश इत्यर्थकरणपरभाष्यम्)
अदुपदेशादिति कथमिदं विज्ञायते --- अकारो य उपदेश इति, आहोस्विकारान्तं यदुपदेश इति ?
किं चातः ?
यदि विज्ञायते --- अकारो य उपदेश इति, हतः, हथः इत्यत्रापि प्राप्नोति ।
अथ विज्ञायते --- अकारान्तं यदुपदेश इति, न दोषो भवति ।
ननु चाकारान्तं यदुपदेश इत्यपि विज्ञायमानेऽत्रापि प्राप्नोति । एतदपि हि व्यपदेशिवद्भावेनाकारान्तं भवत्युपदेशे ।
अर्थवता व्यपदेशिवद्भावः ।।
(अकारान्तं यदुपदेश इत्यर्थस्वीकारे दोषनिवारकभाष्यम्)
यदि तर्हि अकारान्तं यदुपदेश इति विज्ञायते, मा हि धुक्षाताम् --- मा हि धुक्षाथाम् --- अत्रापि प्राप्नोति ।
अस्तु, अनुदात्तत्वे कृते लोपः, उदात्तनिवृत्तिस्वरेण सिद्धम् ।
न सिध्यति ।
इदमिह संप्रधार्यम् --- अनुदात्तत्वं क्रियताम्, लोप इति; किमत्र कर्तव्यम् ?
परत्वाल्लोपः ।
एवं तर्हि --- इदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः । न चापवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते ।
तन्न तावदत्र कदाचित्प्रत्ययस्वरो भवति, अपवादं लसार्वधातुकानुदात्तत्वं प्रतीक्षते ।
तत्रानुदात्तत्वं क्रियताम्, लोप इति, किमत्र कर्तव्यम् ?
परत्वाल्लोपः ।
यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तेऽनुदात्ते उदात्तो लुप्यते ।।
(6301 सप्तमीनिर्देशोपसंख्यानवार्तिकम् ।। 1 ।।)
- तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः -
तास्यादिभ्यश्चानुदात्तत्वे सप्तमीनिर्देशः कर्तव्यः, लसार्वधातुके इति वक्तव्यम् ।
किं प्रयोजनम् ?
अभ्यस्तसिजर्थम् । अभ्यस्तानामादिरुदात्तो भवति लसार्वधातुके, सिजन्तस्यादिरुदात्तो भवति लसार्वधातुके ।
लसार्वधातुकम् इत्युच्यमाने तस्यैवाद्युदात्तत्वं स्यात् ।।
यदि सप्तमीनिर्देशः क्रियते, तास्यादीनामेवानुदात्तत्वं प्राप्नोति ।
नैष दोषः । तस्मादिभ्यः इत्येषा पञ्चमी लसार्वधातुके इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1-1-67) इति ।।

(6302 विप्रतिषेधबोधकवार्तिकम् ।। 2 ।।)
- चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन -
चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं भवति विप्रतिषेधेन ।
चित्स्वरस्यावकाशः --- चलनः, चोपनः ।
तास्यादिभ्योऽनुदात्तत्वस्यावकाशः --- आस्ते, शेते ।
इहोभयं प्राप्नोति --- आसीनः, शयानः ।
तास्यादिभ्योऽनुदात्तत्वं भवति विप्रतिषेधेन ।
नैष युक्तो विप्रतिषेधः ।
किं कारणम् ?
द्विकार्ययोगो हि विप्रतिषेधः, न चात्रैको द्विकार्ययुक्तः । आदेरनुदात्तत्वम्, अन्तस्योदात्तत्वम् ।
नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।
किं तर्हि ?
असंभवोऽपि ।
ननु चात्राप्यस्ति संभवो यदुभयं स्यात् --- आदेरनुदात्तत्वमन्तस्य चोदात्तत्वमिति, अस्ति च संभवो यदुभयं स्यात् ।
नैषोऽस्ति संभवः --- आदेरनुदात्तत्वमन्त्यस्य चोदात्तत्वमिति ।
कथम् ?
वक्ष्यत्येतत् --- स्वरविधौ सङ्घातः कार्यी भवति --- इति ।।
(6303 उपसंख्यानवार्तिकम् ।। 3 ।।)
- मुकश्चोपसंख्यानम् -
मुकश्चोपसंख्यानं कर्तव्यम् । पचमानः, यजमानः । मुका व्यवहितत्वाददुपदेशाल्लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वं न प्राप्नोति ।
ननु चायं मुगदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते ।
न सिध्यति ।
अङ्गस्य मुगुच्यते, विकरणान्तं चाङ्गं सोऽसौ सङ्घातभक्तोऽशक्यो मुक् अदुपदेशग्रहणेन ग्रहीतुम् ।।
(अद्भक्तत्वेनोपसंख्यानानर्थक्यबोधकभाष्यम्)
अथायमतो भक्तः स्यात्, गृह्येतायमदुपदेशग्रहणेन ।
बाढं गृह्येत ।
अद्भक्तस्तर्हि भविष्यति ।
तत्कथम् ?
वक्ष्यत्येतस्य परिहारम् ।।
(6304 एकदेशिन उपसंख्यानवार्तिकम् ।। 4 ।।)
- इतश्चोपसंख्यानम् -
इतश्चोपसंख्यानं कर्तव्यम् । इद्भिश्च व्यवहितत्वादनुदात्तत्वं न प्राप्नोति । पचतः, पठतः ।।
(6305 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 5 ।।)
- इतश्चानेकान्तत्वात् -
अनेकान्ता अनुबन्धाः ।।
(अनेकान्तत्वे दोषभाष्यम्)
यद्यनेकान्ता अनुबन्धा अदिप्रभृतिजुहोत्यादिभ्यः प्रतिषेधो वक्तव्यः । अत्तः, जुहुत इति । अदुपदेशात् इत्यनुदात्तत्वं प्राप्नोति ।।
(6306 दोषनिवारकवार्तिकम् ।। 6 ।।)
- तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः स्थान्यादेशाभावात् -
तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः । अनर्थकः प्रतिषेधः --- अप्रतिषेधः ।
अनुदात्तत्वं कस्मान्न भवति ?
स्थान्यादेशाभावात् । नैवात्र स्थानिनं नैवादेशं पश्यामः ।।
(6307 ज्ञापकेन दोषनिवारकवार्तिकम् ।। 7 ।।)
- अनुदात्तङिद्ग्रहणाद्वा -
अथवा यदयमनुदात्तङिद्ग्रहणं करोति तज्ज्ञापयत्याचार्यः --- न लुप्तविकरणेभ्योऽनुदात्तत्वं भवतीति ।
नैतदस्ति ज्ञापकम् ।
श्नमर्थमेतत्स्यात् --- विन्दाते, खिन्दाते ।।
यत्तर्हि ङिद्ग्रहणं करोति, न हि श्नम्विकरणो ङिदस्ति ।।
(प्रतिषेधोपसंख्यानभाष्यम्)

ङितोऽनुदात्तत्वे विकरणेभ्यः प्रतिषेधो वक्तव्यः । चिनुतः, सुनुतः, लुनीतः, पुनीतः । ङित इत्यनुदात्तत्वं प्राप्नोति ।।
(6308 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 8 ।।)
- ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् -
ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः, अनर्थकः प्रतिषेधः --- अप्रतिषेधः।
अनुदात्तत्वं कस्मान्न भवति ?
सर्वस्योपदेशविशेषणत्वात् । सर्वमुपदेशग्रहणेन विशेषयिष्यामः ---
उपदेशेऽनुदात्तेतः,
उपदेशे ङितः,
उपदेशेऽकारान्तादिति ।।
-6-1-187- आदिः सिचोऽन्यतरस्याम् (2624)
(आद्युदात्ताधिकरणम्)
(6309 उपसंख्यानवार्तिकम् ।। 1 ।।)
- सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् -
सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानं कर्तव्यम् । मा हि कार्षम् ।
अनिट इति किमर्थम् ?
मा हि लाविषम् ।।
-6-1-188- स्वपादिहिंसामच्यनिटि (2625)
(6310 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- स्वपादीनां वाववचनादभ्यस्तस्वरो विप्रतिषेधेन -
स्वपादीनां वावचनादभ्यस्तस्वरो भवति विप्रतिषेधेन ।
स्वपादीनां वावचनस्यावकाशः --- स्वपन्ति, श्वसन्ति ।
अभ्यस्तस्वरस्यावकाशः --- ददति, दधति ।
इहोभयं प्राप्नोति --- जाग्रति ।
अभ्यस्तस्वरो भवति विप्रतिषेधेन ।।
-6-1-190- अनुदात्ते च (2627)
(6311 अनुदात्ते इत्यत्र बहुव्रीहिबोधकवार्तिकम् ।। 1 ।।)
- अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः -
अनुदात्ते चेति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानोदात्ते --- अनुदात्त इति वक्तव्यम् ।
किं प्रयोजनम् ?
लोपयणादेशार्थम् । लोपयणादेशयोः कृतयोराद्युदात्तत्वं यथा स्यात् । मा हि स्म दधात्, दधात्यत्र ।।
-6-1-191- सर्वस्य सुपि (2628)
(6312 उपसंख्यानवार्तिकम् ।। 1 ।।)
- सर्वस्वरोऽनकच्कस्य -
सर्वस्वरोऽनकच्कस्येति वक्तव्यम् । इह मा भूत् --- सर्वके ।।
-6-1-192- भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति (2629)
(भ्यादिप्रयोजनभाष्यम्)
भ्यादिग्रहणं किमर्थम् ?
इह मा भूत् --- ददाति, दधाति ।
(एकदेश्याक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम् । अभ्यस्तस्वरोऽत्र बाधको भविष्यति ।।
(सिद्धान्तभाष्यम्)
अन्तत उभयं स्यात् ।
अनवकाशाः खल्वपि विधयो बाधका भवन्ति, सावकाशश्चाभ्यस्तस्वरः ।
कोऽवकाशः ?
मिमीते ।।
(प्रत्ययात्पदप्रयोजनभाष्यम्)
अथ प्रत्ययग्रहणं किमर्थम् ?
प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यात्, आटः पूर्वस्य मा भूदिति । बिभयानि ।
न चैवास्ति विशेषः --- प्रत्ययाद्वा पूर्वस्योदात्तत्वे सति, आटो वा । अपि च पिद्भक्तः पिद्ग्रहणेन ग्राहिष्यते ।

इदं तर्हि प्रयोजनम् --- प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यात्, आट एव मा भूदिति ।
एतदपि नास्ति प्रयोजनम् ।
पिद्भक्तः पिद्ग्रहणेन ग्राहिष्यते ।
एवं तर्हि सिद्धे सति यत्प्रत्ययग्रहणं करोति तज्ज्ञापयत्याचार्यः --- स्वरविधौ सङ्घातः कार्यी भवतीति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन इति यदुक्तं तदुपपन्नं भवति ।।
(पूर्वग्रहणप्रयोजनभाष्यम्)
अथ पूर्वग्रहणं किमर्थम् ?
न तस्मिन्निति निर्दिष्टे पूर्वस्य (1-1-66) इति पूर्वस्यैव भविष्यति ।
एवं तर्हि सिद्धे सति यत्पूर्वग्रहणं करोति तज्ज्ञापयत्याचार्यः --- स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्ति --- इति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
उपोत्तमं रिति (6-1-217) रिदन्तस्य । चङ्यन्यतरस्याम् (218) चङन्तस्य ।।
यद्येतज्ज्ञाप्यते, चतुरः शसि (167) इति शसन्तस्यापि प्राप्नोति ।
शस्ग्रहणसार्मथ्यान्न भविष्यति । इतरथा हि तत्रैवायं ब्रूयात् --- ःढ़य;डिदं पदाद्यप्पुम्रैद्युभ्यः ---
चतुर्भ्यश्च --- इति ।।
(पिद्ग्रहणप्रयोजनभाष्यम्)
अथ पिद्ग्रहणं किमर्थम् ?
इह मा भूत् --- जाग्रति ।
नैतदस्ति प्रयोजनम्, भवत्येवात्र पूर्वेण ।
इदं तर्हि प्रयोजनम् --- दरिद्रति ।
आकारेण व्यवहितत्वान्न भविष्यति ।
लोपे कृते नास्ति व्यवधानम् ।
स्थानिवद्भावादव्यवधानमेव ।
प्रतिषिध्यतेऽत्र स्थानिवद्भावः --- स्वरविधिं प्रति न स्थानिवद्भवति इति ।।
-6-1-195- अचः कर्तृयकि (2632)
(6313 उपसंख्यानवार्तिकम् ।। 1 ।।)
- यकि रपर उपसंख्यानम् -
यकि रपर उपसंख्यानं कर्तव्यम् । स्तीर्यते स्वयमेव ।।
(6314 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- उपदेशवचनात्सिद्धम् -
उपदेश इति वक्तव्यम् ।।
(6315 आनर्थक्यप्रकारे आक्षेपवार्तिकम् ।। 3 ।।)
- उपदेशवचने जनादीनाम् -
उपदेशवचने जनादीनां स्वरो न सिध्यति । जायते स्वयमेव । जायते स्वयमेव ।।
(6316 समाधानवार्तिकम् ।। 4 ।।)
- योगविभागात्सिद्धम् -
योगविभागः करिष्यते --- अजन्तानां कर्तृयकि, वाऽऽदिरुदात्तो भवति । चीयते स्वयमेव --- चीयते स्वयमेव । जायते स्वयमेव --- जायते स्वयमेव ।
ततः उपदेशे, उपदेशे चाजन्तानां कर्तृयकि वा आदिरुदात्तो भवति । स्तीर्यते स्वयमेव --- स्तीर्यते स्वयमेव ।।
(उपदेशपदानुवर्तनबोधकभाष्यम्)
तत्तर्ह्युपदेशग्रहणं कर्तव्यम्, न ह्यन्तरेणोपदेशग्रहणं योगाङ्गं जायते ।
न कर्तव्यम्, प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः (6-1-186) इति ।
ननु चोक्तम् --- उपदेशे जनादीनां स्वरो न सिद्ध्यतीति ।
नैष दोषः । नैवं विज्ञायते --- उपदेशवचने जनादीनां स्वरो न सिध्यतीति ।
कथं तर्हि ?
जनादीनामप्यात्वे उपदेशवचनं कर्तव्यमिति ।
तत्तर्हि तत्रोपदेशग्रहणं कर्तव्यम् ।

न कर्तव्यम्, प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति (6-4-37) इति ।।
-6-1-196- थलि च सेटीडन्तो वा (2633)
(सेड्ग्रहणप्रयोजनभाष्यम्)
सेड्ग्रहणं किमर्थम्, न थलीडन्तो वेत्युच्येत ?
इडन्तो वा इत्युच्यमान इहापि प्रसज्येत --- पपक्थ ।
नैतदस्ति प्रयोजनम्, अच इति वर्तते ।
इदं तर्हि प्रयोजनम् --- ययाथेति ।।
-6-1-204- संज्ञायामुपमानम् (2641)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न ञ्नित्यादिर्नित्यम् (6-1-197) इत्येव सिद्धम् ?
ञ्नितीत्युच्यते, न चात्र ञ्नितं पश्यामः ।
प्रत्ययलक्षणेन ।
न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः ।
अङ्गाधिकारोक्तस्य स प्रतिषेधः न लुमताङ्गस्य (1-1-63) इति ।
अत उत्तरं पठति ---
(6317 सूत्रप्रयोजनबोधकवार्तिकम् ।। 1 ।।)
- उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य -
उपमानस्याद्युदात्तवचनं ज्ञापकार्थं क्रियते ।
किं ज्ञाप्यम् ?
एतज्ज्ञापयत्याचार्यः --- अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवतीति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
गर्गाः, वत्साः, विदाः, उर्वाः । उष्ट्रग्रीवा वामरज्जुः । ञ्नितीत्याद्युदात्तत्वं न भवति ।
इह च --- अत्रय इति तद्धितस्य कितः (6-1-164;165) इत्यन्तोदात्तत्वं न भवति ।।
(ज्ञाप्याक्षेपभाष्यम्)
यद्यनुबन्धलक्षण इत्युच्यते, पथिप्रियः --- मथिप्रिय इति, पथिमथोः सर्वनामस्थाने (199) इत्याद्युदात्तत्वं प्राप्नोति ।।
(समाधानभाष्यम्)
एवं तर्ह्याचार्यो ज्ञापयति --- स्वरे प्रत्ययलक्षणं न भवतीति ।।
(ज्ञाप्याक्षेपभाष्यम्)
एवमपि सर्पिरागच्छ --- सप्तागच्छतेति आमन्त्रितस्य च (198) इत्याद्युदात्तत्वं न प्राप्नोति ।
इह च --- मा हि दाताम्, मा हि धाताम् आदिः सिचोऽन्यतरस्याम् (187) इत्येष स्वरो न प्राप्नोति ।।
(समाधानभाष्यम्)
एवं तर्हि ज्ञापयत्याचार्यः --- सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणं न भवतीति ।।
(ज्ञाप्याक्षेपभाष्यम्)
एवमपि सर्वस्तोमः --- सर्वपृष्ठः सर्वस्य सुपि (191) इत्याद्युदात्तत्वं न प्राप्नोति ।।
(समाधानभाष्यम्)
एवं तर्हि अनुबन्धलक्षणे इत्येव । कथं पथिप्रियः, मथिप्रियः ?
वक्तव्यमेवैतत् --- पथिमथोः सर्वनामस्थाने लुकि लुमता लुप्ते प्रत्ययलक्षणं न भवतीति ।।
-6-1-205- निष्ठा च द्व्यजनात् (2642)
(6318 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- निष्ठायां यञि दीर्घत्वे प्रतिषेधः -
निष्ठायां यञि दीर्घत्वे प्रतिषेधो वक्तव्यः । दत्ताभ्याम्, गुप्ताभ्याम् ।।
(6319 उपसंख्यानानुपयोगवार्तिकम् ।। 2 ।।)
- न वा बहिरङ्गलक्षणत्वात् -
न वा वक्तव्यम् ।
किं कारणम् ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गोऽत्र दीर्घः, अन्तरङ्गः स्वरः, असिद्धं बहिरङ्गमन्तरङ्गे ।।
(आक्षेपसमाधानानावश्यकत्वबोधकभाष्यम्)

अन्तरेण प्रतिषेधमन्तरेण चैतां परिभाषां सिद्धम् ।
कथम् ?
नैवं विज्ञायते --- न चेदकारान्ता निष्ठेति ।
कथं तर्हि ?
न चेदाकारात्परा निष्ठेति ।।
यद्येवं निर्देशश्चैव नोपपद्यते, न ह्येषा आकारात्परा पञ्चमी युक्ता । इह च प्राप्नोति --- आप्तः, राद्ध इति ।।
एवं तर्हि --- न चेदवर्णात्परा निष्ठेति ।
भवेन्निर्देश उपपन्नः, इह तु प्राप्नोति --- आप्तः, राद्ध इति, इह च न प्राप्नोति --- यतः, रत इति ।।
एवं तर्हि विहितविशेषणमकारान्तग्रहणम् --- न चेदकारान्ताद्विहिता निष्ठेति ।
एवमपि --- दत्तः --- अत्र न प्राप्नोति, इह च प्राप्नोति --- आप्तः, राद्ध इति ।।
एवं तर्हि कार्यिविशेषणमाकारग्रहणम् --- न चेदाकारः कार्यी भवति ।
एवमपि --- अद्याष्टः, कदाष्टः --- अत्र न प्राप्नोति ।
तस्मात्सुष्ठूच्यते --- निष्ठायां यञ्ञि दीर्घत्वे प्रतिषेधः न वा बहिरङ्गलक्षणत्वात् इति ।।
-6-1-207- आशितः कर्ता (2644)
(जिज्ञासाभाष्यम्)
किं निपात्यते ?
(6320 निपातनबोधकवार्तिकम् ।। 1 ।।)
- आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च -
आशित इति कर्तरि निपात्यते । आशितवान् --- आशितः । उपधादीर्घत्वमाद्युदात्तत्वं च निपात्यते ।।
(वार्तिकैकदेशप्रत्याख्यानभाष्यम्)
आद्युदात्तत्वमनिपात्यम्, अधिकारात् सिद्धम् ।
उपधादीर्घत्वमनिपात्यम्, आङ्पूर्वस्य प्रयोगः ।
यद्येवमवग्रहः प्राप्नोति ।
न लक्षणेन पदकारा अनुर्वत्याः, पदकारैर्नाम लक्षणमनुर्वत्यम् ।
यथालक्षणं पदं कर्तव्यम् ।।
-6-1-208- रिक्ते विभाषा (2645)
विभाषा वेण्विन्धानयोः
(विभाषानिर्धारकभाष्यम्)
किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ?
कथं च प्राप्ते, कथं चाप्राप्ते ?
यदि संज्ञायामुपमानम् निष्ठा च द्व्यजनात् (6-1-204;205) इति वा नित्ये प्राप्ते आरम्भस्ततः प्राप्ते, अन्यथा त्वप्राप्ते ।।
वेणुरिक्तयोरप्राप्ते विभाषा, प्राप्ते नित्यो विधिः । वेणुरिव वेणुः । रिक्तो नाम कश्चित् ।।
-6-1-215- विभाषा वेण्विन्धानयोः (2652)
(विभाषानिर्धाकरकभाष्यम्)
किमियं प्राप्ते विभाषा,आहोस्विदप्राप्ते? कथं च प्राप्ते, कथं चाप्राप्ते?
यदि संज्ञायामुपमानम् निष्ठा च द्व्यजनात् (6-1-204,205) इति वा नित्ये प्राप्ते आरम्भस्ततः प्राप्ते, अन्यथा त्वप्राप्ते। वेणुरिक्तयोरप्राप्ते विभाषा, प्राप्ते नित्यो विधिः। वेणुरिव वेणुः। रिक्तो नाम कश्चित्।।
-6-1-217- उपोत्तमं रिति (2654)
(पदकृत्यभाष्यम्)
उपोत्तमग्रहणं किमर्थम्, न रिति पूर्वम् इत्येवोच्यते ?
तत्रायमप्यर्थः --- मतोः पूर्वमात्संज्ञायां स्त्रियाम् (219) इत्यत्र पूर्वग्रहणं न कर्तव्यं भवति ।।
एवं तर्हि --- उपोत्तमग्रहणमुत्तरार्थम् । चङ्यन्यतरस्याम् (218) उपोत्तममित्येव ।
इह मा भूत् --- मा हि स्म दधत् ।।
-6-1-220- अन्तोऽवत्याः (2657)
-6-1-221- इर्वत्याः (2658)
(सूत्रद्वयप्रयोजनभाष्यम्)
किमर्थमिदमुभयमुच्यते, न वत्याः इत्येवोच्येत ?
वत्याः इतीयत्युच्यमाने राजवती --- अत्रापि प्रसज्येत ।
अथ अवत्याः इत्युच्यमाने कस्मादेवात्र न भवति ?

असिद्धो नलोपः, तस्यासिद्धत्वान्नैषोऽवतीशब्दः ।
कस्तर्हि ?
अन्वतीशब्दः ।
यथैव तर्हि नलोपस्यासिद्धत्वान्नावतीशब्दः, एवं वत्वस्यासिद्धत्वान्नावतीशब्दः ।
आश्रयात्सिद्धत्वं स्यात् ।।
-6-1-222- चौ (2659)
(6321 उपसंख्यानवार्तिकम् ।। 1 ।।)
- चोरतद्धिते -
चुस्वरः अतद्धिते इति वक्तव्यम् ।
इह मा भूत् --- दाधीचः, माधूच इति ।।
(वार्तिकाक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् ।
प्रत्ययस्वरोऽत्र बाधको भविष्यति ।।
(समाधानभाष्यम्)
स्थानान्तरप्राप्तश्चुस्वरः । प्रत्ययस्वरस्यापवादः अनुदात्तौ सुप्पितौ (3-1-4) इति । अनुदात्तौ सुप्पितावेतस्योदात्तनिवृत्तिस्वरः । उदात्तनिवृत्तिस्वरस्य चुस्वरः ।
स यथैवोदात्तनिवृत्तिस्वरं बाधते, एवं प्रत्ययस्वरमपि बाधेत ।।
(समाधानाक्षेपभाष्यम्)
नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति ।
किं कारणम् ?
न गोश्वन्साववर्ण --- (6-1-182) इति प्रतिषेधात् ।।
(प्रत्याक्षेपभाष्यम्)
नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः ।
कस्य तर्हि ?
तृतीयादिस्वरस्य ।।
(प्रत्याक्षेपसमाधानभाष्यम्)
यत्र तर्हि तृतीयादिस्वरो नास्ति --- दधीचः पश्येति ।।
(सिद्धान्तभाष्यम्)
एवं तर्हि न तृतीयादिलक्षणस्य प्रतिषेधं शिष्मः ।
किं तर्हि ?
येन केन चिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधम् ।
यदि विभक्तिस्वरस्य प्रतिषेधः, वृक्षवान् --- प्लक्षवान् --- अत्र न प्राप्नोति ।
मतुब्ग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
ह्रस्वनुड्भ्यां मतुप् (176) इति ।
यदि तदनुवर्तते, वेतस्वान् --- अत्रापि प्राप्नोति ।
मतुब्ग्रहणमनुवर्तते, ड्मतुश्चैषः ।
यदि तर्हि मतुपो ग्रहणे ड्मतुपो ग्रहणं न भवति, वेतस्वानिति वत्वं न प्राप्नोति ।
सामान्यग्रहणं वत्वे, इह पुनर्विशिष्टस्य ग्रहणम् ।
यत्र तर्हि विभक्तिर्नास्ति --- दधीची --- इति ।
यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत ।
नैवं शक्यम् ।
इहापि प्रसज्येत --- कुमारीति ।।
सति शिष्टः खल्वपि चुस्वरः ।
कथम् ?
चौ इत्युच्यते । यत्रास्यैतद्रूपम् ।
क्व चास्यैतद्रूपम् ?
यजादावसर्वनामस्थानेऽभिनिर्वृत्ते नकारलोपेऽकारलोपे च ।

तस्मात्सुष्ठूच्यते --- चोरतद्धित इति ।।
-6-1-223- समासस्य (2660)
(6322 उपसंख्यानवार्तिकम् ।। 1 ।।)
- समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् -
समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम् । राजदृषत्, ब्राह्मणसमित् ।।
(6323 परिभाषोपस्थापकवार्तिकम् ।। 1 ।।)
- हल्स्वरप्राप्तौ वा व्यञ्जनमविद्यमानवत् -
अथवा हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् भवतीत्येषा परिभाषा कर्तव्या ।।
(उभयकरणाक्षेपभाष्यम्)
किमर्थमिदमुभयमुच्यते, न हल्स्वरप्राप्तावविद्यमानवदित्येवोच्येत, स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति --- इति वा ।
द्विर्बद्धं सुबद्धं भवति ।।
(परिभाषास्वरूपाक्षेपभाष्यम्)
यदि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यते, दधि --- उदात्तादनुदात्तस्य स्वरितः (8-4-66)
इति स्वरितत्वं न प्राप्नोति ।
उदात्ताच्च स्वरितविधौ व्यञ्जनमविद्यमानवद्भवतीत्येषा परिभाषा कर्तव्या ।।
(परिभाषाप्रयोजनजिज्ञासाभाष्यम्)
कान्येतस्याः परिभाषायाः प्रयोजनानि ?
(6324 प्रयोजनवार्तिकम् ।। 1 ।।)
- प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः -
लित्यति प्रयात्पूर्वमुदात्तं भवति --- इति, इहैव स्यात् --- भौरिकिविधम्, भौलिकिविधम् । चिकीर्षकः, जिहीर्षक इत्यत्र न स्यात् ।।
ञ्नित्यादिरुदात्तो भवति --- इति, इहैव स्यात् --- अहिचुम्बकायनिः, आग्निवेश्यः, गार्ग्यः । कृतिः --- इत्यत्र न स्यात् ।।
धातोरन्त उदात्तो भवति --- इति, इहैव स्यात् --- ःढ़द्य;णौति । पचति --- इत्यत्र न स्यात् ।।
(परिभाषास्वरूपाक्षेपभाष्यम्)
इदं तावदयुक्तम् --- यदुच्यते --- हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीति ।
कथं हि हलो नाम स्वरप्राप्तिः स्यात् ?
तच्चापि ब्रुवता उदात्ताच्च स्वरितविधौ इति वक्तव्यम् ।
तथाऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति ।।
(एकदेशिनः परिभाषास्वरूपोपस्थापकभाष्यम्)
यदि पुनः स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यते ।
अथ स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यमानेऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्किं सिद्धं भवति व्यञ्जनादेर्व्यञ्जनान्ताच्च ?
बाढं सिद्धम् ।
कथम् ?
स्वरविधिरिति सर्वविभक्त्यन्तः समासः । स्वरेण विधिः --- स्वरविधिः, स्वरस्य विधिः --- स्वरतो विधिः --- स्वरविधिरिति ।
नैवं शक्यम् ।
इह हि दोषः स्यात् --- उदश्वित्वान् घोषः, विद्युत्वान् बलाहक इति, ह्रस्वनुड्भ्यां मतुप् (6-1-176) इत्येष स्वरः प्रसज्येत ।।
(परिभाषास्वरूपस्थापकभाष्यम्)
अस्तु तर्हि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति --- इति ।
ननु चोक्तम् --- कथं हि हलो नाम स्वरप्राप्तिः स्यात् --- इति ।
उच्चैरुदात्तः (1-2-29) नीचैरनुदात्तः (30) इत्यत्र षष्ठीनिर्दिष्टमज्ग्रहणं निवृत्तम्, तस्मिन्निवृत्ते हलोऽपि स्वरप्राप्तिर्भवति ।।
यदप्युच्यते --- उदात्ताच्च स्वरितविधाविति वक्तव्यमिति ।
न वक्तव्यम् ।
नेदं पारिभाषिकस्यानुदात्तस्य ग्रहणम् ।
किं तर्हि ?
अन्वर्थग्रहणम् । अविद्यमानोदात्तमनुदात्तं भवति । उदात्तादनुदात्तस्य स्वरित इति ।।
यदप्युच्यते --- अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति --- इति ।
आचार्यप्रवृत्तिर्ज्ञापयति --- तत्र सिद्धं तद्भवति व्यञ्जनादेर्व्यञ्जनान्ताच्चेति, यदयं नोत्तरपदेऽनुदात्तादावित्युक्त्वा अपृथिवीरुद्रपूषमन्थिषु इति प्रतिषेधं शास्ति ।।
(परिभाषाज्ञापकोपपादकभाष्यम्)
सा तर्ह्येषा परिभाषा कर्तव्या ।

न कर्तव्या ।
आचार्यप्रवृत्तिर्ज्ञापयति --- भवत्येषा परिभाषेति, यदयं यतोऽनावः (6-1-213) इति नावः प्रतिषेधं शास्ति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ।।
पादश्च समाप्तः ।।
-6-1-158- अनुदात्तं पदमेकवर्जम् (2595)
(सूत्रार्थनिर्णायकभाष्यम्)
किमनुदात्तानि पदानि भवन्ति एकं पदं वर्जयित्वा ?
नेत्याह ।
पदे येषामुदात्तप्रसङ्गस्तेऽनुदात्ता भवन्ति एकमचं वर्जयित्वा ।।
(न्यासे न्यूनत्वाक्षेपभाष्यम्)
स तर्हि तथा निर्देशः कर्तव्यः --- अनुदात्ताः पदे, अनुदात्ताः पदस्येति वा ।।
(समाधानभाष्यम्)
न कर्तव्यः ।
अनुदात्तं पदमेकवर्जम् इत्येव सिद्धम् ।
कथम् ?
मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा --- पुष्पका एषां ते पुष्पकाः, कालका एषां ते कालका इति ।
अथवा --- अकारो मत्वर्थीयः । तद्यथा --- तुन्दः, घाट इति ।।
(सूत्राक्षेपभाष्यम्)
किमर्थं पुनरिदमुच्यते ?
(सूत्रप्रयोजने श्लोकभाष्यम्)
आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्ज पदस्वरः ।।
आगमस्य --- चतुरनडुहोरामुदात्तः (7-1-98) । चत्वारः, अनड्वाहः ।
विकारस्य --- अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः (7-1-75) । अस्थ्ना, दध्ना ।
प्रकृतेः --- गोपायति, धूपायति ।
प्रत्ययस्य च --- -कर्तव्यम्, तैत्तिरीयः ।
एतेषां पदे युगपत्स्वरः प्राप्नोति । इष्यते चैक एव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यनुदात्तं पदमेकवर्जम् । एवमर्थमिदमुच्यते ।।
(सूत्राक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम् ।
(सूत्रप्रयोजनसाधकज्ञापकश्लोकभाष्यम्)
यौगपद्यं तवै सिद्धम्
यदयं तवै चान्तश्च युगपत् (6-2-51) इति सिद्धे यौगपद्ये यौगपद्यं शास्ति तज्ज्ञापयत्याचार्यः --- न युगपत्स्वरो भवतीति ।।
(प्रत्याक्षेपभाष्यम्)
पर्यायस्तर्हि प्राप्नोति ।
(प्रत्याक्षेपसमाधानश्लोकभाष्यम्)
पर्यायो रिक्तशासनात् ।
यदयं रिक्ते विभाषा (6-1-208) इति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यः --- न पर्यायो भवतीति ।।
(प्रयोजनाक्षेपश्लोकभाष्यम्)
उदात्ते ज्ञापकं त्वेतत्
एतदुदात्ते ज्ञापकं स्यात् ।।
(प्रयोजनसाधकश्लोकभाष्यम्)
स्वरितेन समाविशेत् ।।
स्वरितेन समावेशः प्राप्नोति । स्वरितेऽप्युदात्तोऽस्ति । तस्मान्नार्थोऽनेन योगेन ।।
(वार्तिकावतरणभाष्यम्)
आरभ्यमाणेऽप्येतस्मिन्योगे ---
(6257 सूत्रस्यानुदात्तत्वविधायकत्वे दोषवार्तिकम् ।। 1 ।।)
- अनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन् युगपत्संभवात् -
अनुदात्ते विप्रतिषेधो नोपपद्यते । पठिष्यति ह्याचार्यो विप्रतिषेधम् --- जे दीर्घाद्बह्वचः इति, स विप्रतिषेधो नोपपद्यते ।
किं कारणम् ?

एकस्मिन् युगपत्संभवात् । असति खलु सम्भवे विप्रतिषेधो भवति, अस्ति च सम्भवो यदुभयं स्यात् ।
कथं सम्भवः ?
यदाऽनुदात्तं पदमेकवर्जमित्युच्यते। तदिह नास्ति। किं कारणम्?
नानेनोदात्तत्वं प्रतिषिध्यते ।
किं तर्हि ?
अनुदात्तत्वमनेन क्रियते, अस्ति च सम्भवो यदुभयोश्चोदात्तत्वं स्यात्, अन्येषां चानुदात्तत्वम् ।।
(अस्याधिकारत्वमाश्रित्य दोषनिवारकभाष्यम्)
यदि पुनरयमधिकारो विज्ञायते ।
किं कृतं भवति ?
अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठते ।
जे दीर्घान्तस्यादिरुदात्तो भवति, उपस्थितमिदं भवति --- अनुदात्तं पदमेकवर्जमिति ।
अन्त्यात्पूर्वं बह्वचः (6-2-83), उपस्थितमिदं भवति --- अनुदात्तं पदमेकवर्जमिति ।
तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति परेण भविष्यति, परत्वात् ।।
(अधिकारत्वे दोषभाष्यम्)
नैवं शक्यम् । एवमपि षाष्ठिक एव स्वरः संगृहीतः स्यात्, येऽन्ये सप्ताध्याय्यां स्वरास्ते न संगृहीताः स्युः --- समानोदरे शयित ओ चोदात्तः (4-4-108) अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः (7-1-75) इति ।।
(6258 न्यासान्तरेण दोषनिवारकवार्तिकम् ।। 2 ।।)
- सिद्धं त्वेकाननुदात्तत्वात् -
सिद्धमेतत् ।
कथम् ?
एकाननुदात्तत्वात् ।
एकाननुदात्तं पदं भवतीति वक्तव्यम् ।
किमिदमेकाननुदात्तत्वादिति ?
न उदात्तः --- अनुदात्तः, न अनुदात्तः --- अननुदात्तः । एकः --- अननुदात्तोऽस्मिंस्तदिदमेकाननुदात्तम् । एकाननुदात्तत्वादिति ।
सिद्ध्यति । सूत्रं तर्हि भिद्यते ।।
(परिभाषात्वस्वीकारेण न्यासान्तरनिवारकभाष्यम्)
यथान्यासमेवास्तु ।
ननु चोक्तम् --- अनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन् युगपत्संभवात् इति ।
नैष दोषः ।
परिभाषेयम् ।
किं कृतं भवति ?
कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम् ।
जे दीर्घान्तस्यादिरुदात्तो भवतीत्युपस्थितमिदं भवति --- अनुदात्तं पदमेकवर्जम् इति ।
अन्त्यात्पूर्वं बह्वचः इत्युपस्थितमिदं भवति --- अनुदात्तं पदमेकवर्जम् इति ।
तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति --- परेण भविष्यति, परत्वात् ।।
अथवा नेदं पारिभाषिकानुदात्तस्य ग्रहणम् ।
किं तर्हि ?
अन्वर्थग्रहणम् । अविद्यमानोदात्तम् --- अनुदात्तमिति ।।
(6259 आक्षेपवार्तिकम् ।। 3 ।।)
- एकवर्जमिति चाप्रसिद्धिः सन्देहात् -
एकवर्जमिति चाप्रसिद्धिः ।
कुतः ?
सन्देहात् । न ज्ञायते क एको वर्जयितव्य इति ।।
(6260 समाधानवार्तिकम् ।। 4 ।।)
- सिद्धं तु यस्मिन्ननुदात्त उदात्तवचनानर्थक्यं तद्वर्जम् -
सिद्धमेतत् ।
कथम् ?
यस्मिन्ननुदात्ते उदात्तवचनमनर्थकं स्यात्स एको वर्जयितव्यः ।।

(6261 समाधानाक्षेपवार्तिकम् ।। 5 ।।)
- प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः -
प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः स्यात् ।
प्रकृतिस्वरस्यावकाशः --- यत्रानुदात्तः प्रत्ययः । पचति, पठति ।
प्रत्ययस्वरस्यावकाशः --- यत्रानुदात्ता प्रकृतिः । समत्वम्, सिमत्वम् ।
इहोभयं प्राप्नोति --- कर्तव्यम्, तैत्तिरीयः ।।
(समाधानभाष्यम्)
विप्रतिषेधात्प्रत्ययस्वरः । विप्रतिषेधात्प्रत्ययस्वरो भविष्यति ।
नैवम् । विप्रतिषेधे परमित्युच्यते । न परः प्रत्ययस्वरः ।
नैष दोषः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।।
(6262 भाष्योक्तसमाधानाक्षेपवार्तिकम् ।। 6 ।।)
- विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यायादिषु चित्करणम् -
विप्रतिषेधात् प्रत्ययस्वर इति चेत्काम्यायादयश्चितः कर्तव्याः । पुत्रकाम्यति, गोपायति, ऋतीयते ।
नैष दोषः ।
प्रकृतिस्वरोऽत्र बाधको भविष्यति ।।
(आक्षेपभाष्यम्)
प्रकृतिस्वरे प्रत्ययस्वराभावः । कर्तव्यम् । तैत्तिरीयम् ।।
(6263 समाधानवार्तिकम् ।। 7 ।।)
- सिद्धं तु प्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वरभावः -
सिद्धमेतत् ।
कथम् ?
प्रकृतिस्वराद्बलीयस्त्वात् प्रत्ययस्वरस्य भावः सिद्धः ।
कथम् ?
प्रकृतिस्वरात् प्रत्ययस्वरो बलीयान् भवतीति वक्तव्यम् ।।
(6264 उपसंख्यानवार्तिकम् ।। 8 ।।)
- सति शिष्टस्वरबलीयस्त्वं च -
सति शिष्टस्वरो बलीयान् भवतीति वक्तव्यम् ।।
(6265 उपसंख्यानप्रयोजनवार्तिकम् ।। 9 ।।)
- तच्चानेकप्रत्ययसमासार्थम् -
तच्चावश्यं सति शिष्टस्वरबलीयस्त्वं वक्तव्यम् ।
किं प्रयोजनम् ?
अनेकप्रत्ययार्थमनेकसमासार्थं च ।
अनेकप्रत्ययार्थं तावत् --- औपगवः, प्रकृतिस्वरमण्स्वरो बाधते । औपगवत्वम्, त्वस्वरोऽण्स्वरं बाधते । औपगवत्वकम्, त्वस्वरं कस्वरो बाधते ।
अनेकसमासार्थम् --- राजपुरुषः, राजपुरुषपुत्रः, राजपुरुषपुत्रपुरुषः ।।
(सति शिष्टबलीयस्त्वाक्षेपभाष्यम्)
यदि सति शिष्टस्वरबलीयस्त्वमुच्यते, स्यादिस्वरः सार्वधातुकस्वरं बाधेत । सुनुतः, धिनुतः, चिनुतः ।।
(6266 समाधानवार्तिकम् ।। 10 ।।)
- स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात् -
स्यादिस्वरस्य चाप्रसङ्गः ।
कुतः ?
तासेः परस्यानुदात्तवचनात् । यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यः सति शिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इति ।।
(6267 प्रकारान्तरेण समाधानवार्तिकम् ।। 11 ।।)
- शास्त्रपरविप्रतिषेधानियमाद्वा शब्दपरविप्रतिषेधात्सिद्धम् -
अथवा शास्त्रपरविप्रतिषेधे न सर्वमिष्टं संगृहीतं भवतीति कृत्वा शब्दपरविप्रतिषेधो विज्ञास्यते ।
यदि शब्दपरविप्रतिषेधो भवति, काम्यादयश्चितः कर्तव्याः । पुत्र काम्यति । गोपायति । ऋतीयते ।
नैष दोषः ।
शब्दपरविप्रतिषेधो नाम स भवति यत्रोभयोर्युगपत्प्रसङ्गः, न च काम्यादिषु युगपत्प्रसङ्गः ।।

(6268 बलीयस्त्वबोधकवार्तिकम् ।। 12 ।।)
- विभक्तिस्वरान्नञ्स्वरो बलीयान् -
विभक्तिस्वरान्नञ्स्वरो बलीयान् भवतीति वक्तव्यम् ।
विभक्तिस्वरस्यावकाशः --- तिस्रस्तिष्ठन्ति ।
नञ्स्वरस्यावकाशः --- अब्राह्मणः, अवृषलः ।
इहोभयं प्राप्नोति --- अतिस्रः ।
नञ्स्वरो भवति ।।
(6269 बलीयस्त्वबोधकवार्तिकम् ।। 13 ।।)
- विभक्तिनिमित्तस्वराच्च -
विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम् ।
विभक्तिनिमित्तस्वरस्यावकाशः --- चत्वारः, अनड्वाहः ।
नञ्स्वरस्य स एव ।
इहोभयं प्राप्नोति --- अचत्वारः, अनन्ड्वाहः ।।
(6270 बलीयस्त्वबोधकवार्तिकम् ।। 14 ।।)
- यच्चोपपदं कृति नञ् -
यच्चोपपदं कृति नञ्तस्य च स्वरो बलीयानिति वक्तव्यम् । अकरणिर्ह ते वृषल ।।
(6271 बलीयस्त्वबोधकवार्तिकम् ।। 15 ।।)
- सहनिर्दिष्टस्य च -
सहनिर्दिष्टस्य च नञः स्वरो बलीयानिति वक्तव्यम् । अव्यथी ।।
-9-9-999-

# महाभाष्यम्/षष्ठोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nmx

< महाभाष्यम्

-6-2-29- ः‌थ्य;गन्तकालकपालभगालशरावेषु द्विगौ (2689)

(6332 उपसंख्यानवार्तिकम् ।। 1 ।।)

- ः‌थ्य;गन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानम् -

ः‌थ्य;गन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानं कर्तव्यम् । पञ्चारत्न्यः, दशारत्न्यः । पञ्चारत्नयः, दशारत्नयः । यण्गुणयोः कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोति ।।

(6333 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)

- न वा बहिरङ्गलक्षणत्वात् -

न वा वक्तव्यम् ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गौ यण्गुणौ । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ।।

-6-2-148- कारकाद्दत्तश्रुतयोरेवाशिषि (2808)

(6375 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)

- कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधः -

कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः । अनाहतो नदति देवदत्तः ।।

(6376 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)

- सिद्धं तूभयनियमात् -

सिद्धमेतत् ।

कथम् ?

उभयनियमात् । उभयतो नियमः करिष्यते---कारकाद्दत्तश्रुतयोरेवाशिषि, आशिष्येव कारकाद्दत्तश्रुतयोरिति ।।

-6-2-1- बहुव्रीहौ प्रकृत्या पूर्वपदम् (2661)

(पूर्वपदप्रकृतिस्वराधिकरणम्)

(सूत्राक्षेपभाष्यम्)

किमर्थमिदमुच्यते ?

(सूत्रप्रयोजने श्लोकवार्तिकम्)

बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् ।

सुकृत्---आचार्यः समासान्तोदात्तत्वे प्राप्ते बहुव्रीहिस्वरमपवादं शास्ति ।।

(प्रयोजनाक्षेपभाष्यम्)

नैतदस्ति प्रयोजनम् ।।

(सूत्रप्रयोजनाभावबोधकं श्लोकवार्तिकम्)

नञ्सुभ्यां नियमार्थं तु

नञ्सुभ्याम् (6-2-172) ः‌थ्य;त्येतन्नियमार्थं भविष्यति । नञ्सुभ्यामेव बहुव्रीहेरन्त उदात्तो भवति, नान्यतः---ः‌थ्य;ति ।।

(आक्षेपसमर्थकभाष्यम्)

एवमपि कुत एतत्---पूर्वपदप्रकृतिस्वरत्वं भविष्यति, न पुनः परस्येति ।।

परस्य शिति शासनात् ।। 1 ।।

शितेर्नित्याबह्वच्- (138) ः‌थ्य;त्येतन्नियमार्थं---भविष्यति शितेरेव, नान्यत ः‌थ्य;ति ।।

(आक्षेपनिरासभाष्यम्)

यत्तावदुच्यते---नञ्सुभ्यामित्येतन्नियमार्थमिति ।

(नियमाक्षेपे श्लोकवार्तिकम्)

क्षेपे विधिर्नञोऽसिद्धः

उदराश्वेषुषु क्षेपे (107-108) ः‌थ्य;त्येतस्मिन् प्राप्ते तत एतदुच्यते ।।

(आक्षेपनिरासभाष्यम्)

यदप्युच्यते---परस्य शिति शासनादिति ।

(नियमाक्षेपे श्लोकवार्तिकम्)

परस्य नियमो भवेत् ।

परस्यैष नियमः स्यात्---शितेर्नित्याबह्वजेव, नान्यदिति ।।
(सूत्राक्षेपभाष्यम्)
यदि तर्हि पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं बाधते, चप्रियः---वाप्रियः अत्रापि बाधेत ।
(समाधाने श्लोकवार्तिकम्)
अन्तश्च वा प्रिये सिद्धम्
अन्तोदात्तत्वं च वा प्रिये सिद्धम् ।
(समाधानजिज्ञासाभाष्यम्)
कुतः ?
(समाधानसाधकं श्लोकवार्तिकम्)
संभवात्
असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात् ।।
(समाधानाक्षेपभाष्यम्)
सत्यपि संभवे बाधनं भवति । तद्यथा---दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे पूर्वपदकृतिस्वरत्वं समासान्तोदात्तत्वं
बाधिष्यते ।।
(वार्तिकावतरणभाष्यम्)
एवं तर्हि---
(समाधाने श्लोकवार्तिकम्)
प्रकृताद्विधेः ।। 2 ।।
बहुव्रीहौ प्रकृत्या पूर्वपदं प्रकृतिस्वरं भवतीति ।
किं च प्रकृतम् ?
उदात्त ़थ्य;ति वर्तते ।।
एवमपि कार्यप्रियः--- हार्यप्रियः ़थ्य;त्यत्र न प्राप्नोति ।
स्वरितेऽप्युदात्तोऽस्ति ।
अथवा स्वरितग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
तित्स्वरितम् (6-1-185) ़थ्य;ति ।।
(पदकृत्ये श्लोकवार्तिकम्)
बहुव्रीहावृते सिद्धम्
अन्तरेणापि बहुव्रीहिग्रहणं सिद्धम् ।
तत्पुरुषे कस्मान्न भवति ?
तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः (6-2-2) ़थ्य;त्येतन्नियमार्थं भविष्यति ।
द्विगौ तर्हि कस्मान्न भवति ?
़थ्य;गन्ते द्विगावित्येतन्नियमार्थं भविष्यति ।
द्वन्द्वे तर्हि प्राप्नोति ।
राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु (6-2-34) ़थ्य;ति नियमार्थं भविष्यति ।
अव्ययीभावे तर्हि प्राप्नोति ।
परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु (6-2-33) ़थ्य;त्येतन्नियमार्थं भविष्यति ।।
(़थ्य;ष्टनियमसम्भवबोधकं भाष्यम्)
एवमपि कुत एतत्---एवं नियमो भविष्यति---एतेषामेव तत्पुरुषादिषु---़थ्य;ति, न पुनरेवं नियमः स्यात्---एतेषां तत्पुरुषादिष्वेव---़थ्य;ति ।।
(़थ्य;ष्टनियमे श्लोकवार्तिकम्)
़थ्य;ष्टतश्चावधारणम् ।
़थ्य;ष्टतश्चावधारणं भविष्यति ।
(़थ्य;ष्टनियमाक्षेपभाष्यम्)
एतेषां तर्हि बहुव्रीहेश्च पर्यायः प्राप्नोति ।।
(समाधाने श्लोकवार्तिकम्)
द्विपाद्दिष्टेर्वितस्तेश्च पर्यायो न प्रकल्पते ।। 3 ।।
यदयं द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ दिष्टिवितस्त्योश्च (6-2-197, 31) ़थ्य;ति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यः---पर्यायो न भवतीति ।।

(ज्ञापनसमर्थकं श्लोकवार्तिकम्)
उदात्ते ज्ञापकं त्वेतत् ।
उदात्त एतज्ज्ञापकं स्यात् ।।
(ज्ञापकसमर्थकं श्लोकवार्तिकम्)
स्वरितेन समाविशेत् ।।
स्वरितेन च समावेशः प्राप्नोति । स्वरितेऽप्युदात्तोऽस्ति ।।
(संग्रहः)
बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् ।
नञ्सुभ्यां नियमार्थं तु परस्य शिति शासनात् ।। 1 ।।
क्षेपे विधिर्नञोऽसिद्धः परस्य नियमो भवेत् ।
अन्तश्च वा प्रिये सिद्धं संभवात्प्रकृताद्विधेः ।। 2 ।।
बहुव्रीहावृते सिद्धमिष्टतश्चावधारणम् ।
द्विपाद्दिष्टैर्वितस्तेश्च पर्यायो न प्रकल्पते ।। 3 ।।
उदात्ते ज्ञापकं त्वेतत्स्वरितेन समाविशेत् ।।
-6-2-2- तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः (2662)
(6325 एकदेशिनः प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः -
तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधो वक्तव्यः । परमं कारकम्---परमकारकम् । परमेण कारकेण---परमकारकेण । परमे कारके---परमकारके ःथ्य;ति ।।
(6326 उपसंख्यानानर्थक्यबोधकं वार्तिकम् ।। 2 ।।)
- सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् -
सिद्धमेतत् ।
कथम् ?
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यो द्वितीयासप्तमीतृतीयासमासस्तस्य ग्रहणम्,
लक्षणोक्तश्चायम् ।।
(वार्तिकावतरणभाष्यम्)
अव्यये परिगणनं कर्तव्यम् ।।
(6327 परिगणनोपसंख्यानवार्तिकम् ।। 3 ।।)
- अव्यये नञ्कुनिपातानाम् -
अव्यये नञ्कुनिपातानामिति वक्तव्यम् ।
नञ्--अब्राह्मणः, अवृषलः । नञ् ।।
कु---कुब्राह्मणः, कुवृषलः । कु ।।
निपात---निष्कौशाम्बिः, निर्वाराणसिः ।
क्व मा भूत् ?
स्नात्वाकालकः, पीत्वास्थिरकः ।
(6328 एकदेशिन उपसंख्यानवार्तिकम् ।। 4 ।।)
- क्त्वायां वा प्रतिषेधः -
क्त्वायां वा प्रतिषेधो वक्तव्यः । स्नात्वाकालकः, पीत्वास्थिरकः ।।
उभयं न वक्तव्यम् ।।
(6329 सिद्धान्तवार्तिकम् ।। 5 ।।)
- निपातनात्सिद्धम् -
निपातनादेतत्सिद्धम् ।
किं निपातनम् ?
अवश्यमत्र समासार्थं ल्यबभावार्थं च निपातनं कर्तव्यम्, तेनैव यत्नेन स्वरो न भविष्यति ।।
-6-2-11- सदृशप्रतिरूपयोः सादृश्ये (2671)
(6330 सदृशपदाक्षेपवार्तिकम् ।। 1 ।।)
- सदृशग्रहणमनर्थकं तृतीयासमासवचनात् -
सदृशग्रहणमनर्थकम् ।
किं कारणम् ?

तृतीयासमासवचनात् । सदृशशब्देन तृतीयासमास उच्यते, तत्र तृतीयापूर्वपदं प्रकृतिस्वरं भवतीत्येवं सिद्धम् ।।
(पदसमर्थकभाष्यम्)
षष्ठ्यर्थं तर्हीदं वक्तव्यम्, पितुः सदृशः---पितृसदृश ःथ्य;ति ।।
(6331 पदसमर्थनाक्षेपवार्तिकम् ।। 2 ।।)
- षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् -
षष्ठ्यर्थमिति चेत् तृतीयासमासवचनमनर्थकं स्यात् ।
किं कारणम् ?
ःथ्य;हास्माभिस्त्रैशब्द्यं साध्यम्---पित्रा सदृशः, पितुः सदृशः, पितृसदृश ःथ्य;ति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरेण वृत्तिर्भविष्यति अविरविकन्यायेन । तद्यथा---अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति---आविकमिति ।
एवं पितुः सदृश ःथ्य;ति विगृह्य पितृसदृश ःथ्य;ति भविष्यति ।
पित्रा सदृश ःथ्य;ति विगृह्य वाक्यमेव भविष्यति ।।
(समाधानभाष्यम्)
अवश्यं तृतीयासमासो वक्तव्यः । यत्र षष्ठ्यर्थो नास्ति तदर्थम्---भोजनसदृशः, अध्ययनसदृश ःथ्य;ति
।
यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम्, ःथ्य;दं न वक्तव्यम् ।
ःथ्य;दमप्यवश्यं वक्तव्यम्, यत्र षष्ठी श्रूयते तदर्थम्---दास्याः सदृशः, वृषल्याः सदृश ःथ्य;ति ।।
-6-2-33- परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु (2693)
(6334 एकदेशिनो विप्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन -
परिप्रत्युपापेभ्यः नवं समासे (6-2-178) ःथ्य;त्येतद्भवति विप्रतिषेधेन ।
परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्वित्यस्यावकाशः---परित्रिगर्तम्, परिसौवीरम् ।
वनं समास ःथ्य;त्यस्यावकाशः---प्रवणे यष्टव्यम् ।
ःथ्य;होभयं प्राप्नोति---परिवनम्, अपवनम् ।
वनं समासे ःथ्य;त्येतद्भवति विप्रतिषेधेन ।।
(6335 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् -
न वाऽर्थो विप्रतिषेधेन ।
किं कारणम् ?
वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ।
सिद्धमत्रान्तोदात्तत्वमुत्सर्गेणैव । तस्य पुनर्वचन एतत् प्रयोजनं---येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् ।
स यथैव तदपवादमव्ययस्वरं बाधते, एवमिमममपि बाधिष्यते ।।
-6-2-36- आचार्योपसर्जनश्चान्तेवासी ( 2696)
(6336 आक्षेपवार्तिकम् ।। 1 ।।)
- आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्संदेहः -
आचार्योपसर्जनेऽनेकस्यापि पदस्य पूर्वपदत्वात्संदेहो भवति---आपिशलपाणिनीयव्याडीयगौतमीयाः ।
एवं पदं वर्जयित्वा सर्वाणि पूर्वपदानि, तत्र न ज्ञायते---कस्य पूर्वपदस्य स्वरेण भवितव्यमिति ।।
(6337 समाधानवार्तिकम् ।। 2 ।।)
- लोकविज्ञानात्सिद्धम् -
तद्यथा---लोकेऽमीषां ब्राह्मणानां पूर्वमानयेति यः सर्वपूर्वः स आनीयते । एवमिहापि यत्सर्वपूर्वपदं तस्य प्रकृतिस्वरत्वं भविष्यति ।।
-6-2-38- महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु (2699)
(प्रवृद्धशब्दाक्षेपसमाधानभाष्यम्)
किमर्थं महतः प्रवृद्धशब्द उत्तरपदे पूर्वपदप्रकृतिस्वरत्वमुच्यते, न कर्मधारयेऽनिष्ठा (6-2-46) ःथ्य;त्येव सिद्धम् ?
न सिध्यति ।
किं कारणम् ?
श्रेण्यादिसमास ःथ्य;त्येवं तत् ।
किं पुनः कारणं श्रेण्यादिसमास ःथ्य;त्येवं तत् ?
ःथ्य;ह मा भूत्---महानिरष्टो दक्षिणा दीयते ।।
-6-2-42- कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च (2702)
(6338 उपसंख्यानवार्तिकम् ।। 1 ।।)

- कुरुवृज्योर्गार्हपते -
कुरुवृज्योर्गार्हपते ःथ्य;ति वक्तव्यम् । कुरुगार्हपतम्, वृजिगार्हपतम् ।।
(उपसंख्यानभाष्यम्)
कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलोदासीभारादीनामिति वक्तव्यम् । ःथ्य;हापि यथा स्यात्---देवहूतिः, देवनीतिः, वसुनीतिः, ओषधिश्चन्द्रमाः ।।
(योगविभामेनोपसंख्यानार्थसाधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्य् ।
योगविभागः करिष्यते---कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलः ःथ्य;ति ।
ततः---दासीभाराणां च---ःथ्य;ति । तत्र बहुवचननिर्देशात् दासीभारादीनां च--- ःथ्य;ति विज्ञास्यते ।।
(6339 उपसंख्यानवार्तिकम् ।। 2 ।।)
- पण्यकम्बलः संज्ञायम् -
पण्यकम्बलः संज्ञायामिति वक्तव्यम् ।
यो हि पणितव्यः कम्बलः, पण्यकम्बल एवासौ स्यात् ।।
अपर आह--पण्यकम्बल एव यथा स्यात् ।
क्व मा भूत् ?
पण्यगवः, पण्यहस्ती ।।
-6-2-47- अहीने द्वितीया (2707)
(पदकृत्यभाष्यम्)
अहीन ःथ्य;ति किमर्थम् ?
कान्तारातीतः, योजनातीतः ।।
(6340 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अहीने द्वितीयाऽनुपसर्गे -
अहीने द्वितीयाऽनुपसर्गे ःथ्य;ति वक्तव्यम् ।
ःथ्य;ह मा भूत्---सुखं प्राप्तः---सुखप्राप्तः । दुःखं प्राप्तः---दुःखप्राप्त ःथ्य;ति ।।
(अहीनपदाभावे उपसंख्यानबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् । यद्यप्येतदुच्यते, अत वै तर्ह्यहीनग्रहणं न करिष्यते । ःथ्य;हापि--कान्तारातीतः, योजनातीत ःथ्य;ति---अनुपसर्गे ःथ्य;त्येव सिद्धम् ।।
-6-2-50- तादौ च निति कृत्यतौ (2710)
(पदकृत्यभाष्यम्)
कृद्ग्रहणं किमर्थम् ?
यथा तकारादिग्रहणं कृद्विशेषणं विज्ञायेत---तकारादौ निति कृतीति ।
अथाक्रियमाणे कृद्ग्रहणे तकारादिग्रहणं कस्य विशेषणं स्यात् ?
उत्तरपदविशेषणम् ।
तत्र को दोषः ?
ःथ्य;हैव स्यात्---प्रतरिता, प्रतरितुम् ।
ःथ्य;ह न स्यात्---प्रकर्ता, प्रकर्तुम् ।
(6348 कृद्ग्रहणानर्थक्यम् ।। 1 ।।)
- तादौ निति कृद्ग्रहणानर्थक्यम् -
तादौ निति कृद्ग्रहणमनर्थकम् । क्रियमाणेऽपि वै कृद्ग्रहणेऽनिष्टं शक्यं विज्ञातुम्---तकारादौ उत्तरपदे निति कृति---ःथ्य;ति ।
अक्रियमाणेऽपि चेष्टम्---नियस्तकारादिस्तदन्त उत्तरपद ःथ्य;ति ।
यावता क्रियमाणे चानिष्टं विज्ञायते, अक्रियमाणे चेष्टम् ।
अक्रियमाण एवेष्टं विज्ञास्यामः ।।
(6349 समाधानवार्तिकम् ।। 2 ।।)
- कृदुपदेशे वा ताद्यर्थमिडर्थम् -
कृदुपदेशे तर्हि ताद्यर्थमिडर्थं कृद्ग्रहणं कर्तव्यम् । कृदुपदेशे यस्तकारादिः---ःथ्य;त्येवं यथा विज्ञायेत ।
किं प्रयोजनम् ?
ःथ्य;डर्थम् । ःथ्य;डादावपि सिद्धं भवति---प्रलपिता, प्रलपितुम् ।।

-6-2-52- अनिगन्तोऽञ्चतौ वप्रत्यये (2712)
(6350 अतिप्रसङ्गापादकवार्तिकम् ।। 1 ।।)
- अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्गः -
अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृति स्वरभावः, प्राप्नोति । प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः ।।
(अनिगन्तपदाक्षेपभाष्यम्)
अनिगन्तवचनमिदानीं किमर्थं स्यात् ?
(6351 अनिगन्तपदप्रयोजनवार्तिकम् ।। 2 ।।)
- अनिगन्तवचनं किमर्थमिति चेदयणादिष्टार्थम् -
अयणादेशार्थमेतत् स्यात् । यदा यणादेशो न ।
कदा च यणादेशो न ?
यदा शाकलम् ।।
(6352 आक्षेपवार्तिकम् ।। 3 ।।)
- उक्तं वा -
किमुक्तम् ?
समासे शाकलं न भवति---ाथ्य;ति ।।
(प्रयोजनभाष्यम्)
यत्र तर्ह्यञ्चेतरकारो लुप्यते । प्रतीचः, प्रतीचा ।
चुस्वरस्तत्र बाधको भविष्यति ।
अयमेवेष्यते ।
वक्ष्यति ह्येतत्---चोरनिगन्तोऽञ्चतावप्रत्यय ाथ्य;ति ।।
यत्तर्हि--न्यध्योः प्रकृतिस्वरं शास्ति ।
एष हि यणादिष्टार्थमारम्भः ।
एतदप्ययणादिष्टार्थमेव, यदा यणादेशो न ।
कदा च यणादेशो न ?
यदा शाकलम् ।
उक्तं वा ।
किमुक्तम् ?
समासे शाकलं न भवतीति ।।
यत्र तर्ह्यञ्चतेरकारो लुप्यते---अधीचः, अधीचा ।
चुस्वरस्तत्र बाधको भविष्यति ।
अयमेवेष्यते ।
वक्ष्यति ह्येतत्---चोरनिगन्तोऽञ्चतावप्रत्यय ाथ्य;ति ।।
यत्तर्हि नेरेव प्रकृतिस्वरं शास्ति ।
एष हि यणादिष्टार्थ आरम्भः ।
एतदप्ययणादिष्टार्थमेव ।
कथम् ?
अकृते यणादेशे पूर्वपदप्रकृतिस्वरत्वे कृते उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (8-2-4) ाथ्य;त्येष स्वरः सिद्धो भवति । न्यङ् ।।
तस्मात्सुष्ठूच्यते---अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्ग ाथ्य;ति ।।
(6353 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 4 ।।)
- चोरनिगन्तोऽञ्चतावप्रत्यये -
चुस्वरादनिगन्तोऽञ्चतावप्रत्यय ाथ्य;त्येतद्भवति विप्रतिषेधेन ।
चुस्वरस्यावकाशः---दधीचः पश्य, दधीचा, दधीचे ।
अनिगन्तोऽञ्चतावप्रत्यय ाथ्य;त्यस्यावकाशः---पराङ्, पराञ्चौ, पराञ्चः ।
ाथ्य;होभयं प्राप्नोति---अवाचा, अवाचे ।
अनिगन्तोऽञ्चतावप्रत्यय ाथ्य;त्येतद्भवति विप्रतिषेधेन ।।
(6354 विप्रतिषेधासंभवबोधकवार्तिकम् ।। 5 ।।)
- न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादः -
न वा एतद्विप्रतिषेधेनापि सिध्यति ।
कथं तर्हि सिध्यति ?

चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधात् । चुस्वरः पूर्वपदप्रकृतिस्वरभाविनः प्रतिषेध्यः । ः थ्य;तरथा हि सर्वापवादश्चुस्वरः । अक्रियमाणे हि प्रतिषेधे सर्वापवादोऽयं चुस्वरः ।
कथम् ?
प्रत्ययस्वरस्यापवादः---अनुदात्तौ सुप्पितौ (3-1-4) । अनुदात्तौ सुप्पितावित्यस्योदात्तनिवृत्तिस्वरः । उदात्तनिवृत्तिस्वरस्य चुस्वरः ।
स यथैवोदात्तनिवृत्तिस्वरं बाधत एवमनिगन्तस्वरमपि बाधेत ।।
यदि तावत्संख्यातः साम्यम्, अयमपि चतुर्थः ।
समासान्तोदात्तत्वस्यापवादोऽव्ययस्वरः ।
अव्ययस्वरस्य कृत्स्वरः ।
कृत्स्वरस्यायम् ।
उभयोश्चतुर्थयोर्युक्तो विप्रतिषेधः ।।
सति शिष्टस्तर्हि चुस्वरः ।
कथम् ?
चावित्युच्यते, यत्रास्यैद्रूपं भवति ।
क्वचास्यैतद्रूपम् ?
यजादावसर्वनामस्थानेऽभिनिर्वृत्ते अकारलोपे नकारलोपे च कृते ।
तस्मात्सुष्ठूच्यते---न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवाद ः थ्य;ति ।।
(6355 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 6 ।।)
- विभक्तीषत्स्वरात्कृत्स्वरः -
विभक्तिस्वरात्---ः थ्य;र्षत्स्वराच्च कृत्स्वरो भवति विप्रतिषेधेन ।
विभक्तिस्वरस्यावकाशः---अक्षशौण्डः, स्त्रीशौण्डः ।
कृत्स्वरस्यावकाशः---ः थ्य;ध्मप्रव्रश्चनः, पलाशशातनः ।
ः थ्य;होभयं प्राप्नोति---पूर्वाह्णे स्फोटकः, अपराह्णे स्फोटकः ।
कृत्स्वरो भवति विप्रतिषेधेन ।।
ः थ्य;र्षत्स्वरस्यावकाशः---ः थ्य;र्षत्कडारः, ः थ्य;र्षत्पिङ्गलः ।
कृत्स्वरस्य स एव ।
ः थ्य;होभयं प्राप्नोति---ः थ्य;र्षद्भेदः ।
कृत्स्वरो भवति विप्रतिषेधेन ।।
(6356 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 7 ।।)
- चित्स्वराद्धारिस्वरः -
चित्स्वराद्धारिस्वरो भवति विप्रतिषेधेन ।
चित्स्वरस्यावकाशः---चलनः, चोपनः ।
हारिस्वरस्यावकाशः---याज्ञिकाश्वः, वैयाकरणहस्ती ।
ः थ्य;होभयं प्राप्नोति---पितृगवः, मातृगवः ।
हारिस्वरो भवति विप्रतिषेधेन ।।
(विप्रतिषेधोपसंख्यानभाष्यम्)
कृत्स्वराद्धारिस्वरो विप्रतिषेधेन ।
कृत्स्वरस्यावकाशः---ः थ्य;ध्मव्रश्चनः, पलाशशातनः ।
हारिस्वरस्य स एव ।
ः थ्य;होभयं प्राप्नोति---अक्षहृतः, वाडवहार्यः ।
हारिस्वरो भवति विप्रतिषेधेन ।।
(6357 कृत्स्वरविप्रतिषेधानर्थक्यबोधकवार्तिकम् ।। 8 ।।)
- न वा हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य -
न वाऽर्थो विप्रतिषेधेन ।
किं कारणम् ?
हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य । यदयं अहरणे ः थ्य;ति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः---न कृत्स्वरो हारिस्वरं बाधत ः थ्य;ति ।
नैतदस्ति ज्ञापकम् । अनो भावकर्मवचनः (6-2-150) ः थ्य;त्येतस्मिन् प्राप्ते तत एतदुच्यते ।।
यद्येवं साधीयो ज्ञापकम् । कृत्स्वरस्यापवादः---अनो भावकर्मवचनः ः थ्य;ति । बाधकं किलायं बाधते, किं पुनस्तन्न बाधिष्यते ?
(विप्रतिषेधबोधकभाष्यम्)

युक्तस्वरश्च कृत्स्वराद्भवति विप्रतिषेधेन ।
युक्तस्वरस्यावकाशः---गोबल्लवः, अश्वबल्लवः ।
कृत्स्वरस्य स एव ।
ः्थ्य;होभयं प्राप्नोति---गोसंख्यः, पशुसंख्यः, अश्वसंख्यः ।
युक्तस्वरो भवति विप्रतिषेधेन ।।
-6-2-49- गतिरनन्तरः (2709)
(पदकृत्यभाष्यम्)
अनन्तर ः्थ्य;ति किमर्थम् ?
ः्थ्य;ह मा भूत्---अभ्युद्धृतम्, उपसमाहृतम् ।।
(6341 अनन्तरग्रहणाक्षेपवार्तिकम् ।। 1 ।।)
- गतेरनन्तरग्रहणमनर्थकं गतिर्गताविति वचनात् -
गतेरनन्तरग्रहणमनर्थकम् ।
किं कारणम् ?
गतिर्गतौ ः्थ्य;ति वचनात् । गतौ परतो गतेरनुदात्तत्वमुच्यते, तद्बाधकं भविष्यति ।।
(6342 अनन्तरपदसत्त्वेऽपि दोषवार्तिकम् ।। 2 ।।)
- तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वप्रसङ्गः -
तत्र यस्य गतेरप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वं प्राप्नोति---अन्तः थाथघञ्क्ताजबित्रकाणाम् (6-2-143;144) ः्थ्य;ति ।।
(6343 अनन्तरपदसत्त्वे दोषापोहवार्तिकम् ।। 3 ।।)
- प्रकृतिस्वरवचनाद्ध्यनन्तोदात्तत्वम् -
प्रकृतिस्वरवचनसार्मथ्यादन्तोदात्तत्वं न भविष्यति ।
यदि हि स्यात्, प्रकृतिस्वरवचनमिदानीं किमर्थं स्यात् ?
(6344 प्रकृतिस्वरफलबोधकवार्तिकम् ।। 4 ।।)
- प्रकृतिस्वरवचनं किमर्थमिति चेत् एकगत्यर्थम् -
प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् । य एको गतिस्तदर्थमेतत् स्यात् । प्रकृतम्, प्रहृतम् ।।
(अनन्तरग्रहणप्रयोजनभाष्यम्)
एवमर्थमेव तर्ह्यनन्तरग्रहणं कर्तव्यम्, अत्र यथा स्यात् ।
क्रियमाणेऽपि वै अनन्तरग्रहणेऽत्र न सिध्यति ।
किं कारणम् ?
गतिरनन्तरं पूर्वपदं प्रकृतिस्वरं भवतीत्युच्यते । यश्चात्र गतिरनन्तरः नासौ पूर्वपदम् । यच्च पूर्वपदम्, नासावनन्तरः ।।
अपूर्वपदार्थं तर्हीदं वक्तव्यम् । अपूर्वपदस्यापि गतेः प्रकृतिस्वरत्वं यथा स्यात् ।।
(6345 अनन्तरपदस्यापूर्वपदार्थत्वे आक्षेपवार्तिकम् ।। 5 ।।)
- अपूर्वपदार्थमिति चेत् कारकेऽतिप्रसङ्गः -
अपूर्वपदार्थमिति चेत्कारकेऽतिप्रसङ्गो भवति । आगतः, दूरादागतः । स यथैव गतिपूर्वपदस्य भवति, एवं कारकपूर्वपदस्यापि प्राप्नोति ।।
(6346 समाधानवार्तिकम् ।। 6 ।।)
- सिद्धं तु गतेरन्तोदात्ताप्रसङ्गात् -
सिद्धमेतत् ।
कथम् ?
यत्तत् अन्तः थाथघञ्क्ताजबित्रकाणाम् ः्थ्य;त्येतद्गतेर्न प्रसङ्क्तव्यम् ।
किं कृतं भवति ?
कृत्स्वरापवादोऽयं भवति ।
तत्र गतिरन्तर ः्थ्य;त्यस्यावकाशः---प्रकृतम्, प्रहृतम् ।
अन्तः थाथघञ्क्ताजबित्रकाणाम् ः्थ्य;त्यस्यावकाशः---दूराद्गतः, दूराद्यातः ।
ः्थ्य;होभयं प्राप्नोति---आगतः, दूरादागतः ।
अन्तः थाथघञ्क्ताजबित्रकाणाम् ः्थ्य;त्येतद्भवति विप्रतिषेधेन ।।
(थाथादिसूत्रे गतिग्रहणाननुवर्तने दोषभाष्यम्)
अवश्यं गतेस्तत् प्रसङ्क्तव्यम्, भेदः---प्रभेद ः्थ्य;त्येवमर्थम् ।।
(दोषापोहभाष्यम्)
एवं तर्हि योगविभागः करिष्यते---अन्तः, थाथघञ्त्रजबित्रकाणाम् । ततः---क्तः, क्तान्तमुत्तरपदमन्तोदात्तं भवति । अत्र कारकोपपदग्रहणमनुवर्तते, गतिग्रहणं निवृत्तम् ।।

अथ वोपरिष्टाद्योगविभागः करिष्यते । ःथ्य;दमस्ति--सूपमानात् क्तः संज्ञायामनाचितादीनाम् प्रवृद्धादीनां च (6-2-145,146,147) ःथ्य;ति ।
ततो वक्ष्यामि---कारकात् । कारकाच्च क्तान्तमुत्तरपदमन्तोदात्तं भवति---ःथ्य;ति ।।
ततः---दत्तश्रुतयोरेवाशिषि, कारकादिति ।।
(अनन्तरग्रहणवैर्य्यर्थ्यबोधकभाष्यम्)
एवञ्च कृत्वा नार्थोऽनन्तरग्रहणेन ।।
कथमभ्युद्धृतम् ?
उत् हरतिक्रियां विशिनष्टि । उदा विशिष्टामभिर्विशिनष्टि । तत्र गतिरनन्तरः ःथ्य;ति च प्राप्नोति, गतिर्गतौ (8-1-70) ःथ्य;ति च ।
गतिरनन्तर ःथ्य;त्यस्यावकाशः---प्रकृतम्, प्रहृतम् ।
गतिर्गतावित्यस्यावकाशः---अभ्युद्धरति, उपसमादधाति ।
ःथ्य;होभयं प्राप्नोति---अभ्युद्धृतम्, उपसंहृतम्, उपसमाहितम् ।
गतिर्गतावित्येतत् भवति विप्रतिषेधेन ।।
(सिद्धान्तभाष्यम्)
एवं तर्हि सिद्धे सति यदनन्तरग्रहणं करोति तज्ज्ञापयत्याचार्यः---भवत्येषा परिभाषा कृद्ग्रहणे गतिकारकपूर्वस्यापि---ःथ्य;ति ।
(परिभाषाफलबोधकभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम् ?
अवतप्ते नकुलस्थितं त एतत्, उदके विशीर्णं त एतत् । सगतिकेन सनकुलेन च समासः सिद्धो भवति ।।
-6-2-80- उपमानं शब्दार्थप्रकृतावेव (2740)
(उपमानपदप्रयोजनभाष्यम्)
उपमानमिति किमर्थम् ?
शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वेणातिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायेत ।
तत्र को दोषः ?
ःथ्य;ह न स्यात्---पुष्पहारी, फलहारी ।
उपमानग्रहणेन पुनः क्रियमाणे न दोषो भवति ।।
(शब्दार्थपदप्रयोजनभाष्यम्)
अथ शब्दार्थग्रहणं किमर्थम् ?
उपमानं प्रकृतावेवेतीयत्युच्यमाने ःथ्य;हापि प्रसज्येत---वृकवञ्ची, वृकप्रेक्षी ।
शब्दार्थग्रहणे पुनः क्रियमाणे न दोषो भवति ।।
(प्रकृतिग्रहणप्रयोजनभाष्यम्)
अथ प्रकृतिग्रहणं किमर्थम् ?
शब्दार्थप्रकृतिरेव यो नित्यं तत्र यथा स्यात् ।
ःथ्य;ह मा भूत्---कोकिलाभिव्याहारी, गर्दभोच्चारी ।
(एवपदप्रयोजनभाष्यम्)
अथैवकारः किमर्थः ?
नियमार्थः ।
नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ।
ःथ्य;ष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत---उपमानं शब्दार्थप्रकृतावेवेति ।
मैवं विज्ञायि--उपमानमेव शब्दार्थप्रकृताविति ।
शब्दार्थप्रकृतौ ह्युपमानं चानुपमानं चाद्युदात्तमिष्यते । साध्वध्यायी, बिलम्बिताध्यायी ।।
-6-2-82- दीर्घकाशतुषभ्राष्ट्रवटं जे (2742)
(विप्रतिषेधबोधकभाष्यम्)
जे दीर्घान्तस्यादिरुदात्तो भवतीत्येतस्मात् अन्त्यात्पूर्वं बह्वचः ःथ्य;त्येतद्भवति विप्रतिषेधेन ।
जे दीर्घान्तस्यादिरुदात्तो भवतीत्यस्यावकाशः---कुटीजः, शमीजः ।
अन्त्यात्पूर्वं बह्वच ःथ्य;त्यस्यावकाशः---उपसरजः, मन्दुरजः ।
ःथ्य;होभयं प्राप्नोति---आमलकीजः, वलभीजः ।
अन्त्यात्पूर्वं बह्वच ःथ्य;त्येतद्भवति विप्रतिषेधेन ।।
-6-2-91- न भूताधिकसञ्जीवमद्राश्मकज्जलम् (2751)
(उपसंख्यानभाष्यम्)
आद्युदात्तप्रकरणे दिवोदासादीनां छन्दसि उपसंख्यानं कर्तव्यम् । दिवोदासाय गायत वध्र्यश्वाय दाशुषे ।।
-6-2-92- अन्तः ( 2752)

-6-2-93- सर्वं गुणकात्स्न्र्ये (2753)
(सर्वपदप्रयोजनभाष्यम्)
सर्वग्रहणं किमर्थम् ?
गुणकात्स्न्ये ाथ्य;तीयत्युच्यमाने ाथ्य;हापि प्रसज्येत--परमशुक्लः, परमकृष्ण ाथ्य;ति ।
सर्वग्रहणे पुनः क्रियमाणे न दोषो भवति ।।
(गुणपदप्रयोजनभाष्यम्)
अथ गुणग्रहणं किमर्थम् ?
सर्वं कात्स्न्र्ये ाथ्य;तीयत्युच्यमाने ाथ्य;हापि प्रसज्येत---सर्वसौवर्णः, सर्वराजत ाथ्य;ति ।
गुणग्रहणे पुनः क्रियमाणे न दोषो भवति ।।
(कात्स्न्र्यग्रहणप्रयोजनभाष्यम्)
अथ कात्स्न्र्यग्रहणं किमर्थम् ?
सर्वं गुणे ाथ्य;तीयत्युच्यमाने ाथ्य;हापि प्रसज्येत सर्वेषां श्वेतः---सर्वश्वेत ाथ्य;ति ।
कथं चात्र समासः ?
षष्ठी सुबन्तेन समस्यते ाथ्य;ति ।
गुणेन नेति प्रतिषेधः प्राप्नोति ।
एवं तर्हि---
(6358 समासोपसंख्यानवार्तिकम् ।। 1 ।।)
- गुणात्तरेण समासस्तरलोपश्च -
गुणात्तरेण समासो वक्तव्यः, तरलोपश्च । सर्वेषां श्वेततरः--सर्वश्वेतः ।।
-6-2-105- उत्तरपदवृद्धौ सर्वं च (2765)
(उत्तरपदवृद्धिपदार्थबोधकभाष्यम्)
अयुक्तोऽयं निर्देशः, न ह्युत्तरपदं नाम वृद्धिरस्ति ।
कथं तर्हि निर्देशः कर्तव्यः ?
वृद्धिमत्युत्तरपद ाथ्य;ति ।
स तर्हि तथा निर्देशः कर्तव्यः ।
न कर्तव्यः । नैवं विज्ञायते---उत्तरपदं वृद्धिः--उत्तरपदवृद्धिः, उत्तरपदवृद्धाविति ।
कथं तर्हि ?
उत्तरपदस्य वृद्धिरस्मिन् सोऽयम्---उत्तरपदवृद्धिः,
उत्तरपदवृद्धाविति ।।
-6-2-106- बहुव्रीहौ विश्वं संज्ञायाम् (2766)
(6359 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः -
बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्त ाथ्य;त्येतद्भवति विप्रतिषेधेन ।
बहुव्रीहौ विश्वं संज्ञायाम् ाथ्य;त्यस्यावकाशः---विश्वदेवः, विश्वयशाः ।
मित्राजिनयोरन्त ाथ्य;त्यस्यावकाशः---कुलमित्रम्, कुलाजिनम् ।
ाथ्य;होभयं प्राप्नोति---विश्वमित्रः, विश्वाजिनः ।
मित्राजिनयोरन्त ाथ्य;त्येतद्भवति विप्रतिषेधेन ।।
(उपसंख्यानभाष्यम्)
अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानं कर्तव्यम् । मरुद्वृधः सुवया उपतस्थे ।।
-6-2-107- उदराश्वेषुषु (2767)
-6-2-108- क्षेपे (2768)
(6360 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- उदरादिभ्यो नञ्सुभ्याम् -
उदराश्वेषुषु क्षेपे ाथ्य;त्येतस्मात् नञ्सुभ्याम् (172) ाथ्य;त्येतद्भवति विप्रतिषेधेन ।
उदराश्वेषुषु क्षेपे ाथ्य;त्यस्यावकाशः---कुण्डोदरः, घटोदरः ।
नञ्सुभ्यामित्यस्यावकाशः---अयवः, अतिलः, अमाषः, सुयवः, सुतिलः, सुमाषः ।
ाथ्य;होभयं प्राप्नोति---अनुदरः, सूदरः ।
नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ।।
-6-2-117- सोर्मनसी अलोमोषसी( 2777)

(6361 विप्रतिषेधवार्तिकम् ।। 1 ।।)
- सोर्मनसोः कपि -
सोर्मनसी अलोमोषसी ःथ्य;त्येतस्मात् कपि पूर्वम् (173) ःथ्य;त्येतद्भवति विप्रतिषेधेन ।
सोर्मनसी अलोमोषसी ःथ्य;त्येतस्यावकाशः---सुशर्माणमधिनावं रुहेम, सुशर्मासि सुप्रतिष्ठानः, सुस्रोताः, सुपयाः, सुवर्चाः ।
कपि पूर्वम् ःथ्य;त्यस्यावकाशः---अयवकः, अतिलकः ।
ःथ्य;होभयं प्राप्नोति---सुशर्मकः, सुस्रोतस्कः ।
कपि पूर्वम् ःथ्य;त्येतद्भवति विप्रतिषेधेन ।।
-6-2-121- कूलतीरतूलमूलशालाक्षसममव्ययीभावे (2781)
(6362 विप्रतिषेधवार्तिकम् ।। 1 ।।)
- पर्यादिभ्यः कूलादीनामाद्युदात्तत्वम् -
पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन ।
परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ःथ्य;त्यस्यावकाशः---परित्रिगर्तम्, परिसौवीरम् ।
कूलादीनामाद्युदात्तत्वस्यावकाशः---अनुकूलम्, अतिकूलम् ।
ःथ्य;होभयं प्राप्नोति---परिकूलम् ।
कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन ।।
-6-2-126- चेलखेटकटुककाण्डं गर्हायाम् (2786)
-6-2-130- अकर्मधारये राज्यम् (2790)
(6363 विप्रतिषेधवार्तिकम् ।। 1 ।।)
- चेलराज्यादिभ्योऽव्ययम् -
चेलराज्यादिस्वरादव्ययस्वरो भवति विप्रतिषेधेन ।
चेलराज्यादिस्वरस्यावकाशः---भार्याचेलम्, पितृचेलम्, ब्राह्मणराज्यम् ।
अव्ययस्वरस्यावकाशः---निष्कौशाम्बिः, निर्वाराणसिः ।
ःथ्य;होभयं प्राप्नोति---कुचेलम्, कुराज्यम् ।
अव्ययवस्वरो भवति विप्रतिषेधेन ।।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।
न वक्तव्यः ।
ःथ्य;ष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवति ।
-6-2-136- कुण्डं वनम् (2796)
(6364 उपसंख्यानवार्तिकम् ।। 1 ।।)
- कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् -
कुण्डाद्युदात्तत्वे तत्समुदायग्रहणं कर्तव्यम् । वनसमुदायवाची चेत्स कुण्डशब्दो भवतीति वक्तव्यम् । ःथ्य;ह मा भूत्---मृत्कुण्डम् ।।
ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।।
-6-2-139- गतिकारकोपपदात्कृत् (2799)
(गतिकारकपदप्रयोजनभाष्यम्)
गतिकारकोपपदादिति किमर्थम् ?
ःथ्य;ह मा भूत्---परमं कारकं---परमकारकम् ।
गतिकारकोपपदादित्युच्यमानेऽप्यत्र प्राप्नोति । एतदपि हि कारकम् ।
ःथ्य;दं तर्हि---देवदत्तस्य कारकं---देवदत्तकारकम् ।।
ःथ्य;दं चाप्युदाहरणम्---परमं कारकं---परमकारकमिति ।
ननु चोक्तं---गतिकारकोपपदादित्युच्यमानेऽप्यत्र प्राप्नोति, एतदपि हि कारकमिति ।
नैतत्कारकम् । कारकविशेषणमेतत् । यावद् ब्रूयात्---प्रकृष्टं कारकं शोभनं कारकमिति, तावदेतत्परमकारकमिति ।।
(कृद्ग्रहणप्रयोजनभाष्यम्)
अथ कृद्ग्रहणं किमर्थम् ?
ःथ्य;ह मा भूत्---निष्कौशाम्बिः, निर्वाराणसिरिति । अत उत्तरं पठति---
(6369 कृद्ग्रहणानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात् -
गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणमनर्थकम् ।
किं कारणम् ?
अन्यस्योत्तरपदस्याभावात् । न ह्यन्यद्गत्यादिभ्य उत्तरपदमस्ति, अन्यदतः कृतः ।

किं कारणम् ?
धातोर्हि द्वये प्रत्यया विधीयन्ते---तिङः, कृतश्च । तत्र कृता सह समासो भवति, तिङा च न भवति । तत्रान्तरेण कृद्ग्रहणं कृत एव भविष्यति ।।
ननु चेदानीमेवोदाहृतम्---निष्कौशाम्बिः, निर्वाराणसिरिति ।
यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः, न च निसः कौशाम्बीशब्दं प्रति क्रियायोगः ।।
(6370 कृद्ग्रहणप्रयोजनवार्तिकम् ।। 2 ।।)
- कृत्प्रकृतौ वा गतित्वादधिकार्थं कृद्ग्रहणम् -
कृत्प्रकृतौ तर्हि गतित्वादधिकार्थं कृद्ग्रहणं कर्तव्यम् ।
कृत्प्रकृतिर्धातुः । धातुं च प्रति क्रियायोगः । तत्र यत्क्रियायुक्तास्तं प्रति---ःथ्य;ति ःथ्य;हैव स्यात्---प्रणीः, उन्नीः---ःथ्य;ति ।
ःथ्य;ह न स्यात्---प्रणायकः, उन्नायकः ।।
(वार्तिकप्रयोजननिरासभाष्यम्)
एतदपि नास्ति प्रयोजनम् । यत्क्रियायुक्ता ःथ्य;ति नैवं विज्ञायते---यस्य क्रिया---यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत ःथ्य;ति ।
कथं तर्हि ?
या क्रिया---यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत ःथ्य;ति ।
न च कश्चित्केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात् । केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वा कृदधिकस्य भविष्यति ।।
(कृद्ग्रहणप्रयोजनभाष्यम्)
ननु चायं तस्यैवार्थस्य वाचकः---प्रणीः, उन्नीरिति ।
एषोऽपि हि कर्तृविशिष्टस्यैव ।।
अयं तर्हि तस्यैवार्थस्य वाचकः---प्रभवनमिति ।
तस्मात्कृद्ग्रहणं कर्तव्यम् ।।
(कृद्ग्रहणेऽतिव्याप्त्यव्याप्तिनिरासभाष्यम्)
यदि कृद्ग्रहणं क्रियते, आमन्ते स्वरो न प्राप्नोति---प्रपचतितराम्, प्रजल्पतितराम्, प्रजल्पतितमाम् ।।
असति पुनः कृद्ग्रहणे क्रियाप्रधानमाख्यातम्, तस्यातिशये तरबुत्पद्यते । तरबन्तात् स्वार्थे आम्, तत्र यत्क्रियायुक्ता ःथ्य;ति भवत्येव संघातं प्रति क्रियायोगः ।
न च कश्चित् केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात्, केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वाऽधिकस्य भविष्यति ।
ननु चायं तस्यार्थस्य वाचकः---प्रभवनमिति ।
एषोऽपि हि द्रव्यविशिष्टस्य वाचकः ।
कथम् ?
कृदभिहितो भावो द्रव्यवद्भवति क्रियावदपीति ।।
-6-2-143- अन्तः (2803)
(अन्तशब्दस्य विशेषणद्वयाक्षेपकभाष्यम्)
किं समासस्यान्त उदात्तो भवति, आहोस्विदुत्तरपदस्य ?
कुतः संदेहः ?
उभयं प्रकृतम्, तत्रान्यतरच्छक्यं विशेषयितुम् ।
कश्चात्र विशेषः ?
(6371 समासस्यान्तस्वीकारे दोषवार्तिकम् ।। 1 ।।)
- अन्तोदात्तत्वं समासस्येति चेत्कप्युपसंख्यानम् -
अन्तोदात्तत्वं समासस्येति चेत् कप्युपसंख्यानं कर्तव्यम् ।
ःथ्य;दमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने कपि चेति वक्तव्यम् ।
ःथ्य;हापि यथा स्यात्---ःथ्य;दंप्रथमकाः ।
अस्तु तर्ह्युत्तरपदस्य ।।
(6372 उत्तरपदस्यान्तस्वीकारे दोषवार्तिकम् ।। 2 ।।)
- उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् -
उत्तरपदस्यान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं वक्तव्यम् । अनृचः बह्वृचः ।।
(उत्तरपदस्यान्तस्वीकारे दोषभाष्यम्)
अपर आह---उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं वक्तव्यम् । अज्ञकः, अस्वकः । कपि पूर्वम् (6-2-173) ःथ्य;त्यस्यापवादः---ह्रस्वान्तेऽन्त्यात्पूर्वम् (174) ःथ्य;ति ।
तत्र ह्रस्वान्तेऽन्त्यात्पूर्व उदात्तभावी नास्तीति कृत्वोत्सर्गेणान्तोदात्तत्वं प्राप्नोति ।।
(6373 अपरमतप्राप्तदोषवारकवार्तिकम् ।। 3 ।।)

- न वा कपि पूर्ववचनं ज्ञापकमुत्तरपदानन्तोदात्तत्वस्य -
न वा एष दोषः ।
किं कारणम् ?
यदयं कपि पूर्वमित्याह, तत् ज्ञापयत्याचार्यः---उत्तरपदस्यान्तोदात्तत्वं न भवतीति ।।
एवमवपि कुत एतत्---समासस्यान्त उदात्तो भवतीति ?
(6374 दोषवारणसमर्थकवार्तिकम् ।। 4 ।।)
- प्रकरणाच्च समासान्तोदात्तत्वम् -
प्रकृतं समासग्रहणमनुवर्तते ।
क्व प्रकृतम् ?
चौ समासस्य (6-1-222;223) ाःथ्य;ति ।।
(प्रथमदोषनिवारकभाष्यम्)
ननु चोक्तम्---अन्तोदात्तत्वं समासस्येति चेत् कपि उपसंख्यानमिति ।
नैष दोषः । उत्तरपदग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
उत्तरपदादिः (6-2-111) ाःथ्य;ति ।
तत्रैवमभिसंबन्धः करिष्यते---नञ्सुभ्यां समासस्यान्त उदात्तो भवतीति ।
ाःथ्य;दमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने, उत्तरपदस्येति ।।
-6-2-165- संज्ञायां मित्राजिनयोः (2819)
(6377 उपसंख्यानवार्तिकम् ।। 1 ।।)
- ऋषिप्रतिषेधो मित्रे -
ऋषिप्रतिषेधो मित्रे वक्तव्यः । विश्वामित्र ऋषिः ।।
-6-2-175- बहोर्नञ्वदुत्तरपदभूम्नि (2835)
(सूत्रप्रयोजननिराकरणभाष्यम्)
किमर्थं बहोर्नञ्वदतिदेशः क्रियते, न नञ्सुबहुभ्यः ाःथ्य;त्येवोच्येत ?
नैवं शक्यम् । उत्तरपदभूम्नि ाःथ्य;ति वक्ष्यति तद्बहोरेव यथा स्यात्, नञ्सुभ्यां मा भूदिति ।
नैतदस्ति प्रयोजनम् । एकयोगेऽपि हि सति यस्योत्तरपदभूमाऽस्ति तस्य भविष्यति ।
कस्य चास्ति ?
बहोरेव ।।
ाःथ्य;दं तर्हि प्रयोजनम्---न गुणादयोऽवयवाः (176) ाःथ्य;ति वक्ष्यति तत् बहोरेव यथा स्यात्, नञ्सुभ्यां मा भूदिति ।
एतदपि नास्ति प्रयोजनम् । एकयोगेऽपि हि सति यस्य गुणादयोऽवयवाः सन्ति तस्य भविष्यति ।
कस्य च सन्ति ?
बहोरेव ।।
अत उत्तरं पठति---
(6378 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् -
बहोर्नञ्वदतिदेशः क्रियते, उत्तरपदस्याद्युदात्तार्थम् । उत्तरपदस्याद्युदात्तत्वं यथा स्यात् ।
विदेशस्थमपि यन्नञः कार्यं तदपि बहोर्यथा स्यात्---नञो जरमरमित्रमृताः (6-2-116) । अजरः, अमरः, बहुजरः, बहुमित्रः, बहुमृतः ।।
-6-2-177- उपसर्गात्स्वाङ्गं ध्रुवमपर्शु (2837)
(6379 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं ध्रुवम् -
मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं ध्रुवं भवति विप्रतिषेधेन ।
मुखस्यान्तोदात्तत्वस्यावकाशः---गौरमुखः, श्लक्ष्णमुखः ।
उपसर्गात्स्वाङ्गं ध्रुवम् ाःथ्य;त्यस्यावकाशः---प्रस्फिक्, प्रोदरः ।
ाःथ्य;होभयं प्राप्नोति---प्रमुखः ।
उपसर्गात्स्वाङ्गं ध्रुवम् ाःथ्य;त्येतद्भवति विप्रतिषेधेन ।।
(विप्रतिषेधप्रयोजनभाष्यम्)
कः पुनरत्र विशेषः, तेन वा सत्यनेन वा ?
सापवादः स विधिः, अयं पुनर्निरपवादः ।
अव्ययात्तस्य प्रतिषेधोऽपवादः ।।

-6-2-185- अभेर्मुखम् (2845)
-6-2-186- अपाच्च (2846)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न उपसर्गात्स्वाङ्गं ध्रुवम्---ःथ्य;त्येव सिद्धम् ?
(6380 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- अभेर्मुखमपाच्चाध्रुवार्थम् -
अध्रुवार्थोऽयमारम्भः ।।
(6381 प्रयोजनान्तरवार्तिकम् ।। 2 ।।)
- अबहुव्रीह्यर्थो वा -
अथवा बहुव्रीहेरिति वर्तते । अबहुव्रीह्यर्थोऽयमारम्भः ।।
-6-2-187- स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनाम नाम च (2847)
(सूत्रप्रयोजनाक्षेपभाष्यम्)
स्फिगपूतग्रहणं किमर्थम्, न उपसर्गात्स्वाङ्गं ध्रुवम् ःथ्य;त्येव सिद्धम् ?
(6377 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- स्फिगपूतग्रहणं च -
किम् ?
अध्रुवार्थमबहुव्रीह्यर्थमेव वा ।।
-6-2-191- अतेरकृत्पदे (2851)
(6378 न्यासान्तरबोधकवार्तिकम् ।। 1 ।।)
- अतेर्धातुलोपे -
अतेर्धातुलोप ःथ्य;ति वक्तव्यम् ।
अकृत्पदे ःथ्य;ति ह्युच्यमाने ःथ्य;ह च प्रसज्येत---शोभनो गार्ग्यः---अतिगार्ग्य ःथ्य;ति ।
ःथ्य;ह च न स्यात्---अतिकारकः, अतिपदा शक्वरी ।।
-6-2-197- द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ (2857)
(पक्षद्वयोपस्थापकभाष्यम्)
किमिदं द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणम्, आहोस्विन्नकारान्तग्रहणम् ?
कश्चात्र विशेषः ?
(6379 प्रथमपक्षे दोषवार्तिकम् ।। 1 ।।)
- द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानम् -
द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानं कर्तव्यम् । द्विमूर्धा, त्रिमूर्धा ।।
अस्तु तर्हि नकारान्तग्रहणम् ।
(6380 द्वितीयपक्षे दोषवार्तिकम् ।। 2 ।।)
- नकारान्तेऽकारान्तस्य -
नकारान्ते सत्यकारान्तस्योपसंख्यानं कर्तव्यम् । द्विमूर्धः, त्रिमूर्धः ।।
(6381 द्वितीयपक्षे दोषोद्धारवार्तिकम् ।। 3 ।।)
- उदात्तलोपात्सिद्धम् -
अस्तु तर्हि नकारान्तग्रहणम्, अन्तोदात्तत्वे कृते लोपः, उदात्तनिवृत्तिस्वरेण सिद्धम् ।।
(दोषोद्धाराक्षेपभाष्यम्)
ःथ्य;दमिह संप्रधार्यम्---अन्तोदात्तत्वं क्रियतां लोप ःथ्य;ति, किमत्र कर्तव्यम् ?
परत्वाल्लोपः ।।
(समाधानभाष्यम्)
एवं तर्हि ःथ्य;दमिह संप्रधार्यम्---अन्तोदात्तत्वं क्रियतां समासान्त ःथ्य;ति, किमत्र कर्तव्यम् ?
परत्वादन्तोदात्तत्वम् ।
नित्यः समासान्तः । कृतेऽप्यन्तोदात्तत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति ।
अन्तोदात्तत्वमपि नित्यम् । कृतेऽपि समासान्ते प्राप्नोत्यकृतेऽपि प्राप्नोति ।
अनित्यमन्तोदात्तत्वम्, न हि कृते समासान्ते प्राप्नोति । परत्वाल्लोपेन भवितव्यम् ।
भवत्येव लोपः ।।
(सिद्धान्तभाष्यम्)
यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च समासान्त एवान्तोदात्तत्वस्य निमित्तं विहन्ति, अवश्यं लक्षणान्तरं लोपः प्रतीक्ष्यः

। उभयोर्नित्ययोः परत्वादन्तोदात्तत्वम्, अन्तोदात्तत्वे कृते समासान्तः, टिलोपः, टिलोपे कृते उदात्तनिवृत्तिस्वरेण सिद्धम् ।।
(सिद्धान्तपक्षस्य युक्तत्वोपपादनभाष्यम्)
युक्तं पुनरिदं विचारयितुम्---नन्वनेनासन्दिग्धेन नकारान्तग्रहणेन भवितव्यम्, यावता मूर्धस्वित्युच्यते ।
यद्यकारान्तग्रहणं स्यात् मूर्धेष्विति ब्रूयात् । सैषा समासान्तार्था विचारणा ।।
एवं तर्हि ज्ञापयत्याचार्यः---विभाषा समासान्तो भवतीति ।।
-6-2-199- परादिश्छन्दसि बहुलम् (2859)
(सूत्रपूरकभाष्यम्)
अत्यल्पमिदमुच्यते ।
परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः ।।
(6382 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसि -
अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानं कर्तव्यम् । त्रिचक्रेण, त्रिबन्धुरेण, त्रिवृता रथेन ।।
ःथ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ।।
पादश्च समाप्तः ।।
-9-9-999-

# महाभाष्यम्/षष्ठोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nmy

< महाभाष्यम्

<M.5.212>

-6-3-1- अलुगुत्तरपदे (2860)

(अलुगधिकरणम्)

(अधिकारमर्यादानिर्णयभाष्यम्)

आ कुतोऽयमधिकारः ?

अलुगधिकारः प्रागानङः ।

उत्तरपदाधिकारः प्रागङ्गाधिकारात् ।।

(अधिकारप्रयोजनजिज्ञासाभाष्यम्)

कानि पुनरुत्तरपदाधिकारस्य प्रयोजनानि ?

(6383 अधिकारप्रयोजनवार्तिकम् ।। 1 ।।)

- उत्तरपदाधिकारस्य प्रयोजनं स्तोकादिभ्योऽलुगानङिकोह्रस्वनलोपाः -

पञ्चम्याः स्तोकादिभ्यः (6-3-2) स्तोकान्मुक्तः, अल्पान्मुक्तः, कतिपयान्मुक्तः ।

उत्तरपद इति किमर्थम् ?

निष्क्रान्तः स्तोकात् --- निः स्तोकः ।।

आनङिकोह्रस्वनलोपाः प्रयोजनम् ।

आनङ् --- होतापोतारौ ।

उत्तरपद इति किमर्थम् ?

होतापोतृभ्याम् ।।

इको ह्रस्वोऽङ्यो गालवस्य (61) प्रयोजनम् । ग्रामणिकुलम्, सेनानिकुलम् ।

उत्तरपद इति किमर्थम् ?

ग्रामणीः, सेनानीः ।

उत्तरपद इति किमर्थम् ?

परमन ।

नैषोऽस्ति प्रयोगः ।

इदं तर्हि --- नतरां गमनम् ।।

<M.5.213>

(6384 उपसंख्यानवार्तिकम् ।। 2 ।।)

- एकवच्च -

एकवच्चालुग्भवतीति वक्तव्यम् ।

किं प्रयोजनम् ?

स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विगृह्य स्तोकान्मुक्त इत्येव यथा स्यात् ।।

(6385 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 3 ।।)

- एकवद्वचनमनर्थकम् -

एकवद्भावश्चानर्थकः ।।

द्विबह्वोरलुक्कस्मान्न भवति ?

(6386 अनिष्टनिरासवार्तिकम् ।। 4 ।।)

- द्विबहुष्वसमासः -

द्विवचनबहुवचनान्तानामसमासः ।

किं वक्तव्यमेतत् ?

न हि ।

कथमनुच्यमानं गंस्यते ?

(6387 अनिष्टनिरासासाधकवार्तिकम् ।। 5 ।।)

- उक्तं वा -

किमुक्तम् ?

अनभिधानादिति ।।
तच्चावश्यमनभिधानमाश्रयितव्यम् ।।
(6388 अनभिधानप्रयोजनवार्तिकम् ।। 6 ।।)
- एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः -
एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः स्यात् । गोषुचरः ।।
<M.5.214>
(6389 अनभिधानप्रयोजनवार्तिकम् ।। 7 ।।)
- वर्षाभ्यश्च जे -
वर्षाभ्यश्च जेऽतिप्रसङ्गो भवति । वर्षासुजः ।।
(6390 अनभिधाने दोषवार्तिकम् ।। 8 ।।)
- अपो योनियन्मतिषु चोपसंख्यानम् -
अपो योनियन्मतिषु चोपसंख्यानं कर्तव्यम्, जे चरे च तत्रातिप्रसङ्गो भवति ।
योनि --- अप्सुयोनिः । योनि ।।
यत् --- अप्सव्यम् । यत् ।।
मति --- अप्सुमतिः । मति ।।
जे --- अप्सुजः । जे ।।
चरे --- अप्सु चरो गह्वरेष्ठाः ।।
-6-3-2- पञ्चम्याः स्तोकादिभ्यः (2861)
(6391 उपसंख्यानवार्तिकम् ।। 1 ।।)
- पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम् -
पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम् । ब्राह्मणाच्छंसी ।।
(6392 पञ्चम्यर्थकथनवार्तिकम् ।। 2 ।।)
- अन्यार्थे च -
अन्यार्थे चैषा पञ्चमी द्रष्टव्या । ब्राह्मणानि शंसतीति ब्राह्मणाच्छंसी ।।
अथवा युक्त एवात्र पञ्चम्यर्थः । ब्राह्मणेभ्यो गृहीत्वा --- आहृत्याहृत्य शंसतीति ब्राह्मणाच्छंसी ।।
-6-3-3- ओजः सहोऽम्भस्तमसस्तृतीयायाः (2862)
(6393 उपसंख्यानवार्तिकम् ।। 1 ।।)
- तृतीयाया अञ्जस उपसंख्यानम् -
तृतीयाया अञ्जस उपसंख्यानं कर्तव्यम् । अञ्जसाकृतम् ।।
<M.5.215>
(6394 उपसंख्यानवार्तिकम् ।। 2 ।।)
- पुंसानुजो जनुषान्धो विकृताक्ष इति च -
पुंसानुजो जनुषान्धो विकृताक्ष इति चोपसंख्यानं कर्तव्यम् । पुंसानुजः, जनुषान्धः, विकृताक्षः ।।
-6-3-5- आज्ञायिनि च (2864)
(6395 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आत्मनश्च पूरणे -
आत्मनश्च पूरण उपसंख्यानं कर्तव्यम् । आत्मनापञ्चमः, आत्मनादशमः ।।
(6396 उपसंख्यानवार्तिकम् ।। 2 ।।)
- अन्यार्थे च -
अन्यार्थे चैषा तृतीया द्रष्टव्या । आत्मा पञ्चमोऽस्य आत्मनापञ्चमः, आत्मनादशमः ।।
अथवा युक्त एवात्र तृतीयार्थः । आत्मना कृतं तस्य तत् येनासौ पञ्चमः ।
कथं --- जनार्दनस्त्वात्मचतुर्थ एव --- इति ? ।
बहुव्रीहिरयम् । आत्मा चतुर्थोऽस्येति ।।
-6-3-7- वैयाकरणाख्यायां चतुर्थ्याः (2866)
(6397 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् -
आत्मनेभाषपरस्मैभाषयोरुपसंख्यानं कर्तव्यम् । आत्मनेभाषः, परस्मैभाषः ।।
(उपसंख्यानप्रयोजनभाष्यम्)
तत्कथं कर्तव्यम् ?

यदि व्याकरणे भवा --- वैयाकरणी, वैयाकरणी आख्या --- वैयाकरणाख्या, वैयाकरणाख्यायामिति ।।
अथ हि वैयाकरणानामाख्या --- वैयाकरणाख्या, वैयाकरणाख्यायामिति, नार्थ उपसंख्यानेन ।।
(उपसंख्यानस्य निष्प्रयोजनत्वबोधकभाष्यम्)
यद्यपि व्याकरणे भवा --- वैयाकरणी, वैयाकरणी आख्या --- वैयाकरणाख्या, वैयाकरणाख्यायामिति, एवमपि नार्थ उपसंख्यानेन ।
वचनाद्भविष्यति ।
अस्ति वचने प्रयोजनम्-
आत्मनेपदम्, परस्मैपदमिति ।
निपातनादेतत् सिद्धम् ।
किं निपातनम् ?
अनुदात्तङित आत्मनेपदम् शेषात्कर्तरि परस्मैपदम् (1-3-12;78) इति ।।
-6-3-8- परस्य च (2867)
(6397 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् -
आत्मनेभाषपरस्मैभाषयोरुपसंख्यानं कर्तव्यम् । आत्मनेभाषः, परस्मैभाषः ।।
(उपसंख्यानप्रयोजनभाष्यम्)
तत्कथं कर्तव्यम् ?
यदि व्याकरणे भवा --- वैयाकरणी, वैयाकरणी आख्या --- वैयाकरणाख्या, वैयाकरणाख्यायामिति ।।
अथ हि वैयाकरणानामाख्या --- वैयाकरणाख्या, वैयाकरणाख्यायामिति, नार्थ उपसंख्यानेन ।।
(उपसंख्यानस्य निष्प्रयोजनत्वबोधकभाष्यम्)
यद्यपि व्याकरणे भवा --- वैयाकरणी, वैयाकरणी आख्या --- वैयाकरणाख्या, वैयाकरणाख्यायामिति, एवमपि नार्थ उपसंख्यानेन ।
<M.5.216>
वचनाद्भविष्यति ।
अस्ति वचने प्रयोजनम्-
आत्मनेपदम्, परस्मैपदमिति ।
निपातनादेतत् सिद्धम् ।
किं निपातनम् ?
अनुदात्तङित आत्मनेपदम् शेषात्कर्तरि परस्मैपदम् (1-3-12;78) इति ।।
-6-3-9- हलदन्तात्सप्तम्याः संज्ञायाम् (2868)
(6398 उपसंख्यानवार्तिकम् ।। 1 ।।)
- हृद्युभ्यां ङेरुपसंख्यानम् -
हृद्युभ्यां ङेरुपसंख्यानं कर्तव्यम् । हृदिस्पृक्, दिविस्पृक् ।।
(6399 उपसंख्यानवार्तिकम् ।। 2 ।।)
- अन्यार्थे च -
अन्यार्थे चैषा सप्तमी द्रष्टव्या --- हृदयं स्पृशतीति हृदिस्पृक्, दिवं स्पृशतीति दिविस्पृक् ।।
(6400 एकदेशिन उपसंख्यानवार्तिकम् ।। 3 ।।)
- हलदन्ताधिकारे गोरुपसंख्यानम् -
हलदन्ताधिकारे गोरुपसंख्यानं कर्तव्यम् । गविष्ठिरः ।।
न कर्तव्यम् ।
लुकोऽवादेशो विप्रतिषेधेन । लुक्क्रियतामवादेश इति --- अवादेशो भविष्यति विप्रतिषेधेन ।
अवादेशे कृते हलदन्तादित्येव सिद्धम् ।।
(6401 विप्रतिषेधाक्षेपवार्तिकम् ।। 4 ।।)
- लुकोऽवादेशो विप्रतिषेधेनेति चेत् भूमिपाशेऽतिप्रसङ्गः -
लुकोऽवादेशो विप्रतिषेधेनेति चेत् भूमिपाशेऽतिप्रसङ्गो भवति । भूम्यां पाशो भूमिपाशः ।।
<M.5.217>
(6402 समाधानवार्तिकम् ।। 5 ।।)
- अकोऽत इति वा तत्सन्ध्यक्षरार्थम् -
एवं तर्हि अविशेषेण सप्तम्या अलुकमुक्त्वा अकोऽतः इति वक्ष्यामि, तन्नियमार्थं भविष्यति --- अकोऽत एव
भवति नान्यत इति ।
तत्सन्ध्यक्षरार्थम्, तेन सन्ध्यक्षराणां सिद्धं भवति ।

सिध्यति । सूत्रं तर्हि भिद्यते ।
(सिद्धान्तभाष्यम्)
यथान्यासमेवास्तु ।
ननु चोक्तं हलदन्ताधिकारे गोरुपसंख्यानमिति ।
नैष दोषः ।
निपातनात्सिद्धम् ।
किं निपातनम् ?
गविष्ठिरशब्दो बिदादिषु पठ्यते । असकृत्खल्वपि निपातनं क्रियते --- गवियुधिभ्यां स्थिरः (8-3-95) इति ।।
-6-3-10- कारनाम्नि च प्राचां हलादौ (2869)
(वार्तिकावतरणभाष्यम्)
किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ? ।
कथं च प्राप्ते, कथं चाप्राप्ते ?
यदि संज्ञायामिति वर्तते ततः --- प्राप्ते । अथ निवृत्तं ततः --- अप्राप्ते ।
कश्चात्र विशेषः ?
(6403 प्राप्तविभाषायां दोषवार्तिकम् ।। 1 ।।)
- कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गः -
कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गो भवति ।
इहापि प्राप्नोति --- अविकटे उरणो दातव्यः --- अविकटोरणः ।।
अस्तु तर्ह्यप्राप्ते ।
<M.5.218>
(6404 अप्राप्तविभाषायां दोषवार्तिकम् ।। 2 ।।)
- अप्राप्ते समासविधानम् -
यद्यप्राप्ते समासो विधेयः । प्राप्ते पुनः सति संज्ञायाम् (2-1-44) इत्येव समासः सिद्धः ।।
(अप्राप्तविभाषादोषानिवारकभाष्यम्)
नैष दोषः । एतदेव ज्ञापयति --- भवत्यत्र समास इति, यदयं कारनाम्नि सप्तम्या अलुकं शास्ति ।।
यद्यपि तावत् --- ज्ञापकात्समासः स्यात्, स्वरस्तु न सिध्यति ।
यद्धि तत्सप्तमीपूर्वपदं प्रकृतिस्वरं भवतीति, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं तत् ।
नैवात्रानेन स्वरेण भवितव्यम् ।
किन्तर्हि ?
सप्तमीहारिणौ धर्म्येऽहरणे (6-2-65) इत्यनेनात्र स्वरेण भवितव्यम् ।।
किं च भोः संज्ञा अपि लोके क्रियन्ते, न लोकः संज्ञासु प्रमाणम् । लोके च कारनाम संज्ञा ।।
(वार्तिकावतरणभाष्यम्)
ननु चोक्तं कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्ग इति ।
नैष दोषः ।।
(6405 प्राप्तविभाषादोषनिवारकवार्तिकम् ।। 3 ।।)
- योगविभागात्सिद्धम् -
योगविभागः करिष्यते --- कारनाम्नि च प्राचाम् । ततः--हलादौ । हलादौ च कारनाम्नि सप्तम्या अलुक् भवति ।
इदमिदानीं किमर्थम् ?
नियमार्थम् --- हलादावेव कारनाम्नि सप्तम्या अलुक् भवति नान्यत्र ।
क्व मा भूत् ?
अविकटे उरणो दातव्यः --- अविकटोरणः ।।
<M.5.219>
-6-3-11- मध्याद्गुरौ (2870)
(6406 उपसंख्यानवार्तिकम् ।। 1 ।।)
गुरावन्ताच्चेति वक्तव्यम् । अन्तेगुरुः ।।
-6-3-13- बन्धे च विभाषा (2872)
(विषयनिर्धारणे पूर्वपक्षिभाष्यम्)
स्वाङ्गग्रहणमनुवर्तते, उताहो न ।
किं चातः ?

यद्यनुवर्तते, सिद्धम् --- हस्तेबन्धः, हस्तबन्धः ।
चक्रेबन्धः, चक्रबन्ध इति न सिध्यति ।
अथ निवृत्तम्, सिद्धम् --- चक्रेबन्धः, चक्रबन्धः ।
हस्ते बन्धः, हस्तबन्ध इति न सिध्यति ।
किं कारणम् ?
नेन्सिद्धबध्नातिषु च (6-3-39) इति प्रतिषेधः प्राप्नोति ।।
(विषयनिर्धारणे सिद्धान्तभाष्यम्)
नैष दोषः ।
सर्वत्रैवोत्तरपदाधिकारे तत्पुरुषे कृति बहुलम् (14) इति प्राप्ते नेन्सिद्धबध्नातिषु इति प्रतिषेध उच्यते, तस्मिन्नित्ये प्राप्ते इयं विभाषा आरभ्यते ।।
एवमपि न ज्ञायते --- कस्मिन् विषये विभाषा कस्मिन् विषये प्रतिषेध इति ।
घञन्तस्येदं बन्धशब्दस्य ग्रहणम्, प्रतिषेधेषु च धातुग्रहणम् । तेन घञन्ते विभाषा, अन्यत्र प्रतिषेधः ।।
-6-3-14- तत्पुरुषे कृति बहुलम् (2873)
(6407 एकदेशिन उपसंख्यानवार्तिकम् ।। 1 ।।)
- तत्पुरुषे कृति बहुलमकर्मधारये -
तत्पुरुषे कृति बहुलमित्यत्राकर्मधारय इति वक्तव्यम् ।
इह मा भूत् --- परमे कारके --- परमकारक इति ।
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् । बहुलवचनान्न भविष्यति ।।
<M.5.220>
(वार्तिकावतरणभाष्यम्)
अथ किमर्थं लुगलुगनुक्रमणं क्रियते, न तत्पुरुषे कृति बहुलम् इत्येव सिद्धम् ।।
(6408 अनुक्रमणप्रयोजनवार्तिकम् ।। 2 ।।)
- लुगलुगनुक्रमणं बहुलवचनस्याकृत्स्नत्वात् -
लुगलुगनुक्रमणं क्रियते, अकृत्स्नं बहुलवचनमिति ।।
यद्यकृत्स्नं बहुलवचनम्, यदनेन कृतमकृतं तत् ।
एवं तर्हि न ब्रूमः --- अकृत्स्नमिति, कृत्स्नं च --- कारकं च, साधकं च, निर्वर्तकं च, यदनेन कृतं सुकृतं तत् ।
किमर्थं तर्हि लुगलुगनुक्रमणं क्रियते ?
उदारणभूयस्त्वात् ।
ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च । केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति ।।
अवश्यं खल्वप्यस्माभिरिदं वक्तव्यम् --- बहुलम्, अन्यतरस्याम्, उभयथा, एकेषामिति । सर्ववेदपारिषदं हीदं शास्त्रम्, तत्र नैकः पन्थाः शक्य आस्थातुम् ।।
<M.5.221>
-6-3-21- षष्ठ्या आक्रोशे (2880)
(6409 उपसंख्यानवार्तिकम् ।। 1 ।।)
- षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम् -
षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानं कर्तव्यम् । वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः ।।
(6410 उपसंख्यानवार्तिकम् ।। 2 ।।)
- आमुष्यायणामुष्यपुत्रिका -
आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानं कर्तव्यम् । आमुष्यायणः, अमुष्यपुत्रिका ।।
अमुष्यकुलिकेति च वक्तव्यम् । अमुष्यकुलिका ।।
(6411 उपसंख्यानवार्तिकम् ।। 3 ।।)
- देवानांप्रिय इति च -
देवानां प्रिय इति चोपसंख्यानं कर्तव्यम् । देवानांप्रियः ।।
(6412 उपसंख्यानवार्तिकम् ।। 4 ।।)
- शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसंख्यानम् -
शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसंख्यानं कर्तव्यम् । शुनः शेपः, शुनः पुच्छः, शुनोलाङ्गूलः ।।
(6413 उपसंख्यानवार्तिकम् ।। 5 ।।)
- दिवश्च दासे -
दिवश्च दासे उपसंख्यानं कर्तव्यम् । दिवोदासाय गायत ।।

-6-3-23- ऋतो विद्यायोनिसंबन्धेभ्यः (2882)
(6414 उपसंख्यानवार्तिकम् ।। 1 ।।)
- विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणम् -
विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणं कर्तव्यम् । विद्यासंबन्धेभ्यो विद्यासंबन्धेषु यथा स्यात् । योनिसंबन्धेभ्यो योनिसंबन्धेषु यथा स्यात् ।
व्यतिकरो मा भूत् ।।
अथैषां व्यतिरेकेण भवितव्यम् ?
बाढं भवितव्यम् । होतुःपुत्रः, पितुरन्तेवासी ।।
-6-3-25- आनङ् ऋतो द्वन्द्वे (2884)
(आनङोऽधिकरणम्)
(नकारप्रयोजनभाष्यम्)
क्वायं नकारः श्रूयते ?
न क्वचिच्छ्रूयते, लोपोऽस्य भवति नलोपः प्रातिपदिकान्तस्य (8-2-7) इति ।
यदि न क्वचिच्छ्रूयते, किमर्थमुच्चार्यते ?
रपरत्वं मा भूदिति ।।
क्रियमाणेऽपि वै नकारे रपरत्वं प्राप्नोति ।
किं कारणम् ?
नलोपे कृते एषोऽपि हि उः स्थाने अण् शिष्यते ।
नैष दोषः ।
उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते, न चायमुः स्थाने अणेव शिष्यते ।
किं तर्हि ?
अण् चानण् च ।।
<M.5.222>
(वार्तिकावतरणभाष्यम्)
कथं पुनरिदं विज्ञायते --- किमृकारान्तानां यो द्वन्द्व इति, आहोस्वित् द्वन्द्वे ऋकारान्तस्येति ?
कश्चात्र विशेषः ?
(6415 पूर्वस्मिन् पक्षे उपसंख्यानवार्तिकम् ।। 1 ।।)
- ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम् -
ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानं कर्तव्यम् । पितापुत्रौ ।।
(6416 पूर्वस्मिन् पक्षे दोषवार्तिकम् ।। 2 ।।)
- कार्यी चानिर्दिष्टः -
कार्यी चानिर्दिष्टो भवति । ऋकारान्तानां द्वन्द्वे न ज्ञायते--कस्यानङा भवितव्यमिति ।।
(द्वितीयपक्षोपस्थापकभाष्यम्)
अस्तु तर्हि द्वन्द्वे ऋकारान्तस्येति ।।
(6417 द्वितीयपक्षे दोषवार्तिकम् ।। 3 ।।)
- अविशेषेण पितृपितामहादिष्वतिप्रसङ्गः -
अविशेषेण पितृपितामहादिष्वतिप्रसङ्गो भवति । पितृपितामहाविति ।।
(प्रथमपक्षे दोषोद्धारभाष्यम्)
अस्तु तर्हि ऋकारान्तानां यो द्वन्द्व इति ।
ननु चोक्तम् ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम् इति ।
नैष दोषः ।
पुत्रग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
पुत्रेऽन्यतरस्याम् (22) इति ।
यदि तदनुवर्तते, विभाषा स्वसृपत्योः (24) पुत्रे च --- इति पुत्रेऽपि विभाषा प्राप्नोति ।
नैष दोषः ।
सम्बन्धमनुवर्तिष्यते । षष्ठ्या आक्रोशे (21) । पुत्रेऽन्यतरस्याम् (22), षष्ठ्या आक्रोशे ।। ऋतो विद्यायोनिसम्बन्धेभ्यः (23), पुत्रेऽन्यतरस्याम्, षष्ठ्या आक्रोशे ।। विभाषा स्वसृपत्योः (24), पुत्रेऽन्यतरस्याम्, षष्ठ्या आक्रोशे ।। आनङ् ऋतो द्वन्द्वे । पुत्रग्रहणमनुवर्तते, षष्ठ्या आक्रोश इति निवृत्तम्

।।
(द्वितीयदोषनिवारकभाष्यम्)
यदप्युच्यते --- कार्यी चानिर्दिष्टः इति, कार्यी च निर्दिष्टः ।
कथम् ?
उत्तरपद इति वर्तते । ङिच्चायं क्रियते । सोऽन्तरेणापि कार्यिनिर्देशमृकारान्तस्यैव भविष्यति ।।
पुत्रे तर्हि कार्यी अनिर्दिष्टः ।
पुत्रे च कार्यी निर्दिष्टः ।
कथम् ?
ऋकारग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
ऋतो विद्यायोनिसम्बन्धेभ्यः इति ।
तद्वै पञ्चमीनिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः ।
पुत्र इत्येषा सप्तमी ऋत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति --- तस्मिन्निति निर्दिष्टे पूर्वस्य इति ।।
-6-3-26- देवताद्वन्द्वे च (2885)
(6418 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः -
देवताद्वन्द्वे उभयत्र वायोः प्रतिषेधो वक्तव्यः । अग्निवायू, वाय्वग्नी ।।
<M.5.223>
(6419 प्रतिषेधोपसंख्यानवार्तिकम् ।। 2 ।।)
- ब्रह्मप्रजापत्यादीनां च -
ब्रह्मप्रजापत्यादीनां च प्रतिषेधो वक्तव्यः । ब्रह्मप्रजापती, शिववैश्रवणौ, स्कन्दविशाखौ ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
स तर्हि वक्तव्यः ।
न वक्तव्यः । द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणस्यैतत्प्रयोजनम् --- लोकवेदयोर्यो द्वन्द्वस्तत्र यथा स्यात् ।
कश्च लोकवेदयोर्द्वन्द्वः ?
वेदे ये सहनिर्वापनिर्दिष्टाः । न चैते वेदे सह निर्वापनिर्दिष्टाः ।।
-6-3-28- इद्वृद्धौ (2887)
(6420 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- इद्वृद्धौ विष्णोः प्रतिषेधः -
इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः । आग्नावैष्णवं चरुं निर्वपेत् ।।
-6-3-32- मातरपितरावुदीचाम् (2891)
(निपातनबोधकभाष्यम्)
किं निपात्यते ?
पूर्वोत्तरपदयोर्ऋकारस्यारारौ निपात्येते । मातरपितरौ भोजय, मातरपितरावानय, आ मा गन्तां पितरामातरा चा मा सोमो अमृतत्वाय गम्यात् ।।
इति श्रीभगवत्पतञ्जलिप्रणीते महाभाष्ये षष्ठाध्यायस्य तृतीये पादे प्रथममाह्निकम् ।।
-6-3-33- पितरामातरा च च्छन्दसि (2892)
(निपातनबोधकभाष्यम्)
किं निपात्यते ?
पूर्वोत्तरपदयोर्ऋकारस्यारारौ निपात्येते । मातरपितरौ भोजय, मातरपितरावानय, आ मा गन्तां पितरामातरा चा मा सोमो अमृतत्वाय गम्यात् ।।
इति श्रीभगवत्पतञ्जलिप्रणीते महाभाष्ये षष्ठाध्यायस्य तृतीये पादे प्रथममाह्निकम् ।।
<M.5.224>
-6-3-34- स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु (2893)
(पुंवद्भावाधिकरणम्)
(भाषितपुंस्कपदार्थे पक्षद्वयोपस्थापकभाष्यम्)
भाषितपुंस्कादिति कथमिदं विज्ञायते--समानायामाकृतौ यद्भाषितपुंस्कम्, आहोस्वित् क्वचिद्यद्भाषितपुंस्कमिति ?
किं चातः ?
(प्रथमपक्षे दोषभाष्यम्)
यदि विज्ञायते--समानायामाकृतौ यद्भाषितपुंस्कमिति, गर्भिभार्यः --- प्रसूतभार्यः --- प्रजातभार्यः --- अत्र न प्राप्नोति ।।
(द्वितीयपक्षे दोषभाष्यम्)

अथ विज्ञायते--क्वचिद्यद्भाषितपुंस्कमिति, द्रोणीभार्यः --- कुटीभार्यः --- पात्रीभार्यः--अत्रापि प्राप्नोति ।।
(सिद्धान्तपक्षोपस्थापकभाष्यम्)
अस्तु तर्हि समानायामाकृतौ यद्भाषितपुंस्कमिति ।
कथं तर्हि गर्भिभार्यः--प्रजातभार्यः --- प्रसूतभार्य इति ?
कर्तव्योऽत्र यत्नः ।।
<M.5.225>
(ऊङो निषेधप्रकरणे पाठोपस्थापकभाष्यम्)
अथ किमर्थमूङः पृथक् प्रतिषेध उच्यते न यत्रैवान्यः प्रतिषेधस्तत्रैवायमप्युच्येत --- न कोपधायाः (37) इत्युक्त्वा ततः ऊङश्च इत्येवोच्येत । तत्रायमप्यर्थः --- द्विः प्रतिषेधो न वक्तव्यो भवति ।।
(निषेधप्रकरणे पाठे दोषभाष्यम्)
नैवं शक्यम् । पठिष्यति ह्याचार्यः --- पुंवत्कर्मधारये प्रतिषेधार्थमिति । स पुंवद्भावो यथेह भवति --- कारिका वृन्दारिका--कारकवृन्दारिका, एवमिहापि स्यात् --- ब्रह्मबन्धूर्वृन्दारिका --- ब्रह्मबन्धूवृन्दारिकेति ।।
(पृथक्प्रतिषेधे दोषनिवारकभाष्यम्)
अथ पृथक्प्रतिषेधेऽप्युच्यमाने यस्मादेव स प्रतिषिद्धार्थ आरम्भः कस्मादेवात्र न भवति ?
पृथक्प्रतिषेधवचनसार्मथ्यात् ।
अथवा --- अनूङिति तत्रानुवर्तिष्यते ।।
अथवा --- नायं प्रसज्यप्रतिषेधः ।
किं तर्हि ?
पर्युदासोऽयं यदन्यदूङ इति । स च प्रतिषेधार्थ आरम्भः ।।
(स्त्रीग्रहणे पक्षत्रयोपस्थापकभाष्यम्)
किं पुनरिदम्पुंवद्भावे स्त्रीग्रहणं --- स्त्रीप्रत्ययग्रहणम्, उत स्त्रीशब्दस्य ग्रहणम्, आहोस्वित् स्त्र्यर्थस्य ग्रहणम् ।
कश्चात्र विशेषः ?
<M.5.226>
(6421 प्रथमपक्षे दोषवार्तिकम् ।। 1 ।।)
- पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम् -
पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधोऽयं विज्ञायेत ।
कस्य ?
स्त्रीप्रत्ययस्य ।।
(प्रथमपक्षदोषसंभवाक्षेपभाष्यम्)
किमुच्यते स्त्रीप्रत्ययस्य प्रतिषेध इति, न पुनरन्यदपि किंचित् पुंसः प्रतिपदं कार्यमुच्यते
यत्समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत ?
(समाधानभाष्यम्)
अनारम्भात् पुंसि । न किंचित् पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरणे उत्तरपदे भाषितपुंस्कस्यातिदिश्येत । तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः स्त्रीप्रत्ययप्रतिषेधात् ।।
(दोषोपपादकभाष्यम्)
कथं पुनः पुंवत् इत्यनेन स्त्रीप्रत्ययस्य प्रतिषेधः शक्यो विज्ञातुम् ?
वतिनिर्देशोऽयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् ।
तद्यथा --- उशीनरवन्मद्रेषु यवाः सन्ति, न सन्तीति । मातृवदस्याः कलाः सन्ति, न सन्तीति ।
एवमिहापि पुंवन्न भवति इत्येवं वाक्यशेषं समर्थयिष्यामहे ।
यथा पुंसः स्त्रीप्रत्ययो न भवति, एवं समानाधिकरणे उत्तरपदे भाषितपुंस्कस्यापि न भवतीति ।।
(6422 प्रथमपक्षस्वीकारे दोषवार्तिकम् ।। 2 ।।)
- प्रातिपदिकस्य च प्रत्यापत्तिः -
प्रातिपदिकस्य च प्रत्यापत्तिर्वक्तव्या । एनी भार्या अस्य --- एतभार्यः, श्येनी भार्या अस्यश्येतभार्यः ।।
पुंवद्भावेन किं क्रियते ?
स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः --- स्त्रीत्वम्, तस्यानिवृत्तत्वात् केन नशब्दो न श्रूयेत ?
स्त्रियामित्युच्यमानः प्राप्नोति ।।
(6423 प्रथमपक्षस्वीकारे दोषवार्तिकम् ।। 3 ।।)
- स्थानिवत्प्रसङ्गश्च -
स्थानिवद्भावश्च प्राप्नोति । पट्वी भार्या अस्य --- पटुभार्यः ।

पुंवद्भावेन किं क्रियते ?
स्त्रीप्रत्ययस्य निवृत्तिः । तस्य स्थानिवद्भावाद्यणादेशः प्राप्नोति ।।
<M.5.227>
(दोषद्वयोपसंख्यानतात्पर्यभाष्यम्)
किमर्थमिदमुभयमुच्यते, न प्रातिपदिकस्य प्रत्यापत्तिरित्येव स्थानिवद्भावोऽपि चोदितः स्यात् ?
पुरस्तादिदमाचार्येण दृष्टम् --- स्थानिवत्प्रसङ्गश्चेति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम् --- प्रातिपदिकस्य प्रत्यापत्तिरिति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।।
(6424 दोषोपसंख्यानवार्तिकम् ।। 4 ।।)
- वतण्ड्यादिषु पुंवद्वचनम् -
वतण्ड्यादिषु पुंवद्भावो वक्तव्यः ।
के पुनर्वतण्ड्यादयः ?
लुगलुगस्त्रीविषयद्विस्त्रीप्रत्ययाः ।
लुक् --- गार्ग्यो वृन्दारिकाः --- गर्गवृन्दारिकाः ।
पुंवद्भावेन किं क्रियते ?
स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वम्, तस्यानिवृत्तत्वात् केन यशब्दो न श्रूयेत । अस्त्रियामिति हि लुगुच्यते । लुक् ।।
अलुक् --- वतण्डी वृन्दारिका --- वातण्ड्यवृन्दारिका ।
पुंवद्भावेन किं क्रियते ?
स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वम्, तस्यानिवृत्तत्वात् लुक् स्त्रियां वतण्डाच्च इति यकारस्य लुक् प्राप्नोति ।
(एतद्दोषनिवारकभाष्यम्)
यदि पुनरयमीकार एव लुगुच्येत ।
तदीकारग्रहणं कर्तव्यम् ।
न कर्तव्यम् ।
क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम् --- स्त्री इर् स्त्री, स्त्रियामिति ।। इर्कारविधावप्रत्ययकस्य पाठः क्रियते --- वतण्डेति । शार्ङ्गरवादौ वै सप्रत्ययकस्य पाठः करिष्यते ।
स वै तत्र सप्रत्ययकस्य पाठः कर्तव्यः । अन्तरङ्गत्वाच्च लुक् प्राप्नोति । अलुक् ।।
अस्त्रीविषय --- कौण्डीवृसी वृन्दारिका --- कौण्डीवृस्यवृन्दारिका ।
पुंवद्भावेन किं क्रियते ?
स्त्रीप्रत्ययस्य निवृत्तिः ।
अर्थोऽनिवृत्तः स्त्रीत्वम्, तस्यानिवृत्तत्वात् केन यशब्दः श्रूयेत ?
अस्त्रियामिति हि ञ्यो विधीयते । अस्त्रीविषय ।।
द्विस्त्रीप्रत्यय --- गार्ग्यायणी वृन्दारिका --- गार्ग्यवृन्दारिका ।
अत्र पुंवद्भावो न प्राप्नोति ।
किं कारणम् ?
भाषितपुंस्कादनूङः समानाधिकरणे उत्तरपदे पुंवद्भावो भवतीत्युच्यते । यच्चात्र भाषितपुंस्कात् परं नैतदुत्तरपदे, यच्चोत्तरपदे, न तद्भाषितपुंस्कात् परमिति ।।
<M.5.228>
(द्वितीयपक्षोपस्थापकभाष्यम्)
अस्तु तर्हि स्त्रीशब्दग्रहणम् ।।
(6425 द्वितीयपक्षे दोषवार्तिकम् ।। 5 ।।)
- स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वप्रसङ्गोऽविशेषात् -
स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वस्य स्त्रीशब्दस्य पुंशब्दातिदेशः प्राप्नोति । अस्यापि प्राप्नोति --- अङ्गारका नाम शकुनयः, तेषां कालिकाः स्त्रियः । कालिका वृन्दारिकाः --- अङ्गारकवृन्दारिकाः प्राप्नुवन्ति ।
क्षेमवृद्धयः क्षत्रियाः, तेषां तनुकेश्यः स्त्रियः । तनुकेश्यो वृन्दारिकाः --- क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति ।
हंसस्य वरटा । कच्छपस्य दुली । ऋश्यस्य रोहित् । अश्वस्य वडवा । पुरुषस्य योषित् ।
किं कारणम् ?
अविशेषात् । न हि कश्चित् विशेष उपादीयते एवं जातीयकस्य स्त्रीशब्दस्य पुंशब्दातिदेशो भवतीति ।
अनुपादीयमाने हि विशेषे सर्वप्रसङ्गः ।।
(द्वितीयदोषोद्भावकवार्तिकावतरणभाष्यम्)
कथं च नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते ? ।।

(6426 द्वितीयपक्षे दोषवार्तिकम् ।। 6 ।।)
- भाषितपुंस्कानुपपत्तिश्च -
ह्यर्थे चायं चः पठितः ।
सर्वो हि शब्दो भाषितपुंस्कात्परः शक्यः कर्तुम् ।।
<M.5.229>
(तृतीयपक्षोद्भावकं भाष्यम्)
अस्तु तर्हि अर्थग्रहणम्।
(6427 तृतीयपक्षे दोषवार्तिकम् ।। 7 ।।)
- अर्थातिदेशे विप्रतिषेधानुपपत्तिः -
अर्थातिदेशे विप्रतिषेधो नोपपद्यते । पठिष्यति ह्याचार्यो विप्रतिषेधं --- पुंवद्भावाद्ध्रस्वत्वं खिद्धादिकेषु इति स विप्रतिषेधो नोपपद्यते ।
किं कारणम् ?
द्विकार्ययोगो हि नाम विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः, शब्दस्य ह्रस्वत्वम् --- अर्थस्य पुंवद्भावः ।।
(तृतीयपक्षे द्वितीयोक्तदोषप्राप्तिबोधकभाष्यम्)
किं च --- सर्वप्रसङ्गोऽविशेषादिति । सर्वस्य स्त्र्यर्थस्य पुंवदर्थः प्राप्नोति ।
अस्यापि प्राप्नोति --- अङ्गारका नाम शकुनयः, तेषां कलिकाः स्त्रियः । कालिका वृन्दारिकाः --- अङ्गारकवृन्दारिकाः प्राप्नुवन्ति ।।
क्षेमवृद्धयः क्षत्रियाः । तेषां तनुकेश्यः स्त्रियः । तनुकेश्यो वृन्दारिकाः --- क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति ।।
हंसस्य वरटा । कच्छपस्य दुली । ऋश्यस्य रोहित् । अश्वस्य वडवा । पुरुषस्य योषित् ।
किं कारणम् ?
अविशेषात् । न हि कश्चित् विशेष उपादीयते एवं जातीयकस्य स्त्र्यर्थस्य पुंवदर्थो भवतीति । अनुपादीयमाने हि विशेषे सर्वप्रसङ्गः ।
कथं नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते ?
भाषितपुंस्कानुपपत्तिश्च भवति । न ह्यर्थेन पौर्वापर्यमस्ति ।।
(विप्रतिषेधानुपपत्तिरूपप्रथमदोषनिवारकमेकदेशिभाष्यम्)
अयं तावददोषः --- यदुच्यते अर्थातिदेशे विप्रतिषेधानुपपत्तिः इति ।
नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।
किं तर्हि ?
असंभवोऽपि । स चात्रास्त्यसंभवः ।
कोसावसम्भवः ?
पुंवद्भावोऽभिनिर्वर्तमानो ह्रस्वत्वस्य निमित्तं विहन्ति, ह्रस्वत्वमभिनिर्वर्तमानं पुंवद्भावं बाधते ---
एषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ।।
(एकदेशिनो द्वितीयपक्षस्थापकभाष्यम्)
अयं तर्हि दोषः --- सर्वप्रसङ्गोऽविशेषादिति ।
तस्मादस्तु स एव मध्यमः पक्षः ।
<M.5.230>
(द्वितीयपक्षे दोषवारकभाष्यम्)
ननु चोक्तम् --- स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत्सर्वप्रसङ्गोऽविशेषादिति ।
नैष दोषः ।
समासनिर्देशोऽयम्, भाषितपुंस्कादनूङ्यस्मिन् सोऽयम् --- भाषितपुंस्कादनूङिति ।
यद्येवं लुक् प्राप्नोति ।
निपातनान्न भविष्यति ।
अथवा --- अलुक् प्रकृतः सोऽनुवर्तिष्यते ।।
(प्रथमपक्षोपस्थापकभाष्यम्)
कथं पुनः अनूङ् इत्यनेन स्त्रीप्रत्ययस्य ग्रहणं शक्यं विज्ञातुम् ?
नञ्िवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्ते चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथाह्यर्थो गम्यते ।
तद्यथा --- अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश आनीयते नासौ लोष्टमानीय कृती भवति ।
एवमिहापि अनूङ् इति ऊङ्प्रतिषेधादन्यस्मिन् ऊङ्सदृशे कार्यं विज्ञास्यते ।
किं चान्यत् अनूङ् ऊङ्सदृशम् ?
स्त्रीप्रत्ययः इति ।।
(प्रथमे प्राप्तदोषवारकभाष्यम्)

एवमपि इडबिड् वृन्दारिका --- ऐडबिडवृन्दारिका, पृथ्वृन्दारिका --- पार्थवृन्दारिका, उशिक् वृन्दारिका --- औशिजवृन्दारिका, दरद् वृन्दारिका --- दारद्वृन्दारिका --- अत्र पुंवद्भावो न प्राप्नोति ।।
कर्तव्योऽत्र यत्नः ।।
<M.5.231>
(सन्देहस्थलनिर्णयभाष्यम्)
अथेह कथं भवितव्यम् ---
पट्वीमृद्व्यौ भार्ये अस्य --- पट्वीमृदुभार्यः, आहोस्वित् पटुमृदुभार्यः ?
पट्वीमृदुभार्य इति भवितव्यम् ।
पुंवद्भावः कस्मान्न भवति ?
भाषितपुंस्कादित्युच्यते ।
ननु च भोः पटुशब्दो मृदुशब्दश्च पुंसि भाष्येते ।
समानायामाकृतौ यद्भाषितपुंस्कम्, आकृत्यन्तरे चैतौ भाषितपुंस्कौ ।
समानायामाकृतावपि भाषितपुंस्कौ ।
कथम् ?
आरभ्यतेऽत्र मतुब्लोपः ।
एवं तर्हि भाषितपुंस्कादनूङः समानाधिकरण उत्तरपदे पुंवद्भवति --- इत्युच्यते । यश्चात्र भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे, कृतस्तस्य पुंवद्भावः । यस्य चाकृतः, नासौ भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे ।।
(6428 उपसंख्यानवार्तिकम् ।। 8 ।।)
- पूरण्यां प्रधानपूरणीग्रहणम् -
पूरण्यां प्रधानपूरणीग्रहणं कर्तव्यम् । प्रधानं या पूरणी तत्रेति वक्तव्यम् ।
इह मा भूत् --- कल्याणी पञ्चमी अस्य पक्षस्यकल्याणपञ्चमीकः पक्ष इति ।।
अथेह कथं भवितव्यम् --- कल्याणी पञ्चमी आसां रात्रीणामिति ?
कल्याणीपञ्चमा रात्रय इति भवितव्यम् । रात्रयोऽत्र प्रधानम् ।।
-6-3-35- तसिलादिष्वा कृत्वसुचः (2894)
(परिगणनबोधकभाष्यम्)
इह केचित् तसिलादय आ कृत्वसुचः पठ्यन्ते येषु पुंवद्भावो नेष्यते । केचिच्चान्यत्र पठ्यन्ते येषु पुंवद्भाव इष्यते ।
तत्र किं न्याय्यम् ?
परिगणनं कर्तव्यम् ।।
<M.5.232>
(6429 परिगणनवार्तिकम् ।। 1 ।।)
- तसिलादी त्रतसौ -
त्रतसौ तसिलादी द्रष्टव्यौ । तस्यां शालायां वसति-तत्र वसति । तस्याः-ततः । यस्याः--यतः ।।
(6430 परिगणनवार्तिकम् ।। 2 ।।)
- तरप्तमपौ -
तरप्तमपौ तसिलादी द्रष्टव्यौ । दर्शनीयतरा । दर्शनीयतमा ।।
(6431 परिगणनवार्तिकम् ।। 3 ।।)
- चरट्जातीयरौ -
चरट्जातीयरौ तसिलादी द्रष्टव्यौ । पटुचरी । पटुजातीया ।।
(6432 परिगणनवार्तिकम् ।। 4 ।।)
- कल्पप्देशीयरौ -
कल्पप्देशीयरौ तसिलादी द्रष्टव्यौ । दर्शनीयकल्पा । दर्शनीयदेशीया ।।
(6433 परिगणनवार्तिकम् ।। 5 ।।)
- रूपप्पाशपौ -
रूपप्पाशपौ तसिलादी द्रष्टव्यौ । दर्शनीयरूपा । दर्शनीयपाशा ।।
(6434 परिगणनवार्तिकम् ।। 6 ।।)
- थम्थालौ -
थम्थालौ तसिलादी द्रष्टव्यौ । कया आकृत्या--कथम् । यया आकृत्या--यथा ।।
(6435 परिगणनवार्तिकम् ।। 7 ।।)

- दार्हिलौ -
दार्हिलौ तसिलादी द्रष्टव्यौ । तस्यां वेलायां--तदा । तस्यां वेलायां-तर्हि ।।
(6436 परिगणनवार्तिकम् ।। 8 ।।)
- तिल्थ्यनौ -
तिल्थ्यनौ तसिलादी द्रष्टव्यौ । वृकीवृकतिः । अजथ्या यूथिः ।।
(6437 परिगणनवार्तिकम् ।। 9 ।।)
- शसि बह्वल्पार्थस्य -
बह्वल्पार्थस्य शसि पुंवद्भावो वक्तव्यः । बह्वीभ्यो देहि--बहुशो देहि । अल्पशो देहि ।।
(6438 परिगणनवार्तिकम् ।। 10 ।।)
- त्वतलोर्गुणवचनस्य -
त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । पट्वीभावः--पटुत्वम् । मृद्वीभावः--मृदुत्वम् । पटुता । मृदुता ।
गुणवचनस्येति किमर्थम् ? कठीभावः--कठीत्वम्, कठीता ।।
(6439 परिगणनवार्तिकम् ।। 11 ।।)
- भस्याढे तद्धिते -
भस्याढे तद्धिते पुंवद्भावो वक्तव्यः । हस्तिनीनां समूहो हास्तिकम् ।।
अढ इति किमर्थम् ?
श्यैनेयः, रौहिणेयः ।।
<M.5.233>
(आक्षेपभाष्यम्)
यद्यढ इत्युच्यते, अग्नायी देवता अस्य स्थालीपाकस्य --- आग्नेयः स्थालीपाकः, अत्र न प्राप्नोति ।
इह च प्राप्नोति --- कौण्डिन्यः, सापत्न इति ।।
(प्रत्याक्षेपभाष्यम्)
यदि पुनरनपत्य इत्युच्यते ।
नैवं शक्यम् ।
इह हि न स्यात्--गार्ग्यायण्या अपत्यं माणवकः--गार्गो जाल्मः ।
(समाधानभाष्यम्)
अस्तु तर्हि अढ इत्येव ।
कथं कौण्डिन्यः सापत्न इति ?
कौण्डिन्ये निपातनात् सिद्धम् ।
किं निपातनम् ?
आगस्त्यकौण्डिन्ययोः --- इति ।
सापत्नः प्रकृत्यन्तरत्वात् ।
सपत्नशब्दः प्रकृत्यन्तरमस्ति ।
कथमग्नायी देवता अस्य स्थालीपाकस्य --- आग्नेयः स्थालीपाक इति ?
अस्तु तर्ह्यनपत्य इत्येव ।
कथं गार्गो जाल्मः ?
गार्गाग्नेयौ न संवदेते ।
कर्तव्योऽत्र यत्नः ।।
<M.5.234>
(6440 उपसंख्यानवार्तिकम् ।। 12 ।।)
- ठक्छसौश्च -
ठक्छसोश्च पुंवद्भावो वक्तव्यः । भवत्याः छात्राः --- भावत्काः, भवदीयाः ।
ठक्ग्रहणं किमर्थम्, न इके कृते अजादौ इत्येव सिद्धम् ?
नैवं शक्यम् ।
अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत ।
तद्यथा --- मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशो न भवति, एवमिहापि न
स्यात् । तसिलादि ।।
-6-3-36- क्यङ्मानिनोश्च (2895)
(पदकृत्यभाष्यम्)

मानिन्ग्रहणं किमर्थम् ?
(6441 पदप्रयोजनवार्तिकम् ।। 1 ।।)
- मानिन्ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च -
मानिन्ग्रहणं क्रियतेऽस्त्र्यर्थमसमानाधिकरणार्थं च ।
अस्त्र्यर्थं तवात् --- दर्शनीयां मन्यते देवदत्तो यज्ञदत्तां --- दर्शनीयमानी अयमस्याः ।
असमानाधिकरणार्थम् --- दर्शनीयां मन्यते देवदत्तां यज्ञदत्ता --- दर्शनीयमानिनी इयमस्याः ।।
-6-3-37- न कोपधायाः (2896)
(निषेधविषये पक्षद्वयोपस्थापकं भाष्यम्)
किमिदमेवमाद्यनुक्रमणं--आद्यस्य योगस्य विषये, आहोस्वित् पुंवद्भावमात्रस्य ?
किं चातः ?
(प्रथमपक्षे दोषभाष्यम्)
यद्याद्यस्य योगस्य विषये, माध्यमिकीयाः --- शालूकिकीयाः --- अत्र न प्राप्नोति ।
विधिरप्यत्र न सिध्यति ।
किं कारणम् ?
भाषितपुंस्कादनूङित्युच्यते, न ह्येतद्भाषितपुंस्कादनूङ् ।
इह तर्हि विलेपिकाया धर्म्यम् --- वैलेपिकम्, विधिश्च सिद्धो भवति, प्रतिषेधश्च न प्राप्नोति ।।
<M.5.235>
(द्वितीयपक्षे दोषभाष्यम्)
अथ पुंवद्भावमात्रस्य विषये, हस्तिनीनां समूहः --- हास्तिकम् । जातिलक्षणः पुंवद्भावप्रतिषेधः प्राप्नोति ।।
(सिद्धान्तपक्षोपपादकभाष्यम्)
एवं तर्हि न कोपधायाः इत्ययं योगः पुंवद्भावमात्रस्य विषये । तत उक्तम् --- एवमाद्यनुक्रमणमाद्यस्य योगस्य विषये ।।
(6442 उपसंख्यानवार्तिकम् ।। 1 ।।)
- कोपधप्रतिषेधे तद्धितवुग्रहणम् -
कोपधप्रतिषेधे तद्धितस्य यः ककारो वोश्च यः, तस्य ग्रहणं कर्तव्यम् ।
इह मा भूत् --- पाकभार्यः, भेकभार्यः ।।
-6-3-40- स्वाङ्गाच्चेतः (2899)
(6443 उपसंख्यानवार्तिकम् ।। 1 ।।)
- स्वाङ्गाच्चेतोऽमानिनि -
स्वाङ्गाच्चेतोऽमानिनीति वक्तव्यम् ।
इहापि यथा स्यात् --- दीर्घमुखमानी, श्लक्ष्णमुखमानी ।।
यद्यमानिनीत्युच्यते, दीर्घमुखमानिनी --- श्लक्ष्णमुखमानिनी --- इति न सिध्यति ।
प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवं भविष्यति ।।
-6-3-42- पुंवत्कर्मधारयजातीयदेशीयेषु (2901)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न सामान्येन सिद्धम् ?
(6444 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- पुंवत्कर्मधारये प्रतिषिद्धार्थम् -
प्रतिषिद्धार्थोऽयमारम्भः । न कोपधायाः (37) इत्युक्तं तत्रापि पुंवद्भावो भवति । कारिका वृन्दारिका --- कारकवृन्दारिका, कारकजातीया, कारकदेशीया ।।
<M.5.236>
संज्ञापूरण्योश्च (38) इत्युक्तं तत्रापि पुंवद्भवति । दत्ता वृन्दारिका --- दत्तवृन्दारिका, दत्तजातीया, दत्तदेशीया । पञ्चमी वृन्दारिका --- पञ्चमवृन्दारिका, पञ्चमजातीया, पञ्चमदेशीया ।।
वृद्धिनिमित्तस्य --- (39) इत्युक्तं तत्रापि पुंवद्भावो भवति । स्रौघ्नी वृन्दारिका --- स्रौघ्नवृन्दारिका, स्रौघ्नजातीया, स्रौघ्नदेशीया ।।
स्वाङ्गाच्चेतोऽमानिनि (40) इत्युक्तं तत्रापि पुंवद्भावो भवति । श्लक्ष्णमुखी वृन्दारिका --- श्लक्ष्णमुखवृन्दारिका, श्लक्ष्णमुखजातीया, श्लक्ष्णमुखदेशीया ।।
जातेश्च (41) इत्युक्तं तत्रापि पुंवद्भवति । कठी वृन्दारिका --- कठवृन्दारिका, कठजातीया, कठदेशीया ।।
(6445 उपसंख्यानवार्तिकम् ।। 2 ।।)
- कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् -
कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः । कुक्कुट्या अण्डं --- कुक्कुटाण्डम् । मृग्याः पदं--मृगपदम् । काक्याः शावः --- काकशावः ।।

(6446 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 3 ।।)
- न वाऽस्त्रीपूर्वपदविवक्षितत्वात् -
न वा वक्तव्यम् ।
किं कारणम् ?
अस्त्रीपूर्वपदविवक्षितत्वात् ।
नात्र स्त्रीपूर्वपदं विवक्षितम् ।
किं तर्हि ?
अस्त्रीपूर्वपदं विवक्षितम् । उभयोरण्डम्, उभयोः पदम्, उभयोः शावः ।।
यद्यपि तावदत्रैतच्छक्यते वक्तुम् । इह तु कथं-मृग्याः क्षीरं --- मृगक्षीरम् ?
अत्रापि न वाऽस्त्रीपूर्वपदविवक्षितत्वादित्येव ।
कथं पुनः सतो नामाविवक्षा स्यात् ?
सतोऽप्यविवक्षा भवति । तद्यथा --- अलोमिका एडका, अनुदरा कन्या ।
असतश्च विवक्षा भवति । तद्यथा --- समुद्रः कुण्डिका, विन्ध्यो वर्द्धितकमिति ।।
(6447 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 4 ।।)
- अग्नेरीत्वाद्वरुणवृद्धिर्विप्रतिषेधेन -
अग्नेरीत्वाद्वरुणस्य वृद्धिर्भवति विप्रतिषेधेन । अग्नेरीत्वस्यावकाशः --- अग्नीषोमौ ।
वरुणस्य वृद्धेरवकाशः --- वायुवारुणम् ।
इहोभयं प्राप्नोति --- आग्नीवारुणीमनड्वाहीमालभेत ।
वरुणस्य वृद्धिर्भवति विप्रतिषेधेन ।।
<M.5.237>
(आक्षेपभाष्यम्)
नैष युक्तो विप्रतिषेधः ।
द्विकार्ययोगो हि विप्रतिषेधः, नात्रैको द्विकार्ययुक्तः ।
कथम् ?
अग्नेरीत्वम्, वरुणस्य वृद्धिः --- इति ।।
(समाधानभाष्यम्)
नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।
किं तर्हि ?
असंभवोऽपि, स चात्रास्त्यसम्भवः ।
कोऽसावसंभवः ?
अग्नेरीत्वमभिनिर्वर्तमानं वरुणस्य वृद्धिं बाधते । वरुणस्य वृद्धिरभिनिर्वर्तमाना अग्नेरीत्वं बाधते । एषोऽसंभवः ।
सत्यसंभवे युक्तो विप्रतिषेधः ।।
(6448 विप्रतिषेधवार्तिकम् ।। 5 ।।)
- पुंवद्भावात् ह्रस्वत्वं खिद्घादिकेषु -
पुंवद्भावाद् ह्रस्वत्वं भवति विप्रतिषेधेन ।
पुंवद्भावस्यावकाशः --- पटुभार्यः, मृदुभार्यः ।
खिति ह्रस्वत्वं भवतीत्यस्यावकाशः --- कालिम्मन्यः, हरिणिम्मन्यः ।
इहोभयं प्राप्नोति --- कालिम्मन्या, हरिणिम्मन्या ।
ह्रस्वो भवति विप्रतिषेधेन ।।
घादिषु नद्या ह्रस्वो भवतीत्यस्यावकाशः --- नर्तकितरा, नर्तकितमा ।
पुंवद्भावस्यावकाशः --- दर्शनीयतरा, दर्शनीयतमा ।
इहोभयं प्राप्नोति --- पट्वितरा, पट्वितमा ।
ह्रस्वो भवति विप्रतिषेधेन ।।
के ह्रस्वो भवतीत्यस्यावकाशः --- नर्तकिका ।
पुंवद्भावस्यावकाशः--दारदिका ।
इहोभयं प्राप्नोति --- पट्विका, मृद्विका ।
ह्रस्वत्वं भवति विप्रतिषेधेन ।।
अथेदानीं ह्रस्वत्वे कृते पुनः प्रसङ्गविज्ञानात्पुंवद्भावः कस्मान्न भवति ?
सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।।

-6-3-43- घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः (2902)
(ह्रस्वाधिकरणम्)
(पदकृत्यभाष्यम्)
ङीग्रहणं किमर्थम् ?
अनेकाचो ह्रस्व इतीयत्युच्यमाने खट्वातरा --- मालातरा --- अत्रापि प्रसज्येत ।
नैतदस्ति प्रयोजनम् । भाषितपुंस्कादित्युच्यते ।।
एवमपि दत्तातरा--गुप्तातरा--अत्रापि प्राप्नोति ।
इर्त इति वर्तते ।
क्व प्रकृतम् ?
<M.5.238>
स्वाङ्गाच्चेतोऽमानिनि (6-3-40) इति ।।
एमवपि ग्रामणीतरः--सेनानीतरः--अत्रापि प्राप्नोति ।
स्त्रियामिति वर्तते ।।
एवमपि ग्रामणीतरा--सेनानीतरा--अत्रापि प्राप्नोति ।
स्त्रियाः स्त्रियामिति वर्तते ।।
शेषप्रक्लृप्त्यर्थं तर्हि ङीग्रहणं कर्तव्यम् । नद्याः शेषस्यान्यतरस्याम् (6-3-44) इति ।
कश्च शेषः ?
अङी च या नदी, ङ्यन्तं च यदेकाच् ।।
(ङीग्रहणप्रत्याख्यानभाष्यम्)
अन्तरेणापि ङीग्रहणं प्रक्लृप्तः शेषः ।
कथम् ?
इर्त इति वर्तते । अनीच्च या नदी, इर्दन्तं चापि यदेकाच् ।।
(शेषग्रहणप्रत्याख्यानभाष्यम्)
शेषग्रहणं चापि शक्यमकर्तुम् ।
कथम् ?
अविशेषेण घादिषु नद्या अन्यतरस्यां ह्रस्वत्वमुत्सर्गः, तस्य अनेकाचः इति नित्यं ह्रस्वत्वमपवादः ।
तस्मिन्नित्ये प्राप्ते उगितो विभाषेयमारभ्यते ।।
यद्येवं लक्ष्मितरा--तन्त्रितरा--इति न सिध्यति, लक्ष्मीतरा--तन्त्रीतरा--इति प्राप्नोति ।
इष्टमेवैतत्संगृहीतम्, लक्ष्मीतरा--तन्त्रीतरा--इत्येव भवितव्यम् ।
एवं हि सौनागाः पठन्ति --- घादिषु नद्या ह्रस्वत्वे कृन्नद्याः प्रतिषेध इति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ।।
<M.5.239>
-6-3-46- आन्महतः समानाधिकरणजातीययोः (2905)
(आत्वाधिकरणम्)
(महद्विषयाक्षेपभाष्यम्)
इह कस्मान्न भवति --- अमहान् महान् संपन्नो महद्भूतश्चन्द्रमा इति ।।
(महद्भूते आत्वाभावसाधकं श्लोकवार्तिकम्)
अन्यप्रकृतिरमहान् भूतप्रकृतौ महान् महत्येव ।
अन्यः --- महान् । अन्यः --- अमहान् भूतप्रकृतौ वर्तते । महान् --- महत्येव ।।
(आत्वाभावसाधकं श्लोकवार्तिकम्)
तस्मादात्वं न स्यात्
तस्मादात्वं न भविष्यति ।।
(पुंवद्भावाक्षेपभाष्यम्)
पुंवत्तु कथं भवेदत्र ।। 1 ।।
पुंवद्भावोऽपि तर्हि न प्राप्नोति । अमहती महती संपन्ना महद्भूता ब्राह्मणी ।।
एवं तर्हि ---
<M.5.240>
(आक्षेपबाधकं श्लोकवार्तिकम्)
अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ।

अमहति हि महच्छब्दो वर्तते, तद्वाची भूतशब्दोऽयं प्रयुज्यते ।
किं वाची ?
महद्वाची ।।
जहद्धर्मान्तरं पूर्वमुपादत्ते यदा परम् ।
तत्वादप्रच्युतो धर्मी परिणामः स उच्यते ।। इति ।
पूर्वावस्थामविजहत्संस्पृशन् धर्ममुत्तरम् ।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते ।। इति ।
(पुंवद्भावसाधकं श्लोकवार्तिकम्)
तस्मात् सिध्यति पुंवत्
तस्मात् सिध्यति पुंवद्भावः ।।
(वार्तिकावतरणभाष्यम्)
यद्येवमात्वमपि प्राप्नोति --- महद्भूतश्चन्द्रमा इति ।।
(आक्षेपसाधकं श्लोकभाष्यम्)
निर्वत्यमात्वन्तु मन्यन्ते ।। 2 ।।
आत्वमपि प्राप्नोति ।।
नैष दोषः ।
कथम् ?
<M.5.241>
(आत्वबाधकं श्लोकभाष्यम्)
यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्वम् ।
कर्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ।। 3 ।।
एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यः समासो विहितस्तस्य ग्रहणम्, लक्षणोक्तश्चायम् ।
(प्रत्याक्षेपभाष्यम्)
इहापि तर्हि न प्राप्नोति --- महान् बाहुरस्य --- महाबाहुरिति ।।
(प्रत्याक्षेपसमाधानभाष्यम्)
शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ।
तस्मात्सिद्ध्यति तस्मिन्
यस्मात् शेषो बहुव्रीहिः (2-2-3) इति सिद्धे अनेकमन्यपदार्थे (24) इत्याह, तेन प्रतिपदोक्तं तत्र भवति ।।
(प्रकारान्तरणे समाधानश्लोकभाष्यम्)
प्रधानतो वा यतो वृत्तिः ।। 4 ।।
अथवा गौणमुख्ययोर्मुख्ये संप्रत्ययः । तद्यथा --- गौरनूबन्ध्योऽजोऽग्नीषोमीय इति न वाहीकोऽनुबध्यते ?
कथं तर्हि वाहीके वृद्ध्यात्वे भवतः --- गौस्तिष्ठति, गामानयेति ।
अर्थाश्रय एवदेवं भवति, यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ।।
<M.5.243>
(6449 उपसंख्यानवार्तिकम् ।। 1 ।।)
- महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् -
महदात्वे घासकरविशिष्टेषूपसंख्यानं कर्तव्यम्, पुंवद्भावश्चासमानाधिकरणार्थो द्रष्टव्यः । महत्या घासः--महाघासः । महत्याः करः --- महाकरः । महत्या विशिष्टः --- महाविशिष्टः ।।
(6450 उपसंख्यानवार्तिकम् ।। 2 ।।)
- अष्टनः कपाले हविषि -
अष्टनः कपाले हविषि उपसंख्यानं कर्तव्यम् । अष्टाकपालः ।
हविषीति किमर्थम् ?
अष्टकपालं ब्राह्मणस्य ।।
(6451 उपसंख्यानवार्तिकम् ।। 3 ।।)
- गवि च युक्ते -
गवि च युक्त उपसंख्यानं कर्तव्यम् । अष्टागवेन शकटेन ।
युक्त इति किमर्थम् ?
अष्टगवं ब्राह्मणस्य ।।
(श्लोकसंग्रहः)

अन्यप्रकृतिरमहान् भूतप्रकृतौ महान् महत्येव ।।
तस्मादात्वं न स्यात्पुंवत्तु कथं भवेत्तत्र ।। 1 ।।
अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ।।
तस्मात्सिद्ध्यति पुंवन्निर्वर्त्यमात्वं तु मन्यन्ते ।। 2 ।।
यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्वम् ।।
कर्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ।। 3 ।।
शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ।।
तस्मात् सिध्यति तस्मिन् प्रधानतो वा यतो वृत्तिः ।। 4 ।।
<M.5.244>
-6-3-47- द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः (2906)
(मर्यादाकरणभाष्यम्)
प्राक्शतादिति वक्तव्यम् ।
इह मा भूत् --- द्विशतम्, अष्टशतम्, द्विसहस्रम्, अष्टसहस्रम् ।।
-6-3-49- विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् (2908)
(पदकृत्यभाष्यम्)
सर्वेषां ग्रहणं किमर्थम् ?
चत्वारिंशत्प्रभृतौ सर्वेषां ग्रहणं सर्वेषां विभाषा यथा स्यात्, द्व्यष्टनः --- त्रेश्च ।।
नैतदस्ति प्रयोजनम् । प्रकृतं द्व्यष्टनोर्ग्रहणमनुवर्तिष्यते ।
यदि तदनुवर्तते, त्रेस्त्रयस् --- द्व्यष्टनोश्चेति द्व्यष्टनोरपि त्रयश्चादेशः प्राप्नोति ।
नैष दोषः । मण्डूकगतयोऽधिकाराः ।
तद्यथा --- मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ।
(प्रकारान्तरबोधकभाष्यम्)
अथवा एकयोगः करिष्यते --- द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः, त्रेस्त्रयः । ततः --- विभाषा चत्वारिंशत्प्रभृतौ सर्वेषामिति । नैकयोगेऽनुवृत्तिर्भवति ।
अथवा उभयं निवृत्तं तदपेक्षिष्यामहे ।।
-6-3-50- हृदयस्य हृल्लेखयदण्लासेषु - (2909)
(हृदादेशाधिकरणम्)
(अण्ग्रहणाक्षेपभाष्यम्)
यदण्ग्रहणमिदं प्रत्ययग्रहणम्, तत्र प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति यदणन्ते प्राप्नोति ।।
(6452 समाधानवार्तिकम् ।। 1 ।।)
- यदण्ग्रहणे रूपग्रहणं लेखग्रहणात् -
यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम् ।
कुतः ?
लेखग्रहणात् । यदयं लेखग्रहणं करोति तत् ज्ञापयत्याचार्यः --- न यदणन्ते भवतीति ।।
<M.5.245>
(सामान्यापेक्षज्ञापकभाष्यम्)
अपर आह --- अत्यल्पमिदं ज्ञाप्यते, सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम् ।
कुतः ?
लेखग्रहणादेव ।
किं प्रयोजनम् ?
कुमारीगौरितरा । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ।।
(ज्ञापकाक्षेपभाष्यम्)
यद्येतत् ज्ञाप्यते, खित्यनव्ययस्य (6-3-66) इति खित्येवानन्तरस्यानव्ययस्य ह्रस्वत्वं प्राप्नोति ।।
(समाधानभाष्यम्)
खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा खिदन्ते उत्तरपदे भविष्यति ।
ननु चायमस्ति --- स्तनन्धय इति ।
अत्रापि शपा व्यवधानम् ।
एकादेशे कृते नास्ति व्यवधानम् ।
एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।

अथवैतज्ज्ञापयत्याचार्यः --- खित्यनन्तरस्य न भवतीति यदयमनव्ययस्येति प्रतिषेधं शास्ति । न हि खित्यनन्तरमव्ययमस्ति ।।
-6-3-52- पादस्य पदाज्यातिगोपहतेषु (2911)
(पदादेशाधिकरणम्)
(6453 उपसंख्यानवार्तिकम् ।। 1 ।।)
- पदादेशेऽन्तोदात्तनिपातनं पदोपहतार्थम् -
पदादेशेऽन्तोदात्तनिपातनं कर्तव्यम् ।
किं प्रयोजनम् ?
पदोपहतार्थम् । पादेनोपहतं --- पदोपहतम् । तृतीया कर्मणि (6-2-48) इति पूर्वपदप्रकृतिस्वरत्वे पूर्वपदान्तोदात्वं यथा स्यात् ।।
<M.5.246>
(6454 उपसंख्यानवार्तिकम् ।। 2 ।।)
- उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् -
उपदेशिवद्भावश्च वक्तव्यः ।।
किं प्रयोजनम् ?
स्वरसिद्ध्यर्थम् । उपदेशावस्थायामन्तोदात्तनिपातने कृते समासस्वरेण बाधनं यथा स्यात् । पदाजिः, पदातिः ।।
-6-3-53- पद्यत्यतदर्थे (2912)
(6455 उपसंख्यानवार्तिकम् ।। 1 ।।)
- पद्भावे इके चरतावुपसंख्यानम् -
पद्भावे इके चरतावुपसंख्यानं कर्तव्यम् । पादेन चरति--पदिकः ।।
-6-3-56- वा घोषमिश्रशब्देषु (2915)
(6456 उपसंख्यानवार्तिकम् ।। 1 ।।)
- निष्के चोपसंख्यानम् -
निष्के चोपसंख्यानं कर्तव्यम् । पन्निष्केण । पादनिष्केण ।।
-6-3-57- उदकस्योदः संज्ञायाम् (2913)
(उदादेशाऽधिकरणम्)
(6457 उपसंख्यानवार्तिकम् ।। 1 ।।)
- संज्ञायामुत्तरपदस्य च -
संज्ञायामुत्तरपदस्येति वक्तव्यम् । इहापि यथा स्यात् --- लोहितोदः । क्षीरोद इति ।।
-6-3-59- एकहलादौ पूरयितव्येऽन्यतरस्याम् (2918)
(एकहलादिपदाक्षेपभाष्यम्)
एकहलादाविति किमर्थम् ?
उदकस्थानम् ।।
उच्यमानेऽप्येतस्मिन् वचनेऽत्र प्राप्नोति, एतदप्येकहलादि ।
किं कारणम् ?
एकैकवर्णवर्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति <M.5.247>।
तद्यथा --- गौरित्युक्ते यावद्गकारे वाक् प्रवर्तते, न तावदौकारे न विसर्जनीये । यावदौकारे, न तावद्गकारे न विसर्जनीये । यावद्विसर्जनीये, न तावद्गकारे नापि औकारे । उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । उच्चरितो वर्णः प्रध्वस्त इति ।
अथापरः प्रयुज्यते, न वर्णो वर्णान्तरस्य सहायः ।।
(एकहलादिपदप्रयोजनभाष्यम्)
एवं तर्हि एकहलादौ इत्युच्यते, सर्वश्चैवैकहलादिः । तत्र प्रकर्षगतिर्विज्ञास्यते --- साधीयो य एकहलादिरिति ।
कश्च साधीयः ?
यत्रैकं हलमुच्चार्याजुच्यते ।।
-6-3-61- इको ह्रस्वोऽङ्यो गालवस्य (2920)
(ह्रस्वाधिकरणम्)
(6458 उपसंख्यानवार्तिकम् ।। 1 ।।)
- इको ह्रस्वत्वमुत्तरपदमात्रे -
इको ह्रस्वत्वमुत्तरपदमात्रे वक्तव्यम् । इहापि यथा स्यात् --- अलाबुकर्कन्धुदृन्भुफलम् --- इति ।
किं पुनः कारणं न सिध्यति ?
(6459 उपसंख्यानफलबोधकवार्तिकम् ।। 2 ।।)
- सर्वान्ते लोकविज्ञानम् -

लोकविज्ञानाद्धि यदेतत् सर्वान्त्यं पदं तस्मिन् पूर्वपदस्य ह्रस्वत्वं स्यात् ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
अथवा एवं विग्रहः करिष्यते --- अलाबूश्च कर्कन्धूश्च --- अलाबुकर्कन्ध्वौ, अलाबुकर्कन्ध्वौ च दृन्भूश्च --- अलाबुकर्कन्धुदृन्भ्वः, अलाबुकर्कन्धुदृन्भूनां फलं --- अलाबुकर्कन्धुदृन्भुफलम् --- इति ।
यद्येवं दृन्भ्वाः पूर्वनिपातः प्राप्नोति ।
राजदन्तादिषु पाठः करिष्यते ।।
<M.5.248>
(उपसंख्यानानर्थक्ये प्रकारान्तरबोधकभाष्यम्)
अथवा एवं विग्रहः करिष्यते --- दृन्भ्वाः फलं --- दृन्भुफलं, कर्कन्धूश्च दृन्भुफलं च --- कर्कन्धुदृन्भुफलम्, अलाबूश्च कर्कन्धुदृन्भुफलं च --- अलाबुकर्कन्धुदृन्भुफलमिति ।
एवमपि फलेनाकृतोऽभिसंबन्धो भवति ।
नैष दोषः ।
प्रत्येकं फलशब्दः परिसमाप्यते ।।
(6460 प्रतिषेधोपसंख्यानवार्तिकम् ।। 3 ।।)
?B- इयङुवङ्व्ययप्रतिषेधः -
इयङुवङ्भाविनामव्ययानां च प्रतिषेधो वक्तव्यः । श्रीकुलम्, भ्रूकुलम् । काण्डीभूतम्, कुड्यीभूतम् --- वृषलकुलम् ।।
(पर्युदासभाष्यम्)
अभ्रूकुंसादीनामिति वक्तव्यम् । भ्रुकुंसः,भ्रुकुंसः। भ्रुकुटिः, भ्रुकुटिः।
अपर आह --- अकारो भ्रूकुंसादीनामिति वक्तव्यम् । भ्रकुंसः । भ्रकुटिः ।।
-6-3-62- एकतद्धिते च (2921)
(एकतद्धितेपदप्रयोजनभाष्यम्)
एकतद्धिते किमुदाहरणम् ?
एकत्वम्, एकता --- इति ।
नैतदस्ति प्रयोजनम् । पुंवद्भावेनाप्येतत् सिद्धम् ।
कथम् ?
तसिलादिष्वा कृत्वसुचः (6-3-35) इति ।।
इदं तर्हि प्रयोजनम् --- एकस्या आगतं --- एकरूप्यम्, एकमयम् ।
इदं चाप्युदाहरणम् --- एकत्वम्, एकता ।
ननु चोक्तं पुंवद्भावेनाप्येतत्सिद्धमिति ।
न सिद्ध्यति ।
उक्तमेतत् --- त्वतलोर्गुणवचनस्य इति ।।
(उत्तरपदे पदप्रयोजनभाष्यम्)
अथोत्तरपदे किमुदाहरणम् ?
एकशाटी ।
नैतदस्ति । पुंवद्भावेनाप्येतत्सिद्धम् ।
कथं पुंवद्भावः ?
समानाधिकरणलक्षणः पुंवद्भावः ।
इदं तर्हि --- एकस्याः क्षीरं --- एकक्षीरम् ।
इदं चाप्युदाहरणम् --- एकशाटी ।
ननु चोक्तं पुंवद्भावेनाप्येतत्सिद्धमिति ।
न सिद्ध्यति । न कोपधायाः (6-3-37) इति प्रतिषेधः प्राप्नोति ।
नैषोऽस्ति प्रतिषेधः ।
उक्तमेतत् कोपधप्रतिषेधे तद्धितवुग्रहणम् इति ।।
<M.5.249>
-6-3-66- खित्यनव्ययस्य (2925)
(6461 सूत्रार्थानुपपत्तिवार्तिकम् ।। 1 ।।)
- खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् -
खिति ह्रस्वस्याप्रसिद्धिः । कालिम्मन्या । हरिणिम्मन्या ।
किं कारणम् ?

अनजन्तत्वात् । मुमि कृतेऽनजन्तत्वात् ह्रस्वत्वं न प्राप्नोति ।।
(6462 उपपत्तिवार्तिकम् ।। 2 ।।)
- सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् -
सिद्धमेतत् ।
कथम् ?
ह्रस्वान्तस्य मुम्भवतीति वक्तव्यम् ।।
(6463 प्रकारान्तरेणोपपत्तिवार्तिकम् ।। 3 ।।)
- सन्नियोगाद्वा -
अथवा सन्नियोगः करिष्यते ।
क एष यत्नश्चोद्यते सन्नियोगो नाम ?
चकारः कर्तव्यः --- मुम् च ।
किंच ?
यच्चान्यत्प्राप्नोति ।
किञ्चान्यत् प्राप्नोति ? ह्रस्वत्वम् ।
सिद्ध्यति । सूत्रं तर्हि भिद्यते ।।
यथान्यासमेवास्तु ।
ननु चोक्तं खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् इति ।
परिहृतमेतत् --- सिद्धन्तु ह्रस्वान्तस्य मुम्वचनात् इति ।
तत्तर्हि ह्रस्वग्रहणं कर्तव्यम् ।
न कर्तव्यम् । प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
इको ह्रस्वोऽङ्यो गालवस्य (61) इति ।
तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।
खिति इत्येषा सप्तमी ह्रस्वः इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य (1-1-66) इति ।।
<M.5.250>
(एकदेशिन उपपत्तिभाष्यम्)
अथवा खिति ह्रस्वो भवतीत्युच्यते । खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा भूतपूर्वगतिर्विज्ञास्यते --- अजन्तं यद्भूतपूर्वमिति ।।
(पूर्वपक्षिण उपपत्तिभाष्यम्)
अथवा कार्यकालं संज्ञापरिभाषम् यत्र कार्यं तत्र द्रष्टव्यम् खिति ह्रस्वो भवतीत्युपस्थितमिदं
भवति --- अच इति । तत्र वचनादनजन्तस्यापि भविष्यति ।
इहापि तर्हि वचनात्प्राप्नोति --- वाक्मन्य इति ।
नैतदस्ति । इक इति वर्तते ।
एवमपि खट्वंमन्यः, अत्र न प्राप्नोति ।
नैष दोषः । आब्ग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
ङ्यापोः संज्ञाछन्दसोर्बहुलम् (63) इति ।।
(सिद्धान्तभाष्यम्)
एवमपि कीलालपंमन्यः, शुभंयंमन्यः --- अत्र न प्राप्नोति ।
तस्मात् पूर्वोक्तावेव परिहारौ ।।
-6-3-68- इच एकाचोऽम्प्रत्ययवच्च (2927)
(मुमोऽधिकरणम्)
(सूत्रप्रयोजनाक्षेपभाष्यम्)
अमः प्रत्ययवदनुदेशे किं प्रयोजनम् ?
(6464 सूत्रप्रयोजनवार्तिकम् ।। 1 ।।)
- अमः प्रत्ययवदनुदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः -
अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णगुणेयङुवङादेशाः --- प्रयोजनम् ।
आत्वं प्रयोजनम् --- गांमन्यः ।
पूर्वसवर्णः प्रयोजनम् --- स्त्रींमन्यः ।
गुणः प्रयोजनम् --- नरंमन्यः ।

इयङुवङौ प्रयोजनम् --- श्रियंमन्यः, भ्रुवंमन्यः ।।
(6465 प्रयोजनाक्षेपवार्तिकम् ।। 2 ।।)
- अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् -
अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णयोरप्रसिद्धिः ।
किं कारणम् ?
अप्रथमात्वात् । प्रथमयोरित्युच्यते, न चात्र प्रथमां पश्यामः ।
किं च भोः आत्वं प्रथमयोः इत्युच्यते ?
न खलु प्रथमयोरित्युच्यते, प्रथमयोरिति विज्ञायते ।
कथम् ?
अम्शसोरित्युच्यते, त एवं विज्ञास्यामः --- शस्सहचरितो योऽम्शब्दः ।
कश्च शस्सहचरितः ?
प्रथमैव ।।
ननु च प्रत्ययवदनुदेशाद्भविष्यति ।
न सिद्ध्यति ।
किं कारणम् ?
<M.5.251>
(6466 आक्षेपसाधकवार्तिकम् ।। 3 ।।)
- सामान्यातिदेशे हि विशेषानतिदेशः -
सामान्ये ह्यतिदिश्यमाने विशेषोऽनतिदिष्टो भवति ।
तद्यथा --- ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यत् ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते ।
एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते । यद्विशिष्टं द्वितीयैकवचने भवति --- प्रथमयोरिति, न तदतिदिश्यते ।।
(6467 समाधानवार्तिकम् ।। 4 ।।)
- सिद्धं तु द्वितीयैकवचनवद्वचनात् -
सिद्धमेतत् ।
कथम् ?
द्वितीयैकवचनवद्वचनात् । द्वितीयैकवचनवद्भवतीति वक्तव्यम् ।।
(6468 प्रकारान्तरेण समाधानवार्तिकम् ।। 5 ।।)
- एकशेषनिर्देशाद्वा -
अथवैकशेषनिर्देशोऽयम् । अम् च अम् च --- अम् । इच एकाचोऽम् भवति,
अम्प्रत्ययवच्चास्मिन् कार्यं भवति ।।
(प्रयोगसाधनाक्षेपभाष्यम्)
अथेह कथं भवितव्यम् --- श्रियं मन्यते ब्राह्मणकुलम् --- श्रियंमन्यं ब्राह्मणकुलम्, आहोस्विच्छ्रिमन्यमिति ?
श्रियंमन्यमिति भवितव्यम् ।
स्वमोर्नपुंसकात् (7-1-23) इति लुक्कस्मान्न भवति ?
(बाध्यसामान्यचिन्तया प्रयोगसाधकभाष्यम्)
नाप्राप्ते लुक्यम् --- आरभ्यते । स यथैव सुपो धातुप्रातिपदिकयोः (2-4-71) इत्येतं बाधत एवं स्वमोर्नपुंसकात् इत्येतमपि लुकं बाधेत ।।
<M.5.252>
(बाध्यविशेषचिन्तयाऽऽक्षेपभाष्यम्)
न बाधते ।
किं कारणम् ?
येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते सुपो धातुप्रातिपदिकयोः इत्येतस्मिन्नेतदारभ्यते, स्वमोर्नपुंसकात् इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च ।।
अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमयममागमः सुपो धातुप्रातिपदिकयोः इत्येतं बाधते, स्वमोर्नपुंसकात् इत्येतन्न बाधते ।।
(समाधानभाष्यम्)
एवं तर्हि असिद्धं बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुक् न भविष्यति ।।
(पूर्वपक्षिणः सिद्धान्तभाष्यम्)
नैषा परिभाषेहोत्तरपदाधिकारे शक्या विज्ञातुम् ।
इह हि दोषः स्यात् --- द्विषन्तपः, परन्तपः --- इति ।।

तस्माच्छ्रिमन्यमित्येव भवितव्यम् ।।
-6-3-70- कारे सत्यागदस्य (2929)
(6469 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अस्तुसत्यागदस्य कार उपसंख्यानम् -
अस्तुसत्यागदस्य कार उपसंख्यानं कर्तव्यम् । अस्तुंकारः, सत्यङ्कारः, अगदंकारः ।।
<M.5.253>
(6470 उपसंख्यानवार्तिकम् ।। 2 ।।)
- भक्षस्य छन्दसि -
भक्षस्य च्छन्दस्युपसंख्यानं कर्तव्यम् । तस्यते भक्षङ्कारस्य ।
छन्दसीति किमर्थम् ?
भक्षकारस्य तन्मतमिति ।।
(6471 उपसंख्यानवार्तिकम् ।। 3 ।।)
- धेनोर्भव्यायाम् -
धेनोर्भव्यायामुपसंख्यानं कर्तव्यम् । धेनुम्भव्या ।।
(6472 उपसंख्यानवार्तिकम् ।। 4 ।।)
- लोकस्य पृणे -
लोकस्य पृण उपसंख्यानं कर्तव्यम् । लोकम्पृणस्य धन्विनः ।।
(6473 उपसंख्यानवार्तिकम् ।। 5 ।।)
- इत्येऽनभ्याशस्य -
इत्येऽनभ्याशस्योपसंख्यानं कर्तव्यम् । अनभ्याशमित्यम् ।।
(6474 उपसंख्यानवार्तिकम् ।। 6 ।।)
- भ्राष्ट्राग्न्योरिन्धे -
भ्राष्ट्राग्न्योरिन्ध उपसंख्यानं कर्तव्यम् । भ्राष्ट्रमिन्धः । अग्निमिन्धः ।।
(6475 उपसंख्यानवार्तिकम् ।। 7 ।।)
- गिलेऽगिलस्य -
गिलेऽगिलस्योपसंख्यानं कर्तव्यम् । तिमिंगिलः ।
अगिलस्येति किमर्थम् ?
गिलगिलः ।।
(6476 उपसंख्यानवार्तिकम् ।। 8 ।।)
- गिलगिले च -
गिलगिले चेति वक्तव्यम् । तिमिंगिलगिलः ।।
(6477 उपसंख्यानवार्तिकम् ।। 9 ।।)
- उष्णभद्रयोः करणे -
उष्णभद्रयोः करण उपसंख्यानं कर्तव्यम् । उष्णंकरणम्, भद्रंकरणम् ।।
(6478 उपसंख्यानवार्तिकम् ।। 10 ।।)
- सूतोग्रराज भोजकुलमेरुभ्यो दुहितुः पुत्रड्वा -
सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रट् वा भवतीति वक्तव्यम् ।
सूतपुत्री, सूतदुहिता --- सूत ।
उग्रपुत्री, उग्रदुहिता --- उग्र ।
राजपुत्री, राजदुहिता --- राज ।
भोजपुत्री, भोजदुहिता --- भोज ।
कुलपुत्री, कुलदुहिता --- कुल ।
मेरुपुत्री, मेरुदुहिता --- मेरु ।।
<M.5.254>
-6-3-72- रात्रेः कृति विभाषा (2931)
(विभाषास्वरूपजिज्ञासाभाष्यम्)
किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ?
कथं च प्राप्ते कथं वाऽप्राप्ते ?
यदि खितीत्यनुवर्तते, ततो नित्यं प्राप्ते ।

अथ नानुवर्तते, तदाऽप्राप्ते ।।
(विभाषानिर्णयभाष्यम्)
रात्रेरप्राप्ते विभाषा । प्राप्ते नित्यो विधिः --- रात्रिम्मन्यः । अप्राप्ते विभाषा --- रात्र्यटः, रात्रिमटः ।।
-6-3-73- नलोपो नञ्ञः (2932)
(नलोपाधिकरणम्)
(अनुबन्धप्रयोजनभाष्यम्)
किमर्थं नञ्ञः सानुबन्धकस्य ग्रहणं क्रियते, न नस्य इत्येवोच्येत ?
नस्य इतीयत्युच्यमाने कर्णपुत्रः --- पर्णपुत्रः इत्यत्रापि प्रसज्येत ।
नैष दोषः । अर्थवद्ग्रहणे नानर्थकस्य इत्येवमत्र न भविष्यति ।
एवमपि प्रश्नपुत्र --- विश्नपुत्रः इत्यत्रापि प्राप्नोति ।
नैष दोषः । अननुबन्धकग्रहणे न सानुबन्धकस्य इत्येवमस्य न भविष्यति ।
एवमपि वामनपुत्र --- पामानपुत्रः इत्यत्रापि प्राप्नोति ।
तस्मात् सानुबन्धकग्रहणं कर्तव्यम् ।।
(6479 उपसंख्यानवार्तिकम् ।। 1 ।।)
- नञ्ञो नलोपे अवक्षेपे तिङ्युपसंख्यानम् -
नञ्ञो नलोपेऽवक्षेपे तिङ्युपसंख्यानं कर्तव्यम् । अपचसि वै त्वं जाल्म । अकरोषि वै त्वं जाल्म ।।
-6-3-74- तस्मान्नुडचि (2933)
(तस्मात्पदाक्षेपभाष्यम्)
किमर्थं तस्मादित्युच्यते, न नुडचि इत्येवोच्येत ?
नुडचि इतीयत्युच्यमाने नञ्ञ एव नुट् प्रसज्येत ।।
<M.5.255>
(नुटः पूर्वान्तत्वेन सामाधानभाष्यम्)
एवं तर्हि पूर्वान्तः करिष्यते, तत्रायमप्यर्थः --- तदोः सः सावनन्त्ययोः (7-2-106) इति तदोर्ग्रहणं न कर्तव्यं भवति । तत्र हि तवर्गानिर्देश एतत्प्रयोजनम् --- इह मा भूत् --- अनेषः करोति --- इति ।
यावता पूर्वान्तोऽयम्, न दोषो भवति ।।
(सिद्धान्तभाष्यम्)
नैवं शक्यम् । इह हि --- अनुष्ण इति नलोपः प्रातिपदिकान्तस्य (8-2-7) इति नलोपः प्रसज्येत ।
नुग्वचनान्न भविष्यति ।
ङमुट् तर्हि प्राप्नोति ।
तस्मात्परादिः कर्तव्यः । परादौ च क्रियमाणे तस्मात् इति च वक्तव्यम् ।।
-6-3-76- एकादिश्चैकस्य चादुक् (2935)
(आदुस्थापकभाष्यम्)
किमर्थमादुगुच्यते न अदुगेवोच्येत ?
का रूपसिद्धिः ?
एकान्नविंशतिः --- एकान्नत्रिंशत् सवर्णदीर्घत्वेन सिद्धम् ।
न सिध्यति । अतो गुणे (6-1-97) इति पररूपत्वं प्राप्नोति ।।
एवं तर्ह्यदुट् करिष्यते ।
अदुट् चाशक्यः कर्तुम् । आनुनासिक्यं हि न स्यात् ।
यद्धि तत् यरोऽनुनासिकेऽनुनासिको वा (8-4-45) इति, पदान्तस्येत्येवं तत् ।
किं पुनः कारणं पदान्तस्येत्येवं तत् इति ?
इह मा भूत् --- ब्रध्नः,बुध्नः, बध्नाति, गृभ्णाति इति ।।
एवन्तर्ह्यनुट् करिष्यते ।
अनुट् चाशक्यः कर्तुम् ।
विभाषयाऽऽनुनासिक्यम् । तेनेदमेव रूपं स्यात् --- एकान्नविंशतिरिति । इदं न स्यात् --- एकाद्नविंशतिरिति ।।
(सिद्धान्तभाष्यम्)
अस्तु तर्ह्यदुगेव ।
ननु चोक्तं अतो गुण इति पररूपत्वं प्राप्नोति इति ।
नैष दोषः । अकारोच्चारणसामर्थ्यान्न भविष्यति ।
यदि तर्हि प्राप्नुवन् विधिरकारोच्चारणसामर्थ्यात् बाध्यते, सवर्णदीर्घत्वमपि तर्हि न प्राप्नोति ।

यं विधिं प्रत्यकारोच्चारणमनर्थकं भवति स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । पररूपं च प्रत्यकारोच्चारणमनर्थकम्, सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ।।
<M.5.256>
-6-3-78- सहस्य सः संज्ञायाम् (2937)
(सादेशाधिकरणम्)
(6480 पूर्वपक्षिवार्तिकम् ।। 1 ।।)
- सहस्य हलोपवचनम् -
सहस्य हलोपो वक्तव्यः ।।
सादेशे हि सति स्वरे दोषः । आन्तर्यत उदात्तानुदात्तयोः स्थाने स्वरित आदेशः प्रसज्येत । सपुत्रः । सभार्यः ।।
(सिद्धान्तभाष्यम्)
स तर्हि लोपो वक्तव्यः ।
न वक्तव्यः । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ।
एवमप्युपदेशिवद्भावो वक्तव्यः । स यथैव निपातनस्वरः प्रकृतिस्वरं बाधते, एवं समासस्वरमपि बाधेत --- सेष्टि, सपशुबन्धम् --- इति ।।
-6-3-79- ग्रन्थान्ताधिके च (2938)
(सूत्राक्षेपभाष्यम्)
ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात् ।
अव्ययीभावे चाकाले इत्येव सिद्धम् ।
(सिद्धान्तभाष्यम्)
यस्तर्हि कालोत्तरपदो ग्रन्थान्तस्तदर्थमिदं वक्तव्यम् । सकाष्ठं ज्योतिषमधीते । सकलम्, समुहूर्तम् ।।
-6-3-82- वोपसर्जनस्य (2941)
(6481 आक्षेपवार्तिकम् ।। 1 ।।)
- उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् -
उपसर्जनस्य वावचने सर्वप्रसङ्गः, सर्वस्योपसर्जनस्य सादेशः प्राप्नोति ।
अस्यापि प्राप्नोति --- सहयुध्वा, सहकृत्वा ।
किं कारणम् ?
अविशेषात् । न हि कश्चिद्विशेष उपादीयते --- एवं जातीयकस्य सहशब्दस्योपसर्जनस्य सादेशो भवतीति ।
अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।।
(6482 समाधानवार्तिकम् ।। 2 ।।)
- सिद्धं तु बहुव्रीहिनिर्देशात् -
सिद्धमेतत् ।
कथम् ?
बहुव्रीहिनिर्देशात् ।
बहुव्रीहिनिर्देशः कर्तव्यः ।।
<M.5.257>
(सूत्रार्थसंपादकभाष्यम्)
एवमपि सहयुध्वप्रियः सहकृत्वप्रियः --- अत्र प्राप्नोति, बहुव्रीहौ यदुत्तरपदमित्येवं विज्ञास्यते ।
नन्वेतदपि बहुव्रीहावुत्तरपदम् ।
एवन्तर्हि बहुव्रीहौ यदुपसर्जनमित्येवं विज्ञास्यते ।
(नन्वेतदपि बहुव्रीहावुपसर्जनम् ।
एवं तर्हि नैवं विज्ञायते --- बहुव्रीहौ यदुपसर्जनमिति ।
किं तर्हि ?)
बहुव्रीहौ च यदुपसर्जनम्, बहुव्रीहिं प्रति च यदुपसर्जनम् ।।
(सूत्रेण सिद्धार्थत्वबोधकभाष्यम्)
स तर्हि बहुव्रीहिनिर्देशः कर्तव्यः ।
न कर्तव्यः ।
इह कश्चित्प्रधानानामेव समासः, कश्चिदुपसर्जनानामेव, कश्चित्प्रधानोपसर्जनानामेव ।
तद्य उपसर्जनानामेव समासस्तदुपसर्जनस्येदं ग्रहणम् ।।
अथवा --- अकारो मत्वर्थीयः । तद्यथा --- तुन्दः, घाट इति ।।
अथवा --- मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा --- पुष्यका येषां त इमे पुष्यकाः, कालका येषां त इमे कालका इति ।।

-6-3-83- प्रकृत्याशिषि (2942)
(6483 पर्युदासोपसंख्यानवार्तिकम् ।। 1 ।।)
- प्रकृत्याशिष्यगवादिषु -
प्रकृत्याशिष्यगवादिष्विति वक्तव्यम् । इह मा भूत् --- स्वस्ति भवते सगवे सवत्साय सहलायेति ।।
-6-3-86- चरणे ब्रह्मचारिणि (2945)
(वार्तिकावतरणभाष्यम्)
अत्र किं निपात्यते ?
<M.5.258>
(6484 निपातनबोधकवार्तिकम् ।। 1 ।।)
- ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च -
ब्रह्मण्युपपदे समानपूर्वे व्रत कर्मणि चरेर्णिनिः प्रत्ययो व्रतलोपश्च निपात्यते । समाने ब्रह्मणि व्रतचारीति --- सब्रह्मचारी ।।
-6-3-89- दृग्दृशवतुषु (2948)
(6485 उपसंख्यानवार्तिकम् ।। 1 ।।)
- दृग्दृशवतुषु दृक्ष उपसंख्यानम् -
दृग्दृशवतुषु दृक्ष उपसंख्यानं कर्तव्यम् । सदृक्षासः, प्रतिसदृक्षासः ।।
-6-3-92- विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये (2951)
(6487 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् -
अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् ।
किं प्रयोजनम् ?
कृत्स्वरनिवृत्त्यर्थम् । कृत्स्वरो मा भूदिति । विष्वद्र्यङ्, विष्वद्र्यञ्चौ, विष्वद्र्यञ्चः । सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः ।।
(प्रतिषेधभाष्यम्)
तत्र छन्दसि स्त्रियां प्रतिषेधो वक्तव्यः । विश्वाची, घृताची ।
यदि छन्दसि स्त्रियां प्रतिषेध उच्यते कथं --- सा कद्रीची ?
एवन्तर्हि छन्दसि स्त्रियां बहुलम् इति वक्तव्यम् ।।
-6-3-93- समः समि (2952)
(पूर्वपदादेशाधिकरणम्)
(क्विग्रहणानर्थक्यबोधकभाष्यम्)
किमर्थमञ्चतिनह्यादिषु क्विग्रहणं क्रियते ।
इह मा भूत् --- समञ्चनम्, उपनहनम् ।
नैतदस्ति प्रयोजनम् । उत्तरपदे इति वर्तते । न चान्तरेण क्विपमञ्चतिनह्यादय उत्तरपदानि भवन्ति ।
तत्रान्तरेण क्विब्ग्रहणं क्विबन्त एव भविष्यति ।
तदादिविधिना प्राप्नोति ।
अत उत्तरं पठति ---
(6486 क्विब्ग्रहणस्य ज्ञापकत्वबोधकवार्तिकम् ।। 1 ।।)
- अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन् विधिस्तदादावल्ग्रहणे -
अञ्चतिनह्यादिषु क्विब्ग्रहणमनर्थकम् ।
किं कारणम् ?
यस्मिन् विधिस्तदादावल्ग्रहणे । अल्ग्रहणेष्वेतद्भवति । न चेदमल्ग्रहणम् ।
एवं तर्हि सिद्धे सति यदञ्चतिनह्यादिषु क्विब्ग्रहणं करोति तज्ज्ञापयत्याचार्यः --- अन्यत्र धातुग्रहणे तदाविधिर्भवतीति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य इत्यत्र अयस्कृत् अयस्कार इत्यपि सिद्धं भवति ।।
<M.5.259>
-6-3-95- सहस्य सध्रिः (2954)
(6487 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् -
अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् ।
किं प्रयोजनम् ?
कृत्स्वरनिवृत्त्यर्थम् । कृत्स्वरो मा भूदिति । विष्वद्र्यङ्, विष्वद्र्यञ्चौ, विष्वद्र्यञ्चः । सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः ।।

(प्रतिषेधभाष्यम्)
तत्र छन्दसि स्त्रियां प्रतिषेधो वक्तव्यः । विश्वाची, घृताची ।
यदि छन्दसि स्त्रियां प्रतिषेध उच्यते कथं --- सा कद्रीची ?
एवन्तर्हि छन्दसि स्त्रियां बहुलम् इति वक्तव्यम् ।।
-6-3-97- द्व्यन्तरुपसर्गेभ्योऽप इर्त् (2956)
(6488 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- समाप इर्त्वप्रतिषेधः -
समाप इर्त्वप्रतिषेधो वक्तव्यः । समापं नाम देवयजनम् ।।
अपर आह --- इर्त्वमनवर्णादिति वक्तव्यम् । समीपम्, अन्तरीपम् ।
इह मा भूत् --- प्रापम्, परापम् ।।
-6-3-98- ऊदनोर्देशे (2957)
(दीर्घोच्चारणप्रयोजनभाष्यम्)
दीर्घोच्चारणं किमर्थम् ?
<M.5.260>
न उदनोर्देशे इत्येवोच्यते ?
का रूपसिद्धिः ?
अनूपम्, सवर्णदीर्घत्वेन सिद्धम् ।
न सिद्ध्यति । अवग्रहे हि दोषः स्यात् ।।
-6-3-99- अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु (2958)
(लक्ष्यसिद्धिसाधकभाष्यम्)
अषष्ठ्यतृतीयास्थस्येत्युच्यते, तत्रेदं न सिध्यतिअन्यस्येदं --- अन्यदीयम् । अन्यस्य कारकः --- अन्यत्कारक इति ।।
एवं तर्ह्यविशेषेण अन्यस्य दुक् छकारकयोः इत्युक्त्वा ततो वक्ष्यामि --- अषष्ठ्यतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेषु इति ।।
-6-3-101- कोः कत्तत्पुरुषेऽचि (2960)
(6489 उपसंख्यानवार्तिकम् ।। 1 ।।)
कद्भावे त्रावुपसंख्यानं कर्तव्यम् । कत्त्रयः ।
किमिदं कत्त्रय इति ?
कुत्सितास्त्रयः --- कत्त्रयः । के वा त्रयः, न बिभृयुः --- कत्त्रय इति ।।
-6-3-109- पृषोदरादीनि यथोपदिष्टम् (2968)
(निपातनाधिकरणम्)
(आदिपदार्थबोधकभाष्यम्)
पृषोदरादीनीत्युच्यते, कानि पृषोदरादीनि ?
पृषोदरप्रकाराणि ।
कानि पुनः पृषोदरप्रकाराणि ?
येषु लोपागमवर्णविकाराः श्रूयन्ते, न चोच्यन्ते ।।
(यथाशब्दार्थबोधकभाष्यम्)
अथ यथा इति किमिदम् ?
प्रकारवचने थाल् (5-3-23) ।।
(उपदिष्टार्थबोधकभाष्यम्)
अथ किमिदमुपदिष्टानीति ?
उच्चारितानि ।
कुत एतत् ?
दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह --- उपदिष्टा इमे वर्णाः इति ।
कैः पुनरुपदिष्टानि ?
शिष्टैः ।।
<M.5.261>
(शिष्टलक्षणभाष्यम्)
के पुनः शिष्टाः ?
वैयाकरणाः ।
कुत एतत् ?

शास्त्रपूर्विका हि शिष्टिः, वैयाकरणाश्च शास्त्रज्ञाः ।
यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम्, तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।
एवं तर्हि निवासतश्चाचारतश्च ।
स चाचार आर्यावर्ते एव ।
(आर्यावर्तलक्षणभाष्यम्)
कः पुनरार्यावर्तः ?
प्रागादर्शात् --- प्रत्यक् कालकवनात् --- दक्षिणेन हिमवन्तम् --- उत्तरेण पारियात्रम् । एतस्मिन् आर्यावर्ते आर्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारं गतास्तत्र भवन्तः शिष्टाः ।।
आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशेष्यते ।।
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ।। इति ।।
(शास्त्रप्रयोजनभाष्यम्)
यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते ?
शिष्टपरिज्ञानार्थाऽष्टाध्यायी ।
कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुम् ?
अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानं ये वाऽस्यां विहिताः शब्दास्तान् प्रयुञ्जानम् । स पश्यति --- नूनमस्य देवानुग्रहः स्वभावो वा, योऽयं न चाष्टाध्यायीमधीते, ये चास्यां विहिताः शब्दास्तांश्च प्रयुङ्क्ते । नूनमयमन्यानपि जानाति --- इति ।
एवमेषा शिष्टज्ञानार्थाऽष्टाध्यायी --- इति ।।
<M.5.262>
(6490 विकल्पवार्तिकम् ।। 1 ।।)
- दिक्शब्देभ्यस्तीरस्य तारभावो वा -
दिक्शब्देभ्यस्तीरस्य तारभावो वा वक्तव्यः । दक्षिणतीरम्, दक्षिणतारम् । उत्तरतीरम्, उत्तरतारम् ।।
(6491 उपसंख्यानवार्तिकम् ।। 2 ।।)
- वाचो वादेर्डत्वं वल्भावश्चोत्तरपदस्येञ्जि -
वाचो वादेर्डत्वं वक्तव्यं वल्भावश्चोत्तरपदस्य इञ्जि वक्तव्यः । वाग्वादस्यापत्यं --- वाड्वलिः ।।
(6492 उपसंख्यानवार्तिकम् ।। 3 ।।)
- षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च -
षष उत्वं वक्तव्यम्, उत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोडन्, षोडश ।।
(6493 उपसंख्यानवार्तिकम् ।। 4 ।।)
- धासु वा -
धासु वेति वक्तव्यम्, उत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोढा, षड्ढा कुरु ।।
अथ किमर्थं बहुवचननिर्देशः क्रियते, न पुनर्धायामित्येवोच्येत ?
नानाधिकरणवाची यो धाशब्दस्तस्य ग्रहणं यथा विज्ञायेत ।
इह मा भूत् --- षट् दधातीति षड्धा --- इति ।।
(उपसंख्यानभाष्यम्)
दुरो दाशनाशदभध्येषूत्वं वक्तव्यम्, उत्तरपदादेश्च ष्टुत्वम् । दूडाशः, दूणाशः, दूडभः, दूढ्यः ।।
(6494 उपसंख्यानवार्तिकम् ।। 5 ।।)
- स्वरो रोहतौ छन्दस्युत्वम् -
स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् । एहि त्वं जाये स्वरो रोहाव --- इति ।।
<M.5.263>
(6495 उपसंख्यानवार्तिकम् ।। 6 ।।)
- पीवोपवसनादीनां छन्दसि लोपः -
पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः । पीवोपवसनानाम् । पयोपवसनानाम् । श्रियेदम् ।।
-6-3-111- ढ्रलोपे पूर्वस्य दीर्घोऽणः (2970)
(दीर्घाधिकरणम्)
(पूर्वग्रहणप्रयोजनभाष्यम्)
पूर्वग्रहणं किमर्थम्, न तस्मिन्निति निर्दिष्टे पूर्वस्य (1-1-66) इति पूर्वस्य भविष्यति ?
न सिध्यति । न हि ढ्रलोपेनानन्तर्यमस्ति ।।

अथेह कस्मान्न भवति --- करणीयम् --- हरणीयम् --- इति ।
नैष दोषः । नैवं विज्ञायते --- ढ्रोर्लोपः --- ढ्रलोपः, ढ्रलोप इति ।
कथं तर्हि ?
ढ्रोर्लोपोऽस्मिन् सोऽयं --- ढ्रलोप इति ।
यद्येवं, नार्थः पूर्वग्रहणेन । भवति हि ढ्रलोपेनानन्तर्यम् ।।
इदं तर्हि प्रयोजनम् --- उत्तरपदे इति वर्तते, तेनानन्तर्यमात्रे यथा स्यात् । औदुम्बरी राजा । धूमाकी रथेन । पुना रूपाणि प्रकल्पयन् ।।
-6-3-112- सहिवहोरोदवर्णस्य (2971)
(वर्णग्रहणप्रयोजनभाष्यम्)
वर्णग्रहणं किमर्थम्, न सहिवहोरोदस्य इत्येवोच्येत ?
वृद्धावपि कृतायामोत्वं यथा स्यात् । उदवोढाम्, उदवोढम्, उदवोढेति ।।
(अवर्णप्रयोजनभाष्यम्)
अथावर्णग्रहणं किमर्थम् ?
इह मा भूत् --- ऊढः, ऊढवानिति ।
नैतदस्ति प्रयोजनम् । भवत्येवात्रौत्वम् ।
श्रवणं कस्मान्न भवति ?
पूर्वत्वमस्य भविष्यति ।
इदमिह संप्रधार्यम् --- ओत्वं क्रियतां पूर्वत्वमिति, किमत्र कर्तव्यम् ?
परत्वादोत्वम्, अन्तरङ्गं पूर्वत्वम् ।।
<M.5.264>
एवं तर्हीदमिह संप्रधार्यम् --- ओत्वं क्रियतां संप्रसारणमिति, किमत्र कर्तव्यम् ?
परत्वादोत्वम् ।
नित्यं संप्रसारणम्, कृतेऽप्योत्वे प्राप्नोत्यकृतेऽपि ।
ओत्वमपि नित्यम् ।
कथम् ?
कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि ।
अनित्यमोत्वम् । न हि कृते संप्रसारणे प्राप्नोति ।
किं कारणम् ?
अन्तरङ्गं पूर्वत्वम् । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवौत्वस्य निमित्तं विहन्ति, अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादोत्वम् । ओत्वे कृते सम्प्रसारणे कृते संप्रसारणपरपूर्वत्वम् । तत्र कार्यकृतत्वात् पुनरोत्वं न भविष्यति ।।
-6-3-116- नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ (2975)
(पूर्वपदादेशाधिकरणम्)
(क्विग्रहणानर्थक्यबोधकभाष्यम्)
किमर्थमञ्चतिनह्यादिषु क्विग्रहणं क्रियते ।
इह मा भूत् --- समञ्चनम्, उपनहनम् ।
नैतदस्ति प्रयोजनम् । उत्तरपदे इति वर्तते । न चान्तरेण क्विपमञ्चतिनह्यादय उत्तरपदानि भवन्ति ।
तत्रान्तरेण क्विब्ग्रहणं क्विबन्त एव भविष्यति ।
तदादिविधिना प्राप्नोति ।
अत उत्तरं पठति ---
(6486 क्विब्ग्रहणस्य ज्ञापकत्वबोधकवार्तिकम् ।। 1 ।।)
- अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन् विधिस्तदादावल्ग्रहणे -
अञ्चतिनह्यादिषु क्विब्ग्रहणमनर्थकम् ।
किं कारणम् ?
यस्मिन् विधिस्तदादावल्ग्रहणे । अल्ग्रहणेष्वेतद्भवति । न चेदमल्ग्रहणम् ।
एवं तर्हि सिद्धे सति यदञ्चतिनह्यादिषु क्विब्ग्रहणं करोति तज्ज्ञापयत्याचार्यः --- अन्यत्र धातुग्रहणे तदाविधिर्भवतीति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य इत्यत्र अयस्कृत् अयस्कार इत्यपि सिद्धं भवति ।।
-6-3-121- इको वहेऽपीलोः (2980)
(उपसंख्यानभाष्यम्)

अपील्वादीनामिति वक्तव्यम् ।
इह मा भूत् --- रुचिवहम्, चारुवहम् ।।
-6-3-122- उपसर्गस्य घञ्यमनुष्ये बहुलम् (2981)
(उपसंख्यानभाष्यम्)
अमनुष्यादिष्विति वक्तव्यम् ।
इह मा भूत् --- प्रसेवः, प्रसारः, प्रहारः ।।
(6496 उपसंख्यानवार्तिकम् ।। 1 ।।)
- सादकारयोः कृत्रिमे -
सादकारयोः कृत्रिम इति वक्तव्यम् ।
इहैव यथा स्यात् --- एषोऽस्य प्रासादः । एषोऽस्य प्राकारः ।
कृत्रिम इति किमर्थम् ?
एषोऽस्य प्रकारः । एषोऽस्य प्रसाद इति ।।
(6497 उपसंख्यानवार्तिकम् ।। 2 ।।)
- प्रतिवेशादीनां विभाषा -
प्रतिवेशादीनां विभाषा दीर्घत्वं वक्तव्यम् । प्रतिवेशः, प्रतीवेशः । प्रतिकारः, प्रतीकारः ।।
<M.5.265>
-6-3-124- दस्ति (2983)
(पक्षद्वयोपस्थापकं भाष्यम्)
कथमिदं विज्ञायते--दा इत्येतस्य--तकारादाविति, आहोस्वित्तकारान्त इति ।
किञ्चातः ?
यदि विज्ञायते--तकारादाविति, नीत्ता--वीत्ता--अत्र न प्राप्नोति ।
अथ विज्ञायते--तकारान्त इति, सुदत्तं--प्रतिदत्तं--अत्रापि प्राप्नोति ।।
(सिद्धान्तभाष्यम्)
यथेच्छसि तथाऽस्तु ।
अस्तु तावत्तकारादाविति ।
कथं नीत्ता वीत्ता ?
चर्त्वे कृते भविष्यति ।
असिद्धं चर्त्वं तस्यासिद्धत्वान्न प्राप्नोति ।
आश्रयात्सिद्धत्वं भविष्यति ।।
अथवा पुनरस्तु तकारान्त इति ।
कथं सुदत्तं प्रतिदत्तम् ?
नैतत्तकारान्तं
किं तर्हि ?
थकारान्तमेतत् ।।
-6-3-138- चौ (2997)
(ज्ञापकत्वसंपादकभाष्यम्)
इहान्ये आचार्याः --- चौ प्रत्यङ्गस्य प्रतिषेधमाहुः, तदिहापि साध्यम् ।
नैष दोषः ।
एतदेव ज्ञापयत्याचार्यः --- न चौ प्रत्यङ्गं भवतीति, यदयं चौ दीर्घत्वं शास्ति ।।
<M.5.266>
-6-3-139- सम्प्रसारणस्य (2998)
(6498 विप्रतिषेधवार्तिकम् ।। 1 ।।)
- इको ह्रस्वात्सम्प्रसारणदीर्घत्वं विप्रतिषेधेन -
इको ह्रस्वात्सम्प्रसारणदीर्घत्वं भवति विप्रतिषेधेन ।
इको ह्रस्वस्यावकाशः --- ग्रामणिकुलम्, सेनानिकुलम् ।
सम्प्रसारणदीर्घत्वस्यावकाशः --- विभाषा ह्रस्वत्वम्, यदा न ह्रस्वत्वं सोऽवकाशः ।
ह्रस्वप्रसङ्ग उभयं प्राप्नोति --- कारीषगन्धीपुत्रः, कौमुदगन्धीपुत्रः ।
सम्प्रसारणदीर्घत्वं भवति विप्रतिषेधेन ।।
अथेदानीं दीर्घत्वे कृते पुनः प्रसङ्गविज्ञानात् ह्रस्वत्वं कस्मान्न भवति ?

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव --- इति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य तृतीये पादे तृतीयमाह्निकम् ।।
इति पादश्च तृतीयः ।।
-9-9-999-

# महाभाष्यम्/षष्ठोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/nmz

< महाभाष्यम्

-6-4-1- अङ्गस्य (2999)

(अधिकारावधिनिर्णयाधिकरणम्)

(अधिकारमर्यादाभाष्यम्)

आ कुतोऽयमधिकारः ?

आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः ।।

(मर्यादायां पक्षान्तरोपस्थापकभाष्यम्)

यदि तर्ह्यासप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, गुणो यङ्लुकोः (7-4-82) इति यङ्लुग्ग्रहणं कर्तव्यम् । प्रागभ्यासविकारेभ्यः पुनरङ्गाधिकारे सति प्रत्ययलक्षणेन सिद्धम् ।

अस्तु तर्हि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः ।।

(पक्षान्तरे दूषणपूर्वकं सिद्धान्तभाष्यम्)

यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः, वव्रश्च वकारस्य सम्प्रसारणं प्राप्नोति । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सति उरदत्वस्य स्थानिवद्भावात् न सम्प्रसारणे सम्प्रसारणम् (6-1-37) इति प्रतिषेधः सिद्धो भवति । स चेदानीमपरिहारो भवति यत्तदुक्तम्---।अङ्गान्यत्वाच्च सिद्धम् इति ।

अस्तु तर्ह्या सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः ।

ननु चोक्तमिदानीं गुणो यङ्लुको--- इति यङ्लुग्ग्रहणं कर्तव्यमिति ।

क्रियते न्यास एव ।।

(वार्तिकावतरणभाष्यम्)

किं पुनरियं स्थानषष्ठी---अङ्गस्य स्थान इति ?

एवं भवितुमर्हति ।।

(6419 स्थानषष्ठ्यां दोषवार्तिकम् ।। 1 ।।)

- अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः -

अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः कर्तव्यः । अङ्गात् इत्यपि वक्तव्यम् ।

अनुच्यमाने हि---अतो भिस ऐस्भवतीति अत इति पञ्चमी, अङ्गस्येति स्थानषष्ठी, तत्राशक्यं विविभक्तिकत्वादत इति पञ्चम्याऽङ्गं विशेषयितुम् ।

तत्र को दोषः ?

अतो भिस ऐस् इति अकारान्तात्परस्य भिस्मात्रस्यैस्भावो भवति--इति--इहापि प्रसज्येत ब्राह्मणभिस्सा, ओदनभिस्सटा--इति ।।

(6500 स्थानषष्ठ्यां दोषवार्तिकम् ।। 2 ।।)

- अवयवषष्ठ्यादीनां चाप्रतिपत्तिः -

अवयवषष्ठ्यादयश्च न सिध्यन्ति ।

तत्र को दोषः ?

शास इदङ्हलोः (6-4-34) इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । ऊदुपधाया गोहः (6-4-89) इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ।।

(6501 दोषापोहवार्तिकम् ।। 3 ।।)

- सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावात् -

सिद्धमेतत् ।

कथम् ?

परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः । अङ्गसंज्ञां प्रति प्रत्ययसंज्ञा, प्रत्ययसंज्ञां प्रत्यङ्गसंज्ञा ।।

(वार्तिकावतरणभाष्यम्)

किमतो यत्परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः ?

(6502 स्थानषष्ठ्यां सिद्धान्तवार्तिकम् ।। 4 ।।)

- सम्बन्धषष्ठीनिर्देशश्च -

सम्बन्धषष्ठीनिर्देशश्चायं कृतो भवति--अङ्गस्य यो भिस्शब्द इति ।

किञ्चाङ्गस्य भिस्शब्दः ?

निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति ।

कस्मिंश्चैतद्भवति ?

प्रत्यये ।।
(दोषाक्षेपपरिहारभाष्यम्)
एवमप्यवयवषष्ठ्यादयोऽविशेषिता भवन्ति ।
अवयवषष्ठ्यादयोऽपि सम्बन्ध एव ।।
एवमपि स्थानमविशेषितं भवति ।
स्थानमपि सम्बन्ध एव ।।
एवमपि न ज्ञायते---क्व स्थानषष्ठी, क्व विशेषणषष्ठीति ?
यत्र षष्ठी अन्यं योगं नापेक्षते सा स्थानषष्ठी ।
यत्र ह्यन्ययोगमपेक्षते सा विशेषणषष्ठी ।।
(वार्तिकावतरणभाष्यम्)
कानि पुनरङ्गाधिकारस्य प्रयोजनानि ?
अङ्गाधिकारस्य प्रयोजनम्---
(6503 अधिकारप्रयोजनवार्तिकम् ।। 5 ।।)
- सम्प्रसारणदीर्घत्वे -
हल उत्तरस्य सम्प्रसारणस्य दीर्घत्वं भवति---हूतः, जीनः, संवीतः शूनः ।
अङ्गस्येति किम् ?
निरुतम्, दुरुतम् ।।
(6504 प्रयोजनवार्तिकम् ।। 6 ।।)
- नाम्सनोर्दीर्घत्वे -
प्रयोजनम् । नामि दीर्घो भवति---अग्नीनाम्, इन्दूनाम् ।
अङ्गस्येति किम् ?
किमिणां पश्य, पामनां पश्य ।।
सनि दीर्घो भवति---चिचीषति, तुष्टूषति ।
अङ्गस्येति किमर्थम् ?
दधि सनोति, मधु सनोति ।।
(6505 प्रयोजनवार्तिकम् ।। 7 ।।)
- लिङ्येत्वे -
प्रयोजनम् । ग्लेयात्, म्लेयात् ।
अङ्गस्येति किमर्थम् ?
निर्यायात्, निर्वायात् ।।
(6506 प्रयोजनवार्तिकम् ।। 8 ।।)
- अतो भिस ऐस्त्वे -
प्रयोजनम् । वृक्षैः । प्लक्षैः ।
अङ्गस्येति किम् ?
ब्राह्मणभिस्सा, ओदनभिस्सटा ।।
(6507 प्रयोजनवार्तिकम् ।। 9 ।।)
- लुङादिष्वडाटौ -
प्रयोजनम् । अकार्षीत्, ऐहिष्ट ।
अङ्गस्येति किमर्थम् ?
प्राकरोत्, अवैहिष्ट ।।
(6508 प्रयोजनवार्तिकम् ।। 10 ।।)
- इङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्केह्रस्वयिदीर्घभितत्वानि -
इयङुवङौ प्रयोजनम् । श्रियौ, श्रियः । भ्रुवौ, भ्रुवः ।
अङ्गस्येति किमर्थम् ?
श्र्यर्थम्, भ्र्वर्थम् ।।
युष्मदस्मदोः प्रयोजनम् । साम आकम् (7-1-33) युष्माकम्, अस्माकम् ।
अङ्गस्येति किम् ?
युष्मत्साम, अस्मत्साम ।।
तातङ् प्रयोजनम् । जीवतु जीवताद् भवान् ।

अङ्गस्येति किमर्थम् ?
पच हि तावत्त्वं, पच तु तावत्त्वम् । जल्प हि तावत्त्वम्, जल्प तु तावत्त्वम् ।।
आमि नुट् प्रयोजनम् । किशोरीणाम्, कुमारीणाम् ।
अङ्गस्येति किमर्थम् ?
कुमारी आमित्याह, किशोरी आमित्याह ।।
आने मुक् (7-2-82) प्रयोजनम् । यजमानः, पचमानः ।
अङ्गस्येति किमर्थम् ?
प्राणः ।।
के ह्रस्वः प्रयोजनम् । कुमारिका, किशोरिका ।
अङ्गस्येति किमर्थम् ?
कुमारीं कायति---कुमारीकः ।।
यि दीर्घः प्रयोजनम् । चीयते, स्तूयते ।
अङ्गस्येति किम् ?
दधियानम्, मधुयानम् ।।
भि तत्वं प्रयोजनम् । अद्भिः, अद्भ्यः ।
अङ्गस्येति किमर्थम् ?
अब्भारः, अब्भक्षः ।।
(वार्तिकावतरणभाष्यम्)
नैतानि सन्ति प्रयोजनानि ।
कथम् ?
(6509 प्रयोजनान्यथासिद्धिसाधकं वार्तिकम् ।। 11 ।।)
- अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् -
अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि सिद्धानि । क्वचित् अर्थवद्ग्रहणेनानर्थकस्य इत्येवं न भविष्यति, क्वचित् प्रत्ययाप्रत्यययोर्ग्रहणे प्रत्ययस्यैव ग्रहणं भवति इति ।।
अथवा प्रत्यय इति प्रकृत्याङ्गकार्यमध्येष्ये ।
यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे---प्राकरोत्, उपैहिष्ट---उपसर्गात्पूर्वमडाटौ प्राप्नुतः ।
।सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ।
सिद्धमेतत् ।
कथम् ?
प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीति, एवमुपसर्गात्पूर्वमडाटौ न भविष्यतः ।।
-6-4-2- हलः (3000)
(दीर्घाधिकरणम्)
(वार्तिकावतरणभाष्यम्)
इह कस्मान्न भवति---तृतीयः ?
(6510 अतिव्याप्तिनिवारकवार्तिकम् ।। 1 ।।)
- अण्प्रकरणादृकारस्याप्राप्तिः -
अण्प्रकरणादृकारस्य दीर्घत्वं न भविष्यति । अण इति वर्तते ।
क्व प्रकृतम् ?
ढ्रलोपे पूर्वस्य दीर्घोऽणः (6-3-111) इति ।।
(वार्तिकावतरणभाष्यम्)
तद्वै इकः काशे (6-3-123) इत्यनेनेग्ग्रहणेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ।।
(6511 अण्ग्रहणानुवृत्तिसाधकवार्तिकम् ।। 2 ।।)
- इग्ग्रहणस्य चाण्विशेषणत्वात् -
अण्विशेषणमिग्ग्रहणम्--अण इक इति ।।
(अण्ग्रहणानुवृत्तौ दोषनिवारकभाष्यम्)
यदि तर्ह्यण्विशेषणमिग्ग्रहणं, चौ दीर्घो भवति--इतीह न प्राप्नोति---अवाचा, अवाचे ।
नैष दोषः । अण्ग्रहणमनुवर्तते, इग्ग्रहणं निवृत्तम् ।।
एवमपि कर्तृचः, कर्तृचा, कर्तृचे---अत्र न प्राप्नोति ।
यथालक्षणमप्रयुक्ते ।।

(वार्तिकान्यथासिद्धिसाधकभाष्यम्)
अथवा---उभयं निवृत्तम् । कस्मान्न भवति---तृतीय इति ?
निपातनात् ।
किं निपातनम् ?
द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् (2-2-3) इति ।।
-6-4-3- नामि (3001)
(सनकारग्रहणाक्षेपभाष्यम्)
किमर्थमामः सनकारस्य ग्रहणं क्रियते, न आमि दीर्घः इत्येवोच्यते ?
केनेदानीं सनकारस्य भविष्यति ?
नुडयमाम्भक्त आम्ग्रहणेन ग्राहिष्यते ।।
अत उत्तरं पठति---
(नुट्प्रयोजनश्लोकवार्तिकम्)
नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड् भवेत् ।
नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुट् स्यात् । अग्नीनाम्, इन्दूनाम् ।
इदमिह संप्रधार्यम्---दीर्घत्वं क्रियतां नुडिति, किमत्र कर्तव्यम् ?
परत्वान्नुट् ।
नित्यं दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि । नित्यत्वाद्दीर्घे कृते ह्रस्वाश्रयो नुट् न प्राप्नोति ।।
(श्लोकवार्तिकावतरणभाष्यम्)
एवं तर्ह्याहायं---ह्रस्वान्तान्नुडिति, न च ह्रस्वान्तोऽस्ति । तत्र वचनाद्भविष्यति ।।
(सार्मथ्याभावोपपादकश्लोकवार्तिकम्)
वचनाद्यत्र तन्नास्ति ।
नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ।
किम् ?
यत्र दीर्घत्वं प्रतिषिध्यते---तिसृणाम्, चतसृणामिति ।
नैतदस्ति प्रयोजनम् । इह तावच्चतसृणामिति, षट्चतुर्भ्यश्च (7-1-55) इत्येवं भविष्यति ।
तिसृणामिति, त्रिग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
त्रेस्त्रयः (7-1-53) इति ।
इदं तर्हि---त्वं नृणां नृपते जायसे शुचिः ।
नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । तत्र वचनात् भूतपूर्वगतिर्विज्ञास्यते---ह्रस्वान्तं यद्भूतपूर्वमिति ।।
(श्लोकवार्तिकावतरणभाष्यम्)
उत्तरार्थं तर्हि सनकारग्रहणं कर्तव्यम् ।।
(नुट्प्रयोजनश्लोकवार्तिकम्)
नोपधायाश्च चर्मणाम् ।
नोपधायाः नामि यथा स्यात् । इह मा भूत्---वर्मणाम्, चर्मणाम् ।।
(संग्रहः)
नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुट् भवेत् ।
वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणाम् ।। 1 ।।
-6-4-12- इन्हन्पूषार्यम्णां शौ (3010)
-6-4-13- सौ च (3011)
(6512 दोषाक्षेपवार्तिकम् ।। 1 ।।)
- हनः क्वावुपधादीर्घत्वप्रसङ्गः -
हनः क्वावुपधालक्षणं दीर्घत्वं प्राप्नोति---अनुनासिकस्य क्विझलोः क्ङिति (15) इति, तस्य प्रतिषेधो वक्तव्यः ।।
(आक्षेपनिरासभाष्यम्)
वृत्रहणौ, वृत्रहण इति---नियमवचनात्सिद्धम् । इन्हन्पूषार्यम्णां शौ सौ च इत्येतस्मान्नियमवचनाद्दीर्घत्वं न भविष्यति ।।
(6513 नियमाक्षेपवार्तिकम् ।। 2 ।।)
- नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः -
नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्र नियमो न प्राप्नोति ।
क्वान्यत्र ?

ब्रह्महणि, भ्रूणहनि ।
नियमवचनात्सिद्धमिति चेदिति ।।
एवं तर्हि---
(नियमस्वरूपदर्शकं श्लोकवार्तिकम्)
दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
दीर्घविधिर्य इहेन्प्रभृतीनां तं सर्वनामस्थाने विनियम्य । इन्हन्पूषार्यम्णां सर्वनामस्थाने दीर्घो भवति ।
किमर्थमिदम् ?
नियमार्थम् । इन्हन्पूषार्यम्णां सर्वनामस्थान एव, नान्यत्र ।।
(नियमस्वरूपदर्शकं श्लोकवार्तिकम्)
शौ नियमं पुनरेव विदध्यात्
ततः--शौ । शावेव सर्वनामस्थाने नान्यत्र । ततः---सौ । सावेव सर्वनामस्थाने नान्यत्र ।।
(नियमसाधकं श्लोकवार्तिकम्)
भ्रूणहनीति तथाऽस्य न दुष्येत् ।। 1 ।।
तथाऽस्य भ्रूणहनीति न दोषो भवति ।।
(नियमे प्रकारान्तरदर्शकं श्लोकवार्तिकम्)
शास्मि निर्वत्य सुटीत्यविशेषे शौ नियमं कुरु वाऽप्यसमीक्ष्य ।
अथवा निवृत्ते सर्वनामस्थानप्रकरणे अविशेषेण शौ नियमं वक्ष्यामि---इन्हन्पूषार्यम्णां शावेव । ततः---सौ, सावेव ।।
(नियमाक्षेपभाष्यम्)
इहापि तर्हि नियमान्न प्राप्नोति---इन्द्रो वृत्रहायते ।।
(आक्षेपनिरासे श्लोकवार्तिकम्)
दीर्घविधेरुपधानियमान्मे हन्तियि दीर्घविधौ च न दोषः ।। 2 ।।
उपधालक्षणदीर्घत्वस्य नियमः, नचैतदुपधालक्षणं दीर्घत्वम् ।।
(प्रकारान्तरेणाक्षेपनिरासे श्लोकवार्तिकम्)
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
अथवाऽनुवर्तमाने सर्वनामस्थानप्रकरणेऽनवकाशः शौ नियमोऽप्रकृतस्यापि दीर्घत्वस्य नियामको भविष्यति ।
कथम् ?
(नियमसंपादकं श्लोकवार्तिकम्)
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ।। 3 ।।
यस्य हि शिसर्वनामस्थानं, न तस्य सुट् । यस्य च सुट्सर्वनामस्थानं, न च तस्य शिः । तत्र सर्वनामस्थानप्रकरणे नियम्यं नास्तीति कृत्वाऽविशेषेण शौ नियमो विज्ञास्यते ।।
(संग्रहः)
दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विदध्यात् भ्रूणहनीति तथाऽस्य न दुष्येत् ।। 1 ।।
शास्मि निर्वत्य सुटीत्यविशेषे शौ नियमं कुरु वाऽप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्तियि दीर्घविधौ च न दोषः ।। 2 ।।
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ।। 3 ।।
-6-4-14- अत्वसन्तस्य चाधातोः (3012)
(6514 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् -
अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानं कर्तव्यम् । गोमान्, यवमान् ।
किं पुनः कारणं न सिध्यति ?
।अननुबंधकग्रहणे न सानुबन्धकस्य ग्रहणम् अननुबन्धकग्रहणे सानुबन्धकस्य ग्रहणं नेत्येवं पितो न प्राप्नोति ।।
अननुबन्धकग्रहण इत्युच्यते, सानुबन्धकस्येदं ग्रहणम् ।
एवं तर्हि तदनुबन्धकस्य ग्रहणे अतदनुबन्धकस्य ग्रहणं न इत्येवं पितो न प्राप्नोति ।।
(उपसंख्यानाक्षेपभाष्यम्)
तत्तर्हि उपसंख्यानं कर्तव्यम् ?
न कर्तव्यम् ।

पकारलोपे कृते नातुबन्तं भवति, अत्वन्तमेव ।
यथैव तर्हि पकारलोपे कृते नातुबन्तमेवमुकारलोपे कृते नात्वन्तम् ।
ननु च भूतपूर्वगत्या भविष्यति अत्वन्तम् ।
यथैव तर्हि भूतपूर्वगत्याऽत्वन्तम्, एवमतुबन्तमपि ।
एवं तर्हि---आश्रीयमाणे भूतपूर्वगतिः, अत्वन्तं चाश्रीयते नातुबन्तम् ।।
(उपसंख्यानसाधकभाष्यम्)
न सिध्यति । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते---अत्रास्यैतद्रूपमिति । रूपनिर्ग्रहणं शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ।
कोऽसौ ?
उपदेशः । उपदेशे चैतदतुबन्तं नात्वन्तम् ।।
(उपसंख्यानसाधकभाष्यम्)
यदि पुनरच्छब्दं गृहीत्वा दीर्घत्वमुच्येत ।
नैवं शक्यम् ।
इहापि प्रसज्येत---जगत्, जनगत् ।
अर्थवद्ग्रहणे नानर्थकस्य इत्येवमेतस्य न भविष्यति ।
इहापि तर्हि न प्राप्नोति---कृतवान्, भुक्तवान् ।
क्व तर्हि स्यात् ?
पचन्, यजन् । न वै अत्रेष्यते ।।
अनिष्टं च प्राप्नोति, इष्टं च न सिध्यति ।
तस्मादुपसंख्यानं कर्तव्यम् ।।
-6-4-16- अज्झनगमां सनि (3014)
(6515 उपसंख्यानवार्तिकम् ।। 1 ।।)
- गमेर्दीर्घत्वे इङ्ग्रहणम् -
गमेर्दीर्घत्वे इङ्ग्रहणं कर्तव्यम् । इङो गमेरिति वक्तव्यम् । इह मा भूत्---सञ्जिगंसते वत्सो मात्रेति ।।
(6516 उपसंख्यानसाधकवार्तिकम् ।। 2 ।।)
- अग्रहणे ह्यनादेशस्यापि दीर्घप्रसङ्गः -
अक्रियमाणे हीङ्ग्रहणेऽनादेशस्यापि दीर्घत्वं प्रसज्येत । सञ्जिगंसते वत्सो मात्रेति ।।
(6517 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 3 ।।)
- न वा छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात् -
न वा इङ्ग्रहणं कर्तव्यम् ।
किं कारणम् ?
छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात् । छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं दृश्यते---स्वर्गं लोकं सञ्जिगांसत् । छन्दस्यनादेशस्यापि गमेर्दीर्घत्वदर्शनादिङ्ग्रहणमनर्थकम् ।।
(उपसंख्यानसाधकभाष्यम्)
यथैव तर्हि छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं भवति, एवं भाषायामपि प्राप्नोति । तस्मादिङ्ग्रहणं कर्तव्यम् ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
न कर्तव्यम् । योगविभागः करिष्यते---
अचः सनि ।
अजन्तानां सनि दीर्घो भवति ।
ततः---
हनिगम्योः ।
हनिगम्योश्च सनि दीर्घो भवति । अच इत्येव । अचः स्थाने यौ हनिगमी ।।
(वार्तिकावतरणभाष्यम्)
अथोपधाग्रहणमनुवर्तते, उताहो न ?
किञ्चातः ?
(6518 उपधापदानुवर्तने दोषवार्तिकम् ।। 4 ।।)
- सनि दीर्घ उपधाधिकारश्चेत् व्यञ्जनप्रतिषेधः -
सनि दीर्घ उपधाधिकारश्चेत् व्यञ्जनस्य प्रतिषेधो वक्तव्यः । चिचीषति---तुष्टूषतीत्येवमर्थम् ।
एवं तर्हि निवृत्तम् ।।

(6519 उपधापदाननुवर्तने दोषवार्तिकम् ।। 5 ।।)
- अनधिकारे उक्तम् -
किमुक्तम् ?
हनिगमिदीर्घेष्वज्ग्रहणम् इति ।
(सिद्धान्तभाष्यम्)
नैष दोषः ।
उक्तमेतत्---ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयात् अचः इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ।।
-6-4-19- च्छ्वोः शूडनुनासिके च (3017)
(ऊठोऽधिकरणम्)
(ऊठष्ठित्वसाधकभाष्यम्)
अथ ऊडादिः कस्मान्न भवति, आदिष्टित् भवतीति प्राप्नोति ।
कस्य पुनरादिः ?
वकारस्य । अस्तु ।
वकारस्य का प्रतिपत्तिः ?
लोपो व्योर्वलि (6-1-66) इति लोपो भविष्यति ।
नैवं शक्यम् । ज्वरत्वरस्रिव्यविमवामुपधायाश्च (6-4-20) इति द्वावूटौ स्याताम् ।
एवं तर्हि नैष टित् ।
कस्तर्हि ?
ठित् ।
(ठित्वे आक्षेपपरिहारभाष्यम्)
यदि तर्हि ठति, धौतः पट इति एत्येधत्यूठ्सु (6-1-89) इति वृद्धिर्न प्राप्नोति ।
चर्त्वे कृते भविष्यति ।
असिद्धं चर्त्वं तस्यासिद्धत्वान्न प्राप्नोति ।
आश्रयात्सिद्धत्वं भविष्यति ।
असत्यन्यस्मिन्नाश्रयात्सिद्धत्वं स्यात्, अस्ति चान्यः वाह ऊट् इति ।
एषोऽपि ठित्करिष्यते । तत्रोभयोर्श्चत्वे कृते आश्रयात्सिद्धत्वं भविष्यति ।।
(क्ङिदनुवर्तनविचारभाष्यम्)
अथ क्ङिद्ग्रहणमनुवर्तते, उताहो न ?
किञ्चातः ?
(क्ङिदनुवर्तनाक्षेपे श्लोकवार्तिकम्)
शूट्त्वे क्ङिदधिकारश्चेच्छः षत्वम्
शूट्त्वे क्ङिदधः्थ्य;कारश्चेत् छः षत्वं वक्तव्यम् । प्रष्टा, प्रष्टुं, प्रष्टव्यम् ।
(क्ङिदनुवर्तनाक्षेपे श्लोकवार्तिकम्)
तुक्प्रसङ्गश्च ।
तुक् च प्रसज्येत ।।
निवृत्तेऽपि वै क्ङिद्ग्रहणेऽवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति ।
च्छ्वोः इति तुका सह सन्निपातग्रहणं विज्ञायते ।
ननु चैवमपि अन्त्यस्य प्राप्नोति ।
सन्निपातग्रहणसामर्थ्यात्सर्वस्य भविष्यति ।
एवमप्यङ्गस्य प्राप्नोति ।
निर्दिश्यमानस्यादेशा भवन्तीति---एवमङ्गस्य न भविष्यति ।।
यद्येवमुत्पुच्छयतेरप्रत्ययः उत्पुड् इति प्राप्नोति, उत्पुदिति चेष्यते ।
तथा वाञ्छतेरप्रत्ययः--वान्, वांशौ, वांश इति न सिध्यति ।
यथालक्षणमप्रयुक्ते ।।
तत्र त्वेतावान् विशेषः---अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम्, तत्र चापि सन्निपातग्रहणं विज्ञेयम् ।।
(क्ङिद्ग्रहणाननुवर्तनाक्षेपे श्लोकवार्तिकम्)
निवृत्ते दिव ऊठ्भावः
अथ निवृत्तं दिव ऊठ्भावः प्राप्नोति । द्युभ्यां द्युभिः ।
अस्तु ।

कथं द्युभ्यां---द्युभिः इति ?
ऊठि कृते दिव उत् (6-1-131) इत्युत्वं भविष्यति ।
न सिध्यति । आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति ।।
(क्ङिद्ग्रहणाननुवर्तने दोषनिवारकं श्लोकवार्तिकम्)
तदर्थं तपरः कृतः ।।
तदर्थं तपरः क्रियते ।।
(संग्रहः)
शुट्त्वे क्ङिदधिकारश्चेच्छः षत्वं तुक्प्रसज्यते ।
निवृत्ते दिव ऊठ्भावस्तदर्थं तपरः कृतः ।।
(क्ङिद्ग्रहणानुवर्तने दोषनिवारकं भाष्यम्)
क्व पुनः क्ङिद्ग्रहणं प्रकृतम् ?
अनुनासिकस्य क्विझलोः क्ङिति (15) इति ।
यदि तदनुवर्तते, अज्झनगमां सनि (16) क्विझलोश्चेति क्विझलोरपि दीर्घत्वं प्राप्नोति ।
झलि तावन्न दोषः । सनमत्र झल्ग्रहणेन विशेषयिष्यामः--सनि झलादाविति ।
क्वावप्याचार्यप्रवृत्तिर्ज्ञापयति---नानेन क्वौ दीर्घत्वं भवतीति, यदयं क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च इति दीर्घत्वं शास्ति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।।
-6-4-22- असिद्धवदत्राभात् (3020)
(अधिकारमर्यादाधिकरणम्)
(असिद्धवचनाक्षेपभाष्यम्)
असिद्धवचनं किमर्थम् ?
(6520 असिद्धवचनप्रयोजनवार्तिकम् ।। 1 ।।)
- असिद्धवचने उक्तम् -
किमुक्तम् । तत्र तावदुक्तम्---।षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं इति ।
इहापि---असिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ।
तत्र---आदेशलक्षणप्रतिषेधार्थं तावत्---आगहि, जहि । गतं, गतवानिति । अनुनासिकलोपे जभावे च कृते अतो लोपः (6-4-48) अतो हेः (105) इति च प्राप्नोति । असिद्धत्वान्न भवति ।
उत्सर्गलक्षणभावार्थं च---एधि, शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति ।।
(अत्रग्रहणाक्षेपभाष्यम्)
अथ अत्र ग्रहणं किमर्थम् ?
(6521 अत्रग्रहणप्रयोजनवार्तिकम् ।। 2 ।।)
- अत्रग्रहणं विषयार्थम् -
विषयः प्रतिनिर्दिश्यते । अत्र---एतस्मिन्नाभाच्छास्त्रे आभाच्छास्त्रमसिद्धं यथा स्यात् । इह मा भूत्---अभाजि, रागः, उपबर्हणमिति ।।
(सूत्रप्रयोजनाक्षेपभाष्यम्)
कानि पुनरस्य योगस्य प्रयोजनानि ?
(6522 सूत्रप्रयोजनवार्तिकम् ।। 3 ।।)
- प्रयोजनं शैत्वं धित्वे -
शाभाव एत्वं च धित्वे प्रयोजनम् । एधि, शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति ।।
(प्रयोजनाक्षेपभाष्यम्)
शाभावस्तावन्न प्रयोजयति ।
एवं वक्ष्यामि--शास् हौ--शा हाविति । यत्वभूतः सकारः, तत्र सात् धित्वम्, धि च (8-2-25) इति सकारस्य लोपः ।
अथवा---आ हौ इति वक्ष्यामि ।
एवमपि सकारस्य प्राप्नोति ।
उपधाया इति वर्तते । तत्रोपधाया आत्वे कृते सात् धित्वम्, धि च इति सकारलोपः ।
अथवा न हौ इति वक्ष्यामि । तत्रेत्वे प्रतिषिद्धे सात् धित्वम्, धि च इति सकारलोपः ।।
एत्वमपि लोपापवादो विज्ञास्यते, न च सकारस्य लोपः प्राप्नोति ।।
(सूत्रप्रयोजनभाष्यम्)
करोतेर्हिलोप उत्वे प्रयोजनम् ।

कुर्वित्यत्र हिलोपे कृते सार्वधातुके परे उकार इति उत्वं न प्राप्नोति ।
असिद्धत्वाद्भवति ।।
(प्रयोजनाक्षेपभाष्यम्)
एतदपि नास्ति प्रयोजनम् । वक्ष्यति तत्र सार्वधातुकग्रहणस्य प्रयोजनम्---सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यादुत्वम् ।।
(6523 सूत्रप्रयोजनवार्तिकम् ।। 4 ।।)
- तास्तिलोपेण्यणादेशा अडाड्विधौ -
तलोप---अस्तिलोप---इणश्च यणादेशः---अडाड्विधौ प्रयोजनम् ।
अकारि, ऐहि--इति । तलोपे कृते लुङीति अडाटौ न प्राप्नुतः ।
अस्तिलोप---इणश्च यणादेशः प्रयोजनम् । आसन्, आयन्---इति । इणस्त्योर्यण्लोपयोरनजादित्वादाट् न प्राप्नोति ।
असिद्धत्वाद्भवति ।।
(प्रयोजनाक्षेपभाष्यम्)
अस्तिलोपस्तावन्न प्रयोजयति । आचार्यप्रवृत्तिर्ज्ञापयति---लोपादाट् बलीयानिति, यदयं श्नसोरल्लोपः (6-4-111) इति तपरकरणं करोति ।।
इण्यणादेशश्चापि न प्रयोजयति । यणादेशे योगविभागः करिष्यते---इणो यण् भवति । ततः---एरनेकाचः, एरनेकाच इणो यण् भवति । ततः---असंयोगपूर्वस्य असंयोगपूर्वस्य यण्भवति, एरनेकाच इत्येव ।।
(प्रकारान्तरेण प्रयोजनाक्षेपभाष्यम्)
सर्वेषामेव परिहारः---उपदेश इति वर्तते । तत्रोपदेशावस्थायामेवाडाटौ भवतः ।
अथवा---
आर्धधातुक इति वर्तते ।
अथवा---
लुङ्लङ्लृङ्क्ष्वडिति द्विलकारको निर्देशः । लुङादिषु लकारादिष्विति ।।
सर्वथा ऐज्यत---औप्यत इति न सिध्यति ।
वक्ष्यत्येतत्---।अजादीनामटा सिद्धम् इति ।।
(6524 सूत्रप्रयोजनवार्तिकम् ।। 5 ।।)
- अनुनासिकलोपो हिलोपाल्लोपयोर्ज्जभावश्च -
अनुनासिकलोपो हिलोपाल्लोपयोर्ज्जभावश्च प्रयोजनम् । आगहि, जहि । गतः, गतवानिति । अनुनासिकलोपे कृते जभावे च अतो हेः अतो लोपः इति च लोपः प्राप्नोति ।
असिद्धत्वान्न भवति ।।
(प्रयोजनाक्षेपभाष्यम्)
अनुनासिकलोपस्तावन्न प्रयोजयति । अल्लोपे उपदेशे इति वर्तते ।
यद्युपदेश इति वर्तते, धिनुतः---कृणुतः---अत्र न प्राप्नोति ।
नैष दोषः । नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते ।
किं तर्हि ?
आर्धधातुकमभिसंबध्यते । आर्धधातुकोपदेशे यदकारान्तमिति ।।
(प्रयोजनाक्षेपभाष्यम्)
जभावश्चापि न प्रयोजयति । हिलोपे योगविभागः करिष्यते---अतो हेः । ततः---उतश्च, हेर्लुग्भवतीति । ततः---प्रत्ययात् । प्रत्ययादित्युभयोः शेषः ।।
(वार्तिकरचनाक्षेपसमाधानभाष्यम्)
अथ किमर्थम् अनुनासिकलोपो हिलोपाल्लोपयोर्ज्जभावश्च इत्युच्यते, न अनुनासिकलोपजभावावल्लोपहिलोपयोः इत्येवोच्येत ?
संख्यातानुदेशो मा भूदिति । अनुनासिकलोपो हिलोपे प्रयोजयति---मण्डूकि ताभिरागहि, रोहिदश्च इहागहि, मरुद्भिरग्न आगहि ।।
(6525 सूत्रप्रयोजनवार्तिकम् ।। 6 ।।)
- संप्रसारणमवर्णलोपे प्रयोजनम् -
मघोनः पश्य, मघोना, मघोने । संप्रसारणे कृते यस्य--- इति लोपः प्राप्नोति ।
असिद्धत्वान्न भवति ।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्---मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति ।।
(6526 सूत्रप्रयोजनवार्तिकम् ।। 7 ।।)
- रेभाव आल्लोपे प्रयोजनम् -

किंस्विद् गर्भं प्रथमं दध्र आपः । रेभावे कृते आतो लोप इटि च (6-4-64) इत्याकारलोपो न प्राप्नोति ।
असिद्धत्वाद्भवति ।।
(प्रयोजनाक्षेपभाष्यम्)
एतदपि नास्ति प्रयोजनम् । छान्दसो रेभावः, लिट् च छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपित् (1-2-4) ङिद्भवति इति ङित्त्वम्, श्नाभ्यस्तयोरातः (6-4-112) इत्याकारलोपो भवति ।।
(अधिकारप्रयोजनाधिकरणम्)
(सूत्राभावे दोषोपक्रमभाष्यम्)
यदि तर्हि अयं योगो नास्ति---
(सूत्रासत्त्वे दोषप्रतिपादकं श्लोकवार्तिकम्)
उत्तु कृञ्‍ञः कथमोर्विनिवृत्तौ
इह---कुर्वः, कुर्मः, कुर्यात्---इति, उकारलोपे कृते सार्वधातुकपर उकार इति उत्वं न प्राप्नोति ।।
(सूत्रासत्वे दोषप्रतिपादकं श्लोकवार्तिकम्)
णेरपि चेटि कथं विनिवृत्तिः ।
इह च---कारयतेः कारिष्यते णेरनिटी (6-4-51) इति णिलोपो न प्राप्नोति ।।
(सूत्रासत्वे दोषप्रतिपादकं श्लोकवार्तिकम्)
अब्रुवतस्तव योगमिमं स्यात्
लुक् च चिणो नु कथं न तरस्य ।। 1 ।।
इह च---अकारितराम्---अहारितराम्--इति चिण उत्तरस्य तरस्य लुक् कथं न स्यात् ।।
(दोषवारकं श्लोकवार्तिकम्)
चं भगवान्तकृतवांस्तु तदर्थं
तेन भवेदिटि णेर्विनिवृत्तिः ।
इह---स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽञ्झनग्रहदृशां वा चिण्वदिट् च (6-4-62) ।
किञ्च ?
णिलोपश्च ।।
(दोषवारकं श्लोकवार्तिकम्)
म्वोरपि ये च तथाऽप्यनुवृत्तौ
इहापि---कुर्वः, कुर्मः, कुर्यात्---इति म्वोर्ये चेति, तदप्यनुवर्तिष्यते ।।
(दोषवारकं श्लोकवार्तिकम्)
चिण्लुकि च क्ङित एव हि लुक् स्यात् ।। 2 ।।
चिण्लुक्यपि प्रकृतं क्ङिद्ग्रहणमनुवर्तते ।
क्व प्रकृतम् ?
गमहनजनखनघसां लोपः क्ङित्यनङि (6-4-98) इति ।
तद्वै सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः । चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1-1-67) इति ।।
(संग्रहः)
उत्तु कृञ्‍ञः कथमोर्विनिवृत्तौ णेरपि चेटि कथं विनिवृत्तिः ।
अब्रुवतस्तव योगमिमं स्यात् लुक् च चिणो नु कथं न तरस्य ।। 1 ।।
चं भगवान् कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः ।
म्वोरपि ये च तथाऽप्यनुवृत्तौ चिण्लुकि च क्ङित एव हि लुक् स्यात् ।। 2 ।।
(6527 सूत्रारम्भे उपसंख्यानवार्तिकम् ।। 8 ।।)
- आरभ्यमाणेऽप्येतस्मिन्योगे सिद्धं वसुसंप्रसारणमज्विधौ -
आरभ्यमाणेऽप्येतस्मिन् योगे वसु संप्रसारणमज्विधौ सिद्धं वक्तव्यम् ।
किं प्रयोजनम् ?
पपुषः पश्य, तस्थुषः पश्य, निन्युषः पश्य, चिच्युषः पश्य, लुलुवुषः पश्य, पुपुवुषः पश्य---इति । वसोः संप्रसारणे कृते अचि इत्याकारलोपादीनि यथा स्युरिति ।।
किं पुनः कारणं न सिध्यन्ति ?
(6528 उपसंख्यानकारणवार्तिकम् ।। 9 ।।)
- बहिरङ्गलक्षणत्वादसिद्धत्वाच्च -
बहिरङ्गलक्षणं चैव हि वसुसंप्रसारणमसिद्धं च ।।
(6529 उपसंख्यानवार्तिकम् ।। 10 ।।)

- आत्वं यलोपाल्लोपयोः पशुषो न वाजान् चाखायिता चाखायितुम् -
आत्वं यलोपाल्लोपयोः सिद्धं वक्तव्यम् ।
किं प्रयोजनम् ?
पशुषो न वाजान् । पशुष इत्यात्वस्यासिद्धत्वात् आतो धातोः (6-4-140) इत्याकारलोपो न प्राप्नोति ।
चाखायिता---चाखायितुमिति आत्वस्यासिद्धत्वात् यस्य हलः (6-4-49) इति यलोपः प्राप्नोति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
समानाश्रयवचनात्सिद्धम् ।
समानाश्रयमसिद्धं भवति, व्याश्रयं चैतत् ।
इह तावत्---पपुषः पश्य, तस्थुषः पश्य, निन्युषः पश्य, चिच्युषः पश्य, युयुवुषः पश्य, लुलुवुषः पश्य---इति---वसावाकारलोपादीनि, वस्वन्तस्य विभक्तौ संप्रसारणम् ।
पशुष इति---विटि आत्वं, विडन्तस्य विभक्तावाकारलोपः ।
चाखायिता---चाखायितुमिति---यङ्यात्वम्, यङन्तस्य चार्धधातुके लोप इति ।।
किं वक्तव्यमेतत् ?
न हि ।
कथमनुच्यमानं गंस्यते ?
अत्र ग्रहणसार्मथ्यात् ।
ननु चान्यदत्रग्रहणस्य प्रयोजनमुक्तम् ।
किमुक्तम् ?
अत्र ग्रहणं विषयार्थमिति ।
अधिकारादप्येतत्सिद्धम्---इति ।।
(उपसंख्यानानर्थक्यसाधकभाष्यम्)
इह---पपुषः, चिच्युषः, लुलुवुषः, द्वौ हेतू उपदिष्टौ---बहिरङ्गलक्षणञ्चासिद्धत्वं चेति ।
तत्र भवेदसिद्धत्वं प्रयुक्तम्, बहिरङ्गलक्षणं तु नैव प्रत्युक्तम् ।
नैष दोषः । बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ ।
कथम् ?
सत्यन्तरङ्गे बहिरङ्गम्, सति च बहिरङ्गेऽन्तरङ्गम् । न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति । नानभिनिर्वृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति । तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य ।।
(6530 उपसंख्यानवार्तिकम् ।। 10 ।।)
- ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि सिद्धा वक्तव्याः -
प्रशमय्य गतः, प्रतमय्य गतः, प्रबेभिदय्य गतः, प्रचेच्छिदय्य गतः, प्रस्तनय्य गतः, प्रगदय्य गतः । ह्रस्वयलोपाल्लोपानामसिद्धत्वात् ल्यपि लघुपूर्वात् (6-4-56) इत्ययादेशो न प्राप्नोति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
अत्राप्येष परिहारः---समानाश्रयवचनात्सिद्धमिति ।
कथम् ?
णावेति विधयः, णेर्ल्यप्ययादेशः ।।
(6531 उपसंख्यानवार्तिकम् ।। 11 ।।)
- वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ -
बभूवतुः, बभूवुः । वुकोऽसिद्धत्वादुवङादेशः प्राप्नोति ।
उपदिदीये, उपदिदीयाते । युटोऽसिद्धत्वाद्यणादेशः प्राप्नोति ।।
(वुकः सिद्धत्वोपसंख्यानाक्षेपभाष्यम्)
वुकस्तावन्न वक्तव्यम् । वुकं न वक्ष्यामि । एवं वक्ष्यामि---भुवो लुङ्लिटोरूदुधायाः इति । अत्रोवङादेशे कृते या उपधा तस्याः स्यात् ।।
(प्रत्याक्षेप---समाधानभाष्यम्)
एवमपि कुतो नु खल्वेतत्---उवङादेशे कृते या उपधा तस्या ऊत्वं भविष्यति, न पुनः सांप्रतिकी योपधा तस्याः स्यात्---भकारस्येति ।
नैष दोषः । ओरिति वर्तते, तेनोवर्णस्य भविष्यति ।।
(पुनः प्रत्याक्षेप---समाधानभाष्यम्)
भवेत्सिद्धं---बभूवतुः, बभूवुः ।
इदं तु न सिद्ध्यति---बभूव, बभूविथेति ।
किं कारणम् ?
गुणवृद्ध्योः कृतयोरुवर्णाभावात् ।

नात्र गुणवृद्धी प्राप्नुतः ।
किं कारणम् ?
क्ङिति च (1-1-5) इति प्रतिषेधात् ।
कथं कित्त्वम् ?
इन्धिभवतिभ्यां च (1-2-6) इति ।
तद्वै कित्त्वं वयं प्रत्याचक्ष्महे वुका । इह तु कित्त्वेन वुक् प्रत्याख्यायते ।
किं पुनरत्र न्याय्यम् ?
वुग्वचनमेव न्याय्यम् । सति हि कित्त्वे स्यातामेवात्र गुणवृद्धी ।
किं कारणम् ?
इग्लक्षणयोर्गुणवृद्ध्योः स प्रतिषेधः, न चैषा इग्लक्षणा वृद्धिः ।
एवं तर्हि नार्थो वुका नापि कित्त्वेन । स्तामत्र गुणवृद्धी । गुणवृद्ध्योः कृतयोरवावोश्च कृतयोर्या उपधा तस्या ऊत्वं भविष्यति ।
कथम् ?
ओरित्यत्रावर्णमपि प्रतिनिर्दिश्यते ।
इहापि तर्हि प्राप्नोति---कीलालपः पश्य, शुभंयः पश्येति ।
लोपोऽत्र बाधको भविष्यति ।
इह तर्हि प्राप्नोति---कीलालपौ, कीलालपा इति ।
एवं तर्हि व्योरिति वर्तते, तेनोवर्णं विशेषयिष्यामः---व्योः-ओः-इरिति । इहेदानीमोरित्यनुवर्तते, व्योरिति निवृत्तम् ।।
(युटः सिद्धत्वोपसंख्यानाक्षेपभाष्यम्)
युटश्चापि न वक्तव्यम् । युड्वचनसार्मथ्यान्न भविष्यति ।
अस्त्यन्यत् युड्वचने प्रयोजनम् ।
किम् ?
द्वयोर्यकारयोः श्रवणं यथा स्यात् ।
न व्यञ्जनपरस्यानेकस्यैकस्य वा यकारस्य श्रवणं प्रति विशेषोऽस्ति ।।
(असिद्धत्वमर्यादाजिज्ञासाभाष्यम्)
किं पुनः प्राग्भादसिद्धम्, आहोस्वित्सह तेन ?
कुतः पुनरयं सन्देहः ?
आङाऽयं निर्देशः क्रियते, आङ् च पुनः सन्देहं जनयति । तद्यथा---आ पाटलिपुत्रात् वृष्टो देव इति सन्देहः---किं प्राक् पाटलिपुत्रात्---सह तेनेति ।
एवमिहापि सन्देहः---प्राग्भात्---सह तेनेति ।
कश्चात्र विशेषः ?
(6532 आङो मर्यादार्थकत्वे दोषवार्तिकम् ।। 12 ।।)
- प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् -
प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानं कर्तव्यम् ।
शुनः पश्य, शुना, शुने । संप्रसारणे कृते अल्लोपोऽनः (6-4-134) इति प्राप्नोति । यस्य पुनः सह तेनासिद्धत्वम्, असिद्धत्वात्तस्य न संयोगाद्वमन्तात् (137) इति प्रतिषेधो भविष्यति ।।
(दोषभाष्यम्)
यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः ।
कथम् ?
नास्त्यत्र विशेषः---अल्लोपेन निवृत्तौ सत्याम्, पूर्वत्वेन वा निवृत्तौ ।।
(प्रत्याक्षेपभाष्यम्)
अयमस्ति विशेषः---अल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः प्रसज्येत ।।
(प्रत्याक्षेपनिरासभाष्यम्)
नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति ।
किं कारणम् ?
न गोश्वन्साववर्ण--- (6-1-182) इति प्रतिषेधात् ।।
(निरासनिरसनभाष्यम्)
नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः ।
कस्य तर्हि ?
तृतीयादिस्वरस्य ।।
(प्रत्याक्षेपभाष्यम्)

यत्र तर्हि तृतीयादिस्वरो नास्ति---शुनः पश्येति ।।
(प्रत्याक्षेपनिरासभाष्यम्)
एवं तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः ।
किं तर्हि ?
येन केनचिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्यायं प्रतिषेधः ।।
(आक्षेपनिरासभाष्यम्)
यत्र तर्हि विभक्तिस्वरो नास्ति---बहुशुनीति ।।
(प्रत्याक्षेपभाष्यम्)
यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत ।
(प्रत्याक्षेपापोहभाष्यम्)
नैवं शक्यम् । इहापि प्रसज्येत---कुमारीति ।।
(आक्षेपभाष्यम्)
एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति---नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति, यदयं श्वन्शब्दं गौरादिषु पठति । अन्तोदात्तार्थं यत्नं करोति । सिद्धं हि स्यात् ङीपैव ।।
(दोषाक्षेपभाष्यम्)
मघोनः पश्य, मघोना, मघोने, संप्रसारणे कृते यस्य--- इति लोपः प्राप्नोति । यस्य पुनः सह तेनासिद्धत्वं, असिद्धत्वात्तस्य न भविष्यति ।।
यस्यापि हि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः ।
कथम् ?
वक्ष्यत्येतत्---मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति ।।
(दोषाक्षेपभाष्यम्)
भूगुणः---भूयान् । भूभावे कृते ओर्गुणः प्राप्नोति । यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न भविष्यति ।।
यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः ।
कथम् ?
दीर्घोच्चारणसार्मथ्यान्न भविष्यति ।
अस्त्यन्यद्दीर्घोच्चारणस्य प्रयोजनम् ।
किम् ?
भूमेति ।
निपातनादेतत्सिद्धम् ।
किं निपातनम् ? बहोर्नञ्वदुत्तरपदभूम्नि (6-2-175) इति ।।
(वार्तिकावतरणभाष्यम्)
अथ वा पुनरस्तु सह तेन---इति ।
(6533 आङोऽभिविध्यर्थत्वे दोषवार्तिकम् ।। 13 ।।)
- आ भादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधः -
आ भादिति चेद्वसुसम्प्रसारणयलोपप्रस्थादीनां प्रतिषेधो वक्तव्यः ।
पपुषः पश्य, तस्थुषः, निन्युषः, चिच्युषः, लुलुवुषः, युयुवुष इति । चसुसम्प्रसारणे कृते तस्यासिद्धत्वादचीत्याकारलोपादीनि न सिद्ध्यन्ति ।
नैष दोषः ।
उक्तमेतत्---समानाश्रयवचनात्सिद्धमिति ।
कथम् ?
वसावाकारलोपादीनि, वस्वन्तस्य विभक्तौ सम्प्रसारणम्---इति ।।
(दोषाक्षेपभाष्यम्)
यलोपः । सौरी बलाका । योऽसावण्यकारो लुप्यते तस्यासिद्धत्वात्---इर्तीति यलोपो न प्राप्नोति ।
अत्राप्येष परिहारः---समानाश्रयवचनात्सिद्धमिति ।
कथम् ?
अणि अकारलोपः, अणन्तस्य---इर्ति यलोपः ।।
प्रस्थादिषु । प्रेयान्, स्थेयान् । प्रस्थादीनामसिद्धत्वात् प्रकृत्यैकाच् (6-4-163) इति प्रकृतिभावो न प्राप्नोति ।।
नैष दोषः । यथैव प्रस्थादीनामसिद्धत्वात्प्रकृतिभावो न भवति, एवं टिलोपोऽपि न भविष्यति ।।
-6-4-23- श्नान्नलोपः (3021)
(लोपाधिकरणम्)
(शकारप्रयोजनभाष्यम्)

अथ किमर्थं श्नमः शकारस्य ग्रहणं क्रियते, न नान्नलोप इत्येवोच्येत ?
नान्नलोप इतीयत्युच्यमाने---नन्दिता, नन्दकः---इत्यत्रापि प्रसज्येत ।
एवं तर्हि एवं वक्ष्यामि---नान्नलोपोऽनिदिताम् । ततः---हल उपधायाः क्ङिति इति, अनिदितामिति ।
नैवं शक्यम् । इह हि न स्यात्---हिनस्ति ।।
तस्मान्नैवं शक्यम् ।
न चेदेवम्--नन्दिता--नन्दकः--इत्यत्रापि प्रसज्येत ।।
एवं तर्हि क्ङितीति वर्तते ।
एवमपि हिनस्ति---इत्यत्र न प्राप्नोति ।
नैषा परसप्तमी ।
का तर्हि ?
सत्सप्तमी---क्ङिति सति ।
एवमपि---नन्दमानः---इत्यत्रापि प्राप्नोति ।
एवं तर्हि नशब्द एवात्र क्ङित्त्वेन विशेष्यतेक्ङिच्चेन्नशब्दो भवतीति ।
एवमपि---यज्ञानां---यत्नानाम्---इत्यत्र प्राप्नोति ।
दीर्घत्वमत्र बाधकं भविष्यति ।
इदमिह सम्प्रधार्यं---दीर्घत्वं क्रियतां---नलोप इति, किमत्र कर्तव्यम् ?
परत्वान्नलोपः ।
तस्मात् शकारस्य ग्रहणं कर्तव्यम् ।।
(शकारग्रहणे दोषनिवारकभाष्यम्)
अथ क्रियमाणेऽपि शकारग्रहणे इह कस्मान्न भवति---विश्नानां---प्रश्नानाम्---इति ?
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ।।
-6-4-24- अनिदितां हल उपधायाः क्ङिति (3022)
(6534 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् -
अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्तव्यम् । विलगितः, विकपितः ।
उपतापशरीरविकारयोरिति किमर्थम् ?
विलङ्गितः । विकम्पितः ।।
(6535 उपसंख्यानवार्तिकम् ।। 2 ।।)
- बृंहेरच्यनिटि -
बृंहेरच्यनिटि उपसंख्यानं कर्तव्यम् । निबर्हकः ।
अचीति किमर्थम् ?
निबृंह्यते ।
अनिटीति किमर्थम् ?
निबृंहिता, निबृंहितुम् ।।
(उपसंख्यानाक्षेपभाष्यम्)
तत्तर्हि उपसंख्यानं कर्तव्यम् ?
न कर्तव्यम् । बृहिः प्रकृत्यन्तरम् ।
कथं विज्ञायते ?
अचीति लोप उच्यते, अनजादावपि दृश्यते---निबृह्यते ।
अनिटीत्युच्यते । इडादावपि दृश्यते---निबर्हिता, निबर्हितुम् ।
अजादावपि न दृश्यते---निबृंहयति, निबृंहकः ।।
(6536 उपसंख्यानवार्तिकम् ।। 3 ।।)
- रञ्जेर्णौ मृगरमणे -
रञ्जेर्णौ मृगरमणे उपसंख्यानं कर्तव्यम् । रजयति मृगान् ।
मृगरमण इति किमर्थम् ?
रञ्जयति वस्त्राणि ।।
(6537 उपसंख्यानवार्तिकम् ।। 4 ।।)
- घिनुणि च -
घिनुणि चोपसंख्यानं कर्तव्यम् । रागी ।।

(उपसंख्यानाक्षेपभाष्यम्)
घिनुणि निपातनात्सिद्धम् ।।
किं निपातनम् ?
त्यजरजेति ।।
(प्रत्याक्षेपभाष्यम्)
अशक्यं धातुनिर्देशे निपातनं तन्त्रमाश्रयितुम् । इह हि दोषः स्यात्---दशनहः करणे । दंष्ट्रा ।
(समाधानभाष्यम्)
नैतद्धातुनिपातनम् ।
किं तर्हि ?
प्रत्ययान्तस्यैतद्रूपम् । तस्मिंश्च प्रत्यये लोपो भवति दंशसञ्जस्वञ्जां शपि (6-4-25) इति ।।
(6538 उपसंख्यानवार्तिकम् ।। 5 ।।)
- रजकरजनरजः सूपसंख्यानम् -
रजकरजनरजः सूपंख्यानं कर्तव्यम् । रजकः, रजनम्, रज इति ।।
(उपसंख्यानाक्षेपभाष्यम्)
रजकरजनरजः सु कित्वात्सिद्धम् ।।
कित एवैते औणादिकाः । तद्यथा---रुचकः, भुवनम्, शिर इति ।।
-6-4-34- शास इदङ्हलोः (3032)
(6539 उपसंख्यानवार्तिकम् ।। 1 ।।)
- शास इत्त्वे आशासः क्वावुपसंख्यानम् -
शास इत्त्वे आशासः क्वावुपसंख्यानं कर्तव्यम् । आशीरिति ।।
(नियमार्थत्वोपपादकभाष्यम्)
किं पुनरिदं नियमार्थम्, आहोस्विद्विध्यर्थम् ?
कथं नियमार्थं स्यात्, कथं वा विध्यर्थम् ?
यदि तावच्छासिमात्रस्य ग्रहणम्, ततो नियमार्थम् ।
अथ हि यस्माच्छासेरङ्विहितस्तस्य ग्रहणम्, ततो विध्यर्थम् ।।
(नियमासम्भवदर्शकं भाष्यम्)
यद्यपि शासिमात्रग्रहणम्, एवमपि विध्यर्थमेव ।
कथम् ? ।
अङि हलादावुच्यते, न चात्र हलादिं पश्यामः ।
ननु च क्विबेव हलादिः ।
क्विपो लोपे कृते हलाद्यभावान्न प्राप्नोति ।
इदमिह सम्प्रधार्यम्---क्विलोपः क्रियताम्, अङ्हलोरित्त्वमिति ।
किमत्र कर्तव्यम् ?
परत्वादङ्हलोरित्त्वम् ।
नित्यः क्विलोपः, कृतेऽप्यङ्हलोरित्त्वे प्राप्नोत्यकृतेऽपि । नित्यत्वात् क्विपो लोपे कृते हलाद्यभावान्न प्राप्नोति ।
एवं तर्हि प्रत्ययलक्षणेन भविष्यति ।
वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।।
(नियामकत्वोपपादकभाष्यम्)
यदि वा कानि चिद्वर्णाश्रयाण्यपि लक्षणेन भवन्ति, तथा चेदमपि भविष्यति ।
अथवैवं वक्ष्यामि---
शास इदङ्हलोः ।
ततः---
क्वौ ।
क्वौ च शास इद्भवति । आर्यशीः, मित्रशीः ।
ततः--
आङः ।
आङ्पूर्वाच्च क्वौ शास इद्भवति । आशीरिति ।
इदमिदानीं किमर्थम् ?
नियमार्थम् । आङ्पूर्वाच्छासेः क्वावेव ।

क्व मा भूत् ?
आशास्ते, आशास्यते, आशास्यमाने---इति ।
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् । अविशेषेण शास इद्भवतीत्युक्त्वा ततोऽङीति वक्ष्यामि । तन्नियमार्थं भविष्यति---अङ्येवाजादौ, नान्यस्मिन्नजादौ ।।
(अनिष्टाक्षेपभाष्यम्)
इहापि तर्हि नियमादित्वं प्राप्नोति---आशास्ते, आशास्यते, आशास्यमान इति ।।
(समाधानभाष्यम्)
यस्माच्छासेरङ्विहितस्तस्य ग्रहणम्, न चैतस्माच्छासेरङ्विहितः ।
कथमाशीरिति ?
निपातनात्सिद्धम् ।
किं निपातनम् ?
क्षियाशीः प्रैषेषु तिङाकाङ्क्षम् (8-2-104) इति ।।
-6-4-37- अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति (3035)
(6540 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च -
अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि चेति वक्तव्यम् । प्रमत्य । प्रतत्य ।।
(6541 उपसंख्यानवार्तिकम् ।। 2 ।।)
- वाऽमः -
वाऽम इति वक्तव्यम् । प्रयत्य, प्रयम्य । प्ररत्य, प्ररम्य । प्रणत्य, प्रणम्य ।।
-6-4-40- गमः क्वौ (3038)
(उपसंख्यानभाष्यम्)
गमादीनामिति वक्तव्यम् । इहापि यथा स्यात्--- परीतत्सह कण्डिका । संयत्, सुनदिति ।।
(6542 उपसंख्यानवार्तिकम् ।। 1 ।।)
- ऊङ् च -
ऊङ् च गमादीनामिति वक्तव्यम् । अग्रेगूः, अग्रेभ्रूः ।।
-6-4-42- जनसनखनां सञ्झलोः (3040)
(सञ्झलोरन्वयाक्षेपभाष्यम्)
अथ किमयं समुच्चयः---सनि च झलादौ चेति, आहोस्वित् सन्विशेषणं झल्ग्रहणं---सनि झलादाविति ?
किं चातः ?
(समुच्चये दोषभाष्यम्)
यदि समुच्चयः, सन्यझलादावपि प्राप्नोति । सिसनिषति, जिजनिषते, चिखनिषति ।
(विशेषणपक्षे दोषभाष्यम्)
अथ सन्विशेषणं झल्ग्रहणम्, जातः---जातवानित्यत्र न प्राप्नोति ।
यथेच्छसि तथाऽस्तु ।।
(समुच्चये दोषनिवारकभाष्यम्)
अस्तु तावत्समुच्चयः ।
ननु चोक्तं---सन्यझलादावपि प्राप्नोति ।
नैष दोषः । प्रकृतं झल्ग्रहणमनुवर्तते, तेन सनं विशेषयिष्यामः---सनि झलादाविति ।
(विशेषणपक्षे दोषनिवारकभाष्यम्)
अथ वा पुनरस्तु सन्विशेषणम् ।
कथं जातः---जातवानिति ?
प्रकृतं झलि क्ङितीत्यनुवर्तते ।।
(झल्ग्रहणप्रत्याख्यानभाष्यम्)
यद्येवं नार्थो झल्ग्रहणेन । योगविभागः करिष्यते---
जनसनखनाम् ।
अनुनासिकस्याकारो भवति झलि क्ङिति ।
ततः---
सनि च ।

सनि च जनसनखनामनुनासिकस्याकारो भवति, झलीत्येव ।
तस्मान्नार्थो झल्ग्रहणेन ।।
(6543 विप्रतिषेधवार्तिकम् ।। 1 ।।)
- सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेन -
सनोतेरनुनासिकलोपादात्वं भवति विप्रतिषेधेन ।
सनोतेरनुनासिकलोपस्यावकाशः---अन्ये तनोत्यादयः ।
आत्वस्यावकाशः---अन्ये जनादयः ।
सनोतेरनुनासिकस्योभयं प्राप्नोति---सातः, सातवान्---इति ।
आत्वं भवति विप्रतिषेधेन ।।
(विप्रतिषेधाक्षेपभाष्यम्)
नैष युक्तो विप्रतिषेधः । न हि सनोतेरनुनासिकलोपस्यान्ये तनोत्यादयोऽवकाशः । सनोतेर्यस्तनोत्यादिषु पाठः सोऽनवकाशः ।
न खल्वप्यात्वस्यान्ये जनादयोऽवकाशः । सनोतेर्यदात्वे ग्रहणं तदनवकाशम्, तस्यानवकाशत्वादयुक्तो विप्रतिषेधः ।।
(सकाराकारयोर्विप्रतिषेधोपपादनभाष्यम्)
एवं तर्हि तनोत्यादिषु पाठस्तावत्सावकाशः। कोऽवकाशः।
अन्यानि तनोत्यादिकार्याणि---तनादिभ्यस्तथासोः (2-4-79) इति ।
आत्वेऽपि ग्रहणं सावकाशम् ।
कोऽवकाशः ?
सनि च । ये विभाषा (6-4-43) च । उभयोः सावकाशयोर्युक्तो विप्रतिषेधः ।।
(विप्रतिषेधाक्षेपभाष्यम्)
एवमप्ययुक्तो विप्रतिषेधः । पठिष्यति ह्याचार्यः---।पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य इति । एकस्य हि नामाभावे विप्रतिषेधो न स्यात्, किं पुनर्यत्रोभयं नास्ति ।।
(ज्ञापकेन विप्रतिषेधस्थापनभाष्यम्)
नैष दोषः । भवतीह विप्रतिषेधः ।
किं वक्तव्यमेतत् ?
न हि ।
कथमनुच्यमानं गंस्यते ?
आचार्यप्रवृत्तिर्ज्ञापयति---भवतीह विप्रतिषेध इति, यदयं घुमास्थागापाजहातिसां हलि (6-4-66) इति हल्ग्रहणं करोति ।
कथं कृत्वा ज्ञापकम् ?
हल्ग्रहणस्यैतत्प्रयोजनं---हलादावीत्वं यथा स्यात्, इह मा भूत्---गोदः---कम्बलद इति । यदि चात्र विप्रतिषेधो न स्यादिह हल्ग्रहणमनर्थकं स्यात् ।
अस्त्वत्र इत्वम् । इत्वस्यासिद्धत्वाल्लोपो भविष्यति । पश्यति त्वाचार्यः---भवतीह विप्रतिषेधः, ततो हल्ग्रहणं करोति ।।
(इत्वस्य व्यवस्थार्थत्वबोधनेन ज्ञापकनिराकरणभाष्यम्)
नैतदस्ति ज्ञापकम्, व्यवस्थार्थमेतत्स्यात्---हलादावीत्वं यथा स्यादजातौ मा भूदिति ।
किञ्च स्यात् ?
यद्यजादावपीत्वं स्यात्, इयङादेशः प्रसज्येत ।।
(व्यवस्थार्थत्वाक्षेपभाष्यम्)
ननु चासिद्धत्वादेवेयङादेशो न भविष्यति ।।
(व्यवस्थार्थत्वसाधकभाष्यम्)
न शक्यमीत्वमियङादेशेऽसिद्धं विज्ञातुम् । इह हि दोषः स्यात्---धियौ, धियः । पियौ, पिय इति ।।
(व्यवस्थार्थत्वाक्षेपभाष्यम्)
नैतदीत्वम् ।
किं तर्हि ?
ध्याप्योः सम्प्रसारणमेतत् ।।
समानाश्रयं खल्वसिद्धं भवति, व्याश्रयं चैतत् ।
कथम् ?
क्वावीत्वम्, क्विबन्तस्य विभक्तावियङादेशः ।।
(व्यवस्थावाचित्वस्थापनभाष्यम्)
व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्तव्यम् ।
कुतो ह्येतत्---इत्वस्यासिद्धत्वाल्लोपः स्यात्, न पुनर्लोपस्यासिद्धत्वादीत्वमिति । तत्र चक्रकमव्यवस्था प्रसज्येत ।।

(ज्ञापकत्वपक्षोपपादकभाष्यम्)
नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो नाम व्यवस्था । तत्र इर्त्वस्यासिद्धत्वाल्लोपः, लोपेनावस्थानं भविष्यति । न खल्वपि तस्मिंस्तदेवासिद्धं भवति ।।
(ज्ञापकत्वाक्षेपभाष्यम्)
व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्तव्यम् । हलादावीत्वं यथा स्यात्, अजादौ मा भूदिति ।
कुतो ह्येतत्-- इर्त्वस्यासिद्धत्वाल्लोपः, लोपेनावस्थानं भविष्यति । न पुनर्लोपस्यासिद्धत्वादीत्वमीत्वेन व्यवस्थानं स्यात् ?
तदेव खल्वपि तस्मिन्नसिद्धं भवति ।
कथम् ?
पठिष्यति ह्याचार्यः---।चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात्, तलोपस्य चासिद्धत्वात् इति ।
चिणो लुक् चिणो लुक्येवासिद्धो भवति ।।
(ज्ञापकत्वसाधकभाष्यम्)
एवं तर्हि---यदि व्यवस्थार्थमेतत्स्यात् नैवायं हल्ग्रहणं कुर्वीत । अविशेषेणायमीत्वमुक्त्वा तस्याजादावाल्लोपमपवादं विदधीत ।
तदेतत्कथम् ?
इदमस्ति---आतो लोप इटि च इति ।
ततः---घुमास्थागापाजहातिसां । लोपो भवति इटि च अजादौ क्ङितीति ।
किमर्थं पुनरिदम् ?
इर्त्वं वक्ष्यति तद्बाधनार्थम् ।
ततः---इर्त् । इर्च्च भवति घ्वादीनाम् । ततः--- एर्लिङि । वान्यस्य संयोगादेः । न ल्यपि । मयतेरिदन्यतरस्याम् । ततः---यति । यति च इर्द्भवति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्धल्ग्रहणं करोति---गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः---भवतीह विप्रतिषेध इति ।।
-6-4-45- सनः क्तिचि लोपश्चास्यान्यतरस्याम् (3043)
(अन्यतरस्यांग्रहणप्रत्याख्यानभाष्यम्)
इहान्यतरस्यां ग्रहणं शक्यमकर्तुम् ।
कथम् ?
सनः क्तिचि लोपश्च आत्वं च विभाषेति ।।
(लोपपदस्यापि प्रत्याख्यानभाष्यम्)
अपर आह---सर्व एवायं योगः शक्योऽवक्तुम् ।
कथम् ?
इह लोपोऽपि प्रकृतः, आत्वमपि प्रकृतम्, विभाषाग्रहणमपि प्रकृतम् । तत्र केवलमभिसम्बन्धमात्रं कर्तव्यम्---सनः क्तिचि लोपश्च आत्वं च विभाषा ।।
-6-4-46- आर्धधातुके (3044)
(अधिकारप्रयोजनाधिकरणम्)
(अधिकाराक्षेपभाष्यम्)
कानि पुनरार्धधातुकाधिकारस्य प्रयोजनानि ?
(अधिकारप्रयोजने श्लोकवार्तिकम्)
अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।
आल्लोप इर्त्वमेत्वं च चिण्वद्भावश्च सीयुटि ।। 1 ।।
अतो लोपः---चिकीर्षिता, चिकीर्षितुम् ।
आर्द्धधातुक इति किमर्थम् ?
चिकीर्षति ।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम् । अस्त्वत्र सनोऽकारलोपः, शपोऽकारस्य श्रवणं भविष्यति ।।
(समाधानभाष्यम्)
शप एव तर्हि मा भूदिति ।।
(आक्षेपभाष्यम्)
एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति---नानेन शपोऽकारस्य लोपो भवतीति, यदयमदिप्रभृतिभ्यः शपो लुकं शास्ति ।।
(ज्ञापकाक्षेपभाष्यम्)
नैतदस्ति ज्ञापकम् । कार्यार्थमेतत्स्यात् । वित्तः, मृष्ट इति ।।
(प्रकारान्तरेण समाधानभाष्यम्)

यत्तर्हि आकारान्तेभ्यो लुकं शास्ति---याति, वाति ।
अस्तेश्च । अस्तेश्च शपो लुकं शास्ति । अस्ति ।।
(अधिकारप्रयोजनभाष्यम्)
इदं तर्हि प्रयोजनम्---वृक्षस्य । अतो लोपः प्राप्नोति ।।
(अधिकारप्रयोजनभाष्यम्)
यलोपोऽपि प्रयोजनम्---बेभिदिता, चेछिदिता ।
आर्धधातुक इति किमर्थम् ?
बेभिद्यते । चेछिद्यते ।।
(अधिकारप्रयोजनभाष्यम्)
णिलोपः प्रयोजनम्---याज्यते, पाच्यते ।
आर्धधातुक इति किमर्थम् ?
पाचयति, याजयति ।।
(अधिकारप्रयोजनभाष्यम्)
आल्लोपः---ययतुः, ययुः ववतुः, ववुः ।
आर्धधातुक इति किमर्थम् ?
यान्ति, वान्ति ।।
(अधिकारप्रयोजनभाष्यम्)
इत्वम्---धीयते, दीयते ।
आर्धधातुक इति किमर्थम् ?
अदाताम् । अधाताम् ।।
(अधिकारप्रयोजनभाष्यम्)
एत्वम्---ग्लेयात्, म्लेयात् ।
आर्धधातुक इति किमर्थम् ?
स्नायात् । स्नायाताम् ।।
(अधिकारप्रयोजनभाष्यम्)
चिण्वद्भावश्च सीयुटि ।
चिण्वद्भावे सीयुटि किमुदाहरणम् ?
कारिषीष्ट, हारिषीष्ट ।
आर्धधातुक इति किमर्थम् ?
क्रियेत, ह्रियेत ।
नैतदुदाहरणम् । यका व्यवहितत्वान्न भविष्यति ।
इदं तर्ह्युदाहरणम्---प्रस्तुवीत ।
इदं चाप्युदाहरणम्---क्रियेत, ह्रियेत ।
ननु चोक्तं---यका व्यवहितत्वान्न भविष्यतीति ।
यक एव तर्हि मा भूदिति ।
किञ्च स्यात् ?
वृद्धिः, वृद्धौ कृतायां युक् प्रसज्येत ।।
-6-4-47- भ्रस्जो रोपधयोरमन्यतरस्याम् (3045)
(रमागमाधिकरणम्)
(रमागमस्थाननिर्धारणभाष्यम्)
अयं रम् रेफस्य स्थाने कस्मान्न भवति ?
मिदचोन्त्यात्परः (1-1-47) इत्यनेनाचामन्त्यात्परः क्रियते ।
रेफस्य तर्हि श्रवणं कस्मान्न भवति ?
षष्ठ्युच्चारणसार्मथ्यात् ।
भारद्वाजीयाः पठन्ति---
भ्रस्जो रोपधयोर्लोप आगमो रम् विधीयते । इति ।।
(6544 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- भ्रस्जादेशात्सम्प्रसारणं विप्रतिषेधेन -
भ्रस्जादेशात्सम्प्रसारणं विप्रतिषेधेन भवति ।

भ्रस्जादेशस्यावकाशः---भ्रष्टा, भ्रष्टुम् ।
सम्प्रसारणस्यावकाशः---भृज्जति ।
इहोभयं प्राप्नोति---भृष्टः, भृष्टवानिति ।
सम्प्रसारणं भवति विप्रतिषेधेन ।।
(विप्रतिषेधाक्षेपे वार्तिकावतरणभाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।
न वक्तव्यः ।
(6545 विप्रतिषेधाभावोपपादकवार्तिकम् ।। 2 ।।)
- रसोर्वर्वचनात्सिद्धम् -
रसोर्वा ऋ भवतीति वक्ष्यामि ।।
(न्यासान्तरेऽपि विप्रतिषेधावश्यकत्वप्रतिपादकभाष्यम्)
रसोर्वर्वचने सिचि वृद्धेर्भ्रस्जादेशो वक्तव्यः । वृद्धौ कृतायामिदमेव रूपं स्यात्---अभ्राक्षीत् । इदं न स्यात्---अभार्क्षीत्---इति ।
सर्वथा वयं पूर्वविप्रतिषेधान्न मुच्यामहे । सूत्रं च भिद्यते ।।
(विप्रतिषेधप्रत्याख्यानभाष्यम्)
यथान्यासमेवास्तु ।
ननु चोक्तं---।भ्रस्जादेशात्सम्प्रसारणं पूर्वविप्रतिषेधेन इति ।
इदमिह सम्प्रधार्यम्---भ्रस्जादेशः क्रियतां सम्प्रसारणमिति, किमत्र कर्तव्यम्?
एरत्वात् भ्रस्जादेशः । नित्यत्वात्सम्प्रसारणम्, कृतेऽपि भ्रस्जादेशे प्राप्नोत्यकृतेऽपि ।
भ्रस्जादेशोऽपि नित्यः । कृते सम्प्रसारणे प्राप्नोति, अकृतेऽपि प्राप्नोति ।
कथम् ?
यो सावृकारे रेफस्तस्य चोपधायाश्च कृतेऽपि प्राप्नोति ।।
अनित्यो भ्रस्जादेशः । न हि कृते सम्प्रसारणे प्राप्नोति ।
किं कारणम् ?
न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।
अथापि कथंचिद्गृह्यन्ते, एवमप्यनित्यः ।
कथम् ?
उपदेश इति वर्तते । तच्चावश्यमुपदेशग्रहणमनुर्वत्यम्---बरीभृज्यत इत्येवमर्थम् ।।
-6-4-48- अतो लोपः(3046)
(लोपाधिकरणम्)
(6546 विप्रतिषेधवार्तिकम् ।। 1 ।।)
- ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् -
ण्यल्लोपावियङ्यण्वृद्धिगुणदीर्घत्वेभ्यो भवतो विप्रतिषेधेन ।।
(णिलोपेयङादेशयोर्विप्रतिषेधप्रयोजनभाष्यम्)
णिलोपस्यावकाशः---कार्यते, हार्यते ।
इयङादेशस्यावकाशः---श्रियौ, श्रियः ।
इहोभयं प्राप्नोति---आटिटत्, आशिशत् ।।
ननु चात्र यणादेशेन भवितव्यम् ।
इदं तर्हि---अततक्षत्, अररक्षत् ।।
(णिलोपयणोर्विप्रतिषेधप्रयोजनभाष्यम्)
यणादेशस्यावकाशः---निन्यतुः, निन्युः ।
णिलोपस्य स एव ।
इहोभयं प्राप्नोति---आटिटत्, आशिशत् ।।
(णिलोपवृद्ध्योर्विप्रतिषेधप्रयोजनभाष्यम्)
वृद्धेरवकाशः---सखायौः, सखायः ।
णिलोपस्यावकाशः स एव ।
इहोभयं प्राप्नोति---कारयतेः---कारकः, हारयतेः---हारकः ।।
(णिलोपगुणयोर्विप्रतिषेधप्रयोजनभाष्यम्)
गुणस्यावकाशः--चेता, स्तोता ।
णिलोपस्यावकाशः---आटिटत्, आशिशत् ।

इहोभयं प्राप्नोति---कारणा, हारणा ।।
(णिलोपदीर्घयोर्विप्रतिषेधप्रयोजनभाष्यम्)
दीर्घत्वस्यावकाशः--चीयते, स्तूयते ।
णिलोपस्य स एव ।
इहोभयं प्राप्नोति---कार्यते, हार्यते ।
णिलोपो भवति विप्रतिषेधेन ।।
(णिलोपे पूर्वविप्रतिषेधाक्षेपभाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।
न वक्तव्यः । सन्त्वत्रैते विधयः । एतेषु विधिषु कृतेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यति ।।
(समाधानभाष्यम्)
नैवं शक्यम् । इयङादेशे हि दोषः स्यात् ।
किम् ?
अन्त्यलोपः प्रसज्येत ।।
(पूर्वविप्रतिषेधेऽल्लोपेयङ्यणुदाहरणाभावभाष्यम्)
अल्लोपस्येयङ्यणोश्च नास्ति सम्प्रधारणा ।।
(अल्लोपवृद्ध्योर्विप्रतिषेधप्रयोजनभाष्यम्)
वृद्धेरवकाशः--प्रियमाचष्टे प्रापयति ।
अल्लोपस्यावकाशः---चिकीर्षिता, चिकीर्षितुम् ।
इहोभयं प्राप्नोति---चिकीर्षकः, जिहीर्षकः ।।
गुणस्याल्लोपस्य च नास्ति सम्प्रधारणा ।।
(अल्लोपदीर्घत्वयोर्विप्रतिषेधप्रयोजनभाष्यम्)
दीर्घत्वस्यावकाशः---अपि काकः श्येनायते ।
अल्लोपस्य स एव ।
इहोभयं प्राप्नोति---चिकीर्ष्यते, जिहीर्ष्यते ।
अल्लोपो भवति विप्रतिषेधेन ।।
(विप्रतिषेधान्यथासिद्धिसाधकभाष्यम्)
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।
न वक्तव्यः । इष्टवाची परशब्दः । विप्रतिषेधे परं---यदिष्टं तद्भवति---इति ।।
-6-4-49- यस्य हलः (3047)
(वार्तिकावतरणे पक्षद्वयोपस्थापकं भाष्यम्)
किमिदं यलोपे वर्णग्रहणमाहो स्वित्सङ्घातग्रहणम् ?
कश्चात्र विशेषः ?
(6547 वर्णग्रहणे दोषवार्तिकम् ।। 1 ।।)
- यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः -
यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः । शुच्यिता । मव्यिता ।।
(संघातग्रहणोपस्थापकभाष्यम्)
अस्तु तर्हि सङ्घातग्रहणम् । यदि सङ्घातग्रहणम्, अन्त्यस्य लोपः प्राप्नोति ।
सिद्धोऽन्त्यस्य पूर्वेणैव । तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति ।।
(आक्षेपभाष्यम्)
एवमपि तेनातिप्रसक्तमिति कृत्वा नियमो विज्ञास्यते --- यस्य हल एव, नान्यतः ।
क्व मा भूत् ?
लोलूयिता, योयूयिता ।
कैमर्थक्यान्नियमो भवति ?
विधेयं नास्तीति कृत्वा ।।
इह चास्ति विधेयम् ।
किम् ?
अन्त्यस्य लोपः प्राप्तः, सर्वस्य विधेयः ।।
(समाधानभाष्यम्)
तत्रापूर्वो विधिरस्तु नियमो वा---इति

अपूर्व एव विधिर्भविष्यति ।
एवमप्यन्त्यस्य लोपः प्राप्नोति ।
किं कारणम् ?
न हि लोपः सर्वापहारी ।
ननु च सङ्घातग्रहणसार्मथ्यात्सर्वस्य भविष्यति ।।
(6548 संघातग्रहणे दोषवार्तिकम् ।। 2 ।।)
- सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषः -
सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषो भवति । समिधिता । समिध्यिता । यदा लोपस्तदा सर्वस्य लोपः । यदाऽलोपस्तदा सर्वस्यालोपः प्राप्नोति ।।
(संघातग्रहणे दोषनिवारकं भाष्यवार्तिकम्)
आदेः परवचनात्सिद्धम् ।।
हल इति पञ्चमी तस्मादित्युत्तरस्य आदेः परस्य (1-1-67,54) इति यकारस्यैव भविष्यति ।।
(वर्णग्रहणेऽपि दोषनिवारकभाष्यम्)
अथ वा पुनरस्तु वर्णग्रहणम् ।
ननु चोक्तं । यलोपे वर्णग्रहणं चेत् धात्वन्तस्य प्रतिषेधः इति ।
नैष दोषः । अङ्गादिति हि वर्तते ।
न वै अङ्गादिति पञ्चम्यस्ति ।
एवं तर्ह्यङ्गस्येति सम्बन्धषष्ठी विज्ञास्यते । अङ्गस्य यो यकारः ।
किञ्चाङ्गस्य यकारः ?
यस्मिन्नङ्गमित्येतद्भवति ।
कस्मिंश्चैतद्भवति ?
प्रत्यये ।।
-6-4-51- णेरनिटि (3049)
(अनिटिग्रहणप्रत्याख्यानभाष्यम्)
अनिटीति किमर्थम् ?
कारयिता । कारयितुम् ।
अनिटीति शक्यमवक्तुम् ।
कस्मान्न भवति---कारयिता, कारयितुम् ?
निष्ठायां सेटि (6-4-52) इत्येतन्नियमार्थं भविष्यति---निष्ठायामेव सेटि णेर्लोपो भवति नान्यत्रेति ।
क्व मा भूत् ?
कारयिता, कारयितुम् ।
अथवा--उपरिष्टाद्योगविभागः करिष्यते---इदमस्ति निष्ठायां सेटि जनिता मन्त्रे शमिता यज्ञे । ततः--- अय् । अयादेशो भवति णेः सेटि । ततः---आमन्ताल्वाय्येत्न्विष्णुषु । अय् भवतीत्येव ।।
-6-4-52- निष्ठायां सेटि (3050)
(पदकृत्यभाष्यम्)
अथ सेड्ग्रहणं किमर्थम् ?
निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम् । निष्ठायां सेड्ग्रहणं क्रियते अनिटि प्रतिषेधो यथा स्यादिति । संज्ञपितः पशुरिति ।।
(6549 सेड्ग्रहणानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धम् -
निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेदन्तरेणापि सेड्ग्रहणं तत्सिद्धम् ।
कथम् ?
अनिडभावात् ।।
(अनिडभावाक्षेपे वार्तिकावतरणभाष्यम्)
ननु च यस्य विभाषा (7-2-15) इति ज्ञपेरिट्प्रतिषेधः ।।
(6550 अनिडभावसाधकवार्तिकम् ।। 2 ।।)
- एकाचो हि प्रतिषेधः -
एकाचो हि स प्रतिषेधः । ज्ञपिश्चानेकाच्
(6551 सेट्ग्रहणप्रयोजनवार्तिकम् ।। 3 ।।)
- इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य -

इड्भावार्थं तर्हि सेड्ग्रहणं क्रियते । कथं पुनः सेटीत्यनेन नेट् शक्यो भावयितुम् ?
तन्निमित्तत्वाल्लोपस्य । नात्राकृते इटि णिलोपेन भवितव्यम् ।
किं कारणम् ?
सेटीत्युच्यते ।।
(6552 सेट्ग्रहणाभावे दोषवार्तिकम् ।। 4 ।।)
- अवचने हि णिलोप इट्प्रतिषेधप्रसङ्गः -
अक्रियमाणे हि सेड्ग्रहणे णिलोपे कृते एकाचः इतीट्प्रतिषेधः प्रसज्येत । कारितम्, हारितम् ।।
(योगविभागेन सूत्रप्रत्याख्यानभाष्यम्)
एवं तर्हि नार्थः सेड्ग्रहणेन, नापि सूत्रेण ।
कथम् ?
सप्तमे योगविभागः करिष्यते । इदमस्ति----निष्ठायाम् (7-2-14), नेट् भवति ।
ततः---णेः । ण्यन्तस्य निष्ठायां नेट् भवति ।
कारितम् । हारितम् ।
ततः---वृत्तम् । वृत्तमिति च निपात्यते ।
(किं निपात्यते ?
णेर्निष्ठायां लोपो निपात्यते ।)
किं प्रयोजनम् ?
नियमार्थम् । अत्रैव निष्ठायां णेर्लोपो भवति नान्यत्र ।
क्व मा भूत् ?
कारितम् । हारितम् ।
इहापि तर्हि प्राप्नोति --- वर्तितम् अन्नम्, वर्तिता भिक्षा ।
ततः---अध्ययने । अध्ययने चेत् वृतिर्वर्तते इति ।।
(6553 उपसंख्यानवार्तिकम् ।। 5 ।।)
- वृधिरमिशृधीनामुपसंख्यानं सार्वधातुकत्वात् -
वृधिरमिशृधीनामुपसंख्यानं कर्तव्यम् ।
किं कारणम् ?
सार्वधातुकत्वात् । वर्धन्तु त्वा सुष्टुतयो गिरो मे, वर्धयन्तु इत्येवं प्राप्ते । बृहस्पतिष्ट्वा सुम्ने रम्णातु, रमयतु इत्येवं प्राप्ते । अग्ने शर्द्ध महते सौभगाय, शर्द्धयेति प्राप्ते ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि वक्तव्यम् । न वक्तव्यम् । वृधिरमिशृधीनामार्धधातुकत्वात्सिद्धम् ।
कथमार्धधातुकत्वम् ?
अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ।।
-6-4-55- अयामन्ताल्वाय्येत्न्विष्णुषु (3053)
(णेरयादेशाधिकरणम्)
(पक्षद्वयोपस्थापकभाष्यम्)
किं पुनरयं क्त्नुः, आहो स्विदित्नुः ?
कश्चात्र विशेषः ?
(6554 प्रथमपक्षे दोषवार्तिकम् ।। 1 ।।)
- क्त्नाविटि णेर्गुणवचनम् -
क्त्नौ सति इटि णेर्गुणो वक्तव्यः । गदयित्नुः । स्तनयित्नुः ।।
अस्तु तर्हि इत्नुः ।।
(6555 द्वितीयपक्षे दोषवार्तिकम् ।। 2 ।।)
- इत्नौ प्रत्ययान्तरकरणम् -
यदि हि इत्नुः, प्रत्ययान्तरं कर्तव्यम् ।। अयादेशे चोपसंख्यानं कर्तव्यम् ।।
(दोषद्वयनिराकरणभाष्यम्)
उभयं क्रियते न्यासे एव ।।
-6-4-56- ल्यपि लघुपूर्वात् (3054)
(6556 षष्ठ्यन्तन्यासे दोषवार्तिकम् ।। 1 ।।)
- ल्यपि लघुपूर्वस्येति चेत् व्यञ्जनान्तेषूपसंख्यानम् -

ल्यपि लघुपूर्वस्येति चेत् व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम् । प्रशमय्य गतः । प्रतमय्य गतः ।।
(षष्ठ्यन्तन्यासे द्वितीयदोषदर्शकभाष्यम्)
अल्लोपे च गुरुपूर्वात्प्रतिषेधो वक्तव्यः । प्रतिचिकीर्ष्य गतः ।।
(6557 पञ्चम्यन्तन्यासस्थापकवार्तिकम् ।। 2 ।।)
- ल्यपि लघुपूर्वादिति वचनात् सिद्धम् -
ल्यपि लघुपूर्वादिति वक्तव्यम् ।।
(दोषोपस्थापकभाष्यम्)
एवमपि ह्रस्वयल्लोपाल्लोपानामसिद्धत्वात् ल्यपि लघुपूर्वात् इत्ययादेशो न प्राप्नोति । प्रशमय्य गतः । प्रतमय्य गतः । प्रचेछिदय्य गतः । प्रबेभिदय्य गतः । प्रगदय्य गतः । प्रस्तनय्य गतः ।।
(6558 दोषवारकवार्तिकम् ।। 3 ।।)
- ह्रस्वादिषु चोक्तम् -
किमुक्तम् ? ।समानाश्रयवचनात्सिद्धम् इति ।।
कथम् ?
णावेते विधयः, णेर्ल्यप्ययादेशः ।।
-6-4-57- विभाषाऽऽपः (3055)
(अतिव्याप्तिवारकभाष्यम्)
इङादेशस्य प्रतिषेधो वक्तव्यः । अध्याप्य गतः ।।
(6559 अतिव्याप्तिवारणसाधकवार्तिकम् ।। 1 ।।)
- आपः सानुबन्धकस्य निर्देशादिङि सिद्धम् -
आपः सानुबन्धकनिर्देशः करिष्यतेआप्लृ इति । तेन इङादेशस्य न भविष्यति ।।
(लक्षणप्रतिपदोक्तपरिभाषया दोषनिवारकभाष्यम्)
(स तर्हि सानुबन्धकस्य निर्देशः कर्तव्यः ।
न कर्तव्यः । कथमध्याप्य गतः ?)
अथवा---लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ।।
-6-4-62- स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च (3060)
(भावकर्मणोर्विषये पक्षद्वयोपस्थापकं भाष्यम्)
(चिण्वद्भावाधिकरणम्)
कथमिदं विज्ञायते भावकर्मणोर्ये स्यादय इति, आहोस्विद्भावकर्मवाचिनि परतो ये स्यादय इति ?
किञ्चातः ?
यदि विज्ञायते---भावकर्मणोर्ये स्यादय इति, सीयुट् विशेषितः, स्यसिचूतासयोऽविशेषिताः ।
अथ विज्ञायते---भावकर्मवाचिनि परतो ये स्यादय इति, स्यसिच्तासयो विशेषिताः, सीयुडविशेषितः ।
उभयथा चिण्वद्भावोऽविशेषितः ।।
यथेच्छसि तथास्तु ।
(प्रथमपक्षे दोषवारकभाष्यम्)
अस्तु---भावकर्मणोर्ये स्यादय इति ।
ननु चोक्तं---सीयुट् विशेषितः, स्यसिच्तासयोऽविशेषिता इति ।
स्यसिच्तासयश्च विशेषिताः ।
कथम् ?
भावकर्मणोर्यग्भवतीत्यत्र स्यादयोऽप्यनुवर्तिष्यन्ते ।।
(द्वितीयपक्षे दोषवारकभाष्यम्)
अथवा पुनरस्तु---भावकर्मवाचिनि परतो ये स्यादय इति ।
ननु चोक्तं---स्यसिच्तासयो विशेषिताः, सीयुडविशेषित इति ।
सीयुट् च विशेषितः ।
कथम् ?
भावकर्मवाचिनि परतः सीयुट् नास्तीति कृत्वा भावकर्मवाचिनि सीयुटि कार्यं विज्ञास्यते ।।
(इट्संबन्धिनिर्णयोपक्रमभाष्यम्)
अथ इट् च इत्युच्यते, कस्यायमिट् भवति ?
अङ्गस्येति वर्तते ।

यद्येवमङ्गस्यादित इट् प्राप्नोति, अडाड्वत् । तद्यथा---अडाटौ टित्त्वादादितो भवतः ।।
(इट्संबन्ध्याक्षेपभाष्यम्)
एवं तर्हि स्यादीनां भविष्यति ।
एवमपि षष्ठ्यभावान्न प्राप्नोति ।
ननु च भावकर्मणोः इत्येषा षष्ठी ।
नैषा षष्ठी ।
किं तर्हि ?
अर्थनिर्देश एवासौ सप्तमी---भावे चार्थे कर्मणि चेति ।।
(इट्संबन्धिसाधकभाष्यम्)
एवं तर्हि भावकर्मणोः इत्येषा सप्तमी स्यादिष्विति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य (1-1-66) इति ।
एवमपि न सिध्यति ।
किं कारणम् ?
न ह्यर्थेन पौर्वापर्यमस्ति ।
अर्थेऽसम्भवाद्भावकर्मवाचिनि शब्दे कार्यं विज्ञास्यते ।।
(आक्षेपभाष्यम्)
एवमपि सीयुटो न प्राप्नोति ।।
(योगविभागेनाक्षेपनिवारकभाष्यम्)
एवं तर्हि सप्तमे योगविभागः करिष्यते---आर्धधातुकस्येट् यावानिण् नाम स सर्व आर्धधातुकस्य भवतीति विज्ञेयम् । ततः---वलादेः, वलादेरार्धधातुकस्येट् भवतीति ।।
(योगविभागाक्षेपभाष्यम्)
यद्येवम्, स्यसिच्सीयुट्तासिष्विट् भवति, चिण्वद्भावश्चाविशेषितो भवति ।
तत्र को दोषः ?
स्यसिच्सीयुट्तासिष्विट् भवति, अज्झनग्रहदृशां वा चिण्वदिति क्वचिदेव चिण्वद्भावः स्यात् ।।
(अनुवृत्याऽऽक्षेपनिरासभाष्यम्)
एवं तर्हि स्यादीनेवात्रापेक्षिष्यामहे । स्यसिच्सीयुट्तासिष्विट् भवति, अज्झनग्रहदृशां वा चिण्वत्स्यादिष्विति ।।
(इडुद्देश्यतावच्छेदकाक्षेपभाष्यम्)
के पुनरिममिटं प्रयोजयन्ति ?
येऽनुदात्ताः ।
अथ ये उदात्तास्तेषां कथम् ?
सिद्धं तेनैव परत्वात् ।।
(समाधानभाष्यम्)
उदात्तेभ्योऽपि अनेनैवेडेषितव्यः ।
किं प्रयोजनम् ?
कारयतेः कारिष्यते । हारिष्यते । इटोऽसिद्धत्वात् णेरनिटि (6-4-51) इति णिलोपो यथा स्यात् ।।
(प्रत्याक्षेपभाष्यम्)
कथं पुनरिच्छता भवता उदात्तेभ्योऽनेनैवेट् लभ्यः, न पुनरनेनास्तु तेनेति---तेनैव स्याद्विप्रतिषेधेन ।
(समाधानभाष्यम्)
नित्योऽयम् । कृतेऽपि तस्मिन् प्राप्नोत्यकृतेऽपि ।
न त्वस्मिन् कृते स प्राप्नोति ।
किं कारणम् ?
अवलादित्वात् ।
तस्मादनेनैवेडेषितव्यः ।।
(सूत्रप्रयोजनोपन्यासभाष्यम्)
कानि पुनरस्य योगस्य प्रयोजनानि ?
(प्रयोजने श्लोकवार्तिकम्)
वृद्धिश्चिण्वद्युक्व हन्तेश्च घत्वं
दीर्घश्चोक्तो यो मितां वा चिणीति ।।
वृद्धिः प्रयोजनम् । चेष्यते, चायिष्यते ।।
युक् प्रयोजनम् । ग्लास्यते, ग्लायिष्यते ।।

हन्तेश्च घत्वं प्रयोजनम् । हनिष्यते । घानिष्यते ।।
दीर्घश्चोक्तो यो मितां वा चिणीति, स च प्रयोजनम् ।
शमिष्यते । शामिष्यते । तमिष्यते । तामिष्यते ।।
(प्रयोजने श्लोकवार्तिकम्)
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ।।
इटोऽसिद्धत्वात् णेरनिटि (6-4-51) इति णिलोपो यथा स्यात् ।
कथमयं नित्यः ?
कृताकृतप्रसङ्गित्वात् । कृताकृतप्रसङ्गी ह्ययम् । कृतेऽपि तस्मिन्निटि सात्पमिके आर्धधातुकस्येड्वलादेः (7-2-35) इति, पुनरनेनायं भवति । अस्मिंस्तु विहिते वलादित्वस्य निमित्तस्य विहतत्वात्सात्पमिको न भवति । निमित्तं विहितं भवति । अयं तस्य निमित्तं विहन्ति तस्मादयं नित्यः । स तु अस्य निमित्तं न विहन्ति ।।
(पदकृत्यभाष्यम्)
अथोपदेशग्रहणं किमर्थम् ?
(6560 उपदेशपदप्रयोजनवार्तिकम् ।। 1 ।।)
- चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात् -
चिण्वद्भावे उपदेशवचनं क्रियते, ऋकारगुणस्य बलीयस्त्वात् । कारिष्यते । परत्वात् गुणे रपरत्वे चानजन्तत्वात् चिण्वद्भावो न प्राप्नोति, उपदेशग्रहणाद्भवति ।।
(6561 विप्रतिषेधवार्तिकम् ।। 2 ।।)
- वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन -
वधिभावात्सीयुटि चिण्वद्भावो भवति विप्रतिषेधेन ।
वधिभावस्यावकाशः---वध्यात्, वध्यास्ताम्, वध्यासुः ।
चिण्वद्भावस्यावकाशः--घानिष्यते, अघानिष्यत ।
इहोभयं प्राप्नोति---घानिषीष्ट, घानिषीयास्ताम् ।
चिण्वद्भावो भवति विप्रतिषेधेन ।।
अथेदानीं चिण्वद्भावे कृते पुनः प्रसङ्गविज्ञानाद्वधिभावः कस्मान्न भवति ?
सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति कृत्वा ।।
(6562 आक्षेपवार्तिकम् ।। 3 ।।)
- हनिणिङादेशप्रतिषेधश्च -
हनिणिङादेशानां प्रतिषेधो वक्तव्यः । हनिष्यते, घानिष्यते । एष्यते, आयिष्यते । अध्येष्यते, अध्यायिष्यते । लुङीति हनिणिङादेशाः प्राप्नुवन्ति ।।
(6563 समाधानवार्तिकम् ।। 4 ।।)
- अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् -
अङ्गस्य यत्कार्यं तत्प्रतिनिर्दिश्यते । न च हनिणिङादेशा आङ्गा भवन्ति ते ।।
-6-4-64- आतो लोप इटि च (3062)
(लोपाधिकरणम्)
(इट्ग्रहणाक्षेपभाष्यम्)
इड्ग्रहणं किमर्थम् ?
(6564 इट्ग्रहणप्रयोजनवार्तिकम् ।। 1 ।।)
- इट्ग्रहणमक्ङिदर्थम् -
इट्ग्रहणं क्रियते, अक्ङिति लोपो यथा स्यात् । पपिथ, तस्थिथेति ।।
(उपसंख्यानभाष्यम्)
सार्वधातुके चादीत्यार्धधातुकाधिकारादुपसंख्यानं कर्तव्यम् । इषमूर्जमहमित आदीति ।।
(उपसंख्यानसमर्थकभाष्यम्)
ननु च यथैव क्ङिति इति वर्तमाने इट्ग्रहणमक्ङिदर्थम्, एवं आर्धधातुके इत्यपि वर्तमाने इट्ग्रहणं सार्वधातुकार्थं भविष्यति ।
न सिध्यति ।
किं कारणम् ?
नहि क्ङिता अज् विशेष्यते---अचि भवति, कतरस्मिन् ? अचीति ।
किं पुनः कारणमचा क्ङिद्विशेष्यते ?
यथा इडप्यज्ग्रहणेन विशेष्येत ।
अस्ति चेदानीं क्वचिदिडनजादिः, यदर्थो विधिः स्यात् ।

अस्तीत्याह । दासीय, धासीय---इति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
तत्तर्हि उपसंख्यानं कर्तव्यम् ?
न कर्तव्यम् । आर्धधातुकत्वात् सिद्धम् ।
कथमार्धधातुकत्वम् ?
उभयथा छन्दसीति वचनात् । अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ।।
-6-4-66- घुमास्थागापाजहातिसां हलि (3064)
(6565 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- इत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् -
इत्वे वकारप्रतिषेधो वक्तव्यः ।
किं प्रयोजनम् ?
घृतं घृतपावान इति दर्शनात् ।
इह मा भूत्---घृतं घृतपावानः पिबत वसां वसपावानः पिबत---इति ।।
(उपसंख्यानाक्षेपभाष्यम्)
यदि तर्हि वकारे प्रतिषेध उच्यते कथं धीवरी पीवरी ?
(6566 समाधानवार्तिकम् ।। 2 ।।)
- धीवरी पीवरीति चोक्तम् -
किमुक्तम् ?
नैतदीत्वम् ।
किं तर्हि ?
ध्याप्योरेतत्सम्प्रसारणमिति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
स तर्हि प्रतिषेधो वक्तव्यः ?
न वक्तव्यः । वनिबेष भविष्यति, न क्वनिबिति ।।
-6-4-74- न माङ्योगे (3072)
(अडाट्प्रतिषेधाधिकरणम्)
(प्रतिषेधप्रतियोगिजिज्ञासाभाष्यम्)
कस्यां प्रतिषेधः ?
आटः प्राप्नोति ।।
अटोऽपि त्विष्यते । तत्तर्ह्यटो ग्रहणं कर्तव्यम् ।।
(अट्साधकभाष्यम्)
न कर्तव्यम् । प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
लुङ्लङ्लृङ्क्ष्वडुदात्तः (6-4-71) इति ।।
(अडनुवर्तनाक्षेपभाष्यम्)
यदि तदनुवर्तते, आडजादीनाम् (72) अट् चेत्यडपि प्राप्नोति ।।
(समाधानभाष्यम्)
अस्तु, अटि कृते पुनराट् भविष्यति ।।
(प्रत्याक्षेपभाष्यम्)
इहापि अटि कृते पुनराट् प्राप्नोति---अकार्षीत्, अहार्षीत् ।।
(प्रत्याक्षेपसमाधानभाष्यम्)
अड्वचनान्न भविष्यति ।।
(पुनः प्रत्याक्षेपभाष्यम्)
इहापि तर्हि अड्वचनान्न स्यात्---ऐहिष्ट, ऐक्षिष्ट ।।
(समाधानभाष्यम्)
आड्वचनाद्भविष्यति ।।
(आक्षेपभाष्यम्)
इहापि तर्हि आड्वचनात् प्राप्नोति---अकार्षीत्, अहार्षीत् ।।
(समाधानभाष्यम्)

अकृतेऽटि योऽजादिरित्येवमेतद्विज्ञास्यते ।
किं वक्तव्यमेतत् ?
न हि ।
कथमनुच्यमानं गंस्यते ?
अड्वचनसार्मथ्यात् । यदि हि कृतेऽटि योऽजादिस्तत्र स्यात्, अड्वचनमनर्थकं स्यात् ।।
(प्रकारान्तरेण समाधानभाष्यम्)
अथवा---उपदेश इति वर्तते ।
अथवा---आर्धधातुक इति वर्तते ।
अथवा---लुङ्लङिति द्विलकारको निर्देशः । लुङादिषु लकारादिषु योऽजादिरिति ।।
(समाधानाक्षेपभाष्यम्)
सर्वथा---ऐज्यत---औप्यत इति न सिध्यति ।
एवं तर्हि---
(समाधाने श्लोकवार्तिकम्)
अजादीनामटा सिद्धम्
अजादीनामटैव सिद्धं नार्थ आटा ।।
(वार्तिकाक्षेपभाष्यम्)
एवं तर्हि वृद्ध्यर्थमाट् वक्तव्यः ।।
(समाधाने श्लोकवार्तिकम्)
वृद्ध्यर्थमिति चेदटः ।
अटो वृद्धिं वक्ष्यामि ।।
(वार्तिकावतरणभाष्यम्)
यदि तर्ह्यटो वृद्धिरित्युच्यते---
(समाधानाक्षेपे श्लोकवार्तिकम्)
अस्वपो हसतीत्यत्र
अस्वपो हसतीत्यत्रापि रोरुत्वे कृते वृद्धिः प्राप्नोति ।।
(समाधाने श्लोकवार्तिकम्)
धातौ वृद्धिमटः स्मरेत् ।।
धातावटो वृद्धिं वक्ष्यामि ।।
तत्तर्हि धातुग्रहणं कर्तव्यम् ।
न कर्तव्यम् । योगविभागः करिष्यते---अटः, अचि वृद्धिर्भवति । ततः---उपसर्गादृति--- वृद्धिर्भवति ।
ततः---धातौ इत्युभयोः शेषः ।।
(वार्तिकावतरणभाष्यम्)
इह तर्हि---आटीत्, आशीत्---अतो गुणे (6-1-97) इति पररूपं प्राप्नोति ।।
(समाधाने श्लोकवार्तिकम्)
पररूपं गुणे नाटः
आटो नेति वक्ष्यामि ।
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् ।।
(प्रकारान्तरेण समाधानश्लोकवार्तिकम् ।।)
ओमाङोरुसि तत्समम् ।
यद्यप्येतदुच्यते, अथ वै तर्हि उस्योमङ्क्ष्वाटः प्रतिषेधश्चोदितः, स न वक्तव्यो भवति ।।
(आक्षेपभाष्यम्)
छन्दोऽर्थं तर्ह्याट् वक्तव्यः---आरैगु कृष्णा, त्रित एवमायुनक्, ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।।
(समाधाने श्लोकवार्तिकम्)
छन्दोऽर्थं बहुलं दीर्घः
छन्दसि दीर्घो बहुलं दृश्यते । तद्यथा---पूरुषः, नारक इति ।।
(आक्षेपभाष्यम्)
एवं तर्हि---आयन्, आसन्---इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वाद्वृद्धिर्न प्राप्नोति ।।
(समाधाने श्लोकवार्तिकम्)

इणस्त्योरन्तरङ्गतः ।।
अन्तरङ्गत्वात् वृद्धिर्भविष्यति ।
तस्मान्नार्थ आट्ग्रहणेन ।।
(संग्रहः)
अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ।। 1 ।।
पररूपं गुणे नाट ओमाङोरुसि तत्समम् ।
छन्दोऽर्थं बहुलं दीर्घ इणस्त्योरन्तरङ्गतः ।। 2 ।।
-6-4-77- अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (3074)
(इयङाद्यधिकरणम्)
(6567 उपसंख्यानवार्तिकम् ।। 1 ।।)
- इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम् -
इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्तव्यम् । तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गं लोकम् । सुवर्गं लोकम् । त्र्यम्बकं यजामहे । त्रियम्बकं यजामहे ।।
-6-4-82- एरनेकाचोऽसंयोगपूर्वस्य (3080)
(सूत्रार्थदर्शकभाष्यम्)
इह कस्मान्न भवति---ब्राह्मणस्य नियौ, ब्राह्मणस्य नियः ?
अङागाधिकारात् । अङ्गस्येति वर्तते ।।
एमवपि---परमनियौ, परमनिय इत्यत्रापि प्राप्नोति ।
गतिकारकपूर्वस्यैवेष्यते ।।
(6568 उपसंख्यानवार्तिकम् ।। 1 ।।)
- यणादेशः स्वरपदपूर्वोपधस्य च -
यणादेशः स्वरपूर्वोपधस्य पदपूर्वोपधस्येति वक्तव्यम् । स्वरपूर्वा च यस्योपधा पदपूर्वा च ।
स्वरपूर्वा---निन्यतुः, निन्युः ।
पदपूर्वा---उन्न्यौ, उन्नयः । उद्ध्यौ, उद्ध्यः ।
उभयपूर्वा---ग्रामण्यौ, ग्रामण्यः । सेनान्यौ, सेनान्य इति ।।
(6569 उपसंख्यानप्रयोजनवार्तिकम् ।। 2 ।।)
- असंयोगपूर्वे ह्यनिष्टप्रसङ्गः -
असंयोगपूर्वस्येत्युच्यमाने, अनिष्टं प्रसज्येत---उन्न्यौ, उन्न्यः । उद्ध्यौ, उद्ध्यः ।
असंयोगपूर्वस्येति प्रतिषेधः प्रसज्येत ।।
(वार्तिकार्थसाधकभाष्यम्)
तत्तर्हि वक्तव्यम् ।
न वक्तव्यम् । धातोः इति वर्तते, धातुना संयोगं विशेषयिष्यामः---धातोर्यः संयोगस्तत्पूर्वस्य नेति ।
उपसर्जनं वै संयोगः, न चोपसर्जनस्य विशेषणमस्ति ।
धातोरित्यनुवर्तनसामर्थ्यादुपसर्जनस्यापि विशेषणं भविष्यति ।
अस्त्यन्यत् धातोरित्यनुवृत्तौ प्रयोजनम् ।
किम् ?
इवर्णं विशेष्यते ।
नैतदस्ति प्रयोजनम् । यद्ध्यधातोरिवर्णं, भवितव्यमेव तस्य यणादेशेन इको यणचि (6-1-77) इति ।।
-6-4-84- वर्षाभ्वश्च (3082)
(6570 उपसंख्यानवार्तिकम् ।। 1 ।।)
- वर्षाभूपुर्नभ्वश्च -
वर्षाभू इत्यत्र पुर्नभ्वश्चेति वक्तव्यम् । पुर्नभ्वौ, पुर्नभ्वः---इति ।
अत्यल्पमिदमुच्यते ।
वर्षादृन्कारपुनः पूर्वस्य भुव इति वक्तव्यम् । वर्षाभ्वौ, वर्षाभ्वः । दृन्भ्वौ, दृन्भ्वः । कारभ्वौ, कारभ्वः । पुर्नभ्वौ, पुर्नभ्वः ।।
-6-4-87- हुश्नुवोः सार्वधातुके (3085)
(6571 हुश्नुग्रहणप्रत्याख्यानवार्तिकम् ।। 1 ।।)
- हुश्नुग्रहणानर्थक्यमन्यस्याभावात् -
हुश्नुग्रहणमनर्थकम् ।

किं कारणम् ?
अन्यस्याभावात् । न ह्यन्यत्सार्वधातुकेऽस्ति, यस्य यणादेशः स्यात् ।।
ननु चायमस्ति---याति, वातीति ।
क्ङितीत्यनुवर्तते ।।
इदं तर्हि---यातः, वात इति ।
अचीति वर्तते ।।
इह तर्हि---यान्ति, वान्तीति ।
य्वोरिति वर्तते ।।
एवमपि---धियन्ति, पियन्ति---अत्र प्राप्नोति ।
ओरिति वर्तते ।।
एवमपि--सुवन्ति, रुवन्ति---इत्यत्र प्राप्नोति ।
अनेकाजिति वर्तते ।।
एवमपि---अयुवन्, अरुवन्--इत्यत्रापि प्राप्नोति ।
एतदप्यटोऽसिद्धत्वादेकाज्भवति ।।
एवमपि---प्रोर्णुवन्ति---इत्यत्रापि प्राप्नोति ।
असंयोगपूर्वस्येत्यनुवर्तते ।।
यङ्लुगर्थं तर्हि हुश्नुग्रहणं कर्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति, तदर्थमिदम् । युवं योयुवतीनां वृषभम् । भवतु रोरुवतीनाम् ।।
यङ्लुगर्थमिति चेत्, तन्न ।
किं कारणम् ?
आर्धधातुकत्वात्सिद्धम् ।
कथमार्धधातुकत्वम् ?
उभयथा छन्दसीति वचनात् । अन्येऽपि हि धातुप्रत्ययाश्छन्दस्युभयथा दृश्यन्त इति ।।
(हुश्नुग्रहणज्ञापनभाष्यम्)
एवं तर्हि सिद्धे सति यत् हुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यः--भाषायामपि यङ्लुग्भवतीति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
बेभिदीति, चेच्छिदीति---इत्येतत्सिद्धं भवति भाषायामपि---इति ।।
-6-4-89- ऊदुपधाया गोहः (3087)
(उपधाकार्याधिकरणम्)
(विकृतनिर्देशाक्षेपभाष्यम्)
किमर्थं गुहेर्विकृतस्य ग्रहणं क्रियते, न गुह इत्येवोच्येत?
(6572 विकृतनिर्देशप्रयोजनवार्तिकम्।।1।।)
गोहिग्रहणं विषयार्थम्।।
गोहिग्रहणं क्रियते विषयार्थम्। विषयः प्रतिनिर्दिश्यते। यत्रास्यैतद्रूपं तत्र यथा स्यात्, इह मा भूत्-- निजुगुहतुः, निजुगुहुरिति।।
(विकृतनिर्देशप्रयोजनभाष्यम्)
अयादेशप्रतिषेधार्थं च विकृतग्रहणं क्रियते।।
(6573 प्रयोजनसमर्थकवार्तिकम्।।2।।)
ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्वस्यासिद्धत्वात्।।
ह्रस्वादेशे हि सति अयादेशः प्रसज्येत। प्रगूह्य गतः, उपगूह्य गत इति। किं कारणम्?
ऊत्वस्यासिद्धत्वात्। असिद्धमूत्वम्, तस्यासिद्धत्वात् ल्यपि लघुपूर्वात् (6-4-56) इत्ययादेशः प्रसज्येत।
(प्रथमप्रयोजनाक्षेपभाष्यम्)
विषयार्थेन तावन्नार्थो गोहिग्रहणेन। प्रश्लिष्टनिर्देशात्सिद्धम्। प्रश्लिष्टनिर्देशोऽयम्--उ-ऊत्-ऊदिति। तत्र ह्रस्वस्यावकाशः--निजुगुहतुः, निजुगुहुः। गुणस्यावकाशः--निगोढा, निगोढुम्। इहोभयं प्राप्नोति--निगूहयति, निगूहति, निगूहकः, साधु निगूही। परत्वात् गुणे कृते आन्तर्यतो दीर्घो भवति।
(द्वितीयप्रयोजनाक्षेपभाष्यम्)
अयादेशप्रतिषेधेन चापि नार्थः। समानाश्रयवचनात्सिद्धम्। समानाश्रयमसिद्धं भवति। व्याश्रयं चैतत्। णावूत्वम्, णेर्ल्यप्ययादेशः।।
-6-4-90- दोषो णौ (3088)
(विकृतनिर्देशाक्षेपभाष्यम्)
किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते, न दुष इत्येवोच्येत ?

(6574 विकृतनिर्देशप्रयोजनवार्तिकम् ।। 1 ।।)
- दोषिग्रहणे च -
किम् ?
अयादेशप्रतिषेधार्थं विकृतग्रहणं क्रियते ।
ह्रस्वादेशे ह्ययादेशप्रसङ्गः, ऊत्वस्यासिद्धत्वात् ।
ह्रस्वादेशे हि सति अयादेशः प्रसज्येत । प्रदूष्य गतः । उपदूष्य गतः ।
किं कारणम् ?
ऊत्वस्यासिद्धत्वात् ।
असिद्धमूत्वं तस्यासिद्धत्वात् ल्यपि लघुपूर्वात् इत्ययादेशः प्रसज्येत ।।
(प्रयोजनाक्षेपभाष्यम्)
समानाश्रयवचनात्सिद्धमित्येव । समानाश्रयमसिद्धम् । व्याश्रयं चैतत् । णावूत्वम्, णेर्ल्यप्ययादेश इति ।।
-6-4-93- चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (3091)
(6575 उपसंख्यानवार्तिकम् ।। 1 ।।)
- चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे च -
चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानं कर्तव्यम् । शमयन्तं प्रयोजितवान्---अशमि, अशामि । शमं शमम्, शामं शामम् । शंशमयतेः---अशंशमि, अशंशामि । शंशमं शंशमम्, शंशामं शंशामम् ।।
(उपसंख्यानप्रयोजनजिज्ञासाभाष्यम्)
किं पुनः कारणं न सिध्यति ?
चिण्णमुल्परे णौ मितामङ्गानां दीर्घो भवतीत्युच्यते, यश्चात्र णिश्चिण्णमुल्परो न तस्मिन् मिदङ्गम्, यस्मिंश्च मिदङ्गं नासौ चिण्णमुल्पर इति ।।
लोपे कृते चिण्णमुल्परो भवति ।
स्थानिवद्भावान्न चिण्णमुल्परः ।।
ननु च प्रतिषिध्यते तत्र स्थानिवद्भावः---दीर्घविधिं प्रति न स्थानिवदिति ।
एवमप्यसिद्धत्वान्न प्राप्नोति ।।
एवं तर्हि---
(प्रयोजनानर्थक्यबोधभाष्यम्)
चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ।
किमदमन्तरङ्गलक्षणत्वादिति ?
यावद्ब्रूयात्समानाश्रयवचनात्सिद्धमिति ।
व्याश्रयं चैतत् ।
कथम् ?
णौ णिलोपः, णौ चिण्णमुल्परे मितामङ्गानां दीर्घत्वम् । तस्मान्नार्थ उपसंख्यानेनेति ।।
-6-4-96- छादेर्घेऽद्व्युपसर्गस्य (3094)
(उपसंख्यानभाष्यम्)
अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । इहापि यथा स्यात्---समुपाभिच्छादः ।।
(उपसंख्यानाक्षेपभाष्यम्)
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् । यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तः, तत्राद्व्युपसर्गस्येत्येव सिद्धम् ।।
(समाधानभाष्यम्)
न वा एष लोके संप्रत्ययः । न हि द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते ।
तस्मादद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ।।
-6-4-100- घसिभसोर्हलि (3098)
(6576 हलिग्रहणप्रत्याख्यानवार्तिकम् ।। 1 ।।)
- हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात् -
हल्ग्रहणमनर्थकम् ।
किं कारणम् ?
अन्यत्रापि दर्शनात् । अन्यत्रापि हि लोपो दृश्यते---अग्निर्वनानि वप्सति, शरावे वप्सति---इति ।।
-6-4-101- हुझल्भ्यो हेर्धिः (3099)
(ध्यादेशाधिकरणम्)

(वार्तिकावतरणे प्रतिषेधोपसंख्यानभाष्यम्)
इटः प्रतिषेधो वक्तव्यः । रुदिहि, स्वपिहि । झल इति धित्वं प्राप्नोति ।।
(6577 प्रतिषेधानर्थक्ये बोधकवार्तिकम् ।। 1 ।।)
- हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः -
हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ।
धित्वं कस्मान्न भवति ?
हलधिकारात् । प्रकृतं हल्ग्रहणमनुवर्तते ।
क्व प्रकृतम् ?
घसिभसोर्हलि (100) इति ।
तद्वै सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।
तद्वै तत्र प्रत्याख्यायते, प्रत्याख्यातं सद्यया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमिहानुवर्तते ।।
(प्रकारान्तरेण प्रतिषेधानर्थक्यबोधकभाष्यम्)
अथवा---हुझल्भ्यः इत्येषा पञ्चमी हलि इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1-1-67) इति ।।
(प्रकारान्तरबोधकभाष्यम्)
अथवा---निर्दिश्यमानस्यादेशा भवन्ति इत्येवं न भविष्यति ।
यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?
इटा व्यवहितत्वात् ।।
(प्रकारान्तराक्षेपपरिहारभाष्यम्)
यद्येवं भिन्धकि छिन्धकीत्यत्र धित्वं न प्राप्नोति ।
एवं तर्हि धित्वे कृतेऽकज्भविष्यति ।
इदमिह सम्प्रधार्यम्---धित्वं क्रियतामकजिति, किमत्र कर्तव्यम् ?
परत्वाद्धित्वम् ।
नित्योऽकच् । कृतेऽपि धित्वे प्राप्नोत्यकृतेऽपि ।
अकजप्यनित्यः । अन्यस्य कृते धित्वे प्राप्नोति, अन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति इति । उभयोरनित्ययोः परत्वाद्धित्वम्, धित्वे कृतेऽकज्भविष्यति ।।
(प्रकारान्तरबोधकभाष्यम्)
अथवा---हकारस्यैवैतदशक्तिजेनेकारेण ग्रहणमिति ।।
-6-4-104- चिणो लुक् (3102)
(लुकोऽधिकरणम्)
(6578 उपसंख्यानवार्तिकम् ।। 1 ।।)
- चिणो लुकि तग्रहणम् -
चिणो लुकि तग्रहणं कर्तव्यम् ।
इह मा भूत्---अकारितराम्, अहारितराम्---इति ।।
(6579 एकदेशिवार्तिकम् ।। 2 ।।)
- चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात् -
चिणो लुकि तग्रहणमनर्थकम् ।
सङ्घातस्य लुक् कस्मान्न भवति ?
सङ्घातस्याप्रत्ययत्वात् । प्रत्ययस्य लुक्श्लुलुपो भवन्तीत्युच्यते, न च सङ्घातः प्रत्ययः ।।
तलोपे तर्हि कृते परस्य प्राप्नोति ।
(6580 सिद्धान्तवार्तिकम् ।। 3 ।।)
- तलोपस्य चासिद्धत्वात् -
असिद्धस्तलोपस्तस्यासिद्धत्वान्न भविष्यति ।।
(6581 प्रकारान्तरेण तकारानर्थक्ये वार्तिकम् ।। 4 ।।)
- कार्यकृतत्वाद्वा -
अथवा कृतश्चिणो लुगिति कृत्वा पुनर्न भविष्यति । तद्यथा---वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।
विषम उपन्यासः । युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न स्यात्, यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा---वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत---इति अग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते ।
तस्मात्पूर्वोक्तावेव परिहारौ ।।

(प्रकारान्तरबोधकभाष्यम्)
अथवा क्ङितीति वर्तते ।
क्व प्रकृतम् ?
गमहनजनखनघसां लोपः क्ङित्यनङि (6-4-98) इति ।
तद्वै तत्र सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।
चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य (1-1-67) इति ।।
-6-4-106- उतश्च प्रत्ययादसंयोगपूर्वात् (3104)
(विशेषणविशेष्यभावे पक्षद्वयप्रदर्शकभाष्यम्)
कथमिदं विज्ञायते---उकारात् प्रत्ययादिति, आहोस्विदुकारान्तात् प्रत्ययादिति ?
किञ्चातः ?
यदि विज्ञायते---उकारात्प्रत्ययादिति सिद्धं तनु---कुरु । चिनु---सुनु---इति न सिद्ध्यति ।
अथ विज्ञायते---उकारान्तात्प्रत्ययादिति सिद्धं चिनु--सुनु । तनु---कुर्विति न सिध्यति ।
तथा---असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्---अक्ष्णुहि, तक्ष्णुहि । आप्नुहि, शक्नुहीत्यत्र न स्यात् ।।
उकारस्य विशेष्यत्वात् तेन नास्ति तदन्तता ।
न सम्भवति चोकारः प्रत्ययान्तो यदा पुनः ।।
विशेष्यत उकारेण प्रत्ययोऽतस्तदन्तता ।
आश्रीयते प्रत्ययस्य तस्मात्पक्षद्वयोद्भवः ।।
(पक्षद्वये दोषाभावोपपादकभाष्यम्)
यथेच्छसि तथाऽस्तु ।
अस्तु तावदुकारात्प्रत्ययादिति ।
कथं चिनु---सुन्विति ?
तदन्तविधिना भविष्यति ।।
अथवा---पुनरस्तूकारान्तात्प्रत्ययादिति ।
कथं तनु कुरु ?
व्यपदेशिवद्भावेन भविष्यति ।।
यदप्युच्यते---तथाऽसंयोगपूर्वग्रहणेनेहैव पर्युदासः स्यात्---अक्ष्णुहि--तक्ष्णुहि । आप्नुहि---शक्नुहीत्यत्र न स्यात् इति ।
नास्माभिरसंयोगपूर्वग्रहणेनोकारान्तं विशेष्यते ।
किं तर्हि ?
उकारो विशेष्यते । उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति ।।
(6582 उपसंख्यानवार्तिकम् ।। 1 ।।)
- उतश्च प्रत्ययाच्छन्दोवावचनम् -
उतश्च प्रत्ययात्--- इत्यत्र छन्दसि वा इति वक्तव्यम् । अव स्थिरा तनुहि यातुजूनाम् । धिनुहि यज्ञं धिनुहि यज्ञपतिम् । ते न मा भागिनं कृणुहि ।।
(6583 उपसंख्यानवार्तिकम् ।। 2 ।।)
- उत्तरार्थं च -
केचित्तावदाहुः---छन्दोग्रहणं कर्तव्यमिति ।
अपर आहुः---वावचनं कर्तव्यमिति । लोपश्चास्यान्तरस्यांम्वोः (107) इत्यत्रान्यतरस्यां ग्रहणं न कर्तव्यं भवति ।।
-6-4-110- अत उत् सार्वधातुके (3108)
(उदादेशाधिकरणम्)
(पदकृत्यभाष्यम्)
सार्वधातुक इति किमर्थम् ?
इह मा भूत्---सञ्चस्करतुः, सञ्चस्करुः इति ।।
(प्रतिषेधोपसंख्यानभाष्यम्)
स्यान्तस्य प्रतिषेधो वक्तव्यः । करिष्यति । करिष्यते ।।
(6584 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- कृञ्त्र उत्व उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः -
कृञ्त्र उत्वे उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ।
उत्वं कस्मान्न भवति ?
उकारान्तनिर्देशात् ।।

(आक्षेपभाष्यम्)
अशक्यः करोतावुकारान्तनिर्देशस्तत्राश्रयितुम् । इह सम्परिभ्यां भूषणसमवाययोः करोतावितीहैव स्यात्---संस्करोति,
संस्कर्ता --- संस्कर्तुमित्यत्र न स्यात् ।।
(आक्षेपसमर्थकभाष्यम्)
न ब्रूमोऽस्मादुकारान्तनिर्देशाद्योऽयं करोतेरिति ।
किं तर्हि ?
उकारान्तप्रकरणादुकारान्तमङ्गमभिसंबध्यते । उत इति वर्तते ।
यद्येवम्, नार्थः सार्वधातुकग्रहणेन ।
कस्मान्न भवति---संचस्करतुः, संचस्करुरिति ?
उत इति वर्तते ।।
(सार्वधातुकपदप्रयोजनभाष्यम्)
उत्तरार्थं तर्हि सार्वधातुग्रहणं कर्तव्यम्---श्नसोरल्लोपः (111) इति ।
श्नः सार्वधातुक एव, अस्तोरप्यार्धधातुके भूभावेन भवितव्यम् ।
उत्तरार्थमेव तर्हि---श्नाऽभ्यस्तयोरातः (112) इति ।
श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्धधातुके नास्ति ।
ननु चेदमस्ति---अप्सु यायावरः प्रवपेत पिण्डानिति ।
नैतदाकारान्तम् ।
किं तर्हि ?
यकारान्तमेतत् ।।
उत्तरार्थमेव तर्हि---इर् हल्यघोः (113) इति ।
तत्रापि श्नाऽभ्यस्तयोरित्येव ।।
अतोऽप्युत्तरार्थमेव तर्हि---इद्दरिद्रस्य (114) इति ।
वक्ष्यत्येतत् दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधौ इति ।।
अतोऽप्युत्तरार्थं---भियोऽन्यतरस्याम् (115) । अभ्यस्तस्येत्येव ।।
अतोऽप्युत्तरार्थमेव तर्हि---जहातेश्च (116) ।
अभ्यस्तस्येत्येव ।।
अतोऽप्युत्तरार्थम्---आ च हौ (117) ।
हावित्युच्यते, अभ्यस्तस्येत्येव ।।
अतोऽप्युत्तरार्थमेव---लोपो यि (118) ।
अभ्यस्तस्येत्येव ।।
अतोऽप्युत्तरार्थमेव तर्हि---घ्वसोरेद्धावभ्यासलोपश्च (119) ।
हावित्युच्यते ।।
(प्रथमप्रयोजनस्थापकभाष्यम्)
तदेव तर्हि प्रयोजनम्---श्नसोरल्लोपः इति । ननु चोक्तं श्नः सार्वधातुक एव, अस्तेरप्यार्धधातुके भूभावेन भवितव्यम् इति ।।
(प्रयोजनसमर्थकं श्लोकवार्तिकम्)
अनुप्रयोगे तु भुवाऽस्त्यबाधनं
स्मरन्ति कर्तुर्वचनान्मनीषिणः ।।
अनुप्रयोगे तु भूभावेनास्तेरबाधनमिष्यते---ईहांमासतुः, ईहांमासुः ।।
किं च स्याद्यद्यत्र लोपः स्यात् ।।
(सार्वधातुकपराभावे दोषप्रतिपादकं श्लोकवार्तिकम्)
लोपे द्विर्वचनासिद्धिः
लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न स्यात् ।।
स्थानिवद्भावाद्भविष्यति ।
(दोषप्रापकं श्लोकवार्तिकम्)
स्थानिवदिति चेत्कृते भवेत् द्वित्वे ।।
स्थानिवदिति चेत् कृते द्वित्वे लोपः प्राप्नोति ।।
अस्तु तर्हि परस्य लोपः । अभ्यासस्य योऽकारस्तस्य दीर्घत्वं भविष्यति ।।
(दोषप्रतिपादकं श्लोकवार्तिकम्)

नैवं सिध्यति कस्मात्
प्रत्यङ्गत्वाद्भवेद्धि पररूपम् ।।
नैवं सिध्यति ।
कस्मात् ?
प्रत्यङ्गत्वात्पररूपं प्राप्नोति ।।
(दोषे श्लोकवार्तिकम्)
तस्मिंश्च कृते लोपः
पररूपे च कृते लोपः प्राप्नोति ।।
(दोषसमर्थकं श्लोकवार्तिकम्)
दीर्घत्वं बाधकं भवेत्तत्र ।।
अत आदेः (7-4-70) इति दीर्घत्वं बाधकं भविष्यति ।।
(दोषप्रतिपादकं भाष्यम्)
इदं तर्हि प्रयोजनं---सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यात् । कुरु-इति ।।
-6-4-114- इद्दरिद्रस्य (3111)
(6585 उपसंख्यानवार्तिकम् ।। 1 ।।)
- दरिद्रातेरार्धधातुके लोपः -
दरिद्रातेरार्धधातुके लोपो वक्तव्यः ।।
(6586 सिद्धत्वोपसंख्यानवार्तिकम् ।। 2 ।।)
- सिद्धश्च प्रत्ययविधौ -
स च सिद्धः प्रत्ययविधौ ।
किं प्रयोजनम् ?
दरिद्राति---इति दरिद्रः आकारान्तलक्षणः प्रत्ययविधिर्मा भूदिति ।।
न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रियतीति वा ।।
(6587 उपसंख्यानवार्तिकम् ।। 3 ।।)
- अद्यतन्यां वा -
अद्यतन्यां वेति वक्तव्यम् । अदरिद्रीत्, अदरिद्रासीत् ।।
-6-4-120- अत एकहल्मध्येऽनादेशादेर्लिटि (3118)
(एत्वाधिकरणम्)
(6588 उपसंख्यानवार्तिकम् ।। 1 ।।)
- णकारषकारादेरेत्ववचनं लिटि -
णकारषकारादेरेत्वं लिटि वक्तव्यम् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे ।
किं पुनः कारणं न सिध्यति ?
अनादेशादेरिति प्रतिषेधः प्राप्नोति ।।
(विशेष्यविशेषणभावेनेष्टसाधकं भाष्यम्)
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् । लिटाऽत्रादेशादिं विशेषयिष्यामः, लिटि य आदेशस्तदादेर्नेति ।।
(विशेषणविशेष्यभावाक्षेपसमाधानभाष्यम्)
अस्त्यन्यल्लिड्ग्रहणस्य प्रयोजनम् ।
किम् ?
इह मा भूत्---पक्ता, पक्तुम् ।
नैतदस्ति प्रयोजनम् । क्ङितीति वर्तते ।
एवमपि पक्वः पक्ववानित्यत्र प्राप्नोति । अभ्यासलोपसन्नियोगेनैत्वमुच्यते । न चात्राभ्यासलोपं पश्यामः ।
एवमपि पापच्यते---अत्र प्राप्नोति । दीर्घत्वमत्र बाधकं भविष्यति । नाप्राप्तेऽभ्यासविकार एत्वमारभ्यते, तद्यथाऽसावन्यानभ्यासविकारान् बाधत एवं दीर्घत्वमपि बाधेत ।
सत्यमेवमेतत् ।
अभ्यासविकारेष्वपि तु ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । तत्र ह्रस्वहलादिशेषावुत्सर्गौ तयोर्दीर्घत्वमपवाद एत्वं च । अपवादविप्रतिषेधाद्दीर्घत्वं भविष्यति ।।
(वार्तिकावतरणभाष्यम्)

इह तर्हि---बभणतुः---बभणुरित्यभ्यासादेशस्यासिद्धत्वादेत्वं प्राप्नोति ।।
(6589 सिद्धत्वज्ञापकवार्तिकम् ।। 2 ।।)
- फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य -
यदयं फलिभज्योर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः---अभ्यासादेशः सिद्ध एत्त्व इति ।
यद्येवं---
(6590 आक्षेपवार्तिकम् ।। 3 ।।)
- प्रथमतृतीयादीनामादेशादित्वादेत्वाभावः -
प्रथमतृतीयादीनामपि तर्ह्यादेशादित्वादेत्वं न प्राप्नोति । पेचतुः । पेचुः । देभतुः । देभुः ।।
(6591 समाधानवार्तिकम् ।। 4 ।।)
- न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्त्वविज्ञानस्य -
न वा एष दोषः ।
किं कारणम् ?
शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्त्वविज्ञानस्य । यदयं शसिदद्योः प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः---रूपाभेदेन ये आदेशादयो न तेभ्यः प्रतिषेधो भवतीति ।।
(6592 उपसंख्यानवार्तिकम् ।। 5 ।।)
- दम्भ एत्वम् -
दम्भ एत्वं वक्तव्यम् । देभतुः । देभुः । किं पुनः कारणं न सिध्यति ?
(6593 उपसंख्यानसमर्थकवार्तिकम् ।। 6 ।।)
- नलोपस्यासिद्धत्वात् -
असिद्धो नलोपस्तस्यासिद्धत्वादेत्वं न प्राप्नोति ।।
(उपसंख्याने श्लोकवार्तिकम्)
नशिमन्योरलिट्येत्वम् ।
नशिमन्योरलिटि एत्त्वं वक्तव्यम् ।।
(उपसंख्याने श्लोकवार्तिकम्)
छन्दस्यमिपचोरपि ।।
छन्दसि अमिपचोरपीति वक्तव्यम् । किं प्रयोजनम् ?
(प्रयोजने श्लोकवार्तिकम्)
अनेशं मेनकेत्येतद् व्येमानं लिङि पेचिरन् ।।
यजायेजे वपावेपे
यजः---आयेजे, वपः---आवेपे ।।
(श्लोकवार्तिकम्)
दम्भ एत्वमलक्षणम् ।।
असिद्धत्वान्नलोपस्य दम्भ एत्त्वं न सिध्यति ।।
(ज्ञापकेनोपसंख्यानसाधकं श्लोकवार्तिकम्)
श्नोसोरत्त्वे तकारेण ज्ञायते त्वेत्त्वशासनम् ।।
अनित्योऽयंविधिरिति ।।
-6-4-121- थलि च सेटि (3119)
(वार्तिकावतरणभाष्यम्)
थल्ग्रहणं किमर्थम् ?
(6594 थल्ग्रहणप्रयोजनवार्तिकम् ।। 1 ।।)
- थल्ग्रहणमक्ङिदर्थम् -
थल्ग्रहणं क्रियतेऽक्ङिदर्थम् । अक्ङिति एत्वं यथा स्यात् । पेचिथ । शेकिथ ।।
(प्रयोजनाक्षेपभाष्यम्)
नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवात्राक्ङिदर्थं भविष्यति ।।
(प्रयोजनान्तरदर्शकभाष्यम्)
इदं तर्हि प्रयोजनम्---समुच्चयो यथा स्यात् थलि च सेटि क्ङिति च सेटि---इति ।
किं प्रयोजनम् ?
पेचिव । पेचिम । तत्र पचादिभ्य इड्वचनम् इति वक्ष्यति तन्न वक्तव्यं भवति ।।
(अतिव्याप्त्यव्याप्तिदर्शनेनेष्टसाधकभाष्यम्)

इह कस्मान्न भवति---लुलविथ ?
गुणस्य नेति प्रतिषेधात् ।
इहापि तर्हि न प्राप्नोति---पेचिथ, शेकिथ ।
गुणस्य योऽकार इत्येवमेतद्विज्ञायते ।
एवमपि शशरिथ---अत्र प्राप्नोति ।
गुणस्यैषोऽकारः ।
कथम् ?
वृद्धिर्भवति गुणो भवति---इति रेफशिरा गुणवृद्धिसंज्ञको निर्वर्तते ।
अथवा---
आचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामेत्त्वं भवतीति यदयं तृफलभजत्रपश्च (6-4-122) इति तृग्रहणं करोति ।।
-6-4-123- राधो हिंसायाम् (1321)
(6595 उपसंख्यानवार्तिकम् ।। 1 ।।)
- राधादिषु स्थानिनिर्देशः -
राधादिषु स्थानिनिर्देशः कर्तव्यः ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
न कर्तव्यः । एकहल्मध्ये इति वर्तते ।
यद्येवं त्रेसतुः त्रेसुः रशब्दस्यैत्वं प्राप्नोति ।
अस्तु ।
अलोऽन्त्यस्य विधयो भवन्तीति अकारस्य भविष्यति ।
अनर्थकेऽलोऽन्त्यविधिर्नेत्येवं न प्राप्नोति ।
नैतस्याः सन्ति परिभाषायाः प्रयोजनानि ।।
अथवा---
अत इति वर्तते ।
एवमपि राधेर्न प्राप्नोति ।
आकारग्रहणमपि प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
श्नाऽभ्यस्तयोरातः (6-4-112) इति ।।
अथवा---
श्नसोरल्लोपः (111) इत्यत्र तपरकरणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते ।
यदि तदनुवर्तते अत एकहल्मध्ये नादेशादेर्लिटि (120) अस्य चेति अवर्णमात्रस्यैत्वं प्राप्नोति । बबाधे ।
अकारेण तपरेणाऽवर्णं विशेषयिष्यामः---अस्यात इति । इहेदानीमस्येत्यनुवर्तते, अत इति निवृत्तम् ।।
-6-4-127- अर्वणस्त्रसावनञः (3125)
-6-4-128- मघवा बहुलम् (3126)
(त्रादेशाधिकरणम्)
(सूत्रप्रत्याख्याने श्लोकवार्तिकम्)
अर्वणस्तृ मघोनश्च
न शिष्यश्छान्दसं हि तत् ।
अर्वणस्तृ मघोनश्च न शिष्यः ।
किं कारणम् ?
छान्दसं हि तत् । दृष्टानुविधिछन्दसि भवतीति ।।
(प्रत्याख्याने श्लोकवार्तिकम्)
मतुब्वन्योर्विधानाच्च
मतुब्वनी खल्वपि छन्दसि विधीयेते ।।
(प्रत्याख्याने श्लोकवार्तिकम्)
छन्दस्युभयदर्शनात् ।।
उभयं खल्वपि छन्दसि दृश्यते ।।
इमान्यर्वणः पदानि । अनर्वाणं वृषभं मन्द्रजिह्वम् ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ।।
-6-4-130- पादः पत् (3128)

(पादेशाधिकरणम्)
(6596 उपसंख्यानवार्तिकम् ।। 1 ।।)
- पाद उपधाह्रस्वत्वम् -
पाद उपधाह्रस्वत्वं वक्तव्यम् । द्विपदः पश्य ।।
(6597 आदेशे दोषवार्तिकम् ।। 2 ।।)
- आदेशे हि सर्वादेशप्रसङ्गः -
आदेशे हि सति सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत येन विधिस्तदन्तस्य (1-1-72) इति ।।
तत्तर्हि वक्तव्यम् ।
(6598 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 3 ।।)
- न वा निर्दिश्यमानस्यादेशात् -
न वा वक्तव्यम् ।
किं कारणम् ?
निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या ।।
कः पुनरत्र विशेषः--एषा वा परिभाषा क्रियते, उपधाह्रस्वत्वं वोच्यते ।
अवश्यमेषा परिभाषा कर्तव्या, बहून्येतस्याः परिभाषायाः प्रयोजनानि ।
कानि पुनस्तानि प्रयोजनानि ?
(6599 परिभाषाप्रयोजनवार्तिकम् ।। 4 ।।)
- प्रयोजनं सुप्तिङादेशेषु -
सुप्---कुमार्याम्, किशोर्याम्, खट्वायाम्, मालायाम्, तस्याम्, यस्याम् । आड्याट्स्याट्सु कृतेषु साड्याट्स्याट्कस्य आम् प्राप्नोति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।
इदमिह संप्रधार्यम्---आड्याट्स्याटः क्रियन्तामामिति, किमत्र कर्तव्यम् ?
परत्वादाम् ।
नित्या आड्याट्स्याटः । कृतेऽप्यामि प्राप्नुवन्त्यकृतेऽपि ।
अनित्या आड्याट्स्याटः ।
कथम् ?
अन्यस्य कृते आमि प्राप्नुवन्त्यन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । उभयोरनित्ययोः परत्वादाम् ।।
इदं तर्हि---यस्यै---तस्यै, स्याटि कृते सस्याट्कस्य स्मैभावः प्राप्नोति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।
यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?
स्याटा व्यवहितत्वात् । सुप् ।।
तिङ्---अरुदिताम्, अरुदितम्, अरुदित---इति ।
इटि कृते सेट्कस्य तांतंतामादेशाः प्राप्नुवन्ति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।
इदमिह संप्रधार्यम्---इट् क्रियताम्, तांतंताम इति, किमत्र कर्तव्यम् ?
परत्वादिडागमः, अन्तरङ्गास्तांतन्तामः ।।
इदं तर्हि---क्रियास्ताम्, क्रियास्तम्, क्रियास्त, क्रियासम् । यासुटि कृते सयासुट्कस्य तांतन्तामः प्राप्नुवन्ति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवतीति ।।
(6600 परिभाषाप्रयोजनवार्तिकम् ।। 5 ।।)
- ल्यब्भावे च -
ल्यब्भावे च प्रयोजनम् । प्रकृत्य । प्रहृत्य । क्त्वान्तस्य ल्यप्प्राप्नोति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।।
(प्रयोजनभाष्यम्)
त्रिचतुर्युष्मदस्मात्त्यदादिविकारेषु च प्रयोजनम् ।
अतितिस्रः, अतिचतस्रः । त्रिचतुरन्तस्य तिसृचतसृभावः प्राप्नोति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।।
युष्मद्---अस्मद्---अतियूयम्, अतिवयम् । युष्मदस्मदन्तस्य यूयवयौ प्राप्नुतः ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।।
त्यदादिविकारः---अतिस्यः, उत्तमस्यः, अत्यसौ, उत्तमासौ । त्यदाद्यन्तस्य त्यदादिविकाराः प्राप्नुवन्ति ।
किमन्तस्य कादेशः प्राप्नोति । अतिकः, परमकः ।

निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।।
(प्रयोजनभाष्यम्)
उदः स्थास्तम्भोः पूर्वत्वे प्रयोजनम् । उदस्थात्, उदस्थाताम् । अटि कृते साट्कस्य पूर्वसवर्णः प्राप्नोति उदः स्थास्तम्भोः--- इति ।
निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।।
यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?
अटा व्यवहितत्वात् ।।
सा तर्ह्येषा परिभाषा कर्तव्या ।
न कर्तव्या । उक्तं षष्ठी स्थानेयोगा (1-1-49) इत्येतस्य योगस्य वचने प्रयोजनम्---षष्ठ्यन्तं स्थानेन
यथा युज्यते, यतः षष्ठी उच्चारितेति ।।
-6-4-132- वाह ऊठ् (3130)
(संप्रसारणाधिकरणम्)
(ऊङः स्थाननिर्णयभाष्यम्)
ऊडादिः कस्मान्न भवति, आदिष्टिद्भवतीत्यादिः प्राप्नोति ?
संप्रसारणमित्यनेन यणः स्थाने क्रियते ।
यद्येवम्---
(6601 ऊड्विधानानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- वाह ऊड्वचनार्थक्यं संप्रसारणेन कृतत्वात् -
वाह ऊड्वचनमनर्थकम् ।
किं कारणम् ?
संप्रसारणेन कृतत्वात् । संप्रसारणेनैव सिद्धम् ।
का रूपसिद्धिः ? प्रष्ठौहः पश्य ।।
(6602 संप्रसारणविधाने सिद्धसाधकवार्तिकम् ।। 2 ।।)
- गुणः प्रत्ययलक्षणत्वात् -
प्रत्ययलक्षणेन गुणो भविष्यति ।।
(6603 संप्रसारणे वृद्धिसाधकवार्तिकम् ।। 3 ।।)
- एज्ग्रहणा वृद्धिः -
एज्ग्रहणा वृद्धिर्भविष्यति ।।
(अन्तरङ्गपरिभाषाज्ञापकभाष्यम्)
एवं तर्हि सिद्धे सति यद्वाह ऊठं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा---असिद्धं
बहिरङ्गलक्षणमन्तरङ्गलक्षण इति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
पचावेदम् । पचामेदम् । असिद्धत्वात् बहिरङ्गलक्षणस्याद्गुणस्यान्तरङ्गलक्षणमैत्वं न भवति---इति ।।
-6-4-133- श्वयुवमघोनामतद्धिते (3131)
(6604 पूर्वपक्षिण उपसंख्यानवार्तिकम् ।। 1 ।।)
- श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् -
श्वादीनां संप्रसारणे नकारान्तग्रहणं कर्तव्यम् ।
किं कारणम् ?
अनकारान्तस्य मा भूत् । मघवता, मघवते ।।
तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति---यूनः पश्येति, एवं युवतीः पश्येत्यत्रापि स्यादिति ।।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
यत्तावदुच्यते---नकारान्तग्रहणं कर्तव्यमिति ।
न कर्तव्यम् ।।
(6605 आनर्थक्यसाधकवार्तिकम् ।। 2 ।।)
- उक्तं वा -
किमुक्तम् ?
उक्तमेतत् अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् । इति ।
यदप्युच्यते---तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति यथेह भवति यूनः पश्यति, एवं
युवतीः पश्येत्यत्रापि स्यात् इति ।
लिङ्गविशिष्टग्रहणे चोक्तम् ।

।न वा विभक्तौ लिङ्गविशिष्टाग्रहणात् इति ।।
अथवा---
उपरिष्टाद्योगविभागः करिष्यते---श्वयुवमघोनामतद्धिते अल्लोपः, अकारस्य च लोपो भवति । ततः---अनः इत्युभयोः शेषः ।।
-6-4-135- षपूर्वहन्धृतराज्ञामणि (3133)
(लोपाधिकरणम्)
(षपूर्वादिग्रहणे पक्षद्वयोपस्थापकं भाष्यम्)
अथ किमिदं षपूर्वादीनां पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम् ।
कथं वा अल्लोपार्थम्, कथं वा नियमार्थम् ?
यद्यविशेषेणाल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम् ।
अथ हि अणि टिलोपस्यैव प्रकृतिभावस्ततो नियमार्थम् ।
अत उत्तरं पठति---
(6606 अल्लोपपक्षस्थापकवार्तिकम् ।। 1 ।।)
- षपूर्वादीनां पुनर्वचनमल्लोपार्थम् -
षपूर्वादीनां पुनर्वचनं क्रियते अल्लोपार्थम् । अविशेषेणाल्लोपटिलोपयोः प्रकृतिभावः ।।
(6607 नियमपक्षे दोषदर्शकं वार्तिकम् ।। 2 ।।)
- अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः -
अवधारणे हि अन्यत्र प्रकृतिभावे उपधालोपः प्रसज्येत ।
कथम् ?
यदि तावदेवं नियमः स्यात्---षपूर्वादीनामेवाणीति ।
एवमपि भवेदिह नियमान्न स्यात्---सामनः वैमन इति । ताक्षण्य इत्यत्र प्राप्नोति ।
अथाप्येवं नियमः स्यात्---षपूर्वादीनामण्येवेति ।
एवमपि भवेदिह नियमान्न स्यात्---ताक्षण्य इति । सामनो वैमन इत्यत्र तु प्राप्नोति ।
अथाप्युभयतो नियमः स्यात्---षपूर्वादीनामेवाणि, अण्येव षपूर्वादीनामिति ।
एवमपि सामन्यो वेमन्य इति प्राप्नोति ।
तस्मात्सुष्ठूच्यते---षपूर्वादीनां पुनर्वचनमल्लोपार्थम् अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः इति ।।
-6-4-140- आतो धातोः (3138)
(6608 उपसंख्यानवार्तिकम् ।। 1 ।।)
- आतोऽनापः -
आतोऽनाप इति वक्तव्यम् ।
इहापि यथा स्यात्---समासेऽनञ्पूर्वे क्त्वो ल्यप् (7-1-37) इति ।।
अनाप इति किम् ?
खट्वायाम्, मालायाम् ।।
(वार्तिकावतरणभाष्यम्)
श्नो यद्यनाप इत्युच्यते कथं क्त्वायाम् ?
(6609 प्रयोगसाधकवार्तिकम् ।। 2 ।।)
- निपातनादिति -
निपातनादेतत्सिद्धम् ।
किं निपातनम् ?
ठ।क्त्वायां वा प्रतिषेधः। इति ।।
(वार्तिकप्रत्याख्यानभाष्यम्)
यद्येवं नार्थः अनापः इत्यनेन ।
कथम् ?
समासेऽनञ्पूर्वे क्त्वो ल्यप् इति निपातनादेतत्सिद्धम् ।
कथं हलः श्नः शानज्झौ (3-1-83) इति ?
एतदपि निपातनात्सिद्धम् ।।
अथवा---
योगविभागः करिष्यते---आतः, आकारलोपो भवति । ततः---धातोः, धातोश्चाकारस्य लोपो भवतीति ।।
-6-4-141- मन्त्रेष्वाङ्यादेरात्मनः (3139)
(अतिव्याप्त्यापादकभाष्यम्)

मन्त्रेष्वात्मनः प्रत्ययमात्रे लोपः प्रसङ्क्तव्यः ।
इहापि यथा स्यात्---त्मन्या समञ्जन् । त्मनोरन्तरस्थ इति ।।
(अतिव्याप्तिनिरासभाष्यम्)
यदि प्रत्ययमात्रे लोप उच्यते कथं आत्मन एव निर्मिमीष्व इति ?
तस्मान्नार्थः प्रत्ययमात्रलोपेन ।
कथं---त्मन्या समञ्जन्, त्मनोरन्तरस्थ इति ?
छान्दसत्वात्सिद्धम् । दृष्टानुविधिश्छन्दसि भवति ।।
(6610 सूत्रांशप्रत्याख्यानवार्तिकम् ।। 1 ।।)
- आदिग्रहणानर्थक्यमाकारप्रकरणात् -
आदिग्रहणं चानर्थकम् ।
किं कारणम् ?
आकारप्रकरणात् । आतः इति वर्तते ।।
<M.5.354>
-6-4-142- ति विंशतेर्डिति (3140)
(पदकृत्यभाष्यम्)
तिग्रहणं किमर्थम्, न विंशतेर्डिति लोप इत्येवोच्येत ?
नैवं शक्यम् । विंशतेर्डिति लोपः इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत ।।
(तिग्रहणाभावेऽपि नियमार्थत्वबोधकभाष्यम्)
सिद्धोऽन्त्यस्य यस्य--- इति लोपेनैव । तत्रारम्भसामर्थ्यात्तिशब्दस्य भविष्यति ।।
(तिग्रहणप्रयोजनभाष्यम्)
कुतो नु खल्वेतत्---अनन्त्यार्थे आरम्भे तिशब्दस्य भविष्यति न पुनरङ्गस्येति ?
तस्मात्तिग्रहणं कर्तव्यम् ।।
अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति ?
निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति ।।
-6-4-143- टेः (3141)
(अभस्यापि टिलोपसाधकभाष्यम्)
अभस्योपसंख्यानं कर्तव्यम् । इहापि यथा स्यात् उपसरजः, मन्दुरज इति ।
डित्यभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति ।।
-6-4-144- नस्तद्धिते (3142)
(6611 उपसंख्यानवार्तिकम् ।। 1 ।।)
- नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् -
नकारान्तस्य टिलोपे सब्रह्मचारिन् पीठसर्पिन्कलापिन्कुथुमिन्तैतिलिन्जाजलिन्लाङ्गलिन्शिलालिन्शिखण्डिन्सूकरसद्मन्सुपर्वन्---इत्येतेषामुपसंख्यानं कर्तव्यम् ।
सब्रह्मचारिन्---सब्रह्मचारिण इमे---साब्रह्मचाराः । सब्रह्मचारिन् ।।
पीठसर्पिन्---पैठसर्पाः । पीठसर्पिन् ।।
कलापिन्---कालापाः । कलापिन् ।।
कुथुमिन्---कौथुमाः । कुथुमिन् ।।
तैतिलिन्---तैतिलाः । तैतिलिन् ।।
जाजलिन्---जाजलाः । जाजलिन् ।।
लाङ्गलिन्---लाङ्गलाः । लाङ्गलिन् ।।
शिलालिन्---शैलालाः । शिलालिन् ।।
शिखण्डिन्---शौखण्डाः । शिखण्डिन् ।।
सूकरसद्मन्---सौकरसद्माः । सूकरसद्मन् ।।
सुपर्वन्---सौपर्वाः । सुपर्वन् ।।
<M.5.355>
(उपसंख्यानभाष्यम्)
चर्मणः कोश उपसंख्यानं कर्तव्यम् । चार्मः कोशः ।।
(उपसंख्यानभाष्यम्)
अश्मनो विकार उपसंख्यानं कर्तव्यम् । अश्मनो विकार आश्मः ।।

शुनः संकोचे । शौवः सङ्कोचः ।।
(6612 उपसंख्यानवार्तिकम् ।। 1 ।।)
- अव्ययानां च सायम्प्रातिकाद्यर्थम् -
अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानं कर्तव्यम् ।
किं प्रयोजनम् ?
सायम्प्रातिकाद्यर्थम् ।
सायम्प्रातिकः, पौनः पुनिकः ।।
(अतिप्रसक्तिनिरासभाष्यम्)
शांश्वतिके प्रतिषेधो वक्तव्यः ।
न वक्तव्यः । निपातनादेतत्सिद्धम् ।
किं निपातनम् ?
येषां च विरोधः शाश्वतिकः (2-4-9) इति ।
एवं तर्हि---शाश्वते प्रतिषेधो वक्तव्यः । शाश्वतम् ।।
-6-4-148- यस्येति च (3146)
(सूत्रप्रयोजनभाष्यम्)
इवर्णस्य-इर्ति किमुदाहरणम् ?
हे दाक्षि, दाक्ष्या, दाक्षेयः ।
हे दाक्षि--इर्ति---यदि लोपो न स्यात्परस्य ह्रस्वत्वे कृते सवर्णदीर्घत्वं प्रसज्येत ।
दाक्ष्या इति---यदि लोपो न स्यात्परस्य यणादेशे कृते पूर्वस्य श्रवणं प्रसज्येत ।
दाक्षेय इति---यदि लोपो न स्यात्परस्य लोपे कृते पूर्वस्य श्रवणं प्रसज्येत ।।
(प्रयोजननिराकरणभाष्यम्)
नैतानि सन्ति प्रयोजनानि । सवर्णदीर्घत्वेनाप्येतानि सिद्धानि ।।
(प्रयोजनभाष्यम्)
इदं तर्हि---अतिसखेरागच्छति, अतिसखेः स्वम् ।
यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृते असखि इति प्रतिषेधः प्रसज्येत ।।
(6613 प्रतिषेधोपसंख्यानवार्तिकम् ।। 1 ।।)
- यस्येत्यादौ श्यां प्रतिषेधः -
यस्येत्यादौ श्यां प्रतिषेधो वक्तव्यः । काण्डे, कुड्ये, सौर्ये नाम हिमवतः शृङ्गे ।
स तर्हि प्रतिषेधो वक्तव्यः ।
(उपसंख्यानानर्थक्यबोधकभाष्यम्)
न वक्तव्यः ।
इह श्यामित्यपि प्रकृतं नेत्यपि । तत्राभिसम्बन्धमात्रं कर्तव्यम्---यस्येत्यादौ लोपो भवति, श्यां न ।।
(6614 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 2 ।।)
- इयङुवङ्भ्यां लोपो विप्रतिषेधेन -
इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन । इयङुवङोरवकाशः---श्रियौ, श्रियः । भ्रुवौ, भ्रुवः ।
लोपस्यावकाशः---कामण्डलेयः, भाद्रवाहेयः ।
इहोभयं प्राप्नोति---वात्सप्रेयः, लैखाभ्रेयः ।
लोपो भवति विप्रतिषेधेन ।।
(6615 विप्रतिषेधोपसंख्यानवार्तिकम् ।। 3 ।।)
- गुणवृद्धी च -
गुणवृद्धी चेयङुवङ्भ्यां भवतो विप्रतिषेधेन ।
गुणवृद्ध्योरवकाशः---चेता, गौः ।
इयङुवङोः स एव ।
इहोभयं प्राप्नोति---चयनम्, चायकः । लवनम्, लावकः ।
गुणवृद्धी भवतो विप्रतिषेधेन ।।
(6616 विप्रतिषेधप्रत्याख्यानवार्तिकम् ।। 4 ।।)
- न वेयङुवङादेशस्यान्यविषयवचनात् -
न वाऽर्थो विप्रतिषेधेन ।।
किं कारणम् ?

इयङुवङादेशस्यान्यविषये वचनात् । इयङुवङादेशोऽन्यविषये आरभ्यते ।
किं विषये ?
यणादेशविषये । स यथैव यणादेशं बाधते, एवं गुणवृद्धी अपि बाधेत ।।
(6617 प्रतिषेधोपसंख्यानवार्तिकम् ।। 5 ।।)
- तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः -
तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधो वक्तव्यः ।
(प्रतिषेधानर्थक्यबोधकभाष्यम्)
न वक्तव्यः ।
मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमियङुवङादेशो यणादेशं बाधिष्यते, गुणवृद्धी न बाधिष्यते ।।
-6-4-149- सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः (3147)
(6618 आक्षेपवार्तिकम् ।। 1 ।।)
- सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् -
सूर्यादीनामणन्तेऽप्रसिद्धिः । सौरी बलाका ।
किं कारणम् ?
अङ्गान्यत्वात् । अणन्तमेतदङ्गमन्यद्भवति ।।
लोपे कृते नाङ्गान्यत्वम् ।
स्थानिवद्भावादङ्गान्यत्वं भवति ।।
(6619 समाधानवार्तिकम् ।। 2 ।।)
- सिद्धं तु स्थानिवत्प्रतिषेधात् -
सिद्धमेतत् ।
कथम् ?
स्थानिवत्प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावः---यलोपविधिं प्रति न स्थानिवद्भवतीति ।
एवमपि न सिध्यति ।
किं कारणम् ?
अङ्गान्यत्वात् । अन्यो हि सूर्यशब्दः, अन्यः सौर्यशब्दः ।
नैष दोषः । एकदेशविकृतमनन्यवद्भवतीत्येवं भविष्यति ।।
(6620 प्रत्याक्षेपवार्तिकम् ।। 3 ।।)
- उपधाग्रहणानर्थक्यं च -
स्थानिवद्भावे चेदानीं प्रतिषिद्धे उपधाग्रहणमनर्थकम् ।
किं कारणम् ?
अन्त्य एव हि सूर्यादीनां यकारः ।
किं यातमेतद्भवति ?
सुष्ठु यातम्, साधु च यातम्, यदि प्राग्भादसिद्धत्वम् । अथ सह तेनासिद्धत्वम्, असिद्धत्वाल्लोपस्यानन्त्यो यकारो भवति ।।
(समाधानभाष्यम्)
यद्यपि सह तेनासिद्धत्वम्, एवमपि न दोषः ।
नैवं विज्ञायते---सूर्यादीनामङ्गानां यकारलोप इति ।
कथं तर्हि ?
अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकार इति ।
एवमपि सूर्यचरी अत्र प्राप्नोति ।
तस्मादुपधाग्रहणं कर्तव्यम् ।।
(6621 परिगणनोपसंख्यानवार्तिकम् ।। 4 ।।)
- विषयपरिगणनं च -
विषयपरिगणनं च कर्तव्यम् ।।
(6622 परिगणनवार्तिकम् ।। 5 ।।)
- सूर्यमत्स्ययोर्ङ्याम् -
सूर्यमत्स्ययोर्ङ्यामिति वक्तव्यम् । सौरी, मत्सी ।।
(6623 परिगणनवार्तिकम् ।। 6 ।।)
- सूर्यागस्त्ययोश्छे च -
सूर्यागस्त्ययोश्छे च ङ्यां चेति वक्तव्यम् । सौरी, सौरीयः । आगस्ती, आगस्तीयः ।।

(6624 परिगणनवार्तिकम् ।। 7 ।।)
- तिष्यपुष्ययोर्नक्षत्राणि -
तिष्यपुष्ययोर्नक्षत्राणि यलोपो वक्तव्यः । तैषम्, पौषः ।।
(6625 उपसंख्यानवार्तिकम् ।। 8 ।।)
- अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च -
अन्तिकस्य तसि कादिलोपो वक्तव्यः, आद्युदात्तत्वं च वक्तव्यम् । अन्तितो न दूरात् ।।
(उपसंख्यानभाष्यम्)
तमे तादेश्च कादेश्च लोपो वक्तव्यः । अग्ने त्वं नो अन्तमः । अन्तितमे अवरोहति ।।
(उपसंख्याने श्लोकवार्तिकम्)
तसीत्येष न वक्तव्यो
दृष्टो दाशतयेऽपि हि ।
द्यौ लोपोऽन्तिषदित्यत्र
अन्तिषत् ।।
(उपसंख्याने श्लोकवार्तिकम्)
तथाऽद्यौ येऽन्त्यथर्वसु ।। 1 ।।
अन्ति ये च दूरके ।।
-6-4-153- बिल्वकादिभ्यश्छस्य लुक् (3151)
(छग्रहणप्रत्याख्यानभाष्यम्)
छग्रहणं शक्यमकर्तुम् ।
इह कस्मान्न भवति---बिल्वकेभ्यः ?
भस्येति वर्तते ।।
एवमपि बिल्वकायेत्यत्र प्राप्नोति ।
तद्धितस्येति वर्तते ।।
एवमपि बिल्वकस्य विकारः---अवयवो वा---बैल्वकः, अत्र प्राप्नोति ।
तद्धिते तद्धितस्य इति वर्तते ।।
एवमपि बिल्वकीयायां भवो बैल्वकः, बैल्वकस्य किञ्चित्---बैल्वकीयम्, अत्र प्राप्नोति ।
न स बिल्वकात् ।
बिल्वकादिभ्यो यो विहित इत्युच्यते, न चासौ बिल्वकशब्दाद्विहितः ।
किं तर्हि ?
बिल्वकीयशब्दात् ।।
(ज्ञापनेन छग्रहणप्रयोजनसाधकभाष्यम्)
एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यः---भवत्येषा परिभाषा सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभाव इति । तस्माच्छग्रहणं कर्तव्यम्, छस्यैव लुग्यथा स्यात् कुको मा भूदिति ।।
-6-4-154- तुरिष्ठेमेयः सु (3151)
(वार्तिकावतरणभाष्यम्)
तुः सर्वस्य लोपो वक्तव्यः, अन्त्यस्य मा भूदिति ।
स तर्हि वक्तव्यः ?
न वक्तव्यः ।।
(6626 उपसंख्यानसाधकवार्तिकम् ।। 1 ।।)
- सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् -
तुः सर्वलोपो विज्ञायते ।
कुतः ?
अन्त्यस्य वचनानर्थक्यात् । अन्त्यस्य लोपवचने प्रयोजनं नास्तीति कृत्वा सर्वस्य भविष्यति ।।
अथवा---
लुक् प्रकृतः सोऽनुवर्तिष्यते ।।
अशक्यो लुगनुवर्तयितुम् ।
किं कारणम् ?
विजयिष्ठकरिष्ठयोर्गुणदर्शनात् । विजयिष्ठकरिष्ठयोर्गुणो दृश्यते । विजयिष्ठः । आसुतिङ्करिष्ठः ।।
-6-4-155- टेः (3153)

(6627 उपसंख्यानवार्तिकम् ।। 1 ।।)
- णाविष्ठवत्प्रातिपदिकस्य -
णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः ।
किं प्रयोजनम् ?
(6628 उपसंख्यानप्रयोजनवार्तिकम् ।। 2 ।।)
- पुंवद्भावरभावटिलोपयणादिपरार्थम् -
पुंवद्भावार्थम्---एनीमाचष्टे---एतयति, श्येतयति ।
रभावार्थम्---पृथुमाचष्टे---प्रथयति, म्रदयति ।
टिलोपः---पटुमाचष्टे---पटयति ।
यणादिपरार्थम्---दूरमाचष्टे---दवयति ।
किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् ?
उदारणमात्रमित्याह । प्रादयोऽपि हीष्यन्तेप्रियमाचष्टे प्रापयति---इति ।।
(मतान्तरप्रदर्शकभाष्यम्)
भारद्वाजीयाः पठन्ति---णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थम् इति ।।
-6-4-159- इष्ठस्य यिट् च (3157)
(यिशब्दे प्रकारद्वयदर्शकं भाष्यम्)
किमयं यिशब्द आहोस्विद्यकारः ?
किञ्चातः ?
यदिलोपोऽप्यनुवर्तते, ततो यिशब्दः । अथ निवृत्तं, ततो यकारः ।।
-6-4-160- ज्यादादीयसः (3158)
(लोपानुवर्तनाभावेन परिभाषाज्ञापकभाष्यम्)
किमर्थं ज्यात्परस्येयस आत्वमुच्यते, न लोपः प्रकृतः सोऽनुवर्तते ?
का रूपसिद्धिः ?
ज्यायान् । अकृद्यकार इति दीर्घत्वं भविष्यति ।
एवं तर्हि सिद्धे सति यत् ज्यात्परस्येयस आत्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा---अङ्गवृत्ते पुनर्वृत्तावविधिरिति ।।
(ज्ञापकफलभाष्यम्)
किमेतस्य ज्ञापने प्रयोजनम् ?
पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ।।
(आत्वकरणेन परिभाषाज्ञापकभाष्यम्)
अथ किमर्थं ज्यात्परस्येयसो दीर्घ उच्यते, न अकार एवोच्येत ?
का रूपसिद्धिः ?
ज्यायान् । आन्तर्यतो दीर्घस्य दीर्घो भविष्यति ।
एवं तर्हि सिद्धे सति यद्दीर्घग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा---भाव्यमानेन सवर्णानां ग्रहणं नेति ।।
-6-4-161- र ऋतो हलादेर्लघोः (3159)
(अन्वयजिज्ञासाभाष्यम्)
कथमिदं विज्ञायते---हलादेरङ्गस्येति, आहोस्विद्धलादेर्ऋकारस्येति ?
युक्तं पुनरिदं विचारयितुम् ।।
(अङ्गविशेषणपक्षोपस्थापकभाष्यम्)
नन्वनेनासन्दिग्धेनाङ्गविशेषणेन भवितव्यम् ।
कथं ऋकारस्य नाम हल् आदिः स्यात्---अन्यस्यान्यः ?
(पक्षद्वयसम्भवानासमर्थकभाष्यम्)
अयमादिशब्दोऽस्त्येवावयववाची । तद्यथा---ऋगादिः, अर्धर्चादिः, श्लोकादिरिति ।
अस्ति सामीप्ये वर्तते । तद्यथा---दधिभोजनमर्थसिद्धेरादिः, दधिभोजनसमीपे ।
घृतभोजनमारोग्यस्यादिः, घृतभोजनसमीपे । यावता सामीप्येऽपि वर्तते जायते विचारणा हल्समीपस्य ऋकारस्य---इति, अथवा हलादेरङ्गस्येति ।।
(पक्षद्वयेऽपि दोषप्रदर्शकं भाष्यम्)
किञ्चातः ?
यदि विज्ञायते---हलादेरङ्गस्येति, अप्रथीयान्---अम्रदीयान्---अत्र न प्राप्नोति ।
अथ विज्ञायते---हलादेर्ऋकारस्येति, अनृचीयान्---अत्रापि प्राप्नोति ।

उभयथा स्वृचीयानित्यत्र प्राप्नोति । यथेच्छसि तथाऽस्तु ।।
(अङ्गविशेषणपक्षे दोषवारकभाष्यम्)
अस्तु तावत्---हलादेरङ्गस्येति ।
कथमप्रथीयान्---इति ?
तद्धितान्तेन समासो भविष्यति । न प्रथीयान् अप्रथीयानिति ।
भवेत्सिद्धं यदा तद्धितान्तेन समासः ।
यदा तु खलु समासात्तद्धितोत्पत्तिस्तदा न सिध्यति ।
न वै समासात्तद्धितोत्पत्त्या भवितव्यम् ।
किं कारणम् ?
बहुव्रीहिणोक्तार्थत्वान्मत्वर्थस्य ।।
(अङ्गविशेषणपक्षे दोषभाष्यम्)
भवेद्यदा बहुव्रीहिस्तदा न स्यात् ।
यदा तु खलु तत्पुरुषस्तदा प्राप्नोति---न पृथुः---अपृथुः । अयमपृथुः, अयमप्यपृथुः, अयमनयोरतिशयेनापृथुः---अप्रथीयानिति ।
(दोषवारकभाष्यम्)
न समासादजादिभ्यां भवितव्यम् ।
किं कारणम् ?
गुणवचनादित्युच्यते, न च समासो गुणवचन इति ।।
(प्रकारान्तरप्राप्तदोषवारकभाष्यम्)
यदा तर्हि समासाद्विन्मतुपौ, विन्मतुबन्तादजादी तदा प्राप्नुतः । अविद्यमानाः पृथवोऽपृथवः, अपृथवोऽस्य सन्ति---अपृथुमान् । अयमपृथुमान्, अयमप्यपृथुमान् । अयमनयोरतिशयेनापृथुमान्---अप्रथीयानिति ।
नैष दोषः । अपृथव एव न सन्ति, कुतो यस्यापृथव इति ।।
(सिद्धान्तपक्षस्थापकभाष्यम्)
इह कस्मान्न भवति---मातयति, भ्रातयति ।
लोपोऽत्र बाधको भविष्यति ।
इदमिह सम्प्रधार्यम्---लोपः क्रियतां रभाव इति, किमत्र कर्तव्यम् ?
परत्वाद्रभावः ।।
यदि पुनरवशिष्टस्य रभाव उच्यते ।
नैवं शक्यम्, इहापि प्रसज्येत---कृतमाचष्टे कृतयति ।
एवं तर्हि परिगणनं क्रियते---
पृथुमृदुभृशकृशदृढपरि-
वृढानामिति वक्तव्यम् ।।
-6-4-163- प्रकृत्यैकाच् (3161)
(प्रकृतिभावाधिकरणम्)
(विषयनिर्धारणोपक्रमभाष्यम्)
प्रकृत्यैकाजिति किमिष्ठेमयस्सु, आहोस्विदविशेषेण ?
किञ्चातः ?
(अविशेषेण इति पक्षे दोषवारकभाष्यम्)
यद्यविशेषेण; स्वी, खी, शौवम्, अधुना---अत्रापि प्राप्नोति ।
स्विखिनावेन न स्तः ।
कथम् ?
उक्तमेतत्---
एकाक्षरात्कृतो जातेः
सप्तम्यां च न तौ स्मृतौ ।
स्ववान्, खवानित्येव भवितव्यम् ।
शौवमिति, परत्वादैजागमे कृते टिलोपेन भवितव्यम् ।
अधुना---इति, सप्रकृतिकस्य सप्रत्ययकस्य स्थाने निपातनं क्रियते ।।
(विषयविशेषनिगमकं भाष्यम्)
इह तर्हि प्राप्नोति---द्रव्यम् ।
यस्य--- इत्यादौ प्रकृतिभावः । यस्य--- इति यस्य लोपप्राप्तिस्तस्य प्रकृतिभावः, न चैतानि यस्य--- इत्यादौ ।।

(इष्ठेमेयः सु प्रकृतिभावस्थापकभाष्यम्)
एवमपि श्रियै हितः---श्रीयः, ज्ञा देवताऽस्य स्थालीपाकस्य---ज्ञः स्थालीपाक इत्यत्र प्राप्नोति । तस्मादिष्ठेमेयस्सु प्रकृतिभावः ।।
(वार्तिकावतरणे उदारहणदर्शकभाष्यम्)
अथेष्ठेमेयस्सु प्रकृतिभावे किमुदाहरणम् ?
प्रेयान्, प्रेष्ठः ।
नैतदस्ति । प्रादीनामसिद्धत्वान्न भविष्यति ।
इदं तर्हि---श्रेयान्, श्रेष्ठः ।।
(6629 इष्ठेमेयः सु प्रकृतिभावाक्षेपवार्तिकम् ।। 1 ।।)
- प्रकृत्यैकाजिष्ठेमेयस्सु चेदेकाच उच्चारणसार्मथ्यादवचनात्प्रकृतिभावः -
प्रकृत्यैकाजिष्ठेमेयः सु चेत्तन्न ।
किं कारणम् ?
एकाच उच्चारणसामर्थादन्तरेणापि वचनं प्रकृतिभावो भविष्यति ।।
(प्रकृतिभावप्रयोजनभाष्यम्)
विन्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः । स्रग्वितरः---स्रजीयान् । स्रग्वितमः---स्रजिष्ठः । स्रग्वत्तरः---स्रुचीयान् । स्रग्वत्तमः---स्रुचिष्ठः ।।
(प्रयोजनाक्षेपभाष्यम्)
ननु च विन्मतोर्लुक् टिलोपं बाधिष्यते ।।
(प्रत्याक्षेपभाष्यम्)
कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ?
असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात् ।
यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते, एवं नस्तद्धिते (144) इत्येतमपि बाधेत । यतरो नौ ब्रह्मीयान्---ब्रह्मवत्तर इति ।।
(आक्षेपप्रत्याक्षेपयोः समाधानभाष्यम्)
यत्तावदुच्यते---कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्---इति ।
इदं तावदयं प्रष्टव्यः---यदि तर्हि विन्मतोर्लुङ्नोच्येत किमिह स्यात्---इति ।
टिलोप इत्याह ।
टिलोपश्चेत्, नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति ।।
यदप्युच्यते---असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात्---इति ।
सत्यपि सम्भवे बाधनं भवति । तद्यथा---ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय---इति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि सम्भवे विन्मतोर्लुक् टिलोपं बाधिष्यते ।
यदप्युच्यते---यथैव खल्वपि विन्मतोर्लुक्टिलोपं बाधते, एवं नस्तद्धिते इत्येतमपि बाधेत ।
न बाधते ।
किं कारणम् ?
येन नाप्राप्ते तस्य बाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते, नस्तद्धिते इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च ।।
अथवा---
पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते-इत्येवं विन्मतोर्लुक् टिलोपं बाधिष्यते, नस्तद्धिते इत्येतन्न बाधिष्यते ।।
(आक्षेपसमाधानभाष्यम्)
यदि तर्हि विन्मतोर्लुक् टिलोपं बाधते, पयिष्ठ इति न सिध्यति; पयसिष्ट इति प्राप्नोति ।
यथालक्षणमप्रयुक्ते---इति ।।
(6630 उपसंख्यानवार्तिकम् ।। 2 ।।)
- प्रकृत्याऽके राजन्यमनुष्ययुवानः -
राजन्यमनुष्ययुवानोऽके प्रकृत्या भवन्तीति वक्तव्यम् । राजन्यकम्, मानुष्यकम्, यौवनिका ।।
-6-4-170- न मपूर्वोपत्येऽवर्मणः (3168)
(विकल्पोपसंख्यानभाष्यम्)
मपूर्वात्प्रतिषेधे वा हितनाम्न इति वक्तव्यम् । हैतनामः, हैतनामनः । आरोहितो वै हैतनामः । आरोहितो वै हैतनामनः । समानो हैतनामः । समानो हैतनामन इति ।।
-6-4-171- ब्राह्मोऽजातौ (3169)
(सूत्रे पक्षद्वयोपस्थापकं भाष्यम्)
अथ किमिदं ब्राह्मस्याजातावनो लोपार्थं वचनमाहोस्विन्नियमार्थम् ?
कथं वाऽनो लोपार्थं स्यात्कथं च नियमार्थम् ?
यदि तावत् अपत्ये इति वर्तते ततो नियमार्थम् ।

अथ निवृत्तं ततो लोपार्थम् ।
(वार्तिकावतरणभाष्यम्)
अत उत्तरं पठति---
ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते । अपत्ये इति निवृत्तम् ।।
(6631 विधावुपसंख्यानवार्तिकम् ।। 1 ।।)
- तत्राप्राप्तविधाने प्राप्तप्रतिषेधः -
तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य प्रतिषेधो वक्तव्यः । ब्राह्मणः ।।
(6632 उपसंख्यानानर्थक्यबोधकवार्तिकम् ।। 2 ।।)
- न वा पर्युदाससामर्थ्यात् -
न वा वक्तव्यः ।
किं कारणम् ?
पर्युदाससामर्थ्यात्, पर्युदासोऽत्र भविष्यति ।।
(आक्षेपभाष्यम्)
अस्त्यन्यत्पर्युदासे प्रयोजनम् ।
किम् ?
या जातिश्च नापत्यम्---ब्राह्मी ओषधिरिति ।।
(प्रत्याक्षेपभाष्यम्)
न वै अत्रेष्यते ।
अनिष्टं च प्राप्नोति, इष्टं च न सिध्यति ।।
(समाधानभाष्यम्)
एवं तर्ह्यनुवर्तते अपत्ये इति । नात्र अपत्ये इत्यनेन निपातनमभिसम्बध्यते---ब्राह्म इति निपात्यते अपत्येऽजाताविति ।
किं तर्हि ?
प्रतिषेधोऽभिसम्बध्यते---ब्राह्म इति निपात्यते, अपत्ये जातौ नेति ।।
-6-4-172- कार्मस्ताच्छील्ये (3170)
(सूत्राक्षेपभाष्यम्)
किमर्थमिदमुच्यते, न नस्तद्धिते (144) इत्येव सिद्धम् ?
न सिध्यति । अन् अणीति प्रकृतिभावः प्रसज्येत ।।
(ज्ञापनेन समाधानभाष्यम्)
अणीत्युच्यते, णश्चायम् ।
एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यः---ताच्छीलिकेऽण्कृतानि भवन्ति---इति ।
किमेतस्य ज्ञापने प्रयोजनम् ?
चौरी, तापसी---इति अणन्तादितीकारः सिद्धो भवति ।।
-6-4-174- दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि (3172)
(वार्तिकावतरणभाष्यम्)
अत्र भ्रौणहत्येति किं निपात्यते ?
यकारादौ तद्धिते तत्वं निपात्यते ।।
(6633 निपातनानर्थक्यबोधकवार्तिकम् ।। 1 ।।)
- भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् -
भ्रौणहत्ये तत्वनिपातनमनर्थकम् ।
किं कारणम् ?
सामान्येन कृतत्वात् । सामान्येनैवात्र तत्वं भविष्यति---हनस्तोऽचिण्णलोः (7-3-32) इति ।।
(6634 ज्ञापनेन निपातनसार्थक्यबोधकवार्तिकम् ।। 2 ।।)
- ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य -
एवं तर्हि ज्ञापयत्याचार्यः---तद्धिते तत्वं न भवतीति ।।
किमेतस्य ज्ञापने प्रयोजनम् ?
भ्रौणघ्नो वार्त्रघ्न इत्यत्र तत्वं न भवति ।।
(6635 उपसंख्यानवार्तिकम् ।। 3 ।।)
- ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन -
ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन कर्तव्यम् । ऐक्ष्वाकः, ऐक्ष्वाकः ।।

(उपसंख्यानसाधकभाष्यम्)
एकश्रुतिनिर्देशात्सिद्धम् ।
एकश्रुतिः---स्वरसर्वनाम, यथा नपुंसकं लिङ्गसर्वनाम ।।
(वार्तिकावतरणभाष्यम्)
अथ मैत्रेये किं निपात्यते ।।
(6636 मैत्रेयनिपातनबोधकवार्तिकम् ।। 4 ।।)
- मैत्रेय यादिलोपनिपातनम् -
मैत्रेये ढञ्ञि यादिलोपो निपात्यते ।।
(मित्रयुशब्दस्य चतुर्ग्रहणाक्षेपभाष्यम्)
इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते---गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रियते, द्वितीयेऽध्याये---यस्कादिषु लुगर्थं क्रियते, सप्तमेऽध्याये---इयादेशार्थम्, इदं चतुर्थं---यादिलोपार्थम् ।
द्विर्ग्रहणं शक्यमकर्तुम् । बिदादिष्विञ्ञि प्रत्ययविध्यर्थं पाठः कर्तव्यः । तत्र नैवार्थो लुका नापि यादिलोपेन । इयादेशेनैव सिद्धम् ।।
(समाधानभाष्यम्)
नैवं शक्यम् । इह हि---मैत्रेयकः सङ्घ इति सङ्घाङ्कलक्षणेष्वञ्यञिञामण् (4-3-127) इत्यण् प्रसज्येत ।।
(वार्तिकावतरणभाष्यम्)
हिरण्मये किं निपात्यते ?
(6637 निपातनबोधकवार्तिकम् ।। 5 ।।)
- हिरण्मये यलोपवचनम् -
हिरण्मये यलोपो निपात्यते । हिरण्मयं कलशं बिभर्षि ।।
(वार्तिकावतरणभाष्यम्)
अथ हिरण्यये किं निपात्यते ?
(6638 निपातनबोधकवार्तिकम् ।। 6 ।।)
- हिरण्यये छन्दसि मलोपवचनात्सिद्धम् -
हिरण्यये छन्दसि मलोपो निपात्यते । हिरण्ययी नौरभवत् । हिरण्ययाः पन्थान आसन् । हिरण्ययमासनम् ।।
इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ।।
-9-9-999-

# महाभाष्यम्/सप्तमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/nn0

< महाभाष्यम् | सप्तमोऽध्यायः

7-1

-7-1-1- युवोरनाकौ

युवोरनाकावित्युच्यते कयोर्युवोरनाकौ भवतः ? ।। प्रत्यययोः ।। कथं पुनरङ्गस्येत्यनुर्तमाने प्रत्यययोः स्याताम् ? ।। युशब्दवुशब्दान्तमेतद्विभक्तावङ्गं भवति ।। यदि युशब्दवुशब्दान्तस्याऽङ्गस्यानाकौ भवतः, सर्वादेशौ प्राप्नुतः ।। निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भवष्यितः ।। यत्र तर्हि विभक्तिर्नास्ति-नन्दना(1) कारिकेति ? ।। अत्रापि प्रत्ययलक्षणेन विभक्तिः ।। यत्र तर्हि प्रत्ययलक्षणं नास्ति-नन्दनप्रियः कारकप्रिय ःथ्य;ति ।।

मा भूतां यासौ सामासिकी विभक्तिस्तस्याम्(2), यासौ समासद्विभक्तिस्तस्यां(3) भविष्यतः ।। न(4) वैतस्यां युशब्दवुशब्दान्तमङ्गं भवति ।। भवेद्यो(5) युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्तस्यानन्त्ययोर्न स्यातां, वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयिष्यामः, -अङ्गस्य युवारनाकौ भवतो यत्र तत्रस्थयोरिति ।।

यत्र तर्हि समासद्विभक्तिर्नास्ति-नन्दनदधि कारकदधि ? ।। एवं तर्हि ।। नवा(1) परं निमित्तं संज्ञा च प्रत्ययलक्षणेन(2) ।। न चेह(3)परं निमित्तमाश्रीयते- अस्मिन्परतो युवोरनाकौ भवत ःथ्य;ति ।किं तर्हि?।। अङ्गस्य युवोरनाकौ भवतःथ्य;ति। अङ्गसंज्ञा च(4) भवति प्रत्ययलक्षणेन ।

अथ वा तयोरेव यदङ्गं तन्निमित्तत्वोनाश्रयिष्यामः ।। कथम् ? ।। अङ्गस्येति संबन्धसामान्ये षष्ठी विज्ञास्यते, -अङ्गस्य यौ युवू ।। किं चाङ्गस्य युवू ? ।। निमित्तम् । ययोर्युवोरङ्गमित्येतद्भवति ।। कयोश्चैतद्भवति ? ।। प्रत्यययोः ।

।। युवोरनाकाविति चेद्धातुप्रतिषेधः ।। युवोरनाकाविति चेद्धातुप्रतिषेधो वक्तव्यः । युत्वा । युतः । युतवान्(1) । ।। भुज्य्वादीनां(2) च ।। भुज्यवादीनाञ्च प्रतिषेधो वक्तव्यः । भुज्यः । कंयुः । शंयुः । ।। अनुनासिकपरत्वात्सिद्धम् । ।। (अनुनासिकपरत्वात्सिद्धमेतत्(3) ।। कथम्(1) ? ।।) अनुनासिकपरयोर्युवोर्ग्रहणं, न चैतावनुनासिकपरौ ।। यद्यनुनासिकपरयोर्ग्रहणं-नन्दनः कारकः, अत्र न प्राप्नुतः, नह्येताभ्यां युशब्दवुशब्दाभ्यामनुनासिकं परं पश्यामः ।। अनुनासिकपरत्वादिति नैवं विज्ञायतेऽनुनासिकः पर आभ्यां ताविमावनुनासिकपरौ, अनुनासिकपरत्वादिति ।। कथं तर्हि ? ।। अनुनासिकः परोऽनयोस्ताविमावनुनासिकपरौ, अनुनासिकपरत्वादिति ।। यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञा प्राप्नोति ।। तत्र को दोषः ? ।। ।। तत्र ङीम्नुमोः प्रतिषेधः । ।। (तत्र(2)) ङीम्नुमोः प्रतिषेधो वक्तव्यः । नन्दनः कारकः । नन्दना कारिका । उगिल्लक्षणौ ङीम्नुमौ प्राप्नुतः ।। धात्वन्तस्य च (प्रतिषेधः(2)) ।। धात्वन्तस्य च प्रतिषेधो वक्तव्यः । दिवु सिवु ।। षिट्टित्करणं तु ज्ञापकमुगित्कार्याऽभावस्य ।। यदयं युशब्दवुशब्दौ षिट्टितौ करोति शिल्पिनि ष्वुन् ट्युट्युलौ तुट्चेति. तज्ज्ञापयत्याचार्यो न युवोरुगित्कार्यं भवतीति ।। कथं कृत्वा ज्ञापकम् ? ।। षिट्टित्करणे एतत्प्रयोजनं षिट्टिति ःथ्य;तीकारो यथा स्यात् । यदि चात्रोगित्कार्यं स्यात् षिट्टित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो, -न युवोरुगित्कार्यं भवतीति, ततो युशब्दवुशब्दौ षिट्टितौ करोति ।। न वा-षित्करणं ङीष्विधानार्थम् ।। नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ।। किम् ? ।। (षित्करणं ङीष्विधानार्थम्(1)) । षित्करणं क्रियते ङीष्विधानार्थम् । षित ःथ्य;ति ङीष्यथा स्यात् ।। टित्करणमनुपसर्जनार्थम् ।। टित्करणेऽप्यन्यत्प्रयोजनमस्ति ।। किम् ? ।। अनुपसर्जनाट्टित ःथ्य;तीकारो यथा स्यात् ।। टितोऽनुपसर्जनाद्भवति, उगित उपसर्जनाच्चानुपसर्जनाच्च । एवं तर्हि,।। विप्रतिषेधाट्टापो(1) बलीयस्त्वम् ।। विप्रतिषेधाट्टापो बलीयस्त्वं भविष्यति । टापोऽवकाशः-खट्वा माला । ङीपोऽवकाशः-गोमती यवमती । ःथ्य;होभयं प्राप्नोति नन्दना कारिका । टाब्भवति विप्रतिषेधेन ।। नैष युक्तो विप्रतिषेधः, विप्रतिषेधे परमित्युच्यते पूर्वश्च टाप् परो ङीप् ।। ङीपः परष्टाप् करिष्यते ।। सूत्रविपर्यासः कृतो भवति ।। एवं तर्हि उगितो ङीब्भवतीत्यत्रात्यतष्टाबित्यनुवर्तिष्यते ।। एवमप्यकारान्तादुगित ःथ्य;हैव स्यात् नन्दना कारिका । गोमती यवमतीत्यत्र न स्यात् ।। एवं तर्हि संबन्धाऽनुवृत्तिः करिष्यते---अजाद्यतष्टाप् । ऋन्नेभ्योङीप् । अतष्टाप् ।। उगितश्च । ङीब्भवति(2) । अतष्टाप् । वनो र च । (वनो ङीब्भवति । उगितोऽतष्टाप्) पादोन्यतरस्यां । ङीब्भवति(1) । उगितः,

अतष्टाप् । ततः ऋचि । ऋचि (च) टाब्भवति । उगितोऽत ःथ्य;ति निवृत्तम् । तत्रायमप्यर्थो द्विष्टाब्ग्रहणं न

कर्तव्यं भवति प्रकृतमनुवर्तते ।। सिध्यत्येवं यत्त्विदं वार्तिककारः पठति--विप्रतिषेधाट्टापो(2) बलीयस्त्वमिति, एतदसङ्गृहीतं भवति ।। एतच्च सङ्गृहीतं भवति ।। कथम् ? ।। ःथ्य;ष्टवाची परशब्दो विप्रतिषेधे परं यदिष्टं तद्भवतीति ।। धात्वन्तस्य चार्थवद्ग्रहणात् ।। अर्थवतोर्युवोर्ग्रहणं । न च धात्वन्तोऽर्थवान् ।

।। नुम्विधौ झल्ग्रहणम् ।। नुम्विधौ झल्ग्रहणं कर्तव्यम् । झलन्तस्य उगित ःथ्य;ष्यते । उगिदचां सर्वनामस्थानेऽधातोर्झल ःथ्य;ति । तच्चावश्यं कर्तव्यम् ।। लिङ्गविशिष्टप्रतिषेधार्थम् ।। प्रतिपदिकग्रहणेलिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति गोमान् यवमान् एवं गोमती यवमतीत्यत्रापि स्यात् ।। न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्(3) ।। न वा वक्त्व्यम् ।। किं कारणम् ? ।। (ठविभक्तौ लिङ्गविशिष्टाऽग्रहणात्) ठविभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या ।। कः पुनरत्र विशेषः--एषा वा परिभाषा क्रियेत, झल्ग्रहणं वेति ? ।। अवश्यमेषा परिभाषा कर्तव्या, बहून्येतस्याः परिभाषायाः प्रयोजनानि ।। कानि ? ।।

।। प्रयोजनं शुनः स्वरे ।। (शुनः(1) स्वरे प्रयोजनम्) । यथेह भवति शुना शुने एवं शुन्या शुन्या ःथ्य;त्यत्रापि स्यात् ।। यूनः संप्रसारणे ।। यूनः(2) सम्प्रसारणे प्रयोजनम् । यथेह भवति यूनः पश्येति, एवं युवतीः पश्येत्यत्रापि स्यात् ।।उगिदचां नुम्विधौ।।।।। उगिदचां नुम्विधौ प्रयोजनम्। यथेह भवति--गोमान्,यवमान्,एवं गोमती यवमतीत्यत्रापि स्यात्।।।।। अनडुहश्चाम्विधौ(3) ।। अनडुहश्चाम्विधौ प्रयोजनम् । यथेह

भवति--अनड्वानित्येवमनडुहीत्यत्रापि स्यात् ।। न वा भवत्यनड्वाहीति ? ।। भवत्यन्येन यत्नेन आमनडुहः स्त्रियां वेति । लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति ।। पथिमथोरात्त्वे ।। पथिमथोरात्त्वे प्रयोजनम् । यथेह भवति पन्थाः मन्थाः--एवं पथी मथीत्यत्रापि प्राप्नोति ।। न केवलः पथिशब्दः स्त्रियां वर्तते ? ।। उपसमस्तस्तर्हि वर्तते सुपथीति ।। पुंसोऽसुङ्विधौ ।। पुंसोऽसुङ्विधौ प्रयोजनम् । यथेह भवति पुमान्, एवं पुंसीत्यत्रापि स्यात् ।। न केवलः पुंशब्दः स्त्रियां वर्तते ।। उपसमस्तस्तर्हि वर्तते--सुपुंसीति ।। सख्युर्णित्त्वानङौ ।। सख्युर्णित्तवानङौ प्रयोजनम् । यथेह भवति सखा सखायौ सखायः । एवं सखी सख्यौ ःथ्य;त्यत्रापि प्राप्नोति ।।

।। भवद्भगवदघवतामोद्भावे ।। भवद्भगवदघवतामोद्भावे प्रयोजनम् । यथेह भवति भोः भगोः अघोरिति; एवं भवति भगवति अघवतीत्यत्रापि स्यात् ।। एतान्यस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या, एतस्यां (च सत्यां(2)) नार्थो झल्ग्रहणेन ।।

तदेतदनन्यार्थं झल्ग्रहणं कर्तव्यं नुम्प्रतिषेधो वा वक्तव्यः ? ।। उभयं न वक्तव्यम् । उपरिष्टाज्झल्ग्रहणं क्रियते तत्पुरस्तादपक्रक्ष्यते(3) ।। एवमपि सूत्रविपर्यासः कृतो भवति ।। एवं तर्हि योगविभागः करिष्यते उगिदचां सर्वनामस्थानेऽधातोः । युजेरसमासे । ततो--नपुंसकस्य । नपुंसकस्य (च(2)) नुम् भवति । झल ःथ्य;त्युभयोः शेषः । ततोऽचः । अजन्तस्य च नपुंसक (लिङ्ग(2))स्य नुम्भवति ।।

यद्यपि तावदेतदुगित्कार्यं परिहृतमिदमपरं प्राप्नोति--शातनितरा पातनितरा । उगितो नद्या घादिषु ह्रस्वो भवतीत्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत, नित्यं चेष्यते ।। उगितो या नदी--एवमेतद्विज्ञायते ।। उगित एषा नदी ।। उगितो या परा ।। अत्र चैव दोषो भवति, उगितो ह्येषा परा नदी, ऐषुमतितरायां च प्राप्नोति ।। उगितो या परा विहिता ।। उगित एषा विहिता ।।उगितःथ्य;त्येवं या विहिता।। एवमपि भोगवतितरायां दोषो भवति--भोगवतितरा । भोगवतीतरा ।। तस्मादुगितो या नद्युगितो या विहितेत्येवमेतद्विज्ञास्यते ।। एवं विज्ञायमाने शातनितरायां दोष एव ।। सिद्धं तु युवोरनुनासिकत्वात् ।। सिद्धमेतत् ।। कथम् ? ।। यकारवकारयोरेवेदमनुनासिकयोरिह ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ।। (युवोरनाकौ) ।।

-7-1-2- आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्

।। आयनादिषु(1) उपदेशिवद्वचनं स्वरसिध्यर्थम् ।। आयन्नादिषूपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामायन्नादयो भवन्तीति वक्तव्यम् । किं प्रयोजनम् ? ।। स्वरसिध्यर्थम् । उपदेशावस्थायामायन्नादिषु ःथ्य;ष्टः स्वरो यथा स्यादिति । शिलेयम् । तैत्तिरीयः । अक्रियमाणे ह्युपदेशिवद्भावे

प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे कृते आन्तर्यत आदेशा अस्वरकाणामस्वरकाः स्युः ।। न वा क्व चिच्चित्करणात् (उपदेशिवद्वचनानर्थक्यम्(2)) ।। न वा वक्तव्यम् ।। किं कारणम् ? ।। क्व चिच्चित्करणात् । यदयं क्व चिद्धादींश्चितः करोति, अग्राहद्यद्धच्छौ च तज्ज्ञापयत्याचार्यः, -- उपदेशावस्थायामायन्नादयो भवन्तीति(1) ।। कथं कृत्वा ज्ञापकम् ? ।। चित्करणे एतत्प्रयोजनं चित ःथ्य;त्यन्तोदात्तत्वं यथा स्यादिति । यदि चोपदेशावस्थायामायन्नादयो भवन्ति ततश्चित्करणमर्थवद्भवति ।।

।। तत्रोणादिप्रतिषेधः ।। तत्रोणादीनां प्रतिषेधो वक्तव्यः । शङ्खः षण्ढ ःथ्य;ति ।। धातोर्वेयङ्वचनात् ।। अथ वा यदयमृतेरीयङिति धातोरीयङं शास्ति तज्ज्ञापयत्याचार्यो न धातुप्रत्ययानामायन्नादयो भवन्तीति । यदि हि स्युः ऋतेश्छङित्येव ब्रूयात् । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति न च ऋतेश्छङा सिध्यति । छङि सति वलादिलक्षण ःथ्य;ट् प्रसज्येत, ःथ्य;टि कृतेऽनादित्वादादेशो न स्यात् । ःथ्य;दमिह संप्रधार्यम् । ःथ्य;ट क्रियतामादेश ःथ्य;ति; किमत्र कर्तव्यम् ? । परत्वादिडागमः ।। नित्य आदेशः । कृतेऽपीटि प्राप्नोत्यकृतेऽपि ।। अनित्य आदेशो नहि कृत ःथ्य;टि प्राप्नोति ।। किं कारणम् ? ।। अनादित्वात् ।। अन्तरङ्गस्तर्ह्यादेशः ।। काऽन्तरङ्गता ? ःथ्य;दानीमेवह्युक्तमायन्नादिषूपदेशिवद्वचनं स्वरसिध्यर्थमिति । तदेतदृतेरीयङ्वचनं ज्ञापकमेव न धातुप्रत्ययानामायन्नादयो भवन्तीति ।।

।। प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ।। प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम् ।। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।। (आयनेयीनीयियः) ।।

-7-1-3- झोऽन्तः

।। 8 ।। झादेशे धात्वन्तप्रतिषेधः ।। झादेशे धात्वन्तस्य प्रतिषेधो वक्तव्यः । उज्झिता । उज्झितुमिति ।। प्रत्ययाधिकारात्सिद्धम् ।। (प्रत्ययाधिकारात्सिद्धमेतत्(1) ।। कथम् ? ।।) प्रत्ययग्रहणं प्रकृतमनुवर्तते ।। क्व प्रकृतम् ? ।। आयनेयीनीयियः फढखछघां प्रत्ययादीनामिति ।। प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशवचनम् ।। प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशो वक्तव्यः । अपि नः श्वो (वा(2)) विजनिष्यमाणाः पतिभिः सह शयान्तै ।। एवं तर्हि प्रत्ययग्रहणमनुवर्तते आदिग्रहणं निवृत्तम् ।। कथं पुनः समासनिर्दिष्टानामेकदेशोऽनुवर्तते एकदेशो वा निवर्तते ।। असमासनिर्देशात्सिद्धम् ।। (असमासनिर्देशात्सिद्धमेतत्(1) ।) असमासनिर्देशः करिष्यते--प्रत्ययस्यादीनामिति ।। स तर्ह्यसमासनिर्देशः कर्तव्यः ? ।। न कर्तव्यः । क्रियते न्यास एव ।। कथम् ? ।। अविभक्तिको निर्देशः, प्रत्यय आदीनामिति ।। तत्र शयान्ता ःथ्य;त्यनकारान्तत्वादङ्गस्याद्भावप्रततिषेधः ।। तत्रैतस्मिन्प्रत्ययग्रहणेऽनुवर्तमाने आदिग्रहणे निवृत्तेशयान्तै ःथ्य;त्यनकारान्तत्वादङ्गस्याऽद्भावः प्राप्नोति तस्य प्रतिषेधो वक्तव्यः ।। सिद्धमनानन्तर्यादनकारान्तेनाऽद्भावनिवृत्तिः ।। सिद्धमेतत् ।। कथम् ? ।। (ठअनानन्तर्यात्) । अनानन्तर्यादनकारान्तेनाद्भावो न भविष्यति । कथं कृत्वा चोदितं कथं कृत्वा परिभारः ।। अनकारान्तग्रहणं प्रत्ययविशेषणमिति कृत्वा चोदितम्, झकारविशेषणमिति कृत्वा परिहारः ।। यद्यनकारान्तग्रहणं झकारविशेषणं, शेरते अत्र न प्राप्नोति ।। तत्र रुटि सन्नियोगवचनात्सिद्धम् ।। तत्र रुटि सन्नियोगः करिष्यते ।। क एष यत्नश्चोद्यते सन्नियोगो नाम ? ।। चकारः कर्तव्यः, रुट्च ।। किं च ? ।। यच्चान्यत्प्राप्नोति ।। किं चान्यत्प्राप्नोति ? ।। अद्भावः ।। स तर्हि चकारः कर्तव्यः ? ।। न कर्तव्यः । योगविभागः करिष्यते--शीङः । शीङ उत्तरस्य झस्याद्भावो भवति । ततो-रुट् । रुट् च भवति शीङ ःथ्य;ति ।। एवमपि पर्यायः प्रसज्येत ।। एवं तर्हि अच्शब्दस्य रुटं वक्ष्यामि ।। तदच्छब्दग्रहणं कर्तव्यम् ? ।। न कर्तव्यम् । प्रकृतमनुवर्तते ? ।। क्व प्रकृतम् ? ।। अदभ्यस्तादिति ।। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ! ।। शीङःथ्य;त्येषा पञ्चमी अदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति, तस्मादित्युत्तरस्येति ।।

-7-1-6- शीङो रुट्

।। रुटि दृशिगुणप्रतिषेधः ।। रुटि दृशिगुणः प्राप्नोति । अदृशन्नस्य केतव ःथ्य;ति, -तस्य प्रतिषेधो वक्तव्यः ।। न वक्तव्यः, परस्मिन्निति क्ङितिचेति प्रतिषेधो भविष्यति ।। एवमदृश्रमस्य केतव ःथ्य;त्यत्रापि

प्राप्नोति ।। एवं तर्हि पूर्वान्तः करिष्यते ।। पूर्वान्ते शीङो गुणविधिः ।। पूर्वान्ते शीङो गुणो विधेयः शेरते ।।

(सिध्यत्येवं(1)) सूत्रं च भिद्यते ।। यथान्यासमेवास्तु ।। ननु चोक्तं रुटि दृशिगुणप्रतिषेध ःथ्य;ति ।। पूर्वान्तेप्येष दोषः ।। कथम् ? ।। अयं दृशिगुणः प्रतिषेधविषय आरभ्यते स यथा क्ङिति चेत्येतं प्रतिषेधं बाधते एवमनुपधाया अपि प्रसज्येत । तस्मादुभाभ्यामेव दृशोरक्प्रत्ययान्तरं वक्तव्यं, पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम् ।। झादेशादाड्लेटि ।। झादेशादाड् लेटि भवति विप्रतिषेधेन । झादेशस्यावकाशः --लुनते । लुनताम् । अलुनत । आटोऽवकाशः --पताति दियुत् । उदधिं च्यावयाति । ःथ्य;होभयं प्राप्नोति- अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै । आड् लेटि भवति विप्रतिषेधेन ।। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ।। न वा नित्यत्वादाटः ।। न वा वक्तव्यः ।। किं कारणम् ? ।। नित्यत्वादाटः । नित्य आडागमः ।। स कथं नित्यः ? ।। यद्यनकारान्तग्रहणं झकारविशेषणम् ।। अथ हि प्रत्ययविशेषणम् ? ।। झादेशोपि नित्यः । । अन्तरङ्गलक्षणत्वाच्च । । अन्तरङ्गः खल्वपि आडागमः ।। कथमन्तरङ्गः ? ।। यदि प्राग्लादेशाद्धात्वधिकारः ।। अथ हि लादेशे धात्वधिकारोऽनुवर्तते उभयं समानाश्रयम् ।। यद्येव अनकारान्तग्रहणं प्रत्ययविशेषणम्, अथापि लादेशे धात्वधिकारोऽनुवर्तते उभयथापि पूर्वविप्रतिषेधेन नार्थः ।। कथम् ? ।। बहुलं छन्दसीत्येवमत्र शपो लुङ्ग भविष्यति । तत्राऽनत ःथ्य;ति प्रतिषेधो भविष्यति ।। (शीङो रुट्) ।

-7-1-7- वेत्तेर्विभाषा

बहुलं छन्दसि।। अतो भिस ऐस् ।। बहुलं छन्दसि

।। ःथ्य;दं(1) द्विःक्रियते एकं शक्यमकर्तुम् ।। ःथ्य;दं बहुलं छन्दसीति द्विःक्रियते एकं शक्यमकर्तुम् ।। कथम् ? ।। यदि तावत्पूर्वं क्रियते परं न करिष्यते, अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुवर्तिष्यते । अथ परं क्रियते पूर्वं न(2) करिष्यते, बहुलं छन्दसीत्यत्र रुडप्यनुवर्त्तिष्यते ।। अपर आह -- (।। उमे(1) बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ।।) उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ।। कथम् ? ।। ःथ्य;दमस्ति वेत्तेर्विभाषा । ततः छन्दसि । छन्दसि च विभाषा । ततः (ठअतो भिस(3) ऐस् ।) अतो भिस ऐस् भवति । छन्दसि विभाषेति ।।

-7-1-8- बहुलं छन्दसि

वेत्तेर्विभाषा ।। अतो भिस ऐस् ।। बहुलं छन्दसि

।। ःथ्य;दं(1) द्विःक्रियते एकं शक्यमकर्तुम् ।। ःथ्य;दं बहुलं छन्दसीति द्विःक्रियते एकं शक्यमकर्तुम् ।। कथम् ? ।। यदि तावत्पूर्वं क्रियते परं न करिष्यते, अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुवर्तिष्यते । अथ परं क्रियते पूर्वं न(2) करिष्यते, बहुलं छन्दसीत्यत्र रुडप्यनुवर्त्तिष्यते ।। अपर आह -- (।। उमे(1) बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ।।) उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ।। कथम् ? ।। ःथ्य;दमस्ति वेत्तेर्विभाषा । ततः छन्दसि । छन्दसि च विभाषा । ततः (ठअतो भिस(3) ऐस् ।) अतो भिस ऐस् भवति । छन्दसि विभाषेति ।।

-7-1-9- अतो भिस ऐस्

ःथ्य;ह वृक्षैः ल्पक्षैरिति परत्वादेत्त्वं प्राप्नोति । (एत्वे कृते(3) विहतनिमित्तत्वादैस्त्वं न भविष्यति । ।। एत्वं(1) भिसि परत्वाच्चेदतऐस् क्व भविष्यति ? ।। )

ऐस्भाव ःथ्य;दानीं क्व भविष्यति ? ।। कृते एत्वे भौतपूर्व्यात् ।। कृते एत्वे भूतपूर्वमकारान्तमिति ऐस् भविष्यति ।। ऐस्तु नित्यस्तथा सति ।। एवं सति नित्य ऐस्भावः, कृतेऽप्येत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वादैस्त्वे कृते विहतनिमित्तत्वादेत्वं न भविष्यति ।।

।। एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ?

कृते एत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ।।

7-1-10- बहुलं छन्दसि

वेत्तेर्विभाषा ।। बहुलं छन्दसि ।। अतो भिस ऐस्

।। ःथ्य;दं(1) द्विःक्रियते एकं शक्यमकर्तुम् ।। ःथ्य;दं बहुलं छन्दसीति द्विःक्रियते एकं शक्यमकर्तुम् ।। कथम् ? ।। यदि तावत्पूर्वं क्रियते परं न करिष्यते, अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुवर्तिष्यते ।

अथ परं क्रियते पूर्वं न(2) करिष्यते, बहुलं छन्दसीत्यत्र रुडप्यनुवर्त्तिष्यते ।। अपर आह -- (।। उमे(1) बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ।।) उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ।। कथम् ? ।। ःथ्य;दमस्ति वेत्तेर्विभाषा । ततः छन्दसि । छन्दसि च विभाषा । ततः (ठअतो भिस(3) ऐस् ।) अतो भिस ऐस् भवति । छन्दसि विभाषेति ।।

-7-1-11- नेदमदसोरकोः

ःथ्य;मौ द्वौ प्रतिषेधावुच्येते उभौ शक्यावववक्तुम् ।। कथम् ? ।। एवं वक्ष्यामि--ःथ्य;दमदसोः(2) कादिति; तन्नियमार्थं भविष्यति- ःथ्य;दमदसोः कादेव नान्यत ःथ्य;ति ।। ( नेदमदसोरकोः ) ।।

-7-1-12-टाङसिङसामिनात्स्याः

किमर्थमिनादेश उच्यते न नादेश एवोच्येत ? ।। का रूपसिद्धिः --वृक्षेण प्लक्षेण ? ।। एत्वे योगविभागः करिष्यते ।। कथम् ? ।। ःथ्य;दमस्ति बहुवचने झल्येत् । ओसि च । ततः--आङि च । आङि च परतोऽत एत्वं भवति -- वृक्षेण प्लक्षेण । तत आपः संबुद्धौ च । आपः (सम्बुद्धौ(3) च--) आङि च ओसि चेति ।। नैवं शक्यम्---ःथ्य;ह हि अनेनेति ःथ्य;द्रूपलोपः प्रसज्येत ।। झलि लोपः करिष्यते ।। न शक्यो झलि लोपः कर्तुम्--ःथ्य;ह हि दोषः स्यात्--अया विष्ठेति ।। एवं तर्हि अन् लोपापवादो विज्ञास्यते ।। कथम् ? एवं वक्ष्यामि- अन् ने च आपि चेति । तन्नकारग्रहणं कर्तव्यम् ? ।। न कर्तव्यम् । क्रियते न्यास एव-लुप्तनिर्दिष्टो नकारः ।। यद्येवं नोपधाया ःथ्य;ति दीर्घत्वं प्राप्नोति ।। सौत्रौ निर्देशः ।। अथ वा नपुंसकनिर्देशः करिष्यते ।।

अथ किमर्थमादत्युच्यते, न अदेवोच्येत ।। का रूपसिद्धिः-वृक्षात्प्लक्षात् ?।। सवर्णदीर्घत्वेन सिद्धम् ।। न सिध्यति । अतो गुणे पररूपमिति पररूपत्वं प्राप्नोति ।। अकारोच्चारणसामर्थ्यान्न भविष्यति ।। यदि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति ।। नैषः दोषः(1) । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । पररूपं प्रत्यकारोच्चारणमनर्थकं, सवर्णदीर्घस्य पुनर्निमित्तमेव ।।

-7-1-13- ङेर्यः

किमिदं चतुर्थ्येकवचनस्य ग्रहणमाहोस्वित्सप्तम्येकवचनस्य ग्रहणम् ? ।। कुतः सन्देहः ? ।। समानो(1) निर्देशः ।। चतुर्थ्येकवचनस्य ग्रहणम् ।। कथं ज्ञायते ? ।। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।। ़थ्य;हापि तर्हि चतुर्थ्येकवचनस्य ग्रहणं स्यात्, -- ङेराम्नद्याम्नीभ्यः ।। एवं तर्हि व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमितीह चतुर्थ्येकवचनस्य ग्रहणं व्याख्यास्यामस्तत्र सप्तम्येकवचनस्येति ।। ( ङेर्यः) ।।

-7-1-14- सर्वनाम्नः स्मै

।। अश एकादिष्टत्वात्स्मायादीनामुपसङ्ख्यानम् ।। अश एकादिष्टत्वात्स्मायादीनामुपसङ्क्यानं(2) कर्तव्यम्--अथो अत्रास्मै, अथो अत्रास्मात्, अथो अत्रास्मिन्निति; एकादेशे कृते अत ़थ्य;ति स्मायादयो न प्राप्नुवन्ति ।। किं पुनः कारणमेकादेशस्तावद्भवति न पुनः स्मायादयो, न परत्वात्स्मायादिभिर्भवितव्यम् ? ।। न भवितव्यम् ।। किं कारणम् ? ।। ।। नित्यत्वादेकादेशः ।। नित्य एकादेशः कृतेष्वपि स्मायादिषु प्राप्नोत्यकृतेष्वपि । नित्यत्वादेकादेशे कृतेऽत ़थ्य;ति स्मायादयो न प्राप्नुवन्ति ।।

किमुच्यते अश ़थ्य;ति, नेहापि कर्तव्यम्--अत्रास्मै अत्रास्मात् अत्रास्मिन्निति; एकादेशे कृते अत ़थ्य;ति स्मायादयो न प्राप्नुवन्ति ।। आनुपूर्व्या सिद्धमेतत्(1) ।। नात्राऽकृतेषु स्मायादिषु हलादिर्विभक्तिरस्ति, हलादौ च ़थ्य;द्रूपलोपो न चाऽकृते ़थ्य;द्रूपलोपे एकादेशः प्राप्नोतितदानुपूर्व्या(1) सिद्धम् ।। तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ? ।। न वा बहिङ्गलक्षणत्वात् ।। न वा कर्तव्यम् ।। किं कारणम् ? ।। बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षण एकादेशोऽन्तरङ्गाः स्मायादयः ।। असिद्धं बहिरङ्गमन्तरङ्गे।।

-7-1-17- जसः शी

जश्शसोः शिः

किमर्थं शीभावः शिभावश्चोच्यते, न शिभाव एवोच्येत ? ।। का रूपसिद्धिः -- ते ये के ।। आद्गुणेन सिद्धम् ।। नैवं शक्यम्---़थ्य;ह हि त्रपुणी जतुनी, दीर्घश्रवणं न स्यात् ।। एवं तर्हि शीभाव एवोच्येत(2) ।।

नैवं शक्यम् । ़थ्य;ह हि कुण्डानि वनानि ़थ्य;ति ह्रस्वस्य श्रवणं(3) न प्रसज्येत । तस्माच्छीभावः शिभावश्च ।। ( जसः शी ) ।।

-7-1-18- औङ आपः

किमर्थो ङकारः ? ।। सामान्यग्रहणार्थः(5) । औ ़थ्य;त्युच्यमाने प्रथमा द्विवचनस्यैव स्यात् ।। अथापि औङित्युच्यते एवमपि द्वितीयाद्विर्वचनस्यैव स्यात् ।। अस्ति प्रयोजनमेतत् ? ।। किं तर्हीति ।। ङित्कार्यं तु प्राप्नोति--खट्वे । माले । याडाप ़थ्य;ति याट् प्राप्नोति ।। नैषः दोषः । नैवं विज्ञायते ङकार ़थ्य;दस्य सोऽयं ङित् ङितीति ।। कथं तर्हि ? ।। ङ(1) एव ़थ्य;त् ङित् ङितीति ।। एवं सति वर्णग्रहणमिदं भवति, वर्णग्रहणेषु चैतद्भवति--यस्मिन्विधिस्तदादावल्ग्रहण ़थ्य;ति, --न दोषो भवति ।।

अथ वा वर्णग्रहणमिदं भवति न चैतद्वर्णग्रहणेषु भवति अननुबन्धकग्रहणे न सानुबन्धकस्येति ।। अथ वा पूर्वसूत्रनिर्देशोऽयं, पूर्वसूत्रेषु च येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते ।।

।। औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ? ।

सामान्यार्थस्तस्य चासञ्ञ्जने स्मिन्ङित्कार्यं ते श्यां प्रसक्तं स दोषः ।।1।।

ङित्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ ।

वर्णश्चायं तेन ङित्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ।।2।। ।।

-7-1-20- जश्शसोः शिः

जसः शी ।।

किमर्थं शीभावः शिभावश्चोच्यते, न शिभाव एवोच्येत ? ।। का रूपसिद्धिः -- ते ये के ।। आद्गुणेन सिद्धम् ।। नैवं शक्यम्---़थ्य;ह हि त्रपुणी जतुनी, दीर्घश्रवणं न स्यात् ।। एवं तर्हि शीभाव एवोच्येत(2) ।। नैवं शक्यम् । ़थ्य;ह हि कुण्डानि वनानि ़थ्य;ति ह्रस्वस्य श्रवणं(3) न प्रसज्येत । तस्माच्छीभावः शिभावश्च ।। ( जसः शी ) ।।

-7-1-21- अष्टाभ्य औश्

औशघौ।। औशघाविति वक्तव्यम्।। किमिदमघाविति?।। अनुत्तरपद ़थ्य;ति ।। किं प्रयोजनम्?।। ़थ्य;ह मा भूत् ---अष्टपुत्रः अष्टभार्य ़थ्य;ति। अस्तु लुक्तत्र ।। अस्त्वत्रौश्त्वं,लुग्भविष्यति।। षड्भ्योऽप्येवं प्रसज्यते।। (षड्भ्योऽप्येवं प्रसज्यते) ़थ्य;हापि तर्हि प्राप्नोति--अष्टौ तिष्ठन्ति अष्टौ पश्येति।। अपवादः।। अपवादत्वादत्रौश्त्वं लुकं बाधिष्यते।। ़थ्य;हापि तर्हि बाधेत--अष्टपुत्रः अष्टभार्यः ।। यस्य विषये।। यस्य लुको विषये औश्त्वं तस्यापवादः।। यो वा तस्मादनन्तरः ।। अथ वाऽनन्तरस्य लुको बाधकं भविष्यति।। कुत एतत्?।। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति।। अथेह कस्मान्न भवत्यौश्त्वम्---अष्ट तिष्ठन्ति अष्ट पश्येति?।। आत्वं यत्र तु तत्रौश्त्वम्।। यत्रैवात्त्वं तत्रैवौश्त्वेन भवितव्यम्।। कुत एतत् ?।। तथा ह्यस्य ग्रहः कृतः ।। तथा ह्यस्यात्वभूतस्य ग्रहणं क्रियते--अष्टाभ्य ़थ्य;ति।। ननु च नित्यमात्वम्।। एतदेव ज्ञापयत्याचार्यो विभाषा आत्वमिति यदयमात्वभूतस्य ग्रहणं करोति--अष्टाभ्यःथ्य;ति । ़थ्य;तरथा हि अष्टन ़थ्य;त्येव ब्रूयात्।।

।। औशघावस्तु लुक्तत्र षड्भ्योऽप्येवं प्रसज्यते ।

अपवादो यस्य विषये यो वा तस्मादनन्तरः ।।1।।

।। आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।

स्वमोर्लुक् च त्यदादीनां कृते ह्यत्वे न लुग्भवेत्।।2 ।।
-7-1-23- स्वमोर्नपुंसकात्
स्वमोर्लुत्यदादिभ्यश्च ।। स्वमोर्लुत्यदादिभ्यश्चेति वक्तव्यम् । ःथ्य;हापि यथा स्यात् ---
तद्ब्राह्मणकुलमिति ।। किं पुनः कारणं न सिध्यति ? । कृते ह्यत्वे न लुग्भवेत् ।। अत्वे कृते लुङ्न प्राप्नोति । ःथ्य;दमिह संप्रधार्यमत्वं क्रियतां लुगिति, किमत्र कर्तव्यम् ? ।। परत्वादत्वम् ।। नित्यो लुक्, कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि ।। अनित्यो लुक्, नहि कृतेऽत्वे प्राप्नोति । अतोऽमित्यम्भावेन भवितव्यम् ।
तस्मात्त्यदादिभ्यश्चेति वक्तव्यम् ।।
ःथ्य;दं विचार्यते---शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थग्रहणं वेति ? ।।
कश्चात्र विशेषः ? ।। शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ।। शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः । बहुत्रपुः बहुत्रपू बहुत्रपव ःथ्य;ति ।।
अस्तु तर्ह्यर्थग्रहणम् ।। यद्यार्थग्रहणं-प्रियसक्थ्ना ब्राह्मणेनेत्यत्रानङ्ग प्राप्नोति ।। अस्तु तर्हि शब्दग्रहणमेव ।। ननु चोक्तं---शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ।। ःथ्य;ति ।
।। सिद्धं तु प्रकृतार्थविशेषणत्वात् ।। सिद्धमेतत् ।। कथम् ? ।। (ठप्रकृतार्थविशेषणत्वात्(1)) । प्रकृतस्यार्थो विशेष्यते ।। किं च प्रकृतम् ? ।। अङ्गम्। अङ्गस्य शिशीलुङ्नुमो भवन्ति नपुंसके वर्तमानस्य ।। कथं--प्रियसक्थ्ना ब्राह्मणेन ? । ।। अस्थ्यादिषु शब्दग्रहणम् ।। अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् ।। युक्तं पुनरिदं विचारयितुम् । नन्वनेनाऽसन्दिग्धेनार्थग्रहणेन भवितव्यं, नहि नपुंसकं नाम शब्दोऽस्ति ।। किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति, अत्राप्यर्थग्रहणमेव ।।
अत्रैतावान् सन्देहः--क्व प्रकृतस्यार्थो विशेष्यते, क्व गृह्यमाणस्येति ? ।। शिशीलुङ्नुम्विधिषु प्रकृतस्यार्थो विशेष्यतेऽस्थ्यादिषु गृह्यमाणस्य ।।
-7-1-25- अद्ड्डतरादिभ्यः पञ्चभ्यः
।। अद्भावे पूर्वसवर्णप्रतिषेधः ।। अद्भावे पूर्वसवर्णस्य प्रतिषेधो वक्तव्यः कतरत्तिष्ठति । करतत्परश्य(1) ।।. सिद्धमनुनासिकोपधत्वात् ।। सिद्धमेतत् ।। कथम् ? ।। (ठअनुनासिकोपधत्वात्(2)) अनुनासिकोपधोऽच्छब्दः करिष्यते ।। दुक्करणाद्वा ।। अथवा दुग् डतरादीनामिति वक्ष्यामि ।। डित्करणाद्वा ।। । अथवा डिदच्छब्दः करिष्यते ।। स तर्हि डकारः कर्तव्यः ? ।। न कर्तव्यः । क्रियते न्यास एव । द्विडकारको निर्देशः, --अद्ड्डतरादिभ्य ःथ्य;ति । (अद्ड्डतरादिभ्यः) ।।
-7-1-26- नेतराच्छन्दसि
।। ःथ्य;तराच्छन्दसि प्रतिषेधे एकतरात्सर्वत्र ।। ःथ्य;तराच्छन्दसि प्रतिषेधे एकतरात्सर्वत्रेति वक्तव्यम् । एकतरं तिष्ठति । एकतरं पश्य ।। ।। नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन ।। नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन । नपुंसकादेशानामवकाशः---त्रपु त्रपुणी त्रपूणि। युष्मदस्मदोर्विभक्त्यादेशानामवकाशः --त्वं ब्राह्मणः, अहं ब्राह्मणः, युवां ब्राह्मणौ, यूयं ब्राह्मणाः, वयं ब्राह्मणाः । ःथ्य;होभयं प्राप्नोति---त्वं ब्राह्मणकुलम् अहं ब्राह्मणकुलम् । युवां ब्राह्मणकुले आवां ब्राह्मणकुले । यूयं ब्राह्मणकुलानि, वयं ब्राह्मणकुलानि । युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन ।।
अथेदानीं युष्मदस्मदेर्विभक्त्यादेशेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुम्विधयः कस्मान्न भवन्ति ? ।। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ।। --ःथ्य;ति(1) ।।
-7-1-27- युष्मदस्मद्भ्यां ङसोऽश्
किमर्थः शकारः ? ।। सर्वादेशार्थः(2) । शित्सर्वस्येति सर्वादेशो यथा स्यात् ।। नैतदस्ति प्रयोजनम्--अक्रियमाणेऽपि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्याऽकारे कृते त्रयाणामकाराणामतो गुणे पररूपत्वे सिद्धं रूपं स्यात्---तव स्वम् मम स्वम् ।। यद्येतल्लभ्येत कृतं स्यात्तत्तु न लभ्यम् ।। किं कारणम् ? ।। अत्र हि तस्मादित्युत्तरस्यादेः परस्येत्यकारस्य प्रसज्येत ।।
अत उत्तरं पठति---।। ङस आदेशे शित्करणानर्थक्यमकारस्याकारवचनानर्थक्यात् ।। ङस आदेशे शित्करणमनर्थकम् ।। किं कारणम् ? ।। अकारस्याकारवचनानर्थक्यात् । अकारस्याऽकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति । ।।।।. अर्थवत्त्वादेशे लोपार्थम् ।। अर्थवत्त्वकारस्याऽऽकारवचनम् ।। कोऽर्थः ? ।। आदेशे लोपार्थम् । यः स शेषे लोपः आदेशे स विज्ञायते
।। ननु चादेशो या विभक्तिरित्येवमेतद्विज्ञायते ।। आदेश एषा विभक्तिः ।। कथम् ? ।।
। सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ।। 1 ।। ।
।। तस्माच्छित्करणम् ।। तस्माच्छकारः कर्तव्यः ।। न कर्तव्यः ।। क्रियते न्यास एव ।। कथम् ? ।। प्रश्लिष्टनिर्देशोऽयम्---अ अ अ ःथ्य;ति । सोऽनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति ।। ( युष्मदस्मद्भ्याम्) ।।
-7-1-28- ङे प्रथमयोरम्
प्रथमयोरित्युच्यते कयोरिदं प्रथमयोर्ग्रहणं, किं विभक्त्योराहो स्वित्प्रत्यययोः ? ।। विभक्त्योरित्याह ।। कथं ज्ञायते ? ।। अन्यत्रापि हि प्रथमयोर्ग्रहणे विभक्त्योर्ग्रहणं विज्ञायते न प्रत्यययोः ।। क्वान्यत्र ? ।। प्रथमयोः पूर्वसवर्ण ःथ्य;ति ।। अस्ति कारणं येन तत्र विभक्तियोर्ग्रहणं विज्ञायते ।। किं कारणम् ? ।। अचीति तत्र वर्तते न चाजादी प्रथमौ प्रत्ययौ स्तः । ननु चैवं विज्ञायते--अजादी यौ प्रथमावजादीनां वा यौ प्रथमाविति ।। यत्तर्हि तस्माच्छसो नः पुंसीत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो---विभक्त्योर्ग्रहणमिति ।। ःथ्य;हाप्याचार्यप्रवृत्तिर्ज्ञापयति --विभक्त्योर्ग्रहणमिति यदयं शसो नेति प्रतिषेधं शास्ति ।। नैष प्रतिषेधो. नत्वमेतद्विधीयते ।। सिद्धमत्र नत्वं तस्माच्छसो नः पुंसीति ।। यत्र तेन न सिध्यति तदर्थम् ।। क्व च तेन न सिध्यति(1) ? ।। स्त्रियां नपुंसके च । युष्मान्ब्राह्मणकुलानि पश्य

अस्मान् ब्राह्मणकुलानि पश्येति ।। यत्तर्हि युष्मदस्मदोरनादेशे द्वितीयायां चेत्याह तज्ज्ञापयत्याचार्यो--विभक्त्योर्ग्रहणमिति ।। ( ङे प्रथमयोरम् ) ।।

-7-1-30- भ्यसोभ्यम्

किमयं भ्यम्शब्द आहो स्विदभ्यम्शब्दः ? ।। कुतः सन्देहः ? ।। ।।। ।। समानो(1) निर्देशः ।। 8 ।। किं चातः ।। यदि तावभ्यम्शब्दः शेषे लोपश्चान्त्यस्य,--एवं प्राप्नोति । अथाऽभ्यम्शब्दः शेषे लोपश्च टिलोपः, उदात्तनिवृत्तिस्वरः प्राप्नोति ।। यथेच्छसि तथास्तु ।। अस्तु तावभ्यम्शब्दः शेषे लोपश्चान्त्यस्य ।। ननु चोक्तमेत्वं प्राप्नोतीति ।। नैषः दोषः, अङ्गवृत्ते(1) पुनर्वृत्तावविधिर्निष्ठितस्येति न भविष्यति ।।

अथ वा पुनरस्त्वभ्यम्शब्दः शेषे लोपश्च टिलोपः ।। ननु चोक्तमुदात्तनिवृत्तिस्वरः प्राप्नोतीति ।। नैषः दोषः--उक्तमेतत्--आदौ(1) सिद्धमिति ।।

-7-1-33- साम आकम्

किमर्थं सामः(2) ससकारस्य ग्रहणं क्रियते न आम आकमित्येवोच्येत(2) ? ।। केनेदानीं ससकारस्य भविष्यति ? ।। आमोऽयं(4) सुड्भक्त आम्ग्रहणेन ग्राहिष्यते ।। अत उत्तरं पठति--।। साम्ग्रहणं यथागृहीतस्यादेशवचनात् ।। साम्ग्रहणं क्रियते ।। (किमर्थम् ? ।। यथागृहीतस्यादेशवचनात् । ) ठनिर्दिश्यमानस्यादेशा भवन्तीत्येवं ससकारस्य न प्राप्नोति, ःथ्य;ष्यते च स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति--साम आकम्--, एवमर्थमिदमुच्यते ।। न वा द्विपर्यन्तानामकारवचनादामि सकाराऽभावः ।। न वैतत्प्रयोजनमस्ति ।। किं कारणम् ? ।। द्विपर्यन्तानामकारवचनात् । द्विपर्यन्तानां हि त्यदादीनामत्वमुच्यते । तेनामि सकारो न भविष्यति ।। सुट्प्रतिषेधस्त्वादेशे लोपविज्ञानात् ।। सुट्प्रतिषेधस्तु वक्तव्यः ।। किं कारणम् ? ।। आदेशे लोपविज्ञानात् । यः स शेषे लोप आदेशे स विज्ञायते ।। न वा टिलोपवचनादादेशे टाप्प्रतिषेधार्थम् ।। न वा सुट्प्रतिषेधो वक्तव्यः ।। किं कारणम् ? ।। टिलोपवचनात् । आदेशे यः स शेषे लोपष्टिलोपः(1) स वक्तव्यः ।। किं प्रयोजनम् ? ।। टाप्प्रतिषेधार्थम् । टाप्मा भूदिति ।। स तर्हि टिलोपो वक्तव्यः(2) ? ।। (न वक्तव्यः(3)) ।। न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यम् ।। 8 ।। न वा वक्तव्यम् ।। किं कारणम् ? ।। लिङ्गाऽभावात् । अलिङ्गे युष्मदस्मदी ।। किं वक्तव्यमेतत् ? ।। न हि ।। कथमनुच्यमानं गंस्यते ।। न ह्यस्तिविशेषो युष्मदस्मदोः स्त्रियां पुंसि नपुंसके वा ।। अस्ति कारणं येनैतदेवं भवति ।। किं कारणम् ? ।। योऽसौ विशेषवाची शब्द(स्त्रीप्रत्ययष्टाप्शब्द(3))स्तदसांनिध्यात् । अङ्ग ! हि भवांस्तमुच्चारयतु(4) गस्यंते स विशेषः ।।

ननु च नैतेनैवं भवितव्यम्, न हि शब्दनिमित्तकेन नामाऽर्थेन भवितव्यम् ।। किं तर्हि ? ।। अर्थनिमित्तकेन नाम शब्देन भवितव्यम् ।। तदेतदेवं(5) दृश्यताम्--अर्थरूपमेवैतदेवंजातीयकं, येनात्र विशेषो न गम्यत ःथ्य;ति ।। अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते--, योऽसौ विशेषवाची शब्दः (स्त्रीप्रत्ययष्टाप्शब्द)स्तदसांनिध्यादत्र विशेषो न गम्यत ःथ्य;ति--, ःथ्य;हापि तस्य विशेषो न गम्येत-दृषत्

समित् ःथ्य;ति ।। तस्मात्सुट्प्रतिषेधः ।। तस्मात्सुट्प्रतिषेधो वक्तव्यः ।। ससकारग्रहणं वा कर्तव्यम् ।।

अथ क्रियमाणेऽपि ससकारग्रहणे कस्मादेवान्न सुण्न भवति ? ।। ससकारग्रहणसार्मथ्याद्भाविनः सुट आदेशो विज्ञायते ।। ( साम आकम् ) ।

-7-1-34- आत औ णलः

ःथ्य;ह पपौ तस्थाविति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति--द्विर्वचनमेकादेश औत्वमिति। तद्यदि सर्वत औत्वं लभ्येत कृतं स्यात्। अथापि द्विर्वचनं लभ्येत एवमपि कृतं स्यात् । तत्तु न लभ्यम्।। किं कारणम्?।। अत्र हि परत्वादेकादेशो द्विर्वचनं बाधते।। परत्वादौत्वम्।। नित्य एकादेश औत्वं बाधेत।। कं पुनर्भवानौत्वस्यावकाशं मत्वाह--नित्य एकादेश ःथ्य;ति,--अनवकाशमौत्वमेकादेशं बाधिष्यते। औत्वे कृते द्विर्वचनमेकादेश ःथ्य;ति; यद्यपि परत्वादेकादेशः स्थानिवद्भावाद्द्विर्वचनं भविष्यति।। (आत औ)।।

-7-1-36- विदेः शतुर्वसुः

।। विदेर्वसोः कित्वम् ( -वसुग्रहणे लिडादेशग्रहणार्थम् ) ।। विदेर्वसोः कित्त्वं वक्तव्यम् ।। किं प्रयोजनम्(1) ? ।। (ठवसुग्रहणेषु(2) लिडादेशग्रहणार्थम्) । वसुग्रहणेषु लिडादेशस्यापि ग्रहणं यथा स्यात् ।। किं च कारणं न स्यात् ? ।। अननुबन्धकग्रहणे हि सानुबन्धकस्य ग्रहणं नेत्येवं लिडादेशस्य न प्राप्नोति, सानुबन्धको हि स क्रियते ।। किं पुनः कारणं स(1) सानुबन्धकः क्रियते ? ।। अयमृकारान्तानां लिटि गुणः प्रतिषेधविषय आरभ्यते स पुनः कित्करणाद्बाध्यते । आतीस्तीर्वान्(1) निपुपूर्वानिति ।। स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्यः ? ।। न कर्तव्यः । क्रियते न्यास एव--द्विसकारको निर्देशः । विदेः शतुर्वसुस्समासेऽनञ्पूर्वे त्क्वो ल्यप् ।। ( विदेः शतुर्वसुः ) ।।

-7-1-37- समासेऽनञ्पूर्वे क्त्वो ल्यप

।। ल्यबादेश उपदेशिवद्वचनम् ( -अनादिष्टार्थम् ) ।। ल्यबादेशे उपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायां ल्यब्भवतीति वक्तव्यम् ।। किं प्रयोजनम् ।। अनादिष्टार्थम् । अकृतेष्वादेशेषु ल्यब्यथा स्यात् ।।

के पुनरादेशा उपदेशिवद्वचनं प्रयोजयन्ति ? ।। हित्वदत्त्वात्त्वेत्वेत्त्वदीर्घत्वशूडिटः । हित्वं--हित्वा । प्रधाय । हित्वम् ।। दत्त्वं--दत्वा । प्रदाय । दत्त्वम् ।। आत्त्वं--खात्वा । प्रखन्य । आत्त्वम् ।। ःथ्य;त्वं--स्थित्वा । प्रस्थाय । ःथ्य;त्वम् ।। ःथ्य;त्त्वम्--पीत्वा । प्रपाय । ःथ्य;त्त्वम् ।। दीर्घत्वं--शान्त्वा । प्रशम्य । दीर्घत्वम् ।। श्(1)--पृष्ट्वा । आपृच्छ्य । श्(1) ।। ःढ्य;ठ्--द्यूत्वा । प्रदीव्य । ःढ्य;ठ् ।। ःथ्य;ट्--देवित्वा । प्रदीव्य ( ःथ्य;ट्(2) ) ।।

किं पुनः कारणमादेशास्तावद्भवन्ति न पुर्नल्यप्, ननु(3) परत्वाल्ल्यपा भवितव्यम् ।। सन्ति चैवाऽत्र केचित्परे आदेशाः । अपि च-- ।। बहिरङ्गलक्षणत्वात् ।। बहिरङ्गो ल्यप्, अन्तरङ्गा आदेशाः । असिद्धं बहिरङ्गमन्तरङ्गे ।। स तर्ह्युपदेशिवद्भावो वक्तव्यः ? ।। न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति --अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ःथ्य;ति, यदयमदो जग्धिर्ल्यप्ति कितीतिति कितीत्येव सिद्धे ल्यब्ग्रहणं करोति ।। ।। स्नात्वाकालकादिषु च(1) प्रतिषेधः ।। स्नात्वाकालकादिषु च प्रतिषेधो वक्तव्यः ।स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहितक ःथ्य;ति ।। ।। तदन्तनिर्देशात्सिद्धम् ।। तदन्तनिर्देशात्सिद्धमेतत् ।। कथम्(2) ।। क्तान्तस्य ल्यपा भवितव्यं न चैतत्क्तान्तम् ।। समासनिपातनाद्वा ।। अथ वाऽश्यमत्र समासार्थं निपातनं कर्तव्यन्तेनैव यत्नेन ल्यबपि न भविष्यति । ।। अनञ्ञो वा परस्य ।। अथ वाऽनञ्ञः परस्य ल्यपा भवितव्यं, न चात्राऽनञ्ञं पश्यामः ।। ननु च धातुरेवाऽनञ्ञ ।। न धातोः परस्य भवितव्यम् ।। किं कारणम् ? ।।

नञ्त्रिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।।
नञ्न्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे(1) कार्यं विज्ञायते(2) ।। कुत एतत् ? ।। ( ठतथा ह्यर्थगतिः(2) ) । तथा ह्यर्थो गम्यते । तद्यथा--अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति, नाऽसौ लोष्टमानीय कृती भवति । एवमिहाप्यनञ्त्रिति नञ्न्प्रतिषेधादन्यस्मादनञ्त्रो(4) नञ्न्सदृशात्कार्यं विज्ञास्यते ।। किं चान्यदनञ्न्नञ्न्सदृशम् ? ।। पद मित्याह । अथ वा प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्येवं धातुरपि क्त्वाग्रहणेन ग्राहिष्यते ।। ननु चेयमपि परिभाषास्ति-- कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति साऽपीहोपतिष्ठते ।। तत्र को दोषः ? ।। ःथ्य;ह न स्यात् -- प्रकृत्य । प्रहृत्य(1) । ःथ्य;ह(2) तर्हि स्यात्---परममकृत्वा । उत्तमकृत्वा(3) । न वा अत्रेष्यते ।। अनिष्टं च प्राप्नोति, ःथ्य;ष्टं च न सिध्यति ।। गतिकारकपूर्वस्यैवेष्यते ।। कुतो नु खल्वेतद्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः प्रत्ययग्रहणे यस्मात्स (विहित)स्तदादेर्ग्रहणं भवति कृद्ग्रहणे गतिकारकपूर्वस्येति च; ःथ्य;यमिह परिभाषा भवति--प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति, ःथ्य;यं न भवति -- कृद्ग्रहणे गतिकारकपूर्वस्यापीति ? ।। आचार्यप्रवृतिर्ज्ञापयति---ःथ्य;यमिह परिभाषा भवति प्रत्ययग्रहणम्ःथ्य;ति, ःथ्य;यं न भवति---कृद्ग्रहणःथ्य;ति, यदयमनञ्त्रिति प्रतिषेधं शास्ति ।। कथं कृत्वा ज्ञापकम् ? ।। अयं हि नञ्न्न गतिर्न च कारकम्, तत्र कः प्रसङ्गो यन्नञ्न्पूर्वस्य स्यात् ? । पश्यति त्वाचार्य ःथ्य;यमिह परिभाषा भवति---प्रत्ययग्रहण ःथ्य;ति,ःथ्य;यं न भवति कृद्ग्रहणःथ्य;ति---ततोऽनञ्त्रिति प्रतिषेधं शास्ति ।।

।। किं नञ्त्रः प्रतिषेधेन न गतिर्न च कारकम् ।
यावता नञ्त्रि पूर्वे तु ल्यब्भावो न भविष्यति ।। 1 ।।
प्रतिषेधात्तु जानीमस्तत्पूर्वं नेह गृह्यते ।
प्रत्ययग्रहणे यावत्तावद्भवितुमर्हति ।। 2 ।। ।।

-7-1-40- अमो मश्

किमर्थः शकारः ? ।। ( ।। शकारः(2) सर्वादेशार्थः ।। ) ठशित्सर्वस्येति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ।। अत उत्तरं पठति-- ।। अमो(3) मश् न मकारस्य ।। 8 ।। मकारस्य मकारवचने(4) प्रयोजनं नास्तीति कृत्वा तत्राऽन्तरेण शकारं सर्वादेशो भविष्यति ।। वचनादन्यबाधनम् ।। 8 ।। अस्त्यन्यन्मकारस्य मकारवचने प्रयोजनम् ।। ( किम्(2) ? ।। अन्यबाधनम् ।) येऽन्ये मकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम् । तद्यथा--मो राजि समः क्वाविति मकारस्य मकारवचनसार्मथ्यादनुस्वारादयो बाध्यन्ते ।। एवं तर्हि (।। द्विमकारको(2) निर्देशः ।। ) द्विमकारको निर्देशः करिष्यते ।। द्विमकार ःथ्य;ऽपृक्ते ।। यदि द्विमकारकः---अपृक्ताश्रय ःथ्य;र्ण्न प्राप्नोति, -- वर्धीं वृत्रं मरुत ःथ्य;न्द्रियेण । ।। यकारादौ(1) न दुष्यति ।। किं यकारो न श्रूयते ? ।। लुप्तनिर्दिष्टो यकारः ।।

।। अमो मश्च मकारस्य वचनादन्यबाधनम् ।
द्विमकार ःथ्य;ऽपृक्ते यकारादौ न दुष्यति ।। 1 ।। ।।

-7-1-50- आज्जसेरसुक्

ःथ्य;ह---ये पूर्वासो य उ परासः । आज्जसेरसुगित्यसुकि कृते जसिग्रहणेन(2) ग्रहणाच्छीभावः प्राप्नोति ।। एवं तर्हि जसि पूर्वान्तः करिष्यते ।। यदि पूर्वान्तः क्रियते का रूपसिद्धिः-ब्राह्मणा सः पितरः सोम्यासः ? ।। सवर्णदीर्घत्वेन सिद्धम् ।। न सिद्ध्यति---अतो गुण ःथ्य;ति पररूपत्वं प्राप्नोति ।। अकारोच्चारणसार्मथ्यान्न भविष्यति ।। यदि तर्हि प्राप्नुवन्विधिरुच्चारणसार्मथ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति ।। नैषः(3) दोषः--यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते---यस्य तु विधोर्विमित्तमेव नासौ बाध्यते ।। पररूपं च प्रत्यकारोच्चारणमनर्थकं, सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ।

अथ वाऽसुट्करिष्यते । एवमपि-ये पूर्वासो य उ परास ःथ्य;त्यसुटि कृते जयो ग्रहणोन ग्रहणाच्छीभावः । प्राप्नोति ।। नैषः(3) दोषः ---निर्दिश्यमानस्यादेशा भवन्तीत्येवमस्य न भविष्यति ।। यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? ।। असुटा व्यवहितत्वात् ।। सिध्यति सूत्रं तर्हि भिद्यते ।। यथान्यासमेवाऽस्तु । ननु चोक्तं ये पूर्वासो य उ परासः. असुकि कृते जसिग्रहणेन ग्रहणाच्छीभावः प्राप्नोती(1)ति ।। नैषः दोषः, ---ःथ्य;दमिह
संप्रधार्यं---शीभावः क्रियतामसुगिति; किमत्र कर्तव्यम् ।। परत्वादसुक् ।। अथेदानीमसुकि कृते पुनः प्रसङ्गविज्ञानाच्छीभावः कस्मान्न भवति ? ।। सकृद्गतौ विप्रविषेधे यद्बाधितं तद्बाधितमेवेति ।। ( आज्जसेरसुक् ) ।।

-7-1-51- अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि

।। अश्ववृषयोर्मैथुनेच्छायाम् ।। अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् । अश्वस्यति वडवा । वृषस्यति(2)
गौः ।। मैथुनेच्छायामिति किमर्थम् ? ।। अश्वीयति वृषीयति ।। 8 ।। क्षीरलवणयोर्लालसायाम् ।। क्षीरलवणयोर्लालसायामिति वक्तव्यम् । क्षीरस्यति माणवकः । लवणस्यति उष्ट्र इति ।। अपर आह--- ।। (सर्वप्रातिपदिकेभ्यो(3) लालसायाम् ।।) सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यम् । दध्यस्यति मध्वस्यतीत्येवमर्थम् ।। अपर आह (।। सर्वप्रातिपदिकेभ्यो(2) लालसायां सुक् ।। सर्वप्रातिपदिकेभ्यो लालसायां ) सुग्वक्तव्यो दधिस्यति मधुस्यतीत्येवमर्थम् । ( अश्वक्षीरवृष ) ।।

-7-1-52- आमि सर्वनाम्नः सुट्

त्रेस्त्रयः ।। ह्रस्वनद्यापो नुट् ।।
ःथ्य;मे बहव आम्शब्दाः(4)---कास्प्रत्ययादाममन्त्रे लिटि । ङसोसाम् किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ङेराम्नद्याम्नीभ्य ःथ्य;ति, कस्येदं ग्रहणम् ? ।। षष्ठीबहुवचनस्य ग्रहणम्(1) ।।
अथास्य कस्मान्न भवति --- कास्प्रत्ययादाममन्त्रे लिटीति ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति ।। स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्य ःथ्य;हास्य ग्रहणं मा भूदिति ? ।। ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ।। नार्थ ःथ्य;त्संज्ञापरित्राणार्थेन,

ःथ्य;त्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। ःथ्य;दमस्तीत्कार्यं-- मिदचोऽन्त्यात्पर ःथ्य;त्यचामन्त्यात्परो यथा स्यात् ।। प्रत्ययान्तादयं विधीयते, तत्र नास्ति विशेषोमिदचोन्त्यात्परःथ्य;ति वा परत्वे, प्रत्ययः पर ःथ्य;ति वा (परत्वे(2)) ।। यस्तर्हि न प्रत्ययान्तात्--ःथ्य;जादेश्च गुरुमतोऽनृच्छ ःथ्य;ति ? ।। अत्रापि आस्कारसोराम्वचनं ज्ञापकं---नायमचामन्त्यात्परो भवतीति ।। कथं कृत्वा ज्ञापकम् ? ।। ह्यस्ति विशेषः ---आम्यचामन्त्यात्परे सत्यसति वा ।। अयमस्ति विशेषोऽसत्यामि द्विर्वचनेन भवितव्यं, सति न भवितव्यम् ।। सत्यपि भवितव्यम् ।। कथम् ? ।। आमस्तन्मध्यपतितत्वाद्धातुग्रहणेन ग्रहणात् । तदेतत्कासासोराम्वचनं ज्ञापकमेव--- नायमचामन्त्यात्परो(1) भवतीति ।।

अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः,--क्रियते न्यास एव--आमअमन्त्रे(2) ःथ्य;ति । यद्येवमामाऽमन्त्र ःथ्य;ति प्राप्नोति ।। शकन्धुन्यायेन निर्देशः ।।

अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ।। ःथ्य;ह कारयांचकार हारयांचकार चिकीर्षांचकार जिहीर्षांचकार, ह्रस्वनद्यापो नुडिति नुट्प्रसज्येत ।।

लोपाऽयादेशयोः कृतयोर्न भविष्यति ।। ःथ्य;दमिह संप्रधार्यं--लोपायादेशौ क्रियेतां(2) नुडिति; किमत्र कर्तव्यम् ? ।। परत्वान्नुट् ।। नित्यौ लोपाऽयादेशौ, कृतेऽपि नुटि प्राप्नुतोऽकृतेपि । तत्र नित्यत्वाल्लोपाऽयादेशयोः कृतयोर्विहतनिमित्तत्वान्नुग्न भविष्यति ।।

अथास्य कस्मान्न भवति---किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षःथ्य;ति ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति ।। स तर्ह्येवमर्थोऽनुबन्धः कर्तव्यः ? ।। ननु चावश्यमुगित्कार्यार्थोऽनुबन्धः कर्तव्यः ।। नार्थ उगित्कार्यार्थेनाऽनुबन्धेन । लिङ्गविभक्तिप्रकरणे सर्वमुगित्कार्या, न चामो लिङ्गविभक्ती स्तः । अव्ययमेषः ।। मकारस्य तर्हीत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ।। ःथ्य;त्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। ःथ्य;दमस्तीत्कार्यं---मिदचोन्त्यात्पर ःथ्य;त्यचामन्त्यात्परो यथा स्यात् ।। नैतदस्ति । घान्तादयं विधीयते तत्र नास्ति विशेषः---मिदचोन्त्यात्पर ःथ्य;ति वा(1) परत्वे प्रत्ययः पर ःथ्य;ति वा परत्वे ।।

अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः---क्रियते न्यास एव ।। अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ।। ःथ्य;ह-पचतितरां जल्पतितरां,--ह्रस्वनद्यापो नुडिति, नुट्प्रसज्येत ।। लोपे कृते न भविष्यति ।। ःथ्य;दमिह संप्रधार्थं लोपः क्रियतां नुडिति, किमत्र कर्तव्यम् ? ।। परत्वान्नुट् ।। एवं तर्हि ह्रस्वनद्यापो नुडित्यत्र यस्येति लोपोऽनुवर्तिष्यते ।।

अथास्य कस्मान्न भवति ङेराम्नद्याम्नीभ्यःथ्य;ति ? ।। किं च स्यात् ? ।। कुमार्यां किशोर्यां खट्वायां मालायां तस्यां यस्यामिति,---ह्रस्वनद्याप नुडिति नुट्प्रसज्येत ।। आड्याट्स्याटोऽत्र बाधका भविष्यन्ति ।। ःथ्य;दमिह संप्रधार्यम्--आड्याट्स्याटः क्रियन्तां, नुडिचि,--किमत्र कर्तव्यम् ? ।। परत्वादाड्याट्स्याटः ।। अथेदानीमाड्याट्स्याट्त्सु कृतेषु पुनः प्रसङ्गान्नुट्कस्मान्न भवति ? ।। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।। (ह्रस्वनद्यापो) ।।

-7-1-53- त्रेस्त्रयः

आमि सर्वनाम्नः सुट् ।। ह्रस्वनद्यापो नुट् ।।

ःथ्य;मे बहव आम्शब्दाः(4)---कास्प्रत्ययादाममन्त्रे लिटि । ङसोसाम् किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ङेराम्नद्याम्नीभ्य ःथ्य;ति, कस्येदं ग्रहणम् ? ।। षष्ठीबहुवचनस्य ग्रहणम्(1) ।।

अथास्य कस्मान्न भवति --- कास्प्रत्ययादाममन्त्रे लिटीति ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति ।। स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्य ःथ्य;हास्य ग्रहणं मा भूदिति ? ।। ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ।। नार्थ ःथ्य;त्संज्ञापरित्राणार्थेन,

ःथ्य;त्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। ःथ्य;दमस्तीत्कार्यं-- मिदचोऽन्त्यात्पर ःथ्य;त्यचामन्त्यात्परो यथा स्यात् ।। प्रत्ययान्तादयं विधीयते, तत्र नास्ति विशेषोमिदचोन्त्यात्परःथ्य;ति वा परत्वे, प्रत्ययः पर ःथ्य;ति वा (परत्वे(2)) ।। यस्तर्हि न प्रत्ययान्तात्--ःथ्य;जादेश्च गुरुमतोऽनृच्छ ःथ्य;ति ? ।। अत्रापि आस्कारसोराम्वचनं ज्ञापकं---नायमचामन्त्यात्परो भवतीति ।। कथं कृत्वा ज्ञापकम् ? ।। ह्यस्ति विशेषः ---आम्यचामन्त्यात्परे सत्यसति वा ।। अयमस्ति विशेषोऽसत्यामि द्विर्वचनेन भवितव्यं, सति न भवितव्यम् ।। सत्यपि भवितव्यम् ।। कथम् ? ।। आमस्तन्मध्यपतितत्वाद्धातुग्रहणेन ग्रहणात् । तदेतत्कासासोराम्वचनं ज्ञापकमेव--- नायमचामन्त्यात्परो(1) भवतीति ।।

अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः,--क्रियते न्यास एव--आमअमन्त्रे(2) ःथ्य;ति । यद्येवमामाऽमन्त्र ःथ्य;ति प्राप्नोति ।। शकन्धुन्यायेन निर्देशः ।।

अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ।। ःथ्य;ह कारयांचकार हारयांचकार चिकीर्षांचकार जिहीर्षांचकार, ह्रस्वनद्यापो नुडिति नुट्प्रसज्येत ।।

लोपाऽयादेशयोः कृतयोर्न भविष्यति ।। ःथ्य;दमिह संप्रधार्यं--लोपायादेशौ क्रियेतां(2) नुडिति; किमत्र कर्तव्यम् ? ।। परत्वान्नुट् ।। नित्यौ लोपाऽयादेशौ, कृतेऽपि नुटि प्राप्नुतोऽकृतेपि । तत्र नित्यत्वाल्लोपाऽयादेशयोः कृतयोर्विहतनिमित्तत्वान्नुग्न भविष्यति ।।

अथास्य कस्मान्न भवति---किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षःथ्य;ति ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति ।। स तर्ह्येवमर्थोऽनुबन्धः कर्तव्यः ? ।। ननु चावश्यमुगित्कार्यार्थोऽनुबन्धः कर्तव्यः ।। नार्थ उगित्कार्यार्थेनाऽनुबन्धेन । लिङ्गविभक्तिप्रकरणे सर्वमुगित्कार्या, न चामो लिङ्गविभक्ती स्तः । अव्ययमेषः ।। मकारस्य तर्हीत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ।। ःथ्य;त्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। ःथ्य;दमस्तीत्कार्यं---मिदचोन्त्यात्पर ःथ्य;त्यचामन्त्यात्परो यथा स्यात् ।। नैतदस्ति । घान्तादयं विधीयते तत्र नास्ति विशेषः---मिदचोन्त्यात्पर ःथ्य;ति वा(1) परत्वे प्रत्ययः पर ःथ्य;ति वा परत्वे ।।

अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः---क्रियते न्यास एव ।। अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ।। ःथ्य;ह-पचतितरां जल्पतितरां,--ह्रस्वनद्यापो नुडिति, नुट्प्रसज्येत ।। लोपे कृते न भविष्यति ।। ःथ्य;दमिह संप्रधार्थं लोपः क्रियतां नुडिति, किमत्र कर्तव्यम् ? ।। परत्वान्नुट् ।। एवं तर्हि ह्रस्वनद्यापो नुडित्यत्र यस्येति लोपोऽनुवर्तिष्यते ।।

अथास्य कस्मान्न भवति ङेराम्नद्याम्नीभ्यःथ्य;ति ? ।। किं च स्यात् ? ।। कुमार्यां किशोर्यां खट्वायां मालायां तस्यां यस्यामिति,---ह्रस्वनद्याप नुडिति नुट्प्रसज्येत ।। आड्याट्स्याटोऽत्र बाधका भविष्यन्ति ।। ःथ्य;दमिह संप्रधार्यम्--आड्याट्स्याटः क्रियन्तां, नुडिचि,--किमत्र कर्तव्यम् ? ।। परत्वादाड्याट्स्याटः ।। अथेदानीमाड्याट्स्याट्त्सु कृतेषु पुनः प्रसङ्गान्नुट्कस्मान्न भवति ? ।। सकृद्गतौ विप्रतिषेधे यद्बाधितं

तद्बाधितमेवेति ।। (ह्रस्वनद्यापो) ।।
-7-1-54- ह्रस्वनद्यापो नुट्
आमि सर्वनाम्नः सुट् ।। त्रेस्त्रयः ।।
ःथ्य;मे बहव आम्शब्दाः(4)---कास्प्रत्ययादाममन्त्रे लिटि । ङसोसाम् किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।
ङेराम्नद्याम्नीभ्य ःथ्य;ति, कस्येदं ग्रहणम् ? ।। षष्ठीबहुवचनस्य ग्रहणम्(1) ।।
अथास्य कस्मान्न भवति --- कास्प्रत्ययादाममन्त्रे लिटीति ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति ।। स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्य ःथ्य;हास्य ग्रहणं मा भूदिति ? ।। ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ।। नार्थ ःथ्य;त्संज्ञापरित्राणार्थेन, ःथ्य;त्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। ःथ्य;दमस्तीत्कार्यं-- मिदचोऽन्त्यात्पर ःथ्य;त्यचामन्त्यात्परो यथा स्यात् ।। प्रत्ययान्तादयं विधीयते, तत्र नास्ति विशेषोमिदचोन्त्यात्परःथ्य;ति वा परत्वे, प्रत्ययः पर ःथ्य;ति वा (परत्वे(2)) ।। यस्तर्हि न प्रत्ययान्तात्--ःथ्य;जादेश्च गुरुमतोऽनृच्छ ःथ्य;ति ? ।। अत्रापि आस्कारसोराम्वचनं ज्ञापकं---नायमचामन्त्यात्परो भवतीति ।। कथं कृत्वा ज्ञापकम् ? ।। ह्यस्ति विशेषः ---आम्यचामन्त्यात्परे सत्यसति वा ।। अयमस्ति विशेषोऽसत्यामि द्विर्वचनेन भवितव्यं, सति न भवितव्यम् ।। सत्यपि भवितव्यम् ।। कथम् ? ।। आमस्तन्मध्यपतितत्वाद्धातुग्रहणेन ग्रहणात् । तदेतत्कासासोराम्वचनं ज्ञापकमेव--- नायमचामन्त्यात्परो(1) भवतीति ।।
अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः,--क्रियते न्यास एव--आमअमन्त्रे(2) ःथ्य;ति । यद्येवमामाऽमन्त्र ःथ्य;ति प्राप्नोति ।। शकन्धुन्यायेन निर्देशः ।।
अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ।। ःथ्य;ह कारयांचकार हारयांचकार चिकीर्षांचकार जिहीर्षांचकार, ह्रस्वनद्यापो नुडिति नुट्प्रसज्येत ।।
लोपाऽयादेशयोः कृतयोर्न भविष्यति ।। ःथ्य;दमिह संप्रधार्यं--लोपायादेशौ क्रियेतां(2) नुडिति; किमत्र कर्तव्यम् ? ।। परत्वान्नुट् ।। नित्यौ लोपाऽयादेशौ, कृतेऽपि नुटि प्राप्नुतोऽकृतेपि । तत्र नित्यत्वाल्लोपाऽयादेशयोः कृतयोर्विहतनिमित्तत्वान्नुग्न भविष्यति ।।
अथास्य कस्मान्न भवति---किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षःथ्य;ति ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति ।। स तर्ह्येवमर्थोऽनुबन्धः कर्तव्यः ? ।। ननु चावश्यमुगित्कार्यार्थोऽनुबन्धः कर्तव्यः ।। नार्थ उगित्कार्यार्थेनाऽनुबन्धेन । लिङ्गविभक्तिप्रकरणे सर्वमुगित्कार्यां, न चामो लिङ्गविभक्ती स्तः । अव्ययमेषः ।। मकारस्य तर्हीत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ।। ःथ्य;त्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।। ःथ्य;दमस्तीत्कार्यं---मिदचोन्त्यात्पर ःथ्य;त्यचामन्त्यात्परो यथा स्यात् ।। नैतदस्ति । घान्तादयं विधीयते तत्र नास्ति विशेषः---मिदचोन्त्यात्पर ःथ्य;ति वा(1) परत्वे प्रत्ययः पर ःथ्य;ति वा परत्वे ।।
अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः---क्रियते न्यास एव ।। अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ।। ःथ्य;ह-पचतितरां जल्पतितरां,-- ह्रस्वनद्यापो नुडिति, नुट्प्रसज्येत ।। लोपे कृते न भविष्यति ।। ःथ्य;दमिह संप्रधार्थं लोपः क्रियतां नुडिति, किमत्र कर्तव्यम् ? ।। परत्वान्नुट् ।। एवं तर्हि ह्रस्वनद्यापो नुडित्यत्र यस्येति लोपोऽनुवर्तिष्यते ।।
अथास्य कस्मान्न भवति ङेराम्नद्याम्नीभ्यःथ्य;ति ? ।। किं च स्यात् ? ।। कुमार्यां किशोर्यां खट्वायां मालायां तस्यां यस्यामिति,---ह्रस्वनद्याप नुडिति नुट्प्रसज्येत ।। आड्याट्स्याटोऽत्र बाधका भविष्यन्ति ।। ःथ्य;दमिह संप्रधार्यम्--आड्याट्स्याटः क्रियन्तां, नुडिचि,--किमत्र कर्तव्यम् ? ।। परत्वादाड्याट्स्याटः ।। अथेदानीमाड्याट्स्याट्सु कृतेषु पुनः प्रसङ्गान्नुट्कस्मान्न भवति ? ।। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।। (ह्रस्वनद्यापो) ।।
-7-1-56- श्रीग्रामण्योश्छन्दसि
अयं योगः(1) शक्योऽवक्तुम् ।। कथं श्रीणामुदारहो धरूणो रयीणाम् । अपि तत्र सूतग्रामणीनाम् ? ।। ःथ्य;ह तावच्छ्रीणामुदारो धरुणो रयीणां, विभाषाऽऽमि नदीसंज्ञा, सा छन्दसि व्यवस्थितविभाषा भविष्यति । अपि तत्र सूतग्रामणीनामिति, सूताश्च ग्रामण्यश्च सूतग्रामणि । तत्र ह्रस्वनद्यापो नुडित्येव सिद्धम् ।।
-7-1-58- ःथ्य;दितो नुम् धातोः
अथ धातोरिति किमर्थम् ? ।। अभैत्सीत् । अच्छैत्सीत्(2) ।। नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम् ।। नुम्विधावुपदेशिवद्भावो वक्तव्यः । उपदेशात्वस्थायां नुम्भवतीति वक्तव्यम् ।। किं प्रयोजनम् ? ।। प्रत्ययविध्यर्थम्
। उपदेशावस्थायां नुमि कृते ःथ्य;ष्टः प्रत्ययविधिर्यथा स्यात्---कुण्डा हुण्डा ःथ्य;ति ।। ःथ्य;तरथा ह्यनकारे प्रत्ययः ।। अक्रियमाणे हि उपदेशिवद्भावेऽनकारे यः(1) प्रत्ययः प्राप्नोति स तावत्स्यात्तस्मिन्नवस्थिते नुम् ।। तत्र को दोषः ? ।। तत्राऽयथेष्टप्रसङ्गः ।। तत्राऽयथेष्टं प्रसज्येत । अनिष्टे प्रत्ययेऽवस्थिते नुम् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्यते ।। धातुग्रहणसार्मथ्याद्वा तदुपदेशे नुम्विधानम् ।। 8 ।। धातुग्रहणसार्मथ्याद्वा तदुपदेशे--धातूपदेशे--नुम् भविष्यति ।। ननु च अन्यद्धातुग्रहणस्य प्रयोजनमुक्तम् ? ।। किं (तत्) ? ।। अभैत्सीत् । अच्छैत्सीदिति(2) ।। नैतदस्ति प्रयोजनम् । प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यच्चाऽत्रेकारेण क्रियतेऽकारेणापि तच्छक्यं कर्तुम् ।। ( ःथ्य;दितो ) ।।
-7-1-59- शे मुचादीनाम्
।। शे तृम्पादीनाम्(1) ।। शे तृम्पादीनामुपसङ्ख्यानं कर्तव्यम् । तृम्पति(2) । तृम्फति ।। किमर्थमिदं, न नुमनुषक्ता एवैते पठ्यन्ते ? ।। ।। लुप्तनकारत्वात् ।। लुप्यतेऽत्र नकारः---अनिदितां हल उपधायाः क्ङितीति ।। यदि पुनरिमे ःथ्य;दितः पठ्येरन् ? ।। नैवं शक्यम्, ःथ्य;ह हि लोपो न स्यात्--तृपितो(1) दृपित ःथ्य;ति ।। यदि पुनरिमे मुचादिष्वेव(2) पठ्येरन् ? ।। न दोषः स्यात् । अथवा नैवं विज्ञायते--ःथ्य;दितो नुम्धातोरिति।। कथं तर्हि ? ।। ःथ्य;दितो नुम् । ततो धातोरिति ।। ( शे मुचादीनाम् ) ।।
-7-1-62- नेट्यलिटि रधेः
ःथ्य;मौ द्वौ प्रतिषेधावुच्येते--उभौ शक्यावक्तुम्(3) ।। कथम् ? ।। एवं वक्ष्यामि ःथ्य;टि लिटि रधेर्नुम् । (ःथ्य;टि लिटि रधेर्नुम्---)

भवतीति । तन्नियमार्थं भविष्यति---लिट्येवेडादौ नान्यस्मिन्निडादाविति ।। ( नेट्यलिटि )
-7-1-65- आङो यि
ः थ्य;ह कस्मान्न भवति--आलभ्यते ।। अस्तु, अनिदितां हल उपधायाः क्ङितीति लोपो भविष्यति ।। ः थ्य;ह तर्हि--आलम्भ्या(1) गौः । पोरदुपधादिति यत्यवस्थिते नुम् ।। तत्र को दोषः ? ।। आलम्भ्येत्येष(2) स्वरः प्रसज्येत । आलम्भ्येति चेष्यते ।। नैषः दोषः । उक्तमेतत्(3) ।। धातुग्रहणसार्मथ्यादुपदेशे नुम्विधानम् ।। ः थ्य;ति ।। ( आङो यि )
-7-1-68- न सुदुर्भ्यां केवलाभ्याम्
अथ केवलग्रहणं किमर्थम् न सुदुर्भ्या मित्येवोच्येत ?।। सुदुरोः केवलग्रहणमन्योपसर्गप्रतिषेधार्थम् ।। सुदुरोः केवलग्रहणं क्रियते ।। (किमर्थम् ? ।। अन्योपसर्गप्रतिषेधार्थम्(1)) । अन्योपसृष्टान्मा भूदिति,--प्रसुलम्भम् ।। नैषोऽस्ति प्रयोगः ।। ः थ्य;दं तर्हि--सुप्रलम्भम् ।। प्रेण व्यवहितत्वान्न भविष्यति(2) ।। ः थ्य;दं तर्हि अतिसुलम्भम् ।। कर्मप्रवचनीयसंज्ञाऽत्र बाधिका भविष्यति---सुः पूजायामतिरतिक्रमणे चेति ।। यदा तर्हि नातिक्रमणं न पूजा ।
ः थ्य;दं चाप्युदाहरणं--सुप्रलम्भम् । ननु चोक्तं प्रेण व्यवहितत्वान्न भविष्यतीति ? ।। नैषः दोषः । सुदुर्भ्यामिति नैषा पञ्चमी ।। का तर्हि ? ।। तृतीया । सुदुर्भ्यामुपसृष्टस्येति । व्यवहितश्चाप्युपसृष्टो भवति ।। ( न सुदुर्भ्याम् ) ।।
-7-1-69- विभाषा चिण्णमुलोः
।। 8 ।। चिण्णमुलोरनुपसर्गस्य(1) ।। चिण्णमुलोरनुपसर्गस्येति वक्तव्यम् । इह मा भूत् - प्रालम्भि । प्रलम्भं-प्रलम्भम् ।। तत्तर्हि वक्तव्यम्? ।। न वक्तव्यम् । इहोपसर्गादित्यपि प्रकृतं, नेत्यपि । तत्राऽभिसंबन्धमात्रं कर्तव्यं विभाषा चिण्णमुलोः--उपसर्गान्नेति ।। ( विभाषा चिण्णमुलोः ) ।।
-7-1-70- उगिदचां सर्वनामस्थानेऽधातोः
अधातोरिति किमर्थम् ? ।। उखास्रत् पर्णध्वत् ।। ।। अधातोरिति शक्यमवक्तुम्(1) ।।
कस्मान्न भवति--उखास्रत् पर्णध्वदिति(2) ।। उगित्यञ्चतिग्रहणात्सिद्धमधातोः ।। उगित्यञ्चतिग्रहणादधातोः सिद्धम् । अञ्चतिग्रहणं नियमार्थं भविष्यति--अञ्चतेरेवोगितो धातोर्नान्यस्योगितो(3) धातोरिति ।। ः थ्य;दं तर्हि प्रयोजनम्--अधातुभूतपूर्वस्यापि(4) यथा स्यात्--गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः--गोमानिति ।। (
उगिदचाम् ) ।।
-7-1-72- नपुंसकस्य झलचः
।। झलचो नुम्विधावुगित्प्रतिषेधः ।। झलचो(5) नुम्विधावुगिल्लक्षणस्य प्रतिषेधो वक्तव्यः । गोमन्ति ब्राह्मणकुलानि, श्रेयांसि, भूयांसि । ननु च झल्लक्षण उगिल्लक्षणं बाधिष्यते ।। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ? ।। असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात् ।। किं च स्याद्यद्यत्रोगिल्लक्षणोऽपि स्यात् ? ।। द्वयोर्नकारयोः श्रवणं प्रसज्येत ।। न व्यञ्जनपरस्यैकस्य (1) वाऽनेकस्य वा श्रवणं प्रति विशेषोऽस्ति ।। ननु च प्रतिज्ञाभेदो भवति ।। श्रुतिभेदेऽसति किं प्रतिज्ञाभेदः करिष्यति(2)?।। ननु च श्रुतिकृतोऽपि भेदोऽस्ति। ः थ्य;ह तावत्--श्रेयांसि भूयांसीति(4) । परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्राप्नोति । तथा कुर्वन्ति कृषन्तीति(5), परस्याऽनुस्वारपरसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोति ।। अथैकस्मिन्नपि नुमि णत्वं कस्मान्न भवति ? ।। अनुस्वारीभूतो णत्वमतिक्रामति।। कृते तर्हि परसवर्णे कस्मान्न भवति?।। असिद्धे च परसवर्णः(1) ।।
।। विप्रतिषेधात्सिद्धम् ।। विप्रतिषेधात्सिद्धमेतत् । झल्लक्षणः क्रियतामुगिल्लक्षण ः थ्य;ति झल्लक्षणो भविष्यति विप्रतिषेधेन । झल्लक्षणस्यावकाशः -- सर्पींषि धनूंषि । उगिल्लक्षणस्यावकाशः-- गोमान् यवमान् । ः थ्य;होभयं प्राप्नोति--गोमन्ति ब्राह्मणकुलानि, यवमन्ति ब्राह्मणकुलानि, श्रेयांसि भूयांसीति(2) ? ।। झल्लक्षणो भविष्यति विप्रतिषेधेन ।।
ननु च पुनः प्रसङ्गविज्ञानादुगिल्लक्षणः प्राप्नोति ।। पुनः प्रसङ्ग ः थ्य;ति चेदमादिभिस्तुल्यम् ।।।।। पुनः प्रसङ्ग ः थ्य;ति चेदमादिभिस्तुल्यमेतद्भवति। तद्यथा--युष्मदस्मदोरमादिषु कृतेषु पुनः प्रसङ्गच्छिशीलुङ्नुमो न भवन्ति । एवं झल्लक्षणे कृते पुनः प्रसङ्गादुगिल्लक्षणो न भविष्यति । यदप्युच्यते असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यादिति । सत्यपि संभवे बाधनं भवति। तद्यथा--दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवे झल्लक्षण उगिल्लक्षणं बाधिष्यते । अथवाऽस्त्वत्र उगिल्लक्षणोपि ।। ननु चोक्तं द्वयोर्नकारयोःश्रवणं प्रसज्येतेति ।। परहृतमेतत् न व्यञ्जनपरस्यैकस्य वाऽनेकस्य वा श्रवणं प्रति विशेषोस्तीति(2) ? ।। ननु चोक्तं प्रतिज्ञाभेदो भवतीति ।। श्रुतिभेदेऽसति प्रतिज्ञाभेदः किं करिष्यति(1) ? ।। ननु च श्रुतिकृतोपि भेद उक्तः,--ः थ्य;ह तावच्छ्रेयांसि भूयांसीति, परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्रसज्येत । कुर्वन्ति कृष(2)न्तीति--परस्यानुस्वारपरसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोतीति ।। नैषः दोषः । अयोगवाहानामविशेषेणोपदेशश्चोदितः । तत्रेह तावत्--श्रेयांसि भूयांसीति । परस्यानुस्वारे कृते तस्य झल्ग्रहणेन(3) ग्रहणात्पूर्वस्यानुस्वारो भविष्यति । कुर्वन्ति कृष(2)न्तीति । परस्यानुस्वारपरसरर्णयोः(4) कृतयोस्तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारपरसवर्णौ भविष्यतः ।।
नैव वा पुनरत्रोगिल्लक्षणः प्राप्नोति ।। किं कारणम् ? ।। मिदचोन्त्यात्पर ः थ्य;त्युच्यते न च द्वयोर्मितोरचामन्त्यात्परत्वे संभवोऽस्ति ।। कथं तर्हीमौ द्वौ मितावचामन्त्यात्परौ स्तो--बह्वनङ्वांहि ब्राह्मणकुलानीति ? ।। विनिमित्तावेतौ ।। ।। तत्र बहूर्जि प्रतिषेधः ।। तत्र बहूर्जि प्रतिषेधो वक्तव्यः । बहूर्जि ब्राह्मणकुलानीति ।। अन्त्यात्पूर्वं नुममेके ।। अन्त्यात्पूर्वं नुममेके ः थ्य;च्छन्ति ।। किमविशेषेण आहो स्विद्बहूर्जावेव ? ।। किं चातः ? ।।
यद्यविशेषेण, काष्ठतकं्षीति भवितव्यम् । अथ बहूर्जावेव, काष्ठतड्क्षीति भवितव्यम् ।। एवं तर्हि बहूर्जावेव । बहूञ्र्जि(1) ।।
स तर्हि प्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः । अच ः थ्य;त्येषा पञ्चमी । अच उत्तरो यो झल् तदन्तस्य नपुंसकस्य नुमा भवितव्यम् । यश्चाऽत्र अच उत्तरो नाऽसौ झल्, नाऽपि तदन्तं नपुंसकम् । यदन्तं च(2)

नपुंसकं नासावच उत्तरः ।। ाथ्य;हापि तर्हि न प्राप्नोति--काष्ठातड्क्षीति । अत्र योऽच उत्तरो झल् न(3) तदन्तं नपुंसकं, यदन्तं च नपुंसकं नासावच उत्तरः ।। नैतदस्ति, --झल्जातिः प्रतिनिर्दिश्यते, --अच उत्तरा या झल्जातिरिति ।। यदि पञ्चमी, कुण्डानि वनानी त्यत्र न प्राप्नोति ।। एवं तर्हि ाथ्य;कोऽचि
विभक्तावित्यत्राऽचः सर्वनामस्थानेःथ्य;त्येतदनुवर्तिष्यते । एवमपि षष्ठ्यभावान्न प्राप्नोति ।। सर्वनामस्थाने
ाथ्य;त्येषा सप्तमी अच ाथ्य;ति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति--तस्मिन्निति निर्दिष्टे पूर्वस्येति ।। ( नपुंसकस्य झलचः ) ।।
-7-1-73- ाथ्य;कोऽचि विभक्तौ
अज्ग्रहणं किमर्थम् / ।। ाथ्य;कोचि व्यञ्जने(5) माभूत् ।। ाथ्य;कोऽचीत्युच्यते व्यञ्जनादौ मा भूत्--त्रपुभ्यां त्रपुभिः ।। अस्तु, लोपः ।। अस्त्वत्र नुम् न लोपः प्रातिपदिकान्तस्येति नलोपो भविष्यति ।। स्वरः कथम् ।। (कथं स्वरः ?) ।। पञ्चत्रपुभ्याम् पञ्चत्रपुभ्यः । ाथ्य;गन्ते द्विगावित्येष स्वरो न प्राप्नोति ।। स्वरो वै श्रूयमाणेऽपि(5) ।। श्रूयमाणेऽपि नुमि स्वरो भवति-पञ्चत्रपुणा पञ्चत्रपुणे ाथ्य;ति ।। लुप्ते किं न भविष्यति ।। लुप्ते ाथ्य;दानीं किं न भविष्यति ? ।। किं पुनः कारणं श्रूयमाणेऽपि नुमि स्वरो भवति ? ।। सङ्घातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा ततः श्रूयमाणेऽपि नुमि स्वरो भवति ।।
ाथ्य;दं तर्हि(1)--अतिराभ्याम् अतिराभिः । नुमि कृते रायो हलीत्यात्वं न प्राप्नोति ।। ाथ्य;दमिह संप्रधार्यं--नुम् क्रियतामात्वमिति, किमत्र कर्तव्यम् ? ।। परत्वादात्वम् ।। ाथ्य;ह तर्हि प्रियतिसृभ्याम् प्रियतिसृभिः । नुमि कृते तिसृभावो न प्राप्नोति ।। ाथ्य;दमिह संप्रधार्यं--नुम्क्रियतां तिसृभाव ाथ्य;ति, किमत्र कर्तव्यम् ? ।। परत्वात्तिसृभावः ।।
अत अत्तरं पठति-- ।। ाथ्य;कोऽचिविभक्तावज्ग्रहणंनुम्नुटोर्विप्रतिषेधार्थम् ।। ाथ्य;कोऽचिविभक्तावज्ग्रहणं क्रियते ।। (किं प्रयोजनम्(2) ? ।। नुम्नुटोर्विप्रतिषेधार्थम् ।) नुमो नुड्विप्रतिषेधेन यथा स्यात्--त्रपूणां जतूनाम् ।। ाथ्य;तरथा हि नुमो नित्यनिमित्तत्वान्नुडभावः ।। अक्रियमाणे ह्यज्ग्रहणे नित्यनिमित्तो नुम्, कृतेऽपि नुटि प्राप्नोत्यकृतेपि । नित्यनिमित्तत्वान्नुमि कृते नुटोऽभावः स्यात् ।।
एतदपि नास्ति प्रयोजनम् । क्रियमाणेऽपि वै अज्ग्रहणेऽवश्यमत्र नुडर्थो यत्नः कर्तव्यः । पूर्वविप्रतिषेधौ वक्तव्यः ।। ाथ्य;दं तर्हि प्रयोजनं--नुटि कृते नुम्मा भूदिति(1) ।। किं च स्यात् ? ।। त्रपूणां जतूनां,--नामीति दीर्घत्वं न स्यात् ।। मा भूदेवं नोपधाया ाथ्य;त्येवं भविष्यति ।। ाथ्य;ह तर्हि--शुचीनाम् ाथ्य;न्हन्पूषार्यम्णां शौ सौ चेत्यस्मान्नियमान्न प्राप्नोति दीर्घत्वम् । अर्थवद्ग्रहणे नानर्थकस्येत्येवं न भविष्यति ।। नैषा परिभाषेह शक्या विज्ञातुम्, ाथ्य;ह हि दोषः स्यात् --वाग्ग्मीति ।। एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवैति ।। ।। उत्तरार्थं च ।। उत्तरार्थं तर्ह्यज्ग्रहणं कर्तव्यम् अस्थिदधिसक्थ्यक्ष्णामनङ्दात्तः--अजादौ यथा स्यादिह मा भूत्--अस्थिभ्याम् अस्थिभिरिति ।। यद्युत्तरार्थं स्यात्तत्रैवायमज्ग्रहणं कुर्वीत, ाथ्य;ह हि क्रियमाणे यदि किं चित्प्रयोजनमस्ति तदुच्यताम् ? ।। ाथ्य;हापि क्रियमाणे प्रयोजनमस्ति ।। किम् ? ।। अजादौ यथा स्यादिह मा भूत्--त्रपु जतु ।। एतदपि नास्ति प्रयोजनं, विभक्तावित्युच्यते न चाऽत्र विभक्तिं पश्यामः ।। प्रत्ययलक्षणेन ।। न लुमताङ्गस्येति प्रत्याचार्योभवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। हे त्रपु हे त्रपो । अत्र गुणः सिद्धौ भवति(1) ।।
।। ाथ्य;कोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ? ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ? ।। 1 ।।
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड्वाच्य उत्तरार्थं तु ाथ्य;ह किचित्रपो ाथ्य;ति ।। 2 ।।।। (ाथ्य;कोचिविभक्तौ)
-7-1-74- तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य
किमिह पुंवद्भावेनातिदिश्यते ? ।। नुम्प्रतिषेधः(2) ।। कथं पुनः पुंवदित्यनेन नुम्प्रतिषेधः शक्यो विज्ञातुम् ? ।। वतिनिर्देशोऽयं,कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा उशीनरवन्मद्रेषु
यवाः । सन्ति न सन्तीति । मातृवदस्याः कलाः । सन्ति न सन्तीति । एवमिहापि पुंवत्--भवति, पुंवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे । यथा पुंसो न नुम्भवत्येवं तृतीयादिषु भाषितपुंस्कस्यापि न भवतीति ।।
किमुच्यते नुम्प्रतिषेधःथ्य;ति, न पुनरन्यदपि पुंसः(1) प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु विभक्तिषु(2) भाषितपुंस्कस्यातिदिश्येत ? ।। ।। अनारम्भात्पुंसि(3) ।। न हि किं चित्पुंसि प्रतिपदं कार्यमुच्यते
यत्तृतीयादिष्वजादिषु विभक्तिषु(2) भाषितपुंस्कस्यातिदिश्येत । नुम्प्रकृतस्तत्र किमन्यच्छक्यं विज्ञातुमन्यदतो नुम्प्रतिषेधात् ? ।। पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्वप्रतिषेधः ।। पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्वानां प्रतिषेधो वक्तव्यः । गुणः(5)--ग्रामण्ये ब्राह्मणकुलाय । गुणः(5) ।। नाभावः --ग्रामण्या ब्राह्मणकुलेन । नाभावः ।। नुट् -- ग्रामण्यां ब्राह्मणकुलानाम् । नुट् ।। औत्वं--ग्रामण्यां ब्राह्मकुले । ह्रस्वत्वमप्रतिषिद्धं ह्रस्वाश्रयाश्चैते विधयः प्राप्नुन्ति ।। ह्रस्वाऽभावार्थञ्च ।। (ह्रस्वाभावार्थञ्च) (1)।। किं च ? ।। नुम्प्रतिषेधार्थं (च) । कथं पुनरत्राऽप्रकृतस्याऽसंशब्दितस्य(2) ह्रस्वत्वस्य प्रतिषेधः शक्यो विज्ञातुम् ? ।। अर्थातिदेशात्सिद्धम् ।। ( अर्थातिदेशात्सिद्धमेतत्(3) ) ।। नैवं विज्ञायते--भाष्यते पुमाननेन शब्देन सोऽयं भाषितपुंस्कः, भाषितपुंस्कस्य शब्दस्य पुंशब्दो भवतीति ।। कथं तर्हि ? ।। भाष्यते पुमानस्मिन्नर्थे सोऽयं भाषितपुंस्कः, भाषितपुंस्कस्याऽर्थस्य पुंवदर्थो भवतीति ।। तद्धितलुक्प्रतिषेधश्च ।। तद्धितलुकश्च प्रतिषेधो वक्तव्यः । पीलुर्वृक्षः । पीलु फलम् । पीलुना पीलुने ाथ्य;ति ।। न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात् ।। न(1) वा वक्तव्यम् ।। किं कारणम् ।। ? सामानायामाकृतौ भाषितपुंस्कविज्ञानात् । समानायामाकृतौ यद्भाषितपुंस्कम् (ाथ्य;ति विज्ञायते ) । आकृत्यन्तरे चैतद्भाषितपुंस्कम् ।। किं वक्तव्यमेतत् ? ।। नहि ।। कथमनुच्यमानं गंस्यते ? ।। एतदपि अर्थनिर्देशात्सिद्धम्(2) ।। (तृतीयादिषु)
-7-1-77- ाथ्य;र् च द्विवचने
किमुदाहरणम् ? ।। अक्षी ते ाथ्य;न्द्र पिङ्गले ।। नैतदस्ति, पूर्वसवर्णेनाप्येतत्सिद्धम् ।। ाथ्य;दं तर्हि--अक्षीभ्यां ते नासिकाभ्याम् ।। ाथ्य;दं

चाप्युदाहरणम्--अक्षी ते ःथ्य;न्द्र पिङ्गले ।। ननु चोक्तं पूर्वसवर्णेनाप्येतत्सिद्ध(3)मिति ।। न(4) सिद्ध्यति । नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति ।। छन्दसि(5) नपुंसकस्य पुंवद्भावः (मधोर्गृम्णामि मधोस्तृप्ता(1) ःथ्य;वासते) ।। छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः ।। (किं प्रयोजनम्(1) ।।) ठमधोर्गृभ्णामि मधोस्तृप्ता ःथ्य;वासते ःथ्य;त्येवमर्थम् ।। पुंवद्भावेन नुमो निवृत्तिर्नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम् ।। (।। स्वरार्थ(2) ःथ्य;कारः ।। )स्वरार्थस्तर्हीकारो वक्तव्यः । उदात्तस्वरो(3) यथा स्यान्नपुंसकस्वरो मा भूदिति ।। ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति ।। अशक्यः पुंवद्भावातिदेशः(4) स्वरे तन्त्रं श्रयितुम् । ःथ्य;ह हि दोषः स्यात्--मध्यवस्मिन्नस्ति मधुर्मास ःथ्य;ति ।। स तर्हि पुंवद्भावो वक्तव्यः ? ।। न वक्तव्यः । प्रकृतं पुंवदिति वर्तते ।। ( ःथ्य;र् च द्विवचने ) ।।

-7-1-78- नाभ्यस्ताच्छतुः

कस्याऽयं प्रतिषेधः ? ।। नुम ःथ्य;त्याह(1) ।। तन्नुमो ग्रहणं कर्तव्यम् ? ।। न कर्तव्यं, प्रकृतमनुवर्तते ।। क्व प्रकृतम् ? ।। ःथ्य;दितो नुम्धातोरिति ।। तद्वै अनेकग्रहणेन(2) व्यवच्छिन्नमशक्यमनुवर्तयितुम् ।। एवं तर्हि सर्वनामस्थान ःथ्य;ति वर्तते, सर्वनामस्थाने यत्प्राप्नोति तस्य प्रतिषेधः ।। तद्वै बहुतरकेण(3) ग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम् । अथेदानीं व्यवहितमपि शक्यतेऽनुवर्तयितुं, --नुमेवानुर्वत्यः--ःथ्य;हार्थमुत्तरार्थं च । ःथ्य;ह(4) चैव प्रतिषेधः सिद्धो भवति, ःथ्य;ह च आच्छीनद्योर्नुमिति नुम्ग्रहणं न कर्तव्यं भवति ।। (नाभ्यस्ता) ।

-7-1-80- आच्छीनद्योर्नुम्

ःथ्य;ह कस्मान्न भवति--अदती घ्नती लुनती पुनतीति(5) ।। लोपे कृतेऽवर्णाऽभावात्(1) ।। किं तर्ह्यस्मिन्योगे उदाहरणम् ? ।। याती--यान्ती ।। ।। एकादेशे व्यपवर्गाऽभावात्(1) ।। अत्राप्येकादेशे व्यपर्गाऽभावान्न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गः) ।। उभयत आश्रये नाऽन्तादिवत्(1) (भावः(2)) ।। नोभयत आश्रयः करिष्यते । नैवं विज्ञायते--अवर्णान्ताच्छतुर्नुम्भवतीति ।। कथं तर्हि ? ।।

अवर्णान्नुम्भवति तच्चेदवर्णं शतुरनन्तरमिति ।। (आच्छीनद्योर्नुम्) ।।

-7-1-81- शप्श्यनोर्नित्यम्

नित्यग्रहणं किमर्थम् ? ।। विभाषा माभूत् ।। नैतदस्ति प्रयोजनं सिद्धोऽत्र पूर्वेणैव, तत्रारम्भसामर्थ्यान्नित्यो विधिर्भविष्यति ।। तदेतन्नित्यग्रहणं सांन्यासिकं(3)--तिष्ठतु तावत् ।। (शप्श्यनोर्नित्यम्) ।।

-7-1-82- सावनडुहः

।। अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वात् ।। अनडुहः सावाम्प्रतिषेधः प्राप्नोति ।। किं कारणम् ? ।। नुमोऽनवकाशत्वात् । अनवकाशो नुमामं बाधते ।। न वाऽवर्णोपधस्य नुम्वचनात् ।। न वैष दोषः ।। किं कारणम् ? ।। अवर्णोपधस्य नुम्वचनात् ।। अवर्णोपधस्य नुमं वक्ष्यामि ।। तदवर्णग्रहणं कर्तव्यम् ? ।। न कर्तव्यं, प्रकृतमनुवर्तते ।।क्व प्रकृतम्(1) ? ।। आच्छीनद्योर्नुमिति ।। यदि तदनुवर्ततेऽनडुहि यावन्त्यवर्णानि सर्वेभ्यः परो नुम्प्राप्नोति ।। नैषः दोषः मिदचोऽन्त्यात्पर ःथ्य;त्यनेन यत्सर्वान्त्यमवर्णं तस्मात्परो भविष्यति ।। ।। पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ।। अथ वा पुनः प्रसङ्गान्नुमि कृते आम्भविष्यति ।। यथाऽऽत्वादिषु द्विर्वचनम् ।। तद्यथा--जग्ले मम्ले ःथ्य;र्जतुरीजुरित्यात्त्वादिषु कृतेषु पुनः प्रसङ्गाद्विर्वचनं भवत्येवमत्रापि(3) नुमि कृते आम्भविष्यति ।। नैष युक्तः परिहारः । विप्रतिषेधे पुनःप्रसङ्गो । विप्रतिषेधश्च द्वयोः सावकाशयोर्भवति, ःथ्य;ह पुनरनवकाशो नुमामं बाधते ।। एवं तर्हि वृन्तान्तादेष(1) परिहारः प्रस्थितः ।। कस्माद्वृत्तान्तात् ? ।। ःथ्य;दमयं चोद्यो भवति--अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वादिति, तस्य परिहारो न वाऽवर्णोपधस्य नुम्वचनादिति । ततोऽयं चोद्यो भवति--यत्र तर्ह्यवर्णप्रकरणं नास्ति तत्र ते आमा नुमो बाधनं प्राप्नोति बह्वनड्वांहि ब्राह्मणकुलानीति ।। तत(3) उत्तरकालमिदं पठितं--पुनः प्रसङ्गविज्ञानाद्वा सिद्धमिति ।। ( सावनडुहः ) ।।

-7-1-84- दिव औत्

।। दिव औत्वे धातुप्रतिषेधः(4) ।। दिव औत्वे धातोः प्रतिषेधो वक्तव्यः, अक्षद्यूरिति ।। अधात्वधिकारात्सिद्धम् ।। अधातोरिति वर्तते ।। क्व प्रकृतम् ? ।। उगिदचां सर्वनास्थानेऽधातोरिति वर्तते।।।।। । अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषो भवति । काष्ठतड्क्षि कूटतड्क्षि । नपुंसकस्य झलचः--अधातोरिति, प्रतिषेधः प्राप्नोति ।। उक्तं वा ।। किमुक्तम् ? ।। अननुबन्धकग्रहणे हि न सानुबन्धकस्ये ति ।। अथ वा संबन्धमनुवर्तिष्यते (ःथ्य;ति(5)) ।। (दिवऔत्) ।।

-7-1-86- ःथ्य;तोऽत्सर्वनामस्थाने (महाभाष्ये अस्य सूत्रस्य संख्या अस्ति 7-1-85)

।। ःथ्य;तोऽद्वचनमनर्थकमाकारप्रकरणात् ।। ःथ्य;तोऽद्वचनमर्थकम् ।। किं कारणम् ? ।। आकारप्रकरणात् । आदिति वर्तते । ।। षपूर्वार्थं तु(1) ।। षपूर्वार्थं तर्ह्यद्वक्तव्यः । ऋभुक्षाणमिन्द्रम् । ऋभुक्षणमिन्द्रम् ।।

-7-1-89- पुंसोऽसुङ्

।। असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात् ।। असुङ्युपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामेवासुङ्भवतीति वक्तव्यम् ।। किं प्रयोजनम् ? ।। स्वरसिद्ध्यर्थम् उपदेशावस्थायामसुङि कृते ःथ्य;ष्टः स्वरो यथा स्यात्-- परमपुमानिति । अक्रियमाणे ह्युपदेशिवद्भावे समासान्तोदात्तत्वेऽसुङ् आन्तर्यतोऽस्वरकस्याऽस्वरकः(2) स्यात् । किं पुनः कारणं समासान्तोदात्तत्वं तावद्भवति न पुनरसुङ् । न परत्वादसुङा भवितव्यम्?।बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणोऽसुङ्, अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ।। स तर्हि उपदेशिवद्भावो वक्तव्यः ? ।। न वक्तव्यः । असुङ(3) आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः समासस्वरस्य बाधको भविष्यति ।। एवमप्युपदेशिवद्भावो वक्तव्यः, स यथैव हि निपातनस्वरः समासस्वरं बाधते एवं प्रकृतिस्वरमपि बाधेत,--पुमान् । तस्मात्सुष्ठूच्यते---असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादिति(1) ।। ( पुंसोऽसुङ् ) ।।

-7-1-90- गोतो णित्

किमिदं गोतः परस्य सर्वनामस्थानस्य णित्त्वमुच्यते, आहो स्वित्सर्वनामस्थाने परतो णित्कार्यमतिदिश्यते

? ।। कश्चात्र विशेषः ? ।। गोतः सर्वनामस्थाने णित्कार्यातिदेशः ।। गोतः सर्वनामस्थाने णित्कार्यमतिदिश्यते । ।। सर्वनामस्थाने णिद्वचने(2)

ह्यसंप्रत्ययः षष्ठ्यनिर्देशात् (3)।। सर्वनामस्थानस्य णिद्वचने(2) ह्यसंप्रत्ययः स्यात् ।। किं कारणम् ? ।। षष्ठ्यनिर्देशात् । षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते, न चात्र षष्ठीं पश्यामः ।। एवं तर्हि वतिनिर्देशोऽयं गोतो णिद्वद्भवती ति ।। स तर्हि वतिनिर्देशः कर्तव्यो, न ह्यन्तरेण वतिमतिदेशो गम्यते ।।
अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा--एष(1) ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त ःथ्य;त्याह(2) ते
मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाऽप्यणितं णिदित्याह । णिद्व दिति गम्यते ।। अथवा पुनरस्तु गोतः परस्य सर्वनामस्थानस्य णित्त्वम् ।। ननु चोक्तं सर्वनामस्थाने णिद्वचने(3) ह्यसंप्रत्ययः षष्ठ्यनिर्देशादिति ।। नैषः दोषः । गोत ःथ्य;त्येषा पञ्चमी सर्वनामस्थान ःथ्य;ति सप्तम्याः षष्ठीं प्रकल्पयिष्यति--तस्मादित्युत्तरस्येति ।।
अथ तपरकरणं किमर्थम् ? ।। ःथ्य;ह मा भूत्--चित्रगुः शबलगुरिति ।। नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति ।। स्थानिवद्भावात्प्राप्नोति ।। अत उत्तरं पठति ।। तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात्(4) ।। तपरकरणमनर्थकम् ।। किं कारणम् ? ।। स्थानिवत्प्रतिषेधात् प्रतिषिध्यतेऽत्र स्थानिवद्भावो--गोः पूर्वणित्वात्त्वस्वरेषु(5) स्थानिद्भावो न भवतीति । स चावश्यं प्रतिषेधः आश्रयितव्यः ।। ःथ्य;तरथा हि संबुद्धिजसोः प्रतिषेधः ।। यो हि मन्यते तपरकरणसार्मथ्यादत्र न भविष्यतीति संबुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात्,--हे चित्रगो (हे) चित्रगव ःथ्य;ति ।।
अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे(7) गुणे कृते कस्मादेवात्र न भवति(1) ? ।। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।। ननु चेदानीमसत्यपि(2) स्थानिवद्भावप्रतिषेधे एतया परिभाषया शक्यमुपस्थातुम् ? ।। नेत्याह । न हीदानीं क्व चिदपि स्थानिवत्स्यात् ।। ( गोतो णित् ) ।।
-7-1-95- तृज्वत्क्रोष्टुः
स्त्रियां च ।।
अथात्र विभक्तावित्यनुवर्तते उताहो न ? ।। किं चातः ? ।। ।। तृज्वत्स्त्रियां(3) विभक्तौ चेत्क्रोष्टीभक्तिर्न सिध्यति ।। तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिरिरिति न सिध्यति ।। एवं तर्हि ःथ्य;कार एव तृज्वद्भावं वक्ष्यामि ।। तदीकार ग्रहणं कर्तव्यम् ? ।। न कर्तव्यम् । क्रियते न्यासे एव । प्रश्लिष्टनिर्देशोऽयं--स्त्री ःथ्य;र्--स्त्री, स्त्रियामिति । ।। ःथ्य;कारे तन्निमित्तः सः ।। ःथ्य;कारे चेत् । तन्न ।। किं कारणम् ? ।। तन्निमित्तः सः । तृज्वद्भावनिमित्तः स ःथ्य;कारः, नाऽकृते तृज्वद्भावे ःथ्य;कारः प्राप्नोति ।। किं कारणम् ? ।। ऋन्नेभ्यो ङीबित्युच्यते । ःथ्य;कारे च तृज्वद्भावस्तदिदमितरेतराश्रयं(1) भवति । ःथ्य;तरेतराश्रयाणि च न प्रकल्पन्ते ।। एवं तर्हि गौरादिषु पाठादीकारो भविष्यति । ।। गौरादिषु न पठ्यते ।। नहि किं चित्तुन्नन्तं गौरादिषु पठ्यते ! ।। एवं तर्हि एतज्ज्ञापयत्याचार्यो---भवत्यत्र ःथ्य;कार ःथ्य;ति यदयमीकारे तृज्वद्भावं शास्ति ।। ।। तेनैव भावनं चेत्स्यादनिष्टोपि प्रसज्यते ।। यद्यपि नास्ति विशेषो ङीपो वा(1) ङीषो वा, ङीनपि तु प्राप्नोति । ःथ्य;ह च न प्राप्नोति--पञ्चभिः क्रोष्टीभिः क्रीतै रथैः--पञ्चक्रोष्टृभी रथैरिति ।। एवं तर्हि---
।। नचाऽपरं(2) निमित्तं संज्ञा च प्रत्ययलक्षणेन(3) ।। न चापरं निमित्तमाश्रीयते, अस्मिन्परतः क्रोष्टुस्तृज्वद्भवतीति ।। (किं तर्हि ?) ।। अङ्गस्य क्रोष्टुस्तृज्वद्भवत्यङ्गसंज्ञा च भवति प्रत्ययलक्षणेन ।।
किं पुनरयं शास्त्रातिदेशः-- तृचो यच्छास्त्रं तदतिदिश्यते, आहो स्विद्रूपातिदेशः, तृचो यद्रूपं तदतिदिश्यते ःथ्य;ति ? ।। कश्चात्र विशेषः ? ।।
।। तृज्वदिति शास्त्राऽतिदेशश्चेद्यथा चिणि तद्वत् ।। तृज्वदिति शास्त्रातिदेशश्चेद्यथा चिणि तद्वत्प्राप्नोति ।। कथं च चिणि ? ।। उक्तम्(1)--अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धमिति ।
आङ्गं यत्कार्यं तदतिदिश्यते ।। एवमिहाप्यनङ्गुणदीर्घत्वान्यतिदिष्टानि रपरत्वमनतिदिष्टम् ।। तत्र को दोषः ? ।। ।। तत्र रपरवचनम्(2) ।। तत्र रपरत्वं न सिध्यति, तद्वक्तव्यम् ।। नैषः दोषः । गुणेऽतिदिष्टे रपरत्वमप्यतिदिष्टं भवति ।। कथम् ? ।। कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम्, ऋतो ङिसर्वनामस्थानयोर्गुणो भवति उपस्थितमिदं भवति-- उरण्रपर ःथ्य;ति ।। एवं तर्हि अयमन्यो दोषो जायते-- आहत्य तृचो यच्छास्त्रं तदतिदिश्येताऽनाहत्य(2) वेति ? ।। किं चातः ? ।। यद्याहत्य, -- दीर्घत्वमतिदिष्टम्, अनङ्गुणरपरत्वान्यनतिदिष्टानि ।। अथानाहत्य, अनङ्गुणरपरत्वान्यतिदिष्टानि, दीर्घत्वमनतिदिष्टम् ।। अस्त्वाहत्य ।। ननु चोक्तं दीर्घत्वमतिदिष्टमनङ्गुणरपरत्वान्यनतिदिष्टानीति । नैष दोषः--दीर्घत्वेऽतिदिष्टेऽनङ्गुणरपरत्वान्यनयतिदिष्टानि भवन्ति ।। कथम् ?।। उपधाया ःथ्य;ति वर्तते, न चाऽकृतेष्वेतेषु दीर्घत्वभाविन्युपधा(1) भवति ।। कुतो नु खल्वेतदेतेषु विधिषु कृतेषु या उपधा तस्या उपधायाः
दीर्घत्वं भविष्यति न पुनः क्रोष्टोर्योऽन्तरतमो(3) गुणस्तस्मिन्कृतेऽवादेशे च योपधा तस्या दीर्घत्वं भविष्यति ? ।। नैकमुदाहरणं योगारम्भं प्रयोजयतीति (4)। तत्र तृज्वद्वचनसार्मथ्यादेतेषु विधिषु कृतेषु योपधा तस्या दीर्घत्वं भविष्यति ।। अथ वा किं न एतेन--- आहत्याऽनाहत्य वेति । आहत्याऽनाहत्य च तृचो यच्छास्त्रं तदतिदिश्यते ।।
अथ वा पुनरस्तु रूपातिदेशः ।। अथैतस्मिन्रूपातिदेशे सति किं प्रागादेशेभ्यो यद्रूपं तदतिश्यते, आहो स्वित्कृतेष्वादेशेषु ? ।। किं चातः ? ।। यदि प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते, ऋकार एकोऽतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानि । अथ कृतेष्वादेशेषु, --ऋकारोऽनतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यतिदिष्टानि ।। उभयथा च(1) स्वरोऽनतिदिष्टो न हि स्वरो रूपवान्(2) ।। (उभयथा(1) च स्वरोऽनतिदिष्टः ।। किं कारणम् ? ।। न हि स्वरो रूपवान् ।।)

अस्तु प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते ।। ननु चोक्तम्ऋकारोतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानीति ।। नैषः दोषः-- ऋकारेऽतिदिष्टे स्वाश्रया अत्रैते विधयो भविष्यन्ति ।। यदप्युच्यते-- उभयथा च(1) स्वरोऽनतिदिष्टो नहि स्वरो रूपवानिति । सचकारग्रहणसार्मथ्यात्स्वरो भविष्यति ।।
।। रूपातिदेश(2) ःथ्य;ति चेत्सर्वादेशप्रसङ्गः(3) ।। रूपातिदेश ःथ्य;ति चेत्सर्वादेशः प्राप्नोति । सर्वस्यतुन्नन्तस्य तृशब्द आदेशः प्राप्नोति ।। सिद्धन्तु रूपातिदेशात् ।। सिद्धमेतत् ।। कथम् ? ।। रूपातिदेशात् । रूपातिदेशोऽयम् ।। ननु चैवमेव कृत्वा चोद्यते--रूपातिदेश ःथ्य;ति

चेत्सर्वादेशप्रसङ्ग ःथ्य;ति ? ।। सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ।। सिद्धमेतत् ।। कथम् ? ।। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवती-त्येवं तुन्नन्तस्य तृजन्त आदेशो भविष्यति ।। एवमपि किं चिदेव तृजन्तं प्राप्नोति, ःथ्य;दमपि प्राप्नोति--पक्तेति ।। आन्तरतम्याच्च(4) सिद्धम् ।। क्रोष्टोर्यदन्तरतमं(5) तद्भविष्यति ।। किं पुनस्तत् ? ।। कुशेर्यस्तृज्विहितस्तदन्तम् ।। तृज्वद्वचनमनर्थकम्(6) (किं कारणम् ?) ।। तृज्विषये तृचो मृगवाचित्वात् ट ।। तृज्विषये एतत्तजन्तं मृगवाचि ( ।। तुनो निवृत्त्यर्थम् ।। ) ।। तुनो निवृत्त्यर्थं तर्हीदं वक्तव्यम् । तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात् ।। तुनो निवृत्त्यर्थमिति चेत्सिद्धं यथान्यत्रापि(7) ।। तुनो निवृत्त्यर्थमिति चेत्तदन्तरेण वचनं सिद्धं, --यथान्यत्राप्यविशेषविहिताः शब्दाः नियतविषया दृश्यन्ते ।। क्वाऽन्यत्र ? ।। तद्यथा घरतिरस्मायविशेषेणोपदिष्टः स घृतं घृणा घर्म ःथ्य;त्येवं(1) विषयः । रशिरस्मायविशेषेणोपदिष्टः स राशिः रश्मिः रशना ःथ्य;त्येवं विषयः । लुशिरस्मायविशेषेणोपदिष्टः स लोष्ट ःथ्य;त्येवं विषयः ।। ःथ्य;दं तर्हि प्रयोजनं-- विभाषां (2)वक्ष्यामीति विभाषा तृतीयादिष्वचीति ।। वावचनानर्थक्यं च स्वभावसिद्धत्वात् ।। वावचनं चानर्थकम् ।। किं कारणम् ? ।। स्वभावसिद्धत्वात् । स्वभावत(3) एतत्तृतीयादिष्वजादिषु विभक्तिषु तृजन्तं च तुन्नन्तं च मृगवाचीति ।। गुणवृध्द्योत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् (4)।। ।।। गुणवृध्द्यौत्वतृज्वद्भावेभ्यो नुम्भवति पूर्वविप्रतिषेधेन ।। तत्र गुणस्यावकाशः-- अग्नये वायवे ।

नुमोऽवकाशः--त्रपुणी । जतुनी । ःथ्य;होभयं प्राप्नोति त्रपुणे । जतुने।। वृद्धेरवकाशः--सखायौ सखायः। नुमः स एव । ःथ्य;होभयं प्राप्नोति-- अतिसखीनि ब्राह्मणकुलानीति । औत्वस्यावकाशः--अग्नौ । वायौ । नुमः स एव । ःथ्य;होभयं प्राप्नोति-त्रपूणि । जतूनीति । तृज्वद्भावस्यावकाशः--क्रोष्टा । क्रोष्टुना । नुमः स एव । ःथ्य;होभय प्राप्नोति--कृश-क्रोष्टुने अरण्याय । हितक्रोष्टुने वृषलकुलाय । नुम्भवति पूर्वविप्रतिषेधेन ।।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः । ःथ्य;ष्टवाची परशब्दो विप्रतिषेधे परं-यदिष्टं तद्भवतीति ।। नुमचिरतृज्वद्भावेभ्यो नुट्(5) (पूर्वविप्रतिषेधेन) ।। नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन वक्तव्यः । नुमोऽवकाशः--त्रपूणि जतूनि । नुटोऽवकाशः--अग्नीनां वायूनाम् । ःथ्य;होभयं प्राप्नोति--त्रपूणां जतूनाम् ।। अचि रादेशस्यावकाशः--तिस्रस्तिष्ठन्ति । चतस्रस्तिष्ठन्ति । नुटः स एव । ःथ्य;होभयं प्राप्नोति--तिसृणां चतसृणाम् ।। तृज्वद्भावस्यावकाशः-क्रोष्टा क्रोष्टुना । नुटः स एव । ःथ्य;होभयं
प्राप्नोति--क्रोष्टूनां । नुड्भवति पूर्वविप्रतिषेधेन ।।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः(1) ।। न वा नुड्विषये रप्रतिषेधात् ।। न वैतद्विप्रतिषेधेनापि सिध्यति--तिसृणां चतसृणामिति ।। कथं तर्हि सिध्यति ? ।। नुड्विषये रप्रतिषेधात् । नुड्विषये रप्रतिषेधो वक्तव्यः । (स चावश्यं वक्तव्यः(1)) ।। ःथ्य;तरथा हि सर्वापवादः ।। ःथ्य;तरथा हि सर्वापवादो रादेशः स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत । ।। तस्मान्नुड्विषये रप्रतिषेधः ।। तस्मान्नुड्विषये रादेशस्य प्रतिषेधो वक्तव्यः ।। न वक्तव्यः(1)। आचार्यप्रवृत्तिर्ज्ञापयति न रादेशो नुटं बाधत ःथ्य;ति, यदयं न तिसृचतसृ ःथ्य;ति प्रतिषेधं शास्ति- नामि दीर्घत्वस्य (तृज्वत्क्रोष्टुः) ।।

-7-1-96- स्त्रियां च

तृज्वत्क्रोष्टुः ।।

अथात्र विभक्तावित्यनुवर्तते उताहो न ? ।। किं चातः ? ।। ।। तृज्वत्स्त्रियां(3) विभक्तौ चेत्क्रोष्टीभक्तिर्न सिध्यति ।। तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिरिति न सिध्यति ।। एवं तर्हि ःथ्य;कार एव तृज्वद्भावं वक्ष्यामि ।। तदीकार ग्रहणं कर्तव्यम् ? ।। न कर्तव्यम् । क्रियते न्यासे एव । प्रश्लिष्टनिर्देशोऽयं--स्त्री ःथ्य;र्--स्त्री, स्त्रियामिति । ।। ःथ्य;कारे तन्निमित्तः सः ।। ःथ्य;कारे चेत् । तन्न ।। किं कारणम् ? ।। तन्निमित्तः सः । तृज्वद्भावनिमित्तः स ःथ्य;कारः, नाऽकृते तृज्वद्भावे ःथ्य;कारः प्राप्नोति ।। किं कारणम् ? ।। ऋन्नेभ्यो ङीबित्युच्यते । ःथ्य;कारे च तृज्वद्भावस्तदिदमितरेतराश्रयं(1) भवति । ःथ्य;तरेतराश्रयाणि च न प्रकल्पन्ते ।। एवं तर्हि गौरादिषु पाठादीकारो भविष्यति । ।। गौरादिषु न पठ्यते ।। नहि किं चित्तुन्नन्तं गौरादिषु पठ्यते ! ।। एवं तर्हि एतज्ज्ञापयत्याचार्यो---भवत्यत्र ःथ्य;कार ःथ्य;ति यदयमीकारे तृज्वद्भावं शास्ति ।। ।। तेनैव भावनं चेत्स्यादनिष्टोपि प्रसज्यते ।। यद्यपि नास्ति विशेषो ङीपो वा(1) ङीषो वा, ङीनपि तु प्राप्नोति । ःथ्य;ह च न प्राप्नोति--पञ्चभिः क्रोष्ट्रीभिः क्रीतै रथैः--पञ्चक्रोष्टृभी रथैरिति ।। एवं तर्हि---

।। नचाऽपरं(2) निमित्तं संज्ञा च प्रत्ययलक्षणेन(3) ।। न चापरं निमित्तमाश्रीयते, अस्मिन्परतः क्रोष्टुस्तृज्वद्भवतीति ।। (किं तर्हि ?) ।। अङ्गस्य क्रोष्टुस्तृज्वद्भवत्यङ्गसंज्ञा च भवति प्रत्ययलक्षणेन ।।

किं पुनरयं शास्त्रातिदेशः-- तृचो यच्छास्त्रं तदतिदिश्यते, आहो स्विद्रूपातिदेशः, तृचो यद्रूपं तदतिदिश्यते ःथ्य;ति ? ।। कश्चात्र विशेषः ? ।।

।। तृज्वदिति शास्त्राऽतिदेशश्चेद्यथा चिणि तद्वत् ।। तृज्वदिति शास्त्रातिदेशश्चेद्यथा चिणि तद्वत्प्राप्नोति ।। कथं च चिणि ? ।। उक्तम्(1)-- अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धमिति । आङ्गं यत्कार्यं तदतिदिश्यते ।। एवमिहाप्यनङ्गुणदीर्घत्वान्यतिदिष्टानि रपरत्वमनतिदिष्टम् ।। तत्र को दोषः ? ।। ।। तत्र रपरवचनम्(2) ।। तत्र रपरत्वं न सिध्यति, तद्वक्तव्यम् ।। नैषः दोषः । गुणेऽतिदिष्टे रपरत्वमप्यतिदिष्टं भवति ।। कथम् ? ।। कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम्, ऋतो ङिसर्वनामस्थानयोर्गुणो भवति उपस्थितमिदं भवति-- उरण्रपर ःथ्य;ति ।। एवं तर्हि अयमन्यो दोषो जायते--

आहत्य तृचो यच्छास्त्रं तदतिदिश्येताऽनाहत्य(2) वेति ? ।। किं चातः ? ।। यद्याहत्य, -- दीर्घत्वमतिदिष्टम्, अनङ्गुणरपरत्वान्यनतिदिष्टानि ।। अथानाहत्य, अनङ्गुणरपरत्वान्यतिदिष्टानि, दीर्घत्वमनतिदिष्टम् ।। अस्त्वाहत्य ।। ननु चोक्तं दीर्घत्वमतिदिष्टमनङ्गुणरपरत्वान्यनतिदिष्टानीति । नैष दोषः--दीर्घत्वेऽतिदिष्टेऽनङ्गुणरपरत्वान्यनयतिदिष्टानि भवन्ति ।। कथम् ?।। उपधाया ःथ्य;ति वर्तते, न चाऽकृतेष्वेतेषु दीर्घत्वभाविन्युपधा(1) भवति ।। कुतो नु खल्वेतदेतेषु विधिषु कृतेषु या उपधा तस्या उपधायाः दीर्घत्वं भविष्यति न पुनः क्रोष्टोर्योऽन्तरतमो(3) गुणस्तस्मिन्कृतेऽवादेशे च योपधा तस्या दीर्घत्वं भविष्यति ? ।। नैकमुदाहरणं योगारम्भं प्रयोजयतीति (4)। तत्र तृज्वद्वचनसामर्थ्यादेतेषु विधिषु कृतेषु योपधा तस्या दीर्घत्वं भविष्यति ।। अथ वा किं न एतेन--- आहत्याऽनाहत्य वेति

। आहत्याऽनाहत्य च तृचो यच्छास्त्रं तददतिदिश्यते ।।
अथ वा पुनरस्तु रूपातिदेशः ।। अथैतस्मिन्रूपातिदेशे सति किं प्रागादेशेभ्यो यद्रूपं तदतिश्यते, आहो स्वित्कृतेष्वादेशेषु ? ।। किं चातः ? ।। यदि प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते, ऋकार
एकोऽतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानि । अथ कृतेष्वादेशेषु, -- ऋकारोऽनतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यतिदिष्टानि ।। उभयथा च(1) स्वरोऽनतिदिष्टो न हि स्वरो रूपवान्(2) ।। (उभयथा(1) च स्वरोऽनतिदिष्टः ।। किं कारणम् ? ।। न हि स्वरो रूपवान् ।।)

अस्तु प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते ।। ननु चोक्तम्ऋकारोतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानीति ।। नैषः दोषः-- ऋकारेऽतिदिष्टे स्वाश्रया अत्रैते विधयो भविष्यन्ति ।। यदप्युच्यते-- उभयथा च(1) स्वरोऽनतिदिष्टो नहि स्वरो रूपवानिति । सचकारग्रहणसामर्थ्यात्स्वरो भविष्यति ।।
।। रूपातिदेश(2) ःथ्य;ति चेत्सर्वादेशप्रसङ्गः(3) ।। रूपातिदेश ःथ्य;ति चेत्सर्वादेशः प्राप्नोति । सर्वस्यतुन्नन्तस्य तृशब्द आदेशः प्राप्नोति ।। सिद्धन्तु रूपातिदेशात् ।। सिद्धमेतत् ।। कथम् ? ।। रूपातिदेशात् । रूपातिदेशोऽयम् ।। ननु चैवमेव कृत्वा चोद्यते--रूपातिदेश ःथ्य;ति चेत्सर्वादेशप्रसङ्ग ःथ्य;ति ? ।। सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ।। सिद्धमेतत् ।। कथम् ? ।। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवती-त्येवं तुन्नन्तस्य तृजन्त आदेशो भविष्यति ।। एवमपि किं चिदेव तृजन्तं प्राप्नोति, ःथ्य;दमपि प्राप्नोति--पक्तेति ।। आन्तरतम्याच्च(4) सिद्धम् ।। क्रोष्टोर्यदन्तरतमं(5) तद्भविष्यति ।। किं पुनस्तत् ? ।। कुशेर्यस्तृज्विहितस्तदन्तम् ।। तृज्वद्वचनमनर्थकम्(6) (किं कारणम् ?) ।। तृज्विषये तृचो मृगवाचित्वात् ट ।। तृज्विषये एतत्तजन्तं मृगवाचि ( ।। तुनो निवृत्त्यर्थम् ।। ) ।। तुनो निवृत्त्यर्थं तर्हीदं वक्तव्यम् । तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात् ।। तुनो निवृत्त्यर्थमिति चेत्सिद्धं यथान्यत्रापि(7) ।। तुनो निवृत्त्यर्थमिति चेत्तदन्तरेण वचनं सिद्धं, --यथान्यत्राप्यविशेषविहिताः शब्दाः नियतविषया दृश्यन्ते ।। क्वाऽन्यत्र ? ।। तद्यथा घरतिरस्मायविशेषेणोपदिष्टः स घृतं घृणा घर्म ःथ्य;त्येवं(1) विषयः । रशिरस्मायविशेषेणोपदिष्टः स राशिः रश्मिः रशनेत्येवं विषयः । लुशिरस्मायविशेषेणोपदिष्टः स लोष्ट ःथ्य;त्येवं विषयः ।। ःथ्य;दं तर्हि प्रयोजनं-- विभाषां (2)वक्ष्यामीति विभाषा तृतीयादिष्वचीति ।। वावचनानर्थक्यं च स्वभावसिद्धत्वात् ।। वावचनं चानर्थकम् ।। किं कारणम् ? ।। स्वभावसिद्धत्वात् । स्वभावत(3) एततृतीयादिष्वजादिषु विभक्तिषु तृजन्तं च तुन्नन्तं च मृगवाचीति ।। गुणवृध्योत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् (4)।। ।।। गुणवृध्यौत्वतृज्वद्भावेभ्यो नुम्भवति पूर्वविप्रतिषेधेन ।। तत्र गुणस्यावकाशः--अग्नये वायवे । नुमोऽवकाशः--त्रपुणी । जतुनी । ःथ्य;होभयं प्राप्नोति त्रपुणे । जतुने।। वृद्धेरवकाशः--सखायौ सखायः। नुमः स एव । ःथ्य;होभयं प्राप्नोति--अतिसखीनि ब्राह्मणकुलानीति । औत्वस्यावकाशः--अग्नौ । वायौ । नुमः स एव । ःथ्य;होभयं प्राप्नोति-त्रपूणि । जतूनीति । तृज्वद्भावस्यावकाशः--क्रोष्टा । क्रोष्टुना । नुमः स एव । ःथ्य;होभय प्राप्नोति--कृश-क्रोष्टुने अरण्याय । हितक्रोष्टुने वृषलकुलाय । नुम्भवति पूर्वविप्रतिषेधेन ।।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः । ःथ्य;ष्टवाची परशब्दो विप्रतिषेधे परं-यदिष्टं तद्भवतीति ।। नुमचिरतृज्वद्भावेभ्यो नुट्(5) (पूर्वविप्रतिषेधेन) ।। नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन वक्तव्यः । नुमोऽवकाशः--त्रपूणि जतूनि । नुटोऽवकाशः--अग्नीनां वायूनाम् । ःथ्य;होभयं प्राप्नोति--त्रपूणां जतूनाम् ।। अचि रादेशस्यावकाशः--तिस्रस्तिष्ठन्ति । चतस्रस्तिष्ठन्ति । नुटः स एव । ःथ्य;होभयं प्राप्नोति--तिसृणां चतसृणाम् ।। तृज्वद्भावस्यावकाशः-क्रोष्टा क्रोष्टुना । नुटः स एव । ःथ्य;होभयं प्राप्नोति--क्रोष्टूनां । नुड्भवति पूर्वविप्रतिषेधेन ।।
स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः(1) ।। न वा नुड्विषये रप्रतिषेधात् ।। न वैतद्विप्रतिषेधेनापि सिध्यति--तिसृणां चतसृणामिति ।। कथं तर्हि सिध्यति ? ।। नुड्विषये रप्रतिषेधात् । नुड्विषये रप्रतिषेधो वक्तव्यः । (स चावश्यं वक्तव्यः(1)) ।। ःथ्य;तरथा हि सर्वापवादः ।। ःथ्य;तरथा हि सर्वापवादो रादेशः स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत । ।। तस्मान्नुड्विषये रप्रतिषेधः ।। तस्मान्नुड्विषये रादेशस्य प्रतिषेधो वक्तव्यः ।। न वक्तव्यः(1)। आचार्यप्रवृत्तिर्ज्ञापयति न रादेशो नुटं बाधत ःथ्य;ति, यदयं न तिसृचतसृ ःथ्य;ति प्रतिषेधं शास्ति- नामि दीर्घत्वस्य (तृज्वत्क्रोष्टुः) ।।
-7-1-98- चतुरनडिहोरामुदात्तः
।। आमनडुहः स्त्रियां वा ।। आमनडुहः स्त्रियां वेति वक्तव्यम् । अनडुही । अनड्वाही ।। ( चतुरनडुहोराम् ) ।।
-7-1-100- ॠत ःथ्य;द्धातोः
उपधायाश्च ।। उदोष्ठ्यपूर्वस्य ।।
।। ःथ्य;त्वोत्वाभ्यां(1) गुणवृद्धी विप्रतिषेधेन ।। ःथ्य;त्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । ःथ्य;त्वोत्त्वयोरवकाशः--आस्तीर्णम्(2) । निपूर्ताः पिण्डाः । गुणवृद्ध्योरवकाशः--चयनं चायकः । लवनं लावकः । ःथ्य;होभयं प्राप्नोति आस्तरणम्, आस्तारकः(2) । निपरणं निपारकः । -- गुणवृद्धी भवतो विप्रतिषेधेन ।। अयुक्तोऽयं विप्रतिषेधो योऽयं गुणस्येत्त्वोत्वयोश्च ।। कथम् ? ।। नित्यो गुणः ।। ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये (शब्दानुशासने ) सप्तमस्य प्रथमे द्वितीयमाह्निकम् ।। पादश्च समाप्तः ।। 7|1|1 ।।
-7-1-101- उपधायाश्च
ॠत ःथ्य;द्धातोः ।। उदोष्ठ्यपूर्वस्य ।।
।। ःथ्य;त्वोत्त्वाभ्यां(1) गुणवृद्धी विप्रतिषेधेन ।। ःथ्य;त्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । ःथ्य;त्वोत्त्वयोरवकाशः--आस्तीर्णम्(2) । निपूर्ताः पिण्डाः । गुणवृद्ध्योरवकाशः--चयनं चायकः । लवनं लावकः । ःथ्य;होभयं प्राप्नोति आस्तरणम्, आस्तारकः(2) । निपरणं निपारकः । -- गुणवृद्धी भवतो विप्रतिषेधेन ।। अयुक्तोऽयं विप्रतिषेधो योऽयं गुणस्येत्त्वोत्वयोश्च ।। कथम् ? ।। नित्यो गुणः ।। ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये (शब्दानुशासने) सप्तमस्य प्रथमे द्वितीयमाह्निकम् ।। पादश्च समाप्तः ।। 7|1|1 ।।
-7-1-102- उदोष्ठ्यपूर्वस्य

उपधायाश्च ।। ऋत ः‍थ्य;द्धातोः ।।

।। ः‍थ्य;त्त्वोत्त्वाभ्यां(1) गुणवृद्धी विप्रतिषेधेन ।। ः‍थ्य;त्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । ः‍थ्य;त्त्वोत्त्वयोरवकाशः--आस्तीर्णम्(2) । निपूर्ताः पिण्डाः । गुणवृद्ध्योरवकाशः--चयनं चायकः । लवनं लावकः । ः‍थ्य;होभयं प्राप्नोति आस्तरणम्, आस्तारकः(2) । निपरणं निपारकः । -- गुणवृद्धी भवतो विप्रतिषेधेन ।। अयुक्तोऽयं विप्रतिषेधो योऽयं गुणस्येत्त्वोत्त्वयोश्च ।। कथम् ? ।। नित्यो गुणः ।। ः‍थ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते महाभाष्ये (शब्दानुशासने) सप्तमस्य प्रथमे द्वितीयमाह्निकम् ।। पादश्च समाप्तः ।। 7।1।1 ।।

-9-9-999-

# महाभाष्यम्/सप्तमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nn1

< महाभाष्यम् | सप्तमोऽध्यायः

7-2

-7-2-1- सिचि वृद्धिः परस्मैपदेषु

।। सिचि वृद्धावोकारप्रतिषेधः ।। सिचि वृद्धावोकारस्य प्रतिषेधो वक्तव्यः । उदवोढम् (1)। उदवोढम्(1) । उदवोढेति(1) ।। स तर्हि प्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः । ।। ओकाराद्वृद्धिर्विप्रतिषेधेन ।। (ओकाराद्वृद्धिर्भवति(2) विप्रतिषेधेन) । ओत्वं क्रियतां वृद्धिरिति । (किमत्र कर्तव्यम् ? ।।) वृद्धिर्भविष्यति विप्रतिषेधेन ।। ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वाऽभावः ।। ओकाराद्वृर्विप्रतिषेधेनेति चेदोत्त्वस्याऽभावः । उदवोढाम् उवोढम्(1) उदवोढेति ।। नैषः दोषः । उक्तं तत्र वर्णग्रहणस्य प्रयोजनं वृद्धावपि कृतायामोत्वं यथा स्यात् ।। पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् ।। अथ वा पुनः प्रसङ्गादत्र वृद्धौ कृतायामोत्वं भविष्यति ।। यथा प्रसारणादिषु(4) द्विर्वचनम् ।। तद्यथा--जग्ले मम्ले ःथ्य;र्जतुः ःथ्य;र्जुरिति प्रसारणादिषु(4) पुनः प्रसङ्गविज्ञानाद्विर्वचनं भवति ।।

ःथ्य;हापि तर्हि पुनःप्रसङ्गविज्ञानादोत्वं स्यात्--सौढामित्रिरिति ।। सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम् ।। (सौढामित्रौ(1) बहिरङ्गलक्षणत्वात्सिद्धम् ।) ।। बहिरङ्गलक्षणा वृद्धिरन्तरङ्गमोत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ।।

-7-2-2- अतो ल्रान्तस्य(1)

अन्तग्रहणं किमर्थं नाऽतो ल्र(2) ःथ्य;त्येवोच्यत ? ।। केनेदानीं तदन्तस्य भविष्यति ? ।। तदन्तविधिना ।। ःथ्य;दं तर्हि प्रयोजनम्--- अयमन्तशब्दोस्त्येवाऽवयववाची । तद्यथा---वस्त्रान्तो वसनान्तः । अस्ति सामीप्ये वर्तते । तद्यथा---उदकान्तं गतः । उदकसमीपं गत ःथ्य;ति गम्यते । तद्यः सामीप्ये वर्तते तस्येदं ग्रहणं यथा विज्ञायेत्(3) । अङ्गान्तौ यौ रेफलकारौ तयोः समीपे योऽकारस्तस्य(4) यथा स्यात् । ःथ्य;ह माभूत्--अश्वल्लीत् अवभ्रीत् । ( अतोल्रा ) ।।

-7-2-3- वदव्रजहलन्तस्याचः

हल्ग्रहणं किमर्थम् ।। समुच्चयो यथा विज्ञायेत -- वदिव्रज्योश्च हलन्तस्य(1) चाऽचःथ्य;ति । नैतदस्ति प्रयोजनम्, अज्ग्रहणादेवाऽत्र समुच्चयो भविष्यति--- वदिव्रज्योश्चाऽचश्चेति ।। अस्त्यन्यदज्ग्रहणे प्रयोजनम् ।। (किम्(2) ?) ।। वदिव्रजिविशेषणं यथा विज्ञायेत--वदिव्रज्योरच ःथ्य;ति ।। यद्येतावत्प्रयोजनं स्याद्वदिव्रज्योरत ःथ्य;त्येव(3) ब्रूयात् । अथ वैतदपि न ब्रूयात् । अत ःथ्य;ति वर्तते ।। ःथ्य;दं तर्हि प्रयोजनं---हलन्तस्य यथा स्यादजन्तस्य मा भूत् ।। कस्य पुनरजन्तस्य प्राप्नोति ? ।। अकारस्य । अचीकीर्षीत् । अजिहीर्षीत् ।। लोपोऽत्र बाधको भविष्यति ।। आकारस्य तर्हि प्राप्नोति---अयासीत् अवासीत् ।। नास्त्यत्र विशेषः--सत्यां वा वृद्धावसत्यां वा ।। सन्ध्यक्षरस्य तर्हि प्राप्नोति ।। नवै सन्ध्यक्षरमन्त्यमस्ति ।। ननु चेदमस्ति ढलोपे कृते उदवोढामुदवोढमुदवोढेति(1) ? ।। असिद्धो ढलोपस्तस्याऽसिद्धत्वान्नैतदन्त्यं भवति ।।

अत उत्तरं पठति---।। हल्ग्रहणमिटि प्रतिषेधार्थम् ।। हल्ग्रहणं क्रियते ।। (किं प्रयोजनम् ?) ।। ःथ्य;टिप्रतिषेधार्थम् । नेटीति प्रतिषेधं वक्ष्यति स हलन्तस्य यथा स्यादजन्तस्य मा भूत्, ---अलावीत् अयावीत्(4) । ।। न वाऽनन्तरप्रतिषेधात् ।। न वैतत्प्रयोजनमस्ति ।। किं कारणम्।।अनन्तरस्य(5) प्रतिषेधात् । अनन्तरं यद्वृद्धिविधानं तत्प्रतिषिध्यते ।।

कुत एतत् ? ।। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ।। तच्चानन्त्यार्थम् ।। तच्चाऽनन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते ।। कथं पुनर्ज्ञायतेऽनन्तरं वृद्धिविधानमनन्त्यार्थमिति ।। अन्त्यस्य(7) वचनार्थक्यात् ।। अन्त्यस्य वृद्धिविधाने प्रयोजनं नास्तीति कृत्वाऽनन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते ।। (।। अतो विभाषार्थन्तु (1)।।) अतो विभाषार्थं तर्हीदं वक्तव्यम् । अतो हलादेर्लघोरिति विभाषा वृद्धिं वक्ष्यति सा हलन्तस्य यथा स्यादजन्तस्य मा भूत्---अचिकीर्षीत् अजिर्हीषीत् -- (ःथ्य;ति(1))।।

।। अतो विभाषार्थमिति चेत्तत्सिद्धं (2)वृद्धेर्लोपबलीयस्त्वात् ।। अतो विभाषार्थमिति चेत्तदन्तरेणापि हल्ग्रहणं सिद्धम् ।। कथम् ? ।। वृद्धेर्लोपबलीयस्त्वात् । वृद्धेर्लोपो बलीयान्भवतीति । ःथ्य;दमिह संप्रधार्य--वृद्धिः क्रियतां लोप ःथ्य;ति, किमत्र कर्तव्यम् ? ।। परत्वाद्वृद्धिः ।। नित्यो लोपः --- कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि ।। अनित्यो लोपो, न(3) हि कृतायां वृद्धौ प्राप्नोति, परत्वात्सगिड्भयां भवितव्यम् ।। नात्र सगिटौ प्राप्नुतः ।। किं कारणम् ? ।। एकाचस्तौ वलीति वा ।। एकाचः सगिटावुच्येते ।। अथ वा वलीति तत्रानुवर्तते ।। किं पुनः कारणमेकाचस्तौ वलीति वा(1) ? ।। दरिद्रातेर्मा भूतामिति (2)। दरिद्रातेर्न सगिड्भयां भवितव्यम् ।। किं कारणम्(3) ? ।। उक्तमेतत्(4)--दरिद्रातेरार्धधातुके लोपः, सिद्धश्च प्रत्ययविधाविति । यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोऽसौ सगिड्विधौ(5) ।। एवमर्थमेव तर्ह्येकाज्ग्रहणमनुर्वत्यम्--अत्र सगिटौ मा भूतामिति । स एष नित्यो लोपो वृद्धिं बाधिष्यते ।। किं पुनर्भवान् वृद्धेरवकाशं मत्वाह--नित्यो लोप ःथ्य;ति ?, अनवकाशा वृद्धिर्लोपं बाधिष्यते ।। सावकाशा वृद्धिः ।। कोऽवकाशः ।। अनन्त्यः---अकणीत् अकाणीत् ।। कथं पुनः सत्यन्त्येऽनन्त्यस्य वृद्धिः स्यात्(2) ? ।। भवेयोऽताङ्गं विशेषयेत्तस्याऽनन्त्यस्य न स्यात् । वयं तु खल्वङ्गेनाऽकारं विशेषयिष्यामस्तत्राऽनन्त्यो न स्यात् । वयं तु खल्वङ्गेवनाऽकारं विशेषयिष्यामस्तत्राऽनन्त्यो वृद्धेरवकाशोऽन्त्यस्य लोपो बाधको भविष्यति । एवं वृद्धेर्लोपबलीयस्त्वम्(7) ।। (एवं वृद्धेर्लोपो बलीयान् भवति ) ।।

अथ वाऽऽरभ्यते पूर्वविप्रतिषेधो- ण्यल्लोपावियङ्य्ण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् -- ःथ्य;ति(9) ।। सा तर्ह्येषाऽनन्त्यार्था वृद्धिः--हलन्तस्य यथा स्यादजन्त्यस्य मा भूत्---अपिपठिषीत् ।। एतदपि नास्ति प्रयोजनम् ।। कथम् ? ।। हलादेरितिनैषा बहुव्रीहेः षष्ठी-हल् आदिर्यस्य सोऽयं हलादिः, हलादेरिति ।। का तर्हि(1) ? ।। कर्मधारयात्पञ्चमी--हल् आदिर्हलादिः, हलादेः परस्येति ।। यदि कर्मधारयात्पञ्चमी--अचकासीत्, --अत्र प्राप्नोति ।। सिचा आनन्तर्यं विशेषयिष्यामः---हलादेः परस्य सिच्यनन्तरस्येति ।। यदि सिचाऽऽनन्तर्यं विशेष्यते--अकणीत् अकाणीत्,--अत्र न प्राप्नोति ।। वचनाद्भविष्यति ।। ःथ्य;हापि तर्हि वचनात्प्राप्नोति--अचकासीत् ।। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ।। येन च नाव्यवधानम् ? ।। वर्णेनैकेन । सङ्घातेन पुर्नव्यवधानं भवति, न च भवति ।। यदि सिचाऽऽनन्तर्यं विशेष्यते---अस्तु बहुव्रीहेः षष्ठी ।। कस्मान्न भवति--अपिपठिषीदिति ? ।। व्यवहितत्वात् ।।

एव तर्हि--अतिदूरमेवेदं हल्ग्रहणमनुसृतम्---हल्ग्रहणमनन्त्यार्थमज्ग्रहणमनिगर्थम् ।। ( वदव्रजहलन्तस्याचः ) ।।

-7-2-5- ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्

किमर्थं जागर्तेर्वृद्धिप्रतिषेध उच्यते ? ।। सिचि वृद्धिर्मा भूदिति ।। नैतदस्ति प्रयोजनम् । जागर्तेर्गुण उच्यते, वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति ।। गुणे तर्हि कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति ।। नेटीति तस्याः प्रतिषेधो भविष्यति ।।

ःथ्य;यं तर्हि---प्रतिषेधोत्तरकाला वृद्धिरारभ्यतेऽतो ल्रान्तस्येति ।।

अपर आह--कक्ष्यया कक्ष्या निमातव्या । सिचि वृद्धिश्च प्राप्नोति गुणश्च । गुणो भवति । गुणे कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति । नेटीति च(1) तस्याः प्रतिषेधो भवति । प्रतिषेधोत्तरकालमतो हलादेर्लघोरिति विभाषा वृद्धिः प्राप्नोति । न च किं चित् । अतो ल्रान्तस्येति च(1) वृद्धिः प्राप्नोति । न च(2) किंचित् ।। (

हम्यन्तक्षणश्वसजागृणिश्व्येदिताम् ) ।।
-7-2-8- नेड्वशि कृति
किमर्थं पुरस्तात्प्रतिषेध उच्यते न विध्युत्तरकालः प्रतिषेधः क्रियते(3) । तद्यथा---अन्यत्रापि विध्युत्तरकालाः प्रतिषेधा भवन्ति ।। क्वाऽन्यत्र ? ।। कर्तरि कर्मव्यतिहारे न गतिहिंसार्थेभ्य ःथ्य;ति । देवताद्वन्द्वे च नेन्द्रस्य परस्य (ःथ्य;ति(4)) ।। तत्रायमप्यर्थो--द्विरिड्ग्रहणं न कर्तव्यं भवति, प्रकृतमनुवर्तते ।। नैवं शक्यम्, ःथ्य;डर्थं सार्वधातुकग्रहणं लिङः सलोपे संनिहितं तद्विच्छिद्येत ।। यदि पुनर्न वृध्द्यश्चतुर्भ्य ःथ्य;त्यत्रैवोच्येत ? ।। किं कृतं भवति ? ।। विध्युत्तरकालश्चैव प्रतिषेधः कृतो भवति । द्विश्चेड्ग्रहणं न कर्तव्यम्भवति (5)। ःथ्य;डर्थं च स सार्वधातुकग्रहणं लिङः सलोपे सन्निहितं भवति । तत्राऽयमप्यर्थः--द्विःप्रतिषेधो(6) न कर्तव्यो भवति ।। नैवं शक्यम्, ःथ्य;ह हि तुष्टोथ दुद्रोथेति,---ऋतो भारद्वाजस्येत्येतस्मान्नियमादिट्प्रसज्येत ।। कृसृभृवृस्तुद्रुस्रुश्रुवो(1) लिटीत्येष योगः प्रतिषेधार्थो भविष्यति ।। यद्येष योगः प्रतिषेधार्थो य

एतस्माद्योगादिट्परिप्राप्यते नियमात्स न सिध्यति, -- पेचिव पेचिम । शेकिव शेकिम

।। एवं तर्हि---( ।। कृसृभृग्रहणं नियमार्थं(2), स्तुद्रुस्रुश्रुवां प्रतिषेधार्थं, वृङ्वृञ्ञो ज्ञापकार्थम् ।।) ।। कृसृभृ ःथ्य;त्येषां(3) ग्रहणं नियमार्थं भविष्यति, स्तुद्रुस्रुश्रुवां प्रतिषेधार्थं, वृङ्वृञ्ञोर्ज्ञापकार्थम् ।।

एवमपि सामान्यविहितस्यैवेटः प्रतिषेधो विज्ञायेत(4), विशेषविहितश्चायं--थलीति(1) ।। पुरस्तात्पुनः(2) प्रतिषेधे सत्यनारभ्यापवादोऽयं भवति । तेन यावानिण्नाम तस्य सर्वस्यैव(4) प्रतिषेधः सिद्धो भवति ।। यदि खल्वप्येषोऽभिप्रायस्तन्न क्रियत(5) ःथ्य;ति, पुरस्तादपि प्रतिषेधे सति तन्न करिष्यते ।।

कथम् ? ।। ःथ्य;दमस्ति नेड्वशि कृतीति । ततो वक्ष्यामि--आर्धधातुकस्य वलादेरिति । ःथ्य;डित्यनुवर्तते । नेति निवृत्तम् ।।

अथ कृद्ग्रहणं किमर्थम् ? ।। ःथ्य;ह मा भूत् -- बिभिदिव बिभिदिमेति ।। नैतदस्ति प्रयोजनं---कृसृभृवृस्तुद्रुश्रुस्रुवो लिटीत्येतस्मान्नियमादत्रेड्भविष्यति ।। नाऽत्र तेन परिप्रापणं प्राप्नोति ।। किं कारणम् ? ।। प्रकृतिलक्षणस्य प्रतिषेधस्य स प्रत्यारम्भः प्रत्ययलक्षणश्चाऽयं प्रतिषेधः ।। उभयोः(6) स प्रत्यारम्भः ।। कथं ज्ञायते ? ।। वृङ्वृञ्ञोर्ग्रहणात् ।। कथं कृत्वा ज्ञापकम् ? ।। ःथ्य;मौ वृङ्वृञ्ञावुदात्तौ, तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्य--उभयोः स प्रत्यारम्भःथ्य;ति, ततो वृङ्वृञ्ञोर्ग्रहणं करोति । (किं च)-- न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च ।। ततः किम् ? ।। तुल्यजातीयेऽसति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति ।। ःथ्य;दं तर्हि प्रयोजनम्---ःथ्य;ह मा भूत्--रुदिवः रुदिमः ।। एतदपि नास्ति प्रयोजनम्, --- उपरिष्टाद्योगविभागः करिष्यते, -- आर्धधातुकस्य । यदेतदनुक्रान्तं एतदार्धातुकस्यैव(1) द्रष्टव्यम् । ततःथ्य;ड्वलादेरिति । तत्र(2) त्वेतावदद्रष्टव्यं यदि किंचित्तत्रान्यदप्यार्धधातुकग्रहणस्य प्रयोजनमस्ति । अथ न किं चित्--ःथ्य;ह वा कृद्ग्रहणं क्रियेत(3), तत्र वार्धधातुकग्रहणं, को न्वत्र विशेषः ! ।।

।। 8 ।। नेड्वररमनादौ(4) कृति ।। वररमनादौ कृतीट्प्रतिषेधं प्रयोजयति । (वर--) ःथ्य;र्शिता ःथ्य;र्शितुम् ःथ्य;श्वरः । वर ।। र--दीपिता दीपितुम् दीप्रम्(6) । र ।। म -- भसिता भसितुम् भस्म । म ।। न--यतिता । यतितुम् यत्नः ।। अथान्ये ये वशादयस्तत्र कथम् ? ।। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।।

-7-2-9- तितुत्रतथसिसुसरकसेषु च

।। तितुत्रेष्वग्रहादीनाम् ।। तितुत्रेष्वग्रहादीनामिति वक्तव्यम् । ःथ्य;ह मा भूत् । निगृहीतिः । उपस्निहितिः निकुचितिः । निपठितिरिति ।।

-7-2-10- एकाच उपदेशेऽनुदात्तात्

एकाज्ग्रहणं किमर्थम् ? ।। एकाज्ग्रहणं जागर्त्यर्थम् ।। एकाज्ग्रहणं क्रियते ।। (किं प्रयोजनम् ? ।। जागर्त्यर्थम् ।) जागर्तेरिट्प्रतिषेधो मा भूदिति(7) । जागरिता जागारतुम् ।। नैतदस्ति प्रयोजनम्--उपदेशेऽनुदात्तादित्युच्यते जागर्तिश्चोपदेशे उदात्तः ।। न ब्रूम ःथ्य;हार्थं जागर्त्यर्थमेकाज्ग्रहणं कर्तव्यमिति ।। किं तर्हि ? ।। उत्तरार्थम् । ।। श्र्युकः कितीतीट्प्रतिषेधं वक्ष्यति स जागर्तेर्मा भूदिति,--जागरितः जागरितवानिति ।। एतदपि नास्ति प्रयोजनं--जागर्तेर्गुण उच्यते(1) वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति । तत्र गुणे कृते रपरत्वे(2) च कृतेऽनुगन्तत्वादिट्प्रतिषेधो न भविष्यति ।। ननु चोपदेशाधिकारात्प्राप्नोति ।। उपदेशग्रहणं निवर्तयिष्यते ।। यदि निर्वत्यते(3) -- स्तीर्त्वा पूर्त्वा--ःथ्य;त्वोत्वयोः कृतयो रपरत्वे चाऽनुगन्ततत्वादिट्प्रतिषेधो न प्राप्नोति ।। नैषः दोषः--आनुपूर्व्या सिद्धमेतत्(4) ।। नात्राऽकृत ःथ्य;ट्प्रतिषेधे ःथ्य;त्वोत्वे प्राप्नुतः ।। किं कारणम् ? ।। न क्त्वा सेडिति कित्वप्रतिषेधात् ।। ःथ्य;दं तर्हि --- आतिस्तीर्षति निपुपूर्षति । ःथ्य;त्वोत्वयोः कृतयो रपरत्वे चाऽनुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति ।। मा भूदेवं--श्र्युकः कितीति, ःथ्य;ट्सनि वेत्येवं भविष्यति ।। ःथ्य;दं तर्हि प्रयोजनम्(1)-- आस्तीर्णं निपूर्ताः पिण्डाः । ःथ्य;त्वोत्वयोः कृतयोः रपरत्वे चाऽनुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति ।। मा भूदेवम्, ःथ्य;ट्सनि वेति सनि विभाषा, यस्य विभाषेति प्रतिषेधो भविष्यति ।।

ःथ्य;हार्थमेव तर्हि--।। वध्यर्थमेकाज्ग्रहणम्(1) ।। (वध्यर्थमेकाज्ग्रहणं कर्तव्यम् ) ।। वध

ःथ्य;ट्प्रतिषेधो मा भूदिति -- वधिषीष्टेति ।। एतदपि नास्ति प्रयोजनं, क्रियमाणेऽपि एकाज्ग्रहणे वध ःथ्य;ट्प्रतिषेधः प्राप्नोति,--वधिषीष्टेति ।। किं कारणम् ? ।। वध ःथ्य;टप्रतिषेधः सन्निपात एकाच्त्वात्प्रकृतेश्चानुदात्तत्वात् ।। संनिपाते चैव हि वधिरेकाच्श्रूयते प्रकृतिश्चास्याऽनुदात्ता ।।

किं पुनः कारणमेवं विज्ञायते--उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति ।। यङ्लोपार्थम् ।। यङ्लोपे मा भूदिति । बेभिदिता बेभिदितुम् । चेच्छिदिता चेच्छिदितुम् । ।। एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्कृञ्ञादिभ्योलिटि नियमाऽनुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य ।। एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्कृञ्ञादिभ्यो लिटि नियमस्याऽनुपपत्तिः ।। किं कारणम् ? ।। अप्राप्तत्वात्प्रतिषेधस्य । द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति । असतीट्प्रतिषेधे नियमो नोपपद्यते ।। असति नियमे को दोषः ? ।। तत्र पचादिभ्य ःथ्य;ड्वचनम् ।। तत्र पचादिभ्य ःथ्य;ड्वक्तव्यः । पेचिव । शेकिम ।। सनश्चेट्प्रतिषेधः ।। सनश्चेट्प्रतिषेधो वक्तव्यः बिभित्सति चिच्छित्सति । द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति । ःथ्य;ह च नीत्तः -- तत्वे कृतेऽनच्कत्वादिट्प्रतिषेधो(1) न प्राप्नोति ।। नैषः दोषः । आनुपूर्व्या सिद्धमेतत् । नात्राऽकृते ःथ्य;ट्प्रतिषेधे तत्वं प्राप्नोति।। किं कारणम्(1) ।। ति कितीत्युच्यते ।। यदप्युच्यते---एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्कृञ्ञादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्येति, मा भून्नियमः ननु चोक्तं--तत्र पचादिभ्य ःथ्य;ड्वचनमिति ।। नैषः दोषः--उक्तं तत्र थल्ग्रहणस्य प्रयोजनम् ।। (किम्(1) ?) ।। समुच्चयो यथा विज्ञायेत(2)--थलि च सेटि, क्ङिति च सेटीति ।।

यदप्युच्यते सनश्चेट्प्रतिषेध ःथ्य;ति ।। उभयविशेषणत्वात्सिद्धम् ।। उभयमुपदेशग्रहणेन विशेषयिष्यामः--उपदेशेऽनुदात्तादुपदेशे एकाच ःथ्य;ति ।। यङ्लोपे कथम्(2) ? ।। यङ्लोपे च(3) तदन्तद्विर्वचनात् ।। सन्यङन्तस्य स्थाने द्विर्वचनं तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स भवति यः स एकाजुपदेशेऽनुदात्तः ।। अथापि द्विःप्रयोगो द्विर्वचनमेवमपि न दोषः ।। न ह्यस्य भियुपदेश उपदेशः ।। किं तर्हि ? ।। बेभियुपदेश उपदेशः ।।

अथापि भियुपदेश उपदेश एवमपि न दोषः---अकारेण व्यवहितत्वान्न भविष्यति ।। ननु च लोपे कृते नास्ति व्यवधानम् ? ।। स्थानिवद्भावाद्व्यवधानमेव ।। न सिध्यति । पूर्वविधौ स्थानिवद्भावो न चाऽयं

पूर्वविधिः ? ।। एवं तर्हि(1)--पूर्वस्मादपि विधिः पूर्वविधिः ।।

कः पुनरुपदेशो न्याय्यः ? ।। यः कृत्स्नः ।। कश्च कृत्स्नः ? ।। य उभयोः ।। यदि तर्हि य उभयोः स कृत्स्नः स च न्याय्यो वध ःथ्य;ट्प्रतिषेधः प्राप्नोति--- आवधिषीष्टेति ।। नैषः दोषः---आद्युदात्तनिपातनं करिष्यते स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति(2) ।। एवमपि उपदेशिवद्भावो वक्तव्यो यथैव हि स निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत---आवधिषीष्टेति ।। नैषः दोषः---आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात्प्रत्ययस्वरो भविष्यति ।।

अथ के पुनरनुदात्ताः ? ।। आदन्ताः--अदरिद्राः । ःथ्य;वर्णान्ताश्चाऽश्रिश्विडीशीदीधीवेवीङः(3) । उवर्णान्ताः---युरुणुक्षुक्ष्णुस्नूर्णुवर्जम्(4) । ऋदन्ताश्चाऽजागृवृङवृञ्ञः(5) शकिः--कवर्गान्तानाम् । पचिवचिसिचिमुचिरिचिविचिप्रच्छियजिभजिसृजित्यजिभुजिभ्रस्जिमस्जिरुजियुजिणिजिविजिसञ्जिस्वञ्जयश्चवर्गान्तानाम्। अ(6)दिसदिशदिह(7)दिछिदितुदिनु(6)दिस्विदिभिदिस्कन्दिक्षुदिखिद्यतिविन्दि(7) (विन्ति(8))विद्यतिराधियुधि(8)बुधिशुधि(8)क्रुधिरुधिसाधिव्यधिबन्धिसिध्यतिहनिमन्यतयस्तवर्गान्तानाम् । तपितिपिवपिशपिछु(1)पिलुपिलिपिस्वप्यापिक्षिपिसृपितृपिदृपियभिरभिलभियमिरमिनमिगमयः--पवर्गान्तानाम् । रुशिरिशिदिशिविशिलिशिस्पृशिदृशिक्रुशिमृशिदंशित्विषिमृषिकृषिक्लिषिविषिपिषितुषिदुषिद्विषिघसिवसिदहिदिहिवहिदुहिनहिरुहि(वहि(2))लिहिमिहयश्चोष्मान्तानाम्(3) । वसिः प्रसारणी ।। ( एकाच उपदेशे ) ।

-7-2-13- कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि

।। कृञ्ञोऽसुटः ।। कृञ्ञोऽसुट ःथ्य;ति वक्तव्यम् । ःथ्य;ह माभूत् -- संचस्करिव । संचस्करिम ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम्---गुणे कृते रपरत्वे चाऽनुगन्तत्वादिट्प्रतिषेधो न भविष्यति ।। एवमप्युपदेशाधिकारात्प्राप्नोति तस्मादसुट ःथ्य;ति वक्तव्यम् ।। ( कृसृभृवृ )

-7-2-14- श्वीदितो निष्ठायाम्

श्विग्रहणं किमर्थं, न प्रसारणे कृते प्रसारणपूर्वत्वे(4) चोगन्तादित्येव सिद्धम् ? ।। अत उत्तरम्पठति---।। श्विग्रहणमिदन्तत्वादुपदेशस्य ।। श्विग्रहणं क्रियते (किङ्कारणम् ? ।।) ःथ्य;दन्तत्वादुपदेशस्य । उपदेशे उगन्तादित्युच्यते । श्वयतिश्चोपदेशे ःथ्य;दन्तः ।। (श्वीदितो निष्ठायाम् ) ।।

-7-2-15- यस्य विभाषा

।। यस्य विभाषाऽविदेः ।। यस्य विभाषाऽविदेरिति वक्तव्यम् । ःथ्य;ह मा भूत्---विदितः विदितवानिति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः । शविकरणस्य(1) विभाषा, लुग्विकरणश्चायम् ।।

-7-2-16- आदितश्च

विभाषा भावादिकर्मणोः ।।

किमर्थो योगविभागो न(2) आदितो विभाषा भावादिकर्मणोरित्येवोच्येत ।। केनेदानीं कर्तरि प्रतिषेधो भविष्यति ? ।। यस्य विभाषेत्यनेन ।। एवं तर्हि सिद्धे सति यद्योगविभागं करोति तज्ज्ञापयत्याचार्यः -- यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध ःथ्य;ति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। यस्य विभाषाऽविदेरित्युक्तं तन्न वक्तव्यं भवति ।।

-7-2-17- विभाषा भावादिकर्मणोः

आदितश्च ।।

किमर्थो योगविभागो न(2) आदितो विभाषा भावादिकर्मणोरित्येवोच्येत ।। केनेदानीं कर्तरि प्रतिषेधो भविष्यति ? ।। यस्य विभाषेत्यनेन ।। एवं तर्हि सिद्धे सति यद्योगविभागं करोति तज्ज्ञापयत्याचार्यः -- यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध ःथ्य;ति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। यस्य विभाषाऽविदेरित्युक्तं तन्न वक्तव्यं भवति ।।

-7-2-18- क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टवाढानि मन्थमनस्तमस्सक्ताऽविस्पष्टस्वराऽनायासभृशेषु

।। क्षुब्धं मन्थाऽभिधाने(1) ।। क्षुब्धं मन्थाभिधाने ःथ्य;ति वक्तव्यम् । क्षुभितं मन्थेनेत्येवान्यत्र । क्षुब्ध ।। स्वान्त- ।। स्वान्तं(1) मनोभिधाने ।। स्वान्तं मनोभिधाने ःथ्य;ति वक्तव्यम् । स्वनितं मनसेत्येवान्यत्र । स्वान्त ।। ध्वान्त-- ।। ध्वान्तं(1) तमोऽभिधाने ।। ध्वान्तं तमोभिधान ःथ्य;ति वक्तव्यम् । ध्वनितं तमसेत्येवान्यत्रा ध्वान्त ।। (लग्न(2)--।। लग्नं सक्ताभिधाने(1) ।। लग्नंसक्ताभिधाने ःथ्य;ति वक्तव्यम् ।। लगितं सक्तेनेत्येवान्यत्र । लग्न ।। ल्मिष्ट--।। ल्मिष्टं विस्पष्टाऽभिधाने(1) ।। ।। ल्मिष्टं विस्पष्टाऽभिधान ःथ्य;ति वक्तव्यम् । म्लेच्छितं विस्पष्टेनेत्येवान्यत्र । ल्मिष्ट ।। विरिब्ध--।। विरिब्धं स्वराभिधाने(1) ।। विरिब्धं स्वराभिधाने ःथ्य;ति वक्तव्यम् । विरेभितं स्वरेणेत्येवान्यत्र । विरिब्ध ।। -- फाण्ट---।। फाण्टम् अनायासाभिधाने(1) ।। फाण्टमनायासाभिधाने ःथ्य;ति वक्तव्यम् । फाणितमेवान्यत्र । फाण्ट ।। बाढ---।। बाढं भृशाभिधाने ।। बाढं भृशाभिधाने ःथ्य;ति वक्तव्यम् ।। 8 ।। बाहितमेवान्यत्र(2)) ।। (क्षुब्धस्वान्त)।।

-7-2-19- धृषिशसी वैयात्ये

किमिदं वैयात्य ःथ्य;ति ? ।। वियातभावो(1) वैयात्यम् ।।

-7-2-20- दृढः स्थूलबलयोः

दृढ (ःथ्य;ति(2)) निपातनं किमर्थं, न दृहेर्नेड्भवतीत्येवोच्येत ।। दृढनिपातनं नकारहकारलोपार्थं परस्य च ढत्वार्थम्(2) ।। दृढनिपातनं क्रियते, (किमर्थम् ? ।।) ठनकारहकारलोपार्थम् । नकारहकारलोपो यथा स्यात् । (परस्य च ढत्वार्थम्(2)) परस्य च ढत्वं यथा स्यात् । ।। अनिड्वचने हि रभावाऽप्रसिद्धिरलघुत्वात् ।। अनिड्वचने हि रभावस्याऽप्रसिद्धिः स्यात्(2) । द्रढीयान् ।। किं कारणम् ? ।। अलघुत्वात् ।। नलोपवचने च ।। नलोपश्च वक्तव्यः । ःथ्य;ह परिद्रढय्य गतः -- ल्यपि लघुपूर्वस्येत्ययादेशो न स्यात् । ःथ्य;ह च पारिदृढी कन्येति--गुरूपोत्तमलक्षणः ष्यङ्प्रसज्येत ।।

-7-2-21- प्रभौ परिवृढः

परिवृढ ःथ्य;ति किमर्थं निपात्यते, न परिपूर्वाद्वृहेर्नेड्भवतीत्येवोच्येत । ।। परिवृढनिपातनं च ।। (परिवृढ ःथ्य;ति निपातनं च) ।। किम् ? ।। नकारहकारलोपार्थं परस्य च ढत्वार्थम्, आनिड्वचने हि रभावाऽप्रसिद्धिरलघुत्वात्, नलोपवचनं चेत्येव ।। परिव्रढीयानिति र ऋतो हलादेर्लघोरिति रभावो न स्यात् । ःथ्य;ह च परिव्रढय्य गतःथ्य;ति, ल्यपि लघुपूर्वस्येत्ययादेशो न स्यात् । ःथ्य;ह च परिवृढी कन्येति गुरूपोत्तमलक्षणः ष्यङ्प्रसज्येत ।।

-7-2-29- हृषेर्लोमसु

।। 8 ।। हृषेर्लोमकेशकर्तृकस्य ।। हृषेलोमकेशकर्तृकस्येति वक्तव्यम् । हृष्टानि लोमानि हृषितानि लोमानि । हृष्टं लोमभिः हृषितं लोमभिः । हृष्टाः केशाः हृषिताः केशाः । हृष्टं केशैः हृषितं केशैः ।। (।। विस्मितप्रतिघातयोः(1) ।।) ।। विस्मितप्रतिघातयोरिति वक्तव्यम् । हृष्टो देवदत्तः । हृषितो देवदत्तः। हृष्टा दन्ताः । हृषिता दन्ताः ।। ( हृषेर्लोमसु ) ।।

-7-2-23- घुषिरविशब्दने

किमर्थमविशब्दन ःथ्य;त्युच्यते, न विशब्दने चुरादिणिचा भवितव्यम् ।। एवं तर्हि सिद्धे सति यदयमविशब्दन ःथ्य;त्याह तज्ज्ञापयत्याचार्यो--विशब्दने घुषेर्विभाषा णिज्भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः(3)--एष प्रयोग उपपन्नो भवति ।।

-7-2-26- णेरध्ययने वृत्तम्

किं पुन(1)रिदमध्ययनाऽभिधायिकायां निष्ठायां निपातनं क्रियते आहोस्विदध्ययने चेद्वृतिर्वर्तत ःथ्य;ति ? ।। किं चातः ? ।। यद्यध्ययनाभिधायिकायां निष्ठायां(2) निपातनं क्रियते, सिद्धं वृत्तो गुणः वृत्तं पारायणम् । वृत्तं(3) गुणस्य वृत्तं पारायणस्येति न सिध्यति ।। अथ विज्ञायते--अध्ययने चेद्वृतिर्वर्ततःथ्य;ति न दोषो भवति ।। यथा न दोषस्तथास्तु ।। अध्ययने चेद्वृतिर्वर्ततःथ्य;त्यपि वै विज्ञायमाने न सिध्यति ।। किं कारणम् ? ।। वृत्तिरयमकर्मकः ।। अकर्मकाश्चापि ण्यन्ताः सकर्मका भवन्ति,

अकर्मकश्चात्र वृतिः ।।
कथं पुनर्ज्ञायतेऽकर्मकोऽत्र वृतिरिति ? ।। अकर्मकाणां भावे क्तो भवती(1)त्येवमत्र भावे क्तो भवति । तत्र उदितः क्त्व विभाषा(2), यस्य विभाषेति ः्थ्य;ट्प्रतिषेधो भविष्यति ।। अथ णिग्रहणं किमर्थम् ? ।।
।। वृत्तनिपातने णिग्रहण(3)मण्यन्तस्याऽवधारणप्रतिषेधार्थम् ।। वृत्तनिपातने णिग्रहणं क्रियते ।। (किं प्रयोजनम्(4) ? ।। अण्यन्तस्याऽवधारणप्रतिषेधार्थम्) । अण्यन्तस्याऽवधारणं माभूदिति ।। कैमर्थक्यान्नियमो भवति ? ।। विधेयं नास्तीति कृत्वा ।। ः्थ्य;ह चास्ति विधेयं ।। किम्(4) ? ।। ण्यधिकाद्वृते रिट्प्रतिषेधो विधेयः तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः ।। कुतो नु खल्वेतदधिकार्थ आरम्भे सति ण्यधिकस्य भविष्यति न पुनः(5) सनधिकस्य वा स्याद्यङ्धिकस्य वेति ? ।। तस्माण्णिग्रहणं(6) कर्तव्यम् ।। अथ किमर्थं निपातनं क्रियते ? ।। निपातनं णिलोपेङ्गुणप्रतिषेधार्थम् ।। निपातनं क्रियते । (किमर्थम् ? ।। णिलोपेङ्गुणप्रतिषेधार्थम् ) । णिलोपार्थमिङ्गुणप्रतिषेधार्थं च ।। (णेरध्ययने वृत्तम् ) ।।
-7-2-27- वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः
अथ(1) दान्तशान्तयोः किं निपात्यते ? ।। दान्तशान्तयोरुपधादीर्घत्वं च ।। (दान्तशान्तयोरुपधादीर्घत्वञ्च) ।। किं च ? ।। णिलोपेट्प्रतिषेधौ च ।। उपधादीर्घत्वमनिपात्यं, वृध्या सिद्धम् ।। न सिध्यति, मितां ह्रस्व ः्थ्य;ति ह्रस्वत्वेन भवितव्यम् ।। एवं तर्ह्यनुनासिकस्य क्विझलोः क्ङितीत्येवात्र (2)दीर्घत्वं भविष्यति ।। न सिध्यति ।। किं कारणम् ? ।। णिचा व्यवहितत्वात् ।। णिलोपे कृते नास्ति व्यवधानम् ।। स्थानिवद्भावाद्व्यवधानमेव ।। प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधि प्रति न स्थानिवदिति
।।
अथ स्पष्टच्छन्नयोः किं निपात्यते ? ।। स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च ।। ( स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च
) ।। किं च ? ।। णिलोपेट्प्रतिषेधौ च ।।
-7-2-28- रुष्यमत्वरसंघुषास्वनाम्
।। घुषिस्वनोर्वावचनमिट्प्रतिषेधाद्विप्रतिषेधेन ।। घुषिस्वनोर्वानचनमिट्प्रतिषेधाद्भवति विप्रतिषेधेन । घुषेरिट्प्रतिषेधस्याऽवकाशः --असंपूर्वादविशब्दनम्---घुष्टा रज्जुः घुष्टो माथः(4) । वावचनस्यावकाशः --- संपूर्वाद्विषब्दनम् --- सङ्घुष्टं वाक्यं सङ्घुषितं वाक्यम् । संपूर्वादविशब्दने उभयं प्राप्नोति --- सङ्घुष्टा रज्जुः सङ्घुषिता रज्जुः । वावचनं भवति विप्रतिषेधेन ।।
स्वन ः्थ्य;ट्प्रतिषेधस्यावकाशः अनाङ्पूर्वान्मनोऽभिधानं--स्वान्तं मनः । वावचनस्यावकाशः--आङ्पूर्वादमनोऽभिधानम्--आस्वान्तो देवदत्तः आस्वनितो देवदत्तः । आङ्पूर्वान्मनोभिधान उभयं प्राप्नोति--आस्वान्तं मनः आस्वनितं मनः । वावचनं भवति विप्रतिषेधेन ।। ( रुष्यमत्वरसंघुषास्वनाम् ) ।।
-7-2-30- अपचितश्च
अपचितःथ्य;ति किं निपात्यते ? ।। (।। चायेश्चिभावश्च(2) ।। ) चायेश्चिभावो (2)निपात्यते । अपचितः । (।। क्तिनि नित्यम्(3) ।। ) ।। क्तिनि नित्यमिति वक्तव्यम् । अपचितिः ।। ( अपचितश्च ) ।।
-7-2-35- आर्धधातुकस्येड्वलादेः
आर्धधातुकग्रहणं किमर्थम् ? ।। वलादिग्रहणमार्धधातुकविशेषणं(4) यथा विज्ञायेत-- वलादेरार्धधातुकस्येति ।। अथाऽक्रियमाणे आर्धधातुकग्रहणे कस्य वलादिग्रहणं विशेषणं स्यात् ? ।। अङ्गस्येति वर्ततेऽङ्गविशेषणम् ।।
तत्र को दोषः ? ।। अङ्गस्य वलादेरादित ः्थ्य;ट्प्रसज्येत--अडाड्वत् । तद्यथा--अडाटावङ्गस्यादितो भवतस्तद्वत् ।। क्रियमाणेऽप्यार्धधातुकग्रहणेऽनिष्टं शक्यं(5) विज्ञातुं --- वलादेरार्धधातुकस्य यदङ्गमिति । अक्रियमाणे चेष्टम्--अङ्गस्य योवलादिरिति ।। किं चाङ्गस्य वलादिः ? ।। निमित्तं, -- यस्मिन्नङ्गमित्येतद्भवति ।। कस्मिन्नङ्गमित्येतद्भवति ? ।। प्रत्यये ।। यावता क्रियमाणेऽपि चाऽनिष्टं विज्ञायते, अक्रियमाणे चेष्टं. तत्राऽक्रियमाणे एवेष्टं विज्ञास्यामः ।। ः्थ्य;दं तर्हि प्रयोजनम्--ः थ्य;ह मा भूत्--आस्ते शेते ।। एतदपि नास्ति प्रयोजनं--रुदादिभ्यः सार्वधातुक ः्थ्य;त्येतन्नियमार्थं भविष्यति -- रुदादिभ्य एव सार्वधातुक ः्थ्य;ड्भवति नान्येभ्य ः्थ्य;ति ।। एवमपि वृक्षत्वं वृक्षता -- अत्र प्राप्नोति ।। एवं तर्हि विहितविशेषणं धातुग्रहणं---धातोर्यो विहितः ।। ननु च(3) धातोरेवाऽयं विहितः ।। न चायं धातोरित्येवं विहितः ।। क्व पुनर्धातुग्रहणं प्रकृतम् ? ।। ऋत ः्थ्य;द्धातोरिति ।। तद्वै षष्ठीनिर्दिष्टं पञ्चमीनिर्दिष्टेन चेह विहितः(4) शक्यते विशेषयितुम् ।। अथेदानीं षष्ठीनिर्दिष्टेनचापि विहितः(4)शक्यते विशेषयितुम् । शक्यमार्धधातुकग्रहणमकर्तुमिति ।।
-7-2-36- स्नुक्रमोरनात्मनेपदनिमित्ते
।। स्नुक्रमोरनात्मनेपदनिमित्तेचेत्कृत्युपसङ्ख्यानम् ।। स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसङ्ख्यानं कर्तव्यम् । प्रस्नविता प्रस्नवितुम् प्रस्नवितव्यम् । प्रक्रमिता प्रक्रमितुम् प्रक्रमितव्यम् ।। तत्तर्हि वक्तव्यम् ? ।।
न वक्तव्यम् । अविशेषेण स्नुक्रमोरिडागममुक्त्वा आत्मनेपदपरे नेति वक्ष्यामि । ।। आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधः ।। आत्मनेपदपरप्रतिषेधे(च)तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः । तत्परपरे तावत्--प्रसुस्नूषिष्यते । प्रचिक्रंसिष्यते ।। सीयुटि--प्रस्नोषीऽट प्रक्रंसीष्ट । एकादेशे--प्रस्नोष्यन्ते । प्रक्रंस्यन्ते । एकादेशे कृते व्यपवर्गाऽभावान्न प्राप्नोति ।। अन्तादिवद्भावेन व्यपवर्गः ।। उभयत आश्रये नान्तादिवत् ।।
एवं तर्ह्येकादेशः पूर्वविधौ(1) स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः ।। तत्परपरसीयुटोस्तर्हि
प्रतिषेधो वक्तव्यः ।। सिद्धंतु स्नोरात्मनेपदेन समानपदस्थास्येट्प्रतिषेधात् ।। सिद्धमेतत् ।। कथम् ? ।। (ठस्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् । ) । स्नोरात्मनेपदेन समानपदस्थस्य नेड्भवतीति वक्तव्यम् । यदि स्नोरात्मनेपदेन समानपदस्थस्येण्न भवतीत्युच्यते--प्रस्नवितेवाचरति प्रस्नवित्रीयते--अत्र न प्राप्नोति ।।
।। बहिरङ्गत्वाच्च(3) ।। बहिरङ्गलक्षणमत्रात्मनेपदम् ।।
।। क्रमेश्च(4) ।। क्रमेश्चात्मनेपदेन समानपदस्थस्येण्(5) भवतीति वक्तव्यम् ।। अथ किमर्थं क्रमेः
पृथग्ग्रहणं क्रियते न स्नुक्रमिभ्यामित्येवोच्येत ? ।। कर्तरि चात्मनेपदविषयात्कृति नेति वक्ष्यति तत्क्रमेरेव(6) यथा स्यात्स्नोर्मा भूत् । व्यतिप्रस्नविता(1) । व्यतिप्रस्नवितारौ । व्यतिप्रस्नवितारः ।। कर्तरि चात्मनेपदविषयात्कृति प्रतिषेधः(1) ।। कर्तरि चात्मनेपदविषयात्कृति प्रतिषेधो वक्तव्यः । प्रक्रन्ता । उपक्रन्ता ।। तत्तर्हीदं बहु वक्तव्यम् -- स्नोरात्मनेपदेन समानपदस्थस्येण्न भवतीति वक्तव्यम् । क्रमेश्चेति वक्तव्यम् । कर्तरि चात्मनेपदविषयात्कृतीति वक्तव्यम् । सूत्रं च भिद्यते ।।
यथान्यासमेवाऽस्तु । ननु चोक्तं-- स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसङ्ख्यानमिति ।। नैषः दोषः । स्नुक्रमी एवात्मनेपदनिमित्तत्वेन विशेषयिष्यामः, --न चेत्स्नुक्रमी आत्मनेपदस्य निमित्ते ः्थ्य;ति ।। कथं पुनर्धातुर्नामाऽऽत्मनेपदस्य निमित्तं स्यात् ? ।। धातुरेव निमित्तम् । आह हि भगवान्(2)--अनुदात्तङित आत्मनेपदम् शेषात्कर्तरि परस्मैपदमिति ।।
यत्र तर्हि धातुर्नाश्रीयते--भावकर्मणोरिति ? ।। अत्रापि धातुरेवाश्रीयते--- भावकर्मवृत्ताद्धातोरिति ।। कथं प्रक्रमितव्यम् उपक्रमितव्यम् (1)? ।। सत्यात्मनेपदे निमित्तशब्दो वर्तते ।। कथं प्रक्रन्ता उपक्रन्ता ।। तस्मादसत्यपि ।।
कथं प्रक्रमितव्यम् । उपक्रमितव्यम्(4) । तस्मात्सत्येव ।। कथं प्रक्रन्ता उपक्रन्ता ? ।। वक्तव्यमेवैतत् -- कर्तरि चात्मनेपदविषयात्कृतीति ।।
अथ वा कृतीति वर्तते ( स्नुक्रमोरनात्मनेपदनिमित्ते ) ।।

-7-2-37- ग्रहोऽलिटि दीर्घः

।। ग्रहेर्दीर्घत्वे ◌ःथ्य;इग्रहणम्(2) ।। ग्रहेर्दीर्घत्वे ◌ःथ्य;इग्रहणं कर्तव्यम् । ◌ःथ्य;टो दीर्घ ◌ःथ्य;ति वक्तव्यम् ।। न वक्तव्यम्--प्रकृतमनुवर्तते ।। क्व प्रकृतम् ? ।। आर्धधातुकस्येड्वलादेरिति ।। एवमपि कर्त्तव्यमेव(3) ।। अकरणे(4) ह्यसंप्रत्ययः षष्ठ्यभावात् ।। अक्रियमाणे हीड्ग्रहणेऽसंप्रत्ययः स्यात् ।। किं कारणम् ? ।। षष्ठ्यभावात् । षष्ठीनिर्दिष्टस्य आदेशा उच्यन्ते न चात्र षष्ठीं पश्यामः ।। क्रियमाणे चापि ◌ःथ्य;इग्रहणे(1)-- ।। चिण्वदिटः प्रतिषेधः ।। चिण्वदिटः प्रतिषेधो वक्तव्यः । ग्रहिष्यते ।। यङ्लोपे च ।। यङ्लोपे च प्रतिषेधो वक्तव्यः । जरीगृहिता जरीगृहितुम् जरीगृहितव्यम् ।।

यदि पुनरिड् दीर्घ आगमान्तरं विज्ञायेत ? ।। ◌ःथ्य;इदीर्घ ◌ःथ्य;ति चेद्विप्रतिषिद्धम् ।। ◌ःथ्य;डदीर्घ ◌ःथ्य;ति चेद्विप्रतिषिद्धं भवति(3) । यदि ◌ःथ्य;ण्न दीर्घः, अथ दीर्घो नेट्, ◌ःथ्य;इ दीर्घश्चेति विप्रतिषिद्धम् ।। प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वाऽभावः(1) ।। प्रतिषिद्धस्य च (2)पुनर्विधाने दीर्घत्वस्याऽभावः । वुवूर्षते विवरिषते विवरीषते ।। अत्रापीड् दीर्घ ◌ःथ्य;त्यनुवर्तिष्यते ।।

यत्तर्हि विदेशस्थं प्रतिषिध्य पुनर्विधानं तन्न सिध्यति । जॄव्रश्च्योः क्त्विश्र्युकः कितीत्यनेन प्रतिषिद्धे दीर्घत्वं न प्राप्नोति । जरित्वा जरीत्वा । ◌ःथ्य;टो विधिरिटः प्रतिषेधः । यथाप्राप्त(3) ◌ःथ्य;इ दीर्घो भविष्यति ।।

यदि तर्हीटो ग्रहणे ◌ःथ्य;टो ग्रहणं न भवति,--जरीत्वा--न क्त्वा सेडिति कित्त्वप्रतिषेधो न प्राप्नोति । ◌ःथ्य;ह चाऽग्रहीदिति-- ◌ःथ्य;ट ◌ःथ्य;टीति सिज्लोपो न प्राप्नोति । ◌ःथ्य;ह चाऽग्रहीत्--नेटीति वृद्धिप्रतिषेधो न प्राप्नोति ।। मा भूदेवं ह्यन्तानामित्येवं भविष्यति ।। अत्रापि नेटीत्येवानुवर्तते । तच्चावश्यमिड्ग्रहणमनुर्वत्यम्-अधाक्षीदित्येवमर्थम्(4) । तथा--अग्रहीध्वम्(5) अग्रहीढ्वं -- विभाषेट ◌ःथ्य;ति मूर्धन्यो न प्राप्नोति । तस्मान्नैतच्छक्यं(1) वक्तुम्--ःथ्य;टोग्रहणे ◌ःथ्य;टो ग्रहणं न भवतीति ।। भवति चेत्प्रतिषिद्धस्य च(2) पुनर्विधाने दीर्घाऽभाव (◌ःथ्य;त्येव) ।

तस्मादशक्य ◌ःथ्य;इ दीर्घ आगमान्तरं विज्ञातुम् । न चेद्विज्ञायते ◌ःथ्य;टो ग्रहणं कर्तव्यम् ।। न कर्तव्यम् ।

आर्धधातुकस्येति वर्तते । ग्रहः परस्यार्धधातुकस्य दीर्घत्वं वक्ष्यामि ।। ◌ःथ्य;हापि तर्हि प्राप्नोति -- ग्रहणम् ग्रहणीयम् ।।वलादेरिति वर्तते ।। एवमपि ग्रहीता ग्रहीतुम् अत्र न प्राप्नोति ।। भूतपूर्वगत्या भविष्यति । एवमपि ग्राहकः-अत्र प्राप्नोति ।। किं चेट्प्रतिघातेन खल्वपि दीर्घत्वमुच्यमानमिटं बाधेत(3) । तस्मादिटो ग्रहणं कर्तव्यम् ।। न कर्तव्यम् । प्रकृतमनुवर्तते ।। क्व प्रकृतम् ? ।। आर्धधातुकस्येड्वलादेरिति ।।

ननु चोक्तम्--एवमपि कर्तव्यमेव(5), अग्रहणे ह्यसंप्रत्ययः षष्ठ्यनिर्देशा--दिति ।। नैषः दोषः । ग्रह ◌ःथ्य;त्येषा पञ्चमी ◌ःथ्य;डिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति---तस्मादित्युत्तरस्येति ।। एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं चिण्वदिटः प्रतिषधःथ्य;ति ।। कथम् ? ।। प्रकृतस्येट(6) ◌ःथ्य;दं दीर्घत्वं, न च चिण्वदिट्प्रकृतः ।। यङ्लोपे च(7) कथम् ? ।। प्रकृतस्येट(6) ◌ःथ्य;दं दीर्घत्वं, न च चिण्वदिट्प्रकृतः ।। यङ्लोपे च(7)कथम् ? ।। यङ्लोपे चोक्तम्-- ◌ःथ्य;टि सर्वत्र ।। क्व सर्वत्र ? ।। यद्येव(1) प्रकृतस्येटो दीर्घत्वमथापि ◌ःथ्य;ईदीर्घ(2) आगमान्तरं विज्ञायेत (2)।। यङ्लोपे चोक्तम्(4) ।। किमुक्तम् ? ।। तदन्तद्विर्वचनादिति ।।

-7-2-44- स्वरतिसूतिसूयतिधूञूदितो वा

अथ वेति वर्तमाने पुनर्वावचनं किमर्थम् ? ।। पुवर्वावचनं लिङ्सिचोर्निवृत्त्यर्थम् ।। पुनर्वावचनं क्रियते ।। (किमर्थम्(5) ?) ।। लिङ्सिचोर्निवृत्त्यर्थम् ? ।। (लिङ्सिचोर्निवृत्तिर्यथा स्यात्(5)) ।।

अथ किमर्थं सूतिसूयत्योः पृथग्ग्रहणं क्रियते ? ।। सुवतेर्मा भूत् ।।

अथ किमर्थं धूञः सानुबन्धकस्य ग्रहणं क्रियते ? ।। धुवतेर्मा भूदिति ।।

किं पुनरियं प्राप्ते विभाषा, आहो स्विदप्राप्ते ? ।। कथं च प्राप्ते कथं चाऽप्राप्ते(1) ? ।। यदि स्वरतिरुदात्तस्ततः प्राप्ते, अथाऽनुदात्तस्ततोऽप्राप्ते । ।। स्वरतिरुदात्तः ।। स्वरतिरुदात्तः पठ्यते ।। किमर्थं तर्हि वावचनम् ? ।। वावचनं निवृत्त्यर्थम् ।। वावचनं क्रियते ।। (किं प्रयोजनम् ?) ।। निवृत्त्यर्थम् ।। अनुदात्ते हि किति वाप्रसङ्गः प्रतिषिध्य पुनर्विधानात् ।। अनुदात्ते हि सति किति विभाषा प्रसज्येत । स्वृत्वा ।। किं कारणम् ? ।। प्रतिषिध्य पुनर्विधानात् । प्रतिषिध्य किलाऽयं पुनर्विधीयते । स यथैवैकाज्लक्षणं प्रतिषेधं बाधते एवं श्र्युकः कितीत्येतमपि बाधेत ।।

यदि तर्ह्युदात्तः स्वरतिः, पठिष्यति(1) विप्रतिषेधं-- स्वरतेर्वेट्त्वाद्दतः स्ये विप्रतिषेधेनेति स(2) विप्रतिषेधो नोपपद्यते ।। किं कारणम् ।। ? स विधिरयं प्रतिषेधो, विधिप्रतिषेधयोश्चाऽयुक्तो विप्रतिषेधः ।। सोऽपि विधिर्न मृदूनामिव कार्पासानां कृतः, प्रतिषेधविषय आरभ्यते, स यथैवैकाज्लक्षणं प्रतिषेधं बाधते एवमिममपि बाधिष्यते ।। अथ वा येन नाप्राप्ते तस्य बाधनं भवति । न चाऽप्राप्तेवलादिक्षणे ◌ःथ्य;यं विभाषा आरभ्यते, स्यलक्षणे पुनः प्राप्ते चाऽप्राप्ते च ।।

अथ वा-मध्येपवादाः पूर्वान्विधीन्बाधन्ते ◌ःथ्य;त्येवमियं विभाषा वलादिलक्षणमिटं बाधिष्यते, स्यलक्षणं न बाधिष्यते ।।

अथ वा पुनरस्त्वनुदात्तः ।। ननु चोक्तम्- अनुदात्ते हि किति वा प्रसङ्गः प्रतिषिध्य पुनर्विधानादिति ।। नैषः दोषः । येन नाप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते एकाज्लक्षणे प्रतिषेधे ◌ःथ्य;यं विभाषा आरभ्यते । श्र्युकः कितीत्येतस्मिन्पुनः प्राप्ते चाऽप्राप्ते च ।। अथ वा श्र्युकः कितीत्येष(1) योग उदात्तार्थश्च, येभ्यश्चाऽनुदात्तेभ्य ◌ःथ्य;ट्प्राप्यते तद्बाधनार्थश्च ।। अथ वा(2) श्र्युकः कितीतीहाऽनुवर्तिष्यते ।। अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति--नेयं विभाषा उग्लक्षणस्य(2) प्रतिषेधस्य विषये भवतीति--यदयं सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनामिति स्वृग्रहणं करोति ।। (स्वरतिसूतिसूयति) ।।

-7-2-47- ◌ःथ्य;ण्निष्ठायाम्

◌ःथ्य;डिति वर्तमाने पुनरिड्ग्रहणं किमर्थम् ? ।। ◌ःथ्य;इग्रहणं नित्यार्थम् ।। (◌ःथ्य;डितिवर्तमाने(4) पुनरिड्ग्रहणं क्रियते ।। किं प्रयोजनम् ? ।। नित्यार्थम्) । नित्यार्थोयमारम्भः ।। नैतदस्ति प्रयोजनं सिद्धाऽत्र विभाषा पूर्वेणैव, तत्रारम्भसार्मथ्यान्नित्यो विधिर्भविष्यति ।। नात्र पूर्वेण विभाषा प्राप्नोति ।। किं कारणम् ? ।। यस्य विभाषेति प्रतिषेधात् । तत्रारम्भसामर्थ्याद्विभाषा लभ्येत । पुनरिड्ग्रहणादिडेव(1) भवति ।। ( ◌ःथ्य;ण्निष्ठायाम् ) ।।

-7-2-48- तीषसहलुभरुषरिषः(2)

।। ◌ःथ्य;षेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः ।। ◌ःथ्य;षेस्तकारे श्यन्प्रत्ययात्प्रतिषेधो वक्तव्यः । ◌ःथ्य;ह मा भूत्---प्रेषिता प्रेषितुम् प्रेषितव्यम् ।। (तीषसहलुभ) ।।

-7-2-52- वसतिक्षुधोरिट्

◌ःथ्य;डिति वर्तमाने पुनरिडग्रहणं किमर्थम् ? ।। पुनरिड्ग्रहणं नित्यार्थम् ।। ◌ःथ्य;डिति वर्तमाने पुनरिड्ग्रहणं क्रियते ।। (किं प्रयोजनम् ? ।।) ठनित्यार्थम् । नित्यार्थोऽयमारम्भः ।। (वसतिक्षुधोरिट्) ।।

-7-2-58- गमेरिट् परस्मैपदेषु

।। गमेरिट्परस्मैपदेषु चेत्कृत्युपसङ्ख्यानम्(3) ।। गमेरिट् परस्मैपदेषु(4) चेत्कृत्युपसङ्ख्यानं कर्तव्यम् । जिगमिषिता जिगमिषितुम् जिगमिषितव्यम् ।। तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ? ।। न कर्तव्यम् । अविशेषेण गमेरिडागममुक्त्वा आत्मनेपदपरे नेति वक्ष्यामि ।। आत्मनेपदपरप्रतिषेधे उक्तम् ।। किमुक्तम् ? ।। आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेध ◌ःथ्य;ति । ◌ःथ्य;हापि-- ।। आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषुप्रतिषेधोवक्तव्यः ।। तत्परपरे तावत्---संजिगंसिष्यते । सीयुटि--संगंसीष्ट । एकादेशे--संगंस्यन्ते । एकादेशे कृते व्यपवर्गाऽभावान्न(1) प्राप्नोति ।। सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ।। सिद्धमेतत् ।। कथम् ? ।। गमेरात्मनेपदेन समानपरस्थस्य (◌ःथ्य;ट्प्रतिषेधात् । गमेरात्मनेपदेन समानपदस्थस्य(2)) ◌ःथ्य;ण्न भवतीति वक्तव्यम् ।। (गमेरिट्परस्मैपदेषु) ।।

-7-2-59- न वृद्भ्यश्चतुर्भ्यः

।। वृतादिप्रतिषेधे च ।। किम् ? ।। कृत्युपसङ्ख्यानम् ।। (कृत्युपसङ्ख्यानं(3)) कर्तव्यम् । विवृत्सिता । विवृत्सितुम् । विवृत्सितव्यम् ।। तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ?

।। न कर्तव्यम् ? ।। अविशेषेण वृतादिभ्य ः्थ्य;ट्प्रतिषेधमुक्त्वा आत्मनेपदपर ः्थ्य;ङ्भवतीति वक्ष्यामि ।। आत्मनेपदपर(4) ः्थ्य;ङ्वचने तत्परपरसीयुडेकादेशेष्विड्वचनम्(5) ।। आत्मनेपदपर ः्थ्य;ङ्वचने तत्परपरसीयुडेकादेशेष्विड्वक्तव्यः । तत्परपरे तावत्--विवर्तिषिष्यते । सीयुटि--वर्तिषीष्ट । एकादेशे-वर्तिष्यन्ते वर्द्धिष्यन्ते(6) ।। सिद्धं तु वृतादीनामात्मनेपदेन समानपरस्थस्येड्वचनात् ।। सिद्धमेतत् ।। कथम् ? ।। वृतादीनामात्मनेपदेन समानपदस्थस्ये (ड्वचनात् । वृतादीनामात्मनेपदेन(1) समानपदस्थस्ये--) ड्भवतीति वक्तव्यम् ।। चतुस्तासिक्लृपिग्रहणार्थक्यं च ।। चतुर्ग्रहणं चानर्थकम् । सर्वेभ्यो (2)हि वृतादिभ्यः प्रतिषेध ः्थ्य;ष्यते ।। तासिग्रहणं चानर्थकम् ।। किं कारणम् ? ।। निवृत्तत्वात्सकारस्य ।। निवृत्तं सकारादाविति । तास्ग्रहणे चेदानीमक्रियमाणे क्लृपिग्रहणेनापि नार्थः । एषोऽपि हि वृतादिः पञ्चमः ।।

भवेत्क्लृपिग्रहणं न कर्तव्यं, तास्ग्रहणन्तु कर्तव्यम् । यद्धि तत्सकारदाविति न तच्छक्यं निवर्तयितुं, तृच्यपि हि प्रसज्येत--वर्तिता वर्धिता ।। तास्ग्रहणे चेदानीं क्रियमाणे क्लृपिग्रहणमपि कर्तव्यमन्येभ्योऽपि वृतादिभ्यस्तासौ मा भूदिति । भवेत्तासिग्रहणं कर्तव्यं, क्लृपिग्रहणं तु नैव कर्तव्यम् ।। अन्येभ्योपि(4) वृतादिभ्यः तासौ कस्मान्न भवति ? ।। पररमैपदेष्विति वर्तते, क्लृपेरेव च तास्परस्मैपदपरो नान्येभ्यो वृतादिभ्यः (5)।। यद्येवं तास्ग्रहणेनापि नार्थः ।। तृचि कस्मान्न भवति ? ।। परस्मैपदेष्विति वर्तते ।।

-7-2-62- उदेशेऽत्वतः

तासावत्वत्प्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात्।। तासावत्वत्प्रतिषेधे घसेः प्रतिषेधः प्राप्नोति--जघसिथ ।। किं कारणम्?।। अकारवत्वात्। सोऽपि ह्यकारवान्।। सिद्धं तु हलादिग्रहणात्।। सिद्धमेतत् ।। कथम्?।। हलादिग्रहणात् । हलादिग्रहणं कर्तव्यम्। तच्चावश्यं कर्तव्यम्--अट्यशी प्रयोजयतः ।। अट्यशी तावन्न प्रयोजयतः।। किं कारणम्?।। तासावनिट ः्थ्य;त्युज्यते सेटौ चेमौ तासौ।। अञ्ज्वशू तर्हि प्रयोजयतः।। अञ्ज्वशू चापि न प्रयोजयतः।। किं कारणम्?।। तासौनित्याऽनिटः्थ्य;त्युच्यते,विभाषितेटावेतौ ।। अदिस्तर्हि प्रयोजयति। आदिथ ।। क्रियमाणेऽपि वै हलादिग्रहणेऽत्र प्राप्नोति--जघसिथ। एषोऽपि हि हलादिः ।। तस्य चाभावात्तासौ ।। तासावनिट ः्थ्य;त्युच्यते न च घसिस्तासावस्ति।। ननु च यस्तासौ नात्यनिडप्यसौ तासौ भवति।। नैवं विज्ञायते--यस्तासावनिडिति ।। कथं तर्हि?।। यस्तासावस्त्यनिट् चेति।। किं वक्तव्यमेतत्

?।। न हि ।। कथमनुच्यमानं गंस्यते ?।। सस्यम्यर्थे वतिः।। सप्तम्यर्थेऽपि वै वतिर्भवति। तद्यथा मथुरायामिव मथुरावत्। पाटलिपुत्र ः्थ्य;व पाटलिपुत्रवत् । एवं तासाविव तास्वत्।। उपदेशेत्वतः।।

-7-2-63- ऋतो भारद्वाजस्य

किमर्थमिदमुच्यते न अचस्तास्वत्थल्यनिटो नित्यमित्येव सिद्धम् ।। एवं तर्हि नियमार्थोयमारम्भः--ऋत एव भारद्वाजस्य नान्यतो भारद्वाजस्येति ।। क्व मा भूत् ? ।। ययिथ(1) वविथेति ।। ऋतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य(2)।। ऋतो भारद्वाजस्येति नियमानुपपत्तिः ।। किं कारणम् ? ।। अप्राप्तत्वात्प्रतिषेधस्य। गुणे कृते रपरत्वे चाऽनजन्तत्वात्प्रतिषेधो न प्राप्नोति ।। असति नियमे को दोषः ? ।। तत्र पचादिभ्य ः्थ्य;ड्वचनम् ।। तत्र पचादिभ्य ः्थ्य;ड्वक्तव्यः--पेचिथ शेकिथेति ।।

यदि पुनरयं(3) भारद्वाजः पुरस्तादपकृष्येत(4)---अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य । उपदेशेऽत्वतः । तत ऋतः । भारद्वाजस्येति निवृत्तम् ? ।। सिध्यत्येवमयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवति ।। एवं तर्हि,---।। योगविभागात्सिद्धम्(1) ।। योगविभागः करिष्यते । अचस्तास्वत्थल्यनिटो नित्यमुपदेशे । ततः-- अत्वतः । अत्वतश्चोपदेश ः्थ्य;ति ।। ( ऋतो भारद्वाजस्य ) ।।

-7-2-64- बभूथाततन्थजगृम्भववर्थेति निगमे

वृग्रहणं किमर्थं न कृसृभृवृस्तुद्रुस्रुश्रुवो(2) लिटीत्येव सिद्धम् ।। एवं तर्हि ।। नियमार्थोयमारम्भः ।। निगम एव यथा स्यात् ।। क्व मा भूत् ? ।। ववरिथ ।।

-7-2-67- वस्वेकाजाद्घसाम्

किमर्थमिदमुच्यते ? ।। वस्वेकाजाद्घसांवचनं नियमार्थम् ।। नियमार्थोऽयमारम्भः -- वसावेकाजाद्घसामेव ।।क्व मा भूत् ? ।। बिभिद्वान् ।। किमुच्यते-- नियमार्थमिति, न पुनर्विध्यर्थमपि(1) स्यात् । प्रतिषेधोऽपि ह्यत्र प्राप्नोति --- नेड्वशि कृतीति, कृच्चैवाऽयं(2) वशादिश्च ।। एवं तर्हि---कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्येतस्मान्नियमादत्रेड्भविष्यति ।। नात्र तेन परिप्रापणं प्राप्नोति ।। किं कारणम् ? ।। प्रकृतिलक्षणस्य प्रतिषेधस्य स(3) प्रत्यारम्भः, प्रत्ययलक्षणश्चाऽयं प्रतिषेधः ।। उभयोः(4) स प्रत्यारम्भः । ।। कथं ज्ञायते ? ।। वृङ्वृञ्ञोर्ग्रहणात् ।। कथं कृत्वा ज्ञापकम् ? ।। ः्थ्य;मौ वृङ्वृञ्ञावुदात्तौ, तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्यः-उभयोः स प्रत्यारम्भ ः्थ्य;ति, ततोवृङ्वृञ्ञोर्ग्रहणं करोति । न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च। तुल्यजातीयेऽसति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति ।।

अथ यावता वसावेकाजाद्घसिभ्य(5) ः्थ्य;टा भवितव्यं को न्वत्र विशेषो नियमार्थे वा सति विध्यर्थे वा ? ।। न खलु कश्चिद्विशेषः, आहोपुरुषिकामात्रं तु,--भवानाह विध्यर्थमिति, वयं तु ब्रूमो--नियमार्थमिति ।।

अथैकाज्ग्रहणं किमर्थम् ? ।। ः्थ्य;ह मा भूत्--बिभिद्वान् चिच्छिद्वानिति ।। क्रियमाणेऽपि वै एकाज्ग्रहणेऽत्र प्राप्नोति, एषोऽपि ह्येकाच् ।। एवं तर्हि कृते द्विर्वजने य(1) एकाच् ।। किं वक्तव्यमेतत् ? ।। न हि ।। कथमनुच्यमानं गंस्यते ? ।। एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति यदर्थमेकाज्ग्रहणं क्रियते ।। ननु चायमस्ति जागर्तिः---जागृवांसोऽनुग्मन्(2) ।। यत्तर्ह्याकारग्रहणं करोति । न हि कश्चिदकृते द्विर्वचने आकारान्तोऽनेकाजस्ति ।। ननु चायमस्ति,--दरिद्रातिः ।। न दरिद्रातेरिटा भवितव्यम् ।। किं कारणम् ? ।। उक्तमेतत्(1)--दरिद्रातेरार्धधातुके लोपः, सिद्धश्च प्रत्ययविधाविति । यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धौऽसाविड्विधौ । एवमपि भूतपूर्वगतिर्विज्ञायेत--आकारान्तो यो भूतपूर्वः्थ्य;ति ।। एकाज्ग्रहणमेव तर्हि ज्ञापकम् ।। ननु चोक्तं--जार्गत्यर्थमेतत्स्यात् ।। नैकमुदाहरणमेकाज्ग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्या ज्जार्तेर्नेत्येव ब्रूयात् ।।

अथ घसिग्रहणं किमर्थं, न एकाजित्येव सिद्धम् ।। घसिग्रहणमनच्कत्वात् ।। घसिग्रहणं क्रियते, लोपे कृतेऽनच्कत्वादिण्न(1) प्राप्नोति ।। ः्थ्य;दमिह संप्राधार्यमिट् क्रियतां लोप ः्थ्य;ति, किमत्र कर्तव्यम् ? ।। परत्वादिडागमः ।। नित्यो लोपः । कृतेऽपीटि प्राप्नोत्यकृतेऽपि ।। ः्थ्य;डपि नित्यः । कृतेऽपि लोपे प्राप्नोत्यकृतेऽपि ।। अनित्य ः्थ्य;ट् । न हि कृते लोपे प्राप्नोति ।। किं कारणम् ? ।। अनच्कत्वात् ।। एवं तर्हि

द्विर्वचने कृतेऽभ्यासे योऽकारस्तदाश्रय ः्थ्य;ड्भविष्यति ।। न सिध्यति ।। किं कारणम् ? ।। द्वित्वाल्लोपस्य परत्वात् । द्विर्वचनं क्रियतां लोप ः्थ्य;ति किमत्र कर्तव्यम् ? ।। परत्वाल्लोपः । लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न

प्राप्नोति । घसिग्रहणे पुनः क्रियमाणे न दोषो भवति ।। कथम् ? ।। वचनादिड्भविष्यति ।। ः्थ्य;टि कृते द्विर्वचनं क्रियतां लोप ः्थ्य;ति यद्यपि परत्वाल्लोपः, स्थानिवद्भावाद्द्विर्वचनं भविष्यति ।। (वस्वेकाजाद्घसाम्) ।।

-7-2-68- विभाषा गमहनविदविशाम्

।। दृशेश्च(2) ।। दृशेश्चेति वक्तव्यम् । ददृश्वान् । ददृशिवान् ।। तत्तर्हि वक्तव्यम् ।। न वक्तव्यम् । दृशेरिति वर्तते ।। ( विभाषा गमहन )

-7-2-70- ऋद्धनोः स्ये

।। स्वरतेर्वेट्त्वादृतः(1) स्ये (ः्थ्य;ति(2)) विप्रतिषेधेन ।। स्वरतिलक्षणाद्वावचनादृतः स्य ः्थ्य;त्येतद्भवति विप्रतिषेधेन । स्वरतिलक्षणस्य वावचवनस्यावकाशः स्वर्ता स्वरिता । ऋतः स्य ः्थ्य;त्यस्यावकाशः --करिष्यते हरिष्यते । ः्थ्य;होभयं प्राप्नोति--स्वरिष्यति । अस्वरिष्यत् । ऋतः स्ये ः्थ्य;त्येतद्भवति विप्रतिषेधेन ।।

-7-2-73- यमरमनमातां सक्च

किमुदाहरणम् ? ।। अयंसीत् अनंसीत् अयासीत् अवासीत् ।। नैतदस्ति, नास्त्यत्र विशेषः सति वा ः थ्य;ट्यसति वा ।। ः थ्य;दं तर्हि--अयंसिष्टाम् अयंसिषुः । व्यरंसिष्टां व्यरंसिषुः । अनंसिष्टाम् अनंसिषुः । अयासिष्टाम् अयासिषुः । अवासिष्टाम् अवासिषुः ।। ः थ्य;दं चाप्युदाहरणम्--अयंसीत् व्यरंसीत् अनंसीत् अयासीत् अवासीत् ।। ननु चोक्तं--नास्त्यत्र विशेषः सति वेट्यसति वेति ।। अयमस्ति विशेषः--यद्यत्रेण्न स्याद्वृद्धिः प्रसज्येत । ः थ्य;टि पुनः सति नेटीति प्रतिषेधः सिद्धो भवति ।। मा भूदेवं ह्यन्तानामित्येवं भविष्यति ।। अत्रापि(3) नेटीत्यनुवर्तते । तच्चाऽवश्यमिड्ग्रहणमनुर्वत्यम्--अधाक्षीदित्येवमर्थम् ।

आकारान्तश्चापि(4) पदपूर्व एकवचन उदाहरणं--मा हि यासीत् । यद्यत्रेण्न स्यादनुदात्तस्य ः थ्य;टः श्रवणं प्रसज्येत । ः थ्य;टि पुनः सत्युक्तमेतत्---अर्थवत्तु सिचश्चित्करणसामर्थ्याद्वीट उदात्तत्व मिति । तत्रैकादेश उदात्तेनोदात्त ः थ्य;त्युदात्तत्वं सिद्धं भवति ।। ( यमरमनमातां सक्च ) ।।

-7-2-77- ः थ्य;र्शः से

ः थ्य;ईजनोर्ध्वे च (1) ।।

किमर्थो योगविभागो न -- ः थ्य;र्शीड्जनां स्ध्वे ः थ्य;त्येवोच्येत ।। ः थ्य;र्शो ध्वे मा भूदिति ।। ः थ्य;ष्यत एव(2) ः थ्य;र्शिध्वे ः थ्य;ति ।। ः थ्य;ईजनोस्तर्हि से मा भूदिति(3) । ः थ्य;ष्यते एव -- ः थ्य;र्डिषे जनिषे ः थ्य;ति(3) ।। ः थ्य;र्शस्तर्हि(4) मा भूदिति(3) ।। ः थ्य;ष्यते एव ः थ्य;र्शिष्वेति ।। से तर्हि यः स्वशब्दस्तत्र यथा स्यात्, क्रियासमभिहारे यः स्वशब्दस्तत्र मा भूदिति ।। अत्रापीष्यते--स भवीनीशिष्वेत्येवायमीष्ट ः थ्य;ति । आतश्चेष्यते -- एवं ह्याह -- सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनादिति ।। ( ः थ्य;ईजनोर्ध्वो ) ।।

-7-2-78- ः थ्य;ईजनोर्ध्वे च (1)

ः थ्य;र्शः से ।।

किमर्थो योगविभागो न -- ः थ्य;र्शीड्जनां स्ध्वे ः थ्य;त्येवोच्येत ।। ः थ्य;र्शो ध्वे मा भूदिति ।। ः थ्य;ष्यत एव(2) ः थ्य;र्शिध्वे ः थ्य;ति ।। ः थ्य;ईजनोस्तर्हि से मा भूदिति(3) । ः थ्य;ष्यते एव -- ः थ्य;र्डिषे जनिषे ः थ्य;ति(3) ।। ः थ्य;र्शस्तर्हि(4) मा भूदिति(3) ।। ः थ्य;ष्यते एव ः थ्य;र्शिष्वेति ।। से तर्हि यः स्वशब्दस्तत्र यथा स्यात्, क्रियासमभिहारे यः स्वशब्दस्तत्र मा भूदिति ।। अत्रापीष्यते--स भवीनीशिष्वेत्येवायमीष्ट ः थ्य;ति । आतश्चेष्यते -- एवं ह्याह -- सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनादिति ।। ( ः थ्य;ईजनोर्ध्वो ) ।।

-7-2-80- अतोयेयः(2)

किं सार्वधातुकग्रहणमनुवर्तत उताहो न ? ।। किं चार्थोऽनुवृत्त्या ? ।। बाढमर्थः(3) ।। यद्यकारात्परो याशब्द(4)--आर्धधातुकमस्ति ।। ननु चायमस्ति चिकीर्ष्यात् जिहीष्यात्(1) ।। लोपोऽत्र बाधको भविष्यति ।। किं तर्ह्यस्मिन्योग उदाहरणम् ? ।। पचेत्(2) यजेत् ।। अत्राप्यतो दीर्घो यञ्त्रीति दीर्घत्वं प्राप्नोति । स यथैवेयादेशो दीर्घत्वं बाधते एवं लोपमपि बाधेत । तस्मात्सार्वधातुकग्रहणमनुर्वत्यम् ।। ( अतो येयः ) ।।

-7-2-82- आने मुक्

।। मुकि स्वरे दोषः(3) ।। मुकि सति स्वरे दोषो भवति---पचमानः यजमानः । मुका व्यवहितत्वादनुदात्तत्वं न प्राप्नोति ।। ननु चायं मुगदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते ।। न सिध्यति--अङ्गस्य मुगुच्यते, विकारणान्तं चाऽङ्गम् । सोऽयं(1) सङ्घातभक्तोऽशक्योऽदुपदेशग्रहणेन ग्रहीतुम् ।। एवं तर्ह्यभक्तः करिष्यते । ।। अभक्ते च (2)।। किम् ? ।। स्वरे दोषो भवति पचमानो यजमानः । मुका व्यवहितत्वादनुदात्वं न प्राप्नोति ।। एवं तर्हि परादिः करिष्यते ।। परादौ दीर्घप्रसङ्गः ।। यदि परादिः क्रियते, अतो दीर्घो यञ्त्रीति दीर्घत्वं प्राप्नोति ।। नैषः दोषः। तिङीत्येवं तत्। सिध्यति। सूत्रं तर्हि भिद्यते।। यथान्यासमेवाऽस्तु ।। ननु चोक्तं मुकि स्वरे दोष ः थ्य;ति ।। परिहृतमेतत्--अदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते ।। ननु चोक्तम्अङ्गस्य मुगुच्यते विकरणान्तं चाङ्गं सोऽयं सङ्घातभक्तोऽशक्योऽदुपदेशग्रहणेन(5)ग्रहीतु मिति । अथा(3)ऽयमद्भक्तः(4) स्याद्गृह्येताऽदुपदेशग्रहणेन(5) ? ।। बाढं गृह्येत ।। अद्भक्तस्तर्हि भविष्यति ।। तत्कथम् ? ।। अतो येय(6) ः थ्य;त्यत्र अकारग्रहणं पञ्चमीनिर्दिष्टं, अङ्गस्येति च षष्ठीनिर्दिष्टं, तत्राऽशक्यं विविभक्तित्वादत ः थ्य;ति पञ्चम्या अङ्गं विशेषयितुं, तत्प्रकृतमिहाऽनुवर्तिष्यते ।। एवमपि षष्ठ्यभावान्न प्राप्नोति ।। आने ः थ्य;त्येषा सप्तम्यत ः थ्य;ति पञ्चम्याः षष्ठी प्रकल्पयिष्यति--तस्मिन्निति निर्दिष्टे पूर्वस्यति ।। ( आने मुक् ) ।।

-7-2-84- अष्टन आ विभक्तौ

।। अष्टन्जनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः ।। अष्टन्जनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकः प्राप्नोति । अष्टाभिः अष्टाभ्यः । जातः जातवान् । पन्थाः मन्थाः ।। 8 ।। सिद्धमनण्त्वात् ।। सिद्धमेतत् ।। कथम् ? ।। अनण्त्वात् ।। कथमनण्त्वम् ? ।। अण्सवर्णान्गृह्णातीत्युच्यते न चाऽऽकारोऽण् । ।। उच्चारणसामर्थ्याद्वा ।। अथ वा शुद्ध उच्चारमसामर्थ्याद्भविष्यति ।। नैतौ स्तः परिहारौ । यत्तावदुच्यते---अनण्त्वादिति । न ब्रूमोऽण्सवर्णान्गृह्णातीति ।। कथं तर्हि ? ।। तपरस्तत्कालस्येति । यदप्युच्यते उच्चारणसामर्थ्याद्वेति । अस्त्यन्यदुच्चारणे प्रयोजनम् ।। किम् ? ।। उत्तरार्थं रायो हलीति ।। एवं तर्हि नेमौ पृथक् परिहारौ । (। ।। एकपरिहारः ।।) ।। एकः(1) परिहारोऽयं --सिद्धमनण्त्वादुच्चारणसामर्त्याद्वेति ।। ः थ्य;ह तावदष्टाभिः अष्टाभ्य ः थ्य;ति --- अनण्त्वात्सिद्धम् । जातः जातवान् । पन्थाः मन्थाः,--उच्चारणसामर्थ्यात्सिद्धम्।। यद्येवं पृथक्परिहारयोरपि न दोषो यो यत्र परिहारः स तत्र भविष्यति।। (अष्टन आ विभक्तौ)।।

-7-2-86- युष्मदस्मदोरनादेशे

अनादेशग्रहणं(2) शक्यमकर्तुम् ।। कथम् ? ।। हलीत्यनुवर्तते(3) । न चादेशो हलादिरस्ति ।। तदेतदनादेशग्रहणं तिष्ठतु तावत्सांन्यासिकम् ।। ( युष्मद ) ।

-7-2-89 योऽचि

अज्ग्रहणं शक्यमकर्तुम्(1) ।। कथम् ? ।। अविशेषेण यत्वमुत्सर्गस्तस्य हलादावात्वमपवादः । ( योऽचि ) ।।

-7-2-90- शेषे लोपः

शेषग्रहणं शक्यमकर्तुम्(1) ।। कथम् ?।। अविशेषेण लोप उत्सर्गस्तस्याऽजादौ(2) यत्वमपवादो हलादावात्वमपवादः(3) ।। (शेषे लोपः ) ।।

-7-2-91- मपर्यन्तस्य

परिग्रहणं शक्यमकर्तुं(1), मान्तस्येत्येव सिद्धम् ।। न सिध्यति ।। किं कारणम् ? ।। अन्तशब्दस्योभयार्थत्वात् ।। कथम् ? ।। अयमन्तशब्दोऽस्त्येव सह तेन वर्तते । तद्यथा--मर्यादान्तं देवदत्तस्य क्षेत्रम्। सह मर्यादयेति गम्यते । अस्ति प्राक्तस्माद्वर्तते । तद्यथा--नद्यन्तं देवदत्तस्य क्षेत्रमिति । प्राङ्नद्या ः थ्य;ति गम्यते ।। तद्यः सह तेन वर्तते तस्येदं ग्रहणं यथा विज्ञायेत(1) ।। नैतदस्ति प्रयोजनम् ।

सर्वत्रैवाऽन्तशब्दः सह तेन वर्तते ।। अथ कथं नद्यन्तं देवदत्तस्य क्षेत्रमिति ।। नद्याः(2) क्षेत्रत्वे संभवो

नास्तीति कृत्वा प्राङ्नद्या ः थ्य;ति गम्यते ।। ( । ।। अवधिद्योतनार्थं तु परिग्रहणम् ।। ) ।। अवधिद्योतनार्थं तर्हि परिग्रहणं कर्तव्यम् । मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः ।। क्व च मान्ते युष्मदस्मदी ?।। युष्मानाचष्टे अस्मानाचष्टे ः थ्य;ति (णिचि--युष्मयति अस्मयति(1) ।) युष्मयतेरस्मयतेश्चाषप्रत्ययः(2) ।। ( मपर्यन्तस्य ) ।।

-7-2-98- प्रत्ययोत्तरपदयोश्च

किमर्थमिदमुच्यते न त्वमावेकवचन ः थ्य;त्येव सिद्धम् ? ।। न सिध्यति ।। किं कारणम् ? ।। एकवचनाऽभावात् । एकवचन ः थ्य;त्युच्यते न चात्रैकवचनं पश्यामः ।। प्रत्ययलक्षणेन ।। न लुमताङ्गस्येति प्रत्ययलक्षणस्य प्रतिषेधः ।। एवं तर्हि ः थ्य;दमिह संप्रधार्य--लुक्क्रियतामादेशाविति(1), किमत्र कर्तव्यम् ? ।। परत्वादादेशौ(2) ।। नित्यो लुक् । कृतयोरप्यादेशयोः(2) प्राप्नोत्यकृत्योरपि ।। ---अन्तरङ्गावादेशौ ।। एवं तर्हि सिद्धे सति यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति

तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन्बाधित्वा बहिरङ्गो लुग्भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। गोमान् प्रियो यस्य गोमत्प्रियः यवमत्प्रियः गोमानिवाचरति गोमत्यते यवमत्यते । अन्तरङ्गानपि नुमादीन्बहिरङ्गो लुग्बाधत ःथ्य;ति ।। नैतदस्ति ज्ञापकम्, अस्त्यन्यदेतस्य वचने प्रयोजनम् ।। किम् ? ।। येऽन्ये एकवचनादेशाः प्राप्नुवन्ति तद्बाधनार्थमेतत्स्यात् । तद्यथा--तव पुत्रः त्वत्पुत्रः, मम पुत्रो मत्पुत्रः । तुभ्यं हितं त्वद्धितं, मह्यं हितं मद्धितमिति ।। यत्तर्हि मपर्यन्तग्रहणमनुवर्तयति ।। यद्यत्रान्ये एकवचनादेशाः स्युर्मपर्यन्तानुवृत्तिरनर्थिका स्यात् ।। त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम्(1) ।। त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणं द्रष्टव्यम् ।

त्रिचतुरोः स्त्रियां तिसृचतसृ(2) ।। यद्यपि समासः पुंसि नपुंसके वा वर्तते त्रिचतुरौ च स्त्रियां वर्तेते, भवत्येव तिसृचतसृभावः, प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य,--प्रियतिसा प्रियतिस्रौ प्रियतिस्रः । प्रियचतसा प्रियचतस्रौ प्रियचतस्रः ।। प्रियास्तिस्रो ब्राह्मण्योऽस्थ ब्राह्मणकुलस्य--प्रियतिसृ प्रियतिसृणी प्रियतिसृणि । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि ।। यदा हि समासः स्त्रियां वर्तते त्रिचतुरौ च(1) पुंसि नपुंसके वा तदा मा भूतामिति, प्रियास्त्रियो ब्राह्मणा अस्या ब्राह्मण्याः प्रियत्रि ब्राह्मणी(2) प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियाणि त्रीणि ब्राह्मणकुलानि अस्या ब्राह्मण्याः-प्रियत्रिः प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः ।।

युवावौ द्विवचने । यद्यपि च(1) समास एकार्थो वा भवति बह्वर्थो वा भवति, द्व्यर्थे च युष्मदस्मदी, भवत एव युवावौ ।। किमविशेषेण ? ।। नेत्याह । यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसि ःथ्य;त्येतान्विधीन्वर्जयित्वा(4) । अतिक्रान्तो युवामतित्वम्, अत्यहम् । अतिक्रान्तौ युवाम् अतियुवाम् अत्यावाम् । अतिक्रान्ता युवाम् अतियूयम् अतिवयम् । अतिक्रान्तं युवाम् अतियुवाम् अत्यावाम् । अतिक्रान्तौ युवाम् अतियुवाम् अत्यावाम् । अतिक्रान्तान्युवाम्(5) अतियुवान् अत्यावान् । अतियुवयाऽत्यावया । अतियुवाभ्याम्--अत्यावाभ्याम् । अतियुवाभिः. अत्यावाभिः । अतितुभ्यम् अतिमह्यम् ।। अतियुवाभ्याम् अत्यावा भ्याम् । अतियुवभ्यम् अत्यावभ्यम् । अतियुवत् अत्यावत् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवत् अत्यावत् । अतितव अतिमम । अतियुवयोः अत्यावयोः अतियुवाकम्---अत्यावाकम । अतियुवयि अत्यावयि । अतियुवयोः, अत्यावयोः,। अतियुवासु अत्यावासु ।

त्वमावेकवचने--यद्यपि समासो व्यर्थो भवति बह्वर्थो वा, एकार्थे च युष्मदस्मदी, भवत एव त्वमौ ।। किम् विशेषेण ? ।। नेत्याह। तानेव विधीन्वर्जयित्वा । अतिक्रान्तस्त्वाम् अतित्वम् अत्यहम् । अतिक्रान्तौ त्वामतित्वाम् अतिमाम् । अतिक्रान्तास्त्वाम् अतियूयम् अतिवयम् । अतिक्रान्तं त्वाम् अतित्वाम् अतिमाम् । अतिक्रान्तौ त्वाम् अतित्वाम् अतिमाम् । अतिक्रान्तान् त्वाम्--अतित्वान् अतिमान् । अतित्वयाऽतिमया । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वाभिः, अतिमाभिः । अतितुभ्यम्, अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् अतिमभ्यम्(1) । अतित्वत् । अतिमत् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वत् अतिमत् । अतितव अतिमम । अतित्वयोः अतिमयोः । अतित्वाकम् अतिमाकम् । अतित्वयि अतिमयि । अतित्वयोः अतिमयोः । अतित्वासु अतिमासु ।।

यद्येवं यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसीत्येतेभ्यो विधिभ्यः

परत्वात्त्वमावेकवचन ःथ्य;ति प्राप्नोति, सावकाशा ह्येते विधय ःथ्य;दानीं भवन्ति ।। कोऽवकाशः ? ।। अनेकार्थे युष्मदस्मदी(2) ।। त्वमावेकवचन ःथ्य;त्यस्यावकाशः-अन्यानि वचनानि । एकार्थयोर्युष्मदस्मदोरेतेषु वचनेषूभयं प्राप्नोति । परत्वात्त्वमावेकवचन ःथ्य;ति प्राप्नोति ।। नैषः दोषः । शेष ःथ्य;ति वर्तते ।। कश्च शेषः ? ।। जसादिभिरव्याप्तं यदेकवचनं, तस्मिन् शेषे । अशेषत्वान्न(3) भविष्यति ।। अथ वा(4)

त्वमावेकवचनःथ्य;त्यत्र यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसीत्येतदनुवर्तिष्यते ।।

-7-2-99- त्रिचतुरोः स्त्रियां तिसृचतसृ

।। तिसृभावे संज्ञायां कन्युपसङ्ख्यानम्(1) ।। तिसृभावे संज्ञायां कन्युपसङ्ख्यानं कर्तव्यम् । तिसृका नाम ग्रामः ।। चतसर्याद्युदात्तनिपातनं च ।। चतसर्याद्युदात्तनिपातनं कर्तव्यम् ।। त्रिचतुरोः स्त्रियां तिसृ चतसृ ।। किं प्रयोजनम् ? ।। चतस्रः पश्य । शसि स्वरो मा भूतिदि ।। किं चान्यत् ? ।। उपदेशिवद्वचनं च ।। उपदेशिवद्भावश्च वक्तव्यः ।। किं प्रयोजनम् ? ।। स्वरसिध्यर्थम् ।। उपदेशावस्थायामेवाद्युदात्तनिपातने कृते विभक्तिस्वरेण बाधनं यथा स्यात्--चतसृणामिति(2) ।। स तर्ह्युपदेशिवद्भावो वक्तव्यः ? ।। न वक्तव्यः । ।। उक्तं वा(3) ।। किमुक्तम् ? ।। विभक्तिस्वरभावश्च हलादिग्रहणात् । आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् ।। ःथ्य;ति । (त्रिचतुरोः स्त्रियाम्) ।।

-7-2-100- अचि र ऋतः

।। अचि रादेशे जस्युपसङ्ख्यानं गुणपरत्वात् ।। अचिरादेशे जस्युपसङ्ख्यानं कर्तव्यम् । तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्ति ।। किं पुनः कारणं न सिध्यति ? ।। गुणपरत्वात् । परत्वाद्गुणः प्राप्नोति ।। तत्तर्हि वक्तव्यम्(1) ? ।। न वाऽनवकाशत्वाद्रस्य ।। न वा वक्तव्यम्(2) ।। किं कारणम् ? ।। अनवकाशत्वाद्रस्य अनवाकाशो रादेशो गुणं बाधिष्यते ।। सावकाशो रादेशः ।। कोऽवकाशः ? ।। तिस्रः पश्य चतस्रः पश्य ।। नैषोऽस्त्यवकाशः, अत्रापि पूर्वसवर्णदीर्घः प्राप्नोति । स यथैव पूर्वसवर्णं बाधते एवं गुणमपि बाधिष्यते ।। गुणोऽप्यनवकाशः ।। सावकाशो गुणः ।। कोऽवकाशः ? ।। हे कर्तः नैष सर्वनामस्थाने गुणः ।। कस्तर्हि ? ।। संबुद्धिगुणः ।। अयं तर्हि--हे मातः ! ।। एषोऽपि संबुद्धिगुण एव ।। नाऽत्र संबुद्धिगुणः प्राप्नोति ।। किं कारणम् ? ।। अम्बार्थनद्योर्ह्रस्व ःथ्य;ति ह्रस्वत्वेन भवितव्यम् ।। भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यान्न स्यात्, ह्रस्वानां तु खलु(1) ह्रस्वत्वं क्रियतां संबुद्धिगुण ःथ्य;ति परत्वात्संबुद्धिगुणेन भवितव्यम् ।। अथापि कथं चित्सावकाशो गुणः स्यादेवमपि न(1) दोषः, पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त ःथ्य;त्येवमयं रादेशो जसि गुणं बाधते सर्वनामस्थानगुणं न बाधिष्यते । तस्मात्सुष्ठूच्यते-- अचि रादेशे जस्युपसङ्ख्यानं गुणपरत्वादिति ।। (अचि र ऋतः ) ।।

-7-2-101- जराया जरसन्यतरस्याम्

(।। नुमोऽनङ्जरसौ (2)।।) नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन । नुमोऽवकाशः-त्रपुणी जतुनी तुम्बुरुणी । अनङोऽवकाशः--प्रियसक्थ्ना ब्राह्मणेन । ःथ्य;होभयं प्राप्नोति--दध्ना(1) सक्थ्ना(2) । जरसोऽवकाशः --- जरसा जरसे । नुमोऽवकाशः--कुण्डानि वनानि ।। ःथ्य;होभयं प्राप्नोति--अतिजरांसि ब्राह्मणकुलानि ।। अनङ्जरसौ नुमो भवतो विप्रतिषेधेन ।।

अथेह लुक्कस्मान्न भवति--अतिजरसं पश्येति ?।। किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि---अतिजरसं तिष्ठतीति ? ।। अस्त्यत्र विशेषो--नाऽत्राऽकृतेऽम्भावे जरस्भावः प्राप्नोति ।। किं कारणम् ? ।। अचीत्युच्यते । यदा( 3) च जरस्भावः कृतस्तदा लुङ्न भविष्यति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति, अतिजरमतिजरैरिति भवितव्यम् ।। गोनर्दीय आह-- ःथ्य;ष्टमेवैतत्सङ्गृहीतं भवति । अतिजरमतिजरैरिति भवितव्यं सत्यामेतस्यां(1) परिभाषायां--सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ।। (जरायाजरस्) ।।

-7-2-102- त्यदादीनामः

।। त्यदादीनां द्विपर्यन्तानामकारवचनम् ।। त्यदादीनां द्विपर्यन्तानामत्वं वक्तव्यम् ।। किं
प्रयोजनम् ? ।। युष्मदस्मदन्तानां भवदन्तानां वा मा भूदिति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् ।।

।। त्यदादीनामकारेण(1) सिद्धत्वाद्युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ।।

यदयं त्यदादीनामत्वेन(2) सिद्धे युष्मदस्मदोः शेषे लोपं शास्ति(3) तज्ज्ञापयत्याचार्यः--प्राक्ततोऽत्वं भवतीति, न सर्वेषामिति ।

।। अपि वोपसमस्तार्थमत्वाऽभावात्कृतं भवेत् ।।

नैतदस्ति ज्ञापकम्, उपसमस्तार्थमेतत्स्यात्--अतियूयम् अतिवयम् । उपसमस्तानां हि त्यदादीनामत्वं नेष्यते, ---अतितत् अतितदौ अतितदः ।।

।। टिलोपष्टाबभावाऽर्थः कर्तव्य ाः्थ्य;ति तत्स्मृतम् ।।
यस्तु शेषे लोपष्टिलोपः स वक्तव्यः किं प्रयोजनम् ? ।। टाप्प्रतिषेधार्थम् । टाम्मा भूदिति ।। स तर्हि टिलोपो वक्तव्यः ? ।। न वक्तव्यः ।
।। अथ वा शेषसप्तम्या शेषे लोपो विधीयते ।।
ाः्थ्य;ह युष्मदस्मदोर्लोप ाः्थ्य;तीयताऽन्त्यस्य लोपः सिद्धः, सोऽयमेवं सिद्धे सतियच्छेषग्रहणं करोति तस्यैतत्प्रयोजनम्--अवशिष्टस्य लोपो यथा स्यादिति ।
।। लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ।।
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति--न सर्वेषां त्यदादीनामत्त्वं भवतीति यदयं--किमः कः ाः्थ्य;ति कादेशं शास्ति । ाः्थ्य;तरथा हि किमोऽद्भवतीत्येव ब्रूयात् ।। सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति, न च किमोऽत्वेन सिध्यति । अत्वे हि सत्यन्त्यस्य प्रसज्येत ।। सिद्धमन्त्यस्य पूर्वेणैव, तत्रारम्भसार्मथ्यादिकारस्य भविष्यति ।। कुतो नु खल्वेतत्--अनन्त्यार्थ आरम्भे सतीकारस्य भविष्यति न पुनः ककारस्य स्यात् ? ।। यत्तर्हि किमो ग्रहणं करोति । ाः्थ्य;तरथा हि कादद्भवतीत्येव ब्रूयात् ।। एवमपि ककारमात्रात्परस्य प्राप्नोति ।। त्यदादीनामिति वर्तते, न चाऽन्यत्किमस्त्यदादिषु ककारवदस्ति ।। एवमप्यनैकान्तिकं ज्ञापकम् । एतावन्नु(1) ज्ञाप्यते--न सर्वेषां त्यदादीनामत्वं भवतीति ; तत्र कुत एतद्--द्विपर्यन्तानां भविष्यति न पुनर्युष्मदस्मददन्तानां वा स्याद्भवदन्तानां वा ! ।। किञ्चाऽवश्यं खल्वप्युत्तरार्थं किमो ग्रहणं कर्तव्यं--कु तिहोः क्वातीति ।। कादेशः खल्वप्यवश्यं साकच्कार्थो वक्तव्यः --कः कौ के ाः्थ्य;त्येवमर्थम् । तस्माद्विपर्यन्तानामत्त्वं(2) वक्तव्यम् ।।
।। त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ।। 1 ।।
अपि वोपसमस्तार्थमत्वाऽभावात्कृतं(3) भवेत् ।
टिलोपष्टाबभावार्थः कर्तव्य ाः्थ्य;ति तत्स्मृतम् ।। 2 ।।
अथ वा शेषसप्तम्या शेषे लोपो विधीयते ।।
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ।। 3 ।।
-7-2-105- क्वाऽति
किमर्थं क्वादेश उच्यते न कुतिहात्स्वित्येवोच्येत ।। का रूपसिद्धिः क्व ? ।। यणादेशेन सिद्धम् ।। न सिध्यति--ओर्गुणः प्रसज्येत ।। (क्वाति) ।।
-7-2-106- तदोः सः सावनन्त्ययोः
किमर्थमनन्त्ययोरित्युच्यते ? ।। अन्त्ययोर्मा(2) भूदिति ।। नैतदस्ति प्रयोजनम्, अत्वमन्त्ययोर्बाधकं भविष्यति ।। अनवकाशा विधयो बाधका भवन्ति, सावकाशं चाऽत्वम् ।। कोऽवकाशः ? ।। द्विशब्दः ।।
सत्वमपि सावकाशम् ।। कोऽवकाशः ? ।। अनन्त्यः(3) ।
कथं पुनः सत्यन्त्येऽनन्त्यस्य(1) सत्वं स्यात् ? ।। भवेद्यस्तकारदकाराभ्यामङ्गं विशेषयेत्तस्याऽनन्त्ययोर्न स्याद्वयं तु खल्वङ्गेन तकारदकारौ विशेषयिष्यामः(2) ।। एवमप्युभयोः सावकाशयोः परत्वात्सत्वं प्राप्नोति ।। किं च स्याद्यद्यन्तयोः(3) सत्वं स्यात् ? ।। ाः्थ्य;ह हे स ाः्थ्य;ति; एङ्ह्रस्वादिति संबुद्धिलोपो न स्यात् । ाः्थ्य;ह च
या सा ; अत ाः्थ्य;ति डाब्न स्यात् । तस्मादनन्त्ययोरिति वक्तव्यम् ।। न वक्तव्यम् ।। एवं वक्ष्यामि(4)--तदोः सः सौ । ततो ऽदसः । अदसश्च दकारस्य सो भवतीति ।। ाः्थ्य;दमिदानीं किमर्थम् ? ।। नियमार्थम्--अदस एव दकारस्य नान्यस्य दकारस्येति ।। यदि नियमः क्रियते--द्वीयतेरप्रत्ययो(5) द्व ाः्थ्य;ति प्राप्नोति स्व ाः्थ्य;ति चेष्यते ।। यथालक्षणमप्रयुक्ते ।। (तदोः स सौ) ।
-7-2-107- अदस औ सुलोपश्च
अदसः(1) सोर्भवेदौत्वं किं सुलोपो विधीयते ? ।। अदस एव सोर्भवेदौत्वं, किमर्थं सुलोपो विधीयते ? ।। ह्रस्वाल्लुप्येत(1) संबुद्धिः ।। ाः्थ्य;ह हे असा विति एङ्ह्रस्वात्संबुद्धेरिति लोपः प्रसज्येत ।। न हलः(1) ।। हलो लोपः संबुद्धिलोपः ।। तद्धल्ग्रहणं कर्तव्यम् ।। न कर्तव्यम् ? ।। प्रकृतं(1) हि तत् ।। प्रकृतं हल्ग्रहणम् ।। क्व प्रकृतम् ? ।। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलिति ।। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ।। ह्रस्वादित्येषा पञ्चमी हलिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति--तस्मादित्युत्तरस्येति ।। आप एत्वं(1) भवेत्तस्मिन् ।। ाः्थ्य;ह हे असौ ब्राह्मणि ! । आङि चापः -- संबुद्धौ चेत्येत्वं प्रसज्येत ।। न झलीत्यनुवर्तनात् ।। (नैष दोषः(2)) । झलीति तत्रानुवर्तते ।।क्व प्रकृतम् ? ।। सुपि च बहुवचने झल्येदिति । ।। प्रत्ययस्थाच्च(1) कादित्वम् ।। ाः्थ्य;ई च असकौ ब्राह्मणीति प्रत्ययस्थात्कात्पूर्वस्येतीत्त्वं प्रसज्येत ।। नैष दोषः । प्रश्लिष्टनिर्देशोऽयम् --- आ-आप्--आबिति ।। ाः्थ्य;हापि तर्हि न प्राप्नोति--कारिके हारिके(3) ाः्थ्य;ति ।।
।। शीभावश्च प्रसज्यते(1) ।। ाः्थ्य;ह च शीभावः प्राप्नोति--असौ ब्राह्मणी ।। आप उत्तरस्यौङः शी भवतीति शीभावः प्राप्नोति । तस्मात्सोर्लोपो वक्तव्यः ।। सावौत्वप्रतिषेधः(3) साकच्काद्वा सादुत्वं च ।। सावौत्वप्रतिषेधः साकच्काद्वा वक्तव्यः । साच्च परस्य उत्वं वक्तव्यम् । असकौ असुकः । ।। उत्तरपदभूतानामादेश उपदेशिवद्वचनम् (अनादिष्टार्थम्) ।। उत्तरपदभूतानांत्यदादीनामादेश उपदेशिवद्भावो वक्तव्यः । परमाहं परमायं परमानेन ।। किं प्रयोजनम् ? ।। अनादिष्टार्थम् । अकृते एकादेशे आदेशा यथा स्युरिति । किं पुनः कारणम्--एकादेशस्तावद्भवति न पुनरादेशाः ?, न परत्वादादेशैर्भवितव्यम् ? ।। बहिरङ्गलक्षणत्वात् ।। बहिरङ्गा आदेशाः, अन्तरङ्ग एकादेशः--असिद्धं बहिरङ्गमन्तरङ्गे ।। स तर्ह्युपदेशिवद्भावो वक्तव्यः ? ।। न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति--पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश ाः्थ्य;ति,--यदयं नेन्द्रस्य परस्येति प्रतिषेधं शास्ति ।। कथं कृत्वा ज्ञापकम् ? ।। ाः्थ्य;न्द्रे द्वावचौ, तत्रैको यस्येति लोपेनापह्रियतेऽपर एकादेशेन, अनच्क ाः्थ्य;न्द्रः संवृत्तस्तत्र(4) को वृद्धेः प्रसङ्गः(5) ? । पश्यति त्वाचार्यः-पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेशःथ्य;ति,--ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति ।।
।। अदसः(6) सोर्भवेदौत्वं कि सुलोपो विधीयते ? ।।
ह्रस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ।।
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्त्वं शीभावश्च प्रसज्यते ।।
-7-2-114- मृजेर्वृद्धिः
।। मृजेर्वृद्धिविधौ क्विप्रतिषेधः(1) ।। मृजेर्वृद्धिविधौ क्व्यन्तस्य प्रतिषेधो वक्तव्यः । कंशपरिमृड्भ्यां कंशपरिमृड्भिः । ।। धातौः स्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात्सिद्धम् ।। अथ वा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धम् । धातुप्रत्यये कार्यं भवतीत्येषा परिभाषा कर्तव्या ।।
कान्येतस्याः परिभाषायाः प्रयोजनानि ? ।। प्रयोजनं(3) सृजिदृशिमस्जिनशिहन्तिगिरत्यर्थम् ।। सृजि-रज्जुसृड्भ्याम् रज्जुसृड्भिः । सृजि ।। दृशिदेवदृग्भ्याम् देवदृग्भिः । दृशि ।। मस्जि ---उदकमग्भ्याम् । उदकमग्भिः । मस्जि । नशि-प्रणड्भ्यां(4) प्रणड्भिः । नशि ।। हन्ति--वार्त्रघ्नः । भ्रौणघ्नः । हन्ति ।। गिरति(5)--देवगिरौ देवगिरः । (गिरति) ।। यदि स्वरूपग्रहण ाः्थ्य;त्युच्यते--प्रसृग्भ्यां( 6) प्रसृग्भिः । अनुदात्तस्य चर्दुपधस्यान्यतरस्यामित्यम् प्राप्नोति । एवं तर्हीयं परिभाषा कर्तव्या--धातोः कार्यमुच्यमानं तत्प्रत्यये भवती(7)ति ।। सा तर्ह्येषा परिभाषा कर्तव्या ? ।। न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति--भवत्येषा परिभाषा
यदयं भ्रौणहत्ये तत्वं शास्ति ।। ( मृजेर्वृद्धिः ) ।।
-7-2-115- अचो ञ्णिति
अज्ग्रहणं किमर्थम् ? ।। वृद्धावज्ग्रहणं गोऽर्थम् ।। वृद्धावज्ग्रहणं क्रियते (किं प्रयोजनम्(1) ? ।। गोऽर्थम् ।) गोतो वृद्धिर्यथा स्यात्--गौरिति ।।

नैतदस्ति प्रयोजनं, णित्करणसार्मथ्यादेवात्र वृद्धिर्भविष्यति ।।
(अस्त्यन्यण्णित्करणस्य(1) प्रयोजनम् ।। किम् ? ।। गावौ गाव ःथ्य;त्यत्राऽत उपधाया ःथ्य;ति वृद्धिर्यथा स्यात् ।।) ।।
अथ योगविभागः किमर्थो न ञ्णित्यत उपधाया ःथ्य;त्येवोच्येत ।। का रूपसिद्धिः-चायको लावकः कारकः हारकः(2) ? ।। गुणे कृतेऽयवो रपरत्वे चाऽत उपधाया ःथ्य;त्येव सिद्धम् ।। (न सिद्ध्यति) । ।। योगविभागः सखिव्यञ्ञ्जनाद्यर्थः ।। योगविभागः क्रियते ।। (किमर्थः ? ।। सखिव्यञ्ञ्जनार्थः ।) सख्यर्थो व्यञ्ञ्जनाद्यर्थश्च । सख्यर्थस्तावत्--सखायौ सखायः । व्यञ्ञ्जनाद्यर्थः--जैत्रं यौत्रं च्यौत्रम् ।।
योगविभागे चेदानीं सखिव्यञ्ञ्जनाद्यर्थे क्रियमाणेऽज्ग्रहणमपि कर्तव्यं भवति ।। किं प्रयोजनम् ? ।। गोर्थम् ।। ननु चोक्तं णित्करणसार्मथ्यादेवात्र वृद्धिर्भविष्यति ।। अस्त्यन्यण्णित्करणे प्रयोजनम् ।। किम् ? ।। गावौ गावः । अवादेशे कृतेऽत उपधाया ःथ्य;ति वृद्धिर्यथा स्यात् ।। यत्तु(3) सौ णित्करणं तदनवकाशं, तस्याऽनवकाशत्वादेव वृद्धिर्भविष्यति ।। यथैव खल्वपि णित्करणसार्मथ्यादनिकोऽपि वृद्धिः प्रार्थ्यते एवं तत्वमपि प्राप्नोति । तत्वमपि हि ञ्णितीत्युच्यते । तस्मादज्ग्रहणं कर्तव्यम्(1) ।। (अचो ञ्णिति) ।।
-7-2-117- तद्धितेष्वचामादेः
अज्ग्रहणं कर्तव्यम् ।। ननु च क्रियत एव(2) ।। द्वितीयं कर्तव्यं,--यथाऽचामादिग्रहणमज्विशेषणं विज्ञायेत--अचामादेरचःथ्य;ति ।। अथाऽक्रियमाणेऽज्ग्रहणे कस्याऽचामादिग्रहणं विशेषणं स्यात् ? ।। ःथ्य;ग्विशेषणमित्याह, ---अचामादेरिक ःथ्य;ति ।। तत्र को दोषः ? ।। ःथ्य;हैव स्यात्--ऐतिकायनः औपगवः । ःथ्य;ह न स्यात् --गार्ग्यो वात्स्य ःथ्य;ति ।। तत्तर्ह्यज्ग्रहणं कर्तव्यम् ? ।। न कर्तव्यम् । प्रकृतमनुववर्तते ।। क्व प्रकृतम् ? ।। अचो ञ्णितीति ।। यदि तदनुवर्ततेऽत उपधाया अचश्चेति अज्मात्रस्य उपधाया वृद्धिः प्रसज्येत--भेदकः(3) छेदक ःथ्य;ति ।। अकारेण तपरेणाऽचं विशेषयिष्यामः --अचोऽतःथ्य;ति ।। ःथ्य;हेदानीमच ःथ्य;त्यनुवर्तते अतःथ्य;ति निवृत्तम् । अथवा--।। मण्डूकगतयोऽधिकाराः(4) ।। तद्यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ।। अथ वैकयोगः करिष्यते अचो ञ्णित्यत उपधायाः (ःथ्य;ति(1)) । ततः--तद्धितेष्वचामादेरिति । न चैकयोगेऽनुवृत्तिर्भवति ।। तद्धितेष्वचामादिवृद्धावन्त्योपधलक्षणप्रतिषेधः ।। तद्धितेष्वचामादिवृद्धावन्त्योपधलक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः । क्रौष्टृः । जागत ःथ्य;ति ।। ननु चाऽचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते ।। कथमन्यस्योच्यमानाऽन्यस्य बाधिका स्यात् ? ।। असति खल्वपि संभवे बाधनं भवति,अस्ति च संभवो यदुभयं स्यात् ।। लोकविज्ञानात्सिद्धम् ।। सत्यपि संभवे बाधनं भवति । तद्यथा- दधि ब्राह्मणेभ्यो(3) दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति, एवमिहापि सत्यपि संभवेऽचामादिवृद्धिरन्त्योपधलक्षणां(2) वृद्धिं बाधिष्यते ।। विषम उपन्यासः । नाप्राप्ते दधिदाने तक्रदानमारभ्यते तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यति, ःथ्य;ह पुनरप्राप्तायामन्त्योपधालक्षणायां(2) वृद्धावचामादिवृद्धिराभ्यते--सुश्रुत्सौश्रुत ःथ्य;ति ।। पुष्करसद्ग्रहणाद्वा ।। अथ वा यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽचामादिवृद्धावन्त्योपधालक्षणा वृद्धिर्न भवतीति ।। ःथ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते व्याकरणमहाभष्ये सप्तमाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ।। पादश्च समाप्तः ।।
-9-9-999-

# महाभाष्यम्/सप्तमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nn2

< महाभाष्यम् | सप्तमोऽध्यायः

-7-3-1- देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्

देविकादिषु तदादिग्रहणम् देविकादिषु तदादिग्रहणं कर्तव्यम् । (देवकाद्यादीनामिति वक्तव्यम्(2) ।) ःथ्य;हापि यथा स्यात्---दाविकाकूलाः शालयः शांशपास्थला देवाः ।। किं पुनः कारणं न सिध्यति अन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वा अन्यत्र हि तस्य वा ग्रहणं भवति तदन्तस्य वा, न चेदं तत्, नापि तदन्तम् आद्यज्विशेषणत्वात्सिद्धम् आद्यज्विशेषणं देविकादयः । नैवं विज्ञायते--देविकादीनामङ्गानामचामादेराकारो भवतीति ।। कथं तर्हि ? ।। ञ्णित्यङ्गस्याऽचामादेरच(2) आकारो भवति स चेदेविकादीनामाद्यज्भवतीति।।

आन्तरतम्यनिवर्तकत्वाद्वा(3) अथ वा नाऽनेनाऽनन्तरतमा वृद्धिर्निर्र्वत्यते ।। किं तर्हि ? ।। अन्तरतमाऽनेन(3) निर्वत्यते । अतः(4) सिद्धाऽत्र वृद्धिस्तद्धितेष्वचामादेरित्येव । तत्राऽनेनाऽन्तरतमा(1) वृद्धिर्निर्वत्यते ।।

परिहारान्तरमेवेदं मत्वा पठितं, कथं चेदं परिहारान्तरं स्यात् ? ।।

यदि नाद्यज्विशेषणं देविकादयः ।।

अवश्यं चैतदेवं विज्ञेयमाद्यज्विशेषणं देविकादय ःथ्य;ति, यदि नाद्यज्विशेषणं देविकादयः स्युरिहापि प्राप्नोति--सुदेविकायां भवः सौदेविक ःथ्य;ति ।। अथात्राऽप्याद्यज्विशेषणत्वादित्येव सिद्धं, परिहारान्तरं न भवति ।। न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति ।। किं तर्हि ? ।। यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम् ।। क्व च क्रियमाणे न दोषः ? ।। संज्ञाविधौ ।। वृद्धिरादैज्देविकादीनामाकारःथ्य;ति ।। सिध्यति, सूत्रं तर्हि भिद्यते ।। यथान्यासमेवास्तु ।। ननु चोक्तं-देविकादिषु तदादिग्रहणमन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वेति। परिहृतमेतत्--देविकादिषु तदादिग्रहणमन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वेति ।। परिहृतमेतत्--आद्यज्विशेषणत्वात्सिद्धमिति ।। न्यग्रोधे च केवलग्रहणात् न्यग्रोधे च केवलग्रहणान्मन्यामहे--आद्यज्विशेषणं देविकादयःथ्य;ति । तस्य(3) हि केवलग्रहणस्यैतत्प्रयोजनम् ःथ्य;ह मा--भूत् न्याग्रोधमूलाः । शालय ःथ्य;ति । यदि चाद्यज्विशेषणं देविकादयस्ततः केवलग्रहणमर्थवद्भवति ।। तदेतत्कथं कृत्वा ज्ञापकं भवति ? ।। यदि न्यग्रोधशब्दोऽव्युत्पन्नं प्रातिपदिकं भवति । अथ हि न्यग्रोहतीति न्यग्रोधः, ततो नियमार्थं पदान्त ःथ्य;ति कृत्वा न ज्ञापकं भवति ।

।। वहीनरस्येद्वचनम्।। वहीनरस्येत्वं वक्तव्यम्। वहीनरस्याऽपत्यं वैहीनरिः ।।

कुणरवाडवस्त्वाह--नैष वहीनरः ।। कस्तर्हि ? ।। विहीनर(1) एषः । विहीनो नरः कामभोगाभ्यां विहीनरः । विहीनरस्याऽपत्यं--वैहीनरिः ।।

-7-3-3- न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्

य्वाभ्यां परस्याऽवृद्धित्वम्(1) य्वाभ्यां परस्याऽवृद्धित्वं सिद्धम् ।। कुतः ? अपवादौ(1) वृद्धेर्हि तौ अपवादौ हि वृद्धेस्तावैचावुच्येते । नित्यावैचो तयोर्वृद्धिः अथ वा नित्यावैचो, कृतायामपि वृद्धौ प्राप्नुतोऽकृतायामपि ।। नित्यत्वादैचोः कृतयोर्यद्यपि वृद्धिस्तयोरेव ।।

किमर्थं(1) नेति शिष्यते ? ।। अथ किमर्थं प्रतिषेध उच्यते ? ।।

ऐचोर्विषयार्थं प्रतिषेधसन्नियुक्तवचनम्(2) ऐचोर्विषयार्थं प्रतिषेधसन्नियोगेनैचावुच्येते(1) यत्र य्वाभ्यां (3) पराऽवृद्धिस्तत्राध्यश्वर्यथा न तौ यत्र य्वाभ्यां परस्याऽवृद्धित्वमुच्यते तत्रैचौ यथा स्यातामिह मा भूताम् --- आध्यश्विः दाध्यश्विः(2) माध्वश्विरिति ।। नैतदस्ति प्रयोजनम् । अचामादेर्य्वाभ्यां हि(2) तौ अचामादिनाऽत्र य्वौ विशेषयिष्यामः-अचामादेर्यौ य्वाविति।। कथं द्व्याशीति के न तौ ।। द्व्याशीतिकःथ्य;त्यत्र कस्मान्न तौ भवतः? यत्र वृद्धिरचामादेस्तत्रैचावत्र घोर्हि(4)सा यत्राऽचामादेरित्येवं वृद्धिस्तत्रैचावुच्येते । अत्र(5) घोरित्येवं वृद्धिः ।। किमिदं घोरिति(4) ? ।। उत्तरपदस्येति ।। उत्तरपदाधिकारेऽप्यवश्यमैजागमोऽनुर्वत्यः पूर्वत्र्यलिन्दे भवः पूर्वत्रैयलिन्द ःथ्य;त्येवमर्थम् ।। नैषः दोषः -उत्तरपदेनाऽत्राऽचामादिं विशेषयिष्यामोऽचामादिना य्वौ--उत्तरपदस्याचामादेर्यौ य्वा(1)विति ? अथ कस्मात्पदान्ताभ्याम् अथ किमर्थं पदान्ताभ्यामित्युच्यते ? यथेणो न भवेद्यणः(2) ।।

।। ःथ्य;णो यणादेशे मा भूत्--यतश्छात्रा याता ःथ्य;ति ।।

ःथ्य;ह वैयाकरणः शौवश्च ःथ्य;ति शाकलं प्राप्नोति, य्वोश्च स्थानिवद्भावादायावौ प्राप्नुतः ? शाकलायावादेशेषु चोक्तम् (शकलायावादेशेषु(3) चोक्तम्) ।। किमुक्तम् ? ।। शाकले तावदुक्तम्--सिन्नित्यसमासयोः शाकलप्रतिषेध ःथ्य;ति ।। आयावोः किमुक्तम् ? ।। अचः पूर्वविज्ञानादैचोः सिद्धमिति ।।

य्वाभ्यां परस्याऽवृद्धत्वमपवादौ वृद्धेर्हि तौ ।

नित्यावैचौ तयोर्वृद्धिः किमर्थं नेति शिष्यते ।।

यत्र य्वाभ्यां पराऽवृद्धिस्तत्राध्यश्वेर्यथा न तौ ।

अचामादेर्य्वाभ्यां हि तौ कथं व्याशीतिकेन तौ ।।

यत्र वृद्धिरचामादेस्तत्रैचावत्र य्वोर्हि सा ।

अथ कस्मात्पदान्ताभ्यां यथेणो न भवेद्यणः

-7-3-4- द्वारादीनां च

अथ परस्याऽवृद्धिरित्यनुवर्तते उताहो न ? ।। किं चातः ? ।। यद्यनुवर्तते शौवं मांसं, टिलोपे कृते ऐजागमो न प्राप्नोति ।। अथ निवृत्तं, स्वाध्यायशब्दो द्वारादिषु पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्व ऐजागमः प्राप्नोति ।।

यथेच्छसि तथास्तु ।। अस्तु तावदनुवर्तते, कथं शैवं मांसम् ? ।। आनुपूर्व्या(1) सिद्धमेतत् । नात्राऽकृते ऐजागमे टिलोपः प्रप्नोति ।। किं

कारणम् ? ।। प्रकृत्यैकाजिति प्रकृतिभावेन भवितव्यम् । तदेतदानुपूर्व्या(1) सिद्धं भवति ।।
अथ वा पुनरस्तु निवृत्तम् ।। ननु चोक्तं--स्वाध्यायशब्दो द्वारादिषु पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्व ऐजागमः प्राप्नोतीति ।। कः पुनरर्हति स्वाध्यायशब्दं द्वारादिषु पठितुम्, एवं किल पठ्येत--स्वमध्ययनं स्वाध्याय ः्थ्य;ति ।। तच्च न ।। सुष्ठु वाऽध्ययनं स्वाध्यायः । (शोभनं वा अध्ययनं स्वाध्यायः(1) ।। अथापि स्वमध्ययनं स्वाध्यायः(1)) एवमपि न दोषः । अचामादेरिति वर्त्तते ।।
-7-3-8- श्वादेरिञ्रि
अयं श्वञ्छब्दो(2) द्वारादिषु पठ्यते, तत्र कः प्रसङ्गो यत्तदादेः स्यात्, नैव(3) प्राप्नोति नाऽर्थः प्रतिषेधेन ।। (ः्थ्य;ह तस्य वा(1) ग्रहणं भवति तदन्तस्य वा, न चेदं तत्, नापि तदन्तम् ) ।। तदादिविधिना प्राप्नोति ।। न(4) वै तदादिविधिरस्ति ।। अत उत्तरं पठति--- प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे(5) तदादिग्रहणस्य, शौवहानाद्यर्थम् प्रतिषेधे श्वादिग्रहणं क्रियते ज्ञापकार्थम् ।। किं ज्ञाप्यम् ? ।। एतज्ज्ञापयत्याचार्यः- अन्यत्र च श्वन्ग्रहणे तदादिविधिर्भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। शौवहानाद्यर्थम् । शौवहानं नाम(1) नगरं शौवादंष्ट्रो मणिरिति ः्थ्य;कारादिग्रहणं च श्वागणिकाद्यर्थम् ः्थ्य;कारादिग्रहणं च कर्तव्यम् ।। किं प्रयोजनम् ? ।। श्वागणिकाद्यर्थम् । श्वगणेन चरति श्वागणिकः(2) तदन्तस्य चाऽन्यत्र प्रतिषेधः(3) तदन्तस्य चाऽन्यत्र(3) प्रतिषेधो वक्तव्यः । श्वाभस्त्रेः स्वं(1) श्वाभस्त्रम् ।।
-7-3-10- उत्तरपदस्य
किमर्थमिदमुच्यते ? ।। अवयवाद्दतोरिति वक्ष्यति तदुत्तरपदस्य यथा स्यादचामादेर्मा भूत् ।। नैतदस्ति प्रयोजनम् । अवयवादिति पञ्चमी तत्राऽन्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव भविष्यति ।। उत्तरार्थं तर्हि,--सुसर्वार्धाज्जनपदस्येति ।। सुसर्वार्द्धादिति पञ्चमी ।। दिशोऽमद्राणाम् (ः्थ्य;ति(1)) ।। दिश ः्थ्य;त्येव ।। सङ्ख्यायाः संवत्सरसङ्ख्यस्य च (ः्थ्य;ति( 1)) ।। सङ्ख्याया ः्थ्य;ति पञ्चमी । वर्षस्याभविष्यति ।। सङ्ख्याया ः्थ्य;त्येव ।।
ः्थ्य;दं तर्हि प्रयोजनं --जे प्रोष्ठपदानाम् । उत्तरपदस्य यथा स्यात्पूर्वपदस्य(2) मा भूत् -- प्रोष्ठपदासु जातः प्रोष्ठपादो ब्राह्मणः ।
तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्विप्रतिषेधेन द्व्याशीतिकाद्यर्थम् तद्धितेष्वचामादेरुत्तरपदवृद्धिर्भवति विप्रतिषेधेन ।। किं प्रयोजनम् ? ।। व्याशीतिकाद्यर्थम् । अचामादिवृद्धेरवकाशः--ऐतिकायनः औपगवः ।
उत्तरपदवृद्धेरवकाशः-- द्विषाष्टिकम् त्रिषाष्टिकम् । ः्थ्य;होभयं प्राप्नोति--द्व्याशीतिकः त्र्याशीतिकः । उत्तरपदवृद्धिर्भवति विप्रतिषेधेन ।। कः पुनरत्र विशेषोऽचामादिवृद्धौ सत्यामुत्तरपदवृद्धौ वा ? ।। अयमस्ति विशेषः--यद्यत्राऽचामादिवृद्धिः स्यादैजागमः प्रसज्येत ।। (उत्तरपदस्य) ।।
-7-3-14- प्राचां ग्रामनगराणाम्
नगरग्रहणं किमर्थं न प्राचां ग्रामाणामित्येव सिद्धम् ? ।। न सिध्यति । अन्यो हि(1) ग्रामोऽन्यन्नगरम् ।। कथं ज्ञायते ? ।। एवं हि कश्चित्कं चित्पृच्छति--कुतो भवानागच्छति ग्रामात् ? ।। स आह-न ग्रामान्नगरादिति ।।
ननु च भो ! य एव ग्रामस्तन्नगरम् कथं ज्ञायते ? ।। लोकतः(2) । ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरे न क्रियन्ते । तद्यथा --अभक्ष्यो ग्राहम्यकुक्कुटः अभक्ष्यो ग्राहम्यसूकर ः्थ्य;त्युक्ते सुतरां नागरोऽपि न भक्ष्यते । तथा ग्रामे नाध्येयमिति साधीयो नगरेऽपि नाधीयते । तस्माद्य एव ग्रामस्तन्नगरम् ।।
कथं यदुक्तम्- एवं हि कश्चित्कं चित्पृच्छति--कुतोभवानागच्छति ग्रामात् ? । स आह--न ग्रामान्नगरादिति ? ।। संस्त्यायविशेषमसावाचष्टे । संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह ः्थ्य;ति ।। एवं तर्हि सिद्धे सति यद्ग्रामग्रहणे नगरग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्र ग्रामग्रहणे नगरग्रहणं न भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। विशिष्टलिङ्गो नदीदेशोऽग्रामा ः्थ्य;त्यत्र नगरप्रतिषेधश्चोदितः स न वक्तव्यो भवति ।। यद्येतज्ज्ञाप्यते--उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादित्यत्र नगरग्रहणं कर्तव्यम् । बाहीकग्रामेभ्यश्च नगरग्रहणं कर्तव्यम् । दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु । नगरग्रहणं कर्तव्यम् । ः्थ्य;दं चतुर्थं ज्ञापकार्थम् । तत्राऽतिनिर्बन्धो(2) न लाभः । तस्माद्यस्मिन्नेव ग्रामग्रहणे नगरग्रहणं नेष्यते तस्य प्रतिषेधो वक्तव्यः ।।
-7-3-15- सङ्ख्यायाः सवत्सरसङ्ख्यस्य च
संवत्सरग्रहणमनर्थकं परिमाणान्तस्येति कृतत्वात्, संवत्सरग्रहणमनर्थकम् ।। किं कारणम् ? ।। परिमाणान्तस्येति कृतत्वात् । परिमाणान्तस्याऽसंज्ञाशाणयोरित्येव सिद्धम् ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य(3) (एवं तर्हि ज्ञापयत्याचार्यः---कालपरिमाणानां(4)) वृद्धिर्न भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। द्वैरात्रिकः त्रैरात्रिकः--अत्र वृद्धिर्न भवति ।। नैतदस्ति प्रयोजनं, नास्त्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां(5) वा ।। ः्थ्य;दं तर्हि--द्वैसमिकः त्रैसमिकः ।। ः्थ्य;दं चापि प्रयोजनं--द्वैरात्रिकः त्रैरात्रिकः ।। ननु चोक्तंनास्त्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वेति ? ।। अयमस्ति विशेषः--यद्यत्रोत्तरपदवृद्धिः स्यादचामादेर्वृद्धिर्न स्यात् ।।
अपर आह ज्ञापकं तु कालपरिमाणानां परिमाणाऽग्रहणस्य एवं तर्हि ज्ञापयत्याचार्यः--कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। अपरिमाणबिस्ताचिकम्बल्येभ्यो न तद्धितलुकि--द्विवर्षा त्रिवर्षा । परिमाणपदासेन पर्युदासो न भवति ।।
-7-3-28- प्रवाहणस्य ढे
परस्य वृद्धिर्नेत्यनुवर्तते उताहो न ? ।। किं चातः ? ।। यद्यनुवर्तते प्रवाहणेयी भार्याऽस्येति प्रवाहणेयीभार्यः, वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न प्राप्नोति । अथ निवृत्तं, न दोषो भवति ।। यथा न दोषस्तथास्तु ।। अथवा पुनरस्त्वनुवर्तते । ननु चोक्तं- -प्रवाहणेयी भार्यास्य प्रवाहणेयीभार्यः -- वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न प्राप्नोतीति ।। नैषः दोषः, मा भूदेवं जातेश्चेत्येवं(2) भविष्यति ।। ( प्रवाहणस्य ढे ) ।।
-7-3-31- यथातथयथापुरयोः पर्यायेण
अयं योगः शक्योऽवक्तुम्(3) कथम्--अयाथातथ्यम् आयथातथ्यम् अयाथापुर्यम् आयथापुर्यम् ? ।। यदा तावत्पूर्वपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते--न यथातथा अयथातथा, अयथातथा भावः आयथातथ्यम् । यदोत्तरपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते--यथातथाभावो यथातथ्यम् । न

याथातथ्यम्--अयाथातथ्यम् ।। ( यथातथयथापुरयोः पर्यायेण )
-7-3-32- हनस्तोऽचिण्णलोः
।। हन्तेस्तकारे तद्धिते(1) प्रतिषेधः हन्तेस्तकारे तद्धिते(1) प्रतिषेधो वक्तव्यः । वार्त्रघ्नं भ्रौणघ्नम् उक्तं वा किमुक्तम् ? ।। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धमिति ।। ( हनस्तोऽचिण्णलोः )
-7-3-33- आतो युक् चिण्कृतोः
कृद्ग्रहणं किमर्थम् ? ।। इह मा भूत्--ददौ दधौ ।। नैतदस्ति प्रयोजनम्, अचिण्णलोरिति वर्तते ।। यद्यचिण्णलोरिति वर्तते,--अदायि(3) अधायीत्यत्र न प्राप्नोति ।। वचनाच्चिणि भविष्यति--अचिण्णलोरिति वर्तते ।। एवमपि चौडिः वालाकिरित्यत्र प्राप्नोति ।। लोपोऽत्र बाधको भविष्यति ।। इदमिह सम्प्रधार्यं--लोपः क्रियतां युगिति,--किमत्र कर्तव्यम् ? ।। परत्वाद्युक् ।। एवं तर्ह्यचामादेरिति वर्तते । यत्राचामादिराकारस्तत्र युगिति ।। एवमपि ज्ञा देवता अस्य स्थालीपाकस्य ज्ञः स्थालीपाकः--अत्र प्राप्नोति । तस्मात्कृद्ग्रहणं कर्तव्यम् ।।
-7-3-34- नोदात्तोपदेशस्य मान्तस्याऽनाचमेः
अत्यल्पमिदमुच्यते--अनाचमेरिति ।। ( अनाचमिकमिवमीनाम्(2) ) अनाचमिकमिवमीनामिति वक्तव्यम् । आचामः(3) कामः वामः(4) ।। (नोदात्तोप)
-7-3-37- शाच्छासाह्वाव्यावेपां युक
णिप्रकरणे(6) धूञ्प्रीञोर्नुग्वचनम् णिप्रकरणे(6) धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति प्रीणयति पातेर्लुग्वचनम् पालयति ।।
-7-3-44- प्रत्ययस्थात्कात्पूर्वस्यात ः्थ्य;दाप्यसुपः
स्थग्रहणं किमर्थम् ? ।। ः्थ्य;दं विचारयिष्यते--ः्थ्य;त्वे कग्रहणं सङ्घातग्रहणं वा स्याद्वर्णग्रहणं वेति । तद्यदा सङ्घातग्रहणं तदा स्थग्रहणं कर्तव्यम् । ः्थ्य;हापि यथा स्यात्--कारिका हारिका । यदा हि वर्णग्रहणं तदा केवलः ककारः प्रत्ययो नास्तीति कृत्वा वचनाद्भविष्यति ।।
अथाऽसुप ः्थ्य;ति, कथमिदं विज्ञायते--असुब्वतोऽङ्गस्येति, आहो स्विन्न चेत्सुपः पर आबिति ।। किं चातः ? ।। यदि विज्ञायते--असुब्वतोऽङ्गस्येति,-- बहुचर्मिका--अत्र न प्राप्नोति । अथ विज्ञायते--न चेत्सुपः पर आबिति, न दोषो भवति ।। यथा न दोषस्तथाऽस्तु ।।
ः्थ्य;दं विचार्यते--ः्थ्य;त्वे कग्रहणं सङ्घातग्रहणं वा स्याद्वर्णग्रहणं वेति ? ।। कश्चात्र विशेषः ः्थ्य;त्वे(1) कग्रहणं सङ्घातग्रहणं चेदेतिकास्वप्राप्तिः ः्थ्य;त्वे कग्रहणं सङ्घातग्रहणं चेदेतिकास्वप्राप्तिः । एतिकाश्चरन्ति ।। वचनाद्भविष्यति ।। अस्ति वचने(2) प्रयोजनम् ।। किम् ? ।। कारिका हारिकेति(3) ।। अस्तु तर्हि वर्णग्रहणम् वर्णग्रहणं चेद्व्यवहितत्वादप्रसिद्धिः(4) वर्णग्रहणं चेद्व्यवहितत्वान्न प्राप्नोति । कारिका हारिका । अकारेण व्यवहितत्वान्न प्राप्नोति ।। एकादेशे कृते नास्ति व्यवधानम् ।। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।। एवं तर्ह्याहाऽयं -- प्रत्ययस्थात्कात्पूर्वस्ये(1)ति, न(2क्व चिदव्यवधानं, तत्र वचनाद्भविष्यति वचनप्रामाण्यादिति चेद्रथकठ्यादिष्वतिप्रसङ्गः वचनप्रामाण्यादिति चेद्रथकठ्यादिषु दोषो भवति । रथकट्या गर्गकाम्या ।। नैषः दोषः । येन नाऽव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। केन च नाऽव्यवधानम् ? ।। वर्णेनैकेन ।। सङ्घातेन पुर्नव्यवधानं भवति(3), न भवति च ।
अथ वा पुनरस्तु सङ्घातग्रहणम् ।। ननु चोक्त मित्वे कग्रहणं सङ्घातग्रहणं चेदेतिकास्वप्राप्तिरिति ।। परिहृतमेतत्--वचनाद्भविष्यतीति(4) ।। ननु चोक्तम्स्ति वचने प्रयोजनम् । किम् । कारिका हारिकेति ।। अत्राप्येकादेशे कृते व्यपवर्गाऽभावन्न प्राप्नोति ।। अन्तादिवद्भावेन व्यपवर्गः ।। उभयत आश्रये नान्तादिवत् ।। एवं तर्हि-- एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः ।। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति--भवत्येवं जातीयकानामपीत्त्वमिति यदयं न यासयोरिति प्रतिषेधं शास्ति ।।
मामकनरनयोरुपसङ्ख्यानमप्रत्ययस्थत्वात्(1)
मामकनरकयोरुपसङ्ख्यानं कर्तव्यम् । मामिका नरिका ।। किं पुनः कारणं न सिध्यति ? ।। अप्रत्ययस्थात्वात्(2) त्यत्तयपोश्च प्रतिषिद्धत्वात् त्यक्त्यपोश्चोपसङ्ख्यानं कर्तव्यम् । दाक्षिणात्यिका ः्थ्य;हत्यिका(3) ।।
किं पुनः कारणं न सिध्यति ? ।। प्रतिषिद्धत्वात् । उदीचामातः स्थाने यकपूर्वाया ः्थ्य;ति प्रतिषिद्धत्वात् ।। ( प्रत्ययस्थात्कात् ) ।।
-7-3-45- न यासयोः
न यत्तदोः(4) न यत्तदोरिति वक्तव्यम् ।। ः्थ्य;हापि यथा स्यात्-यकामधीमहे(5), तकां पचामह(6) ः्थ्य;ति प्रतिषेधे त्यकन उपसङ्ख्यानम् प्रतिषेधे त्यकन उपसङ्ख्यानं कर्तव्यम् । उपत्यका अधित्यका ।। तत्तर्हि उपसङ्ख्यानं कर्तव्यम् ? ।। न कर्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति --नैवंजातीयकानामित्वं भवतीति यदयं मृदस्तिकन्नितीत्वभूतं निर्देशं करोति पावकादीनां छन्दस्युसङ्ख्यानम् पावकादीनां छन्दस्युपसङ्ख्यानं कर्तव्यम् हिरण्यवर्णाः शुचयः पावकाः । ऋक्षकाः(2) अलोमकाः ।। छन्दसीति किमर्थम् ? ।। पाविका अलोमिका आशिषि चोपसङ्ख्यानम् आशिषि चोपसङ्ख्यानं कर्तव्यम् । जीवतात् जीवका । नन्दतान्नन्दका । भवताद्भवका उत्तरपदलोपे चोपसङ्ख्यानम् उत्तरपदलोपे चोपसङ्ख्यानं कर्तव्यम् । देवदत्तिका देवका । यज्ञदत्तिका यज्ञका क्षिपकादीनां(3) चोपसङ्ख्यानम् क्षिपकादीनां चोपसङ्ख्यानं कर्तव्यम् । क्षिपका ध्रुवका धुवका चटका(4) तारका(3) । ज्योतिष्युपसङ्ख्यानम्।। तारका ज्योतिष्युपसङ्ख्यानं कर्तव्यम्। तारका। ज्योतिषीति किमर्थम् ? ।। तारयतीति तारिका दासी वर्णका तान्तवे उपसङ्ख्यानम् वर्णका तान्तवे उपसङ्ख्यानं कर्तव्यम् । वर्णका । तान्तव ः्थ्य;ति किमर्थम् ? ।। वर्णिका भागुरी लोकायतस्य वर्तका शकुनौ प्राचामुपसङ्ख्यानम् वर्तका शकुनौ प्राचामुपससङ्ख्यानं कर्तव्यम् वर्त्तका शकुनिः ।। शकुनाविति किमर्थम् ? ।। वर्तिका भागुरी लोकायतस्य । प्राचामिति किमर्थम् ? ।। वर्त्तिका अष्टका(1) पितृदेवत्ये उपसङ्ख्यानम् अष्टका पितृदेवत्ये उपसङ्ख्यानं कर्तव्यम् । अष्टका । पितृदेवत्य ः्थ्य;ति किमर्थम् ? ।। अष्टिका खारी वा सूतकापुत्रकावृन्दारकाणामुपससङ्ख्यानम् वा सूतकापुत्रकावृन्दारकाणामुपसङ्ख्यानं कर्तव्यम् । सूतका-सूतिका ।। पुत्रका-पुत्रिका । वृन्दारका(2) वृन्दारिका ।। (नया)
-7-3-46- उदीचामातः स्थाने यकपूर्वायाः
किमर्थं स्त्रीलिङ्गनिर्देशः क्रियते न यकपूर्वस्येत्येवोच्येत ? ।। स्त्रीविषयो य आकारस्तस्य स्थाने योऽकारस्तस्य प्रतिषेधो यथा स्यादिह मा भूत्-

शुभं यातीति शुभंयाः शुभंयिका । भद्रंयाः- भद्रंयिका(3) यकपूर्वे धात्वन्तप्रतिषेधः यकपूर्वे धात्वन्तप्रतिषेधो वक्तव्यः ।। किं प्रयोजनम् ? ।। सुनयिका सुशयिका अशोकिका अपाकिका ।। ( उदीचामातः स्थाने ) ।।

-7-3-47- भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि

एषाद्वे नञ्पूर्वे अनुदाहरणे असुप ःथ्य;ति प्रतिषेधात्(1) ।। अथ भस्त्राग्रहणं किमर्थं, न अभाषितपुंस्कादित्येव सिद्धम् ? ।। भस्त्राग्रहणमुपसर्जनार्थम् उपसर्जनार्थोऽयमारम्भः । अभस्त्रका(2) अभस्त्रिका(3) नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात्।। नञ्पूर्वग्रहणं चानर्थकम् किं कारणम् ? ।। उत्तरपदमात्रस्येद्ववचनात्(3) । उत्तरपदमात्रस्येत्वं वक्तव्यम् । निर्भस्त्रका निर्भस्त्रिका । बहुभस्त्रका-- बहुभस्त्रिका ।।

-7-3-50- ठस्येकः

किमिदं ठादेशे वर्णग्रहणमाहोस्वित्सङ्घातग्रहणम् ? ।। कश्चात्र विशेषः ? ठादेशे वर्णग्रहणं चेद्धात्वन्तप्रतिषेधः ठादेशं वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः(1) । पठिता(2) । पठितुम् ।। अस्तु तर्हि सङ्घातग्रहणम् सङ्घातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधः सङ्घातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधो वक्तव्यः । उणादीनां तावत्--कण्ठः(3) शण्ठः वण्ठः । ःथ्य;ह च(4) मथितं

पण्यमस्य माथितिक ःथ्य;ति,--अकारलोपे कृते तान्तादिति कादेशः प्राप्नोति । वर्णग्रहणे पुनः सत्यल्विधिरयं भवति तस्माद्विशिष्टग्रहणम् तस्माद्विशिष्टस्य ठकारस्य ग्रहणं कर्तव्यम् ।। ( तत्तर्हि कर्तव्यम्(5) ? । ) न कर्तव्यम् ।। अस्तु तावद्वर्णग्रहणम् । ननु चोक्तं ठादेशे वर्णग्रहणं चेद्धात्वन्तप्रतिषेध(1)ःथ्य;ति ।। नैषः दोषः-अङ्गादिति वर्तते ।। न वै अङ्गादिति पञ्चम्यस्ति ।। एव तर्हि प्रत्ययस्थस्येति वर्तते ।। क्व प्रकृतम् ? ।। प्रत्ययस्थात्कात्पूर्वस्यात ःथ्य;दाप्यसुप ःथ्य;ति ।। तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहाऽर्थः ।। अर्थाद्विभक्तिविपरिणामो(2) भविष्यति । तद्यथा--उच्चानि देवदत्तस्य गृहाणि ।। आमन्त्रयस्वैनम्। देवदत्तमिति गम्यते। देवदत्तस्य गावोऽश्वा हिरण्यञ्च(2) । आढ्यो वैधवेयः । देवदत्त ःथ्य;ति गम्यते ।

पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं,द्वितीयानिर्दिष्टं च भवति । एवमिहापि -पुरस्तात्पञ्चमीनिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति।। एवमप्युणादीनां प्रतिषेधो वक्तव्यः ।। न वक्तव्यः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि

एवमपि कर्मठ ःथ्य;त्यत्र प्राप्नोति ।। एवं तर्ह्यङ्गस्येति संबन्धषष्ठी विज्ञास्यते-- अङ्गस्य यष्ठकारः ।। किञ्चाऽङ्गस्य ठकारः ? ।। निमित्तम् ।। यस्मिन्नङ्गमित्येतद्भवति ।। कस्मिंश्चैतद्भवति ? ।। प्रत्यये ।।

अथ वा पुनरस्तु सङ्घातग्रहणम् ।। ननु चोक्तं सङ्घातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेध ःथ्य;ति ।। उणादीनां तावत्प्रतिषेधो न वक्तव्यः । परिहृतमेतत्--उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति । यदप्युच्यते--ःथ्य;ह च मथितं पण्यमस्य माथितिक ःथ्य;त्यकारलोपे कृते तान्तादिति कादेशः प्राप्नोतीति ।। नैषः दोषः --अकारलोपस्य स्थानिवद्भावान्न भविष्यति ।। न सिध्यति-पूर्वविधौ स्थानिवद्भावो न चायं पूर्वविधिः ।। अयमपि पूर्वविधिः । पूर्वस्मादपि विधिः पूर्वविधिरिति ।। अथाप्युणादयो व्युत्पाद्यन्ते एवमपि न दोषः, क्रियते न्यास एव विशिष्टग्रहणं--ठस्येति ।। ( ठस्येकः ) ।।

-7-3-51- ःथ्य;सुसुक्तान्तात्कः

ःथ्य;ह कस्मान्न भवति, -- आशिषा तरति(1)--आशिषिकः । उषा तरति औषिकः ? ।। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।। अथेह कथं भवितव्यं--दोर्भ्यां तरति(2) ? ।। दौष्क ःथ्य;ति भवितव्यम् ।। कथम् ? ।। यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।। ( ःथ्य;सुसुक्तान्तात्कः ) ।।

-7-3-54- हो हन्तेञ्णिन्नेषु

किमिदं ञ्णिन्नकारग्रहणं हन्तिविशेषणं ञ्णिन्नकारपरस्य हन्तेर्यो हकार ःथ्य;ति, आहोस्विद्धकारविशेषणं ञ्णिन्नकारपरस्य हकारस्य, स चेद्धन्तेरिति ? ।। कश्चात्र विशेषः ? हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः । घ्नन्ति घ्नन्तु अघ्नन् ।। अस्तु तर्हि हकारविशेषणम् ।।

हकारस्येति चेञ्ञ्ञ्णत्यप्राप्तिर्व्यवहितत्वात्(23) ।। हकारस्येति चञ्ञ्ञ्णत्यप्राप्तिः। घातयति घातकः ।। किं कारणम्?।। व्यवहितत्वात् । नकारेणव्यवहितत्वान्न प्राप्नोति ।। वचनाद्भविष्यति ।। ःथ्य;हापि वचनात्प्राप्नोति--हननमिच्छति हननीयति--हन--नीयतेर्ण्वुल्--हननीयक ःथ्य;ति स्थानिवद्भावाच्चाऽचोनकारेऽप्रसिद्धिः स्थानिवद्भावाच्चऽचो नकारेऽप्रसिद्धिः स्यात्(4) । घ्नन्ति घ्नन्तु ।। वचनाद्भविष्यति वचनप्रामाण्यादिति चेदलोपे प्रतिषेधः वचनप्रामाण्यादिति चेदलोपे प्रतिषेधो वक्तव्यः । हन्ता हन्तुम् । ( नकारग्रहणसार्मथ्यादलोपे न(1) )। नकारग्रहणसार्मथ्यादलोपे न भविष्यति ।। अस्त्यन्यन्नकारवचनस्य प्रयोजनम् ।। ? ।। किम् ? ।। श्रूयमाणविशेषणम् । यत्र नकारः श्रूयते तत्र यथा स्यादिह मा भूत्--हतो हथ ःथ्य;ति सिद्धं तूपधालोप ःथ्य;ति वचनात् सिद्धमेतत् ।। कथम् ? ।। (ठउपधालोप ःथ्य;ति वचनात्) । उपधालोपे चेति वक्तव्यम् ।। सिध्यति, सूत्रं तर्हि भिद्यते ।।

यथान्यासमेवाऽस्तु । ननु चोक्तं--हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिरिति ? ।। वचनाद्भविष्यति ।। अथ वा पुनरस्तु--हकारविशेषणम् ।। ननु चोक्तं हकारस्येति चेञ्ञ्ञ्णत्यप्राप्तिरिति ? ।। वचनाद्भविष्यति ।। ननु चोक्तमिहापि वचनात्प्राप्नोति हननीयक ःथ्य;ति ? ।। नैष दोषो, येन नाव्यवधानं तेन व्यवहितेऽपि

वचनप्रामाण्यात् । न च क्वचिद्धात्ववयवेनाऽव्यवधानम्, एतेन पुनः सङ्घातेन व्यवधानं भवति(3), न च भवति । यदप्युच्यते-- स्थानिवद्भावाच्चाऽचो नकारेऽप्रसिद्धिरिति । वचनाद्भविष्यति ।। ननु चोक्तं वचनप्रामाण्यादिति चेदलोपे प्रतिषेध ःथ्य;ति ।। नैषः दोषः ।। आनन्तर्यमिहाश्रीयते--हकारस्य नकार ःथ्य;ति । क्व चिच्च संनिपातदकृतमानन्तर्यं, न शास्त्रकृतमानन्तर्यं(4), क्व चिच्च न सन्निपातकृतं नापि शास्त्रकृतम् । लोपे सन्निपातकृतमानन्तर्यम्, न शास्त्रकृतमानन्तर्यम्(1), अलोपे नैव सन्निपातकृतं नापि शास्त्रकृतम् । यत्र कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः ।। ( होहन्तेञ्णिन्नेषु ) ।।

-7-3-55- अभ्यासाच्च

अभ्यासात्कुत्वमसुपः अभ्यासात्कुत्वमसुप ाःथ्य;ति वक्तव्यम् । ाःथ्य;ह मा भूत्--हननमिच्छति
हननीयति, हननीयतेः सन् जिहननीयिषतीति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । हन्तेरभ्यासादित्युच्यते न चैष हन्तेरभ्यासः ।। हन्तेरेषोऽभ्यासः(2) ।। कथम् ? ।। एकाचो द्वे प्रथमस्येति ।। एवं तर्हि हन्तेरङ्गस्य योऽभ्यासस्तस्मादित्युच्यते न चैष हन्तेरङ्गस्याऽभ्यासः ।। हन्तेरङ्गस्यैषोऽभ्यासः ।। कथम् ? ।। एकाचो द्वे प्रथमस्येति ।। एवं तर्हि यस्मिन् हन्तिरङ्गं तस्मिन्योऽभ्यासस्तस्मादित्युच्यते, यस्मिंश्चाऽत्र हन्तिरङ्गं न तस्मिन्नभ्यासो, यस्मिंश्चाभ्यासो(3) न तस्मिन्हन्तिरङ्गं भवति । ( अभ्यासाच्च ) ।।
-7-3-56- हेरचङि
अचङीति किमर्थम् ? ।। प्राजीहयद्दूतम्(1) हेश्चङि प्रतिषेधानर्थक्यमङ्गाऽन्यत्वात् हेश्चङि प्रतिषेधोऽनर्थकः ।। किं कारणम् ? ।। अङ्गान्यत्वपात् । ण्यन्तमेतदङ्गमन्यद्भवति ।। लोपे कृते नाऽङ्गान्यत्वम् ।। स्थानिवद्भावादङ्गान्यत्वमेव ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानार्थम्(2) एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र ण्यधिकस्य कुत्वं भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। प्रजिघाययिषतीत्यत्र कुत्वं सिद्धं भवति ।। ( हेरचङि ) ।।
-7-3-57- सँल्लिटोर्जेः
जिग्रहणे ज्यः प्रतिषेधः जिग्रहणे ज्यः प्रतिषेधो वक्तव्यः जिज्यतुः जिज्युरिति ।। स तर्हि प्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे(3)त्येवमेतस्य न भविष्यति ।। सा तर्ह्येषा परिभाषा कर्तव्या ? ।। अवश्यं कर्तव्या, अध्याप्य गत ाःथ्य;त्येवमर्थम् ।।
-7-3-59- न क्वादेः
क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात् क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधः । अनर्थकः(1) प्रतिषेधोऽप्रतिषेधः ।। कुत्वं कस्मान्न भवति ? ।। निष्ठायामनिटः कुत्ववचनात् ।। निष्ठायामनिटः कुत्वं वक्ष्यामि, सेटश्चैते निष्ठायाम् ।। यदि निष्ठायामनिटः कुत्वमुच्यते कथं शोकः समुद्र ाःथ्य;ति ? शुच्युब्ज्योर्घञ्जि कुत्वम् शुच्युब्ज्योर्घञ्जि कुत्वं वक्तव्यम् ।। कथमर्कः ? अर्चेः कविधानात्सिद्धम्(2) नैतद्घञ्ञन्तम्(3), औणादिक एष कशब्दस्तस्मिन्नाष्टमिकं कुत्वम् ।। ( न क्वादेः ) ।।
-7-3-61- भुजन्युब्जौ पाण्युपतापयोः
भुजः पाणा भुजः पाणाविति वक्तव्यम् ।। कथं न्युब्ज उपतात ाःथ्य;ति ? न्युब्जेः कर्तृत्वादप्रतिषेधः (न्युब्जेः(1) कर्तृत्वादप्रतिषेधः ।) अनर्थकः प्रतिषेधोऽप्रतिषेधः ।। कुत्वं कस्मान्न भवति ? ।। कर्तृत्वात् । नैतद्घञ्ञन्तम्(1) । कर्तृप्रत्यय एषः । न्युब्जतीति न्युब्जः ।। ननु(1) च अधिकरणसाधनो वै लक्ष्यते घञ्ञ(1), --न्युब्जिताः शेरतेऽस्मिन्न्युब्ज उपताप ाःथ्य;ति ।। एषोऽपि हि कर्तृसाधन एव ।। कथम् ? ।। न्युब्जयतीति न्युब्जः ।।
-7-3-66- यजयाचरुचप्रवचर्चश्च
प्रवचिग्रहणमनर्थकं वचोऽशब्दसंज्ञाभावात् प्रवचिग्रहणमनर्थकम् ।। किं कारणम् ? ।। वचोऽशब्दसंज्ञाभावात् । वचोऽशब्दसंज्ञायां प्रतिषेध उच्यते, प्रपूर्वश्च वचिरशब्दसंज्ञायां वर्तते । उपसर्गनियमार्थम् उपसर्गनियमार्थं तर्हीदं(1) वक्तव्यम् । प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधो यथा स्यादिह मा भूत्--अविवाक्यमहरिति उपसर्गपूर्वनियमार्थमिति(3) चेदविवाक्यस्य विशेषवचनात्सिद्धम् (उपसर्गपूर्वनियमार्थमिति(4) चेदविवाक्यस्य विशेषवचनात्सिद्धमेतत्) । विशेषत(5) एव तद्वक्तव्यम् अविवाक्यमहरिति ।। क्व माभूत् ? ।। अविवाच्यमेवान्यदिति ण्यप्रतिषेधे त्यजेरुपसङ्ख्यानम् ण्यप्रतिषेधे त्यजेरुपसङ्ख्यानं कर्तव्यम् । त्याज्यम् ।।
-7-3-69- भोज्यम्भक्ष्ये
भोज्यमभ्यवहार्ये(6) भोज्यमभ्यवहार्य ाःथ्य;ति वक्तव्यम् । ाःथ्य;हापि यथा स्यात्--भोज्यः सूपः भोज्या यवागूरिति ।। किं पुनः कारणं न सिध्यति ? ।। भक्षिरयं खरविशदे एव(6) वर्तते तेन द्रवे न प्राप्नोति ।। नावश्यं भक्षिः खरविशदे एव वर्तते ।। किं तर्हि ? ।। अन्यत्रापि वर्तते । तद्यथा--अब्भक्षो वायुभक्ष ाःथ्य;ति ।। ( भोज्यं भक्ष्ये ) ।।
-7-3-70- घोर्लोपो लेटि वा
वेति शक्यमवक्तुम्(1) कस्मान्न भवति--तदग्निरग्नये ददात् ? ।। अस्त्वत्र लोपः, आटः भविष्यति । तेनोभयं सिध्यति--दधद्रत्नानि दाशुषे । दधाद्रत्नानि दाशुषे ।। ( घोर्लोपो लेटि वा ) ।
-7-3-71- ओतः श्यनि
ओतः शिति ओतः शितीति वक्तव्यम् ।। किं प्रयोजनम् ? ।। उत्तरत्र शिद्ग्रहणाऽभावाय तत्रायमप्यर्थः ष्ठिबुक्लमुचमां शितीति शिद्ग्रहणं न कर्तव्यं भवति ।। ननु च भोः श्यन्ग्रहणमपि तर्ह्युत्तरार्थं कर्तव्यम् । शमामष्टानां दीर्घः श्यनीति श्यन्ग्रहणं न कर्तव्यं भवति ।। अत्राप्यस्तु--शितीत्येव । यदि(4) शितीत्युच्यते अनुत्वेन्द्रो भ्रमतु मदतु--अत्रापि प्राप्नोति।। शमादिभिरत्र शितं विशेषयिष्यामः---शमादीनां यः शिदिति ।। कश्च शमादीनां शित् ? ।। शमादिभ्यो यो विहितः ।। एवमपि तस्यति यस्यति--अत्र प्राप्नोति ।। अष्टानामिति वचनान्न भविष्यति ।। ( ओतः )
-7-3-75- ष्ठिवुक्लमुचमां शिति
दीर्घत्वमाङि चमः(1) दीर्घत्वमाङि चम(1) ाःथ्य;ति वक्तव्यम् । आचामति, ाःथ्य;ह मा भूत्--चमति(2) विचमतीति ।। ( ष्ठिवुक्लमुचमां शिति ) ।।
-7-3-77- ाःथ्य;षगमियमां छः
ाःथ्य;षेश्छत्वमहलि ाःथ्य;षेश्छत्वमहलीति वक्तव्यम् । ाःथ्य;ह मा भूत् ाःथ्य;ष्णाति ाःथ्य;ष्यति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । अचीति वर्तते ।। एवमपीषाणेत्यत्र प्राप्नोति ।। अथाऽहलीत्यप्युच्यमाने(4) कस्मादेवाऽत्र छत्वं(5) न भवति ? ।। नैवं विज्ञायते--न हल् अहल्, अहलीति ।। कथं तर्हि ? ।। अविद्यमानो हलस्मिन्सोऽयमहल, अहलीति ।। यद्येवमचीत्यपि वर्तमाने न दोषः । न ह्यचा शिद्विशेष्यते--शिति भवति, कतरस्मिन् ?, अचीति ।। कथं तर्हि ? ।। शिताऽज्विशेष्यते, -- अचि भवति, कतरस्मिन् ?, शितीति ( ाःथ्य;षगमियमां छः ) ।।

-7-3-78- पाघ्राध्मास्थाम्नाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छर्पश्यच्छधौशीयसीदाः
पिबेर्गुणप्रतिषेधः पिबेर्गुणप्रतिषेधो वक्तव्यः, पिबति--लघूपधगुणः प्राप्नोति । स तर्हि प्रतिषेधो वक्तव्यः ? ।। न वक्तव्यः ।। गुणः(1) कस्मान्न भवति ? ।। पिबतिरदन्तः(2) । अदन्त ाःथ्य;ति चेदुक्तम् किमुक्तम् । धातोरन्त ाःथ्य;ति चेदनुदात्ते च--बग्रहणमिति । अथ वाऽङ्गवृत्ते पुनर्वृत्ताबविधिर्निष्ठितस्येत्येवं न भविष्यति ।। ( पाघ्राध्मास्थाम्ना ) ।।
-7-3-79- ज्ञाजनोर्जा
दीर्घोच्चारणं किमर्थं, न ज्ञाजनोर्ज ाःथ्य;त्येवोच्येत ? ।। का रूपसिद्धिः--जा नाति जायते ? ।। अतो दीर्घो यञ्त्रीति दीर्घत्वं भविष्यति ।। एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा(3)-- अङ्गवृत्ते पुनर्वृत्तावविधिरिति(4) ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। पिबतेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ।। ( ज्ञाजनोर्जा ) ।।
-7-3-83- जुसि च
जुसि गुणे यासुट्प्रतिषेधः जुसि गुणे यासुडादौ प्रतिषेधो वक्तव्यः । चिनुयुः सुनुयुरिति ।। (स तर्हि प्रतिषेधो वक्तव्यः ? ) । न वक्तव्यः । नैवं विज्ञायते--मिदेर्गुणः जुसि चेति ।। कथं तर्हि ? ।। मिदेर्गुणोऽजुसि चेति ।। किमिदम्-- अजुसीति ? ।। अजादावुस्यजुसीति ।। ाःथ्य;हाऽपि तर्हि प्राप्नोति--चक्रुः जहुरिति ? ।। एवं तर्हि शितीति वर्तते ।। एवमप्यजुहवुः अबिभयुरित्यत्र न प्राप्नोति ।। ननु च(1) भूतपूर्वगत्या भविष्यति ।। न सिध्यति, न ह्युस् शिद्भूतपूर्वः ।। उस् शिद्भूतपूर्वो नास्तीति कृत्वा उसि यश्शिद्भूतपूर्वस्तस्मिन् भविष्यति ।। अथ वा क्रियते न्यास एव-- अविभक्तिको निर्देशः । नैवं विज्ञायते--मिदेर्गुणो जुसि चेति ।। कथं तर्हि ? ।। मिदेर्गुण उ जुसि(1) चेति ।। किमिदमु जुसीति ? ।। उकारादौ जुसि (उ जुसिति) । अथ वाऽचीति वर्तते तेन जुसं विशेषयिष्यामोऽजादौ जुसिति ।। (जुसि च) ।।
-7-3-85- जाग्रोऽविचिण्णल्ङित्सु
ाःथ्य;ह जागरयति जागरक ाःथ्य;ति गुणे कृते रपरत्वे चाऽत उपधाया ाःथ्य;ति वृद्धिः प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः चिण्णलोः प्रतिषेधसामर्थ्यादन्यत्र गुणभूतस्य वृद्धिप्रतिषेधः यदयमचिण्णलोरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो न गुणाभिनिर्वृत्तस्य वृद्धिर्भवतीति ।। किं पुनरयं पर्युदासो--यदन्यद्विचिण्णल्ङिभ्य ाःथ्य;ति, आहोस्वित्प्रसज्याऽयं प्रतिषेधो--विचिण्णल्ङित्सु नेति ? ।। कश्चाऽत्र विशेषः ? प्रसज्य प्रतिषेधे जुसि गुणप्रतिषेधप्रसङ्गः उत्तमे च(2) णलि प्रसज्य प्रतिषेधे जुसि गुणप्रतिषेधः प्राप्नोति -- अजागरुः । । उत्तमे च णलि । । उत्तमेचणलि प्रतिषेधः प्राप्नोति--अहं जजागर(3) न वाऽनन्तरस्य प्रतिषेधात् । न वैष दोषः ।। किं कारणम् ? ।। अनन्तरस्य प्रतिषेधात् । अनन्तरं यद्गुणविधानं(4) तस्य प्रतिषेधः ।। कुत एतत् ? ।। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । जुसि पूर्वेण गुणविधानम् जुसि पूर्वेण गुणो विधीयते जुसि चेति । णलि च (णलि(5) च ) । किम् ? ।। न वानन्तरस्य(6) प्रतिषेधादित्येव । णलि च पूर्वेण गुणो विधीयते-- सार्वधातुकार्धधातुकयोरिति ।।
अथ वा पुनरस्तु पर्युदासः अतोऽन्यत्र विधाने वावगुणत्वम् अतोऽन्यत्र विधाने वावगुणत्वं वक्तव्यम् । जागृविः । न वा पर्युदाससामर्थ्यात् न वा वक्तव्यम् ।। किं कारणम् ? ।। (ठपर्युदाससामर्थ्यात्) । पर्युदाससामर्थ्यादत्र गुणो न भविष्यति ।। अस्त्यन्यत्पर्युदासे प्रयोजनम् ।। किम् ? ।। क्विबर्थं पर्युदासः स्यात् । शुद्धपरस्य विशब्दस्य प्रतिषेधेग्रहणम्, अनुनासिकपरश्च क्वौ विशब्दः ।। वस्वर्थन्तर्हि पर्युदासः स्यात् जागृवांसो अनुग्मन् ।। कथं पुनर्वेः पर्युदास उच्यमानो वस्वर्थः(2) शक्यो विज्ञातुम् ? ।। सामर्थ्याद्वस्वर्थमिति विज्ञास्येत । वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् वस्वर्थमिति चेत्तन्न ।। किं कारणम् ? ।। सार्वधातुकत्वात्सिद्धम् । ( सार्वधातुकत्वात्सिद्धमेतत् ) ।। कथं सार्वधातुकसंज्ञा ? ।। छान्दसः क्वसुः, लिट्च छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपिन्डिदिति ङित्वात्पर्युदासो भविष्यति ।। अथ वा वकारस्यैवेदमशक्तिजेनेकारेण ग्रहणम् ।। ( जाग्रोऽविचिण्णल्ङित्सु ) ।।
-7-3-86- पुगन्तलघूपधस्य च
संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति संयोगे गुरुसंज्ञायां भेत्ता भेत्तुमिति गुणो न प्राप्नोति । विध्यपेक्षं(1) लघोश्चासौ विध्यपेक्षं लघुग्रहणं कृतं, लघोश्चाऽसौ विहितः ।
कथं कुण्डिर्न दुष्यति ? कुण्डिता हुण्डिता,--अत्र कस्मान्न भवति ? धातोर्नुम्विधावुक्तं, तत्र धातुग्रहणस्य प्रयोजनं धातूपदेशावस्थायामेव नुम्भवतीति । कथं रञ्जेः(2) कथं रञ्जेरुपधालक्षणा वृद्धिः(3) ? --आश्चार्यो रागः विचित्रो रागः स्यन्दिश्रन्थ्योर्निपातनात् यदयं स्यन्दिश्रन्थ्योरवृध्यर्थं निपातनं करोति तज्ज्ञापयत्या चार्यो--भवत्येवञ्जातीयकानां वृद्धिरिति ।।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः अनङ्लोपः(4)--दन्धा सक्थ्ना । शिदीर्घत्वं(4)-- कुण्डानि वनानि ।। एवं तर्हि--- अभ्यस्तस्य(1) यदाऽहाचि यदयं नाऽभ्यस्तस्याचि पिति सार्वधातुक ाःथ्य;त्यज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो--भवत्येवंजातीयकानां गुण ाःथ्य;ति लङर्थं तत्कृतं भवेत् लङर्थमेतत्स्यात्--अनेनेक् क्नुसनोर्यत्कृतं कित्वं ज्ञापकं
स्याल्लघोर्गुणे
यदयं त्रसिगृधिधृषिक्षिपेः क्नुः ाःथ्य;को झल् हलन्ताच्चेति क्नुसनौ कितौ करोति तज्ज्ञापयत्याचार्यो--भवत्येवंजातीयकानां गुण ाःथ्य;ति ।।
संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ।। 1 ।।
धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ।। 2 ।।
अभ्यस्तस्य यदाऽहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्वं ज्ञापकं स्याल्लघोर्गुणे ।।3।।
-7-3-87- नाभ्यस्तस्याचि पिति सार्वधातुके

अभ्यस्तानामुपदाह्रस्वत्वमचि पस्पशाते चाकशीमि वावशतीरिति दर्शनात् अभ्यस्तानामुपधा(या) ह्रस्वत्वमचि वक्तव्यम् ।। किं प्रयोजनम् ? ।। पस्पशाते चाकशीमि वावशतीरिति दर्शनात्(1) । पस्पशाते चाकशीमि वावशतीरिति प्रयोगो दृश्यते । कपोतः शरदं पस्पशाते । अहं भुवनं चाकशीमि । वावशतीरुदाजदिति बहुलं छन्दस्यानुषग्जुजोषदिति दर्शनात् बहुलं छन्दसीति वक्तव्यमुपधाह्रस्वत्वलम् ।। किं प्रयोजनम् ? ।। आनुषग्जुजोषदिति दर्शनात् । यस्त आतिथ्यमानुषग्जुजोषत् ।। यद्युपधाह्रस्वत्वमुच्यते प्रियां मयूरः प्रिति नर्नृतिती । यद्वत्त्वं नरवर ! नर्नृतीषि हृष्टः(2)--- अत्र गुणः प्राप्नोति । तस्मान्नाऽर्थ उपधाह्रस्वत्वेन ।।

कस्मान्न भवति--पस्पशाते चाकशीति वावशतीरिति ? ।। स्पशिकशिवशयः(3) प्रकृत्यन्तराणि ।। ( नाभ्यस्तस्याचि पिति सार्वधातुके ) ।।

-7-3-88- भूसुवोस्तिङि

भूसुवोः प्रतिषेधे तिङि(1) एकाज्ग्रहणं बोभवीत्यर्थम्(4) भूसुवोः प्रतिषेधे एकाज्ग्रहणं कर्तव्यम् ।। किं प्रयोजनम् ? ।। बोभवतीत्यर्थम्(1) । ःथ्य;ह मा भूत् बोभवतीति ।। यद्येकाज्ग्रहणं क्रियते--अभूत्--अत्र न प्राप्नोति ।। क्व तर्हि स्यात् ? ।। मा भूत् ।। तस्मान्नाऽर्थ एकाज्ग्रहणेन ।। कस्मान्न भवति बोभवतीति ? ।। बोभूत्वित्येतन्नियमार्थम् बोभूत्वित्येतन्नियमार्थं भविष्यति अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति ।। क्व मा भूत्--बोभवतीति । ( भूसुवोस्तिङि ) ।।

-7-3-92- तृणह ःथ्य;म्

किमर्थं तृहिरागतश्नम्को गृह्यते न तृहेरिम्भवतीत्येवोच्येत ? ।। तृणहिग्रहणं श्नमिमोर्व्यवस्थार्थम् तृणहिग्रहणं (क्रियते(4) ।। किं प्रयोजनम् ? ।। श्नमिमोर्व्यवस्थार्थम् । ) श्नमि कृते ःथ्य;म्यथा स्यात् तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वात् तृहिग्रहणे हि सतीम्विषये श्नमोऽभावः स्यात् ।। किं कारणम् ? ।। अनवकाशत्वात् । अनवकाश ःथ्य;म् श्नमं बाधेत ।। ःथ्य;दमयुक्तं वर्तते ।। किमत्राऽयुक्तम् ? ।। तृणहिग्रहणं श्नमिमोर्व्यवस्थार्थमित्युक्त्वा, तत उच्यते--तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वादिति । तत्र वक्तव्यं- तृणहिग्रहणं श्नमिमोर्भावाय, तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वादिति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । व्यवस्थार्थमित्येव सिद्धं, न ह्यसतो व्यवस्थाऽस्ति(1) ।। ( तृणह ःथ्य;म् ) ।।

-7-3-95- तुरुस्तुशम्यमः सार्वधातुके

सार्वधातुक ःथ्य;ति वर्तमाने पुनः सार्वधातुकग्रहणं किमर्थम् ? ।। ( सार्वधातुक(2) ःथ्य;ति वर्तमाने ) पुनः सार्वधातुकग्रहणमपिदर्थम् अपिदर्थोऽयमारम्भः । अधिगो शमीध्वंसुशमिशमीध्वं शमीध्वमध्रिगो ।।

-7-3-103- बहुवचने झल्येत्

अतो दीर्घाद्बहुवचन एत्वं विप्रतिषेधेन अतो दीर्घाद्बहुचन एत्वं भवति विप्रतिषेधेन । अतो दीर्घो यञ्जि सुपि चेत्यस्यावकाशः--वृक्षाभ्यां प्लक्षाभ्याम् । बहुवचने झल्येदित्यस्यावकाशो--वृक्षेषु ल्पक्षेषु

। ःथ्य;होभयं प्राप्नोति--वृक्षेभ्यः ल्पक्षेभ्यः । एत्वं भवति विप्रतिषेधेन ।। ( बहुवचने ) ।

-7-3-107- अम्बार्थनद्योर्ह्रस्वः

( डलकवतीनां प्रतिषेधः ) ।। डलकवतीनां प्रतिषेधो वक्तव्यः । अम्बाडे ! अम्बाले ! अम्बिके ! तल्(1) ह्रस्वत्वं वा डिसंबुध्योः तल्ह्रस्वत्वं(2) वा डिसंबुध्योरिति वक्तव्यम् । देवत देवते । देवतायां देवते ।।

स तर्हि प्रतिषेधो वक्तव्यः ?।। न वक्तव्यः ।। स कथं न वक्तव्यो भवति ? अम्बार्थं व्यक्षरं यदि यद्यम्बार्थं व्यक्षरं गृह्यते ।।

तत्तर्हि ह्रस्वत्वं वक्तव्यम् ? ।। ( अवश्यं छन्दसि ह्रस्वत्वमुपगायन्त मां पत्नयो गर्भिणयो युवतय ःथ्य;त्येवमर्थम् ) । अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्--उपगायन्तुं मां पत्नयो गर्भिणयो युवतय ःथ्य;त्येवमर्थम् ।। मातृणां मातच्पुत्रार्थमर्हते मातृणां मातजादेशो वक्तव्यः ।। (किं प्रयोजनम् ? ।।) । पुत्रार्थमर्हते । गार्गीमात वात्सीमात ।। ( अम्बार्थनद्योर्ह्रस्वः ) ।।

-7-3-108- ह्रस्वस्य गुणः

ःथ्य;ह कस्मान्न भवति--नदि कुमारि किशोरि ब्राह्मणि ब्राह्मबन्धु ? ।। ह्रस्ववचनसार्मथ्यात्(1) ।

अस्त्यन्यद्ह्रस्ववचने प्रयोजनम् ? ।। किं(2) ? ।। पृथग्विभक्तिं मोच्चीचरमिति ।। शक्या(3) पृथग्विभक्तिरनुच्चारयितुम् ।। कथम्(2) ? ।। एवमयं ब्रूयात् आम्बार्थानां ह्रस्वः नदीह्रस्वयोर्गुण ःथ्य;ति ।। यद्येवमुच्यते जसि चेत्यत्र नद्या अपि गुणः प्राप्नोति ।। एवं तर्हि योगविभागः करिष्यते--अम्बार्थनद्योर्ह्रस्वः । ततो ह्रस्वस्य । ह्रस्वस्य च ह्रस्वो भवति ।। किमर्थमिदं ? ।। गुणं वक्ष्यति तद्बाधनार्थम् ।। ततो गुणः । गुणश्च भवति ह्रस्वस्येति ।। अथ वा ह्रस्वस्य गुण ःथ्य;त्यत्राऽम्बार्थनद्योर्ह्रस्व ःथ्य;त्येतदनुवर्तिष्यते ।। ( ह्रस्वस्य गुणः ) ।

-7-3-109- जसि च

जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधायाः जसादिषु छन्दसि वेति वक्तव्यम् ।। किमविशेषेण ? ।। नेत्याह । प्राङ्णौ चङ्युपधायाः।। किं प्रयोजनम् ? ।। अम्बे दर्वि शतक्रत्वः पश्वे नृभ्यः(1) किकिदीव्या अम्बे--अम्ब । दर्वे(2)--दर्वि । शतक्रत्वः--शतक्रतवः । पश्वे नृभ्यः(1),पशवे नृभ्यः(1) । किकिदीव्या--किकिदीविना ।। ( जसि च ) ।।

-7-3-111- घेर्ङिति

घेर्ङितिगुणविधाने ङीसार्वधातुके प्रतिषेधः घेर्ङितिगुणविधाने ङीसार्वधातुके प्रतिषेधो वक्तव्यः । पट्वी मृद्वी कुरुत ःथ्य;ति सुबधिकारात्सिद्धम् (सुबधिकारात्सिद्धम्) । सुबिति वर्तते ।। क्व प्रकृतम् ? ।। सुपि च बहुवचने झल्येदिति ।। (घेर्ङिति) ।।

-7-3-113- याडापः

ःथ्य;हातिखट्वाय अतिमालायेति ह्रस्वत्वे कृते स्थानिवद्भवाद्याट्प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । न वक्तव्यः याड्विधानेऽतिखट्वायेत्यप्रतिषेधो ह्रस्वादेशत्वात् याड्विधानेऽतिखट्वायातिमालायेत्यप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ।। याट्कस्मान्न भवति(1) ? ।। ह्रस्वादेशत्वात् । ह्रस्वादेशोऽयम् । उक्तमेतत् ङ्याब्ग्रहणेऽदीर्घ ःथ्य;ति ।। अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे

कृते आबसौ(1) भूतपूर्व ःथ्य;ति कृत्वा याट्कस्मान्न भवति ? ।। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।। ननु चेदानीं सत्यपि स्थानिवद्भाव एतया परिभाषया शक्यमुपस्थातुम् ? ।। नेत्याह । न हीदानीं(2) क्वचिदपि स्थानिवद्भावः स्यात् ।। ( याडापः ) ।।

-7-3-116- ङेराम्नद्याम्नीभ्यः

ःथ्य;दुभ्यामाम्विधानमौत्वस्य परत्वात् ःथ्य;दुभ्यामाम्विधेयः, --शकट्यां पद्धत्यां धेन्वामिति ।। किं पुनः कारणं न सिध्यति ? ।। औत्वस्य परत्वात् । परत्वादौत्वं प्राप्नोति योगविभागात्सिद्धम् (योगविभागात्सिद्धमेतत्) । योगविभागः करिष्यते ङेराम्नद्याम्नीभ्यः । तत ःथ्य;दुद्भ्याम् ।

ःथ्य;दुद्भ्यामुत्तरस्य ङेराम्भवतीति । शकट्यां पद्धत्यां धेन्वामिति । तत

औदच्च घेः ।

-7-3-118- औत्

औत्वे योगविभागः औत्वे योगविभागः कर्तव्यः । औत् । औद्भवतीदुभ्याम् । ततः अच्च घेरिति । अकारश्च भवति घेरिति ।। किमर्थो योगविभागः ? सखिपतिभ्यामौत्त्वार्थः(2) सखिपतिभ्यामौत्त्वं यथा स्यात् । सख्यौ पत्यौ एकयोगे ह्यप्राप्तिरत्त्वसन्नियोगात् एकयोगे हि सत्यौत्त्वस्याऽप्राप्तिः ।। किं कारणम्?।। अत्त्वसन्नियोगात् । अत्त्वसन्नियोगेनौत्त्वमुच्यते तेन यत्रैवात्वं तत्रैवौत्त्वं स्यात् नवाऽकारस्याऽन्वाचयवचनाद्यथा क्यङि सलोपः न वाऽर्थ औत्त्वे योगविभागेन ।। किं कारणम् ? ।। अकारस्यान्वाचयवनचनात्(3) । प्रधानशिष्टमौत्त्वमन्वाचयशिष्टमत्त्वम् । यथा क्यङि सलोपः । तद्यथा प्रधानशिष्टः क्यङ् प्रातिपदिकमात्राद्भवति । यत्र च सकारस्तत्र लोपः ।।

अत्त्वे टाप्प्रतिषेधः अत्त्वे टापः प्रतिषेधो वक्तव्यः शकटौ पद्धतौ धेनौ । अत्वे कृते (ठऽत ःथ्य;ति(4)) टाप् प्राप्नोति न वा सन्निपातलक्षणस्याऽनिमित्तत्वात् न वा वक्तव्यः । किं कारणम् ? ।। सन्निपातलक्षणस्याऽनिमित्तत्वात् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्येवं न(5) भविष्यति डित्करणाद्वा(6) अथ वा डिदौकारः करिष्यते--औ डिच्च घेः ।

-7-3-119- अच्च घेः

औत्वे योगविभागः औत्वे योगविभागः कर्तव्यः । औत् । औद्भवतीदुभ्याम् । ततः अच्च घेरिति । अकारश्च भवति घेरिति ।। किमर्थो योगविभागः ? सखिपतिभ्यामौत्त्वार्थः(2) सखिपतिभ्यामौत्त्वं यथा स्यात् । सख्यौ पत्यौ एकयोगे ह्यप्राप्तिरत्त्वसन्नियोगात् एकयोगे हि सत्यौत्त्वस्याऽप्राप्तिः ।। किं कारणम्?।। अत्त्वसन्नियोगात् । अत्त्वसन्नियोगेनौत्त्वमुच्यते तेन यत्रैवात्वं तत्रैवौत्त्वं स्यात् नवाऽकारस्याऽन्वाचयवचनाद्यथा क्यङि सलोपः न वाऽर्थ औत्त्वे योगविभागेन ।। किं कारणम् ? ।। अकारस्यान्वाचयवनचनात्(3) । प्रधानशिष्टमौत्त्वमन्वाचयशिष्टमत्त्वम् । यथा क्यङि सलोपः । तद्यथा प्रधानशिष्टः क्यङ् प्रातिपदिकमात्राद्भवति । यत्र च सकारस्तत्र लोपः ।।

अत्त्वे टाप्प्रतिषेधः अत्त्वे टापः प्रतिषेधो वक्तव्यः शकटौ पद्धतौ धेनौ । अत्वे कृते (ठऽत ःथ्य;ति(4)) टाप् प्राप्नोति न वा सन्निपातलक्षणस्याऽनिमित्तत्वात् न वा वक्तव्यः । किं कारणम् ? ।। सन्निपातलक्षणस्याऽनिमित्तत्वात् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्येवं न(5) भविष्यति डित्करणाद्वा(6) अथ वा डिदौकारः करिष्यते--औ डिच्च घेः ।

-7-3-120- आङो नाऽस्त्रियाम्

किमर्थमस्त्रियामित्युच्यते नाऽऽङो ना पुंसीत्येवोच्येत ? ।। का रूपसिद्धिः--त्रपुणा जतुना ? ।। नुमा सिद्धम् ।। नैवं शक्यम् ःथ्य;ह ह्यमुना ब्राह्मणकुलेनेति मुभावस्याऽसिद्धत्वान्नुम्न स्यात् । अस्त्रियामिति पुनरुच्यमाने न दोषो भवति ।। कथम्(1) ? ।। वक्ष्यत्येतन्नमुटादेशःथ्य;ति ःथ्य;ति श्रीमद्भगवत्पतञ्ञ्जलिविरचिते सप्तमस्य तृतीये द्वितीयमाह्निकम् ।। पादः समाप्तः

-9-9-999-

# महाभाष्यम्/सप्तमोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/nn3

< महाभाष्यम् | सप्तमोऽध्यायः

-7-4-1- णौ चङ्युपधाया ह्रस्वः

अथ णिग्रहणं किमर्थं न चङ्युपधायाः ह्रस्व इत्येवोच्येत ? ।। चङ्युपधाया ह्रस्व इतीयत्युच्यमाने--अलीलवत् अपीपवत्--ऊकारस्यैव ह्रस्वत्वं प्रसज्येत ।। नैतदस्ति प्रयोजनम्(1), वृद्धिरत्र बाधिका भविष्यति ।।

वृद्धौ तर्हि कृतायामौकारस्यैव ह्रस्वत्वं प्रसज्येत ।। नैतदस्ति--अन्तरङ्गत्वादत्राऽऽवादेशो भविष्यति । न हीदानीं ह्रस्वभाविन्युपधा भवति । तस्माण्णिग्रहणं कर्तव्यम् ।।

अथ चङ्ग्रहणं किमर्थं न णावुपधाया इत्येव सिद्धम् ।। णावुपधाया ह्रस्व इतीयत्युच्यमाने कारयति हारयत्यत्रापि प्रसज्येत ।। नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न णावेव ह्रस्वत्वं भवतीति यदयं मितां ह्रस्वत्वं शास्ति ।। इहापि तर्हि न प्राप्नोति--अचीकरत् अजीहरत् ।। वचनाद्भविष्यति ।। इहापि तर्हि वचनात्प्राप्नोति--कारयति हारयति । तस्माच्चङ्ग्रहणं कर्तव्यम् ।।

अथोपधाग्रहणं किमर्थम् ? ।। णौ चङ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ।। णौ चङ्युपधाग्रहणं क्रियते ।। किं प्रयोजनम् ? ।।

अन्त्यप्रतिषेधार्थम् । अन्त्यस्य ह्रस्वत्वं मा भूत्(1) ।

णौ चङि ह्रस्वःथ्य;तीयत्युच्यमाने अलीलवत् अपीपवत्--अन्त्यस्यैव ह्रस्वत्वं प्रसज्येत ।। नैतदस्ति प्रयोजनम्-अन्तरङ्गत्वादत्राऽवादेशो भविष्यति । न तर्हीदानीं(1) ह्रस्वभाव्यन्त्योस्ति, अन्त्यो ह्रस्वभावी नास्तीति कृत्वा वचनादनन्त्यस्य(2) भविष्यति ।। इहापि तर्हि वचनात्प्राप्नोति--अचकाङ्क्षत्, अववाञ्छत्(4) ।। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ।। केन च नाव्यवधानम् ? ।। वर्णेन(5) । एतेन पुनः(6) सङ्घातेन व्यवधानं भवति (च(6)) न भवति च । (।। उत्तरार्थन्तु(6) ।। ) उत्तरार्थं तर्ह्युपधाग्रहणं कर्तव्यम् । लोपः पिबतेरीच्चाऽभ्यासस्य उपधाया यथा स्यात् । अपीप्यत्, अपीप्यताम्, अपीप्यन् ।। अथेह कथं भवितव्यम्--मा भवानटिटदिति, आहो स्विन्माभवानाटिटदिति ।। मा भवानाटिटदिति(एवं(2)) भवितव्यम् ।। ह्रस्वत्वं कस्मान्न भवति ? ।। द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृत्वा ।। इहमिह संप्रधार्यं,--द्विर्वचनं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् ? ।। परत्वाद्ध्रस्वत्वम् ।। नित्यं द्विर्वचनम्(1) । कृतेऽपि(2) ह्रस्वत्वे प्राप्नोत्यकृतेऽपि ।। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति--द्विर्वचनाद्ध्रस्वत्वं बलीय इति यदयमोणिमृदितं करोति ।। कथं कृत्वा ज्ञापकम् ? ।। ऋदित्करण एतत्प्रयोजनम्--ऋदितां नेति प्रतिषेधो यथा स्यात् । यदि चाऽत्र पूर्वं द्विर्वचनं स्याद्दित्करणमनर्थकं स्यात्, द्विर्वचने कृते परेण रूपेण(2) व्यवहितत्वाद्ध्रस्वत्वं न भविष्यति । पश्यति त्वाचार्यो-- द्विर्वचनाद्ध्रस्वत्वं बलीय इति तत ओणिमृदितं करोति । तस्मान्माभवानटिटदित्येव(4) भवितव्यम् ।।

।। उपधाह्रस्वत्वे णेर्णिच्युपसङ्ख्यानम् (णिचा व्यवहितत्वात्(3)) ।। उपधाह्रस्वत्वे(5) णेर्णिच्युपसङ्ख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ।। किं पुनः कारणं न सिध्यति ? ।। णिचा व्यवहितत्वात् ।। णिलोपे कृते नास्ति व्यवधानम् ।। स्थानिवद्भावाव्व्यवधानमेव ।। प्रतिषिध्यतेऽत्र स्थानिवद्भावः चङ्परनिर्ह्रासे न स्थानिवदिति ।। एवमप्यग्लोपिनां नेति प्रतिषेधः प्राप्नोति ।। वृद्धौ कृतायां लोपस्तन्नाऽग्लोप्यङ्गं भवति ।। इदमिह संप्रधार्यं--वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ? ।। परत्वाद्वृद्धिः ।। नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि ।। अनित्यो लोपः, --अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायां । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वाद्वृद्धिः, वृद्धौ कृतायां लोपः, तन्नाऽग्लोप्यङ्गं भवति ।। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति--वृद्धेर्लोपो बलीयानिति,--यदयमग्लोपिनां नेति निषेधं शास्ति ।। नैतदस्ति ज्ञापकम्(1) । अस्त्यन्यदेतस्य(2) वचने प्रयोजनम् ।। किम् ? ।। यत्र वृद्धावपि कृतायामगेव लुप्यते--अत्यरराजत् ।। यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा ह्यलोपिनां नेति ब्रूयात् । एवं वा(3) वृद्धेर्लोपो बलीयानिति ।। अथ वाऽऽरभ्यते पूर्वविप्रतिषेधो ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्य पूर्वविप्रतिषिद्धमिति । तस्मादुपसङ्ख्यानं कर्तव्यमिति ।।

-7-4-2- नाग्लोपिशास्वृदिताम्

।। अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात् ।। अग्लोपिप्रतिषेधश्चाऽनर्थकः ।। किं कारणम् ? ।।

स्थानिवद्भावात् । स्थानिवद्भावादत्र ह्रस्वत्वं न भविष्यति । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः ।। क्व च(1) स्थानिवद्भावो नास्ति ? ।। यो हलचोरादेशः--अत्यरराजत् ।। किं पुनः कारणं हलचोरादेशो न स्थानिवदिति ? ।। उच्यते । अजादेशः स्थानिवदित्युच्यते, न चाऽयमच एवादेशः ।। किं तर्हि ? ।। अचश्चाऽन्यस्य च ।। अग्लोपिनां ने-त्यपि तर्हि प्रतिषेधो न प्राप्नोति ।। किं कारणम् ? ।। अग्लोपिनां नेत्युच्यते न चाऽत्राऽगेव लुप्यते ।। किं तर्हि ? ।। अक्चाऽन्यश्च ।। योऽत्राऽग्लुप्यते, तदाश्रयः प्रतिषेधो भविष्यति ।। यथैव(2) तर्हि योऽत्राऽग्लुप्यते तदाश्रयः प्रतिषेधो भवत्येवं योऽत्राऽज्लुप्यते तदाश्रयः स्थानिवद्भावो भविष्यति ।। एवं तर्हि सिद्धे सति यदग्लोपिना नेति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः-- इत उत्तरं स्थानिवद्भावो न भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। पूर्वत्रासिद्धे न स्थानिवदित्युक्तन्तन्न वक्तव्यं भवति ।। यद्येतज्ज्ञाप्यते आदीधयतेः--आदीधकः । आवेवयतेः आवेवकः -- यीवर्णयोर्दीधीवेव्योरिति लोपो न प्राप्नोति । इह च यत्प्रलुनीह्यत्रेति(1) तिङि चोदात्तवतीत्येष स्वरो न प्राप्नोति ।। नैषः दोषः । यत्तावदुच्यते--आदीधयतेः आदीधकः । आवेवयतेः--आवेवकः । यीवर्णयोरिति लोपो न प्राप्नोतीति ।। यीवर्णयोरित्यत्रवर्णग्रहणसार्मथ्याद्भविष्यति । यदप्युच्यते--यत्प्रलुनीह्यत्र(2) तिङि चोदात्तवतीत्येष स्वरो न प्राप्नोतीति ।। बहिरङ्गो यणादेशोऽन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे । ( नाग्लोपिशास्वृदिताम् । )

-7-4-3- भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्

।। काण्यादीनां(1) वा ।। काण्यादीनां(2) वेति वक्तव्यम् ।। के पुनः काण्यादयः ? ।। काणिराणिश्राणिभाणिहेठिलोपयः । अचकाणत् अचीकणत् । अरराणत् अरीरणत् । अशश्राणत् । अशिश्रणत् । अबभाणत् अबीभणत् । अजिहेठत् अजीहिठत् । अलुलोपत् अलूलुपत् ।। ( भ्राजभासभाष ) ।।

-7-4-9- दयतेर्दिगि लिटि
इह(4) अवदिग्ये अवदिग्याते अवदिग्यिरे । दिग्यादेशे कृते द्विर्वचनं प्राप्नोति ।
(।। तत्र(1) साभ्यासस्य) ।। तत्र साभ्यासस्येति वक्तव्यम् । ननु च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यति ।। न सिध्यति ।। किं कारणम् ? ।। दिग्यादेशस्य परत्वात्साभ्यासस्यादेशवचनम् ।। दिग्यादेशः क्रियतां द्विर्वचनमिति । परत्वादिग्यादेशेन भवितव्यं, तत्र साभ्यासस्येति वक्तव्यम् ।। एवं तर्हि दिग्यादेशो द्विर्वचनं बाधिष्यते ।। पुनः प्रसङ्गविज्ञानाद्द्विर्वचनं प्राप्नोति ।। पुनः प्रसङ्गविज्ञानादिति( 2) चेदमादिभिस्तुल्यम् ।। पुनः प्रसङ्गविज्ञानादिति(2) चेदमादिभिस्तुल्यमेतद्भवति । तद्यथा अमादिषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुमो न भवन्त्येवं दिग्यादेशे कृते पुनः प्रसङ्गाद्द्विर्वचनं न भविष्यति ।। अथ वा विप्रतिषेधे(3) पुनः प्रसङ्ग इत्युच्यते । विप्रतिषेधश्च द्वयोः सावकाशयोः । इह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते ।। यदि तर्ह्यनवकाशा विधयो बाधका भवन्ति--बभूव,--भूभावो(1) द्विर्वचनं बाधेत ।। सावकाशो भूभावः(1) ।। कोऽवकाशः ? ।। भविता भवितुम् ।। इह तर्हि चक्षिङः ख्याञ्ञ् वा लिटीति ख्याञ्ञ्द्विर्वचनं बाधेत ।। इह चापि बभूवेति, यदि तावत्स्थाने द्विर्वचनं, भूभावः सर्वादेशः प्राप्नोति, अथ द्विःप्रयोगो द्विर्वचनं, परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति ।। नैष दोषः, आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु(2) । तत्रार्धधातुकसामान्ये भूभावे कृते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ।।
-7-4-10- ऋतश्च संयोगादेर्गुणः
।। संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञ्ञर्थम् ।। संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यम् ।। किमर्थम् ? ।। कृञ्ञर्थम् । इहापि यथा स्यात्--संचस्करतुः संचस्करुः ।। यदि संयोगोपधग्रहणं क्रियते नाऽर्थः संयोगादिग्रहणेन, इहापि सस्वरुतुः सस्वरुः -- संयोगोपधस्येत्येव सिद्धम् ।। भवेत्सिद्धं सस्वरतुः सस्वरुरिति, इदं तु न सिध्यति--संचस्करतुः संचस्करुरिति।। किं कारणम्?।। सुटो (1) बहिरङ्गलक्षणत्वात् । बहिरङ्गः सुडन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे । संयोगादिग्रहणे तु क्रियमाणे संयोगोपधग्रहणमनन्यार्थं विज्ञायते ।। ऋतो लिटि गुणाञ्ञ्ञ्णतिवृद्धिर्विप्रतिषेधेन(1) ।। ऋतो लिटि गुणाञ्ञ्ञ्ण(ती(2))ति वृद्धिर्भवति पूर्वविप्रतिषेधेन । ऋतो लिटि गुणस्याऽवकाशः--सस्वरतुः सस्वरुः । ञ्ञ्णति
वृद्धरवकाशः--स्वारकः ध्वारकः(2) । इहोभयं प्राप्नोति--सस्वार दध्वार । ञ्ञ्णति वृद्धिर्भवति पूर्वविप्रतिषेधेन ।।
पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् ।। अथ वा पुनः प्रसङ्गाद्गुणे कृते रपरत्वे चाऽत उपधाया इति वृद्धिर्भविष्यति।। नैष युक्तः परिहारः । पुनः प्रसङ्गो नाम स(2) भवति यत्र तेनैव कृते प्राप्नोति तेनैव चाऽकृते । अत्र खलु गुणे कृते रपरत्वे चाऽत उपधाया इति वृद्धिः प्राप्नोति, अकृते चाऽचोञ्ञ्णतीति । तस्मात्सुष्ठूच्यते ऋतो लिटि गुणाञ्ञ्ञ्णति वृद्धिः(3) पूर्वविप्रतिषेधेनेति(4) ।।
<M.6.245>
-7-4-12- शृदृप्रां ह्रस्वो वा
किमर्थं ह्रस्वो वेत्युच्यते, न गुणो वेत्युच्येत, तत्रायमप्यर्थो गुणग्रहणं न कर्तव्यं भवति प्रकृतमनुवर्तते ।। क्व प्रकृतम् ? ।। ऋतश्च संयोगादेर्गुणः इति ।। ऋतां ह्रस्वत्वमित्वप्रतिषेधार्थम् ।। ऋतो ह्रस्वत्वमुच्यते । (किं प्रयोजनम् ?) ।। इत्त्वप्रतिषेधार्थम् । इत्त्वं मा भूदिति । गुणो वेतीयत्युच्यमाने गुणेन मुक्ते इत्त्वं प्रसज्येत । ह्रस्वो वेति पुनरुच्यमाने(3) ह्रस्वेन मुक्ते यथाप्राप्तो गुणो भविष्यति ।। ( शृदृपरां ह्रस्वो वा ) ।।
-7-4-13- केऽणः
।। केऽणो ह्रस्वत्वे तद्धितग्रहणं कृन्निवृत्त्यर्थम्।। केऽणो ह्रस्वत्वे तद्धितग्रहणं कर्तव्यम्।। किं प्रयोजनम्?।। कृन्निवृत्त्यर्थम्। कृति मा भूत् राका धाकेति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्।। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।। (केऽणः)।।
-7-4-23- उपसर्गाद्ह्रस्व ऊहतेः
इह कस्मान्न भवति उपोह्यते प्रोह्यते ? ।। एकादेशे कृते व्यपवर्गाऽभावात् ।। एवमपि आ ऊह्यते ओह्यते समोह्यते इत्यत्र प्राप्नोति ।। अण(1) इति वर्तते ।।
-7-4-24- एतेर्लिङि
।। एतेर्लिङ्युपसर्गात् ।। एतेर्लिङ्युपसर्गादिति वक्तव्यम् । इह मा भूत् इर्यात्(2) ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । उपसर्गादिति वर्तते ।। एवं तर्ह्याचार्योऽन्वाचष्टे उपसर्गादित्यनुवर्तत इति । नैतदन्वाख्येयमधिकारा अनुवर्तन्त इति । एष एव न्यायो यदुताऽधिकारा अनुवर्तेरन् ।।
-7-4-27- रीङृतः
दीर्घोच्चारणं किमर्थं न रिङृत इत्येवोच्येत ?।। का रूपसिद्धिः - मात्रीयति , पित्रीयति ? अकृत्सार्वधातुकयोः इति दीर्घत्वं भविष्यति।। एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा अङ्गवृतेपुनर्वृताविधिर्निष्ठितस्येति।। किमेतस्य ज्ञापने प्रयोजनम् ? पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति।। (रीङृतः)।।
-7-4-30- यङि च
।। यङ्प्रकरणे हन्तेर्हिंसायामीट् ।। यङ्प्रकरणे हन्तेर्हिंसायामीड्वक्तव्यः । जेघ्नीयते । यदीट,अभ्यासरूपं न सिध्यति ।। एवं तर्हि ।। यङ्प्रकरणे हन्तोर्हिंसायामीक् ।। एवमप्युपधालोपो न प्राप्नोति ।। एवं तर्हि ।। यङ्प्रकरणे हन्तेर्हिंसायां(1) घ्नी ।। ( यङि च ) ।।
-7-4-35- न च्छन्दस्यपुत्रस्य
अत्यल्पमिदमुच्यते--अपुत्रस्येति ।। अपुत्रादीनामिति(2) वक्तव्यम् ।। इहापि यथा स्यात् जनीयन्तो न्वग्रवः । पुत्रीयन्तः सुदानवः ।। छन्दसि प्रतिषेधे दीर्घप्रतिषेधः ।। छन्दसि प्रतिषेधे दीर्घत्वस्य प्रतिषेधो वक्तव्यः । संस्वेदयुः मित्रयुः ।। न वाऽश्वाघस्याद्वचमनधारणार्थम् ।। न वा वक्तव्यम् ।। किं कारणम् ? ।। (अश्वाघस्याद्वचनमवधारणार्थम्(1)) ।। अश्वाघस्याद्वचनमवधारणार्थं भविष्यति-- अश्वाघयोरेव च्छन्दसि दीर्घो भवति(2) नान्यस्येति ।। ( न छन्दस्यपुत्रस्य )
-7-4-37- रीङृतः
दीर्घोच्चारणं किमर्थं न रिङृत इत्येवोच्येत ? ।। का रुपसिद्धिः--मात्रीयति पित्रीयति ? ।। अकृत्सार्वधातुकयोरिति दीर्घत्वं भविष्यति ।। एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा अङ्गवृत्ते पुनर्वत्तावविधिर्निष्ठितस्येति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।।

पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ।। ( रीङ्गतः )
-7-4-41- शाच्छोरन्यतरस्याम्
।। श्यतेरित्वं व्रते नित्यम्(3) ।। श्यतेरित्वं व्रते नित्यमिति वक्तव्यम् । संशितव्रतः ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् ।।
।। देवत्रातौ(3) गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ।।
-7-4-46- दो दद्घोः
।। अवदत्तं विदत्तं च प्रदत्तं चाऽऽदिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ।।
किं पुनरयं तकारान्त आहो स्विद्दकारान्त उत धकारान्तोऽथ वा थकारान्तः ? ।। कश्चात्र विशेषः ? ।। तान्ते दोषो दीर्घत्वं स्यात्(2) ।। यदि तकारान्तो दस्तीति दीर्घत्वं प्राप्नोति ।। दान्ते दोषो निष्ठानत्वम्(2) ।। अथ दकारान्तो रदाभ्यां निष्ठा तो न इति नत्वं प्राप्नोति । ।। धान्ते(2) दोषो धत्वप्राप्तिः ।। अथ धान्तो झषस्तथोर्धोऽधः’थ्य;ति धत्वं प्राप्नोति ।। थान्तेऽदोषस्तस्मात्थान्तः ।। अथ थकारान्तो न दोषो भवति ।। (दो दद्घोः ) ।
-7-4-47- अच उपसर्गात्तः
।। अच उपसर्गात्तत्वे आकारग्रहणम् ।। अच उपसर्गात्तत्वे आकारग्रहणं कर्तव्यम् ।। न कर्तव्यम् ।। अलोऽन्त्यस्य विधयो भवन्तीत्याकारस्य(1) भविष्यति ।। न सिध्यति ।। किं कारणम् ? ।। आदेर्हि परस्य ।। अत्र हि तस्मादित्युत्तरस्यादेः परस्येति दकारस्य प्राप्नोति ।। नैषः दोषः ।। अवर्णप्रकरणात्सिद्धम् ।। ( अवर्णप्रकरणात्सिद्धमेतत् ) ।। अस्येति वर्तते ।। क्व प्रकृतम् ? ।। अस्य च्वाविति ।।
यद्यवर्णग्रहणमनुवर्तते तद्भावे दोषो भवति ।। एवं तर्ह्येवं वक्ष्यामि--दोऽद्घोरिति(2) । दो य आकारस्तस्याऽद्भवति ।। ततः अच उपसर्गात्तः। अस्येत्येव।। एवमपि सूत्रभेदः कृतो भवति।। नाऽसौ(3) सूत्रभेदः । सूत्रभेदं तमुपाचरन्ति(4) यत्र तदेवाऽन्यत्सूत्रं क्रियते भूयो वा, यद्धि( 5) तदेवोपसहृत्य क्रियते नासौ सूत्रभेदः । अथ वा द्वितकारको निर्देशः क्रियते सोऽनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति ।। इहापि तर्हि प्राप्नोति--अदि्भः, अद्भ्य इति ।। अच इति वर्तते । तच्चाऽवश्यमज्ग्रहणमनुर्वत्यं--लवाभ्यामित्येवर्थम् ।। अथ वा त्रितकारको निर्देशः करिष्यतेः-इहाऽर्थौ द्वावुत्तरार्थश्चैवः ।। द्यतेरित्त्वादचस्तः ।। द्यतेरित्त्वादचस्त इत्येतद्भवति विप्रतिषेधेन । द्यतेरित्त्वस्याऽवकाशः निर्दितं निर्दितवान् । अचस्त इत्यस्याऽवकाशः--प्रत्तम् अवत्तम् । इहोभयं प्राप्नोति--नीत्तं, वीत्तम् । अचस्त इत्येतद्भवति विप्रतिषेधेन ।। (अच उप) ।।
-7-4-48- अपो भि
।। अपो भि मासश्छन्दसि(1) ।। अपो भीत्यत्र मासश्चन्दस्युपसङ्ख्यानं कर्तव्यम् । मादि्भरिष्ट्वा इन्द्रो वृत्रहा ।। अत्यल्पमिदमुच्यते ।। स्ववस्स्वतवसोर्मास उषसश्च त इष्यते ।। स्ववदि्भः., स्वतवदि्भः, समुषदि्भरजायथाः । मादि्भरिष्टावा इन्द्रो वृत्रहा ।। ( अपो भि )
-7-4-54- सनि मीमाघुरभलभशकपतपदामच इस्
।। इस्त्वं सनि राधो हिंसायाम् ।। इस्त्वं सनि राधो हिंसायामिति वक्तव्यम् । प्रतिरित्सति ।। हिंसायामिति किमर्थम् ? ।। आरिरात्सति ।।
-7-4-55- आप्ज्ञप्यृधामीत्
।। ज्ञपेरीत्वमनन्त्यस्य ।। ज्ञपेरीत्वमनन्त्यस्येति वक्तव्यम् । ज्ञीप्सति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यम् । लोपोऽन्त्यस्य बाधको भविष्यति ।। अनवकाशा हि(1) विधयो बाधका भवन्ति सावकाशश्च णिलोपः ।। कोऽवकाशः ? ।। कारणा हारणा ।। एवमपीत्वमन्त्यस्य लोपस्य बाधकं स्यात् । अनवकाशा हि विधयो बाधका भवन्ति ।। ईत्वमपि सावकाशम् ।। कोऽवकाशः ? ।। अनन्त्यः ।। कथं पुनः सत्यन्त्येऽनन्त्यस्येत्वं स्यात् ? ।। भवेद्योऽचाऽङ्गं विशेषयेत्तस्याऽनन्त्यस्य न स्याद्वयं तु खल्वङ्गेनाऽचं विशेषयिष्यामः--अङ्गस्याऽचो
यत्र तत्रास्थस्येति ।। एवमप्युभयोः सावकाशयोः परत्वादीत्वं प्राप्नोति तस्मादनन्त्यस्येति वक्तव्यम् ।। ( आप्ज्ञप्यृधामीत् ) ।
-7-4-58- अत्र लोपोऽभ्यासस्य
।। अभ्यासस्याऽनचि ।। अभ्यासस्येति यदुच्यते तदनचि द्रष्टव्यम् । पतापतः चराचरः । चलाचलः(1) वदावदः । ( अत्र लोपोऽभ्यासस्य ) ।
-7-4-60- हलादिः शेषः
किमयं षष्ठीसमासः हलामादिर्हलादिः, हलादिः शिष्यत इति । आहोस्वित्कर्मधारयः--हल्आदिर्हलादिः, हलादिः शिष्यत इति ? ।। कश्चात्र विशेषः ? ।। हलादिःशेषे षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः ।। हलादिःशेषे षष्ठीसमास इति चेदजादिषु शेषः प्राप्नोति । आनक्ष आनक्षतुः आनक्षुः । अस्तु तर्हि कर्मधारयः ।। कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तद्भावेऽन्त्यलोपवचनम्(1) ।। कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य(2) तदभावे--आद्यस्य हलोऽभावे--ऽन्त्यलोपो(1) वक्तव्यः । आटतुः आटुः । ।। तस्मादनादिलोपः(3) ।। तस्मादानादिर्हल्लुप्यत(4) इति वक्तव्यम् ।। उक्तं वा ।। (उक्तं वा) । किमुक्तम् ? ।। प्रतिविधास्यते हलादिशेष इति ।। अयमिदानीं स प्रतिविधानकालः ।। इदं प्रतिविधीयते, इदं प्रकृतम् अत्र लोपोभ्यासस्येति । ततो वक्ष्यामि ह्रस्वः । ह्रस्वो भवत्यादेशः । अभ्यासस्य लोप इत्यनुवर्तते । (अभ्यासस्य(1) च लोपो भवति) । तत्र ह्रस्वभाविनां ह्रस्वो, लोपभाविनां लोपो भविष्यति । ततो हलादिः शेषश्चेति(2) ।। अथ वैवं वक्ष्यामि--ह्रस्वोऽहल् । (ठह्रस्वः) ह्रस्वो भवत्यभ्यासस्येति । ततोऽहल । अहल् च भवत्यभ्यासः । तत आदिः(2) शेषः(7) । आदिःशेषश्च(31) भवत्यभ्यासस्येति। अथ वा योगविभागः करिष्यते । ह्रस्वः (1)। ह्रस्वादेशो भवत्यभ्यासस्य। ततो हल्। हल् च लुप्यतेऽभ्यासस्य । तत आदिः शेषः । आदिःशेषश्च(3) भवत्यभ्यासस्य ।।
-7-4-61- शर्पूर्वाः खयः
।। शर्पूर्वशेषे खर्पूर्वग्रहणम् ।। शर्पूर्वशेषे खर्पूर्वग्रहणं कर्तव्यम् । खर्पूर्वाः खयः शिष्यन्ते खरो लुप्यन्त इति वक्तव्यम् ।। किं प्रयोजनम् ? ।। उचिच्छिषति । व्युचिच्छिषति(5) । तुकः श्रवणं मा भूदिति ।। तत्तर्हि वक्तव्यम् ? ।। न वक्तव्यं, र्चत्वे कृते तुग्न भविष्यति ।। असिद्धं र्चत्वं तस्याऽसिद्धत्वात्तुक्प्राप्नोति ।। सिद्धकाण्डे पठितम्-- ।। अभ्यासजश्त्वर्चत्वमेत्वतुकोः ।। इति ।।
एवमप्यन्तरङ्गत्वात्प्राप्नोति ।। तस्मात्खपूर्वग्रहणं कर्तव्यम् ।। न कर्तव्यम् । एत्वतुग्ग्रहणं न करिष्यते अभ्यासजश्त्वर्चत्वं सिद्धमित्येव ।। आदिशेषप्रसङ्गस्तु ।। आदिशेषस्तु प्राप्नोति । तिष्ठासति ।। ननु चाऽनादिशेष आदिशेषं बाधिष्यते ।। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ? ।। असति खल्वपि सम्भवे बाधनं भवतीति, अस्ति च सम्भवो यदुभयं स्यात् (इति) ।।

यद्यादिशेषोऽपि भवति शर्पूर्वचनमिदानीं किमर्थं स्यात् ? ।। शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपप्रतिषेधार्थम् ।। शर्पूर्ववचनं किमर्थमिति चेत्खयां (लोपप्रतिषेधार्थं, खयां) लोपो मा भूदिति ।। व्यपकर्षविज्ञानात्सिद्धम् ।। व्यपकर्षविज्ञानात्सिद्धमेतत् ।। किमिदं व्यवकर्षविज्ञानादिति ? ।। अपवाद विज्ञानात् । अपवादत्वादत्राऽनादिशेष आदिशेषं बाधिष्यते ।। ननु चोक्तं--कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादिति ।। इदं तावदयं प्रष्टव्यः--यदि तन्नोच्यते किमिह स्यात् ? ।। हलादिशेषः ।। हलादिशेषश्चेन्नाऽप्राप्ते हलादिशेष इदमुच्यते तद्बाधकं भविष्यति ।। यदप्युच्यते--असति खल्वपि सम्भवे बाधनं भवत्यस्ति च सम्भवो यदुभयं स्यादिति(1) । सत्यपि सम्भवे बाधनं भवति, तद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति, सत्यपि सम्भवे दधिदानस्य तक्रदानं बाधकं भवति । एवमिहापि सत्यपि सम्भवे अनादिशेष आदिशेषं बाधिष्यते ।। (शर्पूर्वाः खयः) ।।

-7-4-65-

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्याऽऽपनीफणत्संनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरिवृजन्मर्मृज्यागनीगन्तीति च

दाधर्तीति किं निपात्यते ? ।। धारयतेः(2) श्लावभ्यासस्य दीर्घत्वं णिलुक्च ।। (धारयतेः श्लावभ्यासस्य दीर्घत्वं णिलुक्च निपात्यते ) ।। अनिपात्यं, तूतुजानवदभ्यासदीर्घत्वं पर्णशुषिवण्णिलुग्भविष्यति ।। धृङो वा

श्लावभ्यासस्य(1) दीर्घत्वं परस्मैपदं च ।। ( धृङो वा(2) श्लावभ्यासस्यदीर्घत्वं परस्मैपदञ्च

निपात्यते । ) ।। अनिपात्यं, तूतुजानवदभ्यासस्य दीर्घत्वं युध्यतिवत्परस्मैपदं(च(3)) भविष्यति ।। दर्धर्तीति किं निपात्यते ? ।। धारयतेः श्लावभ्यासस्य रुग्णिलुक्च(4) ।। (धारयतेः(3) श्लावभ्यासस्य रुक्(2) णिलुक्च निपात्यते ।) ।। अनिपात्यम् । देवा अदुद्रवद्रुट्पर्णशुषिवण्णिलुक्च भविष्यति ।। धृङो वाऽभ्यासस्य रुक्परस्मैपदञ्च ।। (धृङो वाऽभ्यासस्य रुक्परस्मैपदञ्च निपात्यते ।) । अनिपात्यम्, देवा अदुग्रवद्रुड्युध्यतिवत्परस्मैपदञ्च भविष्यति ।। दर्धर्षीति किं निपात्यते ? ।। धारयतेः श्लावम्यासस्य रुग्लिलुक्च ।। (धारयतेः श्लावभ्यासस्य(3) रुग्णिलुक्च निपात्यते) ।। अनिपात्यम्, देवा अदुद्रवद्रुट्पर्णशुषिवण्णिलुक्च भविष्यति ।। धुङो वाऽभ्यासस्यरुक् परस्मैपदं च ।। (धृङो वाऽभ्यासस्य रुक्परस्मैपदञ्च(5) निपात्यते) ।। अनिपात्यम्, देवा अद्रद्रवद्रुड्युध्यतिवत्परस्मैपदं च भविष्यति ।।

बोभूत्विति किं निपात्यते ? ।। भवतेर्यङ्लुगन्तस्याऽगुणत्वम् ।। (भवतेर्यङ्लुगन्तस्याऽगुणत्वं) निपात्यते ।। नैतदस्ति प्रयोजनं, सिद्धमत्राऽगुणत्वं भूसुवोस्तिङीति ।। एवं तर्हि नियमार्थं भविष्यति--अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति ।। क्व मा भूत् ? ।। बोभवतीति(6) ।

तेतिक्ते इति किं निपात्यते ? ।। तिजेर्यङ्लुगन्तस्यात्मनेपदम् ।। (तिजेर्यङ्लुगन्तस्यात्मनेपदं) निपात्यते ।। नैतदस्ति प्रयोजनं, सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति ।। एतन्नियमार्थं(7) तर्हि भविष्यति अत्रव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्रेति ।। क्व मा भूत् ? ।। बेभिदीति चेच्छिदिति ।।

-7-4-67- द्युतिस्वाप्योः संप्रसारणम्

किमर्थं स्वपेरभ्यासस्य संप्रसारणमुच्यते यदा सर्वेष्वभ्यासस्थानेषु स्वपेः संप्रसारणमुक्तम् ? ।। स्वापिग्रहणं व्यपेतार्थम्(1) ।। स्वापिग्रहणं क्रियते ।। (किं प्रयोजनम्(4) ? ) ।। व्यपेतार्थम् । व्यपेतार्थोऽयमारम्भः । सुष्वापयिषतीति ।। अस्ति प्रयोजनमेतत् ? ।। किं तर्हिति ।। तत्र क्यजन्तेऽतिप्रसङ्गः(2) ।। तत्र क्यजन्तेऽतिप्रसङ्गो(2) भवति । इहापि--प्राप्नोति स्वापकमिच्छति स्वापकीयति । स्वापकीयतेः सन् सिष्वापकीयिषतीति ।। सिद्धं तु णिग्रहणात्(3) ।। सिद्धमेतत् ।। कथम् ? ।। (ठणिग्रह(3)णात्(4) ।।) णिग्रहणं(3) कर्तव्यम् । (तत्तर्हि णिज्ग्रहणं(4) कर्त्तव्यम् ? ।।) ।। न कर्तव्यम् । निर्देशादेव हि व्यक्तं ण्यन्तस्य ग्रहणमिति ।। नात्र निर्देशः प्रमाणं शक्यं कर्तुम् । यथा हि निर्देशस्तथेहापि प्रसज्येत--स्वापं करोति स्वापयति । स्वापयतेः सन्--सिष्वापयिष्यतीति । तस्माण्णिग्रहणं कर्तव्यम् । ( द्युतिस्वाप्योः सम्प्रसारणम् ) ।।

-7-4-75- निजां त्रयाणां गुणः श्लौ

।। त्रिग्रहणानर्थक्यं गणान्तत्वात् ।। त्रिग्रहणमनर्थकम् ।। किं कारणम् ? ।। गणान्ततत्वात् । त्रय एव निजादयः ।। उत्तरार्थं तु ।। उत्तरार्थं तर्हि त्रिग्रहणं कर्तव्यम्--भृञ्जामित्--त्रयाणां(3) यथा स्यात्--इह मा भूत्--जहाति ।। ( निजां त्रयाणां गुणः श्लौ ) ।।

-7-4-77- अर्तिपिपर्त्योश्च

अर्तिग्रहणं किमर्थं न बहुलं छन्दसीत्येव सिद्धं, न ह्यन्तरेण छन्दोऽर्तेः श्लुर्लभ्यः ? ।। एवं तर्हि सिद्धे सति यदर्तिग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामर्तेः श्लर्भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। इयर्तीत्येतत्सिद्धं भवति ।। ( अर्त्तिपिपर्त्योश्च ) ।।

-7-4-82- गुणो यङ्लुकोः

।। ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि(1) परं दीर्घत्वम् ।। ऐचोर्यङि दीर्घत्वं प्राप्नोति डोढौक्यते तोत्रौक्यत इति ।। ननु च ह्रस्वत्वे कृते (गुणो(1) भविष्यति) दीर्घत्वं न भविष्यति ।। न सिद्ध्यति ।। किं कारणम् ? ।। ह्रस्वाद्धि परं दीर्घत्वम् । ह्रस्वत्वं क्रियतां दीर्घत्वमिति(2) किमत्र कर्तव्यम् ? ।। परत्वादीर्घत्वेन भवितव्यम् ।। न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात् ।। न वैष दोषः ।। किं कारणम् ? ।। अभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात् । अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इत्येषा परिभाषा कर्तव्या ।। कान्येतस्याः परिभाषायाः प्रयोजनानि ? ।। प्रयोजनं सन्वद्भावस्य दीर्घत्वम्(3) ।। (सन्वद्भावस्य(1) दीर्घत्वं प्रयोजनम्) ।। अचीकरत् अजीहरत् ।। सन्वद्भावमपवादत्वाद्दीर्घत्वं न बाधते ।। मान्प्रभृतीनां दीर्घत्वमित्त्वस्य ।।

मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्त्वन्न बाधते।।। गणेरीत्वं हलादिशेषस्य।। गणेरीत्वमपवादत्वाद्धलादिशेषं न बाधते ।।

इदमयुक्तं वर्तते ।। किमत्राऽयुक्तम् ? ।। ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्त्वा तत उच्यते--न वाभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वादिति । तस्याश्च परिभाषायाः प्रयोजनानि नामोच्यन्ते--प्रयोजनं सन्वद्भावस्य दीर्घत्वं, मान्प्रभृतीनान्दीर्घत्वमित्त्वस्य(5), गणेरीत्वं हलादिशेषस्यति च । न(1) खलु सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते ।। किं तर्हि ? ।। परत्वात् । न खल्वपि मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्त्वं बाधते ।। किं तर्हि ? ।। अन्तरङ्गत्वात् । न खल्वपि गणेरीत्वमपवाद्धलादिशेषं बाधते ।। किं तर्हि ? ।। अनवकाशत्वात् ।। एवं तर्हीयं परिभाषा कर्तव्या--अभ्यासविकारेषु बाधका न बाधन्त इति(2) ।। सा तर्ह्येषा परिभाषा कर्तव्या ? ।। न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयमकित इति प्रतिषेधं शास्ति ।।

-7-4-83- दीर्घोऽकितः

अकित इति किमर्थम् ? ।। यंयम्यते रंरम्यते ।। अकित(1) इति शक्यमकर्तुम् ।। कस्मान्न भवति--यंयम्यते रंरम्यते इति ? ।। नुकि कृतेऽनजन्तत्वात् ।। अत उत्तरं पठति ।। अकिद्वचनमन्यत्र किदन्तस्याऽलोऽन्त्यनिवृत्त्यर्थम् ।। अकिद्वचनं क्रियते ज्ञापकार्थम् ।। किं ज्ञाप्यम्(2) ? ।। एतज्ज्ञापयत्याचार्योऽन्यत्र किदन्तस्याऽभ्यासस्यालोऽन्त्यविधिर्न(3) भवतीति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। प्रयोजनं ह्रस्वत्वात्वेत्त्वगुणेषु ।। (ह्रस्वत्वाऽत्वेत्त्वगुणेषु प्रयोजनम्) ।। ह्रस्वत्वम्--अवचच्छतुः अवचच्छुः । अत्वं -- चच्छृदतुः चच्छृदुः ।। इत्त्वं--चिच्छादयिषति चिच्छर्दयिषति । गुणः--चेच्छिद्यते चोच्छुप्यते । तुकि कृतेऽनन्त्यत्वादेते विधयो न प्राप्नुवन्ति ।। विप्रतिषेधात्सिद्धम् ।। नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाऽप्येतानि सिद्धानि । तुक् क्रियतामेते विधय इति, किमत्र कर्तव्यं, परत्वादेते विधय इति ।। तदन्ताऽग्रहणाद्वा ।। अथ वा नैवं विज्ञायते--अभ्यासस्याऽजन्तस्य ॠकारान्तस्याऽकारान्तस्येगन्तस्येति ।। कथं तर्हि ? ।। अभ्यासे योऽच्, अभ्यासे य ॠकारः, अभ्यासे योऽकारः,अभ्यासे य इगिति । एवं च कृत्वा दीर्घत्वं प्राप्नोति ।। एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति ।। किम् ? ।। अपवादो नुग्दीर्घत्वस्येति ।। एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा--अभ्यासविकारेषु बाधका न बाधन्त इति ।। किमेतस्य ज्ञापने प्रयोजनम् ? ।। ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्तं स न दोषो भवति ।। ( दीर्घोऽकितः ) ।।

-7-4-85- नुगतोऽनुनासिकान्तस्य

।। नुकि यंयम्यते रंरम्यत इति रूपाऽसिद्धिः ।। नुकि सति यंयम्यते रंरम्यत इति रूपं न सिद्ध्यति।। अनुस्वारागमवचनात्तु(1) सिद्धम् ।। (अनुस्वारागमवचनात्सिद्धमेतत्) ।(2) अनुस्वारागमो वक्तव्यः । एवमपीदमेव रूपं स्यात्--यय्यँम्यते,(3) इदं न स्यात्(4) यंयम्यते(5) ।। पदान्तवच्च(6) ।। पदान्तवच्चेति वक्तव्यम् । वा पदान्तस्येति ।। ( नुगतोऽनुनासिकान्तस्य ) ।।

-7-4-90- रीगृदुपधस्य च

।। रीगृत्वतः संयोगार्थम् ।। रीगृत्वत इति वक्तव्यम् ।। किं प्रयोजनम् ? ।। संयोगार्थम् । संयोगान्ताः प्रयोजयन्ति । वरीवृश्च्यते परीपृच्छ्यते वरीभृज्यते ।। (रीगृदुपधस्य च) ।।

-7-4-91- रुग्रिकौ च लुकि

।। मर्मृज्यते मर्मृज्यमानास इति चोपसङ्ख्यानम् ।। मर्मृज्यते मर्मृज्यमानास इति चोपसङ्ख्यानं कर्तव्यम् । मर्मृज्यते मर्मृज्यमानासः ।।

-7-4-92- ॠतश्च

किमिदमृकारग्रहणमङ्गविशेषणमृकारान्तस्याङ्गस्येति, आहोस्विदभ्यासविशेषणमृकारान्तस्याभ्यासस्येति

? अङ्गविशेषणमित्याह ।। कथं ज्ञायते ? ।। यदयं तपरकरणं करोति ।। कथं कृत्वा ज्ञापकम् ? ।। नहि कश्चिदभ्यासे दीर्घोऽस्ति यदर्थं तपरकरणं क्रियते ।। अथाऽङ्गविशेषणे ॠकारग्रहणे सति तपरकरणे किं

प्रयोजनम् ? ।। इह मा भूत्--चाकर्ति चाकीर्तः चाकिरति ।।

।। किरतिं चर्करीताऽन्तं पचतीत्यत्र यो नयेत् ।

प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः ।।

-7-4-93- सन्वल्लघुनि चङ्परेऽनग्लोपे

इह कस्मान्न भवति--अजजागरत् ? ।। लघुनि चङ्पर इत्युच्यते व्यवहितं चाऽत्र लघु चङ्परम् ।। इहापि तर्हि न प्राप्नोति--अचीकरत् अजीहरत् ।। वचनाद्भविष्यति ।। इहापि वचनात्प्राप्नोति--अजजागरत् ।। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ।। केन च नाऽव्यवधानम् ? ।। वर्णेन । एतेन पुनः सङ्घातेन व्यवधानं भवति न भवति च ।। एवमपि अचिक्षणत्--अत्र न प्राप्नोति ।। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामित्त्वमिति यदयमत्स्मृदृत्वरप्रथम्रदस्तृस्पशामितीत्त्वबाधनार्थमत्त्वंशास्ति ।

।। सन्वद्भावदीर्घत्वे णेर्णिच्युपसङ्ख्यानम् (णिचा व्यवहितत्वात्(2)) ।। सन्वद्भावदीर्घत्वे णेर्णित्युपसङ्ख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ।। किं पुनः कारणं न सिध्यति ? ।। णिचा व्यवहितत्वात् ।। लोपे कृते नाऽस्ति व्यवधानम् ।। स्थानिवद्भावव्द्यवधानमेव ।। प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवदिति ।। एवमप्यनग्लोप इति प्रतिषेधः प्राप्नोति ।। वृद्धौ कृतायां लोपस्तन्नाऽग्लोप्यङ्गं भवति ।। एवं तर्हीदमिह संप्रधार्यं--वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ? ।। परत्वाद्वृद्धिः ।। नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यन्यस्याऽकृतायाम् । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वाद्वृद्धिर्वृद्धौ कृतायां लोपस्तन्नाऽग्लोप्यङ्गं भवति ।। मीमादीनां तु लोपप्रसङ्गः ।। मीमादीनां तु लोपाः प्राप्नोति । अमीमपत् ।। सिद्धं तु रूपातिदेशात् ।। सिद्धमेतत् ।। कथम् ? ।। (ठरूपातिदेशात्(2)) ।। रूपातिदेशोऽयं--सनि यादृशमभ्यासरूपं तत्सन्वद्भावेनाऽतिदिश्यते, न च मीमादीनां सन्यभ्यासरूपमस्ति ।। अङ्गान्यत्वाद्वा सिद्धम् ।। अथ वा ण्यन्तमेतदङ्गमन्यत् ।। लोपे कृते नाऽङ्गन्यत्वम् ।। स्थानिवद्भावादङ्गमन्यत् ।। कथमजिज्ञपत् ? ।। अत्र सन्यपि ण्यन्तस्यैवोपादानमाप्ज्ञप्यृधामीदिति । अत्राऽङ्गन्यत्वाऽभावादभ्यासलोपः स्यात् । तस्मात्पूर्व एव परिहारः -सिद्धं तु रूपातिदेशादिति ।।

।। इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।। चतुर्थः पादश्च समाप्तः ।।

# महाभाष्यम्/अष्टमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/nn4

< महाभाष्यम्

-8-1-1- सर्वस्य द्वे

सर्ववचनं किमर्थम्।। सर्ववचनमलोऽन्त्यनिवृत्त्यर्थम्।। सर्वग्रहणं क्रियते।। (किं प्रयोजनम्?)।। अलोऽन्त्यनिवृत्त्यर्थम्। अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य द्विर्वचनं मा भूदिति।। क्व पुनरलोन्त्यनिवृत्त्यर्थेनाऽर्थः सर्वग्रहणेन ?।। नित्यवीप्सयोरिति।। नित्यवीप्सयोरित्युच्यते, न चाऽन्त्यस्य द्विर्वचनेन(1) नित्यता वीप्सा वा गम्यते।। ःथ्य;ह तर्हि-परेर्वर्जने ःथ्य;त्यन्त्यस्याऽपि(2) द्विर्वचनेन(1) वर्ज्यमानता गम्येत। ।। षष्ठीनिर्द्देशार्थञ्च(3)।। षष्ठीनिर्देशार्थं च सर्वग्रहणं कर्तव्यम्। षष्ठीनिर्देशो यथा प्रकल्पेत।। अनिर्देशे हि षष्ठ्यर्थाऽप्रसिद्धिः।। अक्रियमाणे हि सर्वग्रहणे षष्ठ्यर्थस्याऽप्रसिद्धिः स्यात्।। कस्य ?।। स्थानेयोगत्वस्य।। क्व पुनरिह षष्ठीनिदेशाऽर्थेनार्थः सर्वग्रहणेन यावता सर्वत्रैव षष्ठ्युच्चार्यते- परेर्वर्जने प्रसमुपोदः पादपूरणे उपर्यध्यधसः सामीप्ये वाक्यादेरामन्त्रितस्येति।।

ःथ्य;ह न काचित् षष्ठी-नित्यवीप्सयो(1)रिति?।। ननु चैषैव षष्ठी।। नैषा षष्ठी।। किं तर्हि?।। अर्थनिर्देश एषः-नित्ये चाऽर्थे वीप्सायां चेति।।

अलोऽन्त्यनिवृत्त्यर्थेन तावन्नार्थः सर्वग्रहणेन। ःथ्य;दं तावदयं प्रष्टव्यः--नित्यवीप्सयोर्द्वे भवत ःथ्य;त्युच्यते, द्विशब्द आदेशः कस्मान्न भवति?।। आचार्यप्रवृत्तिर्ज्ञापयति-न द्विशब्द आदेशो भवतीति-यदयं तस्य परमाम्रेडितम्अनुदात्तं चेत्याह।। कथं कृत्वा ज्ञापकम्?।। द्विशब्दोऽयमेकाच्, तस्यैकाच्त्वात्तस्य परमाम्रेडितमनुदात्तं चेत्येतन्नास्ति। पश्यति त्वाचार्यो-न द्विशब्द आदेशो भवतीति, ततस्तस्य परमाम्रेडितमनुदात्तं चेत्याह।। यदि तर्हि न द्विशब्द आदेशो भवति के तर्हीदानीं द्वे भवतः?।। द्विशब्देन यदुच्यते।। किं पुनस्तत्?।। द्विशब्दोऽयं सङ्ख्यापदं, सङ्ख्यायाश्च सङ्ख्येयमर्थः। (1)सङ्ख्येये द्वे भविष्यतः।। के पुनस्ते?।। पदे वाक्ये मात्रे (वा5)।।

तद्यदा तावत्पदे वाक्ये वा तदाऽनेकाल्त्वात्सर्वादेशः(2) सिद्धः। यदातावन्मात्रे(3) अपि तदाऽनेकाल्शित्सर्वस्येति सर्वादेशो (4)भविष्यति।।

यदा तर्ह्यर्द्धमात्रे तदा सर्वादेशो न सिध्यति।। नैषः दोषः। (तदापि सिद्धः(5))। न चार्द्धमात्रे द्विरुच्येते।। किं कारणम्?।। ःथ्य;ह व्याकरणे यत्सर्वाऽल्पीयान्(6) स्वरव्यवहारः स मात्रया भवति। नाऽर्द्धमात्रया व्यवहारोऽस्ति, तेनाऽर्द्धमात्रे न भविष्यतः।। एवमपि कुत एतत्-पदे द्वे भविष्यतःथ्य;ति, न पुनर्वाक्ये स्यातां मात्रे वा?।। नित्यवीप्सयोर्द्वे भवत ःथ्य;त्युच्यते न च वाक्यद्विर्वचनेन(7) मात्राद्विर्वचनेन(7) वा नित्यता वीप्सा वा गम्यते।।

षष्ठीनिर्देशार्थमेव तर्हि सर्वग्रहणं कर्त्तव्यम्।।

।। न वा पदाधिकारात्।। न वा वक्तव्यम्।। किं कारणम्?।। पदाधिकारात्। पदस्येति प्रकृत्य(1) द्विर्वचनं वक्ष्यामि।। तच्च समासतद्धितवाक्यनिवृत्त्यर्थम्।। तच्चावश्यं पदग्रहणं कर्त्तव्यम्।। (किं कारणम्?।। समासतद्धितवाक्यनिवृत्त्यर्थम्(1)) समासनिवृत्त्यर्थं तद्धितनिवृत्त्यर्थं वाक्यनिवृत्त्यर्थञ्च।। समासनिवृत्त्यर्थं तावत्-सप्तपर्णः। अष्टापदम्(2)। तद्धितनिवृत्त्यर्थं-द्विपदिका त्रिपदिका। माषशः कार्षापणशः। वाक्यनिवृत्त्यर्थं ग्रामे ग्रामे पानीयम्। माषं माषं देहि (ःथ्य;ति(1))।।

अथ क्रियमाणेऽपि वै पदग्रहणे समासनिवृत्त्यर्थमिति कथमिदं विज्ञायते-समासस्य निवृत्त्यर्थं समासनिवृत्त्यर्थमाहो स्वित्समासे निवृत्त्यर्थं समासनिवृत्त्यर्थमिति?।। किं चातः?।। यदि विज्ञायते समासस्य निवृत्त्यर्थं समासनिवृत्त्यर्थमिति, सिद्धं-सप्तपर्णः सप्तपर्णौ सप्तपर्णा ःथ्य;ति। सप्तपर्णाभ्यां सप्तपर्णेभ्य ःथ्य;त्यत्रापि प्राप्नोति।। अथ विज्ञायते-समासे निवृत्त्यर्थं समासनिवृत्त्यर्थमिति,-सप्तपर्णः सप्तपर्णौ सप्तपर्णा ःथ्य;त्यत्रापि प्राप्नोति।।

तथा-तद्धितनिवृत्त्यर्थमिति,-कथमिदं विज्ञायते-तद्धितस्य निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति, आहो स्वित्तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति?।। किं चातः?।। यदि विज्ञायते तद्धितस्य निवृत्त्यर्थं

तद्धितनिवृत्त्यर्थमिति, सिद्धं द्विपदिका(1) त्रिपदिका(2)(ःथ्य;ति(2)), द्विपदिकाभ्यां त्रिपदिकाभ्यां माषशः कार्षापणश ःथ्य;त्यत्र प्राप्नोति।। अथ विज्ञायते-तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति, द्विपदिका(:)त्रिपदिका

ःथ्य;त्यत्रापि

प्राप्नोति।।

तथा वाक्यनिवृत्त्यर्थमिति कथमिदं विज्ञायते वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति। आहो स्विद्वाक्ये निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति?।।

किं चातः?।। यदि विज्ञायते-वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति,- यदि वाक्यं वीप्सायुक्तं; भवितव्यमेव द्विर्वचनेन। अथाऽप्यवयवः,- भवत्येव। तदेतत्क्रियमाणेऽपि पदग्रहणे आलूनविशीर्णं(1) भवति, किं चित्सङ्गृहीतं किं चिदङ्गृहीतं(च)(2)। ।। सगतिग्रहणं(2) च ।। सगतिग्रहणञ्च कर्त्तव्यम्। प्रपचति-प्रपचति, प्रकरोति-प्रकरोतीति(4)।।

किं पुनः कारणं न सिध्यति?।। न हि सगतिकं पदं भवति।।

समासनिवृत्त्यर्थेन तावन्नार्थः पदग्रहणेन। समासेनोक्तत्वाद्वीप्साया द्विर्वचनं न भविष्यति।। किं च भोः समासो वीप्सायामित्युच्यते?।। न खलु वीप्सायामित्युच्यते गम्यते तु सोऽर्थः।। ततः किम्(1)?।। उक्तः(2) समासेनेति कृत्वा द्विर्वचनं न भविष्यति। यत्र च(3) समासेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा-एकैकविचिताः अन्योन्यसहाया ःथ्य;ति।

अथ वा यदत्र वीप्सायुक्तं नाऽदः प्रयुज्यते।। किं पुनस्तत्?।। पर्वणि पर्वणि सप्त पर्णान्यस्य, पङ्क्तौ पङ्क्तावष्टौ पदान्यस्येति।।

तद्धितनिवृत्त्यर्थेन चाऽपि नार्थः पदग्रहणेन। तद्धितेनोक्तत्वाद्वीप्साया द्विर्वचनं न भविष्यति। तद्धितः खल्वपि वीप्सायामित्युच्यते। यत्र च तद्धितेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा-एकैकशो ददातीति।।

वाक्यनिवृत्त्यर्थेन चाऽपि नार्थः पदग्रहणेन। पदद्विर्वचनेनोक्तत्वाद्वीप्साया वाक्यद्विर्वचनं न भविष्यति। यत्र च पदद्विर्वचनेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा-प्रपचति-प्रपचति, प्रकरोति-प्रकरोतीति।।

(।। उत्तरार्थन्तु(2)।।) उत्तरार्थं तर्हि पदग्रहणं कर्त्तव्यम्। तस्य परमाम्रेडितम् अनुदात्तं चेति वक्ष्यति(3)। तत्पदद्विर्वचने(4) यथा स्याद्वाक्यद्विर्वचने माभूत्-मह्यं ग्रहीष्यति-मह्यं ग्रहीष्यति, मामभिव्याहरिष्यतिमामभिव्याहरिष्य(ती)ति।।

कथं चाऽत्र द्विर्वचनम्?।। छान्दसत्वात् ।।

स्वरोऽपि तर्हि च्छान्दसत्वादेव न भविष्यति।। उत्तरार्थमेव तर्हि पदग्रहणं कर्त्तव्यं,पदस्य पदादिति वक्ष्यति, तत्पदग्रहणं न कर्तव्यं भवति।। सर्वग्रहणमपि तर्ह्युत्तरार्थम्। अनुदात्तं सर्वमपादादाविति वक्ष्यति तत्सर्वग्रहणं न कर्तव्यं भवति।। उभयं क्रियते तत्रैव।।

ः थ्य;हार्थमेव तर्हि षष्ठीनिर्देशार्थमन्यतरत्कर्त्तव्यं, षष्ठीनिर्दिष्टस्य स्थाने द्विर्वचनं यथा स्याद्विःप्रयोगो मा भूदिति।। किं च स्यात्?।। आम् पचसि पचसि देवदत्ता3। आम एकान्तरमामन्त्रितमनन्तिक ःथ्य;त्येकान्तरता न स्यात्। ःथ्य;ह च पौनःपुन्यम् ,पौनः पुनिक ःथ्य;ति,(1)-अप्रातिपदिकत्वात्तद्धितोत्पत्तिर्न स्यात्।।

यदि तर्हि स्थाने द्विर्वचनं-राजा-राजा वाग्वाक्,-पदस्येति नलोपादीनि न सिध्यन्ति।। ःथ्य;दमिह संप्रधार्य-द्विर्वचनं क्रियतां नलोपादीनीति, किमत्र कर्त्तव्यम्?।। परत्वान्नलोपादीनि।। पूर्वत्राऽसिद्धे नलोपादीनि। सिद्धाऽसिद्धयोश्च नास्ति संप्रधारणा।। एवं तर्हि-पूर्वत्राऽसिद्धीयमद्विर्वचन ःथ्य;ति (वक्ष्यामि(1)। तच्चावश्यं-) वक्तव्यम्।। किं प्रयोजनम्?।। विभाषिताः प्रयोजयन्ति-द्रोग्धा- द्रोग्धा। द्रोढा-द्रोढेति।। ःथ्य;ह तर्हि - बिसंबिसम् मुसलंमुसलम् , -आदेशप्रत्यययोरिति षत्वं प्राप्नोति।। आदेशो यः सकारः प्रत्ययो यः सकार ःथ्य;त्येवमेतद्विज्ञायते।। ःथ्य;ह तर्हि-नृभिर्नृभिः,-रषाभ्यां नो णः समानपद ःथ्य;ति णत्वं प्राप्नोति।। समानपद ःथ्य;त्युच्यते, समानपदमेव(2) यन्नित्यं, न चैतन्नित्यं समानपदमेव।। किं वक्तव्यमेतत्?।। न हि।। कथमनुच्यमानं गंस्यते?।। समानग्रहणसार्मथ्यात्। यदि हि यत्समानं चाऽसमानं च तत्र स्यात्समानग्रहणमनर्थकं स्यात्।।

अथ वा पुनरस्तु द्विःप्रयोगो द्विर्वचनम्।। ननु चोक्तम् - आम् पचसि पचसि देवदत्ता 3 1-आम

एकान्तरमामन्त्रितमनन्तिक ःथ्य;त्येकान्तरता न प्राप्नोतीति।। नैष दोषः-सुप्तिङ्भ्यां पदं विशेषयिष्यामः।

सुप्तिङन्तं पदं। यस्मात्सुप्तिङ्विधिस्तदादि सुप्तिङन्तं च (पदम्(1))।। ननु चैकैकस्मादेवात्र सुप्तिङ्विधिः।। समुदाये या वाक्यपरिसमाप्तिस्तया पदसंज्ञा।। कुत एतत्?।। शास्त्राऽहानेः(1)।। एवं हि(2) शास्त्रमहीनं भवति।। यदप्युच्यते-ःथ्य;ह पौनःपुन्यं पौनःपुनिकमिति,-अप्रातिपदिकत्वात्तद्धितोत्पत्तिर्न प्राप्नोति (ःथ्य;ति)। मा भूदेवं समर्थादित्येवं भविष्यति।

अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति-भवत्येवंजातीयकेभ्यस्तद्धितोत्पत्तिरिति, यदयं कस्कादिषु कौतस्कुतशब्दं पठति।। (सर्वस्य द्वे)।।

-8-1-4- नित्यवीप्सयोः

ःथ्य;ह कस्मान्न भवति-हिमवान्, वाडवः,(2) पारियात्रः,(2) समुद्र ःथ्य;ति। नित्ये द्वे भवतःथ्य;ति प्राप्नोति।। नैषः दोषः-अयं नित्यशब्दोऽस्त्येव कूटस्थेष्वविचालिषु भावेषु वर्तते। तद्यथा-नित्या(1)। द्यौः नित्या पृथिवी नित्यम् आकाशम् ःथ्य;ति। अस्त्याभीक्ष्ण्ये वर्तते। तद्यथा - नित्यप्रहसितः नित्यप्रजल्पित ःथ्य;ति। तद्य आभीक्ष्ण्ये वर्तते तस्येदं ग्रहणम्।।

अथ किमिदं वीप्सेति?।। आप्नोतेरयं विपूर्वादिच्छायामर्थे सन् विधीयते।। यद्येवं - चिकीर्षति जिहीर्षति ःथ्य;त्यत्रापि प्राप्नोति।। नैष दोषः - नैवं विज्ञायते - वीप्सायामभिधेयायामिति?।। कथं तर्हि?।। कर्तृविशेषणमेतत्। (वीप्सतीति वीप्सः। (1)) वीप्सश्चेत्कर्त्ता(2) भवतीति।

कः पुनर्वीप्सार्थः?। ।। अनवयवाभिधानं वीप्सार्थः(1)।। अनवयवेन द्रव्याणामभिधानमेव(2) वीप्सार्थः। ।। अनवयवाभिधानं वीप्सार्थ ःथ्य;ति चेज्जात्याख्यायां द्विर्वचनप्रसङ्गः।। अनवयवाभिधानं वीप्सार्थ ःथ्य;ति चेज्जात्याख्यायां द्विर्वचनं प्राप्नोति। व्रीहिः यवः (3) ःथ्य;ति।।न वैकार्थत्वाज्जातेः।। न वैष दोषः।। किं कारणम्?।। एकार्थत्वाज्जातेः। एकार्थो(4) हि जातिः। एकमर्थं प्रत्याययिष्यामीति जातिशब्दः प्रयुज्यते।। अनेकार्थाश्रयत्वाच्च वीप्सायाः।। अनेकार्थाश्रया च पुनर्वीप्सा। अनेकमर्थं संप्रत्याययिष्यामीति वीप्सा प्रयुज्यते। एकार्थत्वाज्जातेरनेकार्थाश्रयत्वाच्च(2) वीप्साया जात्याख्यायां द्विर्वचन न भविष्यति।। निवर्त्तकत्वाद्वा।। अथ वा नाऽनेन द्विर्वचनं निर्(व)त्यते(1)किं तर्हि?।। अद्विर्वचनमनेन निर्वत्यते। यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति, तत्राऽनेन निवृत्तिः क्रियते- नित्यवीप्सयोरर्थयोर्द्वे एव शब्दरूपे प्रयोक्तव्ये नातिबहु प्रयोक्तव्यमिति।।

।। सर्वपदसगतिग्रहणानर्थक्यं(2) चार्थाभिधाने द्विर्वचनविधानात्।। सर्वग्रहणं चानर्थकम्।। किं कारणम्?।। (अर्थाभिधाने(3) द्विर्वचनविधानात्)। सर्वस्यैव हि द्विर्वचनेनाऽर्थो गम्यते नावयवस्य।। पदग्रहणं चानर्थकम्। पदस्यैव हि द्विर्वचनेनाऽर्थो गम्यते नावयवस्य। पदग्रहणं चानर्थकम्। पदस्यैव हि द्विर्वचनेनाऽर्थो गम्यते(4) नाऽपदस्य। सगतिग्रहणं चानर्थकम्। सगतिकस्यैव हि द्विर्वचनेनाऽर्थो गम्यते(4) नाऽगतिकस्य।।

किं पुनरिदं वीप्सायां सर्वमभिधीयते आहो स्विदेकम्?।। कश्चाऽत्र विशेषः।। वीप्सायां सर्वाभिधाने वचनाऽप्रसिद्धिः।। वीप्सायां सर्वाऽभिधाने वचनं न सिध्यति-ग्रामो-ग्रामः जनपदो जनपदः (ःथ्य;ति)।। बहवस्तेऽर्थास्तत्र बहुषु बहुवचन मिति बहुवचनं प्राप्नोति।। अस्तु तर्ह्येकम्।। एकाऽभिधानेऽसर्वद्रव्यगतिः(1)।। एकाऽभिधाने सर्वद्रव्यगतिर्न सिध्यति।। अस्तु तर्हि सर्वाभिधानम्(2)।। ननु चोक्तं-वीप्सायां सर्वाभिधाने वचनाऽप्रसिद्धिरिति।। न वा पदार्थत्वात्।। न वैष दोषः।। किं कारणम्?।। पदार्थत्वात्। पदस्याऽर्थो वीप्सा, सुबन्तं च(3) पदं, ङ्याप्प्रातिपदिकाच्चैकत्वादिष्वर्थेषु स्वादयो विधीयन्ते, न चैतत्प्रातिपदिकम्।। यत्तर्हि प्रातिपदिकं दृषद्-दृषत् समित् समित्।। एतदपि प्रत्ययलक्षणेन सुबन्तं न(4) प्रातिपदिकम्।। अपर आह-।। न वा पदार्थत्वात्।। न वैष दोषः।। किं कारणम्?।। पदार्थत्वात्। पदास्याऽर्थो वीप्सा। सुबन्तं च(1) पदम्। ङ्याप्प्रातिपदिकाच्चैकत्वादिष्वर्थेषु स्वादयो विधीयन्ते न चैतत्प्रातिपदिकम्।। यत्तर्हि प्रातिपदिकं दृषद्-दृषत् समित् समित् ःथ्य;ति।। एतदपि प्रत्ययलक्षणेन सुबन्तं न प्रातिपदिकम्।।

अथेह कथं भवितव्यं-पचति-पचतितरां तिष्ठति, आहो स्वित् पचतितरां-पचतितरां तिष्ठतीति?।। पचतिपचतितरां तिष्ठतीति भवितव्यम्।।

कथम्?।। द्विर्वचनं क्रियतामातिशायिक ःथ्य;ति द्विर्वचनं भविष्यति
विप्रतिषेधेन।। ःथ्य;हापि तर्ह्यातिशायिकाद्द्विर्वचनं स्यात्-आढ्यतरमाढ्यतरमानयेति।। अस्त्यत्र
विशेषः-अन्तरङ्ग आतिशायिकः।। काऽन्तरङ्गता?।। ङ्याप्प्रातिपदिकादातिशायिकः, पदस्य द्विर्वचनम्।। आतिशायिकोऽपि नाऽन्तरङ्गः।। कथम्?।। समर्थात्तद्धितोऽसावुत्पद्यते, सार्मथ्यं च सुबन्तेन। अथ वा स्पर्द्धायामातिशायिको विधीयते नं चाऽन्तरेण प्रतियोगिनं स्पर्धा गम्यते।।
एवं तर्हीह द्वावर्थौ वक्तव्यौ नित्यवीप्से चाऽतिशयश्च, न चैकस्य प्रयोक्तुरनेकमर्थं(1) युगपद्वक्तुं
संभवोऽस्ति। तदेतत्प्रयोक्तर्यधीनं भवति, एतस्मिंश्च(2) प्रयोक्तर्यधीने क्व चित्का चित्प्रसृततरा गतिर्भवति। ःथ्य;ह तावत्-पचतिपचतितरां तिष्ठतीत्येषा प्रसृततरा गतिर्यन्नित्यमुक्त्वाऽतिशय उच्यते।
ःथ्य;हेदानीमाढ्यतरमाढ्यतरमानयेत्येषा प्रसृततरा गतिर्यदतिशयमुक्त्वा वीप्साद्विर्वचनमुच्यते।। (नित्यवीप्सयोः)।।
-8-1-5- परेर्वर्जने
।। परेरसमासे।। परेरसमासे ःथ्य;ति वक्तव्यम्। ःथ्य;ह मा भूत्परित्रिगर्तं वृष्टो देवः।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यं। (ठपरेर्वर्जन(1)ःथ्य;त्येव सिद्धम्।।)। परेर्वर्जनःथ्य;त्युच्यते न चाऽत्र परिवर्जने वर्तते।। कस्तर्हि?।। समासः। ।। परेर्वर्जने वावचनम्।। (परेर्वर्जने वावचनङ्कर्त्तव्यम्(1))। परेर्वर्जने वेति वक्तव्यम्। परि त्रिगर्तेभ्यो वृष्टो देवः। परि-परि त्रिगर्तेभ्यो वृष्टो देवः।। (परेर्वर्जने)
-8-1-9- एकं बहुव्रीहिवत्
ःथ्य;ह कस्माद्बहुव्रीहिवद्भावो न भवति-एक ःथ्य;ति?।। एकस्य द्विर्वचनसम्बन्धेन(3) बहुव्रीहिवद्भाव उच्यते न चाऽत्र द्विर्वचनं पश्यामः।। एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः(1)।। एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः कर्तव्यः। द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः कर्तव्यः। द्विर्वचनमपि ह्यत्र कस्मान्न भवति तस्माद्वाच्यम्-अस्मिन्नर्थे द्वे भवतो बहुव्रीहिवच्चेति।। न वा वीप्साधिकारात्।। न वा वक्तव्यम्।। किं कारणम्?।। वीप्साधिकारात्। नित्यवीप्सयोरिति वर्तते।।
अथ बहुव्रीहिवत्त्वे किं प्रयोजनम्?।। बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ।। (बहुव्रीहिवत्त्वे सुब्लोपपुंवद्भावौ प्रयोजनम्(2))। सुब्लोपः-एकैकम्(1)। पुंवद्भावः-गतगता।। यद्येवम्-।। सर्वनामस्वरसमासान्तेषु दोषः।। सर्वनामस्वरसमासान्तेषु दोषो भवति। (सर्वनाम-)सर्वनामविधौ दोषो भवति-एकैकस्मै। न बहुव्रीहाविति प्रतिषेधः प्राप्नोति। सर्वनाम। स्वर-नन(2) सुसु। नञ्सुभ्यामित्येष स्वरः प्राप्नोति। स्वर।। समासान्त ऋगृक्। पूः पूः। ऋक्पूरब्धूःपथामानक्षे ःथ्य;ति समासान्तः प्राप्नोति।।
सर्वनामविधौ तावन्न दोषः। उक्तं तत्र बहुव्रीहिग्रहणस्य प्रयोजनम्-बहुव्रीहिरेव यो बहुव्रीहिस्तत्र प्रतिषेधो यथा स्याद्बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। स्वरसमासान्तयोरपि-प्रकृतं समासग्रहणमनुवर्तते, तेन(1) बहुव्रीहिं विशेषयिष्यामः-समासो यो बहुव्रीहि(2)रिति।।
-8-1-11- कर्मधारयवदुत्तरेषु
कर्मधारयवत्त्वे कानि प्रयोजनानि?।। कर्मधारयवत्त्वे प्रयोजनं(1) सुब्लोपपुंवद्भावान्तोदात्तत्वानि।। (कर्मधारयत्त्वे सुब्लोपपुंवद्भावाऽन्तोदात्तत्वानि) ? ।। प्रयोजनं(1) सुब्लोपः-पटुपटुः। (सुब्लोपः)।। पुंवद्भावः-- पटुपट्वी (पुंवद्भावः)।। अन्तोदात्तत्वम्-पटुपटुः (कर्मधारयवदुत्तरेषु)।।
-8-1-12- प्रकारे गुणवचनस्य
गुणवचनस्येति किमर्थम्?।। अग्निर्माणवकः गौर्वाहीकः। ।। प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः(1)।। (प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः)। सर्वे हि शब्दाः प्रकारे वर्तमाना गुणवचनाः सम्पद्यन्ते। तेनेहापि प्राप्नोति-अग्निर्माणवकः। गौर्वाहीक ःथ्य;ति।। सिद्धन्तु प्रकृत्यर्थविशेषणत्वात्।। सिद्धमेतत्।। कथम्?।। प्रकृत्यर्थविशेषणत्वात्। प्रकृत्यर्थो विशेष्यते। नैवं विज्ञायते-प्रकारे वर्तमानस्य गुणवचनस्ये(2)ति।। कथं तर्हि?।। गुणवचनस्य शब्दस्य द्वे भवतः प्रकारे वर्तमानस्येति। अथवा-प्रकारे गुणवचनस्येत्युच्यते, सर्वश्च शब्दः प्रकारे वर्तमानो गुणवचनः सम्पद्यते। तत्र प्रकर्षगतिर्विज्ञास्यते-साधीयो यो गुणवचनःथ्य;ति।। कश्च साधीयः?।। यः(1) प्रकारे च प्राक्च(2) प्रकारात्।।
अथवा प्रकारे गुणवचनस्येत्युच्यते, सर्वश्च शब्दः प्रकारे वर्तमानो गुणवचनः संपद्यते त(3) एवं
विज्ञास्यामः--प्राक्प्रकाराद्यो गुणवचनःथ्य;ति।। आनुपूर्व्ये(4) द्वे भवतः।। आनुपूर्व्ये द्वे भवत ःथ्य;ति वक्तव्यम्। मूलेमूले स्थूलाः। अग्रेऽग्रे(5) सूक्ष्माः।। स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवतः।। स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवत ःथ्य;ति वक्तव्यम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि।। अवधार्यमाण ःथ्य;ति किमर्थम्?।। अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि द्वौ देहि त्रीन् देहि।। अनेकस्मिन्निति किमर्थम्?।। अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि। माषमेव देहि।। किं पुनः कारणं न सिध्यति?।। अनवयवाभिधानं वीप्सार्थ ःथ्य;त्युच्यते, अवयवाभिधानं चाऽत्र गम्यते। आतश्चावयवाभिधानं,(1) यो ह्युच्यते-अस्मात्कार्षापणादिह भवद्भ्यां(2) माषं माषं देहीति। माषं माषमसौ दत्त्वा पुनः शेषं पृच्छति-किमनेन क्रियतामिति।। यः पुनरुच्यते-ःथ्य;मं कार्षापणमिह भवद्भ्यां(2) माषं माषं देहीति माषं माषमसौ(3) दत्त्वा तूष्णीमास्ते।। चापले(4) द्वे भवतः।। चापले द्वे भवत ःथ्य;ति वक्तव्यम्। अहिरहिर्बुध्यस्व बुध्यस्व।। न चावश्यं द्वे एव, यावद्भिः शब्दैः सोऽर्थो गम्यते तावन्तः प्रयोक्तव्याः। अहिरहिरहिबुध्यस्व(5) बुध्यस्व बुध्यस्वेति।।
।।क्रियासमभिहारे द्वे भवतः(6)।। क्रियासमभिहारे द्वे भवत ःथ्य;ति वक्तव्यम्। स भवान् लुनीहिलुनीहित्येवायं लुनाति। पुनीहि(6) पुनीहीत्येवाऽयं पुनाति।। आभीक्ष्ण्ये(7) द्वे भवतः।। आभीक्ष्ण्ये द्वे भवत ःथ्य;ति वक्तव्यम्। भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति। ।। डाचिच द्वे भवतः(1)।। डाचि च द्वे भवत ःथ्य;ति वक्तव्यम्।। पटपटायति घटघटायति(2) शरशरायति(3)।। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवतः(1) ।।। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत ःथ्य;ति वक्तव्यम्। पूर्वं पूर्वं पुष्प्यन्ति। प्रथमं प्रथमं पच्यन्ते।। डतरडतमयोः समसंप्रधारणायां स्त्रीनिगदभावे(2) द्वे भवतः।। डतरडतमयोः समसम्प्रधारणायां स्त्रीनिगदे भावे द्वे भवत ःथ्य;ति वक्तव्यम्। उभाविमावाढ्यौ, कतराकतराऽनयोराढ्यता(3)। सर्व ःथ्य;मे आढ्याः, कतमा कतमैषामाढ्यतेति(4)। ।। कर्मव्यतिहारे सर्वनाम्नो (द्वे भवतः) समासवच्च बहुलं,

यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य।। कर्मव्यतिहारे सर्वनाम्नो(द्वे भवतः) समासवच्च बहुलं, यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य।। कर्मव्यतिहारे सर्वनाम्नो द्वे भवत ःथ्य;ति वक्तव्यम्। समासवच्च बहुलम्। यदा न समासवत्प्रथमैकवचनं भवति तदा पूर्वपदस्य। अन्योन्यमिमे ब्राह्मणा भोजयन्ति। अन्योऽन्यस्य भोजयन्ति। ःथ्य;तरेतरं भोजयन्ति। ःथ्य;तरेतरस्य भोजयन्ति। ।। स्त्रीनपुंसकयोरुत्तरपदस्य वाऽम्भावः।। स्त्रीनपुंसकयोरुत्तरपदस्य वाऽम्भावो वक्तव्यः। अन्योन्यमिमे ब्राह्मण्यौ भोजयतः। अन्योन्यां (च(1)) भोजयतः। ःथ्य;तरेतरम् (ःथ्य;मे ब्राह्मण्यौ(1)) भोजयतः। ःथ्य;तरेतरां भोजयतः। अन्योन्यमिमे ब्राह्मणकुले भोजयतः। अन्योन्यां भोजयतः। ःथ्य;तरेतरम् (ःथ्य;मे ब्राह्मणकुले(1)) भोजयतः। ःथ्य;तरेतरां भोजयतः।। (प्रकारे गुणवचनस्य)।।
-8-1-15- द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाऽभिव्यक्तिषु
।। अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसङ्ख्यानम्।। अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसङ्ख्यानं कर्तव्यम्। द्वन्द्वं स्कन्दविशाखौ। द्वन्द्वं-नारदपर्वतौ। अत्यन्तसहचरित ःथ्य;ति किमर्थम्?।। द्वौ युधिष्ठिरार्जुनौ।। लोकविज्ञात ःथ्य;ति किमर्थम्?।। द्वौ देवदत्तयज्ञदत्तौ। अथ द्वन्द्वमिति किं निपात्यते।। द्वन्द्वमिति पूर्वपदस्य चाऽम्भाव उत्तरपदस्य(1) चाऽत्वं नपुसंकत्वं च(2)।। द्वन्द्वमिति पूर्वपदस्य चाऽम्भावो निपात्यते उत्तरपदस्य चात्वं नपुंसकत्वं च।। उक्तं वा।। (उक्तंवा)।। किमुक्तम्?।। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति, तत्र नपुंसकत्वमनिपात्यम्।। (द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्र)।।
-8-1-16- पदस्य
पदात् ।।
आ कुतः पदाधिकारः?।। पदाधिकारः प्रागपदान्ताधिकारात्।। अपदान्तस्य मूर्द्धन्य ःथ्य;त्यतः(1) प्राक् पदाधिकारः।।
अथ पदादित्यधिकार आ कुतः?।। पदात्प्राक्(2) सुपि कुत्सनात्।। पदादित्यधिकारः प्राक्सुपि
कुत्सनात्। कुत्सने च सुप्यगोत्रादा(3) विति वक्ष्यति प्रागेतस्मात्।। यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात्।। यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात्कर्तव्यः।। ःथ्य;ह वचने ह्यपदान्तस्याऽप्राप्तिः।। ःथ्य;ह
क्रियमाणेऽपदान्तस्याऽप्राप्तिः स्यात्। उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येति। ःथ्य;हैव स्यात्-कुमार्यौ किशोर्यौ(1)। ःथ्य;ह न स्यात् कुमार्यः किशोर्यः।। एकादेश उदात्तेनोदात्तः-ःथ्य;हैव स्यात्-वृक्षौ प्लक्षौ। ःथ्य;ह न स्यात्-वृक्षाः प्लुक्षाः।। न वा पदाधिकारस्य विशेषणत्वात्।। न वोर्ध्वं पदाधिकारात् कर्तव्यो यणेकादेशस्वरः।। किं कारणम्?।। पदाधिकारस्य विशेषणत्वात्। पदस्येति नैषा स्थानषष्ठी।। का तर्हि?।। विशेषणषष्ठी।। किं वक्तव्यमेतत्?।। न हि।। कथमनुच्यमानं गंस्यते?।। प्रत्याख्यायते स्थानषष्ठी। ।। अन्तग्रहणाद्वा नलोपे।। अथवा यदयं नलोपः प्रातिपदिकान्तस्येत्यन्तग्रहणं करोति तज्ज्ञापयत्याचार्योविशेषणषष्ठ्येषा न स्थानषष्ठीति।। (पदस्य पदात्)
-8-1-17- पदात्
पदस्य ।।
आ कुतः पदाधिकारः?।। पदाधिकारः प्रागपदान्ताधिकारात्।। अपदान्तस्य मूर्द्धन्य ःथ्य;त्यतः(1) प्राक् पदाधिकारः।।
अथ पदादित्यधिकार आ कुतः?।। पदात्प्राक्(2) सुपि कुत्सनात्।। पदादित्यधिकारः प्राक्सुपि कुत्सनात्। कुत्सने च सुप्यगोत्रादा(3) विति वक्ष्यति प्रागेतस्मात्।। यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात्।। यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात्कर्तव्यः।। ःथ्य;ह वचने ह्यपदान्तस्याऽप्राप्तिः।। ःथ्य;ह क्रियमाणेऽपदान्तस्याऽप्राप्तिः स्यात्। उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येति। ःथ्य;हैव स्यात्-कुमार्यौ किशोर्यौ(1)। ःथ्य;ह न स्यात् कुमार्यः किशोर्यः।। एकादेश उदात्तेनोदात्तः-ःथ्य;हैव स्यात्-वृक्षौ प्लक्षौ। ःथ्य;ह न स्यात्-वृक्षाः प्लुक्षाः।। न वा पदाधिकारस्य विशेषणत्वात्।। न वोर्ध्वं पदाधिकारात् कर्तव्यो यणेकादेशस्वरः।। किं कारणम्?।। पदाधिकारस्य विशेषणत्वात्। पदस्येति नैषा स्थानषष्ठी।। का तर्हि?।। विशेषणषष्ठी।। किं वक्तव्यमेतत्?।। न हि।। कथमनुच्यमानं गंस्यते?।। प्रत्याख्यायते स्थानषष्ठी। ।। अन्तग्रहणाद्वा नलोपे।। अथवा यदयं नलोपः प्रातिपदिकान्तस्येत्यन्तग्रहणं करोति तज्ज्ञापयत्याचार्योविशेषणषष्ठ्येषा न स्थानषष्ठीति।। (पदस्य पदात्)
-8-1-18- अनुदात्तं सर्वमपदादौ
सर्ववचनं किमर्थम्?।। सर्ववचनमनादेरनुदात्तार्थम्।। सर्ववचनं(1) क्रियते।। (किं प्रयोजनम्(2)? ।। अनादेरनुदात्तार्थम्)। अनादेरप्यनुदात्तत्वं यथा स्यादिति। तिङ्ङतिङ ःथ्य;ति, ःथ्य;हैव स्यात् देवदत्तः पचतीति। ःथ्य;ह न स्यात्-देवदत्तः करोतीति।।
।। सर्ववचनमनादेरनुदात्तार्थमिति चेल्लुटि प्रतिषेधात्सिद्धम्।। सर्ववचनमनादेरनुदात्तार्थमिति चेत्तन्न। किं कारणम्?।। लुटि प्रतिषेधात्सिद्धम्। यदयं लुटि प्रतिषेधं शास्ति नलुडिति तज्ज्ञापयत्याचार्योऽनादेरप्यनुदात्तत्वं भवतीति।। कथं कृत्वा ज्ञापकम्?।। न हि लुडन्तमाद्युदात्तमस्ति। ।। अलोन्त्यविधिप्रसङ्गस्तु(1)।। अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्यविधिः प्राप्नोति। यत्र ह्यादिविधिर्नास्ति(2) अलोनत्य(स्य(3)) विधिना तत्र भवितव्यम्।। तत्र को दोषः?।। तिङ्ङतिङःथ्य;तीहैव स्यात्-देवदत्तयज्ञदत्तौ कुरुतः। ःथ्य;ह न स्यात्-देवदत्तः करोतीति।
।। लृटि प्रतिषेधात्सिद्धम्।। (लृटि प्रतिषेधात्सिद्धमेतत(3)) यदयं लृटि(4) प्रतिषेधं शास्ति यज्ज्ञापयत्याचार्योऽनन्त्यस्याप्यनुदात्तत्वं भवतीति।। कथं कृत्वा ज्ञापकम्?।। न हि लृडन्तमन्तोदात्तमस्ति।। ननु चेदमस्ति भोक्ष्ये ःथ्य;ति? ।। उक्तं वा।। किमुक्तम्?।। न वा पदाधिकारस्य विशेषणत्वा(5) दिति।। ःथ्य;दं तर्हि प्रयोजनम्-युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वाम्नावाविति(वक्ष्यति ते)(3) वाम्नावादयः सविभक्तिकस्य यथा स्युरिति।। एतदपि नास्ति प्रयोजनम्। पदस्येति हि वर्तते(6)। विभक्त्यन्तं च पदम्। तत्राऽन्तरेण सर्वग्रहणं सविभक्तिकस्य(1) भविष्यति।। भवेत्सिद्धं यत्र विभक्त्यन्तं पदं, यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति-ग्रामो वां दीयते, ग्रामो नौ दीयते। जनपदौ वां दीयते, जनपदो नौ दीयते।।
ननु च स्थग्रहणं क्रियते तेन सविभक्तिकस्यैव भवति।। अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम्।। किम्?।। श्रूयमाणविभक्तिविशेषणं(2) यथा विज्ञायेत-यत्र विभक्तिः श्रूयते तत्र यथा स्युः। ःथ्य;ह मा(3) भूवन् ःथ्य;ति युष्मत्पुत्रो ददाति ःथ्य;त्यस्मत्पुत्रो ददातीति।। समानवाक्ये निघातयुष्मदस्मदादेशाः।। समानवाक्य ःथ्य;ति

प्रकृत्य निघातयुष्मदस्मदादेशा वक्तव्याः।। किं प्रयोजनम्?।। नानावाक्ये मा भूवन्निति। अयं दण्डो, हराऽनेन। ओदनं पच, तव भविष्यति, मम भविष्यति।।

।। पश्यार्थैश्च प्रतिषेधः।। पश्यार्थैश्च प्रतिषेधः समानवाक्य ाःथ्य;ति प्रकृत्य वक्तव्यः। ाःथ्य;तरथा हि यत्रैव पश्यार्थानां(1) युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात्--ग्रामस्त्वां संप्रेक्ष्य संदृश्य समीक्ष्य गतः।। ग्रामो मां संप्रेक्ष्य संदृश्य(1) समीक्ष्य गतः। ाःथ्य;ह न स्यात्-ग्रामस्तव स्वं संप्रेक्ष्य संदृश्य(1) समीक्ष्य गतः।। ग्रामो(1) मम स्वं संप्रेक्ष्य संदृश्य समीक्ष्य गतः(1)।।

-8-1-26- सपूर्वायाः प्रथमाया विभाषा

।। युष्मदस्मदोरन्यतरस्यामनन्वादेशे।। युष्मदस्मदोरन्यतरस्यामनन्वादेश ाःथ्य;ति वक्तव्यम्। ग्रामे कम्बलस्ते स्वम्(2), ग्रामे कम्बलस्तव स्वम्। ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम्।। अनन्वादेश ाःथ्य;ति किमर्थम्?।। अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलो मे स्वम्।।

अपर आह।। सर्व एव वान्नावादयोऽनन्वादेशे विभाषा वक्तव्याः।। कम्बलस्ते स्वम् कम्बलस्तव स्वम्। कम्बलो मे स्वम् कम्बलो मम स्वम्।। अनन्वादेश ाःथ्य;ति किमर्थम्?।। अथो कम्बलस्ते स्वम् अथो कम्बलो मे स्वम्।। न तर्हीदानीमिदं वक्तव्यं,-सपूर्वायाः प्रथमाया(3) विभाषेति?।। वक्तव्यञ्च।। किं प्रयोजनम्?।। अन्वादेशार्थम्। अन्वादेशे विभाषा यथा स्यात्। अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलस्तव स्वम्। अथो ग्रामे कम्बलो मे स्वम्। अथो ग्रामे कम्बलो मम स्वम्।। (सपूर्वायाः प्रथमायाः)

-8-1-27- तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः

किमिदं तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणं-कुत्सनाभीक्ष्ण्ययोरर्थयोर्गोत्रादीनि भवन्ति तिङः पराण्यनुदात्तानीति, आहो स्विदनुदात्तविशेषणं-तिङः पराणि गोत्रादीनि कुत्सनाभीक्ष्ण्ययोरर्थयोरनुदात्तानि भवन्तीति?।। तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम्।। तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं क्रियते।।(किं प्रयोजनम्?(1))।। पाठविशेषणम्। पाठो विशेष्यते।। अनुदात्तविशेषणे ह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणम्।। अनुदात्तविशेषणे हि सत्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणं कर्तव्यं स्यात्-चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरिति। कुत्सनाभीक्ष्ण्ययोरिति वक्तव्यं स्यात्।।अनुदात्तग्रहणं वा।। अथ वा यान्यनुदात्तानीति वक्तव्यं स्यात्। तस्मात्सुष्ठूच्यते-तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणमनुदात्तविशेषणेह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणमनुदात्तग्रहणं वेति।।

-8-1-28- तिङ्ङतिङः

अतिङ ाःथ्य;ति किमर्थम्?।। पचति करोति।। अतिङ्वचनमनर्थकं समानवाक्याधिकारात्।। अतिङ्वचनमनर्थकम्।। किं कारणम्?।। समानवाक्याधिकारात्। समानवाक्य ाःथ्य;ति वर्तते, न च समानवाक्ये द्वे तिङन्ते स्तः।। (तिङ्ङतिङः)।।

-8-1-30- निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्

निपातैरिति किमर्थम्(1)?।। यत्कूजति शकटम्। यती(2) कूजति शकटी। यन् रथः(3) कूजति।। निपातैरिति शक्यमवक्तुम्। कस्मान्न भवति-यत्कूजति शकटम्, यती(2) कूजती शकटी, यन्नथः(3) कूजतीति?।। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।। नैषा परिभाषेह(4) शक्या विज्ञातुम्, ाःथ्य;ह हि दोषः स्याद्यावद्यथाभ्याम्। ाःथ्य;ह न स्यात्-यावदस्त्यत्रैषः(5) सरो जनेभ्यः कृणात्(6)। ।। चण्णिद्विशिष्टश्चेदर्थे।। चण्णिद्विशिष्टश्चेदर्थे द्रष्टव्यः। अयं च वै मरिष्यति। अयं चेन्मरिष्यति न च पितृभ्यः पूर्वेभ्यो दास्यति। अप्रायश्चित्तिकृतौ च स्याताम्।। (तिङ्ङतिङः)।।

-8-1-35- छन्दस्यनेकमपि साकाङ्क्षम्

अनेक(1)मिति किमुदाहरणम्?।। यदाह्यसौ मत्तो भवति अथ यत्तपति।। नैतदस्ति। एकमत्र(2)

हियुक्तमपरं यद्युक्तन्तत उभयोरप्यनिघातः।।

ाःथ्य;दं तर्हि अनृतं हि मत्तो वदति पाप्मा एनं विपुनाति(3)।। एकं खल्वपि अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनूदजयदिति।। (छन्दस्यनेकमपि साकाङ्क्षम्)।।

-8-1-39- तुपश्यपश्यताऽहैः पूजायाम्

पूजायामिति वर्तमाने पुनः पूजाग्रहणं किमर्थम्?।। अनिघातप्रतिषेधाऽभिसंबद्धं तत्(1)। यदि तदनुवर्तेत(2) ाःथ्य;हाऽप्यनिघातप्रतिषेधः प्रसज्येत। ाःथ्य;ष्यते चाऽत्र निघातप्रतिषेधः।। यथा पुनस्तत्र यावद्यथेत्येताभ्यामनिघाते प्राप्तेऽनिपातप्रतिषेध उच्यते ाःथ्य;हेदानीं केनाऽनिघाते प्राप्तेऽनिघातप्रतिषेध उच्येत(7)?।। ाःथ्य;हापि यद्वृत्तान्नित्यमित्येवमादिभिः।। (तुपश्यपश्य)

-8-1-46- एहि मन्ये प्रहासे लृट्

किमर्थमिदमुच्यते, न गत्यर्थलोटा लृडित्येव सिद्धम्?।। (।। नियमाऽर्थोऽयमारम्भः।।) नियमार्थोयमारम्भः-एहि मन्ये प्रहास एव यथा स्यात्।। क्व मा भूत्?।। एहि मन्ये रथेन यास्यसीति।। (एहि मन्ये प्रहासे लृट्)।।

8-1-47- जात्वपूर्वम्

किमिदमपूर्वग्रहणं जातुविशेषणं-----जातुशब्दादपूर्वात्तिङ्न्तमिति,आहो स्वित्तिङ्न्तविशेषणं जातुशब्दात्तिङ्न्तमपूर्वमिति?।। जातुविशेषणमित्याह।। कथं ज्ञायते?।। यदयं किंवृत्तं च चिदुत्तरमित्याह।। कथं कृत्वा ज्ञापकम्?।। अत्राऽप्यपूर्वमित्येतदनुवर्तते न चाऽस्ति संभवो यत्किंचवृत्तं च चिदुत्तरं स्यात्तिङ्न्तं चाऽपूर्वम्। अत्रापि तिङ्न्तविशेषणमेव स्यात्।। कथम्?।। किंवृत्ताच्चिदुत्तरात्तिङ्न्तमपूर्वमिति।। यत्तर्हिआहो उताहो चानन्तरमित्यनन्तरग्रहणं करोति।। एतस्याप्यस्ति वचने प्रयोजनम्।। किम् ?।। शेषप्रक्लृप्त्यर्थमेतत्स्यात्--- शेषे विभाषा ।। कश्च शेषः ?।। सान्तरं शेष ाःथ्य;ति अन्तरेणाऽप्यनन्तरग्रहणं प्रक्लृप्तः शेषः ।। कथम् ?।। अपूर्व ाःथ्य;ति वर्तते।।

-8-1-50- शेषे विभाषा

कश्च शेषः?।। सपूर्वः शेषः ।। ःथ्य;ति।। (शेषे विभाषा)।।

-8-1-51- गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्

।। लृटः प्रकृतिभावे कर्त्रन्यत्व उपसङ्ख्यानं कारकाऽन्यत्वात्।। लृटः प्रकृतिभावे कर्तुर्यत्कारकमन्यत्तस्याऽन्यत्व(2) उपसङ्ख्यानं कर्तव्यम्। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे।। किं पुनः कारणं न सिध्यति?।। कारकान्यत्वात्। न चेत्कारकं सर्वान्यदित्युच्यते सर्वान्यच्चाऽत्र कारकम्।। किं पुनः कारणं सर्वान्यत्प्रतिषेधेनाश्रीयते न पुनरसर्वाऽन्यद्विधानेनाश्रीयेत(3)?।। कर्त्ता चाऽत्राऽसर्वान्यस्ततः(1) कर्तृसामान्यात्सिद्धम्।। कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदेऽन्यसामान्ये प्रकृतिभावप्रसङ्गः ।। कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदे-कर्तृभेदे-अन्यस्मिन्कारकसामान्ये(3) प्रकृतिभावः प्राप्नोति। आहर देवदत्त शालीन्यज्ञदत्त एनान्भोक्ष्यते।। एवं तर्हि-व्यक्तमेव पठितव्यं न चेत्कर्ता सर्वाऽन्य(4) ःथ्य;तीति।। न चेत्कर्ता सर्वान्य ःथ्य;ति चेदन्याऽभिधाने प्रतिषेधमेके।। न चेत्कर्ता सर्वान्य ःथ्य;ति चेदन्याभिधाने प्रतिषेधमेके ःथ्य;च्छन्ति। उह्यन्तां देवदत्तेन शालयो यज्ञदत्तेन(5) भोक्ष्यन्ते ःथ्य;ति प्राप्नोति। भोक्ष्यन्तःथ्य;ति चेष्यते।। सिद्धं तु तिङोरेकद्रव्याऽभिधानात्।। सिद्धमेतत्।। कथम्?।। तिङोरेकद्रव्याभिधानात्। यत्र तिङ्भ्यामेकं द्रव्यमभिधीयते(6)तत्रेति वक्तव्यम्।। (गत्यर्थलोटा)

-8-1-55- आम एकान्तरमामन्त्रितमनन्तिके

कस्यायं प्रतिषेधः?।। आम एकान्तर ऐकश्रुत्यप्रतिषेधः ।। आम एकान्तर ऐकश्रुत्यस्याऽयं प्रतिषेधः।। कथं पुनरप्रकृतस्याऽसंशब्दितस्यैकश्रुत्यस्य प्रतिषेधः शक्यो विज्ञातुम्?।। अनन्तिक ःथ्य;त्युच्यते। अनन्तिक च किम्?।। दूरम् ।। दूरात्संबुद्धौ चैकश्रुतिरुच्यते(1)।। अस्ति प्रयोजनमेतत्?।। किं तर्हीति।। निघातप्रसङ्गस्तु।। निघातस्तु प्राप्नोति-- आम् भो देवदत्ता3। आमन्त्रितस्या(2)ऽनुदात्तत्वं प्राप्नोति सिद्धं तु प्रतिषेधाधाधिकारे प्रतिषेधवचनात्। ।। सिद्धमेतत्।। कथम्?।। प्रतिषेधाधिकारे(प्रतिषेधवचनात्(2))।

।। प्रतिषेधाधिकारेट प्रतिषेधवचनसार्मथ्यान्निघातो न भविष्यति ।। नैव वा पुनरत्रैकश्रुत्यं प्राप्नोति।। किं कारणम्?।। अनन्तिक ःथ्य;त्युच्यते, अन्यच्च दूरमन्यदनन्तिकम्।। यद्येवं प्लुतोऽपि तर्हि न प्राप्नोति, प्लुतोऽपि हि दूरादित्युमच्यते?।। ःथ्य;ष्टमेवैतत्संगृहीतम्, आम् भो देवदत्ता ःथ्य;त्येव भवितव्यम्।।

-8-1-56- यद्धितुपरं छन्दसि

किमर्थमिदमुच्यते यदायैरेव(1) सर्वैरेतैरनिघातकारणैर्योगेऽनिघात(2) उच्यते, यथैव पूर्वैर्योगे एवं परैरपि?।। अत उत्तरं पठति।। यद्धितुपरस्य च्छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थः(3)।। यद्धितुपरस्य च्छन्दस्यनिघात उच्यते।। (किं प्रयोजनम्?।।)ठअन्यपरप्रतिषेधार्थः। अन्यपरस्य प्रतिषेधो मा भूदिति। जाये स्वो रोहावेहि(1)।। अथेदानीं रोहावेत्यनेन युक्तेएही त्यस्य कस्मान्न भवति?, लोट्चगत्यर्थलोटा युक्त ःथ्य;ति प्राप्नोति।। न हिरुहिर्गत्यर्थः।।कथं ज्ञायते?।। यदयं गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चे(1)ति पृथग्रुहिग्रहणं करोति।। यदि न गत्यर्थः,-आरोहन्ति हस्तिनं मनुष्याः, आरोहयति हस्ती स्थलं मनुष्यान्,-गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णाविति कर्मसंज्ञा न प्राप्नोति। तस्मान्नैतच्छक्यं वक्तुं न रुहिर्गत्यर्थःथ्य;ति।। कस्मात्तर्हि रोहावेत्यनेन युक्ते एहीत्येतस्य न भवति?।। छान्दसत्वात्।। (यद्धितुपरं छन्दसि)।।

-8-1-57- चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः

।। आम्रेडितेष्वगतेः(1) सगतिरपि तिङित्यत्र गतिग्रहणे उपसर्गग्रहणम्।। आम्रेडितेष्वगतेः सगतिरपि तिङित्यत्र गतिग्रहणे उपसर्गग्रहणं द्रष्टव्यम्(2)। ःथ्य;ह मा भूत्। शुक्लीकरोति चन कृष्णीकरोति चन । यत्काष्ठं(3) शुक्लीकरोति यत्काष्ठं(3) कृष्णीकरोति।। अपर आह - सर्वत्रैवाष्टमिके गतिग्रहणे उपसर्गग्रहणं द्रष्टव्यं(2)-गतिर्गतौतिङि चोदात्तवतिवर्जमिति।। (चनचिदि)

-8-1-66- यद्वृत्तान्नित्यम्

यद्वृत्तादित्युच्यते तत्रेदं न सिध्यति-यः पचति यं पचति येन पचतीति(2)।। (।। वृत्तग्रहणेन तद्विभक्तयन्तम्।।) वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्।। कथं यतरः पचति यतमः पचतीति।। (।। डतरडतमौ च।।) डतरडतमौ च प्रतीयात्।। कथं यदा ददातीति?।। एषोऽपि विभक्तिसंज्ञः।। कथं यावदस्यस्त्यत्रैषः(2) सरो जनेभ्यः कृणवत्।। यावद्यथाभ्यामित्येवं भविष्यति।। कथं यद्ग्रङ्वायुः पवतेयत्कामास्ते जुहुमः।। एवं तर्हि यदस्मिन् वर्तते यद्वृत्तं, यद्वत्तादित्येवं भविष्यति।। वा याथाकाम्ये।। वा याथाकाम्य ःथ्य;ति वक्तव्यम्। यत्र क्व च न यजते तद्देवयजन(3) एव यजते।।

-8-1-67- पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः(4)

।।पूजितस्याऽनुदात्तत्वे काष्ठादिग्रहणम्।। पूजितस्यानुदात्तत्वे काष्ठादिग्रहणं कर्तव्यम्। काष्ठादिभ्यः पूजनादिति वक्तव्यम्।। ःथ्य;ह मा भूत्-शोभनोऽध्यापकः। ।। मलोपवचनं च।। मलोपश्च वक्तव्यः। दारुणाध्यापकः(1)। दारुणाभिरूपः(2)।। (पूजनात्पूजितमनुदात्तम्)।

-8-1-68- सगतिरपि तिङ्

सगतिग्रहणं किमर्थम्?।। सगतिग्रहणमपदत्वात्(3)।। सगतिग्रहणं क्रियते।। (किं कारणम्?)।। अपदत्वात्। पदस्येति वर्तते च(1) सगतिकं पदं भवति।। उत्तरार्थञ्ञ्च।। उत्तरार्थं चापि(2) सगतिग्रहणं क्रियते-कुत्सने च सुप्यगोत्रादौ। सगतिरपि पचति(3)। प्रपचति पूति।।

अथाऽपिग्रहणं किमर्थम्?।। अगतिकस्यापि यथा स्यात्-यत्काष्ठा पचतीति। नैतदस्ति प्रयोजनं सिद्धं, पूर्वेणाऽगतिकस्य।। न सिध्यति। मलोपाभिसम्बद्धं तत्। यदि तदनुवर्तते(4) ःथ्य;हापि मलोपः प्रसज्येत-दारुणं पचतीति(।। उत्तरार्थञ्ञ्च(3)।।) उत्तरार्थं चापि ग्रहणं क्रियते-कुत्सने च सुप्यगोत्रादौ। अगतिरपीति। पचति पूतीति।। तिङ्ङिघातात्पूजनात्पूजितमनुदात्तं विप्रतिषेधेन।। तिङ्ङिघातात्पूजनात्पूजितमित्येतद्भवति(5) विप्रतिषेधेन। तिङ्ङिघातस्याऽवकाशः--देवदत्तः पचति। पूजनात्पूजितमित्यस्यावकाशः-काष्ठाध्यापकः। (काष्ठाभिरूपकः) । ःथ्य;होभयं प्राप्नोतिकाष्ठा पचति। पूजनात्पूजितमित्येतद्भवति विप्रतिषेधेन।। कः पुनरत्र विशेषस्तेन वा सत्यनेन वा?।। अयमस्ति विशेषः।

साऽपवादकः स विधिः; अयं निरपवादकः। यदि हि तेन स्यादिह न स्यात्-यत्काष्ठा पचति।।(सगति)
-8-1-69- कुत्सने च सुप्यगोत्रादौ
।। सुपि कुत्सने क्रियायाः।। क्रियायाः कुत्सन ःथ्य;ति वक्तव्यम्। कर्तुः(1) कुत्सने मा भूत्। पचति
पूतिः (गिरति(2) पूतिः(3))।। पूतिश्च(4) चानुबन्धः।। पूतिश्च चानुबन्धो द्रष्टव्यः। पचति पूति।।
।। विभाषितं चापि(4) बह्वर्थम्।। विभाषितं चापि बह्वर्थं द्रष्टव्यम्। पच्न्ति(5) पूति। पचन्ति(6) पूतिः।।
-8-1-70- गतिर्गतौ
गताविति किमर्थम्?।। प्रपचति। प्रकरोति।। गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं तिङ्यवधारणात्।। गतेरनुदात्तत्वे गतिग्रहणमनर्थकम्।। किं कारणम्?।। तिङ्यवधारणात्। तिङि चोदात्तवतीत्येतन्नियमार्थं भविष्यति।तिङ्युदात्तवत्येव गतिरनुदात्तो भवती(1)ति।।(।। छन्दोर्थन्तु(2)।।)।। छन्दोऽर्थं तर्हि गतिग्रहणं कर्तव्यम्। छन्दसि गतौ परतोऽनुदात्तत्वं(1) यथा स्यान्मन्द्रशब्दे मा भूत्। आ मन्द्रैरिन्द्र हरिभिर्याहि मयूरः(2) रोमभिः।। छन्दोऽर्थमिति चेन्नाऽगतित्वात्।। छन्दोऽर्थमिति चेत्तन्न।। किं कारणम्?।। अगतित्वात्-। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः। न चात्राऽऽङो मन्द्रशब्दं प्रति क्रियायोगः।। किं तर्हि?।। याहिशब्दं प्रति।। ःथ्य;हापि तर्हि न प्राप्नोति-अभ्युद्धरति समुदानयति(3) उपसमादधाति ःथ्य;ति (4)।। अत्रापि नाऽभेरुदं प्रति क्रियायोगः।। किं तर्हि?।। हरतिं प्रति क्रियायोगः।। नैषः दोषः। उदं प्रति(1) क्रियायोगः।। कथम्?।। उत्-हरतिक्रियां विशिनष्टि। उदा विशिष्टाम् अभिर्विशिनष्टि। तत्र यत्क्रियायुक्ताःथ्य;ति भवत्येव सङ्घातं प्रति क्रियायोगः।। ःथ्य;हापि तर्हि मन्द्रसाधना क्रियाऽऽङाऽभिव्यज्यते(2)-आयाहि मन्द्रैरिति।। ननु(3)पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति ?।। साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि, अभिनिर्वृत्तस्य चोपसर्गेण(4) विशेषः शवयो वक्तुम्।। सत्यमेवमेतत्। यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरीकृत्य(1) धातुः साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयं, यो हि मन्यते-पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति। आस्यते गुरुणेत्यकर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यात्?।।
गतिना तु(3) विशिष्टस्य गतिरेव विशेषकः।
साधने केन ते न स्याद्बाह्यमाभ्यन्तरो हि सः।।1।।
-8-1-71- तिङि चोदात्तवति
तिङ्ग्रहणं किमर्थम्?।। तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्।। तिङ्गहणं क्रियते।। (किं प्रयोजनम्(1)?)। उदात्तवतः परिमाणार्थम्। तिङ्युदात्तवति यथा स्यान्मन्द्रशब्दे मा भूत्-आ मन्द्रैरिन्द्र हरिभिर्याहि। ।। यद्योगाद्गतिः(2)।। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चाङो मन्द्रशब्दं प्रति क्रियायोगः।। किं तर्हि?।। यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः स्यात्। यत्प्रकरोति। तस्मात्तिङ्ग्रहणं कर्तव्यम्।।
यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति,- प्रपचतितराम् ,प्रजल्पतितराम्। असति पुनस्तिङ्ग्रहणे क्रियाप्रधानमाख्यातं तस्मादतिशये तरबुत्पद्यते,(1) तरबन्तात्स्वार्थे आम्, तत्र यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत ःथ्य;ति भवत्येतं(2) सङ्घातं प्रति क्रियायोगः। तस्मान्नार्थस्तिङ्ग्रहणेन।। कस्मान्न भवति-आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः?।। यद्योगाद्गति(3)रिति। (यद्योगाद्गतिस्तं(4) प्रति गत्युपसर्गसंज्ञे भवतो न चाङो मन्द्रशब्दं प्रति क्रियायोगः)।। ननु चोक्तं-यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिरिति ।। नैषः दोषः । यत्क्रियायुक्ता ःथ्य;ति नैवं विज्ञायते यस्य क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत ःथ्य;ति।। कथं तर्हि?।। या क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत ःथ्य;ति।।
-8-1-72- आमन्त्रितं पूर्वमविद्यमानवत्
वत्कारणं किमर्थम्?।। स्वाश्रयमपि यथा स्यात्। आम् भो देवदत्तेत्यत्र(1) आम एकान्तरमामन्त्रितमनन्तिक ःथ्य;त्येकान्तरता यथा स्यात्।
।।पूर्वं प्रति विद्यमानत्वादुत्तरत्रानन्तर्याप्रसिद्धिः।।
पूर्वं प्रति विद्यमानत्वादुत्तरत्रानन्तर्यस्याऽप्रसिद्धिः(2) स्यात्। ःथ्य;मं मे गङ्गे यमुने सरस्वति शुतुद्रि(3)। गङ्गेशब्दोऽयं(4) यमुनेशब्दं(5) प्रत्यविद्यमानवद्भवति। (न तु(3) मेशब्दं प्रति)। तत्रामन्त्रितस्य पदात्परस्येत्यनुदात्तत्वं न स्यात्।। सिद्धं तु पदपूर्वस्येति वचनात्।। सिद्धमेतत्।। कथम्?।। पदपूर्वस्येति वचनात्। पदपूर्वस्य चामन्त्रितस्याऽविद्यमानवद्भावो भवतीति वक्तव्यम्।।
कानि पुनरस्य योगस्य प्रयोजनानि? ।। अविद्यमानवत्त्वे प्रयोजनमामन्त्रितयुष्मदस्मत्तिङ्निघाताः(6)।। (अविद्यमानवत्त्वे(3) आमन्त्रितयुष्मदस्मत्तिङ्निघाताः प्रयोजनम्)।। आमन्त्रितस्य पदात्परस्यानुदात्तो भवतीतीहैव
भवतिपचसि देवदत्त। देवदत्त यज्ञदत्तेत्यत्र न भवत्यविद्यमानवत्त्वादामन्त्रितस्य। युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वानावौ ःथ्य;तीहैव भवति-ग्रामो वां स्वम् जनपदो नौ स्वम्। देवदत्तयज्ञदत्तौ युवयोः स्वमित्यत्र न भवत्यविद्यमानवत्त्वादामन्त्रितस्य। तिङ्ङतिङ ःथ्य;तीहैव भवति-देवदत्तः पचतीति(1)। देवदत्त पचसीत्यत्र न भवत्यविद्यमानवत्त्वादामन्त्रितस्य।। पूजायामनन्तरप्रतिषेधः(1)।। पूजायामनन्तरप्रतिषेधः प्रयोजनम्। यावत्पचति शोभनम्। यावदेवदत्त पचसीत्यत्रापि सिद्धं भवति।। जात्वपूर्वम्।। जात्वपूर्वं प्रयोजनम्। जातु पचति। देवदत्त जातु पचसीत्यत्रापि सिद्धं भवति।। आहो उताहो चानन्तरविधौ(1)।। आहो उताहो चानन्तरविधौ प्रयोजनम्। आहो(2) पचसि, उताहो पचसि। आहो देवदत्त पचसि उताहो देवदत्त पचसीत्यत्रापि सिद्धं भवति। ।। आम एकान्तरविधौ।। आम एकान्तरविधौ प्रयोजनम्। आम् पचसि देवदत्त। आम् भोः पचसि देवदत्तेत्यत्रापि(1) सिद्धं भवति। अविद्यमानवत्त्वादामन्त्रितस्य(1)।। (आमन्त्रितं पूर्वमविद्यमानवत्)।।
-8-1-73- नामन्त्रिते समानाधिकरणे सामान्यवचनम्
ःथ्य;ह कस्मान्न भवति-अघ्न्ये देवि सरस्वति ःथ्य;डे काव्ये विहव्ये एतानि ते अघ्न्ये नामानि?।। योगविभागः करिष्यते-नामन्त्रिते समानाधिकरणे सामान्यवचनम्। ततो विभाषितं विशेषवचन ःथ्य;ति।। (नामन्त्रिते समानाधिकरणे)।।
-8-1-74- विभाषितं विशेषवचने
ःथ्य;ह कस्मान्न भवति-ब्राह्मण वैयाकरण?।। बहुवचनमिति वक्ष्यामि।। सामान्यवचनमिति शक्यमवक्तुम्।। कथम्?।। विभाषितं विशेषवचन

ः‌थ्य;त्युच्यते, तेन यत्प्रति विशेषवचनमित्येतद्भवति तस्य भविष्यति।। किं च प्रत्येतद्भवति?।। सामान्यवचनम्। अपर आह-विशेषवचन ः‌थ्य;ति शक्यमवक्तुम्।। कथम्?।। सामान्यवचनं विभाषितमित्युच्यते तेन यत्प्रति सामान्यवचनमित्येतद्भवति(तस्य भविष्यति(1))।। किं च प्रत्येतद्भवति?।। विशेषवचनम्। सामान्यवचनं(1) विभाषितं विशेषवचन ः‌थ्य;ति।।

।। ः‌थ्य;ति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये अष्टमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्।। पादश्च समाप्तः।।

-9-9-999-

# महाभाष्यम्/अष्टमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/nn5

< महाभाष्यम्

8-2

-8-2-1- पूर्वत्राऽसिद्धम्

येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो वेदितव्यः।। यदि सपादायां सप्ताध्याय्यामयं पादोनोऽध्यायोऽसिद्ध ःथ्य;त्युच्यते य(1) ःथ्य;ह सप्तमीनिर्देशाः पञ्चमीनिर्देशाः षष्ठीनिर्देशाश्चोच्यन्ते तेऽप्यसिद्धाः स्युः।। तत्र को दोषः?।। झलो झलि ह्रस्वादङ्गात् संयोगान्तस्य लोपःथ्य;त्येतेषां निर्देशानामसिद्धत्वात्तस्मिन्निति निर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्य षष्ठी स्थानेयोगा ःथ्य;त्येताः परिभाषा न प्रकल्पेरन्।। नैषः दोषः, यद्यपीदं तत्राऽसिद्धं तत्त्विह सिद्धम्।। कथम्?।। कार्यकालं संज्ञापरिभाषम्।। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। झलो झलि ह्रस्वादङ्गात् संयोगान्तस्य लोपः। उपस्थितमिदं भवति,-तस्मिन्निति निर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्य षष्ठी स्थानेयोगेति।। यदि कार्यकालं संज्ञापरिभाषमित्युच्यते ःथ्य;यमपि परिभाषाऽस्ति विप्रतिषेधे परमिति। साऽपीहोपतिष्ठेत।। तत्र को दोषः?।। विस्फोर्यम् अवगोर्यमिति। गुणादीर्घत्वं स्याद्विप्रतिषेधेन।। अत उत्तरं पठति-।। पूर्वत्राऽसिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य।। पूर्वत्रासिद्धे नास्ति विप्रतिषेधः।। किं कारणम्?।। अभावादुत्तरस्य। द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति न च पूर्वत्राऽसिद्धे परं पूर्वं प्रति भवति।। यद्येवं दोग्धा दोग्धुं,-घत्वस्याऽसिद्धत्वाड्ढत्वं प्राप्नोति।। काष्ठतट् कूटतट्। संयोगादिलोपस्याऽसिद्धत्वात्संयोगान्तलोपः प्राप्नोति। ।। अपवादो वचनप्रामाण्यात्।। झ्रअपवादो वचनप्रामाण्यात्(1)ट। अनवकाशावेतौ(2) वचनप्रामाण्याद्भविष्यतः। तस्मात्कार्यकालं संज्ञापरिभाषमिति न दोषः।। पूर्वत्रासिद्धमधिकारः।। पूर्वत्राऽसिद्धमित्यधिकारोऽयं द्रष्टव्यः।। किं प्रयोजनम्? ।। परस्य(3) परस्य पूर्वत्र पूर्वत्राऽसिद्धविज्ञानार्थम्(4)।। झ्रपरस्य परस्य पूर्वत्र पूर्वत्राऽसिद्धविज्ञानार्थम्ट। परः परो योगः पूर्वं पूर्वं योगं प्रत्यसिद्धो यथा स्यात्। ।। अनधिकारे हि समुदायस्य समुदायेऽसिद्ध(त्व5)विज्ञानम्।। अनधिकारे हि सति समुदायस्य समुदायेऽसिद्धत्वं विज्ञायेत।। तत्र को दोषः?।। तत्राऽयथेष्टप्रसङ्गः।। तत्राऽयथेष्टं प्रसज्येत। गोधुङ्भ्यान् गुडलिण्मानिति,-घत्वढत्वयोः कृतयोर्झय ःथ्य;ति वत्वं प्रसज्येत।।

।। तस्मादधिकारः।। तस्मादधिकारोऽयं द्रष्टव्यः।

अथाऽसिद्धवचनं(1) किमर्थम्।। असिद्धवचनम् उक्तम्।। झ्रअसिद्धवचने(2) उक्तम्ट।। किमुक्तम्(3)।। तत्र(4) तावदुक्तं-षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति। एवमिहाऽपि पूर्वत्राऽसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणावार्थं(5) च। आदेशलक्षणप्रतिषेधार्थं तावत्--राजभिः तक्षभिः राजभ्यां तक्षभ्याम् राजसु तक्षसु ःथ्य;ति। नलोपे कृतेऽत ःथ्य;त्यैस्भावादयः प्राप्नुवन्ति। असिद्धत्वान्न भवन्ति। उत्सर्गलक्षणभावार्थं च-अमुष्मै अमुष्मात् अमुष्य अमुष्मिन् ःथ्य;ति। अत्र मुभावेऽत ःथ्य;ति स्मायादयो न प्राप्नुवन्ति, असिद्धत्वाद्भवन्ति। सुपर्वाणौ। सुपर्वाणः। णत्वे कृते नोपधाया ःथ्य;ति दीर्घत्वं न प्राप्नोति। असिद्धत्वाद्भवति।

-8-2-2- नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति

सुब्विधिं प्रति नलोपोऽसिद्धो भवतीत्युच्यते भवेदिह राजभिः तक्षभिः ःथ्य;ति, नलोपे कृतेऽतःथ्य;त्यैस्भावो न स्यात्। ःथ्य;ह तु खलु राजभ्यां तक्षभ्यां राजसु तक्षसु ःथ्य;ति,-नलोपे कृते दीर्घत्वैत्त्वे प्राप्नुतः।। नैषः दोषः। ।। सुब्विधिरिति(1) सर्वविभक्त्यन्तः समासः।। झ्रसुब्विधिरिति सर्वविभक्त्यन्तः(2) समासःट। सुपो विधिः सुब्विधिः, सुपि विधिः सुब्विधिरिति।

अथ संज्ञाविधौ किमुदाहरणम्?। पञ्च सप्त।। पञ्च सप्तेत्यत्र नलोपे कृते ष्णान्ता षडिति षट्संज्ञा न प्राप्नोति। असिद्धत्वाद्भवति।। संज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वाल्लोपस्य।। संज्ञाग्रहणं चाऽनर्थकम्।। किं कारणम्?।। तन्निमित्तत्वाल्लोपस्य। नाऽकृतायां षट्संज्ञायां जश्शसोर्लुक्,न चाऽकृते लुकि पदसंज्ञा, न चाऽकृतायां पदसंज्ञायां नलोपः प्राप्नोति। तदेतदानुपूर्व्या सिद्धं भवति।। ःथ्य;दं तर्हि प्रयोजनं पञ्चभिः सप्तभिः ःथ्य;ति। षट्त्रिचतुर्भ्यो हलादिः झल्युपोत्तममित्येष स्वरो यथा स्यात्।।

।। स्वरेऽवधारणाच्च(1)।। स्वरेऽवधारणाच्च सञ्ज्ञाग्रहणमनर्थकम्। स्वरेऽवधारणं क्रियते-स्वरविधिं प्रतीति। क्रियते-स्वरविधिं प्रतीति।। ःथ्य;दं(1) तर्हि--दण्डिदत्तौ दत्तदण्डिनौ(1)।

तुग्विधौ किमुदाहरणम्?।। वृत्रहभ्याम् वृत्रहभिः। नलोपे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोत्यसिद्धत्वान्न भवति।। तुग्विधौ चोक्तम्(2)।। (तुग्विधौ चोक्तम्(3))।। किमुक्तम्?।। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति।। ःथ्य;दं तर्हि प्रयोजनंकृतीति वक्ष्यामीति। ःथ्य;ह मा भूत्-ब्रह्महच्छत्रम्। भ्रूणहच्छाया(1)। न ह्येषे संनिपातलक्षणो नलोपः।।

-8-2-3- न मु ने

ःथ्य;ह ने यत्कार्यं प्राप्नोति तत्प्रति मुभावो नाऽसिद्ध ःथ्य;त्युच्यते नाभावश्चैव तावन्न प्राप्नोति।। एवं तर्हि,-।। न मु टादेशे।। न मु टादेश ःथ्य;ति वक्तव्यम्।। किमिदं टादेश ःथ्य;ति?।। टाया आदेशः टादेशः।। यदि तर्हि टाया आदेश ःथ्य;त्युच्यते टायामादेशेऽप्रतिषिद्धं(4) भवति।। तत्र को दोषः?।। अमुना ःथ्य;त्यत्र मुभावस्याऽसिद्धत्वादतो दीर्घो यञ्त्रि सुपि चेति दीर्घत्वं प्रसज्येत।। नैषः दोषः झ्रठटादेश ःथ्य;ति(3)ट सर्वविभक्त्यन्तोऽयं समासः-टाया आदेशः टादेशः, टायामादेशः टादेश ःथ्य;ति।। सिध्यति। सूत्रं तर्हि भिद्यते।। यथान्यासमेवाऽस्तु।। ननु चोक्तं ने यत्कार्यं प्राप्नोति तस्मिन्मुभावो नासिद्ध ःथ्य;त्युच्यते नाभावश्चैव तावन्न प्राप्नोतीति।। नैषः दोषः। ःथ्य;हेङ्गितेन चेष्टितेन निमिषितेन महता वा(1) सूत्रनिबन्धेनाचार्याणामभिप्रायो लक्ष्यते। एतदेव(2) ज्ञापयत्याचार्यो(3) भवत्यत्र नाभावःथ्य;ति यदयं ने परतोऽसिद्धत्वप्रतिषेधं शास्ति।। अथ वा द्विगता(4) अपि हेतवो भवन्ति। तद्यथा-आम्राश्च सिक्ताः पितरश्च प्रीणिता

भवन्ति। तथा वाक्यान्यपि द्विगतानि दृश्यन्ते,-श्वेतो धावति, अलंबुसानां यातेति,(5) अथ वा वृद्धकुमारीवाक्यव(4)दिदं द्रष्टव्यम्। तद्यथा-वृद्धकुमारीन्द्रेणोक्ता वरं वृणीष्वेति, सा वरमवृणीत-पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति। न च तावदस्याः पतिर्भवति कुतः पुत्राः, कुतो वा गावः, कुतो धान्यम्?।। तत्राऽनयैकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं सङ्गृहीतं भवति। एवमिहापि नेऽसिद्धत्वप्रतिषेधं ब्रुवता नाभावोऽपि सङ्गृहीतो भवति।।झ्न मु नेट

-8-2-4- उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य

।। यण्स्वरो यणादेशे स्वरितयणः स्वरितार्थम्।। यण्स्वरो यणादेशे सिद्धो वक्तव्यः।। किं प्रयोजनम्?।। स्वरितयणः स्वरितार्थम् । स्वरितयणः स्वरितत्वं यथा स्यात्, -खलप्व्यटति खलप्व्यश्नाति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। आहाऽय-स्वरितयणःथ्य;ति, न चाऽस्ति सिद्धः(1) स्वरितः, तत्राश्रयात्सिद्धत्वं भविष्यति(2)।। आश्रयात्सिद्धत्वमिति(3) चेदुदात्तात्स्वरिते दोषः।। आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते दोषो भवति-दध्याशा(4) मध्वाशा।। एवं तर्हि योगविभागः करिष्यते। झ्ठउदात्तयणः(5)ट उदात्तयणः परस्याऽनुदात्तस्य स्वरितो भवति। ततः स्वरितयणः। स्वरितयणश्च(6) परस्यानुदात्तस्य स्वरितो भवति। उदात्तयण ःथ्य;त्येव।। अथ वा स्वरितग्रहणं न करिष्यते।। केनेदानीं स्वरितयणः परस्याऽनुदात्तस्य स्वरितो भविष्यति?।। उदात्तयण ःथ्य;त्येव।। ननु च स्वरितयणा व्यवहितत्वान्न प्राप्नोति।। स्वरविधौ व्यञ्जनमविद्यमानवदिति नास्ति व्यवधानम्।। अथ वा नैवं विज्ञायते- स्वरितस्य यण्, स्वरितयण्,स्वरितयण ःथ्य;ति।। कथं तर्हि?।। स्वरिते यण् स्वरितयण्,स्वरितयण ःथ्य;ति।।

-8-2-6- स्वरितो वाऽनुदात्ते पदादौ

स्वरितग्रहणं(1)-शक्यमकर्तुम्।। कथम्?।। अनुदात्ते परतः पदादौवा(2) उदात्त ःथ्य;त्येव सिद्धम्।। केनेदानीं स्वरितो भविष्यति-गाङ्गेऽनूपे(2) ःथ्य;ति?।। आन्तर्यत उदात्तानुदात्तयोरेकादेशः स्वरितो भविष्यति।। ःथ्य;दं तर्हि प्रयोजनं तेन र्वज्यमानता मा भूदिति(3)।। अथ क्रियमाणेऽपि स्वरितग्रहणे यः सिद्धः स्वरितस्तेन र्वज्यमानता कस्मान्न भवति - कन्याऽनूपे ःथ्य;ति?।। बहिरङ्गलक्षणत्वात्। असिद्धं बहिरङ्गमन्तरङ्ग ःथ्य;त्येवं न भविष्यति।। यथैव तर्हि क्रियमाणे स्वरितग्रहणे(1) यः सिद्धः स्वरितस्तेन र्वज्यमानता न भवत्येवमक्रियमाणेऽपि न भविष्यति। तस्मान्नार्थः स्वरितग्रहणेन। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण ःथ्य;त्येव सिद्धम्।। एकादेशस्वरोऽन्तरङ्गः(अयवायावेकादशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम्(2))।। झ्एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः।। किं प्रयोजनम्?।। अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम्(3)।।ट ।। अय्-वृक्ष ःथ्य;दम् प्लक्ष ःथ्य;दम्।

उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त ःथ्य;त्येतद्भवति। तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यत उदात्तस्य उदात्तोऽयादेशो यथा स्यात्।। झ्अय्(1)ट।। अवादेशो नास्ति। आय्-कुमार्या ःथ्य;दम्

किशोर्या ःथ्य;दम्(1)। उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त ःथ्य;त्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यत उदात्तस्य उदात्त आयादेशो यथा स्यात्।। नैतदस्ति प्रयोजनं, एकादेशे कृते उदात्तयणो हल्पूर्वादित्युदात्तो भविष्यति।। ःथ्य;दमिह संप्रधार्यम्-उदात्तत्वं क्रियतामेकादेश ःथ्य;ति, किमत्र कर्त्तव्यम्?। परत्वादुदात्तत्वम्।। नित्य एकादेशः। कृतेऽप्युदात्तत्वे(1) प्राप्नोत्यकृतेऽपि प्राप्नोति।। एकादेशोऽप्यनित्यः(2)। अन्यथा--स्वरस्य कृते उदात्तत्वे प्राप्नोत्यन्यथास्वरस्याऽकृते, स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति।। अन्तरङ्गस्तर्ह्येकादेशः।। काऽन्तरङ्गता?।। वर्णावाश्रित्यैकादेशः पदस्योदात्तत्वम्।। एवं तर्हीदमिह संप्रधार्यम्-आट् क्रियतामुदात्तत्वमिति; किमत्र कर्त्तव्यम्?।। परत्वादाडागमः।। नित्यमुदात्तत्वम्, कृतेऽप्याटि प्राप्नोत्यकृतेऽपि प्राप्नोति।। आडपि नित्यः,-कृतेप्युदात्तत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति।। अनित्य आट्। अन्यथा स्वरस्य कृते उदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याऽकृते। स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति।। उदात्तत्वमप्यनित्यम्-अन्यस्य कृते आटि प्राप्नोत्यन्यस्याऽकृते प्राप्नोति। शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादाडागमः। आटि कृतेऽन्तरङ्ग एकादेशः।झ्आय्(1)ट।

अव्-वृक्षाविदम्। प्लक्षाविदम्(1)।। उदात्तनुदात्तयोरेकादेशः। तस्यैकादेश उदात्तेनोदात्त ःथ्य;त्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यत उदात्तस्योदात्त आवादेशो यथा स्यात्। झ्आव्(1)ट।।

एकादेशस्वरः-गाङ्गेऽनूप ःथ्य;ति। उदात्तानुदात्तयोरेकादेशः। तस्यैकादेश उदात्तेनोदात्त ःथ्य;त्येतद्भवति, तस्य सिद्धत्वं वक्तव्यं, स्वरितो वानुदात्ते पदादावित्येष(2) स्वरो यथा स्यात्। झ्एकादेशस्वरःट।। शतृस्वरः--तुदती नुदती। उदात्तानुदात्तयोरेकादेशः, तस्यैकादेश उदात्तेनोदात्त ःथ्य;त्येतद्भवति तस्य सिद्धत्व वक्तव्यम्। शतुरनुमोऽनद्यजादिरन्तोदात्ता(3)दित्येष स्वरो यथा स्यात्।। नैतदस्ति प्रयोजनम्-आचार्यप्रवृत्तिर्ज्ञापयति सिद्ध एकादेशस्वरः शतृस्वरे ःथ्य;ति, यदयमनुम ःथ्य;ति प्रतिषेधं शास्ति।। कथं कृत्वा ज्ञापकम्?।। न ह्यन्तरेणोदात्तानुदात्तयोरेकादेशं शात्रन्तं सनुम्कमन्तोदात्तमस्ति।।

ननु चेदमस्ति यान्ती वान्तीति।। एतदपि निघाते कृते नाऽन्तरेणोदात्तानुत्तदायोरेकादेशं शत्रन्तं सनुम्कमन्तोदात्तं(1) भवति।। ःथ्य;दमिह संप्रधार्य-निघातः क्रियतामेकादेश ःथ्य;ति, किमत्र कर्तव्यम्?।। परत्वान्निघातः।। नित्य एकादेशः,-- कृतेऽपि निघाते प्राप्नोत्यकृतेऽपि प्राप्नोति।। एकादेशोऽप्यनित्यः। अन्यथास्वरस्य कृते निघाते प्राप्नोत्यन्यथास्वरस्याऽकृते निघाते। स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति।। अन्तरङ्गस्तर्ह्येकादेशः।। काऽन्तरङ्गता?।। वर्णावाश्रित्यैकादेशः पदस्य निघातः।। निघातोऽप्यन्तरङ्गः।। कथम्?।। उक्तमेतत्,(2)-पदग्रहणं परिमाणार्थमिति। उभयोरन्तरङ्गयोः परत्वान्निघातो, निघाते कृते एतदपि नाऽन्तरेणोदात्तानुदात्तयोरेकादेशमन्तोदात्तं भवति। शतृस्वर।।

एकानुदात्त-तुदन्ति लिखन्ति। उदात्तानुदात्तयोरेकादेशस्तस्य एकादेश उदात्तेनोदात्त ःथ्य;त्येतद्भवति, तस्य सिद्धत्वं वक्तव्यं, तेन र्वज्यमानता यथा स्यात्। (एकानुदात्त(3))।। सर्वानुदात्त-ब्राह्मणास्तुदन्ति ब्राह्मणा

लिखन्ति। उदात्तानुदात्तयोरेकादेशस्तस्य एकादेश उदात्तेनोदात्तःथ्य;त्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम्।। किं प्रयोजनम्?।। तिङ्ङतिङ ःथ्य;ति निघातो यथा स्यात्।. किमुच्यतेऽन्तरङ्ग ःथ्य;ति?।। यो हि बहिरङ्गोऽसिद्ध एवासौ भवति प्रपचति ःथ्य;ति, सोमसुत् पचति ःथ्य;ति।।

तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। सर्वत्रैव नुम्प्रतिषेधो ज्ञापकः-सिद्ध एकादेशस्वरोऽन्तरङ्ग ः्थ्य;ति।।

।। संयोगान्तलोपो रोरुत्वे हरिवो(1) मेदिनं त्वा।। संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः।। किं प्रयोजनम्?।। हरिवो मेदिनं त्वा। संयोगान्तलोपस्याऽसिद्धत्वाद्धशीत्युत्वं न प्राप्नोति।। प्लुतिश्च।। प्लुतिश्चोत्वे सिद्धा वक्तव्या। सुस्रोता3 अत्र न्वसी(2)त्यत्र प्लुतेरसिद्धत्वादतोऽतीत्युत्वं प्राप्नोति। अप्लुतादप्लुत ः्थ्य;त्येतन्न वक्तव्यं भवति।। नैतदस्ति प्रयोजनं, क्रियते न्यास एव।। सिज् लोप एकादेशे(1)(सिद्धः(2))।। सिज्लोप एकादेशे सिद्धो वक्तव्यः(1)। अलावीत्। अपावीत्। सिज्लोपस्याऽसुद्धत्वात्सवर्णदीर्घत्वं न प्राप्नोति।। यदि पुनरिडादेः सिचो लोप उच्येत?।। नैवं शक्यमिह हि माहिलावीत् मा हि पावीत्। यद्यत्र ः्थ्य;ण्न स्यादनुदात्तस्य ः्थ्य;टः श्रवणं

प्रसज्येत। ः्थ्य;र्टि पुनः सत्युक्तमेतत् अर्थवत्तु चित्करणसार्मथ्याद्धीट उदात्तत्वमिति। तत्रैकादेश उदात्तेनोदात्त ः्थ्य;त्युदात्तत्वं सिद्धं भवति।।

।। संयोगादिलोपः संयोगान्तलोपे।। संयोगादिलोपः संयोगान्तस्य लोपे सिद्धो वक्तव्यः। काष्ठतट्। कूटतट्। संयोगादिलोपस्याऽसिद्धत्वात्संयोगान्तलोपः प्राप्नोति। नैषः दोषः। उक्तमेतत्-अपवादो वचनप्रामाण्यादिति।। निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु।। निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः। वृक्णः वृक्णवान्। निष्ठादेशस्याऽसिद्धत्वाज्झलीति षत्वं प्राप्नोति झ्षत्वट।। स्वर--क्षीबः। निष्ठादेशस्यासिद्धत्वाझ्दिट्सहितस्य(1) निष्ठातस्य निपातनलोपरूपत्वाटत् निष्ठा च द्व्यजनादित्येष स्वरो न प्राप्नोति (स्वर(1))।। प्रत्ययः-क्षीबेन तरति क्षीबिकः। निष्ठादेशस्याऽसिद्धत्वाव्द्यचष्टन्निति ठन्न प्राप्नोति।। झ्प्रत्यय(5)ट।। ः्थ्य;ड्विधिः(1) --क्षीबः। निष्ठादेशस्याऽसिद्धत्वाद्वलादिलक्षण ः्थ्य;ट् प्राप्नोति।। ननु च यः प्रत्ययविधौ सिद्धःझ्सिद्धटसिद्धोऽसाविडिधौ।। ः्थ्य;दं तर्हि प्रयोजनम्-ओ लस्जी-लग्नः। निष्ठादेशः सिद्धो वक्तव्यः। झ्निष्ठादेशस्य(1) सिद्धत्वात्ट ठनेङ्वशि कृतीतीट्प्रतिषेधो यथा स्यात्। ः्थ्य;दित्करणं न वक्तव्यं भवति।। एतदपि नास्ति प्रयोजनं, क्रियते न्यास(3) एव। ।। वस्वादिषु दत्वं सौ दीर्घत्वे।। वस्वादिषु दत्वं सौ दीर्घत्वे सिद्धं वक्तव्यम्। उखास्रत्। पर्णध्वत्। दत्वस्याऽसिद्धत्वादत्वसन्तस्येति दीर्घत्वं प्राप्नोति। अधातोरिति न वक्तव्यं भवति।। नैतदस्ति प्रयोजनं, क्रियते न्यास एव।। अदस ः्थ्य;त्वोत्वे स्वरे बहिष्पदलक्षणे।। अदस ः्थ्य;त्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये। अमी अत्र। अमी आसते। अमू आसाते। ः्थ्य;त्वोत्वयोरसिद्धत्वादेच ः्थ्य;त्ययावेकादेशाः प्राप्नुवन्ति।। किमुच्यते बहिष्पदलक्षण ः्थ्य;ति?।। यो ह्यन्यः सोऽसिद्ध(2)एवाऽसौ भवति। अमुया अमुयोरिति।। प्रगृह्यसंज्ञायां च।। प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये। अमी अत्र। झ्अमी आसते(3)। अमू अत्रट।। अमू आसाते। ः्थ्य;त्वोत्वयोरसिद्धत्वाददसो मादिति प्रगृह्यसंज्ञा न प्राप्नोति।। किमर्थमिदमुभयमुच्यते न प्रगृह्यसंज्ञायामित्येव स्वरेऽपि बहिष्पदलक्षणे चोदितं स्यात्।। पुरस्तादिदमाचार्येण दृष्टं, स्वरे बहिष्पदलक्षणे ः्थ्य;ति, तत्पठितम्। तत उत्तरकालमिदं दृष्टं प्रगृह्यसंज्ञायां चेति, तदपि पठितम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति। ।। प्लुतिस्तुग्विधौ छे च(3) ।। प्लुतिस्तुग्विधौ च्छे च सिद्धा वक्तव्या। अग्ना3ः्थ्य;च्छत्रम्। पटा3उच्छत्रम्। प्लुतेरसिद्धत्वाच्छे चेति तुग्न प्राप्नोति।। किमुच्यते छे चेति(4)?।। यो ह्यन्योऽसिद्ध एवाऽसौ भवति-अग्निची3त्। सोमसू3त्। ।। श्चुत्वं धुट्त्वे(1)।। श्चुत्वं धुट्त्वे सिद्धं वक्तव्यम्। अट्श्च्योतति षट् श्चयोतति। श्चुत्वस्याऽसिद्धत्वाड्डः सि धुडिति धुट् प्रसज्येत। ।। अभ्यासजश्त्वर्चत्वमेत्वतुकोः।। अभ्यासजश्त्वर्चत्वमेत्वतुकोः सिद्धं वक्तव्यम्। बभणतुः बभणुः। अभ्यासादेशस्याऽसिद्धत्वादेत्वं प्राप्नोति। उचिच्छिषति। अभ्यासादेशस्याऽसिद्धत्वाच्छे चेति तुक्-प्राप्नोति।। द्विर्ववचने परसवर्णत्वम्।। द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्। सँय्यन्ता। सँव्वत्सरः तँल्लोकं यँल्लोकम् ः्थ्य;ति ।

परसवर्णस्याऽसिद्धत्वाद्यर ः्थ्य;ति द्विर्वचनं न प्राप्नोति।। पदाधिकारश्चेल्लत्वघत्व(ढत्व3)नत्वरुत्वषत्वानुनासिकच्छत्वानि।। पदाधिकारश्चेल्लत्वघत्व(ढत्व1)नत्वरुत्वषत्वणत्वानुनासिकच्छत्वानि सिद्धानि वक्तव्यानि। लत्व-गरो(1) गरः। गलो गलः। लत्व।। घत्वद्रोग्धा-द्रोग्धा(2)। घत्व ।। झ्ढत्व(3)-ट द्रोढा-द्रोढा। झ्ढत्व(3)ट।। नत्व-नुन्नो नुन्नः। नुत्तो नुत्तः। नत्व।। रुत्व-अभिनोऽभिनः। अभिनदभिनत्। रुत्व।। षत्व-मातुः-ष्वसा मातुःष्वसा। मातुःस्वसा मातुःस्वसा। षत्व।। पितुःष्वसा पितुःष्वसा पितुःस्वसा पितुःस्वसा ।। षत्व ।। णत्व-माषवापाणि-माषवापाणि। माषवापानि माषवापानि। णत्व।। अनुनासिक-वाङ्नयनं वाङ्नयनम्। वाग्नयनं वाग्नयनम्। अनुनासिक।। छत्व - वाक्च्छयनं वाक्च्छयनम् वाक्शयनं-वाक्शयनम्। उभयथा चाऽयं दोषो यद्यपि स्थाने द्विर्वचनमथापि द्विःप्रयोगः।। कथम्?।। यदि तावत्स्थाने द्विर्वचनं संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य लत्वाद्यभावः। झ्तेनैष दोषः(1)सिद्धःट। अथ द्विःप्रयोगो द्विर्वचनमसिद्धत्वाल्लत्वादीनि(2) निवर्त्तेरन्।।

-8-2-7- न लोपः प्रातिपदिकान्तस्य

नलोपेऽन्तग्रहणं किमर्थम्?।। नलोपेऽन्तग्रहणं पदाधिकारस्य विशेषणत्वात्।। नलोपेऽन्तग्रहणं क्रियते।।

किं कारणम्?।। पदाधिकारस्य विशेषणत्वात्। पदाधिकारो विशेषणम्।। कथम्?।। पदस्येति नैषा स्थानषष्ठी।। का तर्हि?।। विशेषणषष्ठी।। अह्नो नलोपप्रतिषेधः।। अह्नो नलोपस्य(3) प्रतिषेधो वक्तव्यः। अहोभ्याम्। अहोभिः ः्थ्य;ति।। स तर्हि प्रतिषेधो वक्तव्यः?।। न वक्तव्यः। रुरत्र बाधको भविष्यति।।

असिद्धो रुस्तस्याऽसिद्धत्वान्नलोपः प्राप्नोति। अनवकाशो रुर्नलोपं बाधिष्यते।। साऽवकाशो रुः।। कोऽवकाशः?।। अनन्त्योऽकारः।। आचार्यप्रवृत्तिर्ज्ञापयतिनानन्त्यस्य रुर्भवतीति यदमहन्ग्रहणं करोति।। अहन्ग्रहणादिति चेत्संबुद्ध्यर्थं वचनम्।। अहन्ग्रहणादिति चेत्संबुद्ध्यर्थमेत्स्यात्। हेऽह ः्थ्य;ति।। यत्तर्हि रुत्वं शास्ति।। एतदपि संबुद्ध्यर्थमेव स्यात्। हे दीर्घाहोऽत्र। यत्तर्हि रूपरात्रिरथन्तरेषूपसङ्ख्यानं करोति तज्ज्ञापयत्याचार्यो नानन्त्यस्य रुर्भवतीति।। कथं कृत्वा ज्ञापकम्?।। न ह्यस्ति विशेषो रूपरात्रिरथन्तरेष्वनन्त्यस्य रौ वा रे वा।। झ्नलोपः प्रातिपदिकान्तस्यट।।

-8-2-8- न ङिसंबुद्ध्योः

।। न ङिसंबुद्ध्योरनुत्तरपदे।। न ङिसंबुद्ध्योरनुत्तरपद ः्थ्य;ति वक्तव्यम्। ः्थ्य;ह मा भूत्-चर्मणि तिला अस्य चर्मतिल ः्थ्य;ति। राजन् वृन्दारक राजवृन्दारक ः्थ्य;ति।। वा नपुंसकानाम्।। वा नपुंसकानामिति वक्तव्यम्।। हे चर्म(1) हे चर्मन्। झ्हे वर्म(2) हे वर्मन्ट।। तत्तर्ह्यनुत्तरपद ः्थ्य;ति वक्तव्यम्?।। न वक्तव्यम्। नङिसंबुद्ध्योरित्युच्यते न चाऽत्र ङिसंबुद्धी पश्यामः।। प्रत्ययलक्षणेन।। न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः(3)।। न क्व चिन्ङिर्लोपेन लुप्यते, सर्वत्र लुमतैव। स यथैवेह भवति-आर्द्रे चर्मन् लोहिते चर्मन्नित्येवमिहापि स्यात्-चर्मणि

तिला अस्य चर्मतिल ाःथ्य;ति। तस्मादुपसङ्ख्यानं कर्तव्यम्। एवं तर्हि ङ्यर्थेन तावन्नाऽर्थः।। भत्वात्तु ङौ प्रतिषेधानर्थक्यम्।। ङौ प्रतिषेधोऽनर्थकः।। किं कारणम्?।। भत्वात्। भसंज्ञाऽत्र भविष्यति(4)।। यदि तर्हि भसंज्ञाऽत्र भवति रथन्तरे सामन्नित्यत्र अल्लोपोऽनःथ्य;त्यल्लोपः प्राप्नोति।। नैषः दोषः। उक्तमुभयसंज्ञान्यपि च्छन्दांसि दृश्यन्ते। तद्यथा-स सुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति-एवमिहापि पदत्वादल्लोपो नझ्रःथ्य;ति लोपो न(1)ट, भत्वान्नलोपो न भविष्यति। तस्मान्नाऽर्थो ङिग्रहणेन।।

संबुद्ध्यर्थेन चाऽपि नार्थः।. कथम्?।। संबुद्ध्यन्तानामसमासो(2) राजवृन्दारक ाःथ्य;ति।। किं वक्तव्यमेतत्?।। न हि।। कथमनुच्यमानं गंस्यते?।। ाःथ्य;ह तावत्समानार्थेन(3) वाक्येन भवितव्यं समासेन च। यश्चेहाऽर्थो वाक्येन गम्यते नाऽसौ जातु चित्समासेन गम्यते। अवयवसम्बोधनं वाक्येन गम्यते, समुदायसम्बोधनं समासेन।। वा नपुंसकानामित्येतद्वक्तव्यमेव।।

-8-2-11- संज्ञायाम्

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्द्रुमण्वच्चर्मण्वती ।।

किमयमेक योग आहो स्विन्नानायोगौ?।। किं चातः?।। यद्येकयोगः अहीवती कपीवती-अत्र न प्राप्नोति।। अथ नानायोगौ-ःथ्य;क्षुमती द्रुमती-अत्रापि प्राप्नोति।। यथेच्छसि तथास्तु।। अस्तु तावदेकयोगः।। कथमहीवती कपीवती?।। आचार्यप्रवृत्तिर्ज्ञापयति-भवत्येवंजातीयकानां वत्वमिति यदयमन्तोऽवत्या ाःथ्य;वत्या ाःथ्य;त्याह।। अथवा पुनरस्तु नानायोगौ। ननु चोक्तमिक्षुमती द्रुमती अत्रापि प्राप्नोतीति।। यवादिषु पाठः करिष्यते।।

-8-2-12- आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्द्रुमण्वच्चर्मण्वती

संज्ञायाम् ।।

किमयमेक योग आहो स्विन्नानायोगौ?।। किं चातः?।। यद्येकयोगः अहीवती कपीवती-अत्र न प्राप्नोति।। अथ नानायोगौ-ःथ्य;क्षुमती द्रुमती-अत्रापि प्राप्नोति।। यथेच्छसि तथास्तु।। अस्तु तावदेकयोगः।। कथमहीवती कपीवती?।। आचार्यप्रवृत्तिर्ज्ञापयति-भवत्येवंजातीयकानां वत्वमिति यदयमन्तोऽवत्या ाःथ्य;वत्या ाःथ्य;त्याह।। अथवा पुनरस्तु नानायोगौ। ननु चोक्तमिक्षुमती द्रुमती अत्रापि प्राप्नोतीति।। यवादिषु पाठः करिष्यते।।

-8-2-15- छन्दसीरः

छन्दसीर(1) ाःथ्य;त्युच्यते(2) तत्र ते विश्वकर्माणन्ते सप्तर्षिमन्तमित्यत्रापि प्राप्नोति।। नैष दोषो-नैवं विज्ञायते-छन्दसि ाःथ्य;रःथ्य;ति।। कथं तर्हि?।। छन्दसि-ःथ्य;र ाःथ्य;ति।। एवमपि-त्विषीमान्

पतीमानित्यत्रापि प्राप्नोति।। नैष दोषो-विहितविशेषणमीकारग्रहणम्-ःथ्य;कारान्ताद्यो विहितःथ्य;ति।। एवमपि-सूर्यं ते देवा पृथिवीमन्तम् ाःथ्य;त्यत्राऽपि

प्राप्नोति। ाःथ्य;ह च(3) न प्राप्नोति-त्रिवतीर्याज्यानुवाक्या भवन्तीति।। एवं तर्हि परिगणनं कर्तव्यम्।। त्रिहर्यधिपत्यग्निरे(1)।। त्रि-त्रिवतीर्याज्यानुवाक्या भवन्ति। त्रि।। हरि-हरिवो मेदिनं त्वा। हरि।। अधिपति-अधिपतिवतीर्जुहोति। अधिपति।। अग्नि-चतुरग्निवानिव। अग्नि।। रे-आरेवानेतु नो विश ाःथ्य;ति।। यदि तर्हि परिगणनं क्रियते सरस्वतीवान् भारतीवान्(2) अपूपवान् दधिवांश्चरुः ाःथ्य;त्यत्र न प्राप्नोति।। एवं तर्हिझ्र।।छन्दसीरो(3) बहुलम्।।ट।। छन्दसीरो बहुलमिति वक्तव्यम्।

-8-2-16- अनो नुट्

यदि पुनरयं नुट् पूर्वान्तः क्रियेत-अनो(2) नुगिति।। अनो नुकिविनामरुविधिप्रतिषेधः।। अनो नुकि सति विनामो विधेयः। अक्षण्वान् पदान्तस्य(4) नेति निषेधः प्राप्नोति।। रुश्च प्रतिषेध्यः-सुपथिन्तरः। नश्छव्यप्रशानिति रुः प्राप्नोति।। अस्तु तर्हि परादिः।। परादौ वत्वप्रतिषेधोऽवग्रहश्च।। यदि परादिर्वत्वस्य प्रतिषेधो वक्तव्यः। अक्षण्वानिति(2)। मादुपधायाश्च मतोर्वोऽयवादिभ्य ाःथ्य;ति वत्वं प्राप्नोति। अवग्रहश्चाऽनिष्टे देशे प्राप्नोति-अक्षण्वानिति(2)।। अस्तु तर्हि पूर्वान्तः।। ननु चोक्तम्-अनो नुकि विनामरुविधिप्रतिषेधःथ्य;ति। ।। भत्वात्सिद्धम्।। झ्रभत्वात्सिद्धमेतत्(3)ट भसंज्ञा वक्तव्या।। यदि तर्हि भसंज्ञा अल्लोपोऽन ाःथ्य;त्यल्लोपः प्राप्नोति।। अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि।। अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि वक्तव्यम्।।

ाःथ्य;ह तर्हि सुपथिन्तरः-नान्तस्य टिस्तद्धिते लुप्यत ाःथ्य;ति लोपः प्राप्नोति।।

।। घग्रहणं च।। घग्रहणं च कर्तव्यम्।।

तत्तर्हीदं बहुवक्तव्यं, नुग्वक्तव्यो, भसंज्ञा च वक्तव्या, अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि कर्तव्यं(1), घग्रहणं च कर्तव्यमिति।। न कर्तव्यम्-यत्तावदुच्यते नुग्वक्तव्यःथ्य;ति, नुक एष परिहारो भत्वात्सिद्धमिति।। झ्रयदप्युच्यते(2)ट ठभसंज्ञा वक्तव्येति। क्रियते न्यास एव-अयस्मयादीनिच्छन्दसीति।। यदप्युच्यते अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि घग्रहणं च कर्तव्यमिति, न कर्तव्यम्। उभयसंज्ञान्यपि हि छन्दांसि दृश्यन्ते। तद्यथा-स सुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वं, भत्वाज्जश्त्वं, न भवति। एवमिहापि पदत्वादल्लोपटिलोपौ न, भत्वाद्विनामरुविधिप्रतिषेधौ भविष्यतः।। सिध्यति-सूत्रं तर्हि भिद्यते।। यथान्यासमेवाऽस्तु।। ननु चोक्तं-परादौ वत्वप्रतिषेधोऽवग्रहश्चेति।। यत्तावदुच्यते वत्वप्रतिषेधःथ्य;ति। निर्दिश्यमानस्यादेशा भवन्ती- त्येवं न भविष्यति। यस्तर्हि(3) निर्दिश्यते तस्य न प्राप्नोति।। किं कारणम्?।। नुटा व्यवहितत्वात्।। असिद्धो नुट्, तस्याऽसिद्धत्वाद्भविष्यति।।

अवग्रहेऽपि, न लक्षणेन पदकारा अनुर्वत्याः, पदकारैर्नाम लक्षणमनुर्वत्यम्। यथालक्षणं पदं कर्तव्यम्।। झ्रअनो नुट्ट।।

-8-2-17- नाद्धस्य

।। ाःथ्य;द्रथिनः।। रथिन ाःथ्य;द्वक्तव्यः। रथीतरः।। भूरिदाव्नस्तुट्।। भूरिदाव्नस्तुड् वक्तव्यः। भूरिदावत्तरो जनः।। झ्रनाद्धस्यट।।

-8-2-18- कृपो रो लः

।। कृपणादीनां प्रतिषेधः।। कृपणादीनां प्रतिषेधो वक्तव्यः। कृपणः। कृपाणः। कृपा(1)। कृपीटम्।। वालमूललघ्वलमङ्गुलीनां(1)(2) वा लो र(त्व)

मापद्यते।। वालमूललघ्वलमङ्गुलीनां वा लो र(त्व)मापद्यत ःथ्य;ति वक्तव्यम्। वाल(1)-अश्ववारः। अश्ववालः(2)। वाल।। मूल-मूरदेवः। मूलदेवः(2)। मूल।। लघु-वरुणस्य(3) लघुस्यदः। वरुणस्य रघुस्यदः। लघु।। अलम्-अलं भक्ताय(4)। अरं भक्ताय(4)। अलम्।। अङ्गुलि-सुबाहुः स्वङ्गुलिः। सुबाहुः स्वङ्गुरिः।। संज्ञाच्छन्दसोर्वा कपिलकादीनाम्।। संज्ञाच्छन्दसोर्वा कपिलकादीनामिति वक्तव्यम्। कपिरकः। कपिलकः(2)। तिल्पिलिकम्। तिर्पिरिकम्। कल्मषम्। कर्मषम्। रोमाणि। लोमानि। पांसुलम्। पांसुरम्। कर्म। कल्म। शुक्रः। शुक्लः(5)।।

-8-2-19- उपसर्गस्यायतौ

किमिदमयतिग्रहणं रेफविशेषणम्-अयतिपरस्य रेफस्य लो भवति स चेदुपसर्गस्य

भवतीति,-आहोस्विदुपसर्गविशेषणम्-अयतिपरस्योपसर्गस्य यो रेफस्तस्य लो भवतीति।। कश्चात्र विशेषः? ।। रेफस्याऽयताविति चेत्परेरुपसङ्ख्यानम्।। रेफस्याऽयताविति चेत्परेरुपसङ्ख्यानं कर्तव्यम्। पल्ययते।। वचनाद्भविष्यति।। अस्ति वचने प्रयोजनम्।। किम्(1)?।। प्लायते। पलायते।। अस्तु तर्हि-उपसर्गविशेषणम्।। उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिः।। उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिर्भवति। प्लायते पलायते। एकादेशे कृते व्यपवर्गाभावादयताविति(2) लत्वं न प्राप्नोति।। अन्तादिवद्भावेन व्यपवर्गः।। उभयत आश्रये नान्तादिवत्।। एवं तर्ह्येकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः।। प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति।। दोषा एवैते तस्याः परिभाषायाः-तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति।। अथवा पुनरस्तु रेफविशेषणम्।। ननु चोक्तं-रेफस्यायताविति चेत्परेरुपसङ्ख्यानमिति।। वचनाद्भविष्यति।। ननु चोक्तम्-अस्ति वचने प्रयोजनं(1), किं, प्लायते पलायतःथ्य;ति।। अत्राप्यकारेण व्यवहितत्वान्न प्राप्नोति।। एकादेशे कृते नास्ति व्यवधानम्।। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव।। प्रतिषिध्यतेऽत्रस्थानिवद्भावः-पूर्वत्रासिद्धे न स्थानिवदिति।। दोषा एवैते तस्याः परिभाषायास्तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति।।

-8-2-21- अचि विभाषा

।। णावुपसङ्ख्यानम्(1)।। णावुपसङ्ख्यानं कर्तव्यम्।। ःथ्य;हापि यथा स्यात्-निगार्यते निगाल्यते।। किं पुनः कारणं न सिध्यति?।। अचीत्युच्यते न चात्राऽजादिं पश्यामः।। प्रत्ययलक्षणेन।। वर्णाश्रये नास्ति प्रत्ययलक्षणम्।। एवं तर्हि स्थानिवद्भावाद्भविष्यति।। प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति।। अत उत्तरं पठति।। गिरतेर्लत्वे णावुक्तम्(1)।। झ्गिरतेर्लत्वे णावुक्तम्(2)ट।। किमुक्तम्?।। तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति।। झ्अचि विभाषाट।

-8-2-22- परेश्च घाऽङ्कयोः

।। योगे च(1)।। योगे चेति वक्तव्यम्। ःथ्य;हापि यथा स्यात्परियोगः पलियोगः। ।। सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि।। सङीति प्रकृत्य लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानि।। किं प्रयोजनम्?।। प्रयोजनं-गिरौ गिरः पयो धावति द्विष्टरां दृषत्स्थानं काष्ठशक्स्थाता क्रुञ्चा धुर्यः झ्ःथ्य;ति(1)ट।। झ्प्रयोजनं गिरौ गिरः पयो धावति द्विष्टरां दृषत्स्थानं काष्ठाशक्स्थाता क्रुञ्चा धुर्य ःथ्य;तिट।। गिरौ गिर ःथ्य;त्यत्र अचि विभाषेति लत्वं प्राप्नोति-सङीति वचनान्न भवति।। नैतदस्ति प्रयोजनम्। उक्तमेतत्-धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धमिति।।

पयो धावतीत्यत्र धि चेति सलोपः प्राप्नोति-सङीति वचनान्न भवति।। एतदपि नास्ति प्रयोजनं वक्ष्यत्येतत्--धिसकारे सिचो लोप ःथ्य;ति।। द्विष्टरामित्यत्र ह्रस्वादङ्गादिति सलोपः प्राप्नोति सङीति वचनान्न भवति।। एतदपि नास्ति प्रयोजनम्-----अत्रापि सिच ःथ्य;त्येवाऽनुवर्तिष्यते(1)।।

दृषत्स्थानमित्यत्र झलो झलीति सलोपः प्राप्नोति सङीति वचनान्न भवति।। एतदपि नास्ति प्रयोजनम्--अत्रापि सिच ःथ्य;त्येवानुवर्तिष्यते।। काष्ठशक्स्थातेत्यत्र स्कोः संयोगाद्योरन्ते चेति ककारलोपः प्राप्नोति सङीति वचनान्न भवति।।

एतदपि नास्ति प्रयोजनं--काष्ठशगेव नास्ति कुतो यः काष्ठशकितिष्ठेत?।।

क्रुञ्चेत्यत्र चोः कुर्झलीति कुत्वं प्राप्नोतिः सङीति वचनान्न भवति।. एतदपि नास्ति प्रयोजनं, निपातनादेतस्त्सिद्धम्।। किं निपातनम्?।। ऋत्विग्दधृक्स्नग्दिगुष्णिगञ्चुयुजिक्रुञ्चामिति।।

धुर्य ःथ्य;त्यत्र हलि चेति दीर्घत्वं प्राप्नोति सङीति वचनान्न भवति।. एतदपि नास्ति प्रयोजनं न भकुर्छुरामिति प्रतिषेधो भविष्यति।।

-8-2-23- संयोगान्तस्य लोपः

।। संयोगान्तस्य लोपे यणः प्रतिषेधः।। संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः। दध्यत्र मध्वत्रेति।। संयोगादिलोपे चझ्काक्यर्थं(2) वास्यर्थम्ट।। संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः।। किमर्थम्(3)?।।काक्यर्थं

वास्यर्थम्। ।। न वा झलो लोपात्।। न वा वक्तव्यम्।। किं कारणम्?।। झलो

लोपात्।। झलो लोपः संयोगान्तलोपो वक्तव्यः।। बहिरङ्गलक्षणत्वाद्वा।। अथ वा बहिरङ्गो यणादेशोऽन्तरङ्गो लोपः। असिद्धं बहिरङ्गमन्तरङ्गे। ।। संयोगान्तलोपे सग्रहणम्।। संयोगान्तलोपे सग्रहणं कर्तव्यम्। संयोगान्तलोपः सस्य चेति वक्तव्यम्। ःथ्य;हापि यथा स्यात्--श्रेयान् भूयान् ज्यायान्।। किं पुनः कारणं न सिध्यति?।। परत्वाद्रुः प्राप्नोति।। असिद्धो रुस्तस्याऽसिद्धत्वाल्लोपो भविष्यति।। न सिध्यति।। किं कारणम्?।। रुविधानस्याऽनवकाशत्वात्।। अनवकाशो(1) रुर्लोपं बाधेत।। सावकाशो रुः।। कोऽवकाशः?।। पयः शिरः।। ननु चात्रापि जश्त्वं प्राप्नोति, स यथैव रुर्जश्त्वं बाधते एवं लोपमपि बाधेत।। न बाधते।। किं कारणम्?।। येन नाऽप्राप्ते तस्य बाधनं भवति न चाऽप्राप्ते जश्त्वे रुरारभ्यते,लोपे पुनः प्राप्ते चाप्राप्ते च ।। झ्अथवा(2)ट योगविभागात्सिद्धम्(3)।।अथवा योगविभागः करिष्यते। एवं वक्ष्यामि--संयोगान्तस्य लोपोऽरात्। संयोगान्तस्य लोपो भवत्यरात्।। ततः सस्य। सस्य च लोपो भवति संयोगान्तस्य।। किमर्थम्पुनरिदमुच्यते?।। प्रतिषिद्धार्थं रुबाधनार्थं च।।

अथ वा यदेतद्रात्सस्येति सग्रहणं तत्पुरस्तादपक्रक्ष्यते(1)--संयोगान्तस्य लोपः। ततः सस्य। सस्य च संयोगान्तस्य लोपो भवति। ततः-- रात्। रात्सस्यैव संयोगान्तस्य लोपो भवतीति(2)। अथ वा रात्सस्येत्यत्र संयोगान्तस्य लोप ःथ्य;त्येतदनुवर्त्तिष्यते।। झ्संयोगान्तस्य लोपःट।

-8-2-25- धि च

।। धिसकारे(3) सिचो लोपः।। धिसकारे सिचो लोपो वक्तव्यः।। किं प्रयोजनम्?।। चकाद्धीति(3) प्रयोजनम्।। ः्थ्य;ह मा भूत् सलोपः-चकाद्धि पलितं शिर ः्थ्य;ति।। यदि तर्हि सिचो लोप ः्थ्य;त्युच्यते ।। आशाध्वं तु कथन्ते(3) स्यात्।। झ्ठआशाध्वं तु कथम्?ट।। आशाध्वमित्यत्र लोपो न प्राप्नोति।। जश्त्वं(3) सस्य भविष्यति।। जश्त्वमत्र सकारस्य भविष्यति।। सर्वत्रैव(3) प्रसिद्धं स्यात्।। सर्वत्रैव जश्त्वेन सिद्धं स्यात्। ः्थ्य;हापि आयन्ध्वमारन्ध्वमिति, जश्त्वेनैव सिद्धम्।। श्रुतिश्चापि(3) न भिद्यते।। श्रुतिकृतश्चापि न कश्चिद्भेदो भवति।। लुङश्चापि(3) न मूर्द्धन्ये ग्रहणम्।। तत्रायमप्यर्थः--ः्थ्य;णः षीध्वंलुङ्लिटां धोऽङ्गादित्यत्र लुङ्ग्रहणं न कर्तव्यं भवति(1)।। ः्थ्य;हापि अच्योड्ढ्वमप्लोड्ढ्वमिति षत्वे सिचो धस्य ष्टुत्वे च कृते जशत्वेन सिद्धम्।। सेटि दुष्यति(2)।। सेटि दोषो भवति। ः्थ्य;दमेव रूपं स्यात्--अलविड्ढ्ववम्,--ः्थ्य;दं न स्यात्--अलविध्वमिति। तस्मात्सिचो ग्रहणं कर्तव्यम्।। यदि तर्हि सिचो ग्रहणं क्रियते-।। घसिभस्योर्न(2) सिध्येत्।। घसिभस्योर्न सिध्यति-सग्धिश्च मे सपीतिश्च मे, बब्धां ते हरी धाना ः्थ्य;त्यत्र न प्राप्नोति।। तस्मात्सिज्ग्रहणं(2) न तत्।। तस्माद्धिचेत्यत्र सिचो ग्रहणं न कर्तव्यम्।। कथंचकाद्धि पलितं शिर ः्थ्य;ति?।। एवं तर्हि सिज्ग्रहणं कर्तव्यम्।। कथं सग्धिश्च मे सपीतिश्च मे बब्धां ते हरीधाना ः्थ्य;ति?।। नैषः दोषः(1)।। ः्थ्य;ह तावत् सग्धिरिति, नैतद्घसेरूपम्।। किं तर्हि?।। सघेरेतद्रूपम्।। बब्धां ते हरीधाना ः्थ्य;ति; नैतद्घसेरूपम्।। किं तर्हि?।। बन्धेरेतद्रूपम्।। छान्दसो(2) वर्णलोपो वा यथेष्कर्तारमध्वरे।। अथ वा छान्दसो वर्णलोपो भविष्यति। यथेष्कर्तारमध्वरे(1)। तद्यथा(2)-तुभ्येदमग्ने।। तुभ्यमिदमग्न ः्थ्य;ति प्राप्ते। आम्बानां चरुः। नाम्बानां चरुरिति प्राप्ते। आव्याधिनी रुगणाः। आव्याधिनीः सुगणा ः्थ्य;ति प्राप्ते। ः्थ्य;ष्कर्तारमध्वरस्य। निष्कर्तारमिति प्राप्ते। शिवा उद्रस्य भेषजीः। शिवा रुद्रस्य भेषजीरिति प्राप्ते।। तस्मात्सिज्ग्रहणं कर्तव्यम्।।

न कर्तव्यम्। यदेतद्रात्सस्येति सकारग्रहणं तत्सिचो ग्रहणं विज्ञास्यते।। कथम्?।।रात्सस्येत्युच्यते न चाऽन्यो रेफात्परः सकारोऽस्त्यन्यदतः सिचः।।

ननु चायमस्ति मातुः पितुरिति। तस्मात्सिचो ग्रहणं कर्तव्यम्।। न कर्तव्यम्।। कस्मान्न भवति चकाद्धि पलितं शिरःथ्य;ति?।।

ः्थ्य;ष्टमेवैतत्सङ्गृहीतं, चकाधीत्येव भवितव्यम्।।

।।घिसकारे(3) सिचो लोपश्चकाद्धीति प्रयोजनम्।

आशाध्वं तु कथं ते स्याज्जश्त्वं सस्य भविष्यति।।1।।

सर्वत्रैवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते।

लुङश्चापि न मूर्द्धन्ये ग्रहणं सेटि दुष्यति।।2।।

घसिभस्योर्न सिध्येत् तस्मात्सिज्ग्रहणं न तत्।

छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे।।3।।

-8-2-32- दादेर्धातोर्घः

ः्थ्य;ह दोग्धा दोग्धुमिति घत्वस्याऽसिद्धत्वाड्ढत्वं प्राप्नोति।। नैषः दोषः। उक्तमेतत्(1)-अपवादो वचनप्रामाण्यादिति। अथ वैवं वक्ष्यामि-होढोऽदादेः। हो ढो भवत्यदादेः(2)। ततो धातोर्घः ः्थ्य;ति। दादेरित्यनुवर्तते(3) नेति निवृत्तम्।। झ्रएवमपि(2) घोट दादेरित्युच्यते तत्रेदं न सिध्यति-अधोक्।। क्व तर्हि स्यात्?।। मा स्म धोक्।। नैषः दोषः। धातोरिति नैषा दादिसमानाधिकरणा षष्ठी दादेर्धातोरिति।। का तर्हि?।। अवयवयोगैषा षष्ठी-घातोर्यो दादिरवयव ः्थ्य;ति। सा चावश्यमवयवयोगा षष्ठी विज्ञेयोत्तरार्था।। किं प्रयोजनम्?।। एकाचो बशो भष्झषन्तस्य स्ध्वोरिति, ः्थ्य;हापि यथा स्याद्गर्दभयतेरप्रत्ययो गर्धबिति।। यद्यवयवयोगा षष्ठी,-दोग्धा दोग्धुमित्यत्र न प्राप्नोति।। एषोऽपि व्यपदेशिवद्भावेन धातोर्दादिरवयवो(2) भवति।।

।। हृग्रहोर्भ्भटश्छन्दसि हस्य।। हृग्रहोश्छन्दसि हस्य भत्वं वक्तव्यम्। गर्दभेन संभरति। मरुदस्य गृभ्णाति(1)। सामिधेन्यो जभ्रिरे। उद्ग्राभञ्च निग्राभंच ब्रह्म देवा अवीवृधन्।। दादेर्धातोर्घः।

-8-2-38- दधस्तथोश्च

किमर्थश्चकारः?।। झ्।। चकारस्स्ध्वोरनुकर्षणार्थः(2)।।ट।। स्ध्वोरित्येतदनुकृष्यते।। नैतदस्ति प्रयोजनं-सिद्धं स्ध्वोः पूर्वेणैव।। न सिध्यति।। किं कारणम्?।। अबशादित्वात्।। ननु च जश्त्वे कृते बशादिः।। असिद्धं जश्त्वं, तस्याऽसिद्धत्वान्न बशादिः।। एवं तर्हि सिद्धकाण्डे पठितमभ्यासजश्त्वर्चत्वमेत्वतुकोरिति।। एत्वतुकोर्ग्रहणं न करिष्यते। अभ्यासजश्त्वर्चत्वं सिद्धमित्येव।। एवमप्यझषन्तत्वान्न प्राप्नोति।। लोपे कृते झषन्तः।। स्थानिवद्भावान्न झषन्तः। अत उत्तरं पठति--।। दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात्।। दधस्तथोरनुकर्षणमनर्थकम्।। किं कारणम्?।। स्थानिवत्प्रतिषेधात्। प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति।। स चावश्यं प्रतिषेध आश्रयितव्यः।। ः्थ्य;तरथा ह्यलोपे प्रतिषेधः।। यो हि मन्यतेऽनुकर्षणसार्मथ्यान्मेऽत्र(3) भवति, अलोपे तेन प्रतिषेधो वक्तव्यः स्यात्--दधाति(4) दधासि(5)।। तथोश्चापि ग्रहणं शक्यमकर्तुम्।। कथम्?।।झलि झषन्तस्येत्युच्यते तथोश्चाऽयं झलि झषन्तो भवति नान्यत्र।।

अथाप्येतन्नास्ति पूर्वत्रासिद्धे न स्थानिवदिति, एवमपि नैवाऽर्थोऽनुकर्षणार्थेन चकारेण, नापि तथोर्ग्रहणेन। आनन्तर्यमिहाश्रीयते-झलि झषन्तस्येति। क्व चिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं,क्व चिन्नैव सन्निपातकृतं नापि शास्त्रकृतम्। लोपे सन्निपातकृतमानन्तय शास्त्रकृतमनानन्तर्यम्, अलोपे नैव सन्निपातकृतं नापि शास्त्रकृतम्। यत्र कुतश्चिदेवोनन्तर्यं तदाश्रयिष्यामः।। झ्दधस्तथोश्च।।ट

-8-2-40- झषस्तथोर्धोऽधः

अथ ः्थ्य;ति किमर्थम्?।। धत्तः। धत्थः।। अध ः्थ्य;ति शक्यमवक्तुम्(1)।। कस्मान्न भवति-धत्तः धत्थ ः्थ्य;ति?।।

।। जश्त्वे योगविभागः(2)।। झ्जश्त्वे(3) योगविभागःट करिष्यते। ः्थ्य;दमस्ति दधस्तथोश्चेति। ततो वक्ष्यामि-झलां जशः(4)। झलां जशो भवन्ति दधस्तथोः। ततः अन्ते। अन्ते च झलां जशो भवन्तीति। तत्र जश्त्वे कृतेऽझषन्तत्वान्न भविष्यति।।

-8-2-42- रदाभ्यां निष्ठातो नः पूर्वस्य च दः

रदाभ्यामिति किमर्थम्?।। चरितं मुदितम्।। ननु च रदाभ्यामित्युच्यमानेऽप्यत्र प्राप्नोति। अत्रापि हि(5) रेफदकाराभ्यां परा निष्ठा।। न रेफदकाराभ्यां निष्ठा विशेष्यते।। किं तर्हि?।। तकारो विशेष्यते-रेफदकाराभ्यामुत्तरस्य तकारस्य नो भवति स चेन्निष्ठाया ःथ्य;ति।।

अथ झिन्ष्ठादेशे(1)ट पूर्वग्रहणं किमर्थम्?।। निष्ठादेशे पूर्वग्रहणं परस्यादेशप्रतिषेधार्थम्।। निष्ठादेशे पूर्वग्रहणं क्रियते।। झिकं प्रयोजनं(1)?।। परस्यादेशप्रतिषेधार्थम्ट। परस्यादेशो मा भूदिति।

भिन्नवद्भ्याम्। भिन्नवद्भिः। छिन्नवद्भ्याम्(2)। छिन्नवद्भिः(2)।। पञ्चमीनिर्दिष्टाद्धि परस्य।। पञ्चमीनिर्दिष्टाद्धि परस्येति परस्य प्राप्नोति।। वृद्धिनिमित्तात्प्रतिषेधः।। वृद्धिनिमित्तात्प्रतिषेधो वक्तव्यः।। किं प्रयोजनम्?।। प्रयोजनं(2) कार्तिक्षैतिफौल्लयः।। प्रयोजनं(3) कार्तिक्षैतिफौल्लयः। कार्तिरिति वृद्धौ कृतायां रदाभ्यामिति नत्वं प्राप्नोति। क्षैतिरिति वृद्धौ कृतायां क्षियो दीर्घादिति नत्वं प्राप्नोति। फौल्लिः ःथ्य;ति वृद्धौ कृतायामुदुपधत्वसन्नियोगेन लत्वमुच्यमानं न प्राप्नोति।। अथोच्यमानेऽपि प्रतिषेधे वृद्धिनिमित्तादिति कथमिदं विज्ञायते,-- वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति?।। आहो स्विद्वृद्धि(1)र्निमित्तमस्य सोऽयं वृद्धिनिमित्तः,वृद्धिनिमित्तादिति?।। किं चातः?।। यदि विज्ञायते वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति,--क्षतिः सङ्गृहीतः कार्तिरसङ्गृहीतः। अथ विज्ञायते वृद्धिर्निमित्तमस्य(1) सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति,-कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतः। उभयथा च फौल्लिरसङ्गृहीतः।। यथेच्छसि तथाऽस्तु।। अस्तु तावद्वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति। ननु चोक्तं-क्षैतिः सङ्गृहीतः कार्तिरसङ्गृहीतःथ्य;ति।। कार्तिश्च सङ्गृहीतः।। कथम्?।। वृद्धिर्भवति गुणो भवतीति(2) रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते(3)। अथ वा पुनरस्तु-वृद्धिनिमित्तमस्य सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति।। ननु चोक्तं-कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतःःथ्य;ति।। क्षैतिश्च सङ्गृहीतः।। कथम्? ।। यत्तद्वृद्धिशास्त्रं तस्मिन्वृद्धिशब्दो वर्तते।। स तर्हि प्रतिषेधो वक्तव्यः?।। न वा बहिरङ्गलक्षणत्वात्।। न वा वक्तव्यः(1)।। किं कारणम्?।। बहिरङ्गलक्षणत्वात्। बहिरङ्गा वृद्धिरन्तरङ्गं तत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे।। एवं च कृत्वा लत्वमपि सिद्धं भवति फौल्लिरिति।। रदाभ्यां निष्ठातः

-8-2-44- ल्वादिभ्यः

।। ॠकारल्वादिभ्यः(2)क्तिन्निष्ठावत्।। ॠकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। कीर्णिः गीर्णिः लूनिः धूनिः।। दुग्वोदीर्घश्च ।। दुग्वोर्दीर्घश्चेति वक्तव्यम्। आदूनः विगूनः। ।। पूञ्त्रो विनाशे(5)।। पूञ्त्रो विनाश ःथ्य;ति वक्तव्यम्। पूना यवाः।। विनाश ःथ्य;ति किमर्थम्? ।। पूतं धान्यम्।। सिनोतेर्ग्रासकर्मकर्तृकस्य।। सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्। सिनो ग्रासः स्वयमेव(4)।। ग्रासकर्मकर्तृकस्येति किमर्थम्?।। सिता पाशेन सूकरी।। झ्ल्वादिभ्यःट।।

-8-2-46- क्षियो दीर्घात्

दीर्घादिति किमर्थम्?।। अक्षितमसि मा मे क्षेष्ठाः। दीर्घादिति शक्यमकर्तुम्(1)।। कस्मान्न भवति--अक्षितमसि मा से क्षेष्ठा, ःथ्य;ति?।। निर्देशाशादेवेदमभिव्यक्तं(2) दीर्घस्य ग्रहणमिति। यदि ह्रस्वस्य ग्रहणं स्यात् क्षेरित्येव(3) ब्रूयात्।। नाऽत्र निर्देशः प्रमाणं शक्यं कर्तुम्(4)। यथैवाऽत्राऽप्राप्ता(5) विभक्तिरेवमियङादेशोऽपि।। नाऽत्राऽप्राप्ता विभक्तिः, सिद्धाऽत्र विभक्तिः प्रातिपदिकादिति।। कथं प्रातिपदिकसंज्ञा?।। अर्थवत्प्रातिपदिकमिति।।

ननु चाऽधातुरिति प्रतिषेधः प्राप्नोति।। नैष धातुर्धातोरेषोऽनुकरणम्(6)।। यद्यनुकरणमियङादेशो न प्राप्नोति।। प्रकृतिवदनुकरणं भवतीतीयङादेशो भविष्यति।। यदि प्रकृतिवदनुकरणं भवतीत्युच्यते स्वाद्युत्पत्तिर्न प्राप्नोति।। एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते ःथ्य;ति(7)। अथाप्येतन्नास्ति(8)आतिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते ःथ्य;त्येवमपि न दोषः। अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या। तद्यथा-नेर्विशः परिव्यवेभ्यः क्रियः विपराभ्यां(1) जेरिति।। अथाप्येतन्नास्ति(2) प्रकृतिवदनुकरणं भवतीत्येवमपि न दोषः। धातोरजादौ यद्रूपं तदनुक्रियते।। झिक्षयो दीर्घात्ट।।

-8-2-48- अञ्चोऽनपादाने

।। अञ्चेर्नत्वे व्यक्तप्रतिषेधः(1)।। अञ्चेर्नत्वे व्यक्तस्य प्रतिषेधो वक्तव्यः। व्यक्तमनृतं कथयति ःथ्य;ति।। अञ्जिविज्ञानात्सिद्धम्।। झ्अञ्जिविज्ञानात्सिद्धमेतत्(3)ट।। नैतदञ्चे रूपम्। अञ्जेरेतद्रूपम्।। अञ्चत्यर्थो वै गम्यते।. कः पुनरञ्चत्यर्थः?।। अञ्चतिः प्रकाशने वर्तते। अञ्चितं गच्छति, प्रकाशयत्यात्मानमिति गम्यते।। न वै लोकेऽञ्चितं गच्छतीति प्रकाशनं गम्यते।। किं तर्हि?।। समाधानं गम्यते। समाहितो भूत्वा गच्छतीति।।

एवं तर्ह्यञ्चतेरङ्कः, अङ्कश्च प्रकाशनम्। अङ्किता गाव ःथ्य;त्युच्यते, अन्याभ्यो गोभ्यः प्रकाश्यन्ते(4)।। अञ्चत्यर्थ ःथ्य;ति चेदञ्जेस्तदर्थत्वात्सिद्धम्(5)।। अञ्चत्यर्थ ःथ्य;ति चेदञ्जिरप्यञ्चत्यर्थे वर्तते।। कथं पुनरन्यो नामाऽन्यस्यार्थे वर्तते?। कथमञ्जिरञ्चत्यर्थे(1) वर्तते?।। अनेकार्था अपि धातवो भवन्तीति(2)।। अस्ति पुनः क्व चिदन्यत्राऽप्यञ्जिरञ्चत्यर्थे वर्तते?।। अस्तीत्याह। अञ्जेरञ्जनम्, अञ्जनं च प्रकाशनम्। अङ्क्तेऽक्षिणीःथ्य;त्युच्यते यत्तत्सितं(3) चाऽसितं चैतत्प्रकाशयति(4)। तथाऽञ्जेर्व्यञ्जनं, व्यञ्जनं च प्रकाशनम्। यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां स्वस्मिन्नात्मनि व्यवस्थापनं स रागस्तद्व्यञ्जनम्। अन्वर्थं खल्वपि निर्वचनं व्यज्यतेऽनेनेति व्यञ्जनमिति।। झ्अञ्चोऽनपाट।

-8-2-50- निर्वाणोऽवाते

।। अवाताऽभिधाने(1)।। अवाताभिधान ःथ्य;ति वक्तव्यम्। ःथ्य;हापि यथा स्यात्-निर्वाणोऽग्निर्वातेन। निर्वाणः प्रदीपो वातेनझ्ःथ्य;ति(1)टझिन्र्वाणोऽवातेट।।

-8-2-55- अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः

अनुपसर्गादित्युच्यते तत्रेदं न सिध्यति-परिकृशमिति।। कृशेः(2) क एष(3) विहित ःथ्य;गुपधात्।। नैतन्निष्ठान्तम्।। किं तर्हि?।। कृश एष(3) ःथ्य;गुपधात्को विहितः।। नैवं शक्यम्(4)।। स्वरे हि दोषो भवति परिकृशे।। नैवं शक्यम्(4)।। ःथ्य;ह हि परिकृश ःथ्य;ति, स्वरे दोषः

स्यात्। अन्तः थाथघञ्क्ताजबित्रकाणामित्येष स्वरः प्रसज्येत।। पदस्य(2) लोपो विहित ाःथ्य;ति मतम्।। एवं तर्हि पदस्य लोपोऽत्र(1) द्रष्टव्यः। पर्यागतः कार्श्येन परिकृशः(1)।। जगत्यनूना भवति हि रुचिरा।। झ्जगत्यनूना(2) भवति हि रुचिराट।। फलेर्लत्वे उत्पूर्वस्योपसङ्ख्यानम्।। फलेर्लत्वे उत्पूर्वस्योपसङ्ख्यानं कर्तव्यम्। उत्फुल्लोऽनृतं(3) कथयति।। अत्यल्पमिदमुच्यते उत्पूर्वादिति।। उत्फुल्लसंफुल्लयोरिति वक्तव्यम्(4)।। उत्फुल्लः। संफुल्लः।।

कृशेः क एष हि विहित ाःथ्य;गुपधात्स्वरे हि दोषो भवति परिकृशे।।

पदस्य लोपो विहित ाःथ्य;ति मतं जगत्यनूना भवति हि रुचिरा।।1।।

-8-2-56- नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्

किमयं विधिराहो स्वित्प्रतिषेधः?।। किं चातः?।। यदि तावद्विधिर्नकारग्रहणं कर्तव्यम्।। न कर्तव्यम्। प्रकृतमनुवर्तते।। क्व प्रकृतम्?।।रदाभ्यां निष्ठातो नः पूर्वस्य च द ाःथ्य;ति।। तद्वा अनेकेन(5) निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम्।। अथ प्रतिषेधो, ह्रीग्रहणमनर्थकं(6), न ह्येतस्माद्विधिरस्तीति।।यथेच्छसि तथास्तु।। अस्तु तावद्विधिः।। ननु चोक्तं-नकारग्रहणं कर्तव्यं न कर्त्तव्यं प्रकृतमनुवर्तते, क्व प्रकृतं(1), रदाभ्यां निष्ठातो नः पूर्वस्य च द ाःथ्य;ति, तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुमिति।। संबन्धमनुवर्तिष्यते। अथ वा क्रियते न्यास एव द्विनकारको निर्देशः। नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्यां(2) न्न ध्याख्यापॄमूर्च्छिमदामिति। अथ वा पुनरस्तु प्रतिषेधः।। न नु चोक्तं ह्रीग्रहणमनर्थकं न ह्येतस्माद्विधिरस्ती(6)ति।। नानर्थकम्। एतदेव ज्ञापयत्याचार्यो भवत्येतस्माद्विधिरिति यदयं ह्रीग्रहणं करोति।।

-8-2-58- वित्तो भोगप्रत्यययोः

बहव ाःथ्य;मे विदयः पट्यन्ते तत्र(3) न ज्ञायते कस्य नित्यं नत्वं कस्य विभाषा कस्य प्रतिषेधः कस्य ाःथ्य;डिति?।। अत उत्तरं पठति-।। यस्य(4) विदेः श्नशकौ(5) तपरत्वे(6) तनवचने तदु वा-प्रतिषेधौ।। श्नविकरणस्य(7) विभाषा, शविकरणस्य प्रतिषेधः।। श्यन्विकरणान्नविधिश्छिदितुल्यः।। श्यन्विकरणाद्विदेर्नविधिश्छिदिना तुल्यः।। लुग्विकरणो(4) वलि पर्यवपन्नः।। लुग्विकरणो विदिर्वलादौ पर्यवपन्नः।। एष एवार्थः--

य(1)योर्विद्योः श्न(2)शावुक्तौ(3) तयोर्नत्वस्य वानञ्ञौ(4)।

ययोस्तु (6) श्यँल्लुकौ ताभ्यां छिदिव(5)च्चेड्वदिष्यते।।

अपर आह--

वेत्ते(6)स्तु विदितो निष्ठा विद्यतेर्विन्न ाःथ्य;ष्यते।

विन्ते(7)र्विन्नश्च वित्तश्च वित्तो भोगे(8)षु विन्दतेः।।

-8-2-59- भित्तं शकलम्

भित्तं शकलमित्युच्यते तत्रेदं न सिध्यति-भित्तं भिन्नमिति। नैषः दोषः-सर्वत्रैवाऽत्र भिदिर्विदारणसामान्ये वर्तते, तत्रावश्य विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः,-भिन्नम्।। किम्(1)?।। भित्तमिति।

।। तत्वमभिधायकं(2) चेच्छकलस्याऽनर्थकः(3) प्रयोगः स्यात्।।

शकलेन चाप्यभिहिते न (1) भवति तत्वं निगमयामः।।

-8-2-62- क्विन्प्रत्ययस्य कुः

प्रत्ययग्रहणं किमर्थं न क्विनः कुरित्येवोच्येत?।। क्विनः कुरितीयत्युच्यमाने वकारस्यैव तु(1) कुत्वं प्रसज्येत।। ननु च लोपे कृते न भविष्यति।। अनवकाशं कुत्वं लोपं बाधेत(1)।। सावकाशं कुत्वम्।। कोऽवकाशः?।। अनन्त्यः।। कथं पुनः सत्यन्त्येऽनन्त्यस्य(2) कुत्वं स्यात्?।। आचार्यप्रवृत्तिर्ज्ञापयति

नान्त्यस्य कुत्वं भवतीति यदयं क्विनः कुरिति कवर्गनिर्देशं करोति, ाःथ्य;तरथा हि तद्गुणमेवाऽयं निर्दिशेत्।। ाःथ्य;दं तर्हि प्रयोजनं-येभ्यः क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि पदान्ते(3) कुत्वं यथा स्यात्,-मानो अस्राक्। मानो अद्राक्।।

क्विनः कुरिति वक्तव्ये(4) प्रत्ययग्रहणं कृतम्।

क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते।।1।।

-8-2-68- अहन्

।। रुत्वविधावह्नो(1) रूपरात्रिरथन्तरेषूपसङ्ख्यानम्(2)।। रुत्वविधावह्नो(1) रूपरात्रिरथन्तरेषूपङ्ख्यानं कर्तव्यम्। अहोरूपम्। अहोरात्रः(7)। अहोरथन्तरं साम।।झ्अहन्ट।।

-8-2-69- रोऽसुपि

।। असुपि रादेशे उपसर्जनसमासे प्रतिषेधोऽलुकि।। असुपि रादेशे उपसर्जनसमासेऽलुकि प्रतिषेधो वक्तव्यः। दीर्घाहा निदाघ ाःथ्य;ति। ।। सिद्धं तु सुपि प्रतिषेधात्।। सिद्धमेतत्।। कथम्?।। सुपि प्रतिषेधात्। प्रसज्याऽयं प्रतिषेधः-सुपि नेति।। ाःथ्य;हाऽपि तर्हि न प्राप्नोति अहर्ददाति अहर्भुङ्क्त ाःथ्य;ति।। लुकि चोक्तम्(1)।। झ्लुकि चोक्तम्(2)ट।। किमुक्तम्(1)?।। अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति।।

-8-2-70- अम्नरूधरवरित्युभयथा छन्दसि

।। छन्दसि(3) भाषायां(4) च प्रचेतसो राजन्युपसङ्ख्यानम्।। छन्दसि भाषायां(1) च प्रचेतसो राजन्युपसङ्ख्यानं कर्तव्यम्। प्रचेतो राजन्। प्रचेता राजन्।। अहरादीनां पत्यादिषूपङ्ख्यानम्(1)(5)।। अहरादीनां पत्यादिषूपसङ्ख्यानं कर्तव्यम्। अहर्पतिः। अहः पतिः। झ्(अह)(पतिः(1))ट अहर्पुत्रः। अहः पुत्रः(6)। झ्अह)(पुत्रः।ट गीर्पतिः। गीः पतिः। झ्गी)(पतिःट। धूर्पतिः(1)। धूःपतिः(1)। झ्धू)(पतिः(1)टझ्अम्नरूधरवरिट

-8-2-72- वसुस्रंसुध्वंस्वनडुहां दः

ः‍थ्य;ह कस्मान्न भवति-पपिवान् तस्थिवानिति?।। सस्येति वर्तते।। एवमप्यत्र प्राप्नोति।। लोपे कृते न भविष्यति।। अनकाशं दत्वं लोपं बाधेत(1)।। सावकाशं दत्वम्।। कोऽवकाशः?।। पपिवद्भ्यां पपिवद्भिरिति।। झ्नैषोऽस्त्यस्यावकाशः(2)ट-अत्रापि रुः प्राप्नोति, तद्यथैव रुं बाधते एवं लोपमपि बाधेत।। न बाधते।। किं कारणम्?।। येन नाऽप्राप्ते तस्य बाधनं भवति,न चाऽप्राप्ते रौ दत्वमारभ्यते,लोपे पुनः प्राप्ते चाऽप्राप्ते च।। यदि तर्हि सस्येति वर्तते-अनडुद्भ्यामनडुद्भिरित्यत्र न प्राप्नोति।। वचनादनडुहि भविष्यति।. यद्येवम्-।। अनडुहो दत्वे नकारप्रतिषेधः।। अनडुहो दत्वे नकारस्य प्रतिषेधो वक्तव्यः। अनड्वान्।। सिद्धं तु प्रतिपदविधानान्नुमः।। सिद्धमेतत्।। कथम्?।। प्रतिपदविधानान्नुमः(3)। नुमः प्रतिपदविधानसार्मथ्याद्दत्वं न भविष्यति(4)।। यदि तर्हि यद्यदनडुहः प्राप्तं तत्तन्नुमः प्रतिपदविधानसार्मथ्याद्बाध्यते रुत्वमपि(5) न प्राप्नोति-अनड्वांस्तत्रेति।। नैषः दोषः-यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। दत्वं च प्रति नुमः प्रतिपदविधिरनर्थको, रोः पुनर्निमित्तमेव।। झ्वसुस्रंसुध्वंस्वनडुहां दःट।।

-8-2-78- उपधायां च

किमर्थमिदमुच्यते न हलीत्येव सिद्धम्?।। न सिध्यति। धातोरितिझ्तत्र(1)ट वर्तते तत्र(2) रेफवकाराभ्यां

धातुर्विशेष्यते-रेफवकारान्तस्य धातो-रिति।। किं पुनः कारणं पूर्वस्मिन् योगे रेफवकाराभ्यां धातुर्विशेष्यतेझ्न पुनः(9) पदं विशेष्यते?ट। नैवं शक्यम्(3)।। ः‍थ्य;हापि प्रसज्येत(3)-अग्निर्वायुरिति।। एवं तर्हि पूर्वस्मिन्योगे यद्धातुग्रहणं तदुत्तरत्र निवृत्तम्।। एवमपि कुर्कुरः मुर्मुरः‍थ्य;त्यत्रापि प्राप्नोति।। एवं तर्ह्यनुवर्तते तत्र धातुग्रहणं, न तु रेफवकाराभ्यां धातुर्विशेष्यते।। किं तर्हि?।। ः‍थ्य;ग्विशेष्यते-रेफवकारान्तस्येको धातोरिति।। एवमपि कुर्कुरीयति मुर्मुरीयतीत्यत्रापि प्राप्नोति।। तस्माद्धातुरेव विशेष्यः। धातौ च विशेष्यमाणे उपधायां चेति वक्तव्यम्। ।। उपधादीर्घत्वेऽभ्यासजिव्रिचतुर्णां प्रतिषेधः।। उपधादीर्घत्वेऽभ्यासजिव्रिचतुर्णां प्रतिषेधो वक्तव्यः। अभ्यास(1)-रिर्यतुः रिर्युः। संविव्यतुः संविव्युः। झ्अभ्यास(1)ट।। जिव्रिः। चतुर्यिता चतुर्यितुम्।। उणादिप्रतिषेधश्च(2)।। उणादीनां च प्रतिषेधो वक्तव्यः। किर्योः गिर्योरिति।। अभ्यासप्रतिषेधस्तावन्न वक्तव्यः। हलीत्युच्यते न चात्र हलादिं पश्यामः।। यणादेशे कृते प्राप्नोति।। स्थानिवद्भावान्न भविष्यति(3)।। प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवदिति।। नैषोऽस्ति प्रतिषेधः। उक्तमेतत्-प्रतिषेधे स्वरदीर्घयलोपेषु लोपाऽजादेशः‍थ्य;ति।। जिव्रिप्रतिषेधश्च न वक्तव्यः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।। चतुर्यिता चतुर्यितुमिति-सुपि नेति वर्तते।। यद्येवं गीर्भ्यां गीर्भिरित्यप्रसिद्धिः।। न सुपो विभक्तिविपरिणामाद्गीर्भ्यां(4) गीर्भिरित्यदोषः।। उणादिप्रतिषेधो वक्तव्य ः‍थ्य;ति,-परिहृतमेतत्,-उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति।।झ्उपधायां चट।

-8-2-80- अदसोसेर्दादु दो मः

।। अदसोऽनोस्रेः।। अदसोऽनोस्रेरिति वक्तव्यम्।। किमिदमनोऽस्रेरिति?।। अनोकारस्य, असकारस्य, अरेफस्येति(5)। अनोकारस्य-अदोऽत्र।। असकारस्य-अदस्यति। अरेफस्य(5)-अदः।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। क्रियते न्यास एव। अविभक्तिको निर्देशः-अदस्-ओ(6) असे-रिति। ओकारात्परः प्रतिषेधः पूर्वभूतः। ततः सकारः। ततो रेफ ः‍थ्य;ति।। अथ वा नैवं विज्ञायते-अदसोऽसकारस्येति।। कथं तर्हि?।। अकारोऽस्य(1) सकारस्य(2) सोऽयमसिः, असेरिति।। यद्येवममुमुयङ्ङति न सिध्यति, अदद्यङ्ङति प्राप्नोति।। अदमुयङ्ङति भवितव्यम् अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति।।

।। अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।

केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते।।

।। तत्र पदाधिकारादपदान्तस्याऽप्राप्तिः(3)।। तत्र पदाधिकारादपदान्तस्य न प्राप्नोति-अमुया अमुयो ः‍थ्य;ति।। सिद्धन्तु सकारप्रतिषेधात्(4)।। सिद्धमेतत्।। कथम्?।। सकारप्रतिषेधात्। यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्योऽपदान्तस्यापि भवतीति।।

अथ दाद्ग्रहणं किमर्थम्?।। दाद्ग्रहणमन्त्यप्रतिषेधार्थम्(1)।। दाद्ग्रहणं क्रियते।। झ्किं प्रयोजनम्(2)?।।ट ठअन्त्यप्रतिषेधार्थम्(3)।। अलोऽन्त्यस्य(4) मा भूत्। अमुया अमुयोरिति।। झ्अदसोऽसेर्दादुदोमःट।

-8-2-81- एत ः‍थ्य;द्बहुवचने

।।ः‍थ्य;त्वं बहुवचनान्तस्य।। ः‍थ्य;त्वं बहुवचनान्तस्येति वक्तव्यम्। बहुवचन ः‍थ्य;तीयत्युच्यमाने ः‍थ्य;हैव स्यात्--अमीभिः अमीषु। ः‍थ्य;ह न स्यात्-अमी अत्र, अमी आसते ः‍थ्य;ति(5)।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्।नेदं पारिभाषिकस्य बहुवचनस्य ग्रहणं ।।किं तर्हि?।। अन्वर्थग्रहणमेतत्। बहूनामर्थानां वचनं बहुवचनं, बहुवचन ः‍थ्य;ति।। झ्एत ः‍थ्य;द्बहुट।

-8-2-82- वाक्यस्य टेः प्लुत उदात्तः

वाक्याधिकारः किमर्थः?।। वाक्याधिकारः पदनिवृत्त्यर्थः।। वाक्याधिकारः क्रियते। झ्किं प्रयोजनम्(6)?ट।। पदनिवृत्त्यर्थः। पदाधिकारो निर्वत्यते।। न हि काको वाश्यत ः‍थ्य;त्यधिकारा निवर्त्तन्ते(1)। दोषः खल्वपि स्याद्यदि वाक्याधिकारः पदाधिकारं निवर्तयेत्। ः‍थ्य;ष्यन्त एवोत्तरत्र पदकार्याणि, तानि न सिध्यन्ति-नश्छव्यप्रशानिति।।

पदनिवृत्त्यर्थमिति नैवं विज्ञायते,-पदस्य निवृत्त्यर्थं(2) पदनिवृत्त्यर्थमिति।। किं तर्हि?।। पदे निवृत्त्यर्थं

पदनिवृत्त्यर्थमिति। वाक्ये यावन्ति पदानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, ः‍थ्य;ष्यते च वाक्यपदयोरन्त्यस्य(3) स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थो वाक्याधिकारः।।

अथ टिग्रहणं किमर्थम्?।। टिग्रहणमलोन्त्यनियमे व्यञ्ञ्जनान्तार्थम्।। टिग्रहणं क्रियते। झ्किं प्रयोजनम्?(4)।। अलोऽन्त्यनियमे व्यञ्ञ्जनान्तार्थम्ट। अलोन्त्यनियमे व्यञ्ञ्जनान्तस्यापि यथा स्यात्-अग्निची3त् सोमसू3त्।। अस्ति प्रयोजनमेतत्? ।। किं तर्हीति।।

।।सर्वादेशप्रसङ्गस्तु।। सर्वादेशस्तु टेः प्लुतः प्राप्नोति।। किं कारणम्?।। अच् ः‍थ्य;ति वचनादन्त्यस्य न,अन्त्यस्येति वचनादचो न, उच्यते च प्लुतः।. स सर्वादेशः प्राप्नोति।। उक्तं वा(1)।। झ्उक्तं वा(2)ट।। किमुक्तम्?।। ह्रस्वो दीर्घः प्लुत ः‍थ्य;ति यत्र ब्रूयादच ः‍थ्य;त्येतत्तत्रोपस्थितं द्रष्टव्यमिति।। झ्वाक्यस्य टेः प्लुतःट

-8-2-83- प्रत्यभिवादेऽशूद्रे

अशूद्र ाथ्य;ति किमर्थम्?।। कुशल्यसि तुषजक!।। अत्यल्पमिदमुच्यते अशूद्रःथ्य;ति। ।। अशूद्रस्त्र्यसूयकेषु(3)।।अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्(3)। तत्र शूद्र उदाहृतम्। स्त्रियां-गार्ग्यहं भोः, आयुष्मती भव गार्गि!। असूयके-स्थाल्यहं भोः।। आयुष्मानेधि स्थाली3न्(4)।। नैषा मम संज्ञा स्थालीति झ्ति(1)ट।। किं तर्हि?।। दण्डिन्यायो मम विवक्षितः स वक्तव्यः-स्याल्यहं भोः।। आयुष्मानेधि स्थालिन्।। न मम दण्डिन्यायो विवक्षितः।। किं तर्हि?।। संज्ञा ममैषा।। असूयकस्त्वमसि जाल्म न त्वं प्रत्यभिवादमर्हसि भिद्यस्व वृषल! स्थालिन् !।। भोराजन्यविशां वा।। भो राजन्यविशां वेति वक्तव्यम्। देवदत्तोऽहं भोः, आयुष्मानेधि देवदत्त भोः 3। झ्आयुष्मानेधि(1)ट देवदत्त भोः। भोः।। राजन्य-ःथ्य;न्द्रवर्माऽहं भोः। आयुष्मानेधीन्द्रवर्मा3न्। झ्आयुष्मानेधि(1)ट ाथ्य;न्द्रवर्मन्।। राजन्य।। विट्-ःथ्य;न्द्रपालितोऽहं भोः। आयुष्मानेधीन्द्रपालिता 3। झ्आयुष्मानेधि(1)ट ाथ्य;न्द्रपालित।

अपर आह--।। सर्वस्यैव नाम्नः प्रत्यभिवादे भोशब्द आदेशो वा(1) वक्तव्यः।। देवदत्तोऽहं भोः। आयुष्मानेधि भोः 3। आयुष्मानेधि देवदत्ता 3 ाथ्य;ति वा।। ाथ्य;ह कस्मान्न भवति-देवदत्त कुशल्यसीति?।। ाथ्य;ह किं चिदुच्यते किंचित्प्रत्युच्यते। प्रधानमुच्यतेऽप्रधानं(2)(3) प्रत्युच्यते। तत्र(1) प्रधानस्थस्य च(2) टिसंज्ञकस्य(8) प्लुत्या भवितव्यं न चाऽत्र प्रधानस्थं टिसंज्ञम्।। ाथ्य;हापि तर्हि न प्राप्नोति-आधेयोऽग्नी3र्नाधेया(4) 3 ाथ्य;ति।। नैतद्विचार्यते--आधेयोऽनाधेयोऽग्निश्चेद्भवतीति।। किं तर्हि? ।। ाथ्य;हाऽग्निसाधना(5) क्रिया विचार्यते-आधेयोऽग्निर्नाधेय ाथ्य;ति।। यद्येवं द्वितीयोऽग्निशब्दस्य(6) प्रयोगः प्राप्नोति।। उक्तार्थानामप्रयोगःथ्य;ति न भविष्यति।।

यद्येवमाधेयशब्दस्यापि(7) तर्हि द्वितीयस्य प्रयोगो न प्राप्नोति-उक्तार्थानामप्रयोगो भवती(8)ति।। नैषः दोषः। उक्तार्थानामपि प्रयोगो दृश्यते। तद्यथा अपूपौ द्वावानय ब्राह्मणौ द्वावानयेति।। झ्प्रत्यभिवादेऽशूद्रेट

-8-2-84- दूराद्धूते। च

दूराद्धूत ाथ्य;त्युच्यते दूरशब्दश्चाऽयमनवस्थितपदार्थकस्तदेव हि कंचित् प्रति(1) दूरं कंचित्प्रत्यन्तिकं भवति। एवं हि कश्चित्कंचिदाह-एष पार्श्वतः करकस्तमेनमानये(2)ति। स आह--उत्थाय गृहाण, दूरं न शक्ष्यामीति। अपर आह-दूरं मधुरायाः(3) पाटलिपुत्रमिति। स आह-न दूरमिदमन्तिकमिति। एवमेष दूरशब्दोऽनवस्थितपदार्थकस्तस्याऽनवस्थितपदार्थकत्वान्न ज्ञायते-कस्यामवस्थायां प्लुत्या भवितव्यमिति?।। एवं तर्हि ह्वयतिनाऽयं निर्देशः क्रियते-ह्वयतिप्रसङ्गे यद्दूरम्।। किं पुनस्तत्?।। यत्र प्राकृतात्प्रयत्नात्प्रयत्नविशेषेऽनुपादीयमाने(4) सन्देहो भवति, श्रोष्यति न श्रोष्यती(5)ति, तद्दूरमिहाऽवगम्यते।। झ्दूराद्धूते चट।।

-8-2-85- हैहेप्रयोगे हैहयोः

हैहेग्रहणं किमर्थम्?।। हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम्।। हैहेप्रयोगे हैहेग्रहणं क्रियते।। किमर्थम्?।। झ्ठहैहयोः प्लुत्यर्थम्(1)ट। हैहयोः प्लुतिर्यथा स्यात्। देवदत्त है3 देवदत्त(2) हे3। अक्रियमाणे हि

हैहेग्रहणे तयोः प्रयोगेऽन्यस्य स्यात्।। अथ प्रयोगग्रहणं किमर्थम्?।। प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम्।।

प्रयोगग्रहणं क्रियते। झ्किं प्रयोजनम्(1)? ।। अर्थवद्ग्रहणेऽनर्थकार्थम्।ट अर्थवद्ग्रहणेऽनर्थकयोरपि यथा स्यात्। देवदत्त है3। देवदत्त हे3।। अथ पुनर्हैहेग्रहणं किमर्थम्?।। पुनर्हैहेग्रहणमनन्त्यार्थम्।। झ्पुनर्हैहेग्रहणं(1) क्रियते।। किं प्रयोजनम्?।। अनन्त्यार्थम्ट। अनन्त्ययोरपि यथा स्यात्। है3 देवदत्त हे3 देवदत्तेति।। (हैहेप्रयोगे)

-8-2-86- गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्

।। गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात्।। गुरोः प्लुतिविधाने लघोरन्त्यस्य प्लुतः प्राप्नोति। दे3वदत्त(3)।। किं कारणम्?।। अन्येन विहितत्वात्। अन्येन हि लक्षणेन लघोरन्त्यस्य प्लुतो विधीयते दूराद्धूते चेति।। न वाऽनन्त्यस्यापीति वचनमुभयनिर्देशार्थम्।। न वैष दोषः।। किं कारणम्?।। झ्ठअनन्त्यस्यापीति(3) वचनमुभयनिर्देशार्थम्ट। अनन्त्यस्यापीति वचनमुभयनिर्देशार्थं भविष्यति अनन्त्यस्यापि गुरोरन्त्यस्यापि टेरिति।। ननु(3) चैतद्दूर्वपेक्षं स्यात्-अनन्त्यस्यापि गुरेरन्त्यस्यापि गुरोरिति?।। नेत्याह। ट्यपेक्षमेतत्(2)। अनन्त्यस्यापि गुरोरन्त्यस्यापि टेरति।। अथ प्राग्वचनं किमर्थम्?।। प्राग्वचनं विभाषार्थम्।। प्राग्वचनं क्रियते।। झ्किं प्रयोजनम्(1)?।। विभाषार्थम्ट।। विभाषा यथा स्यात्।। प्राग्वचनानर्थक्यं चैकैकस्येति वचनात्।। झ्प्राग्वचनमनर्थकम्(1)।। किं कारणम्?।। एकैकस्येति वचनात्ट। एकैकग्रहणं क्रियते तद्विभाषार्थं भविष्यति।। अस्त्यन्यदेकैकग्रहणस्य(3) प्रयोजनम्।। किम्?।। युगपत्प्लुतो मा भूदिति।। अनुदात्तं पदमेकवर्जमिति वचनान्नाऽस्ति यौगपद्येन(4) संभवः।। असिद्धः प्लुतस्तस्याऽसिद्धत्वान्नियमो न प्राप्नोति।। नैषः दोषः। यद्यपीदं तत्राऽसिद्धं तत्त्विह सिद्धम्।। कथम्?।। कार्यकालं संज्ञापरिभाषमिति। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम्। उपस्थितमिदं(1) भवत्यनुदात्तं पदमेकवर्जमिति।। ाथ्य;हापि तर्हि समावेशो(1) न प्राप्नोति-देवदत्ता 3।। सिद्धाऽसिद्धावेतौ। यौ हि सिद्धादेव असिद्धावेव वा तयोर्नियमः।। यस्तार्हि स्वरितः प्लुतस्तेन(1) समावेशः प्राप्नोति--स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेष्विति।। स्वरितेऽप्युदात्तोऽस्ति।। यस्तार्ह्यनुदात्तः(2) प्लुतस्तेन समावेशः प्राप्नोति अनुदात्तं प्रश्नान्ताभिपूजितयोरिति। तस्मात्प्राग्वचनं कर्तव्यम्।। झ्गुरोरनृतोट

-8-2-88- ये यज्ञकर्मणि

।। ये यज्ञकर्मणीत्यतिप्रसङ्गः।। ये यज्ञकर्मणीत्यतिप्रसङ्गो भवति। ाथ्य;हापि प्राप्नोति-ये देवासो दिव्येकादशस्थेति।। सिद्धं तु ये यजामह ाथ्य;ति ब्रूह्यादिषूपसङ्ख्यानात्।। सिद्धमेतत्।। कथम्?।। झ्ठये यजा(3) मह ाथ्य;ति ब्रूह्यादिषूपसङ्ख्यानात्ट। ये यजामहेशब्दो(4) ब्रूह्यादिषूपसङ्ख्येयः।

-8-2-89- प्रणवष्टेः

प्रणव ाथ्य;त्युच्यते कः प्रणवो नाम?।। पादस्य वाऽर्द्धर्चस्य वाऽन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोङ्कारं त्रिमात्रमोकारं(1) वा विदधति तं प्रणव(2) ाथ्य;त्याचक्षते।। अथ टिग्रहणं किमर्थम्?।। टिग्रहणं सर्वादेशार्थम्।। झ्टिग्रहणं(2) क्रियते।। किं प्रयोजनम्?।।

सर्वादेशार्थम्ट। यदा ओकारस्तदा सर्वादेशो यथा स्यात्। यदाझ्हि(3)ट ॐकारस्तदाऽनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति।। झ्प्रणवष्टेःट
-8-2-90- याज्याऽन्तः
अन्तग्रहणं किमर्थम्?।। याज्या नामर्चो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति, ःथ्य;ष्यते चाऽन्त्यस्य स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमन्तग्रहणम्।। झ्याज्याऽन्तःट।
-8-2-92- अग्नीत्प्रेषणे परस्य च
।। अग्नीत्प्रेषण ःथ्य;त्यतिप्रसङ्गः।। अग्नीत्प्रेषणे ःथ्य;त्यतिप्रसङ्गो भवति। ःथ्य;हापि प्राप्नोति-अग्नीदग्नीन्विहर। ।। सिद्धं त्वोश्रावये परस्य(1) चेति वचनात्।। सिद्धमेतत्।। कथम्? झ्ठओश्रावये परस्य चेति वचनात्ट। ओश्रावये परस्येति वक्तव्यम्। ओ3श्रा3वय।। अपर आह-ओश्रावयाश्राव(1)ययोरिति वक्तव्यम्। ओ3श्रा3वय।। आ3श्रा3वय। ।। बहुलमन्यत्र(2)।। बहुलमन्यत्रेति(3) वक्तव्यम्। उद्धरा(4) 3 उद्धर। आहरा(4) 3 आहर।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्।
योगविभागः करिष्यते-अग्नीत्प्रेषणे परस्य च विभाषा। ततः पृष्टप्रतिवचने हेः। विभाषेत्येव। अपर आह-।। सर्व(1) एव प्लुतः साहसमनिच्छता विभाषा वक्तव्यः।।. झ्अग्नीत्प्रेषणेट।।
-8-2-95- आम्रेडितं भर्त्सने
।। भर्त्सने पर्यायेण।। भर्त्सने पर्यायेणेति वक्तव्यम्। चौरा(2) 3 चौर। चौर चौरा(2) 3। कुशीला 3 कुशील। कुशील(3) कुशीला3।।
-8-2-103- स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु
।। असूयादिषु वावचनम्।। असूयादिषु वेति वक्तव्यम्। कन्ये 3 कन्ये। कन्ये कन्ये(4)। शक्तिके 3 शक्तिके। शक्तिके शक्तिके(5)।।
-8-2-106- प्लुतावैच ःथ्य;दुतौ
किमर्थमिदमुच्यते?।। ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः(6) प्लुतवचनम्।। ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः(1) प्लुत उच्यते।। किमुच्यते उभयविवृद्धिप्रसङ्गा(1)दिति?। यदा नित्याः शब्दाः। नित्येषु च शब्देषु कूटस्थैरविचालिभि र्वर्णैर्भवितव्यमनपायोजनविकारिभिः।। नैषः दोषः। उभयविवृद्धिप्रसङ्गा(1)- दिति नैवं विज्ञायते-उभयोर्विवृद्धिरुभयविवृद्धिरुभयविवृद्धिप्रसङ्गादिति।। कथं तर्हि?।। उभयोर्विर्वृद्धिरस्मिन् सोऽयमुभयविवृद्धिः, उभयविवृद्धि प्रसङ्गादिति। ःथ्य;मावैचो समाहारवर्णौ, मात्राऽवर्णस्य मात्रोवर्णोवर्णयोरिति तयोः प्लुत उच्यमान उभयविवृद्धिः प्राप्नोति। तद्यथा,-गर्भो वर्धमानः(3) सर्वाङ्गपरिपूर्णो वर्धते।। अस्ति प्रयोजनमेतत्? ।। किं तर्हीति।। तत्राऽयथेष्टप्रसङ्गः।। तत्राऽयथेष्टं प्रसज्येत। चतुर्मात्रः प्लुतः प्राप्नोति।। सिद्धं त्विदुतोर्दीर्घवचनात्।। सिद्धमेतत्।। कथम्?।। झ्ठःथ्य;दुतोर्दीर्घवचनात्ट।। ःथ्य;दुतोर्दीर्घो भवतीति वक्तव्यम्।। तदेतत्कथं कृत्वा सिद्धं भवति?।। यदि समः प्रविभागो-मात्राऽवर्णस्य मात्रेवर्णोवर्णयोः।।
अथ ह्यर्द्धमात्राऽवर्णस्याऽध्यर्द्धमात्रेवर्णोवर्णयोरर्द्धतृतीयमात्रः(1) प्राप्नोति। अथ हि(2) ह्यध्यर्द्धमात्राऽवर्णस्याऽध्यर्द्धमात्रेवर्णोवर्णयोरर्द्धचतुर्थमात्रः(3) प्राप्नोति। सूत्रं च भिद्यते।. यथान्यासमेवाऽस्तु।। ननु चोक्तं-तत्रायथेष्टप्रसङ्ग ःथ्य;ति।। तत्र सौर्यभागवतोक्तमनिष्टिज्ञो वाडवः पठति। ःथ्य;ष्यत एव चतुर्मात्रः प्लुतः। झ्प्लुतावैच ःथ्य;दुतौट।।
-8-2-107- एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ
।। एचः प्लुतविकारे पदान्तग्रहणम्।। एचः प्लुतविकारे पदान्तग्रहणं कर्तव्यम्। ःथ्य;ह मा भूत्-भद्रं करोषि(1) गौ3रिति।। विषयपरिगणनं च।। विषयपरिगणनं च कर्तव्यम्। प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम्। प्रश्नान्त-अगमा3 पूर्वा3न्(3) ग्रामा(3)3नग्निभूता3 ःथ्य;?। पटा3उ?। प्रश्नान्त।। अभिपूजितसिद्धोऽसि माणवकाऽग्निभूता3ःथ्य;। पटा3उ। अभिपूजित।। विचार्यमाण-होतव्यं दीक्षितस्य गृहा3ःथ्य;। विचार्यमाण।। प्रत्यभिवाद-आयुष्मानेधि अग्निभूता3ःथ्य;। प्रत्यभिवाद।। याज्यान्त-उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे स्तोमैविधेमाग्नया3ःथ्य;(4)।। आमन्त्रिते छन्दस्युपसङ्ख्यानम्।। आमन्त्रिते छन्दस्युपसङ्ख्यानं कर्तव्यम्। अग्ना3ःथ्य; पत्नीर्वाः3(5) सजूर्देवेन त्वष्ट्रा सोमं पिब।। झ्एचोऽप्रगृह्यस्याऽदूराट
-8-2-108- तयोर्य्वावचि संहितायाम्
अथ कयोरिमौ य्वावुच्येते(6)?।। ःथ्य;दुतोरित्याह।। तदिदुतोर्ग्रहणं कर्तव्यम्।। न कर्तव्यम्। प्रकृतमनुवर्तते।। क्व प्रकृतम्?।। पूर्वस्यार्द्धस्यादुत्तरस्येदुताविति।। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन(1) चेहाऽर्थः।। अचीत्येषा सप्तमीदुताविति प्रथमायाः षष्ठीं प्रकल्पयिष्यति-तस्मिन्निति निर्दिष्टे पूर्वस्येति।।
किमर्थमिदमुच्यते नेको यणचीत्येव सिद्धम्?।। न सिध्यति। असिद्धः प्लुतः, प्लुतविकारौ चेमौ। सिद्धः प्लुतः स्वरसन्धिषु।। कथं ज्ञायते?।। यदयं प्लुतप्रगृह्या अचीति प्लुतस्य प्रकृतिभावं शास्ति।। कथं(2) कृत्वा ज्ञापकम्?।। सतो हि कार्यिणः कार्येण भवितव्यम्।। ःथ्य;दं तर्हि।। प्रयोजनं-दीर्घशाकलप्रतिषेधार्थम्(3)।। झ्दीर्घशाकलप्रतिषेधार्थं(4) प्रयोजनम्ट।। दीर्घत्वं(5) शाकलं च मा भूदिति(6)। अग्ना3यिन्द्रम्। पटा3वुदकम्।।
एतदपि नास्ति प्रयोजनम्। आरभ्यते(7) प्लुतपूर्वस्य यणादेशः प्लुतपूर्वस्य (च)दीर्घशाकलप्रतिषेधार्थमिति; तन्नवक्तव्यं भवति।। अवश्यं तद्वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं-भो3यिन्द्र(8) भो3यिडेति।। यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यमिदं न वक्तव्यम्।। ःथ्य;दमझ्प्य(2)टवश्यं वक्तव्यं स्वरार्थम्। तेन हि सति
उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्येष स्वरः प्रसज्येत, अनेन पुनःसत्यसिद्धत्वान्न भविष्यति।। यदि तर्ह्यस्य निबन्धनमस्तीदमेव वक्तव्यं तन्न वक्तव्यम्। ननु चोक्तं तदप्यवश्यं वक्तव्यं, यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं-भो3 ःथ्य;(1) ःथ्य;द्र। भो3यिडेति।। छान्दसमेतत्, दृष्टानुविधिश्छन्दसि भवति।। यत्तर्हि न छान्दसं-भो3ःथ्य;न्द्रंझ्भो3 यिन्द्रंट साम गायति?।। एषोऽपि छन्दसि दृष्टस्यानुप्रयोग(2)ःथ्य;ति।।
।।किं(3) तु(4) यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निर्वत्यौ।।1।।

ःथ्य;त्रु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः।।2।।
ःथ्य;ति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्।। पादश्च द्वितीयः।।
-9-9-999-

# महाभाष्यम्/अष्टमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/nn6

< महाभाष्यम्

-8-3-1- मतुवसो रु संबुद्धौ छन्दसि

।। मतुवसोरादेशे वन उपसङ्ख्यानम्।। मतुवसोरादेशे वन उपसङ्ख्यानं कर्तव्यम्। यस्त्वायन्तं वसुना प्रातरित्वः। ।। विभाषा भवद्भगवदघवतामोच्चाऽवस्य।। छन्दसि भाषायाञ्चभवत्भगवत्अघवदित्येतेषां विभाषा रुर्वक्तव्यः, ओच्चाऽवस्य वक्तव्यः। भोः। भवन्। भगोः। भगवन्। अघोः। अघवन्निति।। संबुद्धावित्युच्यते तत्रैदं न सिध्यति-भो ब्राह्मणा इति। तथा विभक्तौ लिङ्गविशिष्टग्रहणं(3) नेतीह न प्राप्नोति भो ब्राह्मणि!।। नैषः दोषः। अव्ययमेष भोःशब्दो नैषा भवतः प्रकृतिः(4)।। कथमव्ययत्वम्?।। विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपातोऽव्ययमित्यव्ययसंज्ञा।। मतुवसो रु

-8-3-5- समः सुटि

पुमः खय्यम्परे ।। कानाम्रिडिते ।।

।। संपुंकानां सत्वम्।। संपुंकानां सत्वं वक्तव्यम्। सँस्स्कर्ता। पुँस्कामा। काँस्कानिति(1)।। रुविधौ ह्यनिष्टप्रसङ्गः।। रुविधौ हि सत्यनिष्टं प्रसज्येत। इह तावत्-सँस्स्कर्तेति(1),-वा शरीति प्रसज्येत। पुँस्कामेति,-इदुदुपधस्येति षत्वं प्रसज्येत। काँस्कानिति,-कुप्वोः (क)(पा(2)विति) (कः प्रसज्येत।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। क्रियते न्यास एव समः स्सुटि(3)ति द्विसकारको निर्देशः। समः स्सुटि(4) सकारो भवति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते।। यदि तदनुवर्तते,-नश्छव्यप्रशानित्यत्रापि प्राप्नोति, भवाँस्तत्रे(5)ति।। सम्बन्धमनुवर्तिष्यते। समः सुटि(6)। पुमः खय्यम्परे। सो भवति। नश्छव्यप्रशान्। रुर्भवति पुमः खय्यम्परे सकारः। उभयथर्क्षु दीर्घादटि समानपादे नॄन्पे स्वतवान्पायौ। रुर्भवति, पुमः खय्यम्परे सकारः। कानाम्रेडितेसकारः। पुमः खय्यम्परःथ्य;ति निवृत्तम्। ।। समो(1) वा लोपमेके।। समो वा लोपमेक इच्छन्ति।। संस्कर्ता सँस्कर्ता।। समः सुटिः।।

-8-3-6- पुमः खय्यम्परे

समः सुटि ।। कानाम्रिडिते ।।

।। संपुंकानां सत्वम्।। संपुंकानां सत्वं वक्तव्यम्। सँस्स्कर्ता। पुँस्कामा। काँस्कानिति(1)।। रुविधौ ह्यनिष्टप्रसङ्गः।। रुविधौ हि सत्यनिष्टं प्रसज्येत। इह तावत्-सँस्स्कर्तेति(1),-वा शरीति प्रसज्येत। पुँस्कामेति,-इदुदुपधस्येति षत्वं प्रसज्येत। काँस्कानिति,-कुप्वोः)(क)(पा(2)विति) (कः प्रसज्येत।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। क्रियते न्यास एव समः स्सुटि(3)ति द्विसकारको निर्देशः। समः स्सुटि(4) सकारो भवति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते।। यदि तदनुवर्तते,-नश्छव्यप्रशानित्यत्रापि प्राप्नोति, भवाँस्तत्रे(5)ति।। सम्बन्धमनुवर्तिष्यते। समः सुटि(6)। पुमः खय्यम्परे। सो भवति। नश्छव्यप्रशान्। रुर्भवति पुमः खय्यम्परे सकारः। उभयथर्क्षु दीर्घादटि समानपादे नॄन्पे स्वतवान्पायौ। रुर्भवति, पुमः खय्यम्परे सकारः। कानाम्रेडितेसकारः। पुमः खय्यम्परःथ्य;ति निवृत्तम्। ।। समो(1) वा लोपमेके।। समो वा लोपमेक इच्छन्ति।। संस्कर्ता सँस्कर्ता।। समः सुटिः।।

-8-3-12- कानाम्रिडिते

समः सुटि ।। पुमः खय्यम्परे ।।

।। संपुंकानां सत्वम्।। संपुंकानां सत्वं वक्तव्यम्। सँस्स्कर्ता। पुँस्कामा। काँस्कानिति(1)।। रुविधौ ह्यनिष्टप्रसङ्गः।। रुविधौ हि सत्यनिष्टं प्रसज्येत। इह तावत्-सँस्स्कर्तेति(1),-वा शरीति प्रसज्येत। पुँस्कामेति,-इदुदुपधस्येति षत्वं प्रसज्येत। काँस्कानिति,-कुप्वोः)(क)(पा(2)विति) (कः प्रसज्येत।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। क्रियते न्यास एव समः स्सुटि(3)ति द्विसकारको निर्देशः। समः स्सुटि(4) सकारो भवति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते।। यदि तदनुवर्तते,-नश्छव्यप्रशानित्यत्रापि प्राप्नोति, भवाँस्तत्रे(5)ति।। सम्बन्धमनुवर्तिष्यते। समः सुटि(6)। पुमः खय्यम्परे। सो भवति। नश्छव्यप्रशान्। रुर्भवति पुमः खय्यम्परे सकारः। उभयथर्क्षु दीर्घादटि समानपादे नॄन्पे स्वतवान्पायौ। रुर्भवति, पुमः खय्यम्परे सकारः। कानाम्रेडितेसकारः। पुमः खय्यम्परःथ्य;ति निवृत्तम्। ।। समो(1) वा लोपमेके।। समो वा लोपमेक इच्छन्ति।। संस्कर्ता सँस्कर्ता।। समः सुटिः।।

-8-3-13- ढो ढे लोपः

।। ढलोपेऽपदान्तग्रहणम्।। ढलोपेऽपदान्तग्रहणं कर्तव्यम्। इह मा भूत्-श्वलिड्ढौकते गुडलिड्ढौकते।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। जश्त्वमत्र बाधकं भविष्यति।। जश्भावादिति चेदुत्तरत्र ढस्याऽभावादपवादप्रसङ्गः।। जश्भावादिति चेदुत्तरत्र ढकारस्याऽभावादसिद्धत्वादपवादोऽयं विज्ञायेत।। कस्य?।। जश्त्वस्य।। तस्मात्सिद्धवचनम्।। तस्मात्सिद्धत्वं वक्तव्यम्।। कस्य?।। सङ्ग्रहणं वा।। सङ्ग्रहणं वा कर्तव्यम्। सङि ढ इति वक्तव्यम्।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। आनन्तर्यमिहाश्रीयतेढकारस्य ढकार इति।। क्व चिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं(1), क्व चिच्च नैव सन्निपातकृतं, नापि शास्त्रकृतम्। ष्टुत्वे संनिपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं(2), जश्त्वे नैव संनिपातकृतं, नापि शास्त्रकृतम्। यत्तु कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः।

-8-3-15- खरवसानयोर्विसर्जनीयः

।। विसर्जनीयोऽनुत्तरपदे।। विसर्जनीयोऽनुत्तरपद इति वक्तव्यम्। इह मा भूत्-नार्कुटो नार्पत्य इति।। तत्तर्हि वक्तव्यं विसर्जनीयोऽनुत्तरपद(1) इति?।। न वा बहिरङ्गलक्षणत्वात्।।न वा वक्तव्यम्।। किं कारणम्?।। बहिरङ्गलक्षणत्वात्। बहिरङ्गो रेफोऽन्तरङ्गो विसर्जनीयः। असिद्धं बहिरङ्गमन्तरङ्गे।। नैष युक्तः परिहारः। अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ, सत्यन्तरङ्गे बहिरङ्गं, सति च(2)

बहिरङ्गेऽन्तरङ्गं भवति(2)। न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति(3)।। किं कारणम्?।। असिद्धत्वात्।। कथमसिद्धत्वम्(1)?।। पूर्वत्रासिद्धमिति। न चाऽनभिनिर्वृत्ते(1) बहिरङ्गेऽन्तरङ्गं प्राप्नोति, तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य भवति(2)। -अनिमित्तं बहिरङ्गमन्तरङ्गस्याऽसिद्धत्वात्(2)- अनि(3) मित्तं बहिरङ्गमन्तरङ्गस्य।। किं कारणम्?।। असिद्धत्वात्।। कथमसिद्धत्वं यावतापूर्वत्राऽसिद्धमित्यसिद्धा परिभाषा। असिद्धं बहिरङ्गमन्तरङ्गे।। कथम्?।। कार्यकालं संज्ञापरिभाषामिति। खरवसानयोर्विसर्जनीयः। उपस्थितमिदं भवत्यसिद्धं बहिरङ्गमन्तरङ्ग इति। एवमेषा सिद्धा परिभाषा(1) भवति।। कुतो नु(2) खल्वेतदद्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः पूर्वत्रासिद्धमिति च,(1)असिद्धं बहिरङ्गमन्तरङ्गः इति च,-पूर्वत्रासिद्धमित्येतामुपमृद्याऽसिद्धं बहिरङ्गमन्तरङ्ग इत्येतया व्यवस्था भविष्यति, न पुनरसिद्धं बहिरङ्गमन्तरङ्ग इत्येतामुपमृद्य पूर्वत्रासिद्धमित्येतया व्यवस्था स्यात्?।। अतः किम्?।। अतोऽयुक्तः परिहारो न वा बहिरङ्गलक्षणत्वादिति।।

-8-3-16- रोः सुपि

किमर्थमिदमुच्यते न खरवसानयोर्विसर्जनीय इत्येव सिद्धम्?।। नियमार्थोऽयमारम्भः(1)।। नियमार्थोऽयमारम्भः(1) ठरोरेव सुपि नान्यस्य सुपि।। क्व मा भूत्?।। गीर्षु धूर्षु।। रोः सुपि।

-8-3-17- भोभगोअघोअपूर्वस्य योऽशि।

।। अश्ग्रहणमनर्थकमन्यत्राऽभावात्।। अश्ग्रहणमनर्थकम्। किं कारणम्?।। अन्यत्राऽभावात्। न ह्यन्यत्र रुरस्त्यन्यदतोऽशः।।

ननु चायमस्ति-छन्दःसु पयःस्विति।। किं पुनः कारणं सुकारपर एवोदाह्रियते न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति(1)?।। अस्त्यत्र विशेषः-विसर्जनीये कृते न भविष्यति।. इहापि तर्हि विसर्जनीये कृते न भविष्यति-छन्दःसु पयः-स्विति।। स्थानिवद्भावात्प्राप्नोति।। ननु चेहापि स्थानिवद्भावात् प्राप्नोतिवृक्षस्तत्र प्लक्षस्तत्रेति।। अनल्विधौ स्थानिवद्भावः।। अथाऽयमल्विधिः स्याच्छक्यमश्ग्रहणमवक्तुम्?।। बाढं शक्यम्।। अल्विधिस्तर्हि भविष्यति।। कथम्?।। इदमस्ति रो रीति। ततो वक्ष्यामि-खरवसानयोर्विसर्जनीय-रः। ततो रोः सुपि। विसर्जनीयो रः॓थ्य;त्येव।। उत्तरार्थं तर्ह्यश्ग्रहणं कर्तव्यं,-हलि सर्वेषां,-हल्यशीति यथा स्यादिह मा भूत्-वृक्षवयतेरप्रत्ययो-वृक्षव्करोति।। भोभगोअघो।।

-8-3-20- ओतो गार्ग्यस्य

किमर्थमिदमुच्यते न लोपः शाकल्यस्येत्येव सिद्धम्?।।

।। ओकाराल्लोपवचनं नित्यार्थम्।। ओकारल्लोपवचनं क्रियते।। किमर्थम्?।। नित्यार्थम्(1)। नित्यार्थोऽयमारम्भः।। ओतो गार्ग्यस्य।।

-8-3-21- उञ्ञि च पदे

पद इति किमर्थम्?।। तन्त्रे उतं, तन्त्रयुतं, तन्त्र उतम्।।

।। पद इति शक्यमवक्तुम्(2)।। पदे इति शक्यमवक्तुम्(3)। कस्मान्न भवति-तन्त्रे उक्तं तन्त्रयुत तन्त्र उतमिति(3)?।। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।। उत्तरार्थं तर्हि पदग्रहणं कर्तव्यं-ङमो ह्रस्वादचि ङमुण्नित्यमित्यपदे मा भूत्-दण्डिना शकटिना।। उञ्ञि च पदे।।

-8-3-26- हे मपरे वा

।। यवलपरे यवला वा।। यवलपरे हकारे यवला वेति वक्तव्यम्। किं ह्यः किय्ह्यः(1)। किं ह्वलयति। किव्ह्वँलयति(1)। किं ह्लादयति। किल्ह्लाँदयति(1)। (हेमे)

-8-3-28- ङ्णोः कुक्टुक शरि

डः सि धुट् ।। नश्च ।। शितुक।। ङमो ह्रस्वादचि ङ्मुण्नित्यम्

इह धुडादिषु के चित्पूर्वान्ताः क्रियन्ते केचित्परादयः। यदि पुनः सर्व एव पूर्वान्ताः स्युः सर्व एव वा(2) परादयः कश्चात्र विशेषः?।। धुगादिषु(3) ष्टुत्वणत्वप्रतिषेधः।। धुगादिषु(3) सत्सु ष्टुत्वणत्वयोः प्रतिषेधो वक्तव्यः। ष्टुत्वस्य तावत्-श्वलिट्त्साये मधुलिट्त्साये। ष्टुना ष्टुरिति ष्टुत्वं प्राप्नोति। परादौ पुनः सतिन पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदः॓थ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति न पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदः॓थ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति पदान्तस्य नेति प्रतिषेधः सिद्धो भवति।। सन्तु तर्हि परादयः।। परादौ छत्वषत्वविधिप्रतिषेधः(4)।। यदि परादयश्छत्वं विधेयं, षत्वं च(1) प्रतिषेध्यम्। छत्वं विधेयं-कुर्वञ्च्छेते कृषञ्च्छेते। यद्धि तच्छश्छोटीति झयः पदान्तादित्येवं तत्।। किं पुनःकारणं-झयः पदान्तादित्येवं तत्?।। इह मा भूत् पूरा क्रूरस्य विसृपो विरप्शिन्निति। षत्वं च प्रतिषेध्यं-प्रत्यङ्क्सिञ्च उदङ्क्सिञ्च। आदेशप्रत्यययोरिति षत्वं प्राप्नोति। पूर्वान्ते पुनः सति सात्पदाद्योरिति प्रतिषेधः सिद्धो भवति। तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः के चित्परादयः। अयं तु खलु शितुक्छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः। तत्र कुर्वञ्च्छेते कृषञ्च्छेत इतिरषाभ्यां नो णः समानपद इति णत्वं प्राप्नोति।। नैषः दोषः-श्चुत्वे योगविभागः करिष्यते। इदमस्ति क्षुभ्नादिषु च। क्षुभ्नादिषु(2) न णकारो भवति। ततः-स्तोः श्चुना(1)। स्तोः श्चुना संनिपाते न णकारो भवति।। ततः श्चुः। श्चुश्च भवति स्तोः श्चुना सन्निपाते।। डः सि धुट्।

-8-3-29- डः सि धुट्

नश्च ।। शितुक ।। ङ्णोः कुक्टुक शरि ।। ङमो ह्रस्वादचि ङ्मुण्नित्यम्

इह धुडादिषु के चित्पूर्वान्ताः क्रियन्ते केचित्परादयः। यदि पुनः सर्व एव पूर्वान्ताः स्युः सर्व एव वा(2) परादयः कश्चात्र विशेषः?।। धुगादिषु(3) ष्टुत्वणत्वप्रतिषेधः।। धुगादिषु(3) सत्सु ष्टुत्वणत्वयोः प्रतिषेधो वक्तव्यः। ष्टुत्वस्य तावत्-श्वलिट्त्साये मधुलिट्त्साये। ष्टुना ष्टुरिति ष्टुत्वं प्राप्नोति। परादौ पुनः सतिन पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदः॓थ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति न पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदः॓थ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति पदान्तस्य नेति प्रतिषेधः सिद्धो भवति।। सन्तु तर्हि परादयः।। परादौ छत्वषत्वविधिप्रतिषेधः(4)।। यदि परादयश्छत्वं विधेयं, षत्वं च(1) प्रतिषेध्यम्। छत्वं विधेयं-कुर्वञ्च्छेते कृषञ्च्छेते। यद्धि तच्छश्छोटीति

झयः पदान्तादित्येवं तत्।। किं पुनःकारणं-झयः पदान्तादित्येवं तत्?।। इह मा भूत् पूरा क्रूरस्य विसृपो विरप्शिन्निति। षत्वं च प्रतिषेध्यं-प्रत्यङ्क्सिञ्च उदङ्क्सिञ्च। आदेशप्रत्यययोरिति षत्वं प्राप्नोति। पूर्वान्ते पुनः सति सात्पदाद्योरिति
प्रतिषेधः सिद्धो भवति। तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः के चित्परादयः। अयं तु खलु शितुक्छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः। तत्र कुर्वञ्च्छेते कृषञ्छेत इतिरषाभ्यां नो णः समानपद इति णत्वं प्राप्नोति।। नैषः
दोषः-श्चुत्वे योगविभागः करिष्यते। इदमस्ति क्षुभ्नादिषु च। क्षुभ्नादिषु(2) न णकारो भवति। ततः-स्तोः श्चुना(1)। स्तोः श्चुना संनिपाते न णकारो भवति।। ततः श्चुः। श्चुश्च भवति स्तोः श्चुना सन्निपाते।। डः सि धुट्।
-8-3-30- नश्च
डः सि धुट् ।। शितुक ।। ङ्णोः कुक्टुक शरि ।। ङमो ह्रस्वादचि ङ्मुण्नित्यम् ।।
इह धुडादिषु के चित्पूर्वान्ताः क्रियन्ते केचित्परादयः। यदि पुनः सर्व एव पूर्वान्ताः स्युः सर्व एव वा(2) परादयः कश्चात्र विशेषः?।। धुगादिषु(3) ष्टुत्वणत्वप्रतिषेधः।। धुगादिषु(3) सत्सु ष्टुत्वणत्वयोः प्रतिषेधो वक्तव्यः। ष्टुत्वस्य तावत्-श्वलिट्त्साये मधुलिट्त्साये। ष्टुना ष्टुरिति ष्टुत्वं प्राप्नोति। परादौ पुनः सतिन पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदःथ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति न पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदःथ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति पदान्तस्य नेति प्रतिषेधः सिद्धो भवति।। सन्तु तर्हि परादयः।। परादौ छत्वषत्वविधिप्रतिषेधः(4)।। यदि परादयश्छत्वं विधेयं, षत्वं च(1) प्रतिषेध्यम्। छत्वं विधेयं-कुर्वञ्च्छेते कृषञ्च्छेते। यद्धि तच्छश्छोटीति झयः पदान्तादित्येवं तत्।। किं पुनःकारणं-झयः पदान्तादित्येवं तत्?।। इह मा भूत् पूरा क्रूरस्य विसृपो विरप्शिन्निति। षत्वं च प्रतिषेध्यं-प्रत्यङ्क्सिञ्च उदङ्क्सिञ्च। आदेशप्रत्यययोरिति षत्वं प्राप्नोति। पूर्वान्ते पुनः सति सात्पदाद्योरिति प्रतिषेधः सिद्धो भवति। तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः के चित्परादयः। अयं तु खलु शितुक्छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः। तत्र कुर्वञ्च्छेते कृषञ्छेत इतिरषाभ्यां नो णः समानपद इति णत्वं प्राप्नोति।। नैषः दोषः-श्चुत्वे योगविभागः करिष्यते। इदमस्ति क्षुभ्नादिषु च। क्षुभ्नादिषु(2) न णकारो भवति। ततः-स्तोः श्चुना(1)। स्तोः श्चुना संनिपाते न णकारो भवति।। ततः श्चुः। श्चुश्च भवति स्तोः श्चुना सन्निपाते।। डः सि धुट्।
-8-3-31- शितुक
डः सि धुट् ।। नश्च ।। ङ्णोः कुक्टुक शरि ।। ङमो ह्रस्वादचि ङ्मुण्नित्यम्
इह धुडादिषु के चित्पूर्वान्ताः क्रियन्ते केचित्परादयः। यदि पुनः सर्व एव पूर्वान्ताः स्युः सर्व एव वा(2) परादयः कश्चात्र विशेषः?।। धुगादिषु(3) ष्टुत्वणत्वप्रतिषेधः।। धुगादिषु(3) सत्सु ष्टुत्वणत्वयोः प्रतिषेधो वक्तव्यः। ष्टुत्वस्य तावत्-श्वलिट्त्साये मधुलिट्त्साये। ष्टुना ष्टुरिति ष्टुत्वं प्राप्नोति। परादौ पुनः सतिन पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदःथ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति न पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्यकुर्वन्नास्ते कृषन्नास्ते। रषाभ्यां नो णः समानपदःथ्य;ति णत्वं प्राप्नोति। परादौ पुनः सति पदान्तस्य नेति प्रतिषेधः सिद्धो भवति।। सन्तु तर्हि परादयः।। परादौ छत्वषत्वविधिप्रतिषेधः(4)।। यदि परादयश्छत्वं विधेयं, षत्वं च(1) प्रतिषेध्यम्। छत्वं विधेयं-कुर्वञ्च्छेते कृषञ्च्छेते। यद्धि तच्छश्छोटीति झयः पदान्तादित्येवं तत्।। किं पुनःकारणं-झयः पदान्तादित्येवं तत्?।। इह मा भूत् पूरा क्रूरस्य विसृपो विरप्शिन्निति। षत्वं च प्रतिषेध्यं-प्रत्यङ्क्सिञ्च उदङ्क्सिञ्च। आदेशप्रत्यययोरिति षत्वं प्राप्नोति। पूर्वान्ते पुनः सति सात्पदाद्योरिति प्रतिषेधः सिद्धो भवति। तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः के चित्परादयः। अयं तु खलु शितुक्छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः। तत्र कुर्वञ्च्छेते कृषञ्छेत इतिरषाभ्यां नो णः समानपद इति णत्वं प्राप्नोति।। नैषः दोषः-श्चुत्वे योगविभागः करिष्यते। इदमस्ति क्षुभ्नादिषु च। क्षुभ्नादिषु(2) न णकारो भवति। ततः-स्तोः श्चुना(1)। स्तोः श्चुना संनिपाते न णकारो भवति।। ततः श्चुः। श्चुश्च भवति स्तोः श्चुना सन्निपाते।। डः सि धुट्।
-8-3-32- ङमो ह्रस्वादचि ङमुण्नित्यम्
डः सि धुट् ।। नश्च ।। ङ्णोः कुक्टुक शरि ।।
।। ङमुटि पदादिग्रहणम्।। ङमुटि पदादिग्रहणं कर्त्तव्यम्। इह मा भूत्-दण्डिना शकटिनेति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्।। पदादिति वर्तते।। एवमपि-परमदण्डिना परमच्छत्रिणेत्यत्र प्राप्नोति।। पदस्येति वर्तते ङम इति च नैषा पञ्चमी।। का तर्हि?।। संबन्धषष्ठी। पदान्तस्य ङमो ङमुड्भवति(1) ह्रस्वादुत्तरस्याऽचीति।।
यदि ङम एव ङमुट् क्रियते कुर्वन्नास्ते कृषन्नास्ते,-रषाभ्यां नो णः समानपदःथ्य;ति णत्वं प्राप्नोति।। पदान्तस्य(2) नेति प्रतिषेधो भविष्यति।। पदान्तस्येत्युच्यते नैष पदान्तः।। पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते(4)।। एवमपि न सिध्यति।।
नैषः दोषः।। उक्तमेतत्-उत्तरपदत्वे चाऽपदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवती(4)ति।। एवमपि पदादिति वक्तव्यं, यद्धि तत्प्रकृतं, प्राक् सुपि कुत्सनादित्येवं तत्।। एवं तर्हि ङम एवायं ङमुट् क्रियते।। कथम्?।। किं कारणम्?।। उक्तमेतत्-न वा पदाधिकारस्य विशेषणत्वादिति। तेन दण्डिना(1) शकटिना इत्यत्र प्राप्नोति।। एवं तर्हि पद इति वर्तते।। क्व प्रकृतम्?।। उञ्जि च पदे इति।। ङमो ह्रस्वादचि ङमुण्नित्यम्।
-8-3-33- मय उञ्ञो वो वा
किमर्थं मय उत्तरस्य उञ्ञो वो वेत्युच्यते(2) नेको यणचीत्येव सिद्धम्?।। न सिध्यति। प्रगृह्यः प्रकृत्येति प्रकृतिभावः प्राप्नोति।। यदि पुनस्तत्रैवोच्येत-इको यणचि मय उञ्ञो वेति?।। नैवं शक्यमिह हि दोषः स्यात्-किम्वावपनं महत्। मोऽनुस्वारो हलीत्यनुस्वारः प्रसज्येत। वत्वे पुनः सत्यसिद्धत्वान्न भविष्यति।। मय उञ्ञो वो वा।।
-8-3-34- विसर्जनीयस्य सः
इह कस्मान्न भवति-वृक्षाः प्लक्ष इति।। संहितायामिति वर्तते।। एवमप्यत्र प्राप्नोति।। किं कारणम्?।। परः संनिकर्षः संहितेत्युच्यते स यथैव परेण परः सन्निकर्ष एवं पूर्वेणाऽपि(1)।। एवं तर्ह्यनवकाशाऽवसानसंज्ञा संहितासंज्ञां बाधिष्यते।। अथ वा संहितासंज्ञायां प्रकर्षगतिर्विज्ञास्यते,-

साधीयो यः परः सन्निकर्षःथ्द्य;ति।। कश्च साधीयः?।। यः पूर्वपरयोः।।
यद्येवाऽनवकाशाऽवसानसंज्ञा संहितासंज्ञां बाधतेऽथापि संहितासंज्ञायां प्रकर्षगतिर्विज्ञायते उभयथा दोषो भवति। इष्यन्ते इत उत्तरमवसाने संहिताकार्याणि, तानि न सिध्यन्ति-अणोऽप्रगृह्यस्यानुनासिकःथ्द्य;ति।। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-न सर्वस्य विसर्जनीयस्य सत्वं भवतीति यदयं खरवसानयोर्विसर्जनीय इत्याह। इतरथा खरवसानयोः सो भवतीत्येव ब्रूयात्। तच्च(1) लघु भवति, विसर्जनीयस्य स इत्येतच्च(2) न वक्तव्यं भवति।। अवश्यं शर्परे विसर्जनीय इत्यत्र प्रकृतिनिर्देशार्थं विसर्जनीयग्रहणं कर्तव्यम्।। अथेदानीमेतदपि रसान्निध्यार्थं(3) पुरस्तादपकृक्ष्यते(4)-खरवसानयोःस इत्यत्रैव, एवमपि कुप्वोः)(क)(पौ चेत्येवमादिनाऽनुक्रमणेन व्यवच्छिन्नं भोभगोअघोअपूर्वस्य योशीत्यत्र रुग्रहणं कर्तव्यं स्यात्।। एवमप्येकं विसर्जनीयग्रहणं व्याजो भवति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति(1) यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यो न सर्वस्य विसर्जनीयस्य सत्वं भवतीति।। एवमप्यनैकान्तिकं ज्ञापकम्, एतावज्ज्ञाप्यते(2) न सर्वस्य विसर्जनीयस्य सत्वं भवतीति, तत्र कुत एतदिह भविष्यति-वृक्षस्तत्र प्लक्षस्तत्रेति, इह न भविष्यति-वृक्षः प्लक्ष इति।।
एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-नास्य विसर्जनीयस्य सत्वं भवतीति यदयं शर्प रे विसर्जनीय इत्याह।। अथ वा हलीति वर्तते।। क्व प्रकृतम्?।। हलि सर्वेषामिति।। यदि तदनुवर्तते मय उञ्ञो वो वा हलि चेति हल्यपि वत्वं प्राप्नोति। शमु(1) नः, शमु योरस्तु।। एवं तर्हि विसर्जनीयस्य स इत्यत्र खरीत्यनुवर्तिष्यते।। अथ वा संबन्धमनुवर्तिष्यते।।
-8-3-36- वा शरि
।। वा(2) शर्प्रकरणे खर्परेलोपः।। वा शर्प्रकरणे खर्परे लोपो वक्तव्यः। वृक्षा स्थातारः। वृक्षाः स्थातारः।। वा शरि।
-8-3-37- कुप्वोः )(क)(पौ च
।। सस्य कुप्वोर्विसर्जनीयजिह्वामूलियोपध्मानीयाः।। सस्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीया वक्तव्याः।। विसर्जनीयादेशे(2) हि शर्परयोरेवादेशप्रसङ्गः।। विसर्जनीयादेशे हि सति शर्परयोरेव कुप्वोः)(क)(पौ स्याताम्-अदि्भः प्सातं वासः क्षौमम्।। वचनान्न भविष्यतः।।
अस्ति वचने प्रयोजनम्।। किम्?।। पुरुषः त्सरुकः।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्रानुवर्तिष्यते, तस्मिंश्च शर्परे विसर्जनीयोऽसिद्धः।।
नाऽसिद्धः।। कथम्?।। अधिकारो नाम त्रिप्रकारः। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति(1)। यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयति। अपरो(1) यथा-रज्ज्वाऽयसा वा बद्धं काष्ठमनुकृष्यते तद्वत्। अपरोऽधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति योगे योगे उपतिष्ठते। तद्यदैष पक्षः-प्रतियोगं तस्याऽनिर्देशार्थःथ्द्य;ति तदा हि यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्राऽनुवृत्तं सदन्यत्संपद्यते। तस्मिंश्च सर्परे विसर्जनीयः सिद्धः। एवं च कृत्वा शर्परयोरेव कुप्वोः)(क)(पौ स्याताम्, वासः(2) क्षौममदि्भः प्सातमिति।। एवं तर्हि योगविभागः करिष्यते। शर्परे विसर्जनीयः। वा शरि। ततः कुप्वोः। कुप्वोश्च शर्परयोर्विसर्जनीयस्य(3) विसर्जनीयो भवतीति।।
किमर्थमिदम्?।। कुप्वोः)(क)(पौ वक्ष्यति तद्बाधनार्थम्। ततः)(क)(पौ(4) च।)(क)(पौ च भवतः। कुप्वोरित्येव।
शर्परयोरिति निवृत्तम्।। अथवा शर्परे विसर्जनीय इत्येतत् कुप्वोः )(क)(पौ चेत्यत्रानुवर्तिष्यते।।
-8-3-38- सोऽपदादौ
।। सोऽपदादावनव्ययस्य।। सोपदादावनव्ययस्येति वक्तव्यम्। इह मा भूत्-प्रातःकल्पम् पुनः कल्पम्।। रोः काम्ये नियमार्थम्।।रोः काम्य इति वक्तव्यम्।। किं प्रयोजनम्?।। नियमार्थम्। रोरेव काम्ये नान्यस्य। पयस्काम्यति।। क्व मा भूत्?।। गीःकाम्यति धूः(1) काम्यति पूः काम्यति।।
उपध्मानीयस्य(1) च।। उपध्मानीयस्य च सत्वं वक्तव्यम्।। किं प्रयोजनम्?।। अयमु)(ब्जिरुपध्मानीयोपधः पठ्यते तस्य सत्वे कृते जश्भावे च अभ्युद्रः समुद्र इत्येतद्रूपं यथा स्यात्।। यद्युपध्मानीयोपधः पठ्यते-उब्जिजिपतीत्युपध्मानीयस्य द्विर्वचनं प्राप्नोति। दकारोपधे पुनः सति न न्द्राः संयोगादयःथ्द्य;ति प्रतिषेधः सिद्धो भवति।। यदि दकारोपधः पठ्यते का रूपसिद्धिः-उब्जिता उब्जितुमिति?।। असिद्धे भ उद्जेः(1)।। इदमस्ति-स्तोःश्चुना श्चुः। ततो वक्ष्यामि-भ उद्जेः(1)। उद्जेश्च(1) श्चुना सन्निपाते भो भवतीति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। निपातनादेतत्सिद्धम्(2)।। किं निपातनम्?।। भुजन्युब्जौ पाण्युपतापयोरिति।। इहापि प्राप्नोति-अभ्युद्गः समुद्गः।। अकुत्वविषये निपातनम्। अथ वा नैतदुब्जे रूपम्।। किन्तर्हि?।। गमेर्द्ध्युपसर्गाड्डो विधीयते-अभ्युद्गतः-अभ्युद्गः। समुद्गतः समुद्गः। सोऽपदादौ।।
-8-3-39- इणः षः
किमविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते आहो स्विदिण उत्तरस्य विसर्जनीसस्यैव षत्वं विधीयते?।। किञ्चातः?।। यद्यविशेषेण सत्वमुक्त्वेण उत्तरस्य सकारस्य षत्वमुच्यते, निष्कृतं निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात्षत्वं(4) न प्राप्नोति। अथेण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते(1) सत्वमप्यनुवत्तते उताहो न?।।
किं चातः(2)?।। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तं नमस्पुरसोर्गत्योरित्यत्र सकारग्रहणं(3) कर्त्तव्यम्।।
तस्मिंश्च क्रियमाणे षत्वप्यनुवर्त्तते उताहो न?।।
किं चातः?।। यद्यनुवर्तते षत्वमपि प्राप्नोति, अथ निवृत्तम्---इदुदुपधस्य(4) चाऽप्रत्ययस्येत्यत्र षकारग्रहणं कर्त्तव्यम्।।
तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्त्तते उताहो न?।।
किञ्चातः?।। यद्यनुवर्त्तते सत्वमपि प्राप्नोति। अथ निवृत्तं तिरसोऽन्यतरस्यामित्यत्र सकारग्रहणं कर्त्तव्यम्।।
तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्त्तते उताहो न?।। किञ्चातः(2)।।
यद्यनुवर्त्तते षत्वमपि प्राप्नोति। अथ निवृत्तं-द्विस्त्रिश्चतुरिति कृत्वोर्थे इसुसोः सार्मथ्ये नित्यं समासेऽनुत्तरपदस्थस्येति षकारग्रहणं कर्त्तव्यम्।।
तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्त्तते उताहो न?।।
किञ्चातः(1)?।। यद्यनुवर्त्तते सत्वमपि प्राप्नोति। अथ निवृत्तम् अतः
कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति सकारग्रहणं कर्त्तव्यम्।।

यथेच्छसि तथास्तु। अस्तु तावदविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते।। ननु चोक्तं-निष्कृतं निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात्षत्वं न प्राप्नोतीति।।नैषः दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न योगे योगोऽसिद्धः।। किं तर्हि?।। प्रकरणे प्रकरणमसिद्धमिति,यदयमुपसर्गादसमासेऽपि णोपदेशस्येत्यसमासेऽपिग्रहणं करोति।। अथ वा पुनरस्तु इण उत्तरस्य विसर्जनीयस्य षत्वं विधीयते।। ननु चोक्तं--सत्वमप्यनुवर्तते उताहो न। किञ्चातः,(1) यद्यनुवर्तते सत्वमपि प्राप्नोतीति। नैषः दोषः। सम्बन्धमनुवर्तिष्यते(2)। सोऽपदादौ इणः षः। नमस्पुरसोर्गत्योः सकारः, इण उत्तरस्य षकारः। इदुदुपधस्य(2) चाऽप्रत्ययस्य षकारः। नमस्पुरसोर्गत्योः सकारः। तिरसोऽन्यतरस्यां सकारः। इदुदुपधस्य(3) चाप्रत्ययस्यषकारः। द्विस्त्रिश्चतुरिति कृत्वोर्थे इसुसोः सार्मथ्ये नित्यं समासेऽनुत्तरपदस्थस्येति, षकारः। तिरसोऽन्यतरस्यांसकारः। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। सकारोऽनुवर्त्तते। षकारग्रहणं निवृत्तम्।। इणः षः

-8-3-41- इदुदुपधस्य चाऽप्रत्ययस्य

।। इदुदुपधस्य(3) चाप्रत्ययस्येति चेत्पुंमुहुसोः प्रतिषेधः।। इदुदुपधस्य चाऽप्रत्ययस्येति चेत्पुंमुहुसोः प्रतिषेधो वक्तव्यः। पुँस्कामा(1)। मुहुः कामेति(2)।। वृद्धिभूतानां षत्वम्।। वृद्धिभूतानां(3) षत्वं वक्तव्यम्। दौष्कुल्यम्। नैष्पुरुष्यम्(4)।। प्लुतानां तादौ च।। प्लुतानां तादौ च कुप्वोश्चेति वक्तव्यम्। सर्पी3ष्टर। वही3ष्टर(4)। नी3ष्कुल। दू3ष्पुरुष।। न वा बहिरङ्गलक्षणत्वाद्वृद्धेः(5)।। न वा वक्तव्यम्।। किं कारणम्?।। बहिरङ्गलक्षणत्वाद्वृद्धेः(5)। बहिरङ्गलक्षणा वृद्धिः।। इह कस्मान्न भवति पितुः करोति मातुः करोति?, अप्रत्ययविसर्जनीयस्येति षत्वं प्रसज्येत।। अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चाऽयम्।। लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्येति।। एवं तर्हि--।। भ्रातुष्पुत्रग्रहणं(3) ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य।। यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं(1) पठति तज्ज्ञापयत्याचार्यो नैकादेशनिमित्तात्षत्वं भवतीति।।

-8-3-43- द्विस्त्रिश्चतुरिति कृत्वोर्थे

द्विस्त्रिश्चतुर्ग्रहणं किमर्थम्?।। इह मा भूत्-पञ्चकृत्वः करोति।। अथ कृत्वोर्थग्रहणं किमर्थम्?।। इह मा भूत्-चतुष्कपालः चतुष्कण्टक इति।। नैतदस्ति। अस्त्वनेन(2) विभाषा, पूर्वेण नित्यो विधिर्भविष्यति।। नाप्राप्ते पूर्वेणेयं विभाषाऽऽरभ्यते, सा यथैवेह बाधिका भवति चतुःकरोति चतुष्करोतीत्येवं चतुष्कपालेऽपि बाधिका स्यात्।। नाऽत्र पूर्वेण षत्वं प्राप्नोति।। किं कारणम्?।। अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चाऽयम्।। लुप्यतेऽत्र(2) प्रत्ययविसर्जनीयो रात्सस्येति।। तस्मात्कृत्वोर्थग्रहणं(3) कर्त्तव्यम्।।

द्विस्त्रिश्चतुर्ग्रहणं शक्यमवक्तुम्।। कस्मान्न भवति पञ्चकृत्वः करोतीति?। इदुदुपधस्येति वर्त्तते। नैवं शक्यम्, अक्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे कृत्वोर्थग्रहणेन विसर्जनीयो विशेष्येत(1)।। तत्र को दोषः?।। इहैव स्यादिद्वष्करोति द्विःकरोति,(2) त्रिष्करोति(3) त्रिः करोति(3) इति। इह न स्याच्चतुः(2) करोति चतुष्करोतीति(2)। द्विस्त्रिश्चतुर्ग्रहणे पुनः क्रियमाणे कृत्वोर्थग्रहणेन द्विस्त्रिश्चतुरो विशेष्यन्ते, द्विस्त्रिश्चतुर्णां(4) कृत्वोर्थे वर्त्तमानानां यो विसर्जनीय इति।। एतदपि नास्ति प्रयोजनं, पदस्येति वर्तते। तत्कृत्वोर्थग्रहणेन विशेषयिष्यामः-पदस्य कृत्वोऽर्थे वर्तमानस्य यो विसर्जनीय इति।।

।। कृत्वसुजर्थे(5) षत्वं ब्रवीति कस्माच्चतुष्कपाले मा(6)।
षत्वं विभाषयाऽभून्ननु सिद्धं तत्र पूर्वेण।।1।।
सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोर्थे।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि।।2।।
एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम्?।
अन्यो हि नेदुदुपधः कृत्वोर्थे कश्चिदप्यस्ति।।3।।
अक्रियमाणे ग्रहणे विसर्जनीयस्तदा(1) विशेष्येत।
चतुरो न सिध्यति तदा(3) रेफस्य विसर्जनीयो हि।।4।।
तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम्।।5।।

-8-3-45- नित्यं समासेऽनुत्तरपदस्थस्य

अनुत्तरपदस्थस्येति किमर्थम्?।। परमसर्पिःकुण्डिका।। अथेदानीमनेन मुक्ते पूर्वेण षत्वं विभाषा कस्मान्न भवति-इसुसोः सार्मथ्य इति?।।

।। नाना पदार्थयोर्वर्तमानयोः ख्यायते यदा योगः।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह।।1।।

व्यपेक्षासार्मथ्ये पूर्वयोगो(1) न चाऽत्र व्यपेक्षासार्मथ्यम्।।

किं पुनः कारणं पूर्वस्मिन्योगे(2) व्यपेक्षासार्मथ्यमाश्रीयते न पुनरेकार्थीभावो, यथाऽन्यत्र?।।

।। ऐकार्थ्ये सार्मथ्ये वाक्ये षत्वं न मे प्रसज्येत।।

ऐकार्थ्ये सार्मथ्ये सति वाक्ये षत्वं न स्यात्- सर्पिष्करोति, सर्पिःकरोति इति।।

।। तस्मादिह व्यपेक्षां(3) सार्मथ्यं साधु मन्यन्ते।।

अथ चेत्कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः।।

यदि कृदन्तमेतत्ततोऽधिकस्य षत्वं न प्राप्नोति(5)।। किं कारणम्?।। प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति।। वाक्येऽपि तर्हि न प्राप्नोति परमसर्पिष्करोति परमसर्पिः करोतीति।।

।। वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत।।

यदयमनुत्तरपदस्थस्येति प्रतिषेधं शास्तितज्ज्ञापयत्याचार्यो भवति वाक्ये विभाषेति।। अथ चेत्संविज्ञानं नित्ये षत्वे(1) ततो विभाषेयम्।।

अथाऽव्युत्पन्नं प्रातिपदिकं ततो नित्ये षत्वे प्राप्ते इयं विभाषा आरभ्यते।। सिद्धं च मे समासे।। सिद्धं च(2) मे समासे षत्वम्। किमर्थं तर्हीदमुच्यते?।। प्रतिषेधार्थस्तु यत्नोऽयम्।। प्रतिषेधार्थोऽयं यत्नः। अनुत्तरपदस्थस्येति प्रतिषेधं वक्ष्यामीति।

।। नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः।

तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह।।1।।
ऐकार्थ्ये सार्मथ्ये वाक्ये षत्वं न मे प्रसज्येत।
तस्मादिह व्यपेक्षां सार्मथ्यं साधु मन्यन्ते।।2।।
अथ चेत्कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः।
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत।।3।।
अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम्।
सिद्धं च मे समासे, प्रतिषेधार्थस्तु यत्नोऽयम्।।4।।

-8-3-55- अपदान्तस्य मूर्द्धन्यः

अथ मूर्द्धन्यग्रहणं किमर्थं, नाऽपदान्तस्य षो भवतीत्येवोच्येत, तत्रायमप्यर्थः(1) षकारग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते।। क्व प्रकृतम्?।। इणः ष इति।। नैवं शक्यम्। अवश्यं मूर्द्धन्यग्रहणं कर्तव्यम् इहार्थमुत्तरार्थं(2) च।। इहार्थं-तावत्-इणः षीध्वंलुङ्लिटां धोऽङ्गादित्यत्र मूर्द्धन्यग्रहणं न कर्तव्यं भवति। उत्तरार्थम्-रषाभ्यां नो णः समानपद इत्यत्र णकारग्रहणं न कर्तव्यं भवति। तत्रायमप्यर्थः(3) पदान्तस्य नेति प्रतिषेधो न वक्तव्यो भवति। अपदान्ताभिसम्बद्धं मूर्धन्यग्रहणमनुवर्तते(4)।।

-8-3-56- सहेः साडः सः

सग्रहणं किमर्थं न सहेस्साडो मूर्द्धन्यो भवतीत्येवोच्येत?।। सहेस्साडो मूर्द्धन्यो भवतीत्युच्यमानेऽन्त्यस्य प्रसज्येत।। ननु चाऽन्त्यस्य मूर्द्धन्यवचने(1) प्रयोजनं नास्तीति कृत्वा सकारस्य भविष्यति।। कुतो नु खल्वेतदनन्त्यार्थे आरम्भे सकारस्य भविष्यति न पुनराकारस्य स्यात्?।। स्थानेन्तरतमो भवतीति सकारस्य भविष्यति।। भवेत्प्रकृतितोऽन्तरतमनिर्वृत्तौ सत्यां सिद्धं स्यात्। आदेशतस्त्वन्तरतमनिर्वृत्तौ सत्यामाकारस्य प्रसज्येत। तस्मात् सकारग्रहणं कर्तव्यम्।।सकार(2)ग्रहणमुत्तरार्थम्।। उत्तरार्थं च सकारग्रहणं क्रियते। आदेशप्रत्यययोस्सकारस्य यथा स्यादिह मा भूत्,-चितं स्तुतम्।। अथ सहिग्रहणं किमर्थं न साडः सो भवतीत्येवोच्येत?।। सहेरेव साड्रूपं भवति नान्यस्य भवति(1)। यद्येवं-।। साडः षत्वे समानशब्दप्रतिषेधः ।। साडः षत्वे समानशब्दानां प्रतिषेधो वक्तव्यः। साऽडो दण्डः, साऽडो वृश्चिक इति।। अर्थवद्ग्रहणात्सिद्धम्।। अर्थवतः साड्(रूप(2))शब्दस्य ग्रहणं, न चैषोऽर्थवान्।। अर्थवद्ग्रहणात्सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेधः।। अर्थवद्ग्रहणात्सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेधो वक्तव्यः। सह अडेन साऽडः, साऽडस्यापत्यं साऽडिरित्यत्र(3) प्राप्नोति।। स तर्हि वक्तव्यः?(1)।। न वक्तव्यः। षत्वतुकोरेकादेशस्याऽसिद्धत्वान्नैष साड्शब्दः।। एवमपि सह डेन सडः, सडस्यापत्यं साडिः,-अत्र प्राप्नोति।। तस्मात्सहिग्रहणं कर्तव्यम्।।(सहेः साडः सः।)

-8-3-57- इण्कोः

नुम्विसर्जनीयर्शव्यवायेऽपि ।।

।। नुम्विसर्जनीयर्शव्यवोये निंसेः प्रतिषेधः।। नुम्विसर्जनीयर्सव्यवाये निंसेः प्रतिषेधो वक्तव्यः। निंस्से निंस्स्वेति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। नुमैव व्यवाये, विसर्जनीयेनैव व्यवाये शरैव व्यवाये इति।। किं वक्तव्यमेतत्?।। न हि कथमनुच्यमानं गंस्यते?।। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा गुणवृद्धिसंज्ञे प्रत्येकं भवतः।। ननु चायमप्यस्ति दृष्टान्तः-समुदाये वाक्यपरिसमाप्तिः। तद्यथा-गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति।। एवं तर्हि।।योगविभागात्सिद्धम्।।(योगविभागात्सिद्धमेतत्(1))। योगविभागः करिष्यते। नुम्व्यवाये। ततो,-विसर्जनीयव्यवाये। ततः शर्व्यवाये।। स तर्हि योगविभागः कर्तव्यः?।। न कर्तव्यः। प्रत्येकं व्यवायशब्दः परिसमाप्यते।।

-8-3-58- नुम्विसर्जनीयर्शव्यवायेऽपि

इण्कोः ।।

।। नुम्विसर्जनीयर्शव्यवोये निंसेः प्रतिषेधः।। नुम्विसर्जनीयर्सव्यवाये निंसेः प्रतिषेधो वक्तव्यः। निंस्से निंस्स्वेति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। नुमैव व्यवाये, विसर्जनीयेनैव व्यवाये शरैव व्यवाये इति।। किं वक्तव्यमेतत्?।। न हि कथमनुच्यमानं गंस्यते?।। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा गुणवृद्धिसंज्ञे प्रत्येकं भवतः।। ननु चायमप्यस्ति दृष्टान्तः-समुदाये वाक्यपरिसमाप्तिः। तद्यथा-गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति।। एवं तर्हि।।योगविभागात्सिद्धम्।।(योगविभागात्सिद्धमेतत्(1))। योगविभागः करिष्यते। नुम्व्यवाये। ततो,-विसर्जनीयव्यवाये। ततः शर्व्यवाये।। स तर्हि योगविभागः कर्तव्यः?।। न कर्तव्यः। प्रत्येकं व्यवायशब्दः परिसमाप्यते।।

-8-3-59- आदेशप्रत्यययोः

आदेशप्रत्यययोः षत्वे सरकः(2) प्रतिषेधः।। आदेशप्रत्यययोः षत्वे सरकः(2) प्रतिषेधो वक्तव्यः। कृसरः धूसरः।। अत्यल्पमिदमुच्यते सरक इति।।सरगादीनामिति वक्तव्यम्।। इहापि यथा स्यात्-वर्सं तर्समिति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। न वा एत(4)त्षत्वे शक्यं विज्ञातुम्--उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति। इह हि न स्यात्-सर्पिषः(1) यजुष इति।। एवं तर्हि-।। बहुल वचनात्सिद्धम्।। (बहुलवचनात्सिद्ध(2)मेतत्)। बहुलं प्रत्ययसंज्ञा भवति(3)।

अथ किं पुनरियमवयवषष्ठी-आदेशस्य यः सकारः प्रत्ययस्य यः सकार इति, आहो स्वित् समानाधिकरणा-आदेशो यः सकार प्रत्ययो यः सकार इति।। कश्चात्र विशेषः?।। आदेशप्रत्यययोरित्यवयवषष्ठी चेदिद्वर्वचने(4) प्रतिषेधः।। आदेशप्रत्यययोरित्यवयवषष्ठी चेदिद्वर्वचने प्रतिषेधो

वक्तव्यः। बिसं बिसम्। मुसलं मुसलम्।। समानाधिकरणानां चाऽप्राप्तिः।। समानाधिकरणानां च षत्वस्याऽप्राप्तिः। एषः अकार्षीत्।। अस्तु समानाधिकरणा।। यदि समानाधिकरणा सिषेच सुष्वाप,-अत्र न प्राप्नोति।। न धातुद्विर्वचने स्थाने द्विर्वचनं शक्यमास्थातुम्, इहापि(1) हि प्रसज्येत - सरीसृप्यते इति। तस्मात्तत्र द्विःप्रयोगो(2) द्विर्वचनम्।। इह तर्हि करिष्यति हरिष्यति,प्रत्ययो यः सकार इति षत्वं न प्राप्नोति।। अस्तु तर्ह्यादेशो यः सकारः प्रत्ययस्य यः सकार इति।। इह तर्हि-अकार्षीत्,-प्रत्ययस्य यः सकार इति षत्वं न प्राप्नोति।। मा भूदेवम्, आदेशो यः सकारःथ्य;त्येवं भविष्यति। इह तर्हि जोषिषत्, मन्दिषदिति,-प्रत्ययस्य यः(3) सकार इति षत्वं न प्राप्नोति। एषोऽपीटि कृते प्रत्ययस्य सकारः।। इह तर्हि,-इन्द्रो मा वक्षत्, स देवान्यक्षत्।। नानाविभक्तीनां च समासानुपपत्तिः।।

नानाविभक्तीनां च समासो नोपपद्यते आदेशप्रत्यययोरिति।। योगविभागात्सिद्धम्।।(योगविभागात्सिद्धमेतत्(4))। योगविभागः करिष्यते। आदेशस्य। (आदेशस्य(4))षोभवतीति। ततः(5) प्रत्ययस्य। प्रत्ययस्य(3) सकारस्य षो भवतीति।। स तर्हि योगविभागः कर्तव्यः?।। न कर्तव्यः।। कथम्?।। अस्तु तावदवयवषष्ठी।। ननु चोक्तमादेशप्रत्यययोरित्यवयवषष्ठी चेदिद्वर्वचने प्रतिषेध इति।। नैषः दोषः। द्विःप्रयोगो(6) द्विर्वचनम्।. यदप्युच्यते-समानाधिकरणानां चाप्राप्तिरिति। (नैषः(5) दोषः)।। व्यपदेशिवद्भावेन भविष्यति।। अथ वा पुनरस्तु समानाधिकरणा।। कथं करिष्यति हरिष्यति?।। आचार्यप्रवृत्तिर्ज्ञापयतिभवत्येवंजातीयकानां षत्वमिति यदयं सात्पदाद्योरिति सात्प्रतिषेधं शास्ति।। अथ वा पुनरस्त्वादेशो यःसकारः प्रत्ययस्य यः सकार इति।। कथमिन्द्रो मा वक्षत्, स देवान्यक्षत्?।। व्यपदेशिवद्भावेन भविष्यति।। स तर्हि व्यपदेशि वद्भावो वक्तव्यः?।। न वक्तव्यः।। उक्तं वा ।।झ्रउक्तंवाट।। किमुक्तम्?।। तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थं, षत्वे चादेशसंप्रत्ययार्थम्, अवचनाल्लोकविज्ञानात्सिद्धमिति। यदपि-नानाविभक्तीनां च समासानुपपत्तिरिति। आचार्यप्रवृत्तिर्ज्ञापयति-नानाविभक्तयोरेष समास इति, यदयं शासिवसिघसीनां चेति घसिग्रहणं करोति।।

कथं कृत्वा ज्ञापकम्?।। यदि ह्यादेशस्य यः सकार इत्येवं स्याद्घसिग्रहणमनर्थकं स्यात्। पश्यति त्वाचार्यः-आदेशो यः सकारस्तस्य षत्वमिति,-ततो घसिग्रहणं करोति।। (आदेशप्रत्यययोः)।

-8-3-61- स्तौतिण्योरेव षण्यभ्यासात्

स्तौतिणिग्रहणं(1) किमर्थम्?।। अस्तौतिण्यन्तानां मा भूत्-सिसिक्षति(2)।। अथैवकारः किमर्थः।। एवकारो नियमार्थः(3)।। (एवकारो नियमार्थः)। स्तौतिण्यन्तानामेव नान्येषा(1)मिति।। नैतदस्ति प्रयोजनं, सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारकरणं(4) नियमार्थो भविष्यति।। इष्टतोऽवधारणार्थस्तर्हि। यथैवं विज्ञायेत स्तौतिण्योरेव(5) षणीति, मैवं विज्ञायि-स्तौतिण्योः(5) षण्येवेति। इह न स्यात्-तुष्टाव।।

अथ षणीति किमर्थम्?।। सेषीव्यते। को विनतेऽनुरोधः?।। अविनते नियमो मा भूत्-सुषुप्सतीति।। कः सानुबन्धेऽनुरोधः?।। षशब्दमात्रे नियमो मा भूत्-सुषुपिष इन्द्रम्। सुषुपिष इहेति।। अभ्यासादिति किमर्थम्?।। अभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यादुपसर्गाद्या प्राप्तिस्तस्या नियमो मा भूत्-अभिषिषिक्षति।। नैतदस्ति, असिद्धमुपसर्गात्षत्वं, तस्याऽसिद्धत्वान्नियमो न भविष्यति।। इदं तर्हि प्रयोजनं,-सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तस्या नियमो यथा स्याद्यङि योऽभ्यासस्तस्माद्या प्राप्तिस्तत्र नियमो मा भूत्सोषुप्यतेः(6) सन्(1)-सोषुपिषते।। अथ वाऽभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्याद्धातोर्या प्राप्तिस्तस्या नियमो मा भूत्(2)-अधीषिषति प्रतीषिषतीति(7)।। ननु च षणीत्युच्यते; षणीति नैषा परसप्तमी शक्या विज्ञातुम्। सन्यङन्तं हि द्विरुच्यते, तस्मादेषा सत्सप्तमी षणि सतीति। सत्सप्तमी चेत्प्राप्नोति।।

-8-3-64- स्थादिष्वभ्यासेन चाभ्यासस्य

किमर्थमिदमुच्यते?।। स्थादिष्वभ्यासवचनं(1) नियमार्थम्।। नियमार्थोऽयमारम्भः-स्थादिष्वभ्यासस्य(2) यथा स्यादिह मा भूत्-अभिसुसूषति।। अथ किमर्थभ्यासेन

चेत्युच्यते?।। तद्व्यवाये चाषोपदेशार्थम्।। तद्व्यवायेऽभ्यासव्यवाये चाऽषोपदेशस्यापि यथा स्यात्। अभिषिषेणयिषति।। अवर्णान्ताभ्यासार्थं(3) षणिप्रतिषेधार्थं च।। अवर्णान्ताभ्यासार्थं(3) तावत्-अभितष्ठौ। षणिप्रतिषेधार्थं च ।। अवर्णान्ता(3)भ्यासार्थं तावत्-अभितष्ठौ। षणिप्रतिषेधार्थम्-अभिषिषिक्षति।।

-8-3-65- उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्

।। उपसर्गात्षत्वे निस उपसङ्ख्यानमनिणन्तत्वात्।। उपसर्गात्षत्वे निस उपसङ्ख्यानं कर्तव्यम्। निष्षुणोति। निष्षिञ्चति।। किं पुनः कारणं न सिध्यति?।। अनिणन्तत्वात्। इणन्तादुपसर्गात्षत्वमुच्यते न च निसिणन्तः।। न वा वर्णाश्रयत्वात् षत्वस्य तद्विशेषक उपसर्गो धातुश्च।। न वा वक्तव्यम्। किं कारणम्?। वर्णाश्रयत्वात् षत्वस्य। वर्णाश्रयं षत्वम्। तद्विशेषक उपसर्गो धातुश्च। नैवं विज्ञायते-इणन्तादुपसर्गादिति।। कथं तर्हि?।। इण उत्तरस्य सकारस्य, स चेदिणुपसर्गस्य, स चेत्सकारस्सुनोत्यादीनामिति। तत्र शर्व्यवायेःथ्य;त्येव(1) सिद्धम्।। यद्येवं धातूपसर्गयोरभिसम्बन्धोऽकृतो भवति।। तत्र को दोषः?।। इहापि प्राप्नोति-विगताः सेचका(1) अस्माद्ग्रामात्-विसेचको ग्रामः।। धातूपसर्गयोश्चाऽभिसम्बन्धः कृतः।। कथम्?।। सुनोत्यादिभिरत्रोपसर्ग

विशेषयिष्यामः सुनोत्यादीनां य उपसर्गस्तस्य (उपसर्गस्य(2)) य इणिति।। सुनोत्यादीनां(1) षत्वे ण्यन्तस्योपसङ्ख्यानमधिकत्वात्।। सुनोत्यादीनां षत्वे ण्यन्तस्योपसङ्ख्यानं कर्तव्यम्। अभिषावयति।। किं कारणं(3)(न सिध्यति?(2))। अधिकत्वात्। व्यतिरिक्तः सुनोत्यादिरिति कृत्वोपसर्गात्सुनोत्यादीनामिति षत्वं न प्राप्नोति।। न वाऽवयवस्याऽनन्यत्वात्।। न वा वक्तव्यम्।। किं कारणम्?।। अवयवस्यानन्यत्वात्। अवयवोत्राऽनन्यः (इति(2))।। नामधातोस्तु प्रतिषेधः।। नामधातोस्तु प्रतिषेधो वक्तव्यः। सावकमिच्छत्यभिसावकीयति। परिसावकीयति(4)।। न वाऽनुपसर्गत्वात्।। न वा वक्तव्यः।। किं कारणम्?।। अनुपसर्गत्वात्। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चाऽत्र सुनोतिं प्रति क्रियायोगः।। किं तर्हि?।। सावकीयतिं प्रति।। इहापि तर्हि न प्राप्नोति-अभिषावयति। अत्रापि न(2) सुनोतिं प्रति क्रियायोगः।। किं तर्हि?।। सावयतिं प्रति।। सुनोतिं प्रत्यत्र क्रियायोगः।। कथम्?।। नासावेवं प्रेष्यतेसुन्वभीति।। किं तर्हि?।। उपसर्गविशिष्टामसौक्रियां प्रेष्यते-अभिषुण्विति।।

-8-3-67- स्त(1)म्भेः

अप्रतेरिति वर्तते(2) उताहो निवृत्तम्?।। निवृत्त(3)मित्याह।। कथं ज्ञायते?।। योगविभागकरणसार्मथ्यात्(3)। इतरथा हि सदिस्तम्भ्योरप्रते(1)रित्येव ब्रूयात्।। अस्त्यन्यद्योगविभागकरणे प्रयोजनम्।। किम्?।। अवाच्चालम्बनाविदूर्ययोरिति वक्ष्यति तत्स्तम्भेरेव(1) यथा स्यात्सदेर्मा भूदिति।। नैतदस्ति प्रयोजनम्। एकयोगेऽपि सति यस्यालम्बनाविदूर्येस्तस्तस्य भविष्यति।। कस्य चाऽऽलम्बनाविदूर्ये स्तः?।। स्तम्भेरेव(1)।। (स्तम्भेः)।।

-8-3-72- अनुविपर्याभिनिभ्यः स्यन्दतेरप्राणिषु ।।

अथ यः प्राण्यप्राणी च कथं तत्र भवितव्यम्, अनुष्यन्देते मत्स्योदके इति, आहो स्विदनुस्यन्देते मत्स्योदके इति

? यदि तावदप्राणी विधिनाश्रीयते, अस्त्यत्राप्राणीति कृत्वा भवितव्यं षत्वेन , अथ प्राणी प्रतिषेधेनाश्रीयते , अस्त्यत्र प्राणीति कृत्वा भवितव्यं प्रतिषेधेन।।

किं पुनरत्राऽर्थसत्वं ? देवा एतज्ज्ञातुमर्हन्ति।।

-8-3-74- परेश्च

अथाऽनिष्ठायामिति(1)(2) वर्तते उताहो निवृत्तम्?।। निवृत्तमित्याह।। कथं ज्ञायते?।। योगविभागकरणसार्मथ्यात्(2)। इतरथा हि विपरिभ्यां च स्कन्देरनिष्ठायामित्येव ब्रूयात्।। (परेश्च)।।

-8-3-78- इणः षीध्वंलुङ्लिटां धोऽङ्गात्

विभाषेटः ।।

इण्ग्रहणं किमर्थम्?।। इण्ग्रहणं ढत्वे कवर्गनिवृत्त्यर्थम्।। इण्ग्रहणं क्रियते।। (किं प्रयोजनम्? ढत्वे कवर्गनिवृत्त्यर्थम्)।। कवर्गाड्ढत्वं मा भूत्(1) पक्षीध्वम् यक्षीध्वम्।। किं पुनरिदमिण्ग्रहणं प्रत्ययविशेषणम्-इण उत्तरेषां षीध्वंलुङ्लिटां यो धकार इति, आहो स्विद्धकारविशेषणम्--इणः उत्तरस्य धकारस्य, स चेत्षीध्वंलुङ्लिटान्धकारःथ्य;ति।। कश्चात्र विशेषः?।। तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं परादित्वात्।। तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं न प्राप्नोति। लुलुविढ्वे(4) लुलुविध्व इति।। किं कारणम्?।। परादित्वात्। इट् परादिः(5)।। वचनाद्भविष्यति।। अस्ति वचने प्रयोजनम्।। किम्?।। अलविढ्वम् अलविध्वम्।। अस्तु तर्हि धकारविशेषणम्।। धकारपरत्वे षीध्वम्यननन्तरत्वादिटो विभाषाऽभावः।। धकारपरत्वे षीध्वम्यननन्तरत्वादिटो विभाषा न प्राप्नोति। लविषीध्वं लविषीढ्वम्।।

वचनाद्भविष्यति।। अस्ति वचने प्रयोजनम्।। किम्?।। लुलुविढ्वे लुलुविध्वे इति(1)।। इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्गः।। इण्ग्रहस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वं प्राप्नोति। पक्षीध्वं(2) यक्षीध्वमिति।। नैषः दोषः। अङ्गादिति वक्ष्यामि।। अङ्गग्रहणाच्च दोषः।। अङ्गग्रहणाच्च दोषो भवति(2)। इह न प्राप्नोति-उपदिदीयिध्वे उपदिदीयिढ्वे इति(3)। यो ह्यत्राऽङ्गाऽन्त्य इण्न तस्मादुत्तर(4) इट्। यस्माच्चोत्तर इङ्गाऽसावङ्गान्त्य इणिति।। यथेच्छसि तथाऽस्तु।। अस्तु तावत्प्रत्ययविशेषणम्।। ननु चोक्तं-तत्र प्रत्ययपरत्वे

इटो लिटि ढत्वं परादित्वात् लुलुविध्वे लुलुविढ्वेःथ्य;ति।। वचनाद्भविष्यति।। ननु चोक्तमस्ति वचने प्रयोजनम्।। किम्?।। अलविढ्वम् अलविध्वमिति।। यदेतस्मिन् योगे लिङ्ग्रहणं तदनवकाशं तस्याऽनवकाशत्वाद्वचनाद्भविष्यति।। अथ वा पुनरस्तु-धकारविशेषणमिति।। ननु चोक्तं धकारविशेषणत्वे षीध्वम्यननन्तरत्वादिटो विभाषाऽभावो लविषीध्वं लविषीढ्वमिति।। वचनाद्भविष्यति।। ननु चोक्तमस्ति वचने प्रयोजनं, किं, लुलुविध्वे लुलुविढ्वेःथ्य;ति।। यदेतस्मिन् योगे षीध्वंग्रहणं तदनवकाशं, तस्याऽनवकाशत्वाद्वचनाद्भविष्यति।। यदप्युच्यते-इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्गःथ्य;ति।। अङ्गादिति वक्ष्यामि।। ननु चोक्तमङ्गग्रहणाच्च दोषःथ्य;ति।। पूर्वस्मिन् योगे यदङ्गग्रहणं तदुत्तरत्र निवृत्तम्। अथ वा पूर्वस्मिन् योगे इण्ग्रहणं प्रत्ययविशेषणमुत्तरत्र धकारविशेषणम्।।

-8-3-79- विभाषेटः

इणः षीध्वंलुङ्लिटां धोऽङ्गात् ।।

इण्ग्रहणं किमर्थम्?।। इण्ग्रहणं ढत्वे कवर्गनिवृत्त्यर्थम्।। इण्ग्रहणं क्रियते।। (किं प्रयोजनम्? ढत्वे कवर्गनिवृत्त्यर्थम्)।। कवर्गाड्ढत्वं मा भूत्(1) पक्षीध्वम् यक्षीध्वम्।। किं पुनरिदमिण्ग्रहणं प्रत्ययविशेषणम्-इण उत्तरेषां षीध्वंलुङ्लिटां यो धकार इति, आहो स्विद्धकारविशेषणम्--इणः उत्तरस्य धकारस्य, स चेत्षीध्वंलुङ्लिटान्धकारःथ्य;ति।। कश्चात्र विशेषः?।। तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं परादित्वात्।। तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं न प्राप्नोति। लुलुविढ्वे(4) लुलुविध्व इति।। किं कारणम्?।। परादित्वात्। इट् परादिः(5)।। वचनाद्भविष्यति।। अस्ति वचने प्रयोजनम्।। किम्?।। अलविढ्वम् अलविध्वम्।। अस्तु तर्हि धकारविशेषणम्।। धकारपरत्वे षीध्वम्यननन्तरत्वादिटो विभाषाऽभावः।। धकारपरत्वे षीध्वम्यननन्तरत्वादिटो विभाषा न प्राप्नोति। लविषीध्वं लविषीढ्वम्।। वचनाद्भविष्यति।। अस्ति वचने प्रयोजनम्।। किम्?।। लुलुविढ्वे लुलुविध्वे इति(1)।। इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्गः।। इण्ग्रहस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वं प्राप्नोति। पक्षीध्वं(2) यक्षीध्वमिति।। नैषः दोषः। अङ्गादिति वक्ष्यामि।। अङ्गग्रहणाच्च दोषः।। अङ्गग्रहणाच्च दोषो भवति(2)। इह न प्राप्नोति-उपदिदीयिध्वे उपदिदीयिढ्वे इति(3)। यो ह्यत्राऽङ्गाऽन्त्य इण्न तस्मादुत्तर(4) इट्। यस्माच्चोत्तर इङ्गाऽसावङ्गान्त्य इणिति।। यथेच्छसि तथाऽस्तु।।

<M.6.200*>

अस्तु तावत्प्रत्ययविशेषणम्।। ननु चोक्तं - तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं परादित्वात् लुलुविध्वे लुलुविढ्वेःथ्य;ति।। वचनाद्भविष्यति।। ननु चोक्तमस्ति वचने प्रयोजनम्।। किम्?।। अलविढ्वम् अलविध्वमिति।। यदेतस्मिन् योगे लिङ्ग्रहणं तदनवकाशं तस्याऽनवकाशत्वाद्वचनाद्भविष्यति।। अथ वा पुनरस्तु-धकारविशेषणमिति।। ननु चोक्तं धकारविशेषणत्वे षीध्वम्यननन्तरत्वादिटो विभाषाऽभावो लविषीध्वं लविषीढ्वमिति।। वचनाद्भविष्यति।। ननु चोक्तमस्ति वचने प्रयोजनं, किं, लुलुविध्वे लुलुविढ्वेःथ्य;ति।। यदेतस्मिन् योगे षीध्वंग्रहणं तदनवकाशं, तस्याऽनवकाशत्वाद्वचनाद्भविष्यति।। यदप्युच्यते-इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्गःथ्य;ति।। अङ्गादिति वक्ष्यामि।। ननु चोक्तमङ्गग्रहणाच्च दोषःथ्य;ति।। पूर्वस्मिन् योगे यदङ्गग्रहणं तदुत्तरत्र निवृत्तम्। अथ वा

पूर्वस्मिन् योगे इण्ग्रहणं प्रत्ययविशेषणमुत्तरत्र धकारविशेषणम्।।
-8-3-82- अग्नेः स्तुत्सोमसोमाः
।। अग्नेर्दीर्घात्सोमस्य।। अग्नेर्दीर्घात्सोमस्येति वक्तव्यम्। अग्नीषोमौ।। इतरथा ह्यनिष्टप्रसङ्गः।। इतरथा ह्यनिष्टं प्रसज्येत।
<M.6.201*>
अग्निसोमौ माणवकाविति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। गौणमुख्य(1)योर्मुख्ये सम्प्रतिपत्तिः। तद्यथा गौरनुबन्ध्योऽजो(2) ऽग्नीषोमीयः इति न वाहीकोऽनुबध्यते।। कथं
तर्हि वाहीके वृद्ध्यात्वे भवतो-गौस्तिष्ठति गामानयेति?।। अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति।। शब्दाश्रये च वृद्ध्यात्वे।। (अग्नेःस्तुत्स्तोमसोमाः)।
<M.6.202*>
-8-3-85- मातुः पितुर्भ्यामन्यतरस्याम्
।। सान्ताभ्यां(1) च ।। सान्ताभ्यां चेति वक्तव्यम्। इहापि यथा स्यात्-मातुःष्वसा मातुःस्वसा। पितुःष्वसा पितुस्वसा (इति(2))।। मातुः पितुरिति सान्तग्रहणानर्थक्यमेकदेशविकृतस्यानन्यत्वात्।। मातुः पितुरिति सान्तग्रहणमनर्थम्।। किं कारणम्?।। एकदेशविकृतस्यानन्यत्वात्।। एकदेशविकृतमनन्यवद्भवतीति सान्तस्यापि(3) भविष्यति।।
-8-3-87- उपसर्गप्रादुर्भ्यामस्तिर्यच्परः
अस्तिग्रहणं किमर्थम्?।। इह मा भूत्-अनुसृतं विसृतमिति।।
<M.6.203*>
नैतदस्ति प्रयोजनं-यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चैतं सकारं प्रति क्रियायोगः।। इहापि तर्हि न प्राप्नोति,-अभिषन्ति विषन्तीति। न ह्यस्तिः क्रियावचनः।। कः पुनराह नाऽस्तिः क्रियावचन इति। क्रियावचनोऽस्तिः। आतश्च क्रियावचनः,-व्यत्यनुषते-कर्तरि कर्मव्यतिहारे इत्यनेनात्मनेपदं भवति।। कर्मव्यतिहारश्च कः?।। क्रियाव्यतिहारः।। प्रादुःशब्दात्तर्हि मा भूत्।। प्रादुःशब्दश्च नियतविषयः कृभ्वस्तियोग एव वर्तते।। उपसर्गात्तर्हि स्यतेर्मा भूदिति।। इष्यते उपसर्गात्स्यतेः षत्वम्। आतश्चेष्यते-एवं (तर्हि(1)) ह्याह-उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जामिति।। प्रादुःशब्दात्तर्हि स्यतेर्मा(1) भूत्।। प्रादुःशब्दश्च नियतिविषयः कृभ्वस्तियोग एव वर्तते।। इदं तर्हि प्रयोजनमिह मा भूत्-अनुसूतेरप्रत्ययः-(अनुसूः(1)), अनुस्वोऽपत्यमानुसेयः।।
-8-3-88- सुविनिर्दुर्भ्यः सुपिसूतिसमाः
किमर्थं स्वपेः सूपिभूतस्य ग्रहणं क्रियते?।। सुपेः षत्वं(2) स्वपेर्मा भूत्।। सुपेः षत्वमुच्यते तत्स्वपेर्मा भूदिति। सुस्वप्नः(3) विस्वप्नगिति। ।। विसुष्वापेति(2) केन न।। विसुष्वापेत्यत्र कस्मान्न भवति?।।
<M.6.204*>
हलादिशेषान्न(1) सुपिः।। हलादिशेषे कृते नैष सुपिर्भवति।। इदमिह संप्रधार्यं हलादिशेषः क्रियतां संप्रसारणमिति; किमत्र कर्तव्यम्?।। परत्वाद्धलादिः शेषः।। इष्टं पूर्वं प्रसारणम्(1)।। इष्यते हलादिः शेषात्पूर्वं संप्रसारणम्।। आतश्चेष्यते-एवं(तर्हि) ह्याह(2)-अभ्याससम्प्रसारणं हलादिः शेषाद्विप्रतिषेधेनेति।। एवं तर्हि स्थादिष्वभ्यासेन चाभ्यासस्ये(3)त्येतस्मान्नियमान्न भविष्यति।। स्थादीनां नियमो नात्र प्राक्सितादुत्तरः(1) सुपिः।। प्राक्सितसंशब्दनात्स नियमः, उत्तरश्च सुपिः पठ्यते।। एवं तर्ह्यर्थवद्ग्रहणेनानर्थकस्येत्येवमेतस्य न भविष्यति।। अनर्थके विषुषुपुः(1)।। यद्यर्थवतो ग्रहणं विषुषुपुरिति न सिध्यति।। नैषः दोषः।। कथम्?।। सुपिभूतो(4) द्विरुच्यते(1)।। सुपिभूतस्य द्विर्वचनम्।
<M.6.205*>
।। सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न।
हलादिःशेषान्न सुपिरिष्टं पूर्वं प्रसारणम्।।1।।
स्थादीनां नियमो नाऽत्र प्राक्सितादुत्तरः सुपिः।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते।।2।।
-8-3-91- कपिष्ठलो गोत्रे
।। कपिष्ठलो गोत्रप्रकृतौ।। कपिष्ठलो गोत्रप्रकृताविति वक्तव्यम्। गोत्र इत्युच्यमाने इहैव स्यात्-कापिष्ठलिः।
<M.6.206*>
इह न स्यात्-कपिष्ठलः कापिष्ठलायनः।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। नैव विज्ञायते कपिष्ठल इति गोत्रे निपात्यत इति।। कथं तर्हि?।। गोत्रे यः कपिष्ठल शब्दस्तस्य षत्वं निपात्यते यत्र वा तत्र वेति।। (कपिष्ठलो गोत्रे)।।
-8-3-97- अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः
स्थ इति किमिदं धातुग्रहणमाहो स्विद्रूपग्रहणम्?।। किं चातः?।। यदि धातुग्रहणं-गोस्थानमित्यत्र प्राप्नोति। अथ रूपग्रहणं सव्येष्ठाः(1) परमेष्ठी सव्येष्ठा सारथिरित्यत्र न प्राप्नोति।। यथेच्छसि तथास्तु।। अस्तु तावद्धातुग्रहणम्।। कथं गोस्थानमिति?।। सवनादिषु पाठः करिष्यते।।
अथ वा पुनरस्तु रूपग्रहणम्।। कथं सव्येष्ठाः परमेष्ठी सव्येष्ठा सारथिरिति?।। स्थःस्थास्थिन्स्थृणामिति वक्तव्यम्।।
<M.6.207*>
-8-3-98- सुषामादिषु च
।। अविहितलक्षणमूर्धन्यः सुषामादिषु ।। अविहितलक्षणमूर्धन्यः सुषामादिषु द्रष्टव्यः ।
-8-3-101- ह्रस्वात्तादौ तद्धिते

।। ह्रस्वात्तादौ तिङ्प्रतिषेधः(3)।। ह्रस्वात्तादौ तिङः(3) प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्। छिन्द्युस्तरामिति।। (ह्रस्वात्तादौ तद्धिते)।।

-8-3-105- स्तुतस्तोमयोश्छन्दसि

।। स्तुतस्तोमयोश्छन्दस्यनर्थकं वचनं पूर्वपदादिति सिद्धत्वात्।। स्तुतस्तोमयोश्छन्दसि वचनमनर्थकम् (इत्येव(2))।। किं कारणम्?।। पूर्वपदादिति सिद्धत्वात्। पूर्वपदादित्येव सिद्धम्।। (स्तुतस्तोमयोः)।।

-8-3-108- सनोतेरनः

।। सनोतेरन इति च।। (सनोतेरन इति च)।। किम्?।। वचनमनर्थकमित्येव।। किं कारणम्?।। (पूर्वपदादिति सिद्धत्वात्)।। पूर्वपदादित्येव सिद्धम्।। नियमार्थं तर्हीदं वक्तव्यम्-सनोतेरनकारस्यैव यथा स्यादिह मा भूत्-गोसनिमिति।। सनोतेरन इति नियमार्थमिति चेत्सवनादिकृतत्वात्सिद्धम्।। सनोतेरन इति नियमार्थमिति चेत्सवनादि (कृतत्वात्सिद्धम्। सवनादि)षु पाठः करिष्यते।। सन्नर्थं तु।। सन्नर्थं त्विदं वक्तव्यम्। सिसनिषति।। एतदपि नास्ति प्रयोजनम्। स्तौतिण्योरेव षण्यभ्यासादित्येतस्मान्नियमान्न भविष्यति।। ण्यर्थं तर्हीदं वक्तव्यं-सिसानयिषतीति(1)।। कथं पुनरण्यन्तस्य प्रतिषेधे ण्यन्तः शक्यो विज्ञातुम्?।। सार्मथ्यात्। अण्यन्तस्य प्रतिषेधवचने प्रयोजनं नास्तीति कृत्वा ण्यन्तो(2) विज्ञास्यते।। अथ वाऽयमस्त्यण्यन्तः सिसनिषतेरप्रत्ययः-सिसनीः।। (सनोतेरनः)।

-8-3-110- न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्

किमर्थं सवनादिष्वश्वसनिशब्दः पठ्यते? ।। षत्वबाधनार्थम्।। पूर्वपदादिति षत्वं प्राप्नोति तद्बाधनार्थम्।। नैतदस्ति प्रयोजनम्, इणन्तादिति तत्रानुवर्तते, अनिणन्ताश्चायं, नैव प्राप्नोति नाऽर्थः प्रतिषेधेन।। एवं तर्हि सिद्धे सति यत्सवनादिष्यश्वसनिशब्दं पठति तज्ज्ञापयत्याचार्योऽनिणन्तादपि षत्वं भवतीति।। किमेतस्य ज्ञापने प्रयोजनम्?।। जलाषाहं माष इत्येतत्सिद्धं भवति।। अथ वैकदेशविकृतार्थोऽयमारम्भः। अश्वषा इति।।

-8-3-113- सिचो यङि

अथोपसर्गादिति(1) या प्राप्तिः-भवितव्यं तस्याः प्रतिषेधेनोताहो न?।। न भवितव्यम्।। किं कारणम्?।। उपसर्गात् षत्वं प्रतिषेधविषये आरभ्यते, तद्यथैव पदादिलक्षणं(3) प्रतिषेधं बाधते एवं सिचो यङीत्येतमपि बाधते(4)।। न बाधते(4)।। किं कारणम्?।। येन नाऽप्राप्ते तस्य बाधनं भवति। न चाऽप्राप्ते पदादिलक्षणे(1) प्रतिषेधे उपसर्गात् षत्वमारभ्यते, सिचो यङीत्येतस्मिन् पुनः प्राप्ते चाऽप्राप्ते च।। अथ वा पुरस्तादपवादा अनन्तरान्विधीन् बाधन्तःथ्य;त्येवमुपसर्गात्षत्वं पदादिलक्षणं प्रतिषेधं बाधिष्यते। सिचो यङीत्येतन्न बाधिष्यते। तस्मादभिसेसिच्यते इति भवितव्यम्।।

-8-3-115- सोढः

किमर्थं सहिः सोढभूतो गृह्यते?।। यत्रास्यैतद्रूपं तत्र यथा स्यादिह मा भूत्परिषहत इति।। (सोढः)।

-8-3-116- स्तम्भुसिवुसहां चङि

।। स्तम्भुसिवुसहां चङ्युपसर्गात्।। स्तम्भुसिवुसहां चङ्युपसर्गादिति वक्तव्यम्।। किं प्रयोजनम्?।। उपसर्गाद्या प्राप्तिस्तस्याः प्रतिषेधो यथा स्यादभ्यासाद्या प्राप्तिस्तस्याः प्रतिषेधो मा भूदिति। पर्यसीषहत्।। (स्तम्भुसिवु)

-8-3-117- सुनोतेः स्यसनोः

सनि किमुदाहरणम् ? ।। सुसूषति ।। नैतदस्ति प्रयोजनं स्तौतिण्योरेव षण्यभ्यासा दित्येतस्मान्नियमान्न भविष्यति ।। इदं तर्हि - अभिसुसूषति ।। एतदपि नास्ति प्रयोजनम्। स्थादिष्वभ्यासेन चाऽभ्यासस्येत्येतस्मान्नियमान्न भविष्यति।। इदं तर्हि प्रयोजनम् -- अभिसुसूतेः अप्रत्ययः -- अभिसुसूः । विसुसूः। निसुसूः ।। (सुनोतेः स्यसनोः)।।

-8-3-118- सदेः परस्य लिटि

।। सदो लिटि प्रतिषेधे स्वञ्जेरुपसङ्ख्यानम्।। सदो लिटि प्रतिषेधे स्वञ्जेरुपसङ्ख्यानं कर्तव्यम्। परिषस्वजे।।

।। इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्।। पादश्च तृतीयः समाप्तः।।

-9-9-999-

# महाभाष्यम्/अष्टमोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/nn7

< महाभाष्यम्

<M.6.210*>

-8-4-1- रषाभ्यां नो णः समानपदे

।। रषाभ्यां णत्वे ऋकारग्रहणम्।। रषाभ्यां णत्वे ऋकारग्रहणं कर्तव्यम्। रषाभ्यां नो णः समानपदे ऋकाराच्चेति वक्तव्यम्। इहापि यथा स्यात्-मातॄणां पितॄणामिति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। योऽसावृकारे रेफस्तदाश्रयं णत्वं भविष्यति।। न सिध्यति।। किं कारणम्?।। न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते।। एकदेशे(1) नुडादिषु चोक्तम्।। किमुक्तम्?।। अग्रहणं(2) चेन्नु्ंविधिलादेशविनामेष्वृकारग्रहणमिति। तस्माद्गृह्यन्ते(1)।।

<M.6.211*>

एवमपि न सिध्यति।। किं कारणम्?।। अनन्तरत्वात्। यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति।। अड्व्यवायेः इत्येवं भविष्यति।। न सिध्यति।। किं कारणम्?।। वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते ये व्यपवृक्ता अपि वर्णा भवन्ति। यच्चात्र रेफात्परं भक्तेर्नतत्क्वचिदपि व्यपवृक्तं दृश्यते।। एवं तर्हि योगविभागः करिष्यते-रषाभ्यां नो णः समानपदे। ततो व्यवाये। व्यवाये च रषाभ्यां नो णो भवतीति। तत अट्कुप्वाङ्नुम्भिरिति।। इदमिदानीं किमर्थम्?।। नियमार्थम्-एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति। अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति

<M.6.212*>

भवति ऋकाराण्णत्वमिति यदयं क्षुभ्नादिषु नृनमनशब्दं पठति।। नैतदस्ति ज्ञापकम्। वृद्ध्यर्थमेतत्स्यात्-नार्नमनिरिति। यत्तर्हि तत्रैव तृप्नोतिशब्दं पठति।। यच्चाऽपि नृनमनशब्दं पठति।। ननु चोक्तंवृद्ध्यर्थमेतत्स्यादिति। बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे। अथ वोपरिष्टाद्योगविभागः करिष्यते। (इदमस्ति(1)छन्दस्यृदवग्रहादिति। ऋतः।) ऋतो (उत्तरस्य(2))नो णो भवति। ततः छन्दस्यृवग्रहात्। ऋत इत्येव।।

-8-4-2- अट्कुप्वाङ्नुम्व्यवायेऽपि

।। अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधः।। अड्व्यायेणत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यः। आदर्शेन। अक्षदर्शेन(3)।। न वाऽन्येन व्यपेतत्वात्(4)।। न वा वक्तव्यः(5)।। किं कारणम्?।। अन्येन व्यपेतत्वात्(4)। अन्येनाऽत्र व्यवायः।। यद्यप्यत्रान्ये व्यवायोऽटाऽपि तु व्यवायोऽस्ति(6)।

<M.6.213*>

तत्रास्त्यड्व्यवाय(1) इति प्राप्नोति।। अटैव व्यवाये भवति।। किं वक्तव्यमेतत्?।। न हि।। कथमुच्यमानं गंस्यते?।। अड्ग्रहणसार्मथ्यात्। यदिहि यत्राऽटा चाऽन्येन च व्यवायस्तत्र स्यादड्ग्रहणमनर्थकं स्यात्। व्यवाये नो णो भवतीत्येव ब्रूयात्।। अस्त्यन्यदड्ग्रहणस्य प्रयोजनम्।। किम्?।। योऽनिर्दिष्टैरेव व्यवायस्तत्र मा भूत्-कृत्स्नं मृत्स्नेति।। यद्येतावत्प्रयोजनं स्यार्च्छव्यवाये(1) नेत्येव ब्रूयात्।। तत्समुदाये णत्वाऽप्रसिद्धिर्यथान्यत्र।। तत्समुदाये-व्यवायसमुदाये-णत्वस्याऽप्रसिद्धिः-अर्केण अर्घेण। (यथान्यत्र(2))। यथाऽन्यत्रापि व्यवायसमुदाये कार्यं न भवति।। क्वाऽन्यत्र?।। नुम्विसर्जनीयर्शव्यवायेऽपि। निंस्से निंस्स्वेति।। किं पुनः कारणमन्यत्रापि व्यवायसमुदाये कार्यं न भवति?।। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा-वृद्धिगुणसंज्ञे प्रत्येकं भवतः।। ननु चायमप्यस्ति दृष्टान्तः-समुदाये वाक्यपरिसमाप्तिरिति। तद्यथा गर्गाः शतं दण्ड्यन्तामिति, अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति।। यद्येवमेकेन व्यवाये न प्राप्नोति--किरिणा गिरिणेति।। उभयथापि वाक्यपरिसमाप्तिर्दृश्यते, तद्यथा-गर्गैः सह न भोक्तव्यमिति, प्रत्येकं च न भुज्यते समुदितैश्च।।

<M.6.214*>

कुव्यवाये हादेशेषु प्रतिषेधः(1)।। कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः।। किं प्रयोजनम्?।। प्रयोजनं वृत्रघ्नः स्रुघ्नः(2) प्राघानीति।। (वृत्रघ्नः(3) स्रुघ्नः प्राघानीति प्रयोजनम्)।। हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवति।

।। नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधः।।

नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधो वक्तव्यः। प्रेन्वयनम् प्रेन्वनीयम्।। अनागमे च णत्वम्।। अनागमे च

णत्वं वक्तव्यम्(4)। तृम्फणम्(5) तृम्फणीयम्(6)।। अनुस्वारव्यवाये वचनात्तु(7) सिद्धम्।। अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम्।। तदनुस्वारग्रहणं कर्तव्यम्? न कर्तव्यम्। क्रियते न्यास एव। नकारेऽनुस्वारः परसवर्णीभूतो निर्दिश्यते।। इहापि तर्हि प्राप्नोति-प्रेन्वनं प्रेन्वनीयम्।। अनुस्वारविशेषणं नुम्ग्रहणं-नुमो योऽनुस्वारःथ्य;ति।। इहापि तर्हि न प्राप्नोति-तृम्फणं(6) तृम्फणीयम्।।

एवं तर्ह्ययोगवाहानामविशेषेणोपदेशश्चोदितस्तत्राऽनुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्।। यद्येवं नार्थो

नुम्ग्रहणेन। अनुस्वारे कृतेऽड्व्यवाय इत्येव सिद्धम्।।(अट्कुप्वाङ्)

<M.6.215*>

-8-4-3- पूर्वपदात्संज्ञायामगः

।। पूर्वपदात्संज्ञायामुत्तरपदग्रहणम्।। पूर्वपदात्संज्ञायामुत्तरपदग्रहणं कर्तव्यम्।। किं प्रयोजनम्?।। तद्धितपूर्वपदस्यथाऽप्रतिषेधार्थम्।। तद्धितस्थस्य पूर्वपदस्थस्य च प्रतिषेधो मा भूत्। खारपायणः, करणप्रियः।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ। सति पूर्वपदे उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदं भवति। तत्र सम्बन्धादेतदवगन्तव्यं-यत्प्रति पूर्वपदमित्येतद्भवति

तत्स्थस्य नियम इति।। किं च प्रत्येतद्भवति?।। उत्तरपदं प्रति।। संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमप्रतिषेधः।। संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमस्याऽयं प्रतिषेधो विज्ञायते-अग इति।। तत्र को दोषः?।। तत्र नित्यं णत्वप्रसङ्गः।। तत्र पूर्वेण संज्ञायां चाऽसंज्ञायां च नित्यं णत्वं प्राप्नोति।। योगविभागात्सिद्धम्(1)।। योगविभागः करिष्यते-पूर्वपदात्संज्ञायाम्। ततः अगः। गान्तात्पूर्वपदाद्या च यावती च(2) णत्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेधः।।
<M.6.216*>
अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम्।। न वाऽर्थः प्रतिषेधेन।। णत्वं कस्मान्न भवति?।। यथा सर्वनामसंज्ञायाम्। उक्तं च सर्वनामसञ्ज्ञायां(1) सर्वनामसंज्ञायां निपातनाण्णत्वाभावः इति।। यथा पुनस्तत्र निपातनं क्रियते-सर्वादीनि सर्वनामानि इति, इहेदानीं किं निपातनम्?।। इहापि निपातनमस्ति।। किम्?।। अणृगयनादिभ्य इति।। नैव वा पुनरत्र णत्वं प्राप्नोति।। किं कारणम्?।। समानपद इत्युच्यते, न चैतत्समानपदम्।। समासे कृते समानपदम्।। समानपदमेव(2) यन्नित्यम्। न चैतन्नित्यं समानपदमेव।। किं वक्तव्यमेतत्?।। न हि।। कथमनुच्यमानं गंस्यते?।। समानग्रहणसार्मथ्यात्। यदि हि यत्समानं चाऽसमानं च तत्र स्यात्समानग्रहणमनर्थकं स्यात्।। (पूर्वपदात्संज्ञायामगः)।।
-8-4-6- विभाषौषधिवनस्पतिभ्यः
।। व्यक्षरत्र्यक्षरेभ्यः(3)।। व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्। इह मा भूत्-देवदारुवनम्।। इरिकादिभ्यः प्रतिषेधः(3) ।। इरिकादिभ्यः प्रतिषेधो वक्तव्यः। इरिकावनम्। तिमिरवनम्।। (विभाषौषधिवन)।
-8-4-7- अह्नोऽदन्तात्
।। अदन्तादेदन्तस्य(3)।। अदन्तादेदन्तस्येति वक्तव्यम्। इह मा भूत्-दीर्घाह्नी शरदिति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम् । नैषाऽहञ्छब्दात्षष्ठी।। का तर्हि?।। अह्नशब्दात्प्रथमा।
पूर्वसूत्रनिर्देशश्च(1)।। अथ वा युवादिषु पाठः करिष्यते।। (अह्नोऽदन्तात्)।।
<M.6.217*>
-8-4-8- वाहनमाहितात्
।।आहितोपस्थितयोः(2)।। आहितोपस्थितयोरिति वक्तव्यम्। इहापि यथा स्यात्-इक्षुवाहणम् शरवाहणम्।। अपर आह।। वाहनं वाह्यादिति वक्तव्यम्।। यदा हि गर्गाणां वाहनमपविद्धं तिष्ठति तदा मा भूत्गर्गवाहनमिति(3)।। (वाहनमाहितात्)।
-8-4-10- वा भावकरणयोः
।। वाप्रकरणे गिरिनद्यादीनामुपसङ्ख्यानम्।। वाप्रकरणे गिरिनद्यादीनामुपसङ्ख्यानं कर्तव्यम्। गिरिणदी गिरिनदी। चक्रणितम्बा चक्रनितम्बा।
-8-4-11- प्रातिपदिकान्तनुम्विभक्तिषु च
।। प्रातिदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम्।। प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणं कर्तव्यम्।। किं प्रयोजनम्?।। असमासान्तप्रतिषेधार्थम्। असमासान्तस्य मा भूत्-गर्गभगिनी
<M.6.218*>
दक्षभगिनीति।। न वा भवति-गर्गभगिणीति?।। भवति यदैतद्वाक्यं गर्गाणां भगो गर्गभगः,गर्गभगोऽस्याऽस्तीति। यदा त्वेतद्वाक्यं भवतिगर्गाणां भगिनी गर्गभगिनीति, तदा न भवितव्यं, तदा मा भूदिति(1)।। यदि समासान्तग्रहणं क्रियते माषवापिणी व्रीहिवापिणीत्यत्र(1) न प्राप्नोति।। लिङ्गविशिष्टग्रहणे चोक्तम्।। (लिङ्गविशिष्टग्रहणे चोक्तम्(2))।। किमुक्तम्?।। गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेरिति।। तत्र युवादिप्रतिषेधः।। तत्र युवादीनां प्रतिषेधो वक्तव्यः। आर्ययूना क्षत्रिययूना। प्रपक्वानि परिपक्वानि। दीर्घाह्नी शरदिति।।
-8-4-13- कुमति च
अथेह कथं भवितव्यं-माषकुम्भवापेण व्रीहिकुम्भवापेणेति, नित्यं णत्वेन भवितव्यमाहोस्विद्विभाषया(3)?।। यदा तावदेतद्वाक्यं भवति--कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवाप इति,
<M.6.219*>
तदा नित्यं णत्वेन भवितव्यम्। यदा त्वेतद्वाक्यं भवति,-माषाणां कुम्भो माषकुम्भः, माषकुम्भस्य वापो माषकुम्भवाप इति,-तदा विभाषया भवितव्यम्।।
-8-4-14- उपसर्गादसमासेऽपि णोपदेशस्य
असमासग्रहणं किमर्थम्?।। समास इति वर्तते, असमासेऽपि यथा स्यात्-प्रणमति परिणमति।। क्व पुनः समासग्रहणं प्रकृतम्?।। पूर्वपदात्संज्ञायामगः इति।। कथं पुनस्तेन समासग्रहणं शक्यं विज्ञातुम्?।। पूर्वपदग्रहणसार्मथ्यात्। समास एवैतद्भवति पूर्वपदमुत्तरपदमिति।।
अथाऽपिग्रहणं किमर्थम्?।। समासेऽपि यथा स्यात्-प्रणामकः। परिणामकः। यदि तर्हि समासे चाऽसमासे चेष्यते नार्थोऽसमासेऽपिग्रहणेन। निवृत्तं पूर्वपदादिति। अविशेषेणोपसर्गाण्णत्वं वक्ष्यामि।। समासे नियमान्न प्राप्नोति।। असिद्धमुपसर्गाण्णत्वं, तस्याऽसिद्धत्वान्नियमो न भविष्यति।।
एवं तर्हि सिद्धे सति यदसमासेऽपिग्रहणं करोति तज्ज्ञापयत्याचार्यो न योगो योगेऽसिद्धः।। किं तर्हि?।। प्रकरणे प्रकरणमसिद्धमिति।। किमेतस्य ज्ञापने प्रयोजनम्?।। यत्तदुक्तं-निष्कृतं निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात् षत्वं न प्राप्नोतीति, न स दोषो भवति।। णोपदेशं प्रत्युपसर्गाभावादनिर्देशः। (णोपदेशं प्रत्यु(1)पसर्गाभावादनिर्देशः) अगमको निर्देशोऽनिर्देशः। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो, न च णोपदेशं प्रति क्रियायोगः।। एवं तर्ह्याहाऽयमुपसर्गादसमासेऽपि णोपदेशस्येति, न च णोपदेशं प्रत्युपसर्गोऽस्ति, तत्र वचनाद्भविष्यति।। वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधः।। (वचनप्रामाण्यादिति(1) चेत्पदलोपे प्रतिषेधो) वक्तव्यः। प्रगता नायका अस्माद्ग्रामात्-प्रनायको ग्राम इति।। सिद्धं तु यं प्रत्युपसर्गस्तत्स्थस्येति वचनात्।। सिद्धमेतत्।। कथम्?।। (यं प्रत्युपसर्गस्तत्स्थस्येति(1) वचनात्)। यं

प्रत्युपसर्गस्तत्स्थस्य(2) णो भवतीति वक्तव्यम्।। सिद्ध्यति। सूत्रं तर्हि भिद्यते।। यथान्यासमेवाऽस्तु।। ननु चोक्तं णोपदेशं प्रत्युपसर्गाऽभावादनिर्देशःथ्य;ति।। नैषः दोषः। णोपदेश(3) इति-नैवं विज्ञायते-ण उपदेशः णोपदेशः, णोपदेशस्येति।। कथं(4) तर्हि?।। ण उपदेशोऽस्य सोऽयं णोपदेशः, णोपदेशस्येति।।

-8-4-15- हिनुमीना

।। हिनुमीनाग्रहणे विकृतस्योपसङ्ख्यानम्।। हिनुमीनाग्रहणे विकृतस्योपसङ्ख्यानं कर्तव्यम्। प्रहिणोति प्रमीणीते।। वचनाद्भविष्यति।। अस्ति वचने प्रयोजनम्।। किम्?।। प्रहिणुतः प्रमीणाति।। सिद्धमचः स्थानिवत्त्वात्।। सिद्धमेतत्।। कथम्?।। अचः स्थानिवत्त्वात्। स्थानिवद्भावादत्र णत्वं भविष्यति।। प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति।। दोषा एवैते तस्याः परिभाषायाः-तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति।। (हिनुमीना)।

-8-4-16- आनि लोट्

लोडिति किमर्थम्?।। प्रहिमानि कुलानि, प्रवपानि मांसानि।। आनिलोड्ग्रहणानर्थक्यमर्थवद्ग्रहणात्।। आनिलोड्ग्रहणमनर्थकम्।। किं कारणम्?।। अर्थवद्ग्रहणात्। अर्थवत आनिशब्दस्य ग्रहणं, नैषोऽर्थवान्। ।। अनुपसर्गाद्वा।। अथ वा यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो, न चैत मानिशब्दं प्रति क्रियायोगः।। इहापि तर्हि न प्राप्नोति-प्रयाणि, परियाणीति, अत्रापि नाऽऽनिशब्दं प्रति क्रियायोगः।। इहापि तर्हि न प्राप्नोति-प्रयाणि, परियाणीति, अत्रापि नाऽऽनिशब्दं प्रति क्रियायोगः।। आनिशब्दं प्रत्यत्र क्रियायोगः।। कथम्?।। यत्क्रियायुक्ता(1) इति-नैवं विज्ञायते यस्य क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति।। कथं तर्हि?।। या क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति।।

-8-4-17- नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च

।। नेर्गदादिषु अड्व्यवाय उपसङ्ख्यानम्(1)।। नेर्गदादिष्वड्व्यवाय उपसङ्ख्यानं कर्त्तव्यम्।

प्रण्यगदत्। परिण्यगदत्।।आङा(1) च।। आङा चेति वक्तव्यम्। प्रण्यागदत्। ननु चाऽयमड् गदादिभक्तो गदादिग्रहणेन ग्राहिष्यते।। न सिध्यति।। अङ्गस्याऽडुच्यते, विकरणान्तं चाऽङ्गम्। सोऽसौ सङ्घातभक्तोऽशक्यो गदादिग्रहणेन ग्रहीतुम्।। एवं तर्ह्यड्व्यवाय इति वर्त्तते।। क्व प्रकृतम्?।। अट्कुप्वाङ्नुम्व्यवायेऽपीति।। तद्वैकार्यिविशेषणं निमित्तविशेषणेन चेहार्थः।। तत्रापि निमित्तविशेषणमेव।।

8-4-19- अनितेः

अन्तः ।।

अन्तग्रहणं किमर्थम्?।। अनितेरन्तग्रहणं संबुद्ध्यर्थम्।। अनितेरन्तग्रहणं क्रियते।। किं प्रयोजनम्?।।

संबुद्ध्यर्थम् । प्राण् । अपर आह -- अनितेरन्तः पदान्तस्य ।। अनितेरन्तग्रहणं क्रियते, पदान्तस्य नेति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ।। यो वा तस्मादनन्तरः।। अथ वा --अयमन्तशब्दोऽस्त्येवाऽवयववाची । तद्यथा--वस्त्रान्तो वसनान्त इति । अस्ति सामीप्ये वर्त्तते। तद्यथा--उदकान्तं गतः । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्त्तते तस्य ग्रहणं विज्ञायते अनितेः समीपे यो रेफस्तस्मान्नस्य यथा स्यात्--प्राणितीति । इह मा भूत् --पर्यनितीति।

-8-4-20- अन्तः

अनितेः ।।

अन्तग्रहणं किमर्थम्?।। अनितेरन्तग्रहणं संबुद्ध्यर्थम्।। अनितेरन्तग्रहणं क्रियते।। किं प्रयोजनम्?।।

संबुद्ध्यर्थम् । प्राण् । अपर आह -- अनितेरन्तः पदान्तस्य ।। अनितेरन्तग्रहणं क्रियते, पदान्तस्य नेति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ।। यो वा तस्मादनन्तरः।। अथ वा --अयमन्तशब्दोऽस्त्येवाऽवयववाची । तद्यथा--वस्त्रान्तो वसनान्त इति । अस्ति सामीप्ये वर्त्तते। तद्यथा--उदकान्तं गतः । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्त्तते तस्य ग्रहणं विज्ञायते अनितेः समीपे यो रेफस्तस्मान्नस्य यथा स्यात्--प्राणितीति । इह मा भूत् --पर्यनितीति।

-8-4-21- उभौ साभ्यासस्य

।। साभ्यासस्य द्वयोरिष्टम्।। साभ्यासस्य द्वयोर्णत्वमिष्यते, प्राणिणिषति।। (उभौ साभ्यासस्य)।।

<M.6.224*>

-8-4-22- हन्तेरत्पूर्वस्य

हन्तेरत्पूर्वस्येति किमर्थम्?।। प्रघ्नन्ति परिघ्नन्ति।। हन्तेत्पूर्वस्य वचने उक्तम्।। (हन्तेरत्पूर्वस्यं वचने उक्तम्(1))। किमुक्तम्? ।। कुव्यवाये हादेशेषु प्रतिषेध इति।।(हन्तेरत्पूर्वस्य)।।

-8-4-28- उपसर्गादनोत्परः

कथमिदं विज्ञायते-ओकारात्परः-ओत्परः, न ओत्परोऽनोत्पर इति, आहो स्विदोकारः परोरमात्सोऽयमोत्परः, न ओत्परोऽनोत्पर इति?।। किं चातः?।। यदि विज्ञायते(1) ओकारात्परः ओत्परः, न ओत्परोऽनोत्पर इति,- प्र नो मुञ्चतम्-अत्रापि प्राप्नोति। अथ विज्ञायते-ओकारः परोऽस्मात्सोऽयमोत्परः, न ओत्परोऽनोत्पर इति,-प्राणो वनिर्देवकृता,-अत्र(2) न प्राप्नोति।। उभयथा च प्रक्रमे दोषो भवति। प्र नः

मुञ्चतम्-प्र नो मुञ्चतम्। प्र उ नः--प्रोनः।। भाविन्यप्योति नेष्यते।। भाविन्यप्योकारे णत्वं नेष्यते।। एवं तर्ह्युपसर्गाद्बहुलमिति वक्तव्यम्।। (उपसर्गादनोत्परः)।।

-8-4-29- कृत्यचः

।। कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानम्।। कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानं कर्तव्यम्। निर्विण्णोऽहमनेन वासेन।। (कृत्यचः)।।

-8-4-30- णेर्विभाषा

।।णेर्विभाषायां(1) साधनव्यवाये उपसङ्ख्यानम्।। णेर्विभाषायां साधनव्यवाये उपसङ्ख्यानं कर्त्तव्यम्। प्राप्यमाणं प्राप्यमानम्।। तद्विधानात्सिद्धम्(2)।। (तद्विधानात्सिद्धम्(1))। विहितविशेषणं णिग्रहणंण्यन्ताद्यो विहितःथ्य;ति।। अडधिकाराद्वा।। अथ वाऽड्व्यवाय इति वर्तते।।

-8-4-32- इजादेः सनुमः

किमर्थमिदमुच्यते न कृत्यच इत्येव सिद्धम्? ।। नियमार्थोयमारम्भः(2)।। (नियमार्थोऽयमारम्भः(1))। इजादेरेव च सनुम्कान्नान्यस्मात्सनुम्कादिति। क्व मा भूत्?।। प्रमङ्कनं परिमङ्कनम्।। सनुमो णत्वेऽवधारणाऽप्रसिद्धिर्विधेयभावात्।। सनुमो णत्वेऽवधारणस्याऽप्राप्तिः(1)।। किं कारणम्?।। विधेयभावात्।। कैर्मथ्यान्नियमो भवति?।। विधेयं नास्तीति कृत्वा।। इह चाऽस्ति विधेयम्।। किम्?।। ण्यन्ताद्विभाषा प्राप्ता तत्र नित्यं णत्वं विधेयम्।। तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्विति, अपूर्वो विधिर्भविष्यति न नियमः।। सिद्धं तु प्रतिषेधाधिकारे सनुम्ग्रहणात्।। सिद्धमेतत्।। कथम्?।। प्रतिषेधाधिकारे सनुम्ग्रहणात्। प्रतिषेधाधिकारे सनुम्ग्रहणं कर्त्तव्यं न भाभूपूकमिगमिप्यायीवेपिसनुमामिति।। इहापि तर्हि न प्राप्नोति-प्रेङ्खणीयम्(2)। प्रेङ्खणम्।। कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणम्।। कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणं कर्त्तव्यम्।। सिध्यति। सूत्रं तर्हि भिद्यते।। यथान्यासमेवास्तु।। ननु चोक्तं-सनुमो णत्वेऽवधारणा(1)प्रसिद्धिर्विधेयभावादिति।। नैषः दोषः। हल इति वर्तते।। क्व प्रकृतम्?।। हलश्चेजुपधादिति।। तद्वै तत्रादि विशेषणमन्तविशेषणेन चेहार्थः।। कथं पुनर्ज्ञायते-तत्रादिविशेषणमिति?।। इजुपधादित्युच्यते तत्र नाऽर्थोन्तविशेषणेन।। तत्रादिविशेषणं सदिहाऽन्तविशेषण भविष्यति।। कथम्?।। इजादेरित्युच्यते तत्र नाऽर्थ आदिविशेषणेन।। अथ वा इजादेः सनुम इत्यत्र णेर्विभाषेत्येतदनुवर्त्तिष्यते।।

-8-4-34- न भाभूपूकमिगगमिप्यायीवेपाम्

भादिषु पूञ्ग्रहणम् ।। भादिषु पूञ्ग्रहणं कर्त्तव्यम्। इह माभूत्--प्रपवणं सोमस्येति।। ण्यन्तस्य चोपसङ्ख्यानम्।। ण्यन्तस्य चोपसङ्ख्यानं कर्त्तव्यम्।। किं पूञ् एव ?।। नेत्याह ।। अविशेषेण ।। प्रभापनं परिभापनम्।।

-8-4-35- षात्पदान्तात्

।। षात्पदादिपरवचनम्।। षात्पदादिपरग्रहणं कर्त्तव्यम्। इहैव यथा स्यात्-निष्पानं दुष्पानम्। इह मा भूत्-सुसर्पिष्केण(2) सयजुष्केण(3)।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। नैवं विज्ञायते-पदस्यान्तः पदान्तः, पदान्तादिति।। कथं तर्हि?।। पदे अन्तः पदान्तः, पदान्तादिति।।

-8-4-36- नशेः षान्तस्य

।। नशेरशः।। नशेरश इति वक्तव्यम्। इहापि यथा स्यात्- प्रनङ्क्ष्यति। परिनङ्क्ष्यति।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। इह पुनर्नशेः(4) ष इतीयता सिद्धं, सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तस्यैतत्प्रयोजनं षान्तभूतपूर्वस्यापि यथा स्यात्।।(नशेः षान्तस्य)।।

<M.6.228*>

-8-4-38- पदव्यवायेऽपि

।। पदव्यवायेऽतद्धिते।। पदव्यवायेऽतद्धित इति वक्तव्यम्। इह मा भूत्-आर्द्रगोमयेण शुष्कगोमयेण।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्। नैवं विज्ञायते पदेन व्यवायः पदव्यवायः,(1) पदव्यवायेःथ्य;ति।। कथं तर्हि?।। पदे व्यवायः पदव्यवायः, पदव्यवाय इति।। (पदव्यवायेऽपि)।।

-8-4-39- क्षुभ्नादिषु च

।। अविहितलक्षणो(2) णत्वप्रतिषेधः क्षुभ्नादिषु।। (अविहितलक्षणो(3) णत्वप्रतिषेधः क्षुभ्नादिषु) द्रष्टव्यः।। (क्षुभ्नादिषु च)।।

-8-4-40- स्तोः श्चुना श्चुः

किमर्थं तृतीयानिर्देशः क्रियते न श्चावित्येवोच्येत?।। आनन्तर्यमात्रे श्चुत्वं यथा स्यात्-यज्ञः राज्ञः याच्ञ्ना।। अथ सङ्ख्यातानुदेशः कस्मान्न भवति?।। आचार्यप्रवृत्तिर्ज्ञापयति-सङ्ख्यातानुदेशो नेति यदयं(4) शात्प्रतिषेधं शास्ति।।

-8-4-41- ष्टुना ष्टुः

किमर्थं तृतीयानिर्देशः क्रियते न ष्टावित्येवोच्येत?।। आनन्तर्यमात्रे ष्टुत्वं यथास्यात्-पेष्टा लेढा(1)।। अथ सङ्ख्यातानुदेशः कस्मान्न भवति?।। आचार्यप्रवृत्तिर्ज्ञापयति नेह सङ्ख्यातानुदेशो भवतीति, यदयं तोःषीति प्रतिषेधं शास्ति।। (ष्टुना ष्टुः)।।

-8-4-42- न पदान्ताट्टोरनाम्

अनामिति किमर्थम्(2)?।। षण्णां भवति काश्यपः।। अत्यल्पमिदमुच्यते--अनामिति।। अनाम्नवतिनगरीणां चेति वक्तव्यम्।। षण्णाम्। षण्णवतिः। षण्णगर्यः(3)।। (न पदान्ताट्टोरनाम्।)

-8-4-45- यरोऽनुनासिकेऽनुनासिको वा

।। यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम्।। यरोऽनुनासिके प्रत्यये भाषायां नित्यमिति च वक्तव्यम्। वाङ्मयम्। त्वङ्मयमिति।।

-8-4-47- अनचि च

।। द्विर्वचने यणो मयः।। द्विर्वचने यणो मय इति वक्तव्यम्।। किमुदाहरणम्?।। यदि यण इति पञ्चमी मय इति षष्ठी उल्क्का वल्म्मीकमित्युदाहरणम्।। अथ मय इति पञ्चमी यण इति षष्ठी दध्य्यत्र मध्व्यत्रेत्युदाहरणम्?।।शरःखयः।। शरःखय इति वक्तव्यम्।। किमुदाहरणम्?।। यदिशर इति पञ्जमीखयःथ्य;ति षष्ठी स्थ्थाली स्थ्थाता इत्युदाहरणम्। अथ खय इति पञ्जमी शर इति षष्ठी स्थ्थाली स्थ्थाता इत्युदाहरणम्। अथ खय इति पञ्चमी शर इति षष्ठी, वत्स्स(र): क्षीरम् अपस्सरा इत्युदाहरणम्। ।। अवसाने च।। अवसाने च द्वे भवत इति वक्तव्यम्। वाक्क्। वाक्। त्वक्क् त्वक्। स्रुक्क्स्रुक्।। तत्तर्हि वक्तव्यम्?।। न वक्तव्यम्।। नायं प्रसज्यप्रतिषेधः-अचि नेति।। किं तर्हि?।। पर्युदासोऽयं यदन्यदच इति।।

-8-4-48- नादिन्याक्रोशे पुत्रस्य

।।नादिन्याक्रोशे पुत्रस्येति तत्परे च।। नादिन्याक्रोशे पुत्रस्येत्यत्र तत्परे चेति वक्तव्यम्। पुत्रपुत्रादिनि(1)।। वा हतजग्धपरे च।। वा हतजग्धपरे इति वक्तव्यम्। पुत्रहती। पुत्त्रहती। पुत्रजग्धी। पुत्त्रजग्धी। ।। चयो द्वितीयाः शरि पौष्करसादेः।। चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन। वथ्सः(2)। ख्षीरम्(3)। अफ्सराः।(नदिन्याक्रोशे पुत्रस्य)।

-8-4-54- अभ्यासे चर्च

प्रकृतिचरां प्रकृतिचरो भवन्ति। चिचीषति। प्रकृतिजशां प्रकृतिजशश्च भवन्ति। जिजनिषति। बुबुधे। ददौ।। (अभ्यासे चर्च)।।

-8-4-61- उदः स्थास्तम्भोः पूर्वस्य

।। उदः(1) पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानम्।। उदः पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानं कर्त्तव्यम्।। अघ्न्ये दूरमुत्कन्द(2)।। रोगे च(1)।। रोगे चेति वक्तव्यम्। उत्कन्दको रोगः।।

-8-4-63- शश्छोऽटि

।। छत्वममि(तच्छलोकेन तच्छमश्रुणेति प्रयोजनम्)।। छत्वममीति वक्तव्यम्।। किं प्रयोजनम्?।। तच्छलोकेन तच्छमश्रुणेति।।

-8-4-65- झरो झरि सवर्णे

सवर्णग्रहणं किमर्थम्।। झरो झरि सवर्णग्रहणं समसङ्ख्यप्रतिषेधार्थम्।। झरो झरि सवर्णग्रहणं क्रियते।। (किं प्रयोजनम्?)।। समसङ्ख्यप्रतिषेधार्थम्।। सङ्ख्यातानुदेशो मा भूदिति।। किं च स्यात्?।। इह न स्यात्-शिण्ढि पिण्ढि।।(झरो झरि)

-8-4-68- अ अ इति(1)

किमर्थमिदमुच्यते?।। अकारोऽयमक्षरसमाम्नाये विवृत उपदिष्टस्तस्य संवृतताप्रत्यापत्तिः क्रियते।। किं पुनः कारणं विवृत उपदिश्यते?।।

।। आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः।

आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ।।1।।

आदेशार्थं तावत्-वृक्षाभ्याम्। देवदत्ता3। आन्तर्यतो विवृतस्य विवृतो दीर्घप्लुतौ यथा स्याताम्। सवर्णार्थं च-अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् । अकारस्य तथा ह्रस्वः। तथा (च) अतिखट्वः अतिमाल इत्यत्र आकारस्य ह्रस्व उच्यमानो विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्था प्रत्यापत्तिः।। अस्ति प्रयोजनमेतत्। किं

तर्हीति।। अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः।। अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः।। खटा माला।। नैषः दोषः।। यथैव प्रकृतितः सवर्णग्रहणमेवमादेशतोऽपि भवितव्यं, तत्रान्तर्यतो ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घो भविष्यति।। आदेशस्य चानण्तावन्न सवर्णग्रहणम्।। आदेशस्य चाऽनण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति।। केषाम्?।। उदात्तानुदात्तस्वरितानुनासिकानाम्। ।। सिद्धं तु तपरनिर्देशात्।। सिद्धमेतत्।। कथम्?।। तपरनिर्देशात्। तपरनिर्देशः कर्तव्यः-अद इति।।

अपर आह-।। अकार(स्य)प्रत्यापत्तौ दीर्घप्रतिषेधः।। अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः। खट्वा माला।। नैषः दोषः।। दीर्घोच्चारणसामर्थ्यान्न भविष्यति।। इदं तर्हि-वृक्षाभ्यां प्लक्षाभ्याम्।। अत्रापि दीर्घवचनसामर्थ्यान्न भविष्यति।। इदं तर्हि-अपि काकः श्येनायते।। ननु चाऽत्रापि दीर्घवचनसामर्थ्यादेव(तत्) न भविष्यति।। अस्त्यन्यदीर्घवचने प्रयोजनम्।। किम्?।। दधीयति मधूयति(1)।। (।। आदेशस्य चानण्त्वात्सवर्णाग्रहणम्।।)।। आदेशस्य चाऽनण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति।। केषाम्?।। उदात्तानुदात्तस्वरितानुनासिकानाम्।। सिद्धं तु तपरनिर्देशात्।। सिद्धमेतत्।। कथम्?।। तपरनिर्देशात्। तपरनिर्देशः कर्तव्यः। अददिति।। एकशेषनिर्देशाद्वा स्वरानुनासिकभिन्नानां(1) भगवतः पाणिनेः(2) सिद्धम्।। एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेराचार्यस्य सिद्धम्। एकशेषनिर्देशोऽयम्-अ अ(3)अ इति।

इति श्रीमद्भगवत्पतञ्जलि(मुनि)विरचिते व्याकरणमहाभाष्येऽष्टमस्याऽध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।। चतुर्थः पादोऽष्टमोऽध्यायश्च समाप्तः।

-9-9-999-